परमतेन त्रिविधपूर्वपक्षाभिधानार्थत्वेन भाष्यं व्याख्यातुं पठति—**किं तावदिति**। संहत्यशब्दं तिस्रो भावनाः संहत्यैकमपूर्वं कुर्वन्तीत्येवं व्याख्यातुमाह—**तत्रेति**। अदृष्टार्थानामिति भाष्यस्यापूर्वेक्योक्तयैव व्याख्यातत्वात्, तदुपपादनार्थमदृष्ट इतिभाष्यावयवं व्याचष्टे—**इयं चेति**। विरुध्यमान इति भाष्यावयवार्थमाह—**दृष्टेति**। उक्तेऽर्थे भाष्यावयवं योजयति—**तदिति**। विशेषश्चेदित्यवयवं व्याचष्टे—**तत्रापीति**। बहुभ्य इत्यवयवं तस्माच्छब्दान्तमुपसंहारार्थत्वेन व्याचष्टे—**तस्मादिति**।

ननु स्वर्गकामो यजेतेति फलवाक्ये यागभावनामात्रविधानात्कथं यागहोमदानादिभावनासमुदायस्य फलापूर्वसाधनतेत्याशङ्क्य निरासार्थं समुदाय इतिभाष्यमपनीततस्माच्छब्दकपाठेन सूचितव्याख्यानत्वादव्याख्याय तदुपपादनार्थं न चेति भाष्यमाशङ्कोत्तरत्वेन व्याचष्टे—**तत्रेति**। फलवाक्यगताख्यातविहितभावनासमुदायावयवभूतैकैकधात्वर्थावच्छिन्नभावनावाचिभिर्सोमादिवाक्यगतैर्यजतिजुहोतिददातीत्याख्यातशब्दैः कल्पनागौरवभयात्प्रतिभावनं भाष्यान्वयमसहमानैरेकभाव्यान्वयाय भावनासमुदायस्यार्थाक्षिप्तत्वेन शाब्दत्वात्फलवाक्ये फलसाधनतया युक्तो विधिरित्यर्थः।

अथ वेति भाष्यं पक्षान्तरपरिग्रहार्थत्वेन व्याचष्टे—**अथ वेति**। उत्तरस्तमेवानुवदतीति भावनानुवादाभिधानेनैकस्यां भावनायां त्रयो यजत्यादय उपाया विधीयन्त इति चोपायतया धात्वर्थविधानाभिधानेन सूचितामुपपत्तिमाह—**तस्यापीति**। श्लोकं व्याचष्टे—**यदि हीति**। धात्वर्थानां प्राधान्ये सति फलवत्स्वरूपेणाविधेयत्वापत्तेः फलवाक्यविहितभावनाप्रत्यभिज्ञानेऽपि सोमादिवाक्येषु तत्तद्धात्वर्थविशिष्टरूपेण विधीयमाना भावनैकधात्वर्थविशिष्टायां धात्वर्थान्तरनिवेशायोगाद् गुणन्यायेन प्रतिधात्वर्थं भिद्यते, भावप्रधानमाख्यातमिति स्मृते स्वाख्याते भावनायाः प्राधान्याद्भावशब्दस्य धात्वर्थविषयत्वव्याख्यानेऽपि वा प्रकृतिप्रत्ययौ प्रत्यार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येनेति स्मृतेः प्रत्ययार्थत्वेन भावनायाः प्राधान्यात्फलवाक्यविहितशुद्धभावनानुवादेन सोमादिवाक्यैरनादृतपौर्वापर्यैर्युगपत्सर्वधात्वर्थविधानान्न गुणन्यायोऽस्तीत्याशयः।

ननु सोमादिवाक्येषु भावनाविध्यभावे विशेषणसम्बन्धमात्रार्थं भावनाभिधानावृत्तिः स्यात् न चासौ युक्तेत्याशङ्क्याह—**यद्यपीति**। असत्यां गतौ गुणानुरोधेनापि प्रधानावृत्तिर्युक्तेत्याशयः। न तु केवलप्रकृतिप्रयोगासम्भवमात्रात्प्रत्ययावृत्तिसिद्धेः केवलप्रत्ययप्रयोगासम्भवः किमर्थमुक्त इत्याशङ्क्याह—**यदि त्विति**। क्वचित्वादौ विशेषणान्वयाभिधानावृत्तिर्दृष्टेत्याह—**दृष्टा चेति**। अनन्यगतिगुणसम्पादनार्था चानुष्ठानावृत्तिरपि दृष्टा, किमुताभिधानावृत्तिरित्याह—**तथेति**। नन्वेवं सति भिन्नवाक्योपादानाद्धात्वर्थानां प्रत्येकमेव भावनाविशेषणता युक्तेत्याशङ्क्याह—**तस्मादिति**। यस्मात्कल्पनालाघवाय संहत्य विशेषणत्वं प्रतीयते, तस्मात्सर्वधात्वर्थविशेष्टैकभावनाभिधानार्थत्वेनानेकार्थत्वात्सर्वं प्रकरणमेकं वाक्यमित्यर्थः। तस्मादित्युपसंहारभाष्यं सङ्क्षिप्य व्याचष्टे—**एकमिति**। संहत्य विशेषणत्वकल्पनस्यादृष्टकल्पनालाघवहेतुकत्वाभिधानार्थमत इति भाष्यं व्याचष्टे—**एकं चेति**।

तृतीयपूर्वपक्षाभिधानार्थं यद्वेति भाष्यं स्वत्वपरित्यागांशेत्यनेन व्याख्यातत्वादसार्वत्रिकत्वेन चानादृत्य तथोक्तत्वादुपेक्ष्य स्वमते पूर्वपक्षैकस्याभिधानायाद्यं पूर्वपक्षं दूषयितुमारभते—**अयमेव चेति**। एतदेव प्रश्नपूर्वमुपपादयति—**कुत इति**। श्लोकं व्याचष्टे—**यदि हीति**। अदृष्टार्थभावनाभेदान्यथानुपपत्त्या भावनाभेदवदपूर्वभेदस्याप्यवश्याभ्युपगन्तव्यत्वापत्तेः किमनेन पूर्वपक्षेण सिद्धान्तप्रतिकूलं क्षतं स्यादित्यर्थः। कथमेकशब्दोपादानात्समुदायत्वापादनमित्यपेक्षिते समुदायानुवादरूपेण वा—**फलादिसम्बन्धेन वेत्युक्तम्**। पौर्णमासीमित्येकशब्दोपादानं तावद्यजिनाऽनूद्यमानानां यागानां समुदायत्वापादनार्थमेव। राजसूयेनेत्यस्य फलान्वयपरत्वात्समुदायापादनार्थत्वाभावेऽप्येकशब्दोपादानेनैकफलान्वयात्समुदात्वापत्तिरित्याशयः।

ज्योतिष्टोमशब्दस्य सर्वप्राकरणिकतया या होमाद्यवच्छिन्नभावनासमूहवाचित्वमाशङ्कते—**ननु चेति**। यजिसामानाधिकरण्याद्भावनावाचितैव तावदयुक्ता। धात्वर्थद्वारलक्षणया तु तद्वाचित्वाभ्युपगमेऽपि यजिमात्रसामानाधिकरण्याद्धोमाद्यवच्छिन्नभावनासमूहवाचिता दुराशङ्केति परिहरति—**नेति**। उपसंहरति—**तस्मादिति**।

का तर्हि भाष्यस्य गतिरित्याशङ्क्याह—**एवं त्विति**। अथेन्द्रायुधं लोहितशुक्लकृष्णैस्त्रिभिर्धातुभिः संहत्यानुरज्यते, तथा सर्वधात्वर्थैर्भावनेति प्रतिज्ञाभाष्यव्याख्या। भावनैक्योपपादनार्थत्वेनादृष्टार्थानामित्यादिभाष्यं व्याचष्टे—**तत्सिद्ध्यर्थात्त्विति**। कर्मभेदे हीत्यनेनाऽबहुभ्य एकमपूर्वमिति अकारप्रश्लेषो भाष्ये सूचितः।

भावनैक्ये समुदायशब्दानुपपत्तिमाशङ्क्य धात्वर्थसमुदायानुरक्तस्यैकस्य भावनाख्यस्य कर्मणोऽनुरञ्जकस्य समुदायस्यावयवभूतानां धात्वर्थानां समुदायोऽभिप्रेत इत्येवं व्याचष्टे—**तस्मादिति**। भाष्यं च धात्वर्थानां समुदायाप्रतीतेः कथं संहत्यानुरञ्जकतेत्याशङ्कानिरासार्थत्वे यस्मात्कल्पनालाघवाय भावनैक्यं युक्तम्, तस्मात्तत्सिद्ध्यर्थे धात्वर्थसमुदायो ऽनुरञ्जकः कर्त्तु वेदस्येष्टोऽवसीयत इत्येवं व्याख्येयम्।

अथ वेति भाष्यं पक्षान्तराभावेनायुक्तमाशङ्क्य परमतेनोपसंहारार्थत्वेन व्याचष्टे—**अत इति**। स्वमतेनोपपत्त्यन्तरार्थत्वेन व्याचष्टे—**शङ्क्यं त्विति**। अभिन्नार्थत्वमेवोत्तरस्तमेवेति भावनैक्याभिधानेन दर्शयतीत्याह—**तदिति**।

परेषां व्याख्यानं दूषयितुमुपन्यस्यति—**एवमिति**। दूषयति—**तत्त्विति**। स्वमतेन भावनापरामर्शितया तच्छब्दं व्याचष्टे—**तस्मादिति**। पूर्वभाष्यपर्यालोचनयाप्येष एवार्थः प्रतीयत इत्याह—**तथा चेति**। एतदेवोपपादयति—**अत इति**। तस्मादित्युपसंहारभाष्यं व्याचष्टे—**तस्मादिति**।

यजत्यादित्रये धात्वर्थैक्यादपि भावनैक्यमित्युपपत्त्यन्तराभिधानार्थं यद्वेति भाष्यं व्याचष्टे—**तस्मादिति**। यजत्यादित्रये धात्वर्थैक्यादपि भावनैक्यमित्युपपत्त्यन्तराभिधानार्थे यद्वेति भाष्यं व्याचष्टे—**यद्वेति**। ननु नैकांशसाम्यमात्रेण धात्वर्थैक्यं युक्तम् अथैकांशसाम्येन

सादृश्याद् गौणवृत्त्या ददातिजुहोतिभ्यां यजत्यर्थानुवादोऽभिहितः सो ऽपि गौणत्वदोषापत्तेरयुक्त इत्याशङ्क्याह—**अथापीति**। जघन्यत्वसाम्याद् गौणतैव लक्षणाशब्देनोक्ता। समुदायवाचिना वा त्यागाख्यैकदेशे वृत्तिर्लक्षणाभिमता। गुणसम्बन्धार्थामिति भाष्यावयवं व्याचष्टे—**गुणेति**। को गुण इत्यपेक्षायामाह—**एकत्रेति**। प्राकाशावध्वर्यवे ददतीतिवत्सम्बन्धविधानादवाक्यभेदाभिप्रायः। दक्षिणाकालत्वलक्षणो गुणो दाक्षिणशब्देनाभिमतः।

ननु दक्षिणानयनोत्तरकालमेतद्धोमविधानात् क्रमेणैव दक्षिणाकालत्वप्राप्तेस्तत्प्रख्यन्यायेन दक्षिणाशब्दस्य नामत्वाद् गुणविधित्वं नास्तीत्याशङ्कते—**नन्विति**। धात्वर्थानुवादपक्षे गुणविधित्वापत्तिरिति परिहृति—**कर्मेति**। अस्मिंश्च पक्षे सन्देहभाष्यगता यजत्यादिशब्दा श्रुतिवृत्ता एवेत्याह—**तदा चेति**। कार्यशब्दस्वरूपक्रमानुरोधात्क्रियासामान्यवाचिना करोतिना तद्विशेषाक्षिक्रियालक्षणाद्वाच्यधात्वर्थविषयो अर्थाक्षेप्यापूर्वविषयो वेत्याह—**एकमिति**। संहत्यकारित्वे कार्यैक्य लाभादेकमित्युक्तम्, एकं धात्वर्थमेकम् वापूर्वं त्रयो धातवो गमयन्तीति कुर्वन्तिशब्दार्थे व्याख्याते ददातिजुहोत्योर्गुणसम्बन्धार्थत्वेन धात्वर्थाविधायकत्वात्कथम् धात्वर्थसाध्यापूर्वगमकतेत्याशङ्क्य—**तदेत्युक्तम्**। यजत्यर्थानुग्राहकगुणविधायकत्वेन तयोर्यजत्यनुग्राहकत्वात्तत्सहकृतस्य यजतेरपूर्वगमकत्वमभिप्रेत्य संहत्येत्युक्तमित्याशयः। तस्मादिति पूर्वपक्षोपसंहारभाष्यं फलतो भावनैक्योपसंहारार्थत्वेन व्याचष्टे—**तस्मादिति**।

उतराधिकरणे अपूर्वशब्दस्य फलतः कर्मविषयतया व्याख्यास्यमानत्वादिहाव्याख्याय सिद्धान्तसूत्रं व्याचष्टे—**उच्यतइति**। शब्दान्तरस्य धात्वर्थभेदद्वारा भावनाभेदप्रमाणत्वं वक्तुम् धात्वर्थभेद इत्युक्तम् धात्वर्थस्य प्रयत्नाख्यभावनाजन्यत्वत्, तद्भेदस्य भावनाभेदकत्वासम्भवमाशङ्क्य ज्ञापकहेतुत्वं वक्तुम्—**विज्ञेयमित्युक्तम्**। संख्यादित्रयस्य भावनाभेदकत्वाभावेऽपि धात्वर्थभेदाद्भावनाभेदसिद्धि वक्तुम्—**सर्वत्रेत्युक्तम्**। कृतानुबन्धत्वव्याख्यानायोत्तरार्द्धम्।

ननु भावनावाचिप्रत्ययैक्यात् भावनायाः स्वतस्तावदैक्यप्रतीतेः प्राधान्याच्च धात्वर्थभेदेऽप्यावृत्त्यनुपपत्तेः कथम् धात्वर्थभेदाद्भेद इत्याशङ्क्य, निरस्य, लोकार्थं प्रपञ्चयति—**यद्यपीति**। सम्बन्धिनिरूपणाधननिरूपणस्य सम्बन्धस्य सम्बन्धिभेदेन ज्ञेयनिरूपणाधीननिरूपणस्य ज्ञानस्य ज्ञेयभेदेन भेददर्शनाद्यधीनं निरूपणं तत्तद्भेदेन भिद्यत इति व्याप्तेर्धात्वर्थाधीननिरूपणत्वाद्भावनाया धात्वर्थभेदेन भेदोऽनुमीयत इत्याशयः। कथमनुरञ्जकभेदस्यानुरज्यभेदाक्षेपकतेत्याशङ्क्याह—**न हीति**। भावनाया धात्वर्थावच्छेदं विना भावनान्तराद्व्यावृत्त्यप्रतीतेरेकभावनावच्छेदकत्वविरोधप्रसङ्गेनैकस्यां भावनायामनेकानुरञ्जकसमावेशायोगादनुरञ्जकभेदोऽनुरज्यभेदमाक्षिपतीत्याशयः। त्रयाणामप्येकस्यां भावनायां समावेशो न सम्भवति, किमुत प्रकरणगतानां सर्वधात्वर्थानामिति त्रय इत्यनेनोक्तम्। ननु प्रत्येकमनुरञ्जकत्वे माभूत्समावेशः, समुच्चितानामेव तु धात्वर्थानामेकभावनानुरञ्जकत्वं धटपटाविति युगपत् घटपटज्ञाने घटपटयोरिवैकज्ञानानुरञ्जकत्वं

भविष्यतीत्याशङ्क्याह—**न चेति**। युगपत् घटपटसंयुक्तेनेन्द्रियेण घटपटविषयैकज्ञानोत्पत्तावपि ज्ञानजन्यार्थप्रकाशाख्यस्य फलस्याश्रयभूतघटपटभेदेन भेदात् घटप्रकाशांशे घटस्यानुरञ्जकत्वं पटप्रकाशांशे पटस्येत्यंशभेदेनोभयोरेकज्ञानानुरञ्जकत्वं युक्तम्। धात्वर्थस्य अनुकरणांशनिवेशेन भावनानुरञ्जकत्वात्करणांशस्य चैक्यान्नानेकानुरञ्जकत्वापेक्षेत्याशयः।

ननु समुच्चितानामेव करणांशनिवेशो भविष्यतीत्याशङ्क्याह—**अन्योन्येति**। भिन्नशब्दोपादानेऽपि धातुसमूहात्प्रत्ययोपात्तत्वादग्नीषोमयोरिव धात्वर्थसमुच्चयः स्याद्धातोस्तु प्रकृतित्वेनोपादेयतया विवक्षितसंख्यत्वान्न समूहात्प्रत्ययोत्पत्तावग्नीषोमयोरिव धात्वर्थसमुच्चयः स्यात् धातोस्तु प्रकृतित्वेनोपादेयतया विवक्षितसंख्यत्वान्न समूहात्प्रत्ययोत्पत्तिरित्याह—**न चेति**। नन्वेकस्मिन्पदेऽनेक-धातूपादानाभावेऽपि प्राकरणिकानां सर्वधातूनां प्रयोगवाक्यैकवाक्यत्वात् तद्विहितायां भावनायां प्राकरणिकसर्वधात्वर्थानां निवेशो भविष्यतीत्याशङ्क्याह—**न चेति**। प्रयोगवाक्ये शुद्धभावनाप्रतीत्यभावात्सोमादिवाक्येषु च भावनाविधिनिरपेक्षधात्वर्थविध्ययोगात्साकाङ्क्षत्वाभावेन प्राकरणिकसर्वधात्वर्थानुरक्तैकभावनाविधानरूपैकार्थत्वाभावान्नैकवाक्यता युक्तेत्याशयः।

ननु कल्पनालाघवायापूर्वैक्यावधारणात् तस्य च भावनैक्यं विनानुपपत्तेः सर्वप्राकरणिकवाक्यानामेकभावनाप्रयोजनत्वेनैकार्थ्यादेकवाक्यता भविष्यतीत्याशङ्क्याह—**न चेति**।

रूपादुत्तरकाले हि विनियोगप्रयोजने।

इत्यनेन न्यायेनादृष्टप्रयोजनभेदाभेदयोर्मन्त्रभेदाभेदपूर्वकत्ववत्कर्मभेदाभेदपूर्वकत्वावगतेर्नापूर्वैक्येनैकार्थ्येऽप्येकवाक्यकल्पना युक्तेति प्रत्याख्यानप्रकारं प्रकृते योजयितुमाह—**न चेति**। ननु फलवाक्ये भावनाया धात्वर्थानुरागविवक्षायां फलं प्रत्युपादेयविधेयगुणत्वात्। धात्वर्थं च प्रत्युद्देश्यानुवाद्यप्रधानत्वाद्वैरूप्यापत्तेः शुद्धाया विधेयत्वात्सोमादिवाक्यैस्तदनुवादेन यागादिधात्वर्थानुरागविधानम्एवाक्यत्वाभ्युपगमेन वा सर्वधात्वर्थानुरक्तैकभावनाविधानं युक्तमिति पूर्वपक्षाशयमाशङ्क्य निरस्यति—**यदि चेति**। ननु भिन्नवाक्यगतैरपि धात्वर्थैरनुरागसम्भवे किमित्यप्रतीयमानैकवाक्यत्वकल्पनेत्याशङ्क्य, अष्टदोषविकल्परिहाराय समुच्चयसिद्धर्थत्वं सूचयितुम्—**युगपद्वेत्युक्तम्**। पृथक्शब्देन धात्वर्थानुरागनिरपेक्षतोक्ता। प्रत्ययेन शुद्धभावनोपादानेऽप्यशक्यानुष्ठानत्वाद् बुद्धाया विधेयत्वासम्भवसूचनार्थो विधिवाच्युत्पत्तिशब्दः। भावनायाश्च धात्वर्थवत् कारकत्वानभ्युपगमात्कर्मकरणत्वाभावेन तन्निमित्तोद्देश्योपादेयत्वाद्यभावाद्धात्वर्थनिरपेक्षायाश्चाविहितत्वेन धात्वर्थान्वयेऽप्यनुवाद्यत्वाभावान्न वैरूप्यापत्तिरित्याशयः। यदा च धात्वर्थनिरपेक्षाया भावनाया विधेयत्वं न सम्भवति, तदा ददात्यादीनां धात्वार्थानां मध्ये केनचिदेकेन धात्वर्थेन, समस्तैर्वा धात्वर्थैरवच्छिन्नोत्पादयितव्या, न शुद्धेत्याह—**इतीति**।

ननु समस्तधात्वर्थावच्छिन्नभावनोत्पत्तिपक्षे पूर्वपक्षासिद्धिः स्यादित्याशङ्क्याह—**तत्रेति**। समस्तानामपि संहत्याऽवच्छेदकत्वायोगात्प्रत्येकमवच्छेदकत्वावगतेः, प्रतिधात्वर्थं

भावनाविधौ विहिताया विध्यसम्भवाद् भेदसिद्धिरित्यर्थः । अथैकेन धात्वर्थेनावच्छिन्ना भावनैकहायन्येव क्रयो विधीयते, अन्ये तु धात्वर्थास्तस्यामेव भावनायां हिरण्यादीनीव क्रये विधीयमानानि न भावनाभेदमापादयन्तीत्युच्यन्ते, तत्राप्येकहायनीवाक्येनैकगुणोपादानरूपकर्मोत्पत्तिचिह्नवदिह कस्मिंश्चिद्वाक्ये भावनोत्पत्तिचिह्नाभावेन व्यवस्थाहेत्वभावादगृह्यमाणविशेषतया सर्वत्र भावनाविध्यापत्तेर्दुर्वारो भावनाभेद इत्याह—**अथेति** । धात्वर्थान्तरेषु भावनाविध्यभावसूचनार्थं तावच्छब्दः । अथागृह्यमाणविशेषत्वेऽप्यनेकोत्पत्त्यानर्थक्याद्येन केनचिदेकेन धात्वर्थेनानुरक्ताया भावनाया उत्पत्तिरिष्यते, तथाप्येकधात्वर्थानुरक्तायां धात्वर्थान्तरस्य गुणन्यायेनानिवेशाद्भावनाभेद एवेत्याह—**येन केनचिदिति** । धातुशब्दोऽर्थपरः । श्लोकं व्याचष्टे—**येनैव हीति** । सर्वप्रकरणैकवाक्यत्वविवक्षया वाक्यशब्दप्रत्याख्यातं वाक्यभेदविवक्षया प्रकरणशब्दः एतदेवोदाहरणनिष्ठं विवृणोति—**ददातिर्हीति** ।

सर्वत्र पदश्रुतिगम्यत्वात् तुल्यबलत्वमाशङ्कते—**ननु चेति** । धात्वर्थान्तरानुक्तभावनाविशेषान्वयस्य श्रुत्यानवगतेरतुल्यबलत्वमाह—**सत्यमिति** । ननु भावनायाः स्वतो वैलक्षण्यानवभासेन सर्वत्रैक्यात्, त्यागानुरक्तान्या, दानानुरक्तान्येति भेदव्यवहारो न युक्त इत्याशङ्कते—**ननु चेति** । भिन्नधात्वर्थानुष्ठाने प्रयत्नाख्यभावनाव्यक्तिवैलक्षण्यस्य स्वसंवेद्यत्वाद्वैलक्षण्यानवभासेन सामान्यस्यैक्यं वाच्यम् । तत्त्विष्टमेवेत्युपहासेन परिहरति—**केन चेति** । धात्वर्थानुरक्तभावनाव्यक्तिवाची कर्मशब्दः । व्यक्तेरपि धात्वर्थवैलक्षण्यं विना वैलक्षण्याप्रतीतेर्न भेदोऽस्तीत्याशङ्किता स्वाशयं दर्शयति—**नन्विति** । धात्वर्थवैलक्षण्याख्यसामग्र्यपेक्षोऽपि भावनाव्यक्तिवैलक्षण्यावभासो बाधाभावात्प्रमाणमिति निराकरोति—**कथमिति** । बाधाभावेऽप्यन्योपाधिकत्वाच्छब्दभेदप्रत्ययवद्भावनाभेदप्रत्ययो मिथ्येत्याशङ्किता स्वाशयं विवृणोति—**नन्विति** । अन्यसन्निधिजन्यत्वमात्रं वौपाधिकत्वमभिप्रेतम्, अन्यधर्माध्यासनिबन्धनत्वं वेति विकल्पं मनसि कृत्वाऽऽद्ये कल्पे तावत्प्रतिवर्णव्यञ्जकध्वनिभेदाद्भिन्नध्वनिसन्निधिजन्यत्वस्य सत्त्वेऽपि गकारोऽयं ककारोऽयमित्यादिप्रत्ययेऽदर्शनादनैकान्तिकत्वम्, तदभिप्रायत्वेन दृष्टान्तस्य साध्यविकलत्वमाह—**नैतदिति** ।

अथ द्रुतोऽयम्, मध्यमोऽयम्, विलम्बितोऽयमित्यादिभेदप्रत्ययदृष्टान्तेनान्यधर्माध्यासनिबन्धनत्वं भावनाभेदप्रत्ययस्य मिथ्यात्वे हेतुरभिप्रेतः । सोऽसिद्धः ध्वनिधर्मा हि त्रिचतुःपञ्चकमात्रत्वरूपा द्रुतादिवृत्तयः ।

तस्मादुच्चारणं तेषां मात्राकालं प्रतीयते ।
द्विमात्रं वा, त्रिमात्रं वा, न वर्णो मात्रिकः स्वयमिति ॥

शब्दे मात्रानिषेधात् । तत्कल्पनानुपपत्तेर्वस्तुतोऽसत्त्वादध्यासेन प्रतीयन्त इति युक्तम् । धात्वर्थधर्मस्त्वनन्तरं नियमेन किञ्चिदुत्पादनरूपः । भावनाफलस्यानन्तरोत्पत्तिनियमाभावान्न भावनायां प्रतीयते पूर्वापरीभावानिष्पन्नत्वरूपस्तु भावनायामपि व्यापारत्वेन वास्तवत्वान्नाध्यस्त इत्याशयेनाह—**न चेति** । द्रुतादिधर्मरहिताच्छब्दाद्विलक्षणधर्म-

तार्थान्तरशब्देनानन्तरं किंचिदुत्पादननियमरूपधर्मरहिताच्च भावनाख्यात्प्रयत्नाद्विलक्षण-धर्मता व्यतिरिक्तशब्देन विवक्षिता । पूर्वापरीभावानिष्पन्नत्वरूपधात्वर्थधर्मतुल्यत्वप्रदर्शनार्थो नात्यन्तवाच्यदूरशब्दः । उपसंहरति—**तस्मादिति ।** एवं धात्वर्थाधीननिरूपणत्वाद्धात्वर्थ-भेदे वास्तवं भावनास्वरूपभेदमुक्त्वेदानीं स्वरूपेण भावनाव्यक्त्यैक्येऽपि शब्दान्तरादिभि-र्विधेयरूपभेदस्य व्युत्पाद्यत्वाद्धात्वर्थानुरक्ताया एव च भावनाया विधेयत्वाद्धात्वर्थानुरक्त-रूपेण भेदो भविष्यतीति वक्तुं वृद्धानां श्लोकं पठति—**आह चेति ।** रक्तेन लाक्षादिनोप-धानेनावरुद्धे स्फटिके चोदिते सति कृष्णस्फटिकमानयेत्यादिचोदनया यद्विहितम्, तद्रक्तचोदना-विहिते स्फटिके काष्र्ण्यादेर्निवेशायोगात्तस्मादन्यद्यथा गृह्यते, तथैकधात्वर्थावरुद्धा भावना-विधाने सति या धात्वर्थान्तरचोदनास्तास्ता भावनान्तरविषयाः स्युरित्यर्थः ।

नन्वेवं सति गुणन्यायादेव भेदसिद्धेः शब्दान्तरानर्थक्यं स्यादित्याशङ्क्याह—**यस्मा-त्त्विति ।** पूर्वपक्षनिरुत्तरीकरणायैतदुक्तम् । वस्तुतस्तु यस्मात्प्रत्ययः कृतधात्वर्थावच्छेदमेव स्वार्थं वदति । तस्मात्फलवाक्येऽपि शुद्धभावनानवगतेर्नैकस्यां भावनायामनेकधात्वर्था-वच्छेदः सम्भवतीत्येतदिह व्युत्पाद्यमित्याशयः ।

ननु—

प्रकृतिप्रत्ययौ ब्रूतः प्राधान्येन सहेति यत् ।
भेदेनैवाभिधाने हि प्राधान्यं तत्तयोच्यते ॥
स्याच्चेत्स उभयोर्वाच्यः प्रत्यार्थः कथं भवेद् ।
व्यपदिश्येत नैकेन यद्यर्थ उभयोरसौ ॥
सर्वदा तूच्यते यस्मात्प्रकृत्यर्थोपसर्जनः ।
तेनासावुभयोरर्थः प्रयोजनतयोदितः ॥
यान्यावयवशक्तिभ्यां शक्तिः काचित्पदाश्रया ।
विद्यते यत एकस्माद्विशिष्टार्थगतिर्भवेद् ॥ इति ।

शब्दे प्रकृतिप्रत्यययोरन्विताभिधानस्य निरस्तत्वात्कृतानुबन्धमेव स्वार्थं प्रत्ययो वदतीत्ययुक्तमित्याशङ्क्य—**प्रकृतीत्युक्तम् ।**

'नित्यं विशिष्ट एवार्थे प्रत्ययो यत्प्रवर्त्तते ।
तत्पूर्वतरविज्ञातप्रकृत्यर्थविशेषणाद् ॥'

इत्यनेन न्यायेनाऽन्वितानभिधानेऽपि 'परश्चे'ति प्रत्ययस्य प्रकृतिपरत्वस्मृतेर्वृद्धप्रयोग-रूपाच्चाचारात्स्वार्थाभिधाने प्रकृतिप्रत्ययक्रमस्य नित्यं विवक्षितत्वावगतेरवर्ज्जनीया विशि-ष्टार्थावगतिरित्याशयः । इममेवार्थं तद्भूताधिकरणभाष्येण द्रढयति—**यथोक्तमिति ।**

यजेतेत्यनेनेति भाष्येण कृतानुबन्धत्वादिति सूत्रावयवं व्याख्याय, ननु धात्वर्थसमु-दायेनैवावच्छेदाख्योऽनुबन्धो भावनाया भविष्यतीत्याशङ्कानिरासार्थं प्रयोगेति भाष्यम्, उत्पत्तिवाक्यशेषत्वेनापि धात्वर्थसमूहस्यापि सत्ताशब्दोक्तभावनान्वयोपपत्तेरयुक्तमाशङ्क्यो-

पपादयति—**प्रयोगवाक्येति**। उत्पत्तिवाक्येनैव सर्वाणि प्राकरणिकानि गुण-फल-निमित्त-वाक्यानि सम्बन्ध्यन्ते, न परस्परेणेतीन्द्रियकामाधिकरणवार्त्तिकवक्ष्यमाणन्यायेन प्रयोगवाक्ये भावनोत्पत्त्यभावान्नान्येषां तच्छेषत्वं सम्भवतीत्याशङ्क्योत्पत्तिलक्षणार्थेन सत्ताशब्देन प्रयोगवाक्ये भावनोत्पत्तिर्विवक्षितेति भावनाशब्देन सूचितम्। समुदायानुरागकल्पनस्यापूर्वकल्पनालाघवार्थत्वात्फलान्वयकल्पत्वाच्चापूर्वस्य फलान्वयस्य च धात्वर्थोत्पत्तिवाक्यानां प्रयोगवाक्यशेषत्वाधीनत्वात्समुदायानुरागकल्पनस्य प्रयोगवाक्यशेषत्वहेतुकतेत्यर्थः।

ननु धात्वर्थावच्छेदानपेक्षेण स्वरूपेण भावनाया भाव्यनिष्ठत्वात्फलान्वयोपपत्तेस्तादृश्याश्च धात्वर्थोत्पादकसोमादिवाक्यानपेक्षाद्भावनोत्पादकात् ज्योतिष्टोमवाक्यात्प्रतीतेः किमर्था सोमादिवाक्यानां ज्योतिष्टोमवाक्यशेषत्वापेक्षेत्याशङ्क्याह—**नेति**। धात्वर्थावच्छेदं विनाननुष्ठेयत्वात्फलान्वयो न सम्भवतीत्याशयः। प्रकरणान्तरगतासु राजसूयादिभावनासु ज्योतिष्टोमभावनान्वयातिदेशसूचनार्थं बहुवचनम्। ननु भिन्नानामपि भावनानामेकप्रयोगवाक्यग्रहणात्समुदितानामेवापूर्वसाधनत्वाभ्युपगमेन कल्पनालाघवोपपत्तेः कथं प्रयोगवाक्यशेषत्वाद्धात्वर्थसमूहस्यैकभावनान्वयावगतिरित्याशङ्क्याह—**अवधृतेति**। अवधृतभेदानामेकवाक्योपादानेऽप्येकशब्दानुपादानात्समुदायानुवादरूपतयैकीकरणमशक्यमित्यर्थः। स्वर्गकामो यजेतेत्युपश्लेषलक्षणया श्रुत्या धात्वर्थं संपादनवदस्य यागस्यैव भावनासम्बन्धोऽवगम्यत इति, श्रुतेति भाष्योक्तार्थव्याख्यार्थे सन्निहितयोरपीति भाष्ये दानहोमयोः प्रयोगवाक्येऽनुपादानान्नैकवाक्योपादानलक्षणः संनिधिरस्तीत्यपिशब्दसूचितमर्थं व्याचष्टे—**न चेति**। श्रुत्येतिशब्दं यजेरुपलक्षणार्थत्वशङ्कानिराससूचनार्थत्वेन व्याचष्टे—**न चेति**।

ननु यागायागसङ्के लिङ्गसमवायाद्यजिप्रवृत्तेस्तदान्तर्गतस्य यागस्याप्युक्तत्वान्न स्वार्थत्यागापत्तिरित्याशङ्क्य—**अहोभयेति**। भावनावद्धात्वर्थानामपि सङ्कापत्तिहेतुत्वभावात्स्वरूपेण यागाभिधाने युगपद् वृत्तिद्वयापत्तिरित्याशयः। तस्मादित्युपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। भावनावाचिप्रत्ययैक्यात् शब्दान्तरात्वानुपपत्तिमाशङ्क्य, शब्दान्तर चेत्युपक्रमपूर्वकं शब्दान्तरत्वोपपादनार्थं तत्रार्थान्तरमित्यादि च शब्दान्तरहेतुकभावनाभेदोपसंहारभाष्यमेकहेलया व्याचष्टे—**अतश्चेति**।

ननु यथा केवलस्य प्रधानस्य फलसाधनत्वज्ञानमुत्पन्नमपि करणस्येतिकर्त्तव्यताकस्य फलसाधनत्वज्ञानेन बाध्यते, तथा केवलस्य धात्वर्थस्य भावनावच्छेदकत्वज्ञानमुत्पन्नमपि जन्यत्वेन तस्य भावनावच्छेदकत्वात् कारकानपेक्षेण च प्रत्ययवाच्याख्यभावनामात्रेण धात्वर्थाजननात्सिद्धरूपकारकाभ्युपगमे च तस्य निर्व्यापारस्य कारकत्वायोगाद्व्यापारकल्पनायां गौरवापत्तेर्धात्वर्थरूपकारकावच्छिन्नस्य धात्वर्थस्य भावनावच्छेदकत्वज्ञानेन बाधिष्यत इत्याशङ्कानिरासार्थं नन्विति भाष्यं व्याचष्टे—**न चेति**। दृष्टेनैव द्रव्यसम्प्रदानादिना कारकसङ्घेन दानादिधात्वर्थनिष्पत्तेर्न तन्निष्पादकधात्वर्थान्तरापेक्षेत्याशयः। यदा च शुद्धभावनाप्रतीत्यभावाद्धात्वर्थान्तरानपेक्षत्वान्न विभज्यमानसाकाङ्क्षत्वम्। भावनाभेदे च भावयितव्यापूर्वभेदावश्यम्भावान्न संहत्यैकार्थम्, तदैकवाक्योपादानाभावादपि धात्वर्थ-

सम्पाद्यस्यैकभावनावच्छेदकता न युक्तेत्यभिधानार्थं तस्मादिति भाष्यम् । न चैतत्पदत्रय-मेकवाक्यतां गच्छतीत्यादिना सा भवितव्यापूर्वभेदादृते नैव भिद्यत इत्यन्तेन च व्याख्यात-प्रयत्वान्न व्याख्यातम् । यजत्यादित्रये धात्वर्थैक्यादपि भावनैक्यमित्युपपत्यन्तरनिरासार्थं न चेत्यादिभाष्यं व्याचष्टे—**न चेति** । भाष्यस्थो दानमितिशब्दो धातुलक्षणार्थः । परसम्बन्धार्थत्वादित्यनेनासेचनार्थत्वात् जुहोतेरित्युपलक्षितमित्यासेचनशब्देन सूचितम् ।

ननूद्देशत्यागप्रक्षेपसमुदायवाचिनो जुहोतेस्त्यागपरस्वत्वापादनसमुदायवाचिनश्च ददाते-स्तदेकदेशत्यागमात्रलक्षणायैकार्थ्यं भविष्यतीत्याशङ्क्याह—**न चेति** । देवतोद्देशसद्भावे-ऽप्यासेचन-परस्वत्वापादानापेक्षो मात्रशब्दः । त्यागमात्रार्थत्वादिति भाष्येऽपि मात्रशब्दो-ऽनेन सूचितः । कालार्थे च तद्धितास्मृतेर्दाक्षिणशब्दस्य दक्षिणाकालवाचित्वात्प्रसिद्धेर्विधौ चावाचकशब्दायोगादर्थाक्षिप्तसाध्यांशसामानाधिकरण्याच्च नामत्वावगतेः कर्मण एव विधेयत्वात्सिद्धो भेद इत्याह—**न चेति** ।

धात्वर्थभेदाभेदचिन्तायां ददातिवाक्ये गुणविधौ सम्बन्धविधेराघाराग्निहोत्राधिकरणे निराकरिष्यमाणत्वाद्वाक्यभेदापत्तेः पूर्वपक्षायोगादुक्तोदाहरणानुपपत्तिप्रसक्तेर्नेह तच्चिन्तेति प्रसङ्गाद्दर्शयितुमाह—**ददातिना त्विति** । प्रयोजनभाष्यं धात्वर्थसङ्घस्यैकं भावनावच्छेदकत्वे सर्वेषामेकापूर्वसाधनत्वादङ्गाङ्गित्वाभावः पूर्वपक्षे । सिद्धान्ते ज्योतिष्टोमयागाङ्गतेतरधात्वर्था-नामित्येवं स्पष्टत्वान्न व्याख्यातम् ॥ १ ॥

॥ इति प्रथमं शब्दान्तराधिकरणम् ॥

भा० प्र०—'मानाधीना मेयसिद्धिः' प्रमाण के अधीन प्रमेय की सिद्धि होती है, अतः प्रथम अध्याय में आचार्य जैमिनि ने प्रमाण का निरूपण किया है, प्रमाण की आलोचना के बाद द्वितीय अध्याय में प्रमेय धर्म का निरूपण आवश्यक होता है । प्रमेय धर्मों के स्वरूप भेद प्रदर्शन के लिए भावना के भेद का निरूपण आवश्यक है, क्योंकि भावना के भेद के आधार पर ही इस भेद का निरूपण सम्भव है । अतः स्वरूप का भेद निरूपण करने के लिए प्रसक्त भावना के भेद का निरूपण इस अध्याय से किया जा रहा है ।

इस दृष्टि के अनुसार भावना का भेद निरूपण द्वितीय अध्याय के प्रथम पाद का विषय होना चाहिए था, किन्तु अपूर्व का भेद भावना के भेद का फल होने से अपूर्व का स्वरूप निरूपण अपरिहार्य होने से अपूर्व के स्वरूप का प्रतिपादन किया गया है, इस प्रसङ्ग में अन्य विषयों का भी निरूपण किया गया है, जो प्रसक्त और उपेक्षा के अनर्ह हैं । प्रकृत में भावना का भेद अर्थात् यागादि कर्मों का भेद निरूपित किया जा रहा है । प्रकृत में श्रुतियों में एक प्रकरण में अपर्याय धातु से निष्पन्न अर्थात् जो धातु अर्थ से और स्वरूप से भिन्न हैं उनसे विहित जो आख्यात प्रत्यय हैं—वे ही इस स्थल में उदा-हरण के योग्य हैं । जैसे ज्योतिष्टोम एक कर्म है । उस याग कर्म के प्रसङ्ग में 'सोमेन यजेत' (य एवं विद्वान् सोमेन यजेत' । तै० सं० ३।२।२, शा० भा० ३।१।१३) सोम से

याग करे, 'दाक्षिणानि जुहोति' (बौधा० श्रौ० ८।५।१) दक्षिणा सम्बन्धी हवन करता है। 'हिरण्यमात्रेयाय ददाति' (आत्रेयाय हिरण्यं ददाति'। शत० ५।३।४।२१) आत्रेय के लिए हिरण्य देता है। इत्यादि वाक्यों में 'यजेत', 'जुहोति' एवं 'ददाति' आदि में यज्, हु, दा आदि अपर्याय धातुओं से जो आख्यात तिङ् हैं, वे विभिन्न भावना के वाचक हैं या नहीं ? अर्थात् वे मिलकर एक अपूर्व को उत्पन्न करते हैं—यह संशय है। क्योंकि दोनों तरह के उदाहरण मिलते हैं, जैसे—तीन ग्रावा अर्थात् पत्थर भोजन के एक पात्र को धारण करते हैं, एक भोजन पात्र को भोजन निर्माण के समय तीन प्रस्तर पर रखा जाता है। (त्रयो ग्रावाह एकामुखां धारयन्तो दृश्यन्ते।) इसी प्रकार नागदन्त = खूँटी अकेले ही सामान को धारण करते हैं। अतः यजन्ति, जुहोति, ददाति मिलकर कार्यकारी हैं या स्वतन्त्र रूप से—यही संशय है।

इस प्रसङ्ग में पूर्वपक्षी का कहना है कि इस स्थल में यज्, हु एवं दा आदि धातु के भिन्न होने पर भी उससे जो तिङ् विभक्ति होती है, वह अभिन्न होने से प्रत्येक धातु में भावना का भेद नहीं हो सकता है। क्योंकि धातु भावना का वाचक नहीं है किन्तु आख्यात ही भावना का वाचक है इसलिए तीनों भावनाओं से एक ही अपूर्व की कल्पना करनी होगी। इसके समाधान में सिद्धान्ती का कहना है कि 'शब्दान्तरे कर्मभेदः' इस स्थल में यजेत्, जुहोति एवं ददाति आदि धातु का भेद होने के कारण भावना का भी भेद अवश्य मानना होगा। क्योंकि 'कृतानुबन्धत्वात्' धात्वर्थ के द्वारा ही भावना का अनुबन्ध अर्थात् अवच्छेद किया जाता है। धात्वर्थ के द्वारा ही भावना अवच्छिन्न अर्थात् सीमाबद्ध होती है। प्रकृत में धात्वर्थ का भेद होने पर भी आख्यात अभिन्न होने से भावना का भेद नहीं हो सकता है यह कथन तर्कसङ्गत नहीं है। क्योंकि व्याकरण के नियम के अनुसार अनेक धातुओं के आगे एक ही आख्यात प्रत्यय एक बार ही प्रयुक्त होगा, यह नियम नहीं है। अतः प्रत्येक धातु के आगे स्वतन्त्र भाव का एक-एक आख्यात प्रत्यय प्रयुक्त होने से एक विशेष धातु के द्वारा उपरक्त होने से वे अभिन्न होते हैं। इसलिए भिन्न-भिन्न धातु से उपरक्त विभिन्न आख्यात से विभिन्न भावना की प्रतीति होगी इसीलिए प्रकृत में याग, दान एवं होम की भावना परस्पर विभिन्न होने से सभी श्रुतियों से एक ही अपूर्व उत्पन्न होता है यह मानना उचित नहीं है। आशय यह है कि यजेत्, जुहोति, ददाति इन तीनों के पूर्वभाग में यज्, हु और दाह का प्रयोग है जो याग् हू और दान को कहता है और उसके उत्तर आख्यात प्रत्यय उसी भावना का अनुवाद करता है। इसी के आधार पर एक विशिष्ट अपूर्व की भावना का प्रश्न होता है। इस सूत्र के अनुसार शब्द का भेद होने से अपूर्व का भेद माना जाता है। यजेत् से याग की कर्त्तव्यता कही जाती है। यजेत् से याग् की ही सत्ता अवगत होती है। दान और होम की नहीं। दान और होम् का सन्निहित वाक्य के कारण सत्ता अवगत होती है श्रुति-सर्वापेक्षया बलवती है। इसलिए इससे भिन्न अपूर्व की उत्पत्ति मानना उचित है।

अर्थात् ये तीनों पृथक् कर्म हैं और इनमें याग स्वर्गादि फलयुक्त होने के कारण प्रधान है और इसके साथ फलरहित होम और दान गुणकर्म हैं। अपूर्व की उत्पत्ति तीनों से होती है, किन्तु याग् से उत्पन्न अपूर्व प्रधानापूर्व है और होम और दान से उत्पन्न अपूर्व अङ्गानुरूप है। 'शब्दान्तरे' = धातु भेद होने से, 'कर्मभेदः' = भावना का भेद होने से 'कृतानुबन्धत्वात्' = धात्वर्थ के द्वारा भावना का अनुबन्ध अर्थात् अवच्छेद किया जाता है। अपपर्याय धातु भेद श्रुत होने पर उसके द्वारा भावना का भेद होता है क्योंकि धात्वर्थ के द्वारा भावना का अवच्छेद अर्थात् इसकी सीमा का अवच्छेद किया जाता है ॥ २ ॥

इति अङ्गापूर्वभेदाधिकरण।

### अथ द्वितीयमभ्यासाधिकरणम्

## [२] एकस्यैवं पुनः श्रुतिरविशेषादनर्थकं हि स्यात् ॥२॥ सि० ॥

शा० भा०—समिधो यजति तनूनपात यजति इत्येवमादिः पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः किमेकमपूर्वं चोदयति, किं प्रत्यभ्यासमपूर्वभेद इति। शब्दान्तरे कर्मभेद उक्तः। इह स एव शब्दः पुनः पुनरुच्चार्यते। तस्मादेकमेवाऽत्राऽपूर्वम्। नन्वपूर्वान्तरमविदधदनर्थको भवति। सत्यमेवाप्रयोजनो भवति। बहुकृत्वोऽपि चोच्चार्यमाणो नान्यार्थो भवति। यत्प्रथम[1] उच्चारणे गम्यते, शतत[2]मेऽपि तदेव गम्यते। तस्मात्पञ्चकृत्वोऽभ्यस्तो यजतिशब्द एकमपूर्वं चोदयति। न चाभ्यासोऽनर्थको भविष्यति। तनूनपादादीर्देवता विधास्यति। तस्मादेकमपूर्वम्। एवं प्राप्ते।

ब्रूमः। एकस्यैवं पुनः श्रुतिः स्यात्। कर्मभेदं कुर्यादित्यर्थः। तावत्येव विधीयमाने, असति कस्मिंश्चिद्विशेषे पुनःश्रुतिरनर्थिका भवेत्। ननूक्तं न शक्नोत्यर्थान्तरं विधातुमिति। उच्यते। समिधो यजति इत्यपि प्रथमोऽनुवाद एव, दर्शपूर्णमासाभ्यां यजेत इति यागः प्राप्त एव। तत्र देवता न शक्या विधातुम्। श्रुतिप्राप्ता हि तत्र देवता। इयं वाक्यात् प्रकरणाद्वा। तयोर्विकल्पो न न्याय्यः। स एष देवतायागसम्बन्धो विधीयमानोऽक्रियमाणे यागे न शक्यः कर्तुमित्यनर्थकः स्यात्। क्रियमाणे तु शक्यते। तस्मादभ्यसितव्यो यागः। प्रत्यभ्यासं चादृष्टभेद[3] इति। न च यत् समित्सम्बन्धेन क्रियते, तत् तनूनपात्सम्बन्धेन; भिन्नत्वात्तयोः। अतो न विकल्पः।

प्रयोजनं[4] पूर्वपक्षे सकृत् प्रयोग इति। सिद्धान्ते पुनः पुनः प्रयोग इति ॥२॥

इति द्वितीयमभ्यासाधिकरणम् ॥ २ ॥

---

१. ब. यत्प्रथमं उच्चार्यमाणे।　　२. ब. शतकृत्वोऽपि।

३. ब. वापूर्व।　　४. ब. पक्षोक्तं (इत्यधिकम्)।

भा० वि०—यद्यपि शब्दान्तरान्तरं शब्दभेदरूपत्वेन सादृश्यात्संज्ञाया विचार्यत्वं युक्तं तथापि धातुभेदे धात्वर्थभेदात् चेद्भावनाभेदः तर्हि धात्वर्थभेदे धात्वर्थाभेदात् भावनाया अप्यभेद इति प्रत्युदाहरणरूपेण पूर्वपक्षसौकर्यादस्यान्तरसङ्गतिः विधिः पुनः श्रवणरूपमभ्यासमुदाहरति—**समिधो यजतीति**। धात्वैक्याद्विध्यभ्यासाच्च संशयमाह—**एष इति**। एकमपूर्वमिति। फलद्वारा कर्मभेदाभेदौ अभिमतौ पूर्वोक्तभेदहेत्वभावादेकमेव कर्मेति पूर्वपक्षमाह—**शब्दान्तर इति**। न चेह शब्दान्तर इति शेषः। न केवलं भेदहेत्वभावादभेदः प्रत्यभिज्ञाख्याभेदहेतुसद्भावाच्चेत्याह—**इहेति**। यस्माद्यजतिशब्दः सकृत्प्रत्यक्षेणावगतः पुनरुच्चार्यमाणोऽपि स एवेति कृत्वा तदर्थोऽपि स एव तस्मात्तत्साध्यं कर्मापि तदेवेत्याह—**तस्मादिति**।

ननु विधि पुनः श्रवणरूपस्याभ्यासस्य विधेयकर्मभेदं विनानर्थक्यापत्तेः कर्मान्तरमेवेति चोदयति—**नन्विति**। निष्प्रयोजनत्वापत्तिमात्रेण नाभिधेयभेदकल्पना युक्ता, अर्थैक्यप्रत्यभिज्ञानविरोधादिति परिहरति—**सत्यमित्यादिना**।

ननु वेदस्य प्रयोजनवदर्थाभिधायित्वस्यार्थवादाधिकरणे स्थितत्वात् निष्प्रयोजनत्वापादककर्मैकपक्षो न युक्त इत्याशङ्कामपाकुर्वन्नुपसंहरति—**तस्मादिति**। स्वरूपतरत्वेऽर्थवादानां प्रत्यक्षादिसापेक्षत्वेनाप्रामाण्यापत्तेः स्तुत्यर्थतोक्ता पुनः श्रुतेस्तु पूर्वकर्मविधायित्वेऽप्यनपेक्षत्वेनाप्रामाण्यानापत्तेः न निष्प्रयोजनत्वापत्तिमात्रेण भेदकतेत्याशयः, निष्प्रयोजनतापि नास्तीत्याह—**न चेति**। समिद्वाक्यविहिते कर्मणि विकल्पेन देवतान्तरविधानार्थत्वादित्याह—**तनूनपादिति**। सूत्रं व्याकुर्वन् सिद्धान्तमाह—**एवमिति**। यथा शब्दान्तरं तथा पुनः श्रुतिरपि कर्मभेदं कुर्यादेवं शब्दार्थमाह—**कर्मेति**। अविशेषादित्यादिहेतुभागं व्याचष्टे—**तावत्येवेति**। विधेरप्रवृत्तप्रवर्तनस्वभावत्वाद्विहितविधौ अप्रामाण्यापत्तेः विधि पुनः श्रवणस्य विधेयभेदकत्वमाश्रयणीयमित्यर्थः। बहुकृत्वोऽपीत्यादिनोक्तामर्थान्तरविधानानुपपत्तिं परः स्मारयति—**नन्विति**। धात्वर्थैकत्वप्रत्यभिज्ञानात्तनूनपादादिदेवताकृष्टत्वाच्च विधिशक्तेरित्यभिसन्धिः। यद्यपि समिदादिशब्दानां देवताविधित्वं नवमे निराकरिष्यते तथाप्यभ्युपेत्य दूषयति—**उच्यत इत्यादि**। तत्र पुनः श्रुतेः देवताक्षिप्तशक्तित्वात् कर्मभेदकत्वाभावेऽपि गुणाद्भेदो भविष्यतीति वक्तुं समिद्वाक्येन शुद्धे यागे विहिते तदनुवादेन विकल्पेन तनूनपादादिदेवताविध्युपपत्तेः न गुणाद्भेद इति शङ्कां निराकुर्वन् आह—**समिधो यजतीत्यपीति**। तत्र हेतुः—**दर्शपूर्णमासाभ्यामिति**। अस्तु तर्हि तत्रैव समिदादिपदैः देवतागुणविधानं तत्राह—**तत्रेति**। देवताशब्दो द्रव्यस्याप्युपलक्षणार्थः आग्नेयोऽष्टाकपाल इत्युत्पत्तिवाक्यसिद्धत्वादुभयोरित्याह—**श्रुतीति**।

ननु श्रुतिप्राप्तायामपि देवतायां विकल्पेन देवतान्तरविधानं किं न स्यादत आह—**इयमिति**। अतुल्यबलत्वादिति भावः। एवं वाक्यान्तरसिद्धे यागे गुणविधानासंभवात् स्ववाक्य एव देवतायागसंबन्धो विधातव्यः। स च यागविधानमन्तरेण न शक्यो विधातुमिति प्रतिपादितेऽपि गुणविधित्वे यागान्तरविधिरापद्येतेत्याह—**स एष इति**। अविधीयमानत्वेनाक्रियमाण इत्यर्थः। अधिकरणार्थमुपसंहरति—**तस्मादिति**। यस्मात्समिदादिवाक्यैः प्रधानयागानुवादे सति पुनः पुनर्यागस्याक्रियमाणत्वात् देवातान्तरान्वयकरणाशक्तेः विध्यानर्थक्यापत्तिः तस्माद्यागविधित्वमभ्युपगम्य विहिताविध्ययोगाच्च भिन्नान् यागानभ्युपगम्य भेदेन कार्या इत्यर्थः।

ननु यागभेदेऽपि प्रयाजसमाख्यया एककार्यत्वावगतेः विकल्पस्य न्याय्यत्वान्नाभ्यासो युक्तः इत्याशङ्क्याह—**प्रत्यभ्यासमिति**। एतद्विवृणोति—**न चेति**। यत्समिद्यागान्वयेन क्रतोरदृष्टमुपकाररूपं क्रियते न हि तदेव तनूनपाद्यागेन तयोर्यागयोः भिन्नत्वेन तदनुनिष्पाद्यपूर्वभेदावगतेः समाख्यायाश्च प्रधानप्राग्भावमात्रनिमित्तत्वेन कार्यभेदेऽप्यविरोधात् अतो न विकल्प इत्यर्थः। विचारप्रयोजनमाह—**प्रयोजनमिति**। ननु यागैक्येऽपि अनेकदेवतान्वयसम्पादनायानुष्ठानाभ्यासोऽनुपपत्तेः कथं पूर्वपक्षे सकृत्प्रयोगः प्रयोजनमित्याशङ्क्य निरासार्थमुक्तं—**पक्षोक्तमिति**। विकल्पेन देवतान्वयितया विधानोपगमात्सकृदनुष्ठानं प्रयोजनमभिमतमित्यर्थः ॥२॥

त० वा०—शब्दान्तराधिकरणप्रत्युदाहरणरूपेणाभ्यासस्य पूर्वपक्षः सुखमभिधीयत इति, तदनन्तरमारम्भः। तत्र 'समिधो यजति, तनूनपातं यजति' इत्यादिषु समिदादिशब्दानपोद्धृत्य यजतीत्येतत्पञ्चकृत्वोऽभिहितं किमेकस्य कर्मणो वाचकम्, अथानेकस्येत्युदाहृतम्।

तदाक्षिप्यते।

गुणो वा नामधेयं वा समिदादिपदं भवेत्।
ताभ्यामेव च भेदोऽत्र किमभ्यासः करिष्यति ॥

षडपि भेदहेतवः पृथग्भूताः स्वसामर्थ्यमात्रव्यापारफला दर्शयितव्याः। तद्यावदत्र गुणनामधेययोर्भेदकरत्वं नापनीयते, न तावदभ्यासस्य परभागलाभोऽस्तीति, अन्यदुदाहर्तव्यम्। न च तत्संभवति। कुतः?

प्रयुज्यते हि वेदेषु नाऽऽख्यातं केवलं क्वचित्।
नाम किंचित्प्रयुक्तं चेत्तस्य चोक्तं गतिद्वयम् ॥

'ऐन्द्रवायवं गृह्णाति' इत्येवमादीनि हि सर्वाणि परस्परासंगत्यौत्पत्तिकगुणयोगाद्भिद्यन्ते। 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इत्यादीन्यपि 'फलं [1]चाकर्म-

1. क. वाऽकर्म।

संनिधौ' इत्यनेन न्यायेन निमित्तं प्रत्युपादीयमानत्वाद्भिद्यन्ते, निमित्तसंबन्धपरत्वाच्च नाभ्यासानर्थक्यमित्यभेदकत्वम्[1]। ये तु पञ्चशारदीयेषु "तान्पर्यग्निकृतांस्तान्पर्यग्निकृतान्" इत्येवमभ्यासमुदाहरन्ति, तेषां प्राकृत[2]पर्यग्निकरणानुवादप्रस्मरणसामर्थ्यं तत्। न चाऽत्र यजतिः श्रूयते, यस्याभ्यासाद्भेदः स्यादिति, न किंचिदुदाहरणम्।

यथोदाहृतेष्वेव तु समाधिः।

प्रायेणाऽऽख्यातसंबन्धि नामेष्टं पारतन्त्र्यभाक्।
तस्यैव प्रथमं तेन भेदाभेदनिमित्तता ॥

यान्युपादेयार्थानि नामपदानि, तानि तावदाख्यातपरतन्त्रत्वात्तदनुसारीणि सन्ति तद्वृत्तिं प्रतीक्षन्ते। तच्चेत्प्रकृते निविष्टं नामपदमपि तस्यैव गुणविधिः, नामधेयं वा[3]। अथ तेनापूर्वं परिकल्पितमतस्तद्गामि नामपदमित्येवं भेदाभेदयोरवगतयोः पश्चादागच्छत्समिदादिपदमकिंचित्करत्वादुदास्ते। तेन तदपोद्धृत्याऽऽख्यातमात्रं विचार्यते।

नन्वेवं सति संज्ञागुणयोरभेदकत्वप्रसङ्गः। तत्र तौ भेदकौ, यत्राऽऽख्यातपदं न व्याप्रियते। तथा चोदाहरिष्यति 'अथैष ज्योतिः' 'वाजिभ्यो वाजिनम्' इति। वाजिने तावन्नैवाऽऽख्यातपदं श्रूयते। ज्योतिरादावप्याख्यातस्य गुणफलसंबन्धव्यापारेण प्रकृतनिवेशसंभवे सति, ततः पूर्वप्रवृत्तया संज्ञयैव भेदो भविष्यति। यत्राप्याख्यातस्य स्वरसेन प्रकृतकर्मनिवेशोपप्लवे सति तत्रासंभवन् गुणो विधीयते, तत्राप्यसौ भेदको। यथाऽत्रैवाभ्युपेत्यवादे वक्ष्यति। स एष देवतायागसंबन्धो विधीयमान इत्यादि। तच्चाऽऽख्यातस्य भेदशक्तौ विहतायां भवतीति, तदेवं तावत्प्रथमं परीक्ष्यते। **किमेकमपूर्वमिति**—फलतः कर्मभेदाभेदोपन्यासः।

यद्वा किमेकं कर्मापूर्वं चोदयति, उत पञ्चापि कर्माण्यपूर्वाणीति। किं प्राप्तम्? एकमपूर्वमिति। कुतः?

प्रत्ययार्थः समानोऽपि धातुभेदेन भिद्यते।
धातोरपि समानत्वे केन भेदोऽवधार्यते[4] ॥

अपि च। पूर्वं तेनैव शब्देन बुद्धौ कर्म निवेशितम्।
न भेदं प्रत्यभिज्ञानात्पुनः श्रुत्या प्रपद्यते ॥

यथैव यजतिशब्दः सकृत्प्रत्यक्षेणावगतः पुनरुच्चारणे स एवेति प्रत्यभिज्ञानान्न भिद्यते। तथा तदर्थोऽपि। यथा चात्रैव बुद्धबोधनकृतप्रत्यक्षमनर्थकमपि भवन्न

---

१. क. अभेदकम्।
२. क. प्रकृतेति।
३. क. शतकृत्वोऽपि।
४. क. अवधार्यताम्।

शक्नोति शब्दान्तरत्वं कर्तुम्, एवं पुनः श्रुतिरर्थान्तरत्वम् । न ह्यानर्थक्यं नाम क्वचित्प्रमाणवर्गेऽन्तर्भवति । यच्च वेदोऽवबोधयति, तन्मात्रमेव तत्प्रमाणवादिभिरभ्युपगन्तव्यम् । तदिहैकशब्देनाभेदे वेदेनावगमिते, योऽन्यत्वं कल्पयति, तेन वेद एवाप्रमाणीकृतः स्यात् । न च प्रमाणावगतमानर्थक्यं दोषाय । अस्ति वेयमपि गतिः प्रयोगवचनसंस्पृष्टः शब्दोऽर्थमवदध[1]त्स्वयं प्रयोगित्वेन गृह्यत इति ।

अथ वाऽऽभीक्ष्ण्यादिद्योतनार्थोऽभ्यासो भविष्यति । अस्ति हि लोके द्विर्वचनादतिरेकेणापि यावत्कृत्वोऽभ्यस्ते विवक्षितार्थप्रकाशनं भवति, तावत्कृत्वोऽभ्यासः । तथा च पञ्चेन्द्रोपाख्याने वृद्धकुमारीवरप्रार्थने पतिं मे देहीति पञ्चकृत्वोऽभ्यासो श्रूयते । न च यथा तत्र देवतायाश्छलग्राहित्वमेवमिह कस्यचित् । येन पतिपञ्चकवत्पञ्चयागकल्पना स्यात् ।

अथ वा सर्वेष्वप्युच्चारणेषु विधावाश्रीयःमाणे कर्मैकत्वं विज्ञायते । यथा शाखान्तरीयेषु ज्योतिष्टोमादिवाक्येषु । तेन तुल्यार्थानां वैकल्पिकत्वात्तदेव कर्म कदाचित्समिद्वाक्येनाभिधास्यते, कदाचित्तनूनपाद्वाक्येन । न हि समानकार्यत्वेन व्रीहियवयोरेकस्याऽऽनर्थक्यादर्थान्तरसाधकत्वं विज्ञायते ।

अथ वा तनूनपादादिदेवताविधानार्थत्वान्नाऽऽनर्थक्यम् । कर्मविधाने हि सति नामधेयत्वं भवेत्, अनुवादे तु नामधेयविधिर्न संभवतीति गुणविधित्वम् । तस्मादप्यकर्मान्तरम् । यत्रापि च प्रदेशान्तरे तावेव शब्दार्थौ प्रत्यभिज्ञायेते, तत्रापि हि गृहान्निर्गतस्य पुनर्गृहजनप्रत्यभिज्ञायामिवार्थान्तरत्वमशक्यं वक्तुम् । किमुतेहानन्तरविपरिवृत्त्या बलीयस्याऽवरुद्धायां बुद्धौ । यदि च प्रत्युच्चारणमर्थान्यत्वं भवेत्, तदाऽनित्यव्यक्तिशब्दार्थत्वप्रसङ्गः ।

किं च । गत्वादिवन्न चैतेषु यागत्वं व्यतिरिच्यते ।
व्यक्त्यैकत्वे निरूढे च कथं कर्मान्तरं भवेत् ॥

यद्यपि च पुनःश्रुत्यर्थवत्त्वाय पञ्चकृत्वो यागोऽभ्यस्येत, तथाऽपि ज्योतिष्टोमवदेवाकर्मान्तरत्वं स्यात् । न चात्राभ्यासहेतुरस्ति, वाक्यसंयोगेन देवतानां वैकल्पिकत्वात् । तस्मादेको याग इति । एवं प्राप्ते ।

सिद्धान्तः ब्रूमः एकस्यापि पुनः श्रुतिरेवं स्यात्—यथा शब्दान्तरं भेदकम्, तथेत्यर्थः । कथम् ?

आख्यातप्रत्ययः पूर्वं विधत्ते कर्मशक्तितः ।
अन्येनाऽऽक्षिप्तशक्तिस्तु तदाकाङ्क्षत्यनूदितम् ॥

---

१. क. अददत् ।

यदि हि विपरिवृत्तिरनुवादकारणं स्यात् ततो न कर्मान्तरमध्यवसीयेत। न तु विपरिवृत्तिकृतमनुवादकत्वम्, किं तर्हि ?

अनुवादविशेषत्वं प्रकृतप्रत्ययाद्भवेत्।
तत्सामान्यप्रसिद्धिस्तु[1] स्ववाक्यादेव लभ्यते॥

यदा हि विधायकस्य विधिशक्तिर्धात्वर्थादुत्तार्यते, तदाऽनेकविध्यशक्तेर्धात्वर्थानुवादः प्रार्थ्यते। तां च प्रार्थनां विपरिवृत्तिः पूरयति। धात्वर्थोत्तारणं च विधिशक्तेर्विधेयान्तरोपादाननिमित्तम्। यथा व्रीहिभिर्यजेत, 'दध्ना जुहोति' इति। सर्वत्रैवानेकार्थोपादाने विधिशक्त्यनेकसंभवात्, एकं किंचिदनूद्यतामित्यपेक्षायां सत्यां यद्विपरिवर्तते, यदित्यवधारणं भवति। ततश्च दध्यादेरप्राप्तत्वाद्धात्वर्थोऽनूद्यते। यदा तु खलु नैवानेकं विधेयमुपादीयते, तदा नैव तस्मिन्वाक्येऽनूद्यतां किंचिदित्यपेक्ष्यते। ततश्चाप्राप्ते सामान्यानुवादे, तत्सिद्ध्यपेक्षिणी विशेषानुवादकारणभूता किं विपरिवृत्तिः करिष्यति। तस्मान्न यत्प्राप्तं तदनूद्यत इति लक्षणम्। किं तर्हि, यदनूद्यतामित्यपेक्षितम्, तत् प्राप्तौ सत्यामनूद्यते, नैकाङ्गविकलमनुवादत्वापेक्षणेन प्राप्तिबुद्धिमात्रेण वा। तत्र यथैवानुवादापेक्षणे सत्यपि प्राप्त्यभावाद्विशिष्टविधानरूपेण विधिर्भवति, एवं प्राप्तिबुद्धौ सत्यामप्यनुवादत्वानपेक्षणाद्विधेः कर्मान्तरत्वं सत्यपि धातुप्रत्ययैकत्वप्रत्यभिज्ञाने।

यत्तु बलीयस्य विपरिवृत्त्या शतकृत्वोऽप्युक्ते तद्बुद्धिर्नापैतीति, प्रमाणबलाबलज्ञानात्सर्वं संभाव्यमेव[2] तत्। तथा हि—

श्रुतेः कर्मान्तरज्ञानं संनिधेरेककर्मधीः।
तत्र श्रुतिबलीयस्त्वं जानतां कथमेकता॥

विधायिका हि श्रुतिरन्यानाक्षिप्ता धात्वर्थभावनयोरेव संनिरुद्धा तत्रैवाप्राप्तविषयस्वभावं विधित्वं प्रसुवाना पञ्चमस्थानाख्यप्रमाणकृतां प्राप्तबुद्धिमुपमृद्य विधेयत्वक्षमं कर्मान्तरं कल्पयति। स चेद्विधिः श्रुतिमनरुध्येत कर्मान्तरमध्यवस्यति, अथ संनिधिं ततो न कर्मान्तरत्वम्। यत्र पुनर्विधिश्रुतिरन्यत्र व्याप्रियते, तत्राविरोधात्संनिधिकृतं कर्मैकत्वज्ञानं भवति। तस्मादिह विधेययागव्यक्तिफलत्वोपात्तसामान्यैकत्वनिमित्तैव प्रत्यभिज्ञानभ्रान्तिः। न हि व्यक्तिप्रत्यभिज्ञाने किंचित्कारणमस्ति। यदत्र परमार्थेन प्रत्यभिज्ञायते, तदेकत्वे न कश्चिद्विवादः।

तथा हि—स्थिते यागत्वसामान्ये पशुसोमेष्टिकर्मणाम्।
विशेषव्यक्तिरूपेण भेदः सर्वत्र चिन्त्यते॥

---

१. क० प्रवृत्तिस्तु। २. क. संभाव्यमेतत्।

ननु चात्र यजिश्रुत्यैवैककर्मविज्ञानान्न वक्तव्यं संनिधिकृतमेवैकत्वमिति, नैतदेवम् ।

यागोऽयमिति विज्ञानं यजिश्रुत्योपजन्यते ।
स एवेत्यन्य एवेति व्यापारोऽस्या न विद्यते ॥

न हि यः पूर्वविहितो यागः, स एवायमिति यजतिशब्दो वदति । औदासीन्येनैव त्वभिदधाने शब्दे संनिधिकृतामभेदबुद्धिमनभिजानतां श्रुतिनिमित्ता प्रत्यभिज्ञानभ्रान्तिः । ननु[1] तव व्यक्तेरशब्दार्थत्वादभिन्नं सामान्यं श्रुत्या विज्ञायते । येनैव व्यक्तिर[2]शब्दार्थस्तेनैवानेककर्मतां श्रुतिर्बोधयतीति । कथम् ?

व्यक्तयो हि विधीयन्ते सामान्येनोपलक्षिताः ।
तस्मात्तद्गतमेवात्र भेदाभेदनिरूपणम् ॥

यत्सामान्यं शब्दार्थभूतम्, तस्याननुष्ठेयत्वेनाविधेयत्वात्सर्वत्र व्यक्तय एव विधीयन्ते । तत्र 'समिधो यजती'त्येका व्यक्तिरसाधारणा चोद्यते । तनूनपातं यजतीत्यपरा । तस्मात्पञ्च व्यक्तय इति सिद्धम् ।

यत्त्वत्र गकारादिवद् व्यक्त्याकृतिभेदो नास्तीति । सत्यं नास्ति

किं तु—यन्मात्रमेकं कर्मेति स्वरूपेणावधार्यते ।
ततः परं न भेदोऽस्ति प्राक्तस्माद्भेदनिश्चयः ॥

यथैव गकारादीनां वर्णत्व-शब्दत्व-गुणत्वेषु सत्सु द्रुतादिभेदस्य परोपाधित्वाद् गकारादिरूपैकत्वसिद्धेर्गत्वादिमात्रं न कल्पितम्, तथाऽत्र सत्ता-कर्म-यागत्वेषु समिद्यागादिपर्यन्तेषु सत्सु देशकालयजमानादिभेदाद् द्रुतादिवृत्तिस्थानीयान्न भेदः । तथा हि—

पौर्णमासीसमिद्यागादामावास्यो न भिद्यते ।
यजमानान्तरेष्वेवं देशभेदेष्ववस्थितम् ॥

न च यत्र प्रत्यक्षेण केवलेन भेदोऽवगम्यते, तदेवैकं विद्यते, शब्दस्यापि प्रामाण्याविशेषात् । अतोऽत्र शब्दान्तरादिषट्कावधिरेव भेदोऽवधारयितव्यः । न हीष्टिपशुसोमैकाहाहीनसत्रेषु परोपाधिर्भेदप्रत्ययो विपर्येति वा कदाचित् । तेन तासु विधेयरूपासु व्यक्तिष्वेव नित्यास्सर्वाभिव्यञ्जकानि भिद्यन्ते । तेभ्यश्च फलस्वरूपसिद्धिर्यागत्वमेव वैकमवान्तरसामान्यम्, नान्यत्किंचित् ।

नन्वेकाहत्वादीन्यप्यवान्तरसामान्यानीष्यन्ते । न, कालविशेषयोगादेव दण्ड्यादिवदभिन्नशब्दप्रत्ययप्रवृत्तिसिद्धेः । एकेन ह्यह्ना योगादेकाहत्वम् । द्व्यादिभि-

---

१. क. न तव । २. क. अन्यशब्दार्थ ।

रहीनत्वं प्राग्द्वादशाहात्, स तु कथमप्युभयात्मा, तदवधिकमेव चाऽऽसहस्र[१]-संवत्सरं सततकालयोगनिमित्तं सत्रत्वम्, हविर्विशेषयोगादिष्ट्यादित्वमिति सिद्धम्। अथाप्यवान्तरसामान्यानि पुनः कल्प्यन्ते, तथाऽप्यस्मत्पक्षाविरोधः। एवं यदि ज्योतिष्टोमत्वादीनि देशकालादिभेदाच्च तद्व्यक्त्योऽत्यन्तातिरेकिण्यो भवन्ति, तथाऽप्यदोषः। तथा यद्यपि देवतोद्देशद्रव्यत्यागात्मकत्वात्सर्व एवैको यागः कल्प्यते, तेष्वपि भेदप्रमाणैस्तदनुष्ठाननानात्वावगमाद्व्यवहारसिद्धिः।

नन्वेवं सति ज्योतिष्टोमग्रहाभ्यासवत् समिदादियागाभ्यासेष्वकर्मान्तरत्व-प्रसङ्गः। सर्वथा तावदपूर्वभेदाद्धर्मव्यवस्थादीनि सिध्यन्ति, तथाऽपि तु येह कर्मभेदबुद्धिर्ग्रहयागेषु वाभ्यासभेदप्रसिद्धिः, तत्रैतन्निमित्तम्। इह सकलयाग-रूपानुष्ठानभेदचोद[२]नात्तत्र पुनः समस्ताभ्यासात्मकस्य ज्योतिष्टोमसंज्ञत्वाद्यद्यपि प्रत्यभ्यासं यागत्वमस्ति, न तु ज्योतिष्टोमत्वमित्यभ्यासेऽवयवबुद्धिर्नेतरत्रा-वयव्यन्तररूपानुपादानादिति विशेषः। एतज्ज्ञानस्य च प्रयोजनं पशुसोमा-धिकरणे वक्ष्यामः।

**तस्मादभ्यसितव्यो याग** इति च भाष्यमेतत्पक्षाश्रयणेनैव। अथ वा भिन्ना-स्वेव व्यक्तिषु सामान्यापेक्षमभ्यासवचनम्। **ननूक्तं न शक्नोत्यर्थान्तरं विधातु-मिति**—विधिशक्तेस्तनूनपादादिदेवताविधा[३]नाक्षेपे सति विपरिवृत्य विरोध इति मन्यसे। तत्र 'तत्प्रख्यं चान्यशास्त्रम्' इत्येवं समिदादिपदानां क्रमविनि-युक्तैर्वलिङ्गमन्त्रवर्णकल्पितदेवतासम्बन्धद्वारेण नामधेयत्वे सति, अविधेयत्वा-न्नास्ति विधिशक्त्याक्षेप इति वक्तव्ये, देवतायागसम्बन्धविधानोपन्यासोऽभ्यु-पेत्यवादेन।

यत्तावद्भवानप्राप्तत्वात्प्रथमस्य यागविधित्वं मन्यते, तदयुक्तम्, तस्यापि प्रधान[४]यागानुवादत्वात्। तत्र समिदादिशब्दैर्द्रव्यम्, देवता वा विधीयते। उभय-मपि चाऽऽग्नेयोऽष्टाकपाल इत्यादिभिरुत्पत्तिवाक्यैर्विहितेन द्रव्यदेवतेन विरु-ध्यते। अवश्यं चैतद्वाक्यकृतो देवताया[५]गसम्बन्धः कर्त्तव्यः। स च यागान्तरादृते न सम्भवतीति प्रति[६]पादिते गुणविधित्वे, कर्मान्तरत्वमापद्यते। एवं पूर्वत्र कर्मण्यु-त्तरोत्तरगुणविध्यसम्भवात्सर्वेषां कर्मान्तरत्वमिति व्यर्थो गुणविध्युपन्यासश्रमः। गुणविधित्वमपि न तावद् द्रव्यमीदृशेन शब्देन सम्भवतीति व्याख्यातं सक्त्वधि-करणे। विशेषेण च यजतेः कर्मभूतद्रव्यसम्बन्धो न घटते, न वाऽस्यं देवताविधि-रिति नवमे वक्ष्यते। तस्मात्कर्मविधिभिरेव भेदसिद्धिः॥ २॥

(इति द्वितीयमभ्यासाधिकरणम्॥ २॥)

---

१. क. सहस्रसंख्यवत्सर।　२. क. चोदना तत्र।　३. क. भिधाना।
४. क. प्रथम।　५. क. देवतापदं नास्ति।　६. क. प्रतिपादितेऽपि।

## अथ द्वितीयमभ्यासाधिकरणम्

न्या० सु०—ननु शब्दभेदरूपत्वेन सञ्ज्ञायाः शब्दान्तरसादृश्यादनन्तरविचार्यत्वासमाप्तेः कथमभ्यासस्सर्वानन्तरं विचार्यतेत्याशङ्क्याह—**शब्दान्तरेति**। धात्वर्थविषयत्वेन सञ्ज्ञायाः तन्मात्रभेदकत्वाच्छब्दान्तरस्य तु धात्वर्थवाचित्वेऽपि धात्वर्थस्य स्पष्टभेदत्वेनाऽभेदाशङ्कायोगाद्विशेषणशब्दानां च विशेष्यपरत्वेन धात्वर्थमात्रे धातोरपर्यवसानाद्धात्वर्थभेदद्वारा भावनाभेदकत्वाद्वैलक्षण्यम्, अभ्यासस्य तु पुनर्विधानात्मकत्वाद्विधेयश्च धात्वर्थानुरक्तभावनाविषयत्वेनोभयभेदकत्वाद्भावनाभेदकत्वांशेन साम्याद्धातुभेदे धात्वर्थभेदाद्भावनाभेदः, धात्वर्थभेदे तर्हि धात्वर्थाभेदाद्भावनाया अप्यभेद इति च प्रत्युदाहरणरूपेण पूर्वपक्षसौकार्यादनन्तरसङ्गतिरित्याशयः।

उदाहरणासंभवेनाभ्यासचिन्तामाक्षेप्तुं भाष्योक्तं तावदुदाहरणमुपन्यासपूर्वकमाक्षिपति—**तत्रेति**। ननु प्रमाणान्तरसम्भवेप्यभ्यासोऽपि प्रमाणं न वेति चिन्ता भविष्यतीत्याशङ्क्याह—**षडपीति**। एकस्मिन्विषयेऽनेकप्रमाणव्यापृतावेकप्रमाणव्युत्पादनेनैव कर्मभेदसिद्धेः प्रमाणान्तरस्य व्युत्पादने परस्याधिकस्यानन्यलभ्यस्य भागस्य भज्यमानस्य फलस्य लाभो नास्तीत्यर्थः। तर्हि उदाहरणान्तरं भवत्वित्याशङ्क्याह—**न चेति। एतदेव प्रश्नपूर्वमुपपादयति। कुत इति**। नन्वैन्द्रवायवादिनाम्नः संस्कार्यसोमपरत्वेनोक्तगतिद्वयाभावात्तद्युक्तमाख्यातमुदाहरणं भविष्यतीत्याशङ्क्याह—**ऐन्द्रवायवमिति**। देवतालक्षणगुणविधानार्थत्वादैन्द्रवायवादिनाम्नो वाऽपि गुणाद्भेद इत्यर्थः। भिन्नादिनाम्नस्तर्हि निमित्तार्थत्वेनागुणविधानार्थत्वात्तद्युक्तमाख्यातं भेदकं स्यादित्याशङ्क्याह—**भिन्न इति**। प्रकरणान्तरेण भेदसिद्धेरभ्यासस्य चाभेदकत्वान्नोदाहरणतेत्यर्थः।

कैश्चिद्वैशाख्याममावास्यायां सप्तदशमारुतीस्त्रिवत्सरा उपाकरोति सप्तदश पृश्नीनुक्ष्णस्तान्पर्यग्निकृतानेतरा लभते प्रेतरात्सृञ्जृन्ति, ततः संवत्सरा नवनीतपृश्नारुणा आनयन्ति तांश्चैवोक्षणस्तान्पर्यग्निकृतानेतरा लभन्ते प्रेतरान्सृजन्ति, ततः संवत्सरे राजीवा आनयन्ति तांश्चैवोक्षणन्पर्यग्निकृतानेतरेतरा लभन्ते प्रेतरान्सृजन्ति ततः संवत्सरे पिशङ्गीरानयन्ति तांश्चैवोक्षणस्तान्पर्यग्निकृतानेतरा लभन्ते प्रेतरां सृजन्ति ततः संवत्सरे सारङ्गीरानयन्ति तांश्चोवोक्षणस्तान्पर्यग्निकृतानेतरा लभन्ते प्रेतरात्सृजन्ती (तै० ब्रा०)ति पञ्चशारदीयाख्याहीनसम्बन्धिषु पशुषु विहितेषु पञ्चकृत्वः पर्यग्निकरणाभ्यासमुदाहृतमुपन्यासपूर्वकं निरस्यति—**ये त्विति**। 'पञ्चशारदीयास्तथेति चेदि(११.३.५१)त्येकादशाधिकरणे प्राजापत्योत्सर्गवदुक्ष्णामप्युत्सर्गः संस्कारनिषेध इति प्राप्ते।

संस्कारनिषेधे सति त्रींस्त्रीनुक्ष्ण एकैकस्मिन्नहन्यालभेरन्यं चोत्तम इति प्राप्ते कर्मण्यनेकगुणविधानाद्वाक्यभेदापत्तेर्नवमोपान्त्यव्युत्पादितारण्योत्सर्गवत्कर्मशेषनिषेधेन चोदनैकवाक्यत्वादिति सूत्रेण सिद्धान्तयित्वा, संस्काराणां च दर्शनादिति सूत्रान्तरेण प्रतिवर्षं संस्कारानुवाददर्शनात्कर्मैक्ये च द्रव्याभेदेन पुनः पुनः संस्कारानर्थक्यात्प्रतिवर्षं कर्म-

समाप्तिरवसीयत इत्युक्त्वा, ननु वचनमेतद्भविष्यतीत्याशङ्क्य, पर्यग्निकरोति पर्यग्निकृतां-श्चोत्सृजन्तीत्यनेकार्थविधौ वाक्यभेदापत्तेर्वत्सतरीषु च प्रकृतिप्राप्तानुवादत्वात्तत्साहचर्येणो-क्षस्वप्यनुवादतैव न्याय्येति भाष्यकृद्वक्ष्यति। नन्वविधेयत्वात्पर्यग्निकरणस्य पुनर्विधान-रूपाभ्यासाभावेऽपि यागानां पुनर्विधानेन भेदस्यैकादशे वक्ष्यमाणत्वादुदाहरणत्वं भविष्यतीत्याशङ्क्याह—**न चात्रेति।** द्रव्यदेवतान्वयकल्पत्वाद्यागानां तद्भेदेन गुणादेव यागभेदावगतेर्नाभ्यासस्य व्यापारोऽस्तीत्याशयः। उदाहरणासम्भवमुपसंहरतीति।

भाष्योक्तमेवोदहरणं समाधातुमाह—**यथोदाहृतेष्वेव त्विति।** भिन्ने जुहोतीत्यादेर-नुपादेयार्थस्याख्यातान्वितस्यापि नाम्नस्तत्पारतन्त्र्यभावात्—**प्रायेणेत्युक्तम्।** श्लोकं व्याचष्टे—**यानीति।**

ननु सर्ववाक्येषु चाख्यातं तेनाकाङ्क्षानिवर्त्यनात्

इत्यनेन न्यायेनाश्रुताख्याततत्केष्वपि वाक्येषु तत्कल्पनेनाख्यातवत्वान्न क्वचित्संज्ञा-गुणयोर्भेदकत्वं स्यादित्याशङ्कते—**नन्विति।** कल्पस्याख्यातस्य कल्पकपारतन्त्र्येण भेदाभेद-योरव्यापारात् ज्योतिरादौ 'चैतेन सहस्रदक्षिणेन यजेतेत्यादिगुणान्वयव्यापारेण, एतेनर्द्धिकामो यजेतेत्या'दिफलान्वयव्यापारेण च श्रुतस्याप्याख्यातस्य भेदाभेदयोर-व्यापारात्तदन्वितस्यापि नाम्नोऽपि भेदकत्वामविरुद्धमिति परिहरति—**तत्रेति।** भेदव्यापाराभावमात्रं सम्भवशब्देनोक्तम्।

ननु यच्छब्दाद्यनुपबद्धस्याख्यातस्य विधेयान्तरोपादानात्प्राक् प्रकृतनिवेशनिश्चये-ऽप्याख्यातसामानाधिकरण्यं विना संज्ञात्वानिश्चयात्कथं तयाभेद इत्याशङ्क्य—**तत् इत्युक्तम्।** यागसंज्ञात्वानिश्चयेऽप्यधिकारार्थाथशब्दान्वयेनानुष्ठेयक्रियासंज्ञात्वनिश्चयाद्भेद-कत्वोपपत्तिरित्याशयः। नन्वेवं सत'यैन्द्रवायवं गृह्णात्युद्भिदा यजेतेत्या'दिनाम्नामाख्यात-पारतन्त्र्याद्भेदकत्वानुपपत्तेः सर्वाणि परम्परासङ्गतौत्पत्तिकगुणयोगाद्भिद्यन्ते नाम्नैव चैवमादीनां भेद इति चायुक्तं स्यादित्याशङ्क्याह—**यत्रापीति।** अनर्थक्यप्रतिहतानां विपरीतं बलाबलमितिन्यायेनागत्या तत्र भेदकतेत्याशयः। एकसंज्ञावरुद्धे संज्ञिनि संज्ञान्तरस्याप्यसम्भवात्। गुणशब्देन संज्ञाप्युपलक्षिता आनर्थक्यनिमित्तत्वप्रदर्शनायैवादि-शब्देनाक्रियमाणे यागे न शक्यः कर्त्तुमित्यनर्थकः स्यादित्युदाहृतम्

नन्वेवं सत्यत्रापि गुणादेव भेदसिद्धेः किमभ्यासोपन्यासेनेत्याशङ्क्याह—**तच्चेति।** आख्यातस्य भेदकत्वसम्भवे तत्पारतन्त्र्याद् गुणस्य भेदकत्वं नास्तीत्याशयः। ननु भाष्येऽपूर्वभेदाभेदस्य सन्देहाभिधानात्किमेकस्य कर्मणो वाचकमनेकस्येत्ययुक्तमुक्तमित्या-शङ्क्य द्वेधा व्याचष्टे—**किमिति।** यजतिशब्दः किम् यागेऽभ्यासपूर्वमन्यत्कर्मकं विधत्ते, किं वा प्रतियजतिशब्दाभ्यासमन्येषां कर्मणां भेद इति द्वितीयव्याख्यायां भाष्यार्थः। अपूर्वशब्दोऽन्यवाची कर्मविशेषणमित्याशयः।

पूर्वपक्षं प्रतिजानाति—**किमिति**। हेतुप्रश्नोत्तरत्वेन शब्दान्तर इति भाष्यं पूर्वोक्त-भेदहेत्वभावाभिधानार्थत्वेन व्याचष्टे—**कुत इति**। इहेति भाष्यं कर्मप्रत्यभिज्ञाख्याभेद-हेत्वन्तरार्थत्वेन व्याचष्टे—**अपि चेति**। शब्दस्य तत्त्वात्पूर्वमेव कर्मबुद्धौ निवेशितमित्यर्थः। श्लोकं व्याचष्टे—**यथैवेति**। नन्विति भाष्येणानन्यपरविधिपुनःश्रुतविधेयकर्मभेदं विना-नर्थक्यापत्तेर्भेदकत्वमाशङ्क्य, सत्यमिति भाष्येणार्थशब्दोऽभिधेयवाची प्रयोजनवाची वेति विकल्प्याद्यपक्षे प्रयोजनाभावेऽप्यभिधेयसद्भावानर्थक्यमित्युक्तं तद्व्याचष्टे—**यथा चेति**। वार्त्तिके निष्प्रयोजनत्ववाच्यनर्थशब्दः। ननु वेदस्य प्रयोजनवदर्थाभिधायित्वनियमस्यार्थ-वादाधिकरणे स्थितत्वान्निष्प्रयोजनत्वापादकः कर्मैक्यपक्षे न युज्येतेत्याशङ्क्याह—**न चेति**। स्वरूपपरत्वेऽर्थवादानां प्रत्यक्षादिविरोधेनाप्रामाण्यापत्तेः स्तुत्यर्थतोक्ता। पुनःश्रुतेश्च पूर्वकर्मविधायित्वेऽप्यनपेक्षत्वेनाप्रामाण्यानापत्तेः निष्प्रयोजनत्वमात्रेण न भेदकत्वं कल्प्य-मित्याशयः। न चेति भाष्येण निष्प्रयोजनतापि नास्तीत्युक्तम्। तत्र भाष्योक्तस्य देवताविध्यर्थत्वस्य गुणनिमित्तभेदापत्तेरयुक्तत्वेनाऽपरितोषात्स्वयं तावत्प्रयोजनत्रयमाह—**अस्ति चेति**। मन्त्रवत्कर्मकालप्रयोगितैकं प्रयोजनमित्याशयः। विधिश्रवणात्प्रयोगार्हरूपा-भावेन प्रयोज्यत्वानुपपत्तेरपरितोषात्प्रयोजनान्तरमाह—अथ वेति। प्रतिप्रधानप्रयोग-मावृत्तिः आभीक्ष्ण्यम्। आदिशब्देनाऽतिशयः।

नन्वाभीक्ष्ण्ये द्वे भवत इति स्मृतेः पञ्चकृत्वोऽभ्यासो न युक्त इत्याशङ्क्याह—**अस्ति हीति**। सकृत्प्रयुक्तात्प्रतीतेऽप्यर्थे तात्पर्यातिशयद्योतनार्थत्वादभ्यासस्यातिशयातिरेकार्थो-ऽभ्यासातिरेक इत्यर्थः। पञ्चकृत्वोऽयभ्यासो दृश्यत इत्याह—**तथेति**। इन्द्रस्य त्वष्टृपुत्र-वधात्तेजोधर्ममाविशद्, बलं वायुं, रूपमश्विनौ, अर्द्धमात्मन्यतिष्ठन् ततः पाण्डुपत्न्यां कुन्त्यां धर्मेण तेजोनिक्षिप्तं युधिष्ठिरोऽभवद्वायुनिक्षिप्तं बलं भीमः, इन्द्रनिक्षिप्त देहार्द्धमर्जुनः, अश्विभ्यां माद्र्यां निक्षिप्तं रूपं नकुलसहदेवाविति पञ्चापीन्द्रावयवप्रकृतित्वादिन्द्रा एवेति पञ्चेन्द्रोपाख्याने कुमार्यैव वृद्धतां प्राप्तया पतिं मे देहीति पञ्चकृत्वो वरमीश्वरः प्रार्थित इति श्रूयत इत्यर्थः।

नन्वेवं सति पतिपञ्चकवद्यागपञ्चकमपि स्यादित्याशङ्क्याह—**न चेति**। अर्थान्तर-विवक्षया प्रयुक्तस्य शब्दस्यार्थान्तरकल्पनया प्रत्यवस्थानं छलम्। निद्रितेऽन्यमनस्के वा प्रबोध्यमाने बुध्यस्व बुध्यस्वेति यावत्प्रबोधम्। वृद्धकुमार्याश्च यावद्वरलाभमभ्याससम्भवे-ऽप्यपौरुषेयत्वाद्वेदे तादृगाशयानुपपत्तेः। प्रतिप्रधानानुष्ठानमावृत्तेश्च न्यायादेव सिद्धेरनुष्ठाना-दरस्य च विधित एव सिद्धेरपरितोषात्पञ्चानां विकल्पेन विधातृतेति **तृतीयं प्रयोजनमाह—अथ वेति**। अध्येतृभेदाभावाद्व्यवस्थितविकल्पानुपपत्तेरेकस्मिन्नध्येतरि विकल्पे सर्वा-ध्ययनानर्थक्यापत्तेरपरितोषाद्भाष्योक्तं प्रयोजनमभ्युपेत्यवादेनानुसन्धत्ते—**अथ वेति**।

ननु समिदादिशब्दानां देवताविध्यर्थत्वनिरासेन नामधेयत्वस्य वक्ष्यमाणत्वाद्देवता-विधानार्थता न युक्तेत्याशङ्क्याह—**कर्मेति**। विध्यपेक्षितविधेयविशेषसमर्पणार्थत्वान्नाम-धेयस्य प्राक्सिद्धविशेषापेक्षिण्यनुवादेऽनुपपत्तेरगत्या गुणार्थत्वापत्तिरित्यर्थः। वैश्वदेवादि-

नामधेयस्य गुणाद्युपबन्धोपयोगेनार्थवत्त्वादनुवादेऽप्युपपत्तिरित्याशयः। प्रत्यभिज्ञायाः कर्मैक्यप्रामाण्याभावेऽपि गुणविधावुपपदाक्रान्तविधिशक्तित्वेन कर्मानुवादावगतेर्गुणविधित्वस्याप्यभ्युपेत्यवादत्वं सूचयितुमाह—**तस्मादपीति**। वस्तुतस्तु प्रत्यभिज्ञैवाभेदे हेतुरित्याह—**यत्रापि चेति**। न देशान्तरस्थशब्दार्थप्रत्यभिज्ञानोक्तिरतिशयार्था। विधेयभेदज्ञानं च विना विध्यभ्यासाज्ञानाद्विध्यभ्यासाद्विधेयरूपभेदाभ्युपगमेऽन्यन्योन्याश्रयापत्तेः पुनरुच्चारणरूपाद्वाचकाभ्यासाद्वाच्यभेदोऽभ्युपगन्तव्यः तत्र जातेर्भेदायोगाद्व्यक्तेर्वाच्यत्वापत्तेस्तस्याश्चानित्यत्वाच्छब्दार्थसम्बन्धानित्यत्वाद्वेदाप्रामाण्यापत्तिरित्याशयेनाह—**यदि चेति**।

तदा त्वन्ये त्वभेदमाचार्याः कर्मणामेव मन्यन्त इत्येतन्मताश्रयणेनैकैव यागव्यक्तिर्गकारादिव्यक्तिवन्नित्येष्यते, तदा तद्व्यतिरिक्तजात्यभावात्प्रत्यभिज्ञानायास्तद्विषयत्वाशङ्कानुपपत्तेर्व्यक्त्यैक्यप्रामाण्यं स्पष्टमेवेत्याशयेनाह—**किं चेति**। संख्यानिबन्धनस्तु भेदो द्रव्यादिकारकात्मकव्यञ्जकभेदोपाधिको वर्णस्येव द्रुतादिभेदोपाधिक इत्याशयः। अस्मिंश्च पक्षेऽभ्यासार्थत्वेनापि पुनःश्रुत्युपपत्तेर्न कर्मप्रतीकतास्तीत्याह—**यद्यपि चेति**। स एव तर्ह्यस्त्वित्याशङ्क्याह—**न चेति**। ज्योतिष्टोमे ग्रहणान्वयित्वेन श्रुतानां देवतानां प्रकरणेन ग्रहणद्वारा योगान्वयात्, प्रकरणस्य च युगपत्सर्वाङ्गग्राहित्वात्समुच्चयावगतेः, प्रत्येकं च ग्रहणान्वयासंहतानां यागान्वययोगाभ्यासो युक्तो। न त्वत्र देवतासमुच्चयहेतुरस्तीत्याशयः। पूर्वपक्षप्रयोजनं चानेन समर्थितं तस्मादित्युपसंहारभाष्यस्थमपूर्वशब्दमयागेभ्योऽन्यत्ववाचितया व्याख्यातुमाह—**तस्मादिति**। भाष्योक्तां सूत्रव्याख्यां स्पष्टयति—**एवमिति**। विधेरप्रवृत्तप्रवर्त्तनस्वभावत्वाद्विहितविधावप्रामाण्यापत्तेर्विधिपुनःश्रवणस्य भेदकत्वावश्यम्भावात्कर्मैक्यवादिना कर्मानुवादाभ्युपगमेन विधिः पुनः श्रवणाभावो वाच्य इति मत्वा, तदेव प्रश्नपूर्वमुपपादयति—**कथमिति**।

नन्वन्याक्षिप्तशक्तित्वाभावेऽपि विपरिवृत्तेरनुवादोऽवसीयत इत्याशङ्क्याह—**यदि हीति**। ननु व्रीहिभिर्यजेतेत्यादौ विपरिवर्त्तमानस्यैवानुवादाभ्युपगमादवश्यमनुवादे विपरिवृत्तेः किंचित्कारो वाच्यः सूत्रानुवादत्वं चेत्तथा न क्रियते, किं तर्हि क्रियत इति पृष्ट्वोत्तरमाह—**किं तर्हीति**। सामान्यतस्त्वनुवादत्वप्रसिद्धिरन्याक्षिप्तविधिशक्तित्वादेवेत्याह—**सामान्येति**। एतदेव व्याचष्टे—**यदा हीति**। नन्वनेकविध्यशक्तौ, न क्वचिद्विशिष्टविधिः स्यादित्याशङ्क्याह—**ना चेति**। विपरिवृत्त्यभावे विशिष्टविधिरगत्या स्यादित्याशयः।

ननु य एवं विद्वान्पौर्णमासीं यजते इत्यादौ रूपालाभादिनाप्युत्तारणदर्शनात्किमन्याक्षिप्तत्वेनेत्याशङ्क्याह—**धात्वर्थेति**। चतुर्जिह्वां गृह्णाति प्रयाजेभ्यस्तत्, गृह्णाति, अष्टावुपभृति गृह्णाति प्रयाजानुयाजेभ्यस्तत् गृह्णातीति वाक्यान्तराभ्यां जौहवोपभृताज्यद्रव्यलाभान्मान्त्रवर्णिकदेवतालाभाच्चात्रान्यो नोत्तारणहेतुरस्तीत्याशयः। ननु सामान्यतोऽनुवादत्वाप्रसिद्धावपि प्रकृतस्यानुवाद इत्यनुवादविशेषत्वमेव तर्हि विपरिवृत्तेरस्त्वित्याशङ्क्याह—**सर्वत्रैवेति**। शब्दशक्त्यावगतस्य विधित्वस्यासम्भवावधारणं विना

नानुवादकता युक्तेत्याशयः । अतोऽनुवादकाङ्क्षा प्राप्तिश्चानुवादत्वे हेतुः, न प्राप्तिमात्रमित्युपसंहरति—**तस्मादिति** । अनुवादत्वावधारणेऽनुवादाकाङ्क्षायां हेतुत्वाभिधानस्य प्रकृतोपयोगमाह—**तत्रेति** । पूर्वं तेनैव शब्देनैत्यनेन प्रत्यभिज्ञानात्कर्मैक्यावगतेर्न तद्विरुद्धो भेदः पुनर्विधानात् सिध्यतीति । तद् दूषयितुमनुभासते—**यस्त्विति** । दूषयति—**प्रमाणेति** । **एतदेव विवृणोति—तथा हीति** ।

**श्लोकं व्याचष्टे** । **विधायका हीति** । ननु दध्यादिवाक्येऽपि तर्हि कर्मान्तरत्वं स्यादित्याशङ्क्याह—**यत्र पुनरिति** । प्रत्यभिज्ञानस्यापि जातिविषयत्वेनोपपत्तेर्नात्यन्तबाध इत्याह—**तस्मादिति** । सामान्येनैक्ये चेदविवादः । कस्य तर्ह्यत्र भेदश्चिन्त्यत इत्यपेक्षायामाह—**तथा हीति** । पश्वादीनां यागत्वसामान्यैक्येऽपि पशुत्वाद्यवान्तरसामान्यात्मकविशेषरूपेणाऽन्योन्यं पशूनां चाग्नीषोमीयादीनाम्, सोमानां ज्योतिष्टोमादीनाम्, इष्टीनां च दर्शपूर्णमासाधानानां विधेयात्मकव्यक्तिरूपेणान्योन्यं भेदश्चिन्त्यत इत्यर्थः । सर्वत्र शब्देन संख्यादिसाधारणतास्याभिधानस्योक्ता ।

ननु विधिश्रुत्या कर्मान्तरज्ञानवद्यजिश्रुत्यैवैक्यज्ञानान्न बलाबले विशेष इत्याशङ्कते—**ननु चेति** । यागत्वमात्रज्ञानं तया नैक्यज्ञानमिति परिहरति—**नैतदिति** । **श्लोकं व्याचष्टे** । **न हीति** । ननु शब्दार्थरूपस्येह भेदाभेदविचाराद्व्यक्तेश्चाशब्दार्थत्वाच्छब्दार्थभूतस्य च सामान्यस्यैक्याद्यजिश्रुत्यैव कर्मैक्यज्ञानसिद्धिरित्याशङ्किता स्वाशयं विवृणोति—**नन्विति** । शब्दावाच्यत्वेनेतरासामवाच्यत्वाच्छब्दार्थतायामेवैक्यापत्तेर्विपरीतसाधनो हेतुरित्याशयेन परिहरति—**येनैवेति** । नन्ववाच्यत्वे सत्यैक्यवद्भेदस्याप्यनवगमात्कथं विपरीतसाधनतेत्याशङ्कां प्रश्नपूर्वं निरस्यति—**कथमिति** । विधेयरूपस्येह भेदाभेदविचाराज्जातेश्चाननुष्ठेयत्वेनाविधेयत्वात्, तल्लक्षितानां व्यक्तीनामेव विधेयत्वावगतेर्विधेयसमर्पकस्य यजेस्तात्पर्यवृत्त्या व्यक्तिविषयत्वेनैक्यज्ञाने व्यापाराभावाद्विहितविधानायोगेन विधिपुनःश्रुत्या सन्नधिकृतैक्यज्ञानबाधाद्भेदज्ञानसिद्धिरित्याशयः ।

श्लोकं व्याचष्टे—**यदिति** । गत्वादिवन्न चैतेष्वित्यनेन व्यक्त्याकृतिभेदाभावमुक्तं दूषणायानुभाषयते—**यत्त्विति** । दूषयति—**सत्यमिति** ।

कर्मव्यक्तीनां स्वरूपेण क्षणिकत्वाद्व्यक्त्याकृतिभेदादिप्रमेयस्य विधेयरूपस्य विधिनित्यत्वेन नित्यत्वाद्विधेयकरूपव्यक्त्याकृतिभेदोऽपन्होतव्यः । स च शब्दान्तरादिभेदप्रमाणं विना नास्तीत्येतावता न तत्सद्भावेऽप्यपह्नोतुं शक्य इत्याशयेन श्लोकं व्याचष्टे—**यथैवेति** । व्रीहियवद्रव्यभेदेऽप्याग्नेयादेरभ्युदयनिमित्तदेवताभेदेऽपि चाभेदसूचनार्थं यजमानादीत्यादिशब्देन द्रव्यदेवतोपादानम् । एतदेव व्यवहारेण द्रढयति—**तथा हीति** । यागहोमादिकर्मव्यक्तिवद्यागव्यक्तीनां स्वरूपवैलक्षण्यानुपलब्धेर्भेदानुपपत्तिशङ्कानिरासार्थत्वेन प्राक् तस्मादिति व्याचष्टे—**न चेति** । यन्मात्रमिति श्लोकार्थमुपसंहरति—**अतोऽत्रेति** । अतः शब्दपरामृष्टप्रामाण्याविशेषमुपपादयति—**न हीति** । इष्ट्यादिषु समस्तेषु प्रत्येकं वा भेदप्रत्ययस्यात्नौपाधिकत्वाद् बाधाभावाच्च न प्रामाण्ये विशेष इत्यर्थः । देशादिभेदेऽपि

विधेयरूपेण व्यक्त्यभेदोपसंहारमेवकारसूचितं विवृणोति—**तेनेति** । येन कारणेन शब्दान्तरादिषट्कावधिरेव भेदः । तेन व्यक्तिभेदे शब्दान्तरादिप्रमाणाभावाच्छब्दव्यक्तिवद्यागव्यक्तिषु नित्याभिव्यञ्जकभेदाद्भेदप्रतीतिरित्याशयः । ननु कर्मणः पूर्वापरीभूतानिष्पन्नत्वरूपत्वान्नित्यत्वं न सम्भवतीत्याशङ्क्य कूटस्थनित्यत्वाभावेऽपि नित्यविधिविषयत्वरूपेण प्रवाहनित्यत्वसूचनार्थम्—**तासु विधेयरूपास्वित्युक्तम्** । एकविधिविषयभूतव्यक्तिवद्भिन्नविधिविषयभूतेष्विष्ट्यादिषु भेदप्रत्ययस्याभिव्यञ्जकभेदनिबन्धनत्वनिरासायैवकारः ।

ननु सङ्कल्पात्मकयागस्वरूपस्य मानसप्रत्यक्षगम्यत्वात् विधेयरूपस्य च विधिगम्यत्वात्कथं देशाद्यभिव्यङ्ग्यतेत्याशङ्क्याह—**तेभ्यश्चेति** । विधेयरूपाश्रयस्य यागस्वरूपस्य देशादिभिर्निष्पादनादनिष्पन्ने चाश्रयरूपे तदाश्रयविधेयरूपाप्रतीतेर्देशादिना विधेयरूपाभिव्यक्तिरित्याशयः । द्रव्यदेवतामात्राद्यागसिद्धेर्न देशादिभ्यो यागसिद्धिरित्याशङ्क्य—**फलेत्युक्तम्** । देशादतीतिकर्त्तव्यतारहिताद्यागात्फलासिद्धेर्विधेयरूपोपलक्षितफलसाधनत्वरूपेण यागस्य देशादिभ्यः सिद्धिरित्याशयः ।

यदा त्वथ प्रत्यक्षे नित्ये एवेति शब्दाधिकरणभाष्यानुसाराद् बुद्धिकर्मणोरपि वर्णवत् कूटस्थनित्यतेष्यते, तदा यागनित्यत्वे अपूर्वकल्पनानुपपत्त्या शङ्कानिरासार्थत्वेनायं ग्रन्थोऽनुष्ठानं नित्ययागाभिव्यञ्जकमाश्रित्य शब्दाभिव्यञ्जकादुच्चारणाच्छब्दफलार्थप्रतीतिसिद्धिवत् तेभ्यो नित्ययागाभिव्यञ्जकेभ्योऽनुष्ठानेभ्यो यागफलस्य सिद्धि तेषां क्षणिकत्वाद्युक्ताऽपूर्वकल्पनेत्येवं योज्यः । नन्वनित्यानामपि व्यक्तीनां नित्यसामान्योपलक्षितानां नित्यविधिविषयत्वोपपत्तेर्व्यक्तिनित्यत्वाभ्युपगमो वृथेत्याशङ्क्याह—**यागत्वमेव चेति** । विध्यन्तरविषयव्यावृत्तावान्तरसामान्यं विनानन्यविहितविधिविषयोपलक्षणायोगाद्यागत्वातिरिक्तस्य वावान्तरसामान्यस्याभावाद्व्यक्तीनामेव प्रवाहरूपेण कूटस्थत्वेन वा नित्यताभ्युपगन्तव्येत्याशयः ।

ननु भिन्नासु ज्यातिष्टोमादिव्यक्तिषु अभिन्नस्यैकाहादिशब्दस्य तज्जन्यस्य च प्रत्ययस्य यागत्वातिरिक्तावान्तरसामान्याभावेऽनुपपत्तेस्तान्येष्टव्यानीत्याशङ्कते—**नन्विति** । एकोपाधियोगादुपपत्तेः परिहरति—**नेति** । एकाहशब्दस्योपाधिमाह—**एकेनेति** । अहीनशब्दस्याह—**द्व्यादिभिरिति** । यजिचोदिताहगणयोगस्योपाधित्वं प्राणित्यनेन सूचितम् । ननु द्वादशाहस्यापि यजिचोदिताहगणयोगेनाहीनत्वात्तस्मात्प्रागिति कस्मादुक्तमित्याशङ्क्याभ्युपैतिचोदितत्वसत्रलक्षणस्यापि सद्भावेन तस्य केवलाहीनत्वासम्भवादित्याह—**स त्विति** । आसीरन्नित्यआसिचोदितस्योपेयुरित्युपैतिचोदितगतस्य वा सततानुष्ठानस्य सत्रशब्दोपाधित्वमाह—**तदवधिकमेवेति** । द्वादशाहस्याप्यवधित्वेन सत्रतोक्ता । सहस्रसम्वत्सरं तदायुषामसम्भवान्मनुष्योष्वि(६–७–३१)त्यत्र षष्ठाधिकरणे सहस्रसम्वत्सरशब्दस्याहःसहस्रवाचितया वक्ष्यमाणत्वात् षड्त्रिंशत्सम्वत्सरादेस्तदवधिककालत्वेऽपि पूर्वपक्षे स्थित्वा सहस्रसम्वत्सरपर्यन्ततोक्ता । सर्वसत्रान्ते विधानाद्वा यागगतपशुसोमातिरिक्त-

हविष्यकत्वमिष्टिशब्दस्य पशुहविष्कत्वं, पशुशब्दस्य सोमहविष्कत्वं, सोमशब्दस्योपाधिमाह—**हविर्विशेषेति**। वस्तुवृत्तिकथनार्थं चेदमेकाहत्वाद्यवान्तरजात्यभावाभिधानम्। तत्सद्भावेपि त्वनेकज्योतिष्टोमविश्वजिदादिविधेयसाधारण्येनैकाहत्वादेरसाधारणविधेयोपलक्षणत्वायोगाद्व्यक्तिनित्यताभ्युपगन्तव्येत्याह—**अथापीति**।

स्वमतेन शब्दान्तरादिषट्कस्य विधेयरूपभेदे व्यापारमभिप्रेत्य भिन्नानामपि व्यक्तीनां यजिवाच्यैक्ययागत्वजात्योपलक्षितानामेकविधिविषयत्वोपपत्तेर्विधिविशेषविषयत्वाच्च विधेयान्तरेभ्यो व्यावृत्त्युपपत्तेर्यागत्वातिरिक्तावान्तरजात्यभावोऽभिहितः। स्वरूपभेद एव तु शब्दान्तरादिषट्कव्यापाराभ्युपगमे विधेयान्तरव्यावर्त्तकप्रतिविध्यसाधारणावान्तरज्योतिष्टोमत्वादिजात्या विना विधेयान्तरेभ्यो व्यावृत्त्यनुपपत्तेर्ज्योतिष्टोमादिव्यक्त्याकृतिभेदेऽप्यदोषाद् गकारादिवद्व्यक्त्याकृतिभेदो नास्तीति यदुक्तं, तदयुक्तमित्याशयेन—**आहैवमिति**। एकाहत्वादिज्योतिष्टोमत्वादीनि प्रतिविध्यसाधारणान्यवान्तरसामान्यानि यदि कल्प्यन्ते, ततश्च स एवायं ज्योतिष्टोम इत्यादिप्रत्यभिज्ञायाः सामान्यविषयत्वोपपत्तेर्देशादिभेदाद्व्यक्तयो यदि भिन्ना भवन्ति, तथाप्यदोष इत्यर्थः॥ स्वरूपभेदाभेदचिन्तापक्षे भिन्नानां व्यक्तीनामेकविधिविषयत्वरूपेणैक्यस्यानादरसूचनार्थोऽत्यन्तशब्दः। पराभिमतत्रैलोक्यवर्त्तियागव्यक्त्यैक्याभ्युपगमेऽप्यनुष्ठानभेदविषयत्वेन भेदप्रमाणानां व्यापाराद् प्रौढ्या दर्शयति—**तथेति**।

कर्मभेदं कुर्यादिति भाष्यमस्मिन्पक्षे न युज्येतेत्याशयेनाशङ्कते—**नन्विति**। भाष्यस्यायुक्तत्वेऽपि भेदचिन्ताप्रयोजनं तावत्सिद्ध्यतीति परिहरति—**सर्वथा तावदिति**। भाष्यमप्युपपादयितुमाह—**तथापि त्विति**। ग्रहयागेषु ज्योतिष्टोमवाक्येन ज्योतिष्टोमरूपतयानुष्ठानविधानात् ज्योतिष्टोमरूपतायाश्च सर्वाभ्यासेष्वैक्यान्नानुष्ठानभेदचोदनेति विशेषनिमित्तमित्याशयः। विशेषनिमित्तान्तरमाह—**अभ्यासेष्विति**। ज्योतिष्टोमरूपावयवव्युत्पादनात्तदपेक्षया ग्रहयागाभ्यासेष्ववयवबुद्धिर्न प्रयाजाभ्यासेष्वित्यतोऽपि निमित्ताद्विशेषः। वैषम्यमित्यपिशब्दाभ्याहारेण योज्यम्।

नन्वेवमपि कर्मभेदशब्देनैवंविधवैषम्यसूचनस्य किं प्रयोजनमित्याशङ्क्याह—**एतद्ज्ञानस्य चेति**। प्रयाजाभ्यासवत् ग्रहाभ्यासेष्वप्यनुष्ठानभेदचोदनायां धर्मग्रहणशक्तापूर्वभेदात्पशुसोमाधिकरणपूर्वपक्षवत्सिद्धान्तेऽपि सोमविकारेष्वेकस्यैव ग्रहणस्य धर्मैः सकृदनुष्ठानेन च भवितव्यमिति प्रकृतितुल्यानुष्ठानं पशुसोमाधिकरणसिद्धान्तप्रयोजनं न सेत्स्यतीत्याशयः। प्रौढरेव सबीजत्वार्थं भाष्यसम्मतिमाह—**तस्मादिति**।

अस्यैव स्वमतत्वशङ्कानिवृत्त्यर्थं वक्ष्यमाणमेव भाष्यं स्वमतेनान्यथा व्याचष्टे—**अथ चेति**। बहुकृत्वोऽपीति पूर्वपक्षभाष्योक्तार्थानुभाषणार्थं नन्विति भाष्यं विहितविधानानर्थक्यापत्तेर्विधिपुनः श्रुतेः कर्मान्तरविधिशक्त्यवगमादयुक्तमाशङ्क्य व्याचष्टे—**नन्विति**। उच्यतइत्यादिभाष्यं समिदादिशब्दानां देवताविधित्वस्य नवमे निराकरिष्य-

माणत्वादयुक्तमाशङ्क्य, अभ्युपेत्यवादत्वेन व्याचष्टे—**तत्रेति** । कीदृशोऽभ्युपेत्यवाद इत्यपेक्षायां पुनःश्रुतेर्देवताविधानाक्षिप्तशक्तित्वात् कर्मभेदकत्वाभावेऽपि गुणाद्भेदो भविष्यतीत्येवं रूपं वक्तुं समिद्वाक्येन शुद्धे यागे विहिते तनूनपादादिवाक्ये देवताविध्युपपत्तेर्न गुणाद्भेद इत्याशङ्कानिरासार्थं समिधो यजतीत्यादिभाष्यं व्याचष्टे—**यत्तावदिति** । भाष्यस्थस्य देवताशब्दस्योपलक्षणार्थत्वज्ञापनार्थो द्रव्यशब्दः । गुणस्य भेदकत्वाय पूर्वकर्मसंयोगासम्भवाभिधानार्थं तत्रेति भाष्यं व्याचष्टे—**उभयमपि चेति** । अभ्युपेत्यवादस्वरूपार्थं स एष इति भाष्यं व्याचष्टे—**अवश्यं चेति** । समिद्वाक्यन्यायमुत्तरेषु वाक्येष्वतिदिशति—**एवमिति** । अस्याप्यभ्युपेत्यवादत्वोपपादनार्थं गुणविधित्वं द्रव्यविधित्वेन देवताविधित्वेन चेत्येवं विकल्प्य, आद्यं पक्षं तावन्निरस्यति—**गुणेति** । द्वितीयान्तेन शब्देन द्रव्यविधिर्निरस्त इत्यर्थः । गुणविधित्वमपि कीदृगित्यध्याहृत्य योज्यम् । होमे च प्रतिपत्तिकर्मणि प्रस्तरप्रहरणादौ प्रक्षिप्यमाणांशेन कर्मभूतद्रव्यान्वयसम्भवेऽपि यागे कथंचिद् द्रव्यस्य प्राधान्यलक्षणकर्मत्वायोगान्न कर्मभूतद्रव्यान्वयः सम्भवतीत्याह—**विशेषेण चेति** ।

'प्रयाजेऽपि चेदि'त्यत्राधिकरणे श्रुत्यविनियुक्तानां मन्त्राणां स्वार्थसमवायकल्पकत्वासम्भवान्मान्त्रवर्णिकदेवताप्राप्त्यभावेन तत्प्रख्यन्यायाभावान्नामधेयत्वानुपपत्तेर्विष्णुं यजतीतिवत्समिदादिशब्दानां द्वितीयान्तानां देवानां विधित्वं पूर्वपक्षयित्वा यजेः पूजावाचित्वाभावेन देवतायाः पूज्यमानकर्मत्वायोगात्तदुद्देशांशस्य वा समाप्तित्वेनात्, शब्दार्थत्वात्कर्मणोऽभिभूतत्वेन विवक्षानुपपत्तेरुद्देश्यत्वेऽपि चानीप्सितत्वात्प्राधान्यलक्षणकर्मत्वानुपपत्तेः श्रुत्यविनियुक्तानामपि मन्त्राणामुपांशुयाजवद्यागाकाङ्क्षितदेवताकल्पकत्वोपपत्तेर्देवताविधित्वस्य निराकरिष्यमाणत्वाद्देवताविधित्वेनापि गुणविधित्वं न सम्भवतीति द्वितीयं पक्षं निरस्यति—**नचायमिति तस्मादिति** । सिद्धान्तोपसंहारभाष्यं फलतो यागभेदोपसंहारार्थत्वेन व्याचष्टे—**तस्मादिति** । अनेन च यस्मात्समिदादिवाक्यैः प्रधानयागानुवादे पुनःपुनर्यागस्याक्रियमाणत्वात् देवतान्तरान्वयकरणाशक्तेर्विध्यानर्थक्यापत्तिः तस्माद्यागविधित्वमभ्युपगम्य विहितविध्ययोगात् भिन्ना यागाभेदेन कार्या इत्येवं भाष्यं व्याख्यातम् ।

ननु यागभेदेऽपि प्रयाजसमाख्ययैककार्यत्वावगतेर्विकल्पस्य न्याय्यत्वान्नाभ्यासो युक्त इत्याशङ्कानिरासार्थं प्रत्यभ्यासं चेति भाष्यम् । तद्विवरणार्थं च न च यत्समिद्यागान्वयेन क्रतोरदृष्टमुपकाररूपं क्रियते, तदेव तनूनपाद्यागान्वयेन तयोर्यागयोर्भिन्नत्वेन तदनुनिष्पाद्यदृष्टभेदावगतेः समाख्यायाश्च प्रधानप्राग्भावमात्रनिमित्तत्वेन कार्यभेदेऽप्यविरोधादित्यभिधानाय यागैक्येऽप्यनेकदेवतान्वयसम्पादनायानुष्ठानाभ्यासोपपत्तेः पूर्वपक्षप्रयोजनाभावशङ्कानिरासार्थं च प्रयोजनभाष्यं स्पष्टत्वान्न व्याख्यातम् ॥ २ ॥

इति द्वितीयमभ्यासाधिकरणम्

भा० प्र०—प्रकृत में एक ही प्रकरण में श्रुत धात्वर्थ का भेद नहीं है। किन्तु पुनः पुनः उल्लेख होता है ऐसी स्थिति में पूर्व अधिकरण में कहे गये नियमानुसार भावना के अर्थ का भेद नहीं हो सकता हैं। इस नियम का विचार कर कहा गया है कि उन स्थलों में भी भावना का भेद होगा, जैसे दर्शपूर्णमास प्रकरण में ''समिधको यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकरं यजति, (तैत्तिरीय संहि० २।६।१) इन स्थलों में एक ही यज् धातु तिङ् से सम्बद्ध होकर पुनः पुनः अर्थात् पाँच बार उच्चारण किया जाता है। पूर्वपक्षियों का कहना है कि जब इन स्थलों में धातु का भेद नहीं है और प्रत्यय भी अभिन्न है, तब भावना का भेद नहीं हो सकता है। इसके समाधान में सिद्धान्त का कथन है—'एकस्य पुनः श्रुतिः एवं स्यात्' एक ही धातु जब आख्यात् = तिङ् से युक्त होकर पुनः-पुनः कही जाती है, तब इन स्थलों में भी भावना का भेद अवश्य ही मानना होगा। क्योंकि 'अनर्थकं हि' ऐसा न मानने पर पुनः पुनः पठेत् शब्द निरर्थक होने लगेंगे। यदि पूर्वपक्ष इसके समाधान में यह कहें कि अन्य वाक्यों से पूर्वप्राप्त यज्ञ का अनुवादपूर्वक 'तनूनपात्' आदि देवता या द्रव्यरूप गुण का विधान होने से एक ही धातु का पुनः-पुनः उल्लेख होने पर भी वह निरर्थक नहीं है, क्योंकि वह देवता विधिरूप विशेष अर्थ का प्रकाश करता है। इस प्रसंग में यह कहना उचित होगा कि प्रकृत में देवता का विधान नहीं हो सकता, क्योंकि चतुर्थी विभक्ति अथवा तद्धित प्रत्यय के द्वारा देवता का विधान होता है, यहाँ इनमें कुछ भी नहीं है। यदि इससे द्रव्य का विधान माना जाय तो यह भी सम्भव नहीं है, क्योंकि इस स्थल में तृतीया विभक्ति से युक्त किसी पद का प्रयोग नहीं है, क्योंकि 'दध्ना जुहोति' इत्यादि स्थलों में तृतीयान्त पद के द्वारा ही द्रव्यरूप गुण का विधान किया जाता है। प्रकृत में यजेत पद का विधित्व कृत् प्रत्यय के श्रवण से सिद्ध होने से वह श्रौत है, उसकी अनिवार्यता प्रकरण लक्ष्य या सन्निधि सिद्ध हैं। श्रुतिप्रकरण अथवा सन्निद्धि की अपेक्षा बलवान् यहाँ अनुवाद नहीं हो सकता है, इसलिए अग्निहोत्र जुहोति के समान 'समिधो यजति, तनूनपातं यजति' इत्यादि वाक्य से विहित समिध तनूनपात् आदि विभिन्न कर्मों का नामभेद है। यजेत पद के अभ्यास से यहाँ कर्मभेद या भावना भेद ही प्रकाशित होता है।

'एकस्य' = एक ही धातु का, 'पुनः श्रुतिः' = श्रुतियों में पुनः पुनः उल्लेख एवं इस प्रकार शब्दान्तर के समान 'स्यात्' होता है। अर्थात् भावना के भेद का प्रकाशन होता है। अविशेषात् = क्योंकि 'दध्ना जुहोति' इत्यादि स्थल 'दधि' आदि के समान विधेयगत कोई भी विशेषता नहीं है, 'अनर्थकं हि' अन्यथा वह अनर्थक ही होगा। आशय यह है कि तनूनपात आदि देवता का यह पुनः अभ्यास विधान करेगा, यह अभ्युगमवाद को मानकर यह पूर्वपक्ष की भावना को उत्थापित कर उसका विवरण प्रस्तुत किया गया। तनूनपात् आदि देवों का याग् जैसा सम्बन्ध करने के लिए याग के बिना उत्पत्ति नहीं हो सकती है और याग् के न करने से समिध इत्यादि वाक्य अनर्थक हो जायेंगे और याग करने पर

देवता और याग का सम्बन्ध उत्पन्न हो सकता है। अतः समिधो यजति आदि में जैसे देवता का याग से सम्बन्ध करने के लिए पूर्वपक्षी समिध का विधान मानता है, वैसे ही तनूनपात् आदि देवताओं का याग से सम्बन्ध जोड़ने का अभ्यास करना ही होगा ॥ २ ॥

द्वितीय अभ्यासाधिकरण, समिदादि अपूर्वभेदाधिकरण—२।२।२

## अथ तृतीयं विद्वदधिकरणम्

## [३] प्रकरणं तु पौर्णमास्यां रूपावचनात् ॥ ३ ॥ सि० ॥

**शा० भा०—एवं हि समामनन्ति=यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति, तावब्रूतामग्नीषोमावाज्यस्यैव ना[1]वुपांशु पौर्णमास्यां यजन्' इति, 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्', 'ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्र पयोऽमावास्यायाम्' इति। तथा 'आघारमाघारयति, आज्यभागौ यजति, स्विष्टकृते समवद्यति, पत्नीसंयाजान् जयति समिष्टयजुर्जुहोति'। तथा य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते इति।**

**तत्र संदेहः—सर्वाण्येतानि समप्रधानानि, उताऽऽग्नेयादीनि पयोन्तानि प्रधानानि, आघारादीन्यारादुपकारकाण्यङ्गानि। तथा, य एवं विद्वानित्येवं संयुक्तौ प्रकृतानां कर्मणामनुवदितारौ, अथ वा य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वानमावास्यां यजते इत्यपूर्वयोः कर्मणोर्विधातारौ, तत्रेतरे गुणविधय इति। किं[2] प्राप्तम्। शब्दान्तरत्वादभ्यासाच्च समप्रधानानीति प्राप्ते—**

**ब्रूमः[3]—प्रकरणं तु पौर्णमास्यां, प्रकृतानामाग्नेयादीनामनुवदितारौ पौर्णमास्यमावास्यासंयुक्तौ। कुतः? रूपावचनात्। य एवं विद्वान् पौर्णमासी-संज्ञकं यागं यजत इति न सर्वे[4] यागा उच्यन्ते। यः पौर्णमासीसंज्ञकः, स विधीयते। न चैतदेवमवगच्छामः—कीदृशमेवंसंज्ञकस्य यागस्य रूपमिति। तेन न किंचित् प्रतिपद्येमहि। अतो ब्रूमो यद्यपूर्वस्य विधातारावनर्थकाविति। अथ नु प्रकृतानामनुवदितारौ। ततः संनिहिताः पौर्णमास्यमावास्यासंयुक्ता यागा इति गम्यते रूपम्। तत्रार्थवत्ता वचनस्य। कथं पुनरेकवचनान्तो बहूनां वाचको भविष्यतीति यद्युच्यते, समुदायशब्दतयाऽव[5]कल्पिष्यते। रूपवन्तो हि पूर्वप्रकृता यागाः। तेषां च प्रचयशिष्टः समुदायोऽप्यस्ति। तदपेक्षोऽयमरूपशब्दः। तस्मादेकवचनान्तता न दोषः। भवति हि बहूना-मेकवचनान्तः शब्दः समुदायापेक्षः। यथा यूथं वनं कुलं परिष[6]दिति।**

---

१. क. तौ उपांशु। २. क. किंतावत्। ३. ब. उच्यते।
४. ब. सर्वोयाग उच्यते। ५. ब. च कल्पिष्यते। ६. ब. पर्षादिति।

**यदाऽऽग्नेयादीनां समुदायवचनावेतौ, तदा दर्शपूर्णमासशब्देनैत एवाभिधीयन्ते। तत एषां फलसम्बन्धः, फलवत्संनिधेस्त्वाघारादीन्यादुपकारकाणीति ॥ ३ ॥**

भा० वि०—अभ्यासलक्षणभेदातिप्रसङ्गपरिहारार्थत्वादस्यानन्तरसङ्गतिः, विषयमाह—**दर्शपूर्णमासयोरिति**। तत्र तावदुक्तं वाक्यजातमधिकृत्याधिकरणस्य पूर्वोत्तरपक्षप्रयोजनरूपसमप्रधानाङ्गाङ्गिभावविषयं सन्देहमाह—**तत्रेति। सवर्णीति।** विद्वद्वाक्यैक्यविहितामावास्यापर्यन्तानीत्यर्थः। उतेत्यादिनानुवदितारावित्यन्तेन द्वितीयावचनव्यक्तिरुक्ता, अनेन च किमाग्नेयादिवाक्यानां पृथक्कर्मविधित्वे सत्येव पौर्णमास्यमावास्यासंयुक्तयोरपि तदतिरिक्तापूर्वकर्मविधायित्वमुताग्नेयादिवाक्यविहितकर्मसमुदायानुवादित्वं इत्येवं रूपः प्रकृतविचारहेतुरपि संशयस्सूचितो भवति। पूर्वपक्षे वचनव्यक्त्यन्तरमाह—**अथ वेति**। विद्वानित्येवापूर्वयोरितिपठितव्यम्। किमर्थं तर्ह्याग्नेयादिवाक्यमत आह—**तत्रेति**। विद्वद्वाक्यविहिते कर्मणीत्यर्थः। सिद्धान्तवचनव्यक्तिस्तु पूर्वैवेति न पृथगुक्ता। अत्र च पुनर्विधानदर्शनाद्रूपावचनाच्चाद्यस्संशयः द्वितीयस्त्वाग्नेयादिवाक्यस्य गुणविधित्वसंभवासंभवाभ्यामिति भेदः, विधित्वे च कर्मभेदस्य पूर्वन्यायेन सिद्धत्वात् विध्यनुवादावेव चिन्त्यौ न भेदाभेदवित्यभिप्रायः, तत्र प्रश्नपूर्वकमाग्नेयादिवाक्यविहितकर्मातिरेकेण विद्वद्वाक्यस्यापि कर्मान्तरविधायकत्वमित्याद्यं पूर्वपक्षमुत्पादयति—**किमिति**। अयागेभ्य आधारादिभ्यः शब्दान्तरत्वाद्यागेभ्यश्च प्रयाजादिभ्योऽभ्यासाद्भेदः ततश्च समप्रधानानीति योज्यम्।

अयमाशयः—समस्तानुवादेऽस्य वाक्यस्य निष्प्रयोजनत्वापत्तेः समिधो यजतीत्यादिवच्च पञ्चमलकारत्वेन विधित्वोपपत्तेः यच्छब्दोपबन्धेऽपि च यदाग्नेय इत्यादिवद्विधिशक्त्यनवलोपात् "सर्वस्मै वा एत यज्ञाय क्रियते यद्ध्रुवायामाज्यं' इति विहितसाधारणध्रौवाज्यद्रव्यलाभात् "वार्तिघ्नीपौर्णमासेऽनूच्येते वृधन्वती अमावास्यायां" इति वाक्यविहितानुवाक्यायुगलद्वयप्रतिपाद्याग्नीषोमदेवतालाभाच्चपूर्वविधित्वात् सर्वेषां चैषामाग्नेयादिकर्मणां दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति यजिनानूद्य फलसंबन्धबोधनात् प्राधान्यावगतेः सर्वाणि समप्रधानानीति, सिद्धान्तमाह—**इति प्राप्त इति**। तत्र प्रतिज्ञाभागमनूद्य व्याचष्टे—**प्रकरणं** त्वित्यादिना। सूत्रे प्रक्रियत इति प्रकरणं पौर्णमासीशब्दश्चामावास्योपलक्षणार्थः, ततश्च पौर्णमास्यमावास्यासंयुक्तयोर्वाक्ययोः प्रकृतं कर्मालम्बनमिति सूत्रार्थ इत्यर्थः। कथं रूपावचनस्य प्रकृतानुवादत्वे हेतुत्वमित्याशङ्क्योपपादयति—**य एवमिति**। पौर्णमासी इत्यादिसंज्ञाया विशेषप्रतिपत्त्यर्थत्वान्न यागमात्रविधिरित्यर्थः। ततः किमत आह—**न चेति**। न च मत्पक्षेऽप्युक्तमेव द्रव्यदैवतं रूपमिति वाच्यम्, आज्यभागाद्युपस्तरणादि च प्रकृत्य विहितस्य ध्रौवाज्यस्यै-

तत्कमर्थित्वाभावेन मान्त्रवर्णिकदेवतासंभवाच्चेत्यभिसन्धिः। रूपाज्ञानफलमाह—**तेनेति**। अपूर्वकर्मविशेषाप्रतिपत्तिफलमाह—**अत इति**। अज्ञातरूपत्वेनागृहीतविशेषे कर्मणि अप्रवर्तकत्वादानर्थक्यमेव विध्योः स्यादित्यर्थः।

नन्वनुवादोऽप्यज्ञातरूपस्य न संभवतीति तत्रापि अविशिष्टमानर्थक्यं तत्राह—**अथ त्विति**। तत्र वा कथमर्थवत्ता तत्राह—**तत इति**। प्रकृतादाग्नेयादिवाक्यादित्यर्थः। न च समस्तस्य वाक्यस्यानुवादत्वे निष्प्रयोजनत्वप्रसङ्गः दर्शपूर्णमासाभ्यामिति प्रयोगवचनोपात्तद्वित्वापेक्षितसमुदायद्वयोपपादनेनार्थवत्त्वोपपत्तेरित्याशयः।

ननु प्रकृताग्नेयादिकर्मणामनेकत्वात् पौर्णमास्यमावास्याशब्दयोरेकवचनान्तयोस्तद्वाचित्वानुपपत्तिरित्याशङ्कते—**कथं पुनरिति**। समुदायिवचनस्यापि तद्गतसमुदायलक्षणवत्त्वात् तदेकत्वेनैकवचनान्तता भविष्यतीति परिहरति–समुदाय····

नन्वेवं सति लक्षणादोषपरिहारायापूर्वकर्मविधायितैव युक्ता नेत्याह—**रूपवतो हीति**। यद्यपि प्रकृतरूपवत्कर्माभिधायित्व एव पौर्णमास्यामावास्याशब्दयोरर्थवत्ता नारूपापूर्वकर्मवाचित्वे तथापि प्रकृतानामाग्नेयादीनां भिन्नवाक्यविहितानां सामान्यात्मकः समुदायो न सम्भवतीति तत्राह—**तेषामिति**। प्रचयेनानेकस्यैककालप्रयोगलक्षणधर्मान्वयेन शिष्टः कृत इत्यर्थः। ततश्च समुदायविषयस्य तद्गतैकत्वेनैकवचनान्ततापि युक्तेत्याह—**तदपेक्ष इत्यादिना**। ननु सत्यपि पौर्णमास्यामावास्यानामधेयोर्यजिसामानाधिकरण्येन तद्विषयत्वात्तेषां च बहुत्वान्नैकवचनोपपत्तिरित्याशङ्क्याह—**भवति हीति**। समुदायगतैकत्वस्य समुदायसमुदायिनोरत्यन्तभेदाभावेन समुदाय्यन्वयावधारणादेकवचनोपपत्तिरिरित्यर्थः, एवं च दर्शपूर्णमासशब्दावप्येतत्पर्यायौ व्याख्यातवित्याह—**येदेदति**। एककालान्वयलक्षणस्समुदायो वचनमाग्नेयाद्युक्तौ उपलक्षणीभूतं निमित्तमेतयोरिति सूत्रान्निमित्ते ल्युटं व्युत्पाद्य समुदायवचनशब्दो व्याख्येयः—**त एवेति**। आग्नेयादयस्समुदायिन इत्यर्थः। ततः किमित्याशङ्क्य गुणप्रधानभावासिद्धिफलमाह—**तत इति**। विद्वद्वाक्ययोः प्रकृतकर्मानुवादत्वे हेत्वन्तरमाह—**विशेषदर्शनाच्चेति**। एतद्व्याचष्टे—**यदि चेति**। यदि चैते कर्मान्तरे स्यातां ततः सर्वाणि समप्रधानानि अभविष्यन्, ततश्च न विकृतौ प्रयाजो लक्ष्यते इति योज्यम्, इष्टापत्तिं परिहरति—**दृश्यत इत्यादिना**। तदनेन पूर्वेषां प्रकृतानां प्रयाजादीनां विकृतौ कृष्णलहोमादेर्विशेषस्य दर्शनान्न सर्वेषां समप्राधान्यमिति सूत्रावयवो व्याख्यातः।

ननु समप्रधानत्वेऽपि प्रयाजानुवादेन कृष्णलविधानं विकृतौ किं न स्यादित्याशङ्क्य समेष्वित्रति सूत्रावयवं व्याचष्टे—**सतीति**। कर्मणः करणभूतस्य

विकृतावप्रवृत्तेः वक्ष्यमाणत्वात् प्रयाजादेरपि समप्रधानतया करणत्वे सत्यप्रवृत्तिः स्यादित्यतो न समप्रधानत्वमित्यर्थः। इदानीं य एवं विद्वानित्येवापूर्वयोः कर्मणोः विधातारौ तत्रेतरे गुणविधय इति द्वितीयं पूर्वपक्षमुत्थापयति—**गुणस्त्विति**। तुशब्दार्थमाह—**नैतदिति**। एवं सिद्धान्तं व्यावर्त्यार्थसिद्धां पूर्वपक्षप्रतिज्ञामाह—**अपूर्वयोरिति**। तत्र श्रुतिसंयोगादिति सूत्रावयवं हेतुत्वेन व्याचष्टे—**तथा चेति**। सिद्धान्ते हि प्रकृतानामाग्नेयादीनामनेकार्थत्वात् तत्समुदायलक्षणार्थः पौर्णमास्यादिशब्दः। पूर्वपक्षे त्वपूर्वस्य कर्मण एकत्वात् न लक्षणाशब्दो भविष्यतीत्यर्थः। अनुरूपत्वेनापूर्वयोः कर्मणोर्विध्यसम्भवं पूर्वसूत्रोक्तमनुभाषते—**नन्विति**। आवृत्तश्रुतिसंयोगशब्दसहितं गुणशब्दमुत्तरत्वेन व्याचष्टे—**वाक्यान्तरेणेति**। अनेनाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चेति वाक्यान्तरेण कर्माभिधायिपौर्णमास्यमावास्याश्रुतिसंयोगात् गुणो रूपमवगम्यत इत्येवं सूत्रं योजितम्, एतद्विवृणोति—**यदेतदित्यादिना**। तद्रूपमिति। तस्य कर्मणो रूपमित्यर्थः एवं वाक्यार्थोपगमफलमाह—**अत इति**। सिद्धान्तमाह—**चोदनेति**। वाशब्दस्य गुणविधित्वनिरासार्थमभिप्रेत्य सिद्धान्तप्रतिज्ञां व्याचष्टे—**कर्मचोदनेति**। प्रश्नपूर्वकं हेतुभागमवतार्य व्याचष्टे—**कुत इत्यादिना**। युगपदित्यस्य व्याख्यानमेकेनैव वाक्येनेति, भवतु को दोषः ? इत्याशङ्क्य चोदिते हीत्यादि व्याचष्टे—**न चेति**। यदि च गुणाः परस्परं सम्बध्येरन् तत एकस्मिन् बध्यमानेऽपरेऽपि विधीयेरन् न चैतदस्तीत्याह—**परस्परासम्बन्ध इति**। प्राप्ते कर्मण्यनेकगुणविधाने हि तदर्थत्वाद् गुणार्थत्वाद्वाक्यस्य तस्य तस्य गुणस्य विधानाय पुनः पुनः उपदिश्येतोच्चार्येत प्रत्ययः ततश्च वाक्यभेदप्रसङ्गात् अनेकगुणविशिष्टकर्मविधिरेवायमिति सूत्रार्थोऽनेन दर्शितः। इममेव प्राप्ते कर्मण्यनेकगुणविधावुच्चारणावृत्तिलक्षणं वाक्यभेदं प्रपञ्चयति—**तथा हीति**। तत्र पौर्णमास्युद्देशेनाष्टाकपालसम्बन्धविधौ तावद्वाक्यभेदमाह—**यदि तावदिति**। न तदेति। तदाष्टाकपालस्वरूपकर्तव्यतायां न विधिरित्यर्थः, तत्र सम्बन्धे तदा भवतेर्वर्तमानत्वादिति हेतुमाह—**तत्रेति**। यदाष्टाकपालस्वरूपमपि न विधिविषयः तदाग्नेयसम्बन्धस्याग्नेयस्वरूपस्य च विधानं दूरोत्सारितमित्याह—**तदानीमिति**। अन्तिकात् समीपे उपनिपतितोऽपीति सम्बन्धः, सम्बधुं स्वरूपं च लब्धुमिति शेषः। तत्र हेतुर्भवति सम्बन्धाभावादिति। ततश्चाग्नेयाष्टाकपालस्वरूपतत्सम्बन्धविधानाय भवत्यावृत्तौ स्यादेव वाक्यभेदः इत्याशयः। कर्मानुवादेनाग्नेयाविधावपि दोषमाह—**अथाग्नेय इति**। तथापीति। आग्नेयस्सत्तया सम्बध्यते इत्ययमर्थो न लभ्यत इति शेषः। सम्बन्धसिद्धिमप्याह—**आग्नेयेति**। पौर्णमासीविशिष्टाष्टाकपालमनूद्याग्नेयसम्बन्धविधौ दोषमाह—**अथ पौर्णमास्यामिति**। अत्र केनाष्टकपालो विहित इति अष्टाकपालोत्पत्तिर्निरस्ता केन तस्यां विहित इति चावृत्त्या तस्य पौर्णमास्यन्वयो

निरस्तः विधीयमानाग्नेयस्वरूपोत्पत्तिनिरासस्तु पूर्ववत् द्रष्टव्यः। इदानीं पौर्णमासीविशिष्टाग्नेयमनूद्याष्टाकपालसम्बन्धविधौ दोषमाह—**अथ तस्यामिति।** अष्टाकपालता विधीयत इत्यनुषङ्गः, स एवेति। अनूद्यमानाग्नेयोत्पत्तिपौर्णमास्यन्वयविधीयमानाष्टां कपालोत्पत्तिनिरासानतिदिशति—एवं च पृथक् तद्विधीनभ्युपगम्याग्नेयस्याष्टाकपालस्य वाष्टाकपालेनाग्नेयेन वान्वयविधौ वाक्यभेदः स्यादित्याशयः। पौर्णमासीपदस्य तन्त्रेणोभयसम्बन्धमनूद्य दूषयति—**अथेति।** एवं सति द्रव्यदेवतयोः स्वरूपोत्पत्तिः परस्परसम्बन्धोत्पत्तिश्च कर्तव्येति वाक्यभेद इत्यर्थः, नचारुणैकहायनीवत् पौर्णमास्याख्यक्रियाद्वारः परस्परान्वयो भविष्यति तद्वदत्र विशिष्टविधेरनभ्युपगमादिति भावः।

ननु परस्परासम्बन्धपरिहारार्थः प्रागेव द्रव्यदेवतयोः परस्परसम्बन्धः कल्प्यत इति चोदयति—**अथ द्रव्येति।** तत्र वचनव्यक्तिप्रकारमाह—**आग्नेय इति।** परिहरति—**तस्येति।** सम्बन्धस्येति यावत्, उपलक्षणमेतत्, द्रव्यदेवतास्वरूप्यप्रसिद्धत्वादिति द्रष्टव्यम्, तत्र च सर्वत्र विधिकल्पनायां वाक्यभेद इति भावः।

अथोक्तदोषपरिहारायान्यतस्सिद्धिं देवतासंबन्धं द्रव्यमनूद्य धर्मसंबन्धो विधीयत इति चोदयति—**अथकेनचिदिति।** अत्र केनचिदाग्नेयमष्टाकपालं निर्वपेत् रुक्कामः इत्यनेन वाक्येन विधानात् सङ्कल्पविषयीकारित इति सङ्कल्पशब्दो द्विणिजन्तो व्याख्येयः, परिहरति—**तथापीति।** अष्टाकपालसंबन्धसिद्ध्यर्थं आग्नेयत्वेऽनूद्यमाने देवताया विधेयत्वाभावादित्यर्थः। ननूपलक्षणार्थस्यैव विधेयताप्यस्त्विति शङ्कते—**अथेति।** सकृदुच्चारिते शब्दे विधित्वानुवादत्वरूपविरुद्धधर्मद्वयसमवायसंभवेन परिहरति—**सवक्तव्य इति।** एतद्विवृणोति—**न चेति।**

नन्वष्टाकपालस्य पौर्णमासीयागान्वये विहिते देवतां विना द्रव्यस्य यागान्वयायोगात् देवताकांक्षायां उपलक्षणत्वेन बुद्धिस्थस्याग्नेः देवतात्वं कल्पयिष्याम इति शङ्कते—**कल्पयिष्याम इति।** अग्न्युद्देशेन द्रव्यत्यागविधानाभावेऽग्नेर्देवतात्वासिद्धेः नैवमिति परिहरति—**नेति।**

अथासति विधाने देवताया अभावस्तत्राह—**संबन्धि शब्द इति।** त्यज्यमानद्रव्यसंबन्धापेक्षप्रवृत्तित्वात्मकसंबन्धिशब्दत्वाद्देवता शब्दस्येत्यर्थः। असंबन्धिशब्दत्वे गमकमाह—**स एवेति।** एवं पौर्णमासस्यनुवादेन द्रव्यदेवताविधौ निरस्ते तन्न्यायेनैवामावास्यानुवादेनापि तद्विधानस्य निरस्तत्वात् किं तर्ह्याग्नेयादिवाक्ये विधीयत इत्यपेक्षायामाह—**तस्मादिति।**

नन्वेवमपि यागं विना द्रव्यदेवतान्वयायोगादवश्यं यागापेक्षायां विद्वद्वाक्यविहिते यागे द्रव्यदेवतासंबन्धो विधीयतामत आह—**स एष इति।** स च यागः एषः एतद्वाक्यगत एव भवति न वाक्यान्तरगत इति भावः। वाक्यान्तरप्राप्ते

यागे द्रव्यदेवतान्वयविधौ द्रव्यदेवतायोरपि विध्यापत्तेः वाक्यभेद इत्याशयः। एवं तस्याग्नेयादिवाक्यविहितं यागान्तरमेव विद्वद्वाक्यविहितयोः यागयोः पौर्णमास्यमावास्याख्यायोरङ्गत्वेन विधीयमानं रूपं भविष्यतीत्याशङ्कामनूद्य दूषयति—**तेनेति**। यागस्य यागान्तरव्यवच्छिन्नरूपयागप्रत्यायकत्वासंभवादित्यर्थः। इदं चाग्नेयादिवाक्यस्थयोः पौर्णमास्यमावास्याशब्दयोः श्रुत्या कालार्थत्वप्रतीतेः अयुक्तमपि कर्मार्थित्वं प्रौढ्याभ्युपगम्योक्तमिति मन्तव्यम्। सिद्धान्तमुपसंहरति—**अत इति**। तथा न लक्षणाशब्दो भविष्यतीति पूर्वपक्षभाष्येणार्थादुक्तं विद्वद्वाक्यस्य पौर्णमास्यमावास्याशब्दयोराग्नेयादियागसमुदायपरत्वे लाक्षणिकत्वदोषमनुभाष्य दूषयति—**यत्तूक्तमिति**। एकवचनान्वयायागत्या समुदायलक्षणा आश्रयणीयेति भावः। मुख्यासंभवे लक्षणाया अपि साधुत्वमुदाहरणेनाह—**यथेति**। न चेदं लक्षणासाधुत्वमस्माभिरेव प्रतिपादनीयमित्याह—**लक्षणापीति**। यथैतत्पूर्वपक्षद्वयं न संभवति तथा व्यपदेशोऽपीत्याह—व्यपदेशश्चेति। व्यपदेशमुदाहरति—**उच्चाणीति**। द्वितीयपूर्वपक्षनिरासार्थत्वेन व्यपदेशं व्याचष्टे—**विकल्पे हीति**। यद्यमावास्यायामेक एव यागः तदाग्नेयस्य पुरोडाशस्यैन्द्रस्य च सान्नाय्यस्य दध्नः पयसो वा विकल्पः स्यात् तत्राग्नेयं प्रथममैन्द्रे उत्तरे इति पौर्वापर्यानुपपत्तिः संभ्रियन्त इति च संहृत्यभरणस्य धारणापरपर्यायस्य निष्पादनस्यानुपपत्तिरित्यर्थः। आद्ये तु पूर्वपक्षे विद्वद्वाक्यविहितकर्मान्तरसाधनं चतुर्थमपि हविरस्तीत्युत्तराणीति स्यान्नोत्तरे इत्येवं द्विवचनविषयतयापि व्यपदेशशब्दो व्याख्येयः, पक्षद्वयेऽपि चाग्नेयादिप्राधान्यवाचिनोग्रशब्देन प्रयाजादिगुणभावसूचनात्तद्विषयत्वमपि व्यपदेशशब्दस्य द्रष्टव्यम्, पक्षद्वयेऽपि लिङ्गदर्शनानुपपत्तिमाह—**लिङ्गदर्शनाच्चेति**। एतद्विभजते—**लिङ्गं चेति**। पौर्णमास्यां त्रीण्याग्नेयादीनि प्रधानानि पञ्च प्रयाजाः द्वावाज्यभागौ स्विष्टकृत् त्रयोऽनुयाजाः इत्याहवनीये यजिचोदितान्यङ्गानि एकादशेति चतुर्दशपौर्णमास्यामाहुतयः अमावास्यायां तु प्रधानाहुतिद्वित्वात् त्रयोदशेति विभागः, तत्र विद्वद्वाक्ययोः कर्मान्तरविधित्वे पौर्णमास्यां प्रधानाहुतिचतुष्ट्वात् पञ्चदशत्वसङ्ख्यापत्तेरमावास्यायां च प्रधानाहुतित्रित्वाच्च चतुर्दशसङ्ख्यापत्तेः चतुर्दशत्रयोदशत्वदर्शनानुपपत्तिः, तयोरेव कर्मविधित्वे प्रधानाहुत्यैक्येनोभयत्र द्वादशसङ्ख्यापत्तेः श्रुतसङ्ख्यानुपपत्तिरिति भावः॥ ३॥

त० वा०—समस्तान् दर्शपूर्णमासप्रकरणयागदिधीनुदाहृत्य किं सर्वेषां प्रधानत्वम्, उत केषांचिदेवेति भाष्यकारेण विचारः प्रस्तुतः। तत्राभिधीयते—

**दुरुक्तचिन्ताकरणम्**

अङ्गप्रधानचिन्तेयं चतुर्थाध्यायगोचरः।<br>
केन नाम प्रसङ्गेन प्रस्तुता भेदलक्षणे॥

अभ्यासलक्षणभेदानन्तरमिदानीं संख्यानिमित्तं भेदमविचार्यैव कथमयं लक्षणानौपयिकोऽर्थश्चिन्त्यते ।

केचिदाहुः । अयमपि लक्षणार्थ एव, **अनन्तरं प्रधानाप्रधानानि परीक्षिष्यन्त** इति वचनात् । तत्त्वयुक्तम् । तत्रैव पर्यनुयुज्य[1]म् । वचनस्याऽन्यथैव व्याख्यानात् । अपूर्वभेद[2]प्रतीत्यर्थं हि स तृतीयसिद्धोऽर्थोऽत्रोपन्यस्त इत्युपयुक्तम् । अयं[3] तु कर्मणामङ्गाङ्गिभावो न कथंचित्सम्बध्यते । महता प्रयत्नेनायं चतुर्थे साधयिष्यते "दर्शपूर्णमासयोरिज्याः प्रधानानि" = इत्यत्राधिकरणे । स्फुटत्वाच्च नान्यथा तन्नेतुं शक्यते । तस्मादिहाविचारणीयमेतत् । य एवं विद्वानित्येवं संयुक्तौ प्रकृतानुवादावथ वाऽपूर्वकर्मविधी, तत्रेतरे गुणविधय इत्यपि सर्वं यथोपन्यस्तेनाप्यधिकरणार्थेन न संगच्छतेऽथ त्वेतदेव विचार्यते, ततः पर्वं नोपन्यसितव्यम् । अपि च—

भेदे च दृष्टसामर्थ्यौ समप्राधान्यसिद्धये ।
कथं शब्दान्तराभ्यासौ हेतुत्वेनोपवर्णितौ ॥

शब्दान्तरत्वादभ्यासाच्च भेदस्तावदुच्यते । समप्रधानत्वमप्येताभ्यामेव प्रतिपाद्यत इत्यापूर्वा युक्तिः । न वाऽधिकरणद्वयशरीरस्य विविक्ताः पक्षहेतवो दृश्यन्ते, येन तन्त्रेण विचारद्वयमिदं प्रस्तुतमित्यध्यवस्येम । तस्मादेवं समर्थयितव्यम् ।

इहाभ्यासलक्षणभेदातिप्रसङ्गापवादार्थमधिकरणे आरभ्यमाणे यथोदाहृतानां मध्ये द्वे एवोदाहरणे 'य एवं विद्वान्पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजत' इति । तत्र संदेह—किमेतौ यजतिशब्दावपूर्वयोः कर्मणोर्विधायकावुत पौर्णमास्यमावास्याशब्दाभ्यां स्वाभिधेयकालविशेषयुक्तकर्मप्रतिपादकाभ्यां विशेष्यमाणौ प्रकृतानेव कांश्चिद्यागाननुवदत इति । तत्रेतरेषामाग्नेयादीनां गुणात्, प्रयाजादीनामभ्यासात्, आघारादीनां शब्दान्तरत्वात्सिद्धे भेदेऽधिकरणपक्षद्वयप्रयोजनभूतसमप्रधानभावाङ्गाङ्गिभावविषयत्वेनोपन्यासः, नाधिकरणशरीरविषयत्वेन । न हि समप्रधानत्वमङ्गाङ्गिभावश्चाधिकरणपक्षावित्युक्तम् ।

तदिह पौर्णमास्यमावास्यासंयुक्तयोर्विधातृत्वं तदभिधेयकर्मभेदः समस्ताघारादीनां समप्राधान्यमित्येतत्त्रयमुत्तरोत्तरफलत्वेनाविनाभावसम्बन्धादेकः[4] पक्षः । तथा तयोरनुवादत्वं तद्वाच्यकर्माभेद आग्नेयादीन्प्रत्याघारादीनामङ्गत्वमिति तेनैव प्रकारेणापरस्त्रिकः । त्रितयस्य त्रितयस्य च स्वांशाविनाभावादेकसिद्ध्यैवेतरद्वयसिद्धिर्भवतीति पक्षद्वयेऽपि यदेव साधितम्, तेनैवेष्टसिद्धिं मत्वा

१. क. 'अस्य' इत्यधिकम् ।　　२. क. अपूर्वभेदनिवृत्यर्थो ।
३. क. अत्रेति ।　　४. क. सम्बद्धमेकं ।

फलभूतस्तृतीयस्तृतीयोंऽश उपन्यस्तः। तत्र चार्थगृहीतावपि भेदाभेदौ विस्पष्टीकरणार्थं पुनरन्ते दर्शितौ।

किमर्थं पुनरादौ व्यवहितयोः समप्रधानाङ्गाङ्गिभावद्वारेण भेदाभेदयोरुपन्यासः कृतः? एषा ह्याचार्यस्य शैलीति केचित्। तथा हि पूर्वाधिकरणयोरप्यपूर्वभेदमेवोपन्यस्तवान्।

अथ वा यल्लिङ्गदर्शनं वक्ष्यति विकृतौ प्रयाजादयो दृश्यन्त इति, तत्साक्षाद्भेदनिराकरणासमर्थं[1] समप्रधानभावं निराकरिष्यति। तन्निराकरणे च सत्यविनाभावाद्विधिभेदावपि निराकृतावेव भवत इति, तदुपजीवनायेत्थमुपन्यासः। केवलभेदोपन्यासे तु तदसंबद्धमेव स्यात्।

तत्र द्वेधा पूर्वपक्षो भविष्यति एकः समप्राधान्यद्वारेणाऽऽग्नेयादीनां कर्मविधित्वे सत्येव पौर्णमास्यमावस्यासंयुक्तयोस्तद् व्यतिरिक्तकर्मविधानात्। अपरः पुनस्तयोरेव कर्मविधित्वम्, इतरेषां तु गुणविधानार्थत्वमित्येवम्, प्रथमं तावद् व्यतिरेकपक्षं परिगृह्णाति शब्दान्त[2]रत्वादभ्यासाच्च समप्रधानानीति। यद्यपि चैतौ हेतू साक्षात्समप्रधानत्वेन न संगच्छेते, तथाऽपि तत्प्रतिज्ञानेन योऽर्थाद्भेदः प्रतिज्ञातः तेन संबन्धादेकवाक्यत्वम्। एतदुक्तं भवति। अयागेभ्यः शब्दान्तरत्वात् यागेभ्यश्चाभ्यासाद्भेदः ततश्च समप्रधानानीति।

न च समस्तानुवादस्य किंचित्प्रयोजनमस्ति। न च गुणफलनिमित्तानां किंचिच्छ्रूयते, यत्र विधि[3]व्यापारतः कर्मस्वरूपविधानमुपेक्षेत। न चैषा संज्ञा केषुचित्प्रकृतेषु प्रसिद्धा। वर्तमानापदेशेऽपि च सति प्रयोगवचनार्थवादपञ्चमलकारादीनामन्यतमेन 'समिधो यजति' इत्यादिवद्विधिः। सत्यपि च यच्छब्दोपबन्धे "यदाग्नेयोऽष्टाकपाल" इत्यादिवत् विधिशक्त्यनवलोपः। न च शाखान्तरीयवद्विधिविकल्पः। शाखान्तराणां पुरुषान्तरं प्रति प्रतिपादनेनाऽर्थवत्त्वात्। न त्विह कर्मान्तरकल्पनादन्यत् प्रयोजनमस्ति। न च कस्यचिदन्यस्य विधेः स्तुतिः संभवति, एकवाक्यत्वाभावात्।

किं पुनरनयोः कर्मणोर्द्रव्यदेवतम्? तदुच्यते—

> ध्रौवं साधारणं द्रव्यं देवता मान्त्रवर्णिकी।
> रूपवन्तावतो यागौ विधीयेते पृथक्तया॥

सर्वस्मै वा एतद्यज्ञाय गृह्यत इति सर्वार्थत्वाद्यथैवोपांशुयाजस्य ध्रौवाज्यद्रव्यकत्वम्, एवमनयोरपि यागयोः। तथाऽऽज्यभागयोः क्रमे चतस्रोऽनुवाक्याः पठ्यन्ते द्वे आग्नेय्यौ, द्वे सौम्यौ। ते बलीयसा वाक्येनावच्छिद्याऽनयोः कर्मणो-

---

१. क० सवर्थं सत्। २. क० शब्दान्तरा। ३. क० विधिर्व्यापृतः।

विधीयेते वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायाम् इति। न हि पौर्णमास्यमावास्याशब्दाभ्यामेतत्कर्मव्यतिरिक्तमन्यदिहोच्यते। ननु कालवचनावेताविह प्रयुज्येते। किं कालस्य मन्त्रसंबन्धेन। दृष्टश्च सप्तमीनिर्दिष्टानां कर्मणां प्रधानभावः तद्यथा येन कर्मणेर्त्सेत्तत्र जयां जुहुयात् इति। तेनानुवाक्याद्वयस्य तुल्यार्थतया विकल्प्यमानस्यानुरूपा याज्याऽपि कल्पयितव्या।

अथ वा युगपद्विधानात्समुच्चये सति द्विदेवत्यकर्माध्यवसायाद् द्वे द्वे याज्ये अपि कल्पयितव्ये। यद्वैकैवाग्नीषोमदैवत्या। अथ वा वार्त्रघ्न्योरेवैका याज्या कर्तव्या, तथा वृधन्वत्योः। अतश्च श्रुतिविहितमन्त्रकर्मसंबन्धान्यथानुपपत्त्याऽग्नीषोमौ देवतोभयत्राध्यवसीयते। आज्यभागयोऽस्तु पुराकल्पसरूपेण[1] वाक्येन देवता तावत्प्राप्तैव, 'यस्यै कस्यैचिद्देवतायै हविर्निर्वपन् आज्यस्यैव नौ पुरस्ताद्यजन्, इति। याज्याप्राप्तिश्चाबाधितैवानुवाक्यागमश्च दाशतयीभ्यः कर्तव्य इति, न किंचिद्विरुद्धम्। तस्मादस्ति कर्मान्तरत्वेऽपि रूपमिति भेदोः। अतश्च समप्रधानानि[2]।

भेद इति गृह्णीमः, समप्रधानत्वं तु न मृष्यामहे। कुतः ?

निवेशः केषुचित्त्वेव पृथक्त्वेनाभिधानयोः।
फलं च तद्विशिष्टेभ्य इति साम्यं न युज्यते॥

दर्शपूर्णमासाभिधाने हि विशिष्टयागवाचिनी, तेन तन्मात्रस्यैव फलत्वात्, इतरेषां तत्संनिधानादङ्गत्वेन भवितव्यम्।

अत्राभिधीयते—

प्रसिद्धेनाप्रसिद्धस्य नित्यमिष्टं विशेषणम्।
तस्माद्यज्यनुरोधेन नामार्थोऽत्र निरू[3]प्यते॥

सर्वत्र नामयुक्तकर्मविधाने सामानाधिकरण्यात्कदाचिद्यज्यर्थविशेषो नाम्ना निरूप्यते, कदाचिन्नामार्थो यजिना। यो यत्र पूर्वतरप्रसिद्धार्थो भवति, स इतरं स्वविषये स्थापयति। यथाज्योतिष्टोमेनेत्यत्र ज्योतिर्भिस्त्रिवृदादिभिः स्तौमैर्यागात्प्रसिद्धार्थेन नाम्ना दीक्षणीयादिभ्यो यजिर्निवर्त्य सोमयागो स्थाप्यते। तथा राजसूयेनेत्यत्र नाम यागायागविषयत्वेनोपप्लवमानं[4] प्रकृतयागप्रसिद्धेन यजिना स्वविषयं नीयते। तदिह प्रातिपदिकद्वयसमासद्विवचनार्थानां दर्शपूर्णमासपदोपात्तानां न क्वचित्प्रसिद्धिरस्ति, यया यजेस्तद्विषयत्वं विज्ञायेत। यजिः पुनर्यागमात्रे प्रसक्तः सन्नधिकारेण प्रकृतेषु स्थापितः शक्नोत्यप्रसिद्धं दर्शपूर्णमासशब्दं स्वविषये नियन्तुम्। ततश्च दर्शपूर्णमासाभ्यामित्यविवक्षितावयवसमासार्थद्वित्वं

१. क. पुराकल्परूपेण। २. क. समप्राधान्यसिद्धिः।
३. क. नियुज्यते। ४. उपप्लवमाने।

वर्णलोलीभावमात्ररूपेण केवलकरणसंवादिप्रकृताशेषयागनामत्वं राजसूयशब्दवत्प्रतिपद्यते 'सुपां सुपो भवन्ति' इति बहुवचनस्य स्थाने द्विवचनम्, समस्तसमुदायगतैकवचनस्य वा।

कथं पुनर्दर्शपूर्णमासाभ्यामित्यप्रसिद्धम्। यदा तावत्—

वाच्यकालयुजो यागाः प्रकृताः सन्ति केचन।
द्विसंख्योत्पत्तियुक्ताश्च प्रसिद्धिर्येषु विद्यते॥

तन्नामाशेषस्वार्थपरित्यागेनात्यन्तपरानुरोधिवृत्तिं भजते, यत्र कश्चिदप्यंशोऽप्रसिद्धः। इह तु दर्शेन कालेन पौर्णमासेन च संयुक्ता आग्नेयादियागा विद्यन्ते। द्वित्वयुक्ताश्चाऽऽज्यभागादयस्तेषामयुक्तः परित्याग इति।

तदुच्यते—

प्रकृतिप्रत्ययौ पूर्णौ विशेष्टुं यजतिं क्षमौ।
आग्नेयाद्याज्याभागादावेकत्रैकार्थशून्यता॥

यद्यप्याग्नेयादिषु स्वाभिधेयकालयोगात्प्रातिपदिकं वर्तेत, तथाऽपि तेषां बहुत्वाद् द्वित्वानुपपत्तेरसमर्थं पदम्, यत्रापि द्वित्वमस्त्याघारयोराज्यभागयोर्वा, तत्रापि प्रातिपदिकस्यात्यन्तमशक्तिः। न चार्थप्रकरणशब्दान्तरैर्विस्पष्टं सामानाधिकरण्यमस्ति, येन केनचिद्वर्णसामान्यादाख्याविकारन्यायेन, गौणत्वेन वा तद्विषयत्वमध्यवसीयेत।

कस्मात्पुनरिमावेवापूर्वौ पूर्णमास्यमावास्यासंज्ञकौ द्वौ यागौ फलाय न विधीयेते। तथा हि—

सिद्धान्तेऽपि तु यागाभ्यां शब्दाभ्यामनुकीर्त्तितौ।
तावेव समुदायौ द्वौ विधास्येते फलं प्रति॥

यदि कश्चिदर्शपूर्णमासशब्दयोः, पौर्णमास्यमावास्याशब्दयोश्च वैलक्षण्यान्न पूर्वकर्मप्रत्यभिज्ञानं फलवाक्येऽस्तीति ब्रूयात्, स वक्तव्यस्तुल्यस्ते दोषोऽयमिति। तवापि हि पौर्णमास्यमावास्यासंज्ञकावेव समुदायौ फलवन्ताविष्टौ। न च तयोः प्रयोगवाक्येऽस्ति शब्दत्वात्प्रत्यभिज्ञानम्। अथ तत्र विनाऽपि संज्ञानुसारेण कालयोगाद् वृत्तिरिष्यते, स ममाप्यस्त्येव कालयोगः "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेत" इति।

नैतदेवम्। एवमपि हि—

षण्णामग्न्यादियागानामनयोश्च द्वयोरयम्।
समानः कालसंयोग इति नेष्टावधारणा॥

न ह्यष्टानां कालसंयोगे सत्यवधारणे हेतुरस्ति, येनानयोरेव फलसम्बन्धः स्यात् ।

स्यादेतत् । एतेषां मध्ये ययोः कयोश्चित्फलसम्बन्ध इति । तदयुक्तम् ।

विशेषहेत्वभावे हि ग्रहणं निष्प्रमाणकम् ।
पक्षे वाऽङ्गप्रधानत्वं विरोधान्न विकल्पते ॥

विना विशेषहेतुना यागत्वकालसम्बन्धसाम्ये सति, यावेव गृहीतौ, तत्रैवेतरेषां प्राधान्यप्रामाण्यभाजां सतामङ्गत्वापादनाद् विरुद्धता स्यात् ।

अथ विकल्पेन सर्वेषां पाक्षिकोऽनुग्रहः कल्प्येत, तत्रापि तस्यैव कदाचित्प्रधानत्वं कदाचिदङ्गत्वमिति विप्रतिषिद्धम् । उभयात्मनां चाङ्गतया प्रवृत्तेः प्रधानत्वेन च निवृत्तेराग्नेयादीनां विकृतिगमने यावज्जीवं संशयप्रसङ्गः । सर्वसंख्याश्च केनचिदवान्तरसामान्यावच्छेदेन संख्येयेषु वर्तन्ते । न वाऽपूर्वयोराग्नेयादीनां वा समस्तानामेकदेशे वा किंचिदवान्तरसामान्यं दृश्यते, येन द्वित्वमवधार्येत । य एव हि गृहीतः । तस्यैव यागान्तरापेक्षयोद्भूतेन बहुत्वेन केवलात्मापेक्षेण चैकत्वेन द्वित्वं बाध्यते । ततश्च द्विवचनस्याप्रसिद्धिः । सिद्धान्ते तु शब्दद्वयेन समुदायद्वयापादनादसमुदायीकृतयागवैलक्षण्यादवान्तरधर्मयोगात्सम्भवति द्वित्वयोगः । तद्वशेन च कालयोगात्कथंचिद्दर्शपूर्णमासप्रातिपदिकयोरपि वृत्तिसिद्धिरित्युपपद्यते । यागविशेषणत्वं न तु पूर्वपक्षे समुदायत्वापादनाभावात्संख्यावृत्तिरिति प्रकृतयागमात्र एव फलसम्बन्धः ।

अथ कस्मादष्टावेव यागाः पौर्णमास्यमावास्याकालगतद्वित्वापेक्षया लब्धविशेषणाः सन्तो न विधीयन्ते । यथा सिद्धान्ते समुदायगतद्वित्वापेक्षया षड् विधास्यन्ते । नेदृशेनास्फुटेन प्रकृतयागमात्रावलम्ब्याऽऽख्यातं शक्यं निनर्तयितुम् । न चात्यन्तव्यतिरेकात्कालगता संख्या यागसामा[1]नाधिकरण्यनिर्देशार्हा भवति । समुदायसमुदायिनोस्त्वव्यतिरेकादविरुद्धः संख्यासम्बन्धः सिद्धान्ते । तस्मात्पूर्वपक्षे यजिवशेनैव नामपदवृत्तेरविशेषेण सर्वे यागाः समप्रधानाः । तथा प्राप्ते ।

अभिधीयते । प्रकरणं पौर्णमास्यमावास्यासंयुक्त[2]योरालम्बनं स्यात् । प्रक्रियत इति प्रकरणम् । अथ वा प्रकरणं तयोः सहकारि भवेत्, ततश्च तन्मात्रप्रतिपाद्योऽर्थो ग्रहीतव्यः । कुतः—

विधायको नियुङ्क्ते हि[3] सर्वोऽसाधारणे यजौ ।
न च तत्र प्रवृत्तिः स्यादज्ञातद्रव्यदेवते ॥

न ह्यनेन यजिना, पौर्णमास्यमावस्यापदाभ्यां वा यागमात्रे बुद्धिः क्रियते । न च प्रकृतकर्मग्रहणं त्वत्पक्षेऽस्ति । तत्राजातरूपे सत्यपूर्वे कर्मणि न कथंचि-

१. क. यागत्व । २. क. युक्तयो । ३. क. तु ।

त्प्रवर्तेत[1]। ततश्च वाक्यमेवानर्थकं भवेत्। प्रकृतग्रहणे तु तेषां द्रव्यदेवतायोगादेतत्कालवर्तित्वाच्च रूपज्ञानादर्थवत्त्वम्।

ननूक्तं मत्पक्षेऽप्यस्ति द्रव्यदेवतमिति। सत्यम्।

यथाकथं चिल्लभ्येत द्रव्यं[2] साधारणं स्थितम्।
तथाऽपि देवता नास्तीत्यरूपत्वान्न मुच्यते॥

न हि मन्त्रवर्णिकी देवता सम्भवति। मन्त्राणां क्रमविशेषेणाऽऽज्यभागार्थत्वात्। न चास्य[3] वाक्येन बाधः। विरोधाभावात्। सर्वत्र ह्यविरोधेन वाक्ये निविशमाने विरोधपक्षस्त्यक्तव्यः[4]। इह च पौर्णमास्यमावास्याशब्दौ यदि कर्मवचनावेव स्याताम्, ततो न विरोधः परिह्रियेत[5]। कालवचनत्वे त्वनयोरविरोधः। साधारण्याच्चाविरोधपक्ष एव समर्थनीयः। किं च।

प्रथमं काल एवाऽऽभ्यां शब्दाभ्यां प्रतिपाद्यते।
पश्चात्तत्कर्म तद्योगादतः कालोऽत्र गृह्यते॥

यदि हि सर्वलोकप्रसिद्धः कालोऽत्र न समवेयात्, ततस्तदतिक्रमेण कर्मणी गृह्येयाताम्। अपि चोपपन्नतरा कालवचनत्वे सप्तमी, तस्य सर्वत्रैव कालस्याधिकरणत्वान्न कर्मणोऽधिकरणत्वानुपपत्तेर्यथा कथंचित्कल्पनीयं स्यात्।

यत्तु किं कालस्य मन्त्रसम्बन्धेनेति, यदि तादर्थ्यलक्षण एवैकः सम्बन्धो भवेत्, चात्रास्माभिरुच्येत, तत एवं युज्यते वक्तुम्। इह त्वाज्यभागौ प्रति तादर्थ्ये व्यवस्थिते संकरे च प्राप्ते, कालभेदेन प्रयुज्यमानयोर्मन्त्रयोर्व्यवस्थामात्रं क्रियते वार्त्रघ्नी पौर्णमासीस्थयोराज्यभागयोः, वृधन्वती अमावास्यास्थयोरिति। किं च।

प्रज्ञातदेवतत्वाच्च दृष्टार्थाऽल्पविधानता।
मत्पक्षे भवतस्त्वत्र प्रसक्ता बहुकल्पना॥

सर्वत्रैवाऽऽकाङ्क्षापूर्वकः सम्बन्धो भवति। आज्यभागौ च प्रज्ञाताग्नीषोमदेवत्यौ तदभिधानसमर्थमन्त्राकाङ्क्षित्वादयत्नेन मन्त्रान् गृह्णीतः। त्वत्पक्षे त्वपूर्वयोः कर्मणोरज्ञातदेवत्वान्न मन्त्रापेक्षा। ततश्च मन्त्र-तद्विशेष-द्वित्वादिकल्पनादनपेक्षितानेकार्थविधिप्रसङ्गः, पुनश्च मान्त्रवर्णिकानेकदेवताकल्पना। न ह्येकस्य कर्मणोऽनेकया देवतया, अनेकयाऽनुवाक्यया कार्यमस्ति। पुनश्चाश्रुतयाज्याकल्पनाश्रयणमाज्यभागयोश्चाश्रुतपुरोनुवाक्याकल्पनम्। यच्चैका याज्या, एका चाऽनुवाक्या भविष्यतीति। न तत्। अनुवाक्यासमाख्याबाधात्। अपि च त्वत्पक्षे

---

१. क. प्रवर्त्येत। २. क. ध्रौवं। ३. न वास्य। न च वाक्येन।
४. क. त्यज्यते। ५. क. परिह्रियेत।

लिङ्गस्याविनियोजकत्वाद्वाक्ये च करणत्वेनाऽऽश्रयणात् "वैष्णवीमनूच्य" इत्यादिवददृष्टार्थप्रसक्तेर्न प्रकाशकता, प्रकाश्येनानपेक्षितत्वात्। मान्त्रवर्णिकदेवता-कल्पनातश्च वरमारादुपकारकत्वम्। आज्यभागयोः पुनर्द्वित्वात्प्रज्ञातद्विदेवतत्वाच्च प्रकाश्याकाङ्क्षिताः प्रकाशका मन्त्रा लिङ्गक्रमविनियुक्ताः सन्त एकान्तेन दृष्टार्थतां प्रतिपद्यन्ते। तत्र च मन्त्रताद्विशेषद्वित्वादिषु प्राप्तेषु कालद्वारेण व्यवस्था-मात्रविधानाल्लाघवं वाक्यस्य, न वाऽऽनर्थक्यम्। न हि संनिधानाद्व्यवस्था सिद्धा। तस्मान्न देवताविधिः, असंबन्धात्। अतश्चारूपत्वादकर्मान्तरता।

किं पुनः समस्तानुवादस्य प्रयोजनम्। पश्य—

पदतद्भागवाक्यार्थविधिशून्या हि चोदना।
धर्मं प्रत्युपयोगित्वं न कथं चित्प्रपद्यते॥

उच्यते।

यथैवोत्पत्तिवाक्यानां प्रयोगवचनाङ्गता।
तथैव तदुपादानाद् द्वित्वसिद्ध्याऽनयोरपि॥

वाक्यद्वयेन हि समुदायद्वये कल्पिते दर्शपूर्णमासाभ्यामिति द्विवचनं सिध्य-तीत्यर्थवत्त्वम्। न हि विधिरेवैकः प्रयोजनवानिति कश्चिन्नियमहेतुरस्ति। अविधेरपि विधिशेषत्वेनार्थवत्त्वात्। न वाऽत्र विप्रकीर्णानामाग्नेयादीनामेतद्वाक्य-द्वयमन्तरेण द्वित्वसंख्यायोगित्वं संभवति। एतदेव चाभिप्रेत्यास्य पक्षस्य प्रयोजनमेव गुणप्रधानत्वमादित उपन्यस्तम्। इतरथा हि 'अविशेषादनर्थकं हि स्यात्' इत्यस्योत्तरमपरिकल्प्यानुवादपक्षो दुरुपन्यास एव स्यात्। तस्मादस्ति प्रयोजनं समस्तवाक्यानुवादेऽपीत्यदोषः।

कथं पुनरत्यन्तभिन्नानां कर्मणां समुदायीकरणं शक्यम्? शक्यमिति ब्रूमः।

एककालाभिसंयोगाद्भिन्नानामपि कर्मणाम्।
समुदायार्पणं शक्यमेकदेशस्थवृक्षवत्॥

यथैव ह्येकदेशावस्थितान्वृक्षानालोच्य वनमिति समुदायबुद्धिर्भवत्येवमेककाल-युक्तकर्मसमुदायनामधेयबुद्धिः। तद्गतैकत्वावधारणाच्च पौर्णमासीमित्येक-वचननिर्देशः। समुदायिवचनावेव चैतो तल्लक्षितसमुदायगतसंख्याद्वारेणैक-वचनान्तत्वं बिभृतः। न समुदाययोरेव नामधेये भवतः। तथा हि—

सामानाधिकरण्येन यागनामत्वनिश्चयः।
समुदाये च यागत्वं नाऽऽग्नेयादिष्ववस्थितम्॥

"पौर्णमासीं यजते" इति यजिसामानाधिकरण्याद्यागनामधेयमेतदिति गम्यते। न चाऽऽग्नेयादीनां समुदाये यागत्वं समवेतम्, किं तर्हि? प्रत्येकमाग्नेया-

दिषु । तस्माद्यथैवैतेषु प्रत्येकं यजिः । एवं नामधेयमपि । न च समुदायोत्पत्तिरेकेन कालेन युक्तः । आग्नेयादीनामुत्पत्तिकाले परस्परानपेक्षत्वेन समुदायत्वानुपजननात् । ततः कालवशेनापि प्रत्येकं नामधेयमिति शक्यं वक्तुम् । यदि च समुदायिनैरपेक्ष्येण समुदाययोरेते नामनी स्याताम्, ततः प्रयोगवाक्येनापि समुदायौ फले विधीयेयाताम्, ततोऽवयवानामसाधनत्वात्समुदायादेकमपूर्वम् । अतश्च प्रत्येकापूर्वाणामभावात्कर्मभेदवैयर्थ्यप्रसङ्गः । सर्वधर्माणां चैकापूर्वनिबन्धनत्वात्संकीर्णवृत्तित्वं स्यात् ।

न च प्रत्येकमितिकर्तव्यतयाऽऽग्नेयादयः संबध्येरन् । ततश्च तद्गततन्त्रावृत्तिप्रयोगादिविचारासंबद्धत्वं भवेत् । न च प्रत्येकविकारे सौर्यादौ समस्तेतिकर्तव्यतातिदेशः स्यात्सहस्रादिशब्दवच्चावयववृत्त्यभावादेकपुरोडाशा पौर्णमासी, सांनाय्यरहिताऽमावास्येत्येवमादिव्यवहारोच्छेदप्रसङ्गः । संघातस्याचोदितत्वात्संघातस्य गुणत्वादित्येवमादिषु स्पष्टमेवंप्रकाराणां समुदायिवचनत्वमभ्युपगतम् । इतरथा हि स एव शब्दाभिहितत्वाच्चोद्येत फलसम्बन्धाच्च प्रधानं भवेत् । तस्मादुपसर्जनीभूतसमुदायाः समुदायिन एवाभिधीयन्ते । तेषां तु बहुत्वाद् बहुवचनप्रसङ्गेन लक्षणयैकवचनयोग इत्यभिप्रेत्य समुदायशब्दतयाऽवकल्पिष्यत इत्याह । तथा च **भवति हि बहूनामेकवचनान्तः समुदायापेक्ष** इति—अपेक्षामात्रमेव समुदायस्य ब्रवीति नाभिधेयत्वम् । यूथवनशब्दावपि यदा समुदायोपसर्जनसमुदायिवचनौ, तदा साकल्येन दृष्टान्तौ, यदा तु समुदायमेव ब्रूतस्तदा तन्निमित्तैकवचनलाभमात्रेण दृष्टान्तत्वम् । एतेन दर्शपूर्णमासशब्दावेतत्पर्यायौ व्याख्यातौ ।

तस्मादस्ति समुदायद्वित्वापेक्षानिमित्तैकत्वद्वयप्रत्ययसिद्धिः समुदायानुवादप्रयोजनम् । यथा वक्ष्यति[1] 'पृथक्त्वेनाभिधानयोर्निवेशः' इत्यत्र । तद्द्वित्वानुसारिणौ हि दर्शपूर्णमासशब्दौ तद्विषयौ भवतः । अस्ति च पौर्णमासीपूर्णमासशब्दयोर्बहु सारूप्यम्, तत्साहचर्याच्च दर्शशब्दस्यामावास्याविषयत्वम्, विपर्ययहेतुत्वेन वा लघीयस्येव प्रतिपत्तिर्यथा काण इति चक्षुष्मान् । तथा च वक्ष्यति शक्यते च चन्द्रमसोऽदर्शनाद्दर्श इति वक्तुम् । तथाऽन्वारम्भणीयावाक्यशेषेऽमावास्यादर्शशब्दौ समानाधिकरणौ दर्शयिष्यति । तेन समुदायद्वयोपलक्षितानां फलवत्त्वादितरेषामङ्गत्वम् ।

ननु चैवं सत्यनेनैव गतत्वाच्चतुर्थेऽधिकरणं नाऽरब्धव्यम् । नैष दोषः । स्थिते ह्येतस्मिन्प्रकृतयजतिमात्रग्रहणात्तत्र पूर्वः पक्षः, सिद्धान्तस्त्वेतदधिकरणप्रसादाद्भविष्यति । इतरथा तस्य पूर्वपक्ष एव स्यादिति प्रयोजनत्वेनाभिधानम् ।

---

१. क. चतुर्थे इत्यधिकम् ।

इदमपरं समुदायानुवादप्रयोजनं पौर्णमास्यां पौर्णमास्या 'अमावास्यायामावास्यया यजेत' इति कालसंयोगः। तत्रैतत्स्यात्। एतदपि वाक्यामनर्थकमुत्पत्तिवाक्यादेव कालसंयोगसिद्धेरिति। उच्यते—

अन्यथैव ह्ययं कालः करणांशेन युज्यते।
अन्यथोत्पत्तिवाक्यस्थो निरपेक्षैः परस्परम्॥

उत्पत्तिवाक्ये ह्यन्योन्यनिरपेक्षाणामाग्नेयादीनां निरङ्गानां च कालसंयोगस्तद्रूपत्वेनोपादानात्। अयं पुनस्तृतीयासंयोगात्करणभूतानाम्। तेषां च करणत्वं प्रयोगवाक्यादितरेतरयुक्तानामङ्गसहितानां चावगतमिति तादृशानां तदनुपादेयम्, कालं प्रत्युपादयिमानत्वात्। समस्तरूपविवक्षावशेन साङ्गस्त्रिकः परस्परसहितश्चैकपौर्णमास्या युक्तः, एकया चा[1]मावास्ययेति। यस्मिन् क्षण एको यागआरभ्य क्रियमाणः समाप्तिमनुभवति, तस्मिन्नेवेतरावित्यवधारणात्त्रिकस्य त्रिकस्य तन्त्रेण प्रयोगः सिद्धो भवति। औत्पत्तिककालानुरोधे तु भेदेनाङ्गवियुक्तानां च प्रयोगः स्यादित्यस्ति विशेषः।

### शङ्का तन्निरासः

ननु चैवं सति समुदायद्वयस्येतरेतरयुक्तस्य करणत्वान्नाङ्गसाहित्यवन्न परस्परतद्विवक्षाऽपीति, यथैवाङ्गानां तत्कालविज्ञानमेवं पौर्णमास्याऽमावाख्याऽऽक्षिप्ता, अमावास्यया च पौर्णमासीत्युभयोरुभयत्र प्रसङ्गः। न वोत्पत्तिवाक्यशिष्टकालविरोधस्तत्राप्यनुष्ठानात्। न हि यः पौर्णमास्याममावास्यां करोति तेनामावास्यायाममावास्या न कृता भवति, तथा पौर्णमासी। न चोत्पत्तिवाक्येन कालान्तरं निषिद्धम्, स्वकालप्रतिपादनमात्रापेक्षयात्।

अत्रोच्यते—

कालो यस्य न विज्ञातः स्वरूपं च न नश्यति।
तस्य कालः परोपाधिरुच्यमानो न दुष्यति॥

अमावास्या ह्युत्पत्तिकालनिराकाङ्क्षा पौर्णमासीसाहित्यलभ्यं पौर्णमासीकालं न प्रतीच्छति, एवं पौर्णमास्यमावास्याकालमित्येतयोः समुदाययोः कालान्तरकरणे सत्यौत्पत्तिकरूपविसम्वादाददर्शत्वमपूर्णमासत्वं च स्यात्। अङ्गानां त्वनिर्ज्ञातकालत्वेन साकाङ्क्षत्वादुत्पत्तिविसम्वादाभावाच्चाविरुद्धः साहित्यापेक्षलभ्यः कालः। आह—

अङ्गानां मुख्यकालत्वाद्वाक्यादस्माद्विनाऽप्ययम्।
कालोऽस्त्येवेति नैतस्य वचसोऽत्र निमित्तता॥

---

१. क. नामावास्ययेति।

उच्यते—

मुख्यकालत्वमङ्गानां न स्थितं मान्त्रवर्णिकम् ।
इदमेव हि तद्वाक्यं यद्बलेनैतदुच्यते ॥

ननु दूरस्थान्युपकर्तुं न शक्नुवन्ति । संनिकृष्टस्थैरुपकर्तव्यमित्येतद्वा कुतः । सर्वत्र वचनानुसारेणोपकारानुपकारांशौ विज्ञायेते । तत्र संनिकर्षवचनाभावे विप्रकृष्टं नोपकरोतीति, न किंचित्प्रमाणम् ।

ननु चान्येनैव वाक्येनैष तन्त्रप्रयोग सिध्यति, 'य इष्ट्या पशुना सोमेन' इत्यादीनां तत्रापि करणविभक्तिनिर्देशादिष्टेः स्वसमुदायिस्वाङ्गसहितायाः कालं प्रत्युपादानादीदृशी विवक्षा लभ्यते । सत्यं लभ्यते, न त्विष्टः प्रयोगः सिध्यति । तथा हि—

इष्टिशब्दः समस्तं वा प्रत्येकं वाऽवलम्बते ।
न तावत्त्रिकमित्येकमन्यादृक् चेष्टितं भवेत् ॥

न तावत्त्रिकस्येष्टिशब्देन ग्रहणमित्यवधार्यते । तत्र प्रत्येकं यागत्वेनेष्टिशब्द-प्रवृत्तेरेकैकस्याममावास्यायां पौर्णमास्यां वा प्रयोग इति न सम्यक्प्रयोगसिद्धिः । अथ समस्तानामाग्नेयादीनां कथंचिद्रूढेः "प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः" इतिवद् ग्रहणम् । एवमपि प्रयोगवचनैकत्वात्समुदायद्वयस्यापि पौर्णमास्याममावास्यायां वाऽनुष्ठानं स्यात् । तत्र स एवोत्पत्तिशिष्टकालविरोधः । तदनुरोधेन व्यस्थित-विकल्पाश्रयणमिति चेत् । एवमपि यथोत्पत्त्यनुरोधात्प्रत्येकानुष्ठानप्रसङ्गः, तथाऽ-ङ्गानां भेदेन पौर्णमास्यमावास्ये प्रत्युपादानाभावाद्यत्र क्वचनैकत्र प्रदेशेऽनुष्ठानं स्यात् । तस्मान्नैतद्वाक्यं ताभ्यां तुल्यार्थमिति प्रकृतार्वाकिंचित्करत्वाद्विकृतीरेव सद्यस्कालतायै गच्छति ।

नन्वनेन तन्त्रप्रयोगः 'सिध्येत् समे दर्शपूर्णमासाभ्यां यजेत' इति देशस्यानु-पादेयत्वात्साहित्यविवक्षोपपत्तेः ।

तत्रोच्यते—समस्य केवला चैव तन्त्रता प्रतिपाद्यते ।
तेन सर्वैरसावेको ग्राह्यो न बहवः समाः ॥

भेदेनापि हि प्रयुज्यमानानामनन्यदेशगमनमात्रेण देशतन्त्रत्वसिद्धिः । अथे-तरेतरयोगवशाद्यदैवैकः समेन यागो युज्यते, तदैवेतरोऽपीति तन्त्रत्वमुच्यते । तथा सति षण्णामपि युगपदुपादानात्तथैव प्रयोगप्रसक्तेः, स एव विरोधः । यदि पुन-रुत्पत्तिवाक्यानुरोधेन प्रवर्तते । ततः प्रत्येकं कालसंयुक्तानां समं प्रति साहित्यं संपादनीयमिति षट्स्वेव पौर्णमास्यमावास्यासु प्रयोगः समाप्येत । अङ्गानि च तावतः कालादनुत्कृष्यमाणानि प्रयोक्तव्यानीति, यत्र क्वचनान्तराले क्रियेरन् ।

अथ वा प्रतिप्रधानावृत्तेर्न्याय्यत्वादेकैकं प्रधानं साङ्गमपवृज्येत। अथ तु यावतोत्पत्तिकालो विरुध्यते, तावन्मात्रं परिहाय यौगपद्येन समसंबन्धः कर्तव्य इत्यवधार्येत। तत एकस्यामेव पौर्णमास्याममावास्यायां वा त्रिकयोः प्रयुज्यमानयोर्यस्य कस्यचित्समीपेऽङ्गानि प्रयुज्येरन्।

अथ वा तदर्धमासान्तराले यत्र क्वचनाहनि। सर्वो ह्यसौ प्रधानकालः, प्रधानकालाबहिर्भावश्च संभावयितव्यो तात्यन्तसामीप्यमशक्यत्वात् तस्मान्नैतेनाप्यभिप्रेतप्रयोगसिद्धिः।

अनेनैव फलवाक्यमपि प्रत्युक्तम्। फलस्यापि देशवदेवानुपादेयत्वात्सर्वानितरेतरयुक्तान्साङ्गान्प्रति तन्त्रत्वे सिद्धे न प्रयोगतन्त्रत्वसिद्धिः। विप्रकृष्टकालैरेव ह्येकं फलं साध्यते। अथोच्येत फलं भवद्भावयेदेतौरित्थमिति साङ्गानि प्रधानानि युगपत्फलभवनकालेऽनुष्ठातव्यानि श्रूयन्ते। ततश्च न विप्रकृष्टानीति[1]। तत्रापि समुदायद्वयस्य युगपत्प्रयोगापत्तिदोषः। उत्पत्तिवाक्यानुरोधेन वा पूर्ववदेव प्रत्येकं प्रयोगादियोजना। न च फलभवनकालोऽस्मत्प्रत्यक्षः। सोऽपि हि प्रधानेतिकर्तव्यताकालेनैव परिच्छिद्यते ततश्चोत्पत्तिकालालोचनेन यावन्तं प्रयोगकालमङ्गप्रधानानि व्याप्नुवन्ति, तावानेव फलभवनकालस्तादृगेव तद्विषयं यौगपद्यमिति सर्वथा षट्सु पौर्णमास्यमावास्यासु द्वयोर्वा साङ्गानां चापवर्गः। एकसमुदायसमीपे वाऽङ्गप्रयोगोऽर्धमासान्तराले वा यत्र क्वचिदिति प्रसङ्गा[2]न्नैतद्वाक्यलभ्यस्त्रिकस्य त्रिकस्य साङ्गस्य स्वकाले प्रयोगो वाक्यान्तरात्सिध्यतीति। तस्मादर्थवान् "पौर्णमास्यां पौर्णमास्या[3] यजेत" इति कालविधिः।

नन्वेवं सत्युत्पत्तौ कालयोगोऽनर्थकः। कथमनर्थकः? पश्य—

यद्युत्पत्तौ न विद्येत यागानां कालसंगतिः।
समुदायानुवादत्वं निर्निमित्तं न लभ्यते॥

पौर्णमास्यमावास्याशब्दौ स्वाभिधेयकालयुक्तयागानुवादाविष्येते। तदभावे तु नैव ज्ञायेत का पौर्णमासी? काऽमावास्येति? तदज्ञानादलब्धार्थदर्शपूर्णमासपदाविशेषितप्रकृतयागमात्रग्रहणात् सर्वाणि समप्रधानानीत्येतदेव स्यात्। तस्मादवश्यं भवितव्यं प्रथमं कालसंयोगेन। अत एव वोपांशुयाजस्यानुत्पत्तिवाक्यमपि सत्पौर्णमासीसंयुक्तमुदाहृतम्॥ ३॥

## अथ तृतीयं पौर्णमास्याधिकरणम्

न्या० सु०—समप्राधान्याङ्गाङ्गिभावचिन्ताया लक्षणासङ्गतिं, पौनरुक्त्यं चाशङ्कते—**समस्तानीति**। एवं समामनन्तीति प्रकारवाचिनैवंशब्देनानूयाजादिसूचनात्—**समस्ता-**

१. क. विप्रकृष्टव्यानीति। २. क. प्रसङ्गः तस्मात्। ३. पौर्णमास्येति कालविधिः।

विशिष्टायां भावनायामाधाय श्रौतं विधित्वं यद्यन्यत्रापि श्रुत्यैव पुनर्व्याप्रियेत, ततः पुनरुच्चारणदोषवैदिकत्वापत्त्या लभेत । अयं पुनः सकृद्विधाय निवृत्तव्यापारः स्वार्थान्यथानुपपत्त्या सर्वविशेषणेषु प्रत्येकनिष्ठानि विध्यन्तराण्याविर्भावयन् समाम्नायावगतैकरूपापरित्यागेनैवासकृदुच्चारणफले वर्तते ।

विशेषणविधिश्चायं पश्चाद्यद्यपि गम्यते ।
तथाऽपि त्वाकृतिन्यायात्ततः प्रागेव जायते ॥

विशिष्टनिमित्तत्वादर्थापत्तिः पश्चाद्भवन्ती यद्यपि विशेषणविधीनुत्तरकालमवगमयति, तथाऽपि त्वाकृत्यधिकरणन्यायेन विशेषणान्यनुपादाय विशिष्टव्यापारासंभवान्नूनं पूर्वतरं विशेषणविधयो निष्पन्नाः । यतस्तदधीनसिद्धिर्विशिष्टप्रत्ययो दृश्यत इति । तेन बहव एवैते विधय इति प्रत्यक्षार्थापत्तिलब्धा युगपत् क्रमेण वा व्याप्रियन्त इत्यनेकविध्यन्तरप्रसवसमर्थैकविशिष्टविधिप्रसादेनाऽनेकगुणविधानमपूर्वभावनाविधिपक्षे सुलभम्, नेतरत्र । कथम् ?

प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति ।[1]
अङ्गमाकृष्यमाणं तु नाङ्गान्तरमसंगतेः ॥

यदा हि भावनाऽन्यतः प्राप्ता भवति, तदा तस्याः पिष्टपेषणवत्प्रतिहतशक्तिर्विधायकस्तामविदधानो न तत्संगतार्थानेकविधिव्यापारप्रसवहेतुत्वं प्रतिपद्यते । विशिष्टविधाने ह्यर्थापत्त्या विध्यन्तराणि कल्प्यन्ते । न चात्र तत्संभवतीत्यनुपयुक्तश्रौतव्यापारावस्थ एव प्रत्ययः आनर्थक्यात्तदङ्गेषु इत्यनेन न्यायेन भावनातोऽवतीर्य तत्संबद्धानि कारकाण्युपसर्पति । तत्र यावन्त्येकपदोपात्तैककारकविशेषणानि जातिलिङ्गद्रव्यसंख्यादीनि, तानि विशिष्टभावनाविधिन्यायेनैव तत्कारकाक्षेपात्सर्वाणि विधीयन्त इति, प्राप्तायामपि भावनायामनेकार्थविध्युपपत्तिः ।

यदा त्वनेकपदोपात्तानेककारकोपनिपातो भवति, तदा कारकाणां परस्परसंबन्धाभावात्, तत्तत्पदेष्वप्यसंबध्यमानेषु यद्येकत्र विधिर्गच्छति, तदा नेतरत्र गतो भवति, एवमितरगमनेऽप्यन्यगमनानुपपत्तिः संबन्धात् । एवं च न भावनावदेकेन विहितेनेतरदर्थादाक्षेप्तुं शक्यते । तत्रार्थलभ्यविध्यन्तरप्रसूतावसत्यामेकात्मकः श्रौतो विधिरेकत्रौपक्षीयमाणो यद्यप्यन्यत्राप्यस्तीति कल्प्यते । तन्नासकृदच्चारणादृते सिध्यतीति पौरुषेयोऽनेकोच्चारणप्रसङ्गः ।

तद्दर्शयति—चोदिते हि—प्राप्ते कर्मणि, तदर्थत्वात्—गुणार्थत्वात्, तस्य तस्य-गुणस्य, विधेये पुनः पुनरुपदिश्येत-उच्चार्येत, प्रत्यय इत्यर्थः । **परस्परसंबन्धे चासति शक्यते विधातुमिति** भाष्यमर्थापत्तिमूलोच्छेदप्रदर्शनार्थम् । लोकेऽपि च यत्प्रधानं राजप्रभृति क्वचिन्नीयते, तदात्मनाऽविनाभूतान्यमात्यादीन्यङ्गान्यप्य-

---

१. १ क० न्यपि कर्षति ।

शेषाण्याक्षिपति। यदा तु कश्चिद्भृत्यानां क्वचिद्गच्छति, तदा तदसंबन्धीनि भृत्यान्तराणि पदमपि न चलन्ति, तत्रावश्यं प्रयत्नान्तरमास्थेयम्। न च तदेकव्यापारसाध्यमित्यशक्यं सकृच्छ्रतावुपादातुमिति।

एतमेवार्थं प्रपञ्चयति, यदि हि पौर्णमास्युद्देशेनाष्टाकपालो विधीयते, तदा तत्स्वरूपोत्पत्तिरपि तावदनुक्ता सती क्लेशेन लब्धा, किमुत पदार्थान्तरविधानम्। तदाह—**भवतिसंबन्धाभावान्नानेन संबध्यते। यथाऽऽग्नेयः पौर्ण**मास्यामित्यत्रापि स्वरूपोत्पत्तिक्लेशः पूर्वोक्त एव द्रष्टव्य इति, तमप्रदर्श्यैवाष्टाकपालसंबन्धाभावः प्रदर्शितः। एवं पौर्णमासीविशिष्टान्यतरानुवादेऽप्यनूद्यमानस्योत्पत्तिः पौर्णमासीसंबन्धो विधीयमानस्याप्युत्पत्तिरितरेतरसंबन्धश्चेत्यतिगौरवम्। पौर्णमासीपदतन्त्रत्वेऽप्युभयोरुत्पत्तिः कर्तव्या, परस्परं संबन्धश्चेति दोषौ।

न चारुणैकहायनीवत्परस्परनियमसिद्धिः, विशिष्टविधानदोषात्। अतोऽष्टाकपालाननुरक्तया पौर्णमास्याऽऽग्नेयः संबध्यते, तदननुरक्तया वाऽष्टाकपाल इत्यसंबन्धः। एतत्परिहारार्थं परस्परसंबन्धं द्रव्यदेवतयोः प्रथममेव कुर्वन् उभयस्वरूपोत्पत्तिरन्यतरस्य चान्यतरत्र विधानमिति युगपद्विधीयमानपरस्परसंबन्धक्लेशमनुभूय पुनः पौर्णमासीसंबन्धक्लेशः।

तत्परिहारार्थमन्यतः सिद्धं देवतासंबन्धमनूद्य केवलकर्मसंबन्धं दर्शयति—**अथ केन** चिदग्नये संकल्पित इति। तत्र संकल्पितशब्दवशेन केचिदाहुः केनचिदनुष्ठात्रा संकल्पित इति। न त्वेतद्युक्तमिव। अन्येनार्धकर्मणि तदीयस्य हविषो हरणमिति। तस्माद्धि णिजन्तः संकल्पितशब्दः केनचिद्वाक्येन रुक्कामादियुक्तेन विहित इत्यर्थः। तत्राऽऽहाष्टकपालसंबन्धसिद्ध्यर्थ[1]माग्नेयशब्देऽनूद्यमाने पौर्णमासीगतस्य का देवतेति न ज्ञायते, युगपदुपलक्षणविधिकल्पने वाक्यभेद इति। अनेनैव मार्गेणाऽऽकृत्यधिकरणमुखप्रदर्शितैर्वचनव्यक्तिप्रकारैर्वाक्यभेदानन्त्यं प्रपञ्चयितव्यम्। तेनावश्यविधातव्योऽत्र द्रव्यदेवतासंबन्धः। न च स पूर्वप्राप्ते कर्मणि संभवतीति 'गुणश्चापूर्वसंयोग' इति कर्मान्तरत्वम्। कर्मान्तरत्वे च सति तदवस्थं रूपावचनमित्यनुवादता। अतश्च बलादेकवचनलक्षणाद्याश्रयणीयम्।

किं च—　न वाऽनन्यक्रियायोगे वाक्यमेतत्समाप्यते।
　　　न च स्वार्थासमाप्तत्वाद्वाक्यान्तरमपेक्षते॥

अष्टाकपालो भवतीति नायं पुरुषव्यापारः। न च पुरोडाशव्यापारमात्रं विधातुं शक्यम्। अभावनाविशेषात्मकत्वात्। तत्रावश्यकल्पनीये पुरुषव्यापारविशेषे यागकल्पनाऽऽपतति। तत्र यद्यपि प्रत्यक्षे लभ्यमाने न युक्तमानुमानिककल्पनम्, तथाऽप्यत्रापरिपूर्णे वाक्ये वाक्यान्तरानपेक्षिणि पौर्णमास्यमावास्यावाक्य-

---

१. क विध्यर्थ।

स्थो यजिरसंनिहित एवेति, नानुमानं प्रतिबध्नाति। अनुमिते च सति "य एवं विद्वान्" इत्यनुवादसरूपत्वादनुवाद एव विज्ञायते। क्रियासामानाधिकरण्याच्च 'यदाग्नेयोऽष्टाकपाल' इत्यादेर्यच्छब्दाद्विलक्षणः कर्तृसमानाधिकरणोऽयं 'य एवं विद्वान्' इत्युपबध्यमानो विधिसामर्थ्यं निरुन्ध्यात्। तथा चोक्तम्—

'क्रियापदैकयोगित्वे यच्छब्दो न रुजेद्विधिम्।
कर्तृयुक्तः स एवान्यप्रापितार्थानुवादकृत्'॥ इति। ६॥

न्या० सु०—चोदनाशब्दव्याख्यानार्थं कर्मचोदनाशब्दं गुणविधित्वनिरासार्थतया व्याचष्टे—**नैत इति।** सूत्रशेषव्याख्यानार्थं कुत इति भाष्यं तात्पर्यतो व्याचष्टे—**कुत इति।** अप्राप्ते कर्मणि दृष्टस्यानेकगुणविधिप्रकारस्य प्राप्ते कर्मण्यसम्भवाभिधानायोत्तरार्द्धं तावद्व्याख्यातुं पीठिकां करोति—**कर्मोत्पत्तीति।** फलाद्यनुपादेयपरे वाक्ये कर्मविधावप्यनेकगुणविध्यसम्भवसूचनायोत्पत्तिशब्दः।

ननु कारकैर्विना भावनाविध्यपर्यवसाने, अग्निहोत्रादिवाक्ये कारकाश्रवणान्न विधिः स्यादित्याशङ्क्याह—**तत्रेति।** आत्मनो निष्पादकत्वेनांशभूततयावगतानि यानि कारकसामान्यानि, तदन्यथानुपपत्त्या कारकविशेषाक्षेपात्स्ववाक्ये कारकाश्रवणेऽपि विधिपर्यवसानं सम्भवतीत्याशयः। अर्थापत्त्या कारकविशेषाक्षेपे तद्वाचिपदार्थक्यमाशङ्क्य—**कारकविभक्त्यन्तेत्युक्तम्।** तत् ईदृशं ह्येकं वाक्यं श्रुतानुमितैकदेशे निष्पन्नमग्नीषोमीयेण पशुना यजेतेति पशुसोमाधिकरणवार्त्तिकवक्ष्यमाणन्यायेनाग्नेयेनाष्टाकपालेन यजेतेत्यादिप्रकारवचनव्यक्त्याश्रयणात्सर्वत्र कारकविभक्त्यन्तताभिप्रेता। यः कश्चिद्विशेषोस्तीत्यनिर्द्धारितविशेषाक्षेपेऽपि विशेषनिर्धारणार्थानि पदान्तराणीत्याशयः। वाक्यादेवेत्यनेन स्ववाक्योच्चारणस्योत्पत्तिशिष्टबलीयस्त्वं प्रयोजनं सूचितम्। विशेष्यते भावनेत्यन्वयः। नन्वेवं सत्यमूर्त्तत्वेन जात्यादेः कारकत्वायोगाद्भावनान्वयो न स्यादित्याशङ्क्याह—**प्रतिपदं चेति।** द्रव्याश्रितत्वेनामूर्त्तस्यापि द्रव्यद्वारा कारकत्वोपपत्तिरुक्ता।

ननु पशुत्वादिजातेरादिशब्दोक्तस्य चारुणादिगुणस्य, अभिक्रमणादिक्रियायाश्च श्रुतिलक्षणद्वारैकशब्दोपादानलक्षणया श्रुत्या लिङ्गसंख्ययोश्चैकपदोपादानलक्षणया श्रुत्या द्रव्यान्वयात् तादर्थ्यप्रतीतेः कथं भावनार्थतेत्याशङ्क्य—**एकेत्युक्तम्।** जात्यादेर्द्रव्येण सह विशेषणविशेष्यभावेऽपि जातिगुणयोः प्रातिपदिकार्थत्वात्प्रातिपदिकार्थकारकत्ववाचिन्या विभक्त्या संख्यायाश्च प्रत्ययार्थत्वेनैकाभिधानलक्षणया श्रुत्या लिङ्गस्यापि टाबादिप्रत्ययार्थत्वात्प्रातिपदिकार्थत्वाद्वा यथासम्भवं कारकत्ववाचिन्याश्रुत्या कारकत्वेन भावनार्थत्वप्रतीतेरभिक्रमणादेश्च धातुसम्बन्धाधिकारविहितणमुल्श्रुत्या धात्वर्थान्तरान्वयाभिधानात्तत्र वीप्सोक्ता। वृत्त्यन्यथानुपपत्त्यवगतसन्निपत्योपकारित्वेन कारकत्वावगत्याभावनार्थत्वप्रतीतेर्न द्रव्यशेषतास्तीत्याशयः। यथा द्रव्यस्य कारकत्वेन भावनार्थत्वान्न जात्यादिशेषता, तथा जात्यादेरपि न द्रव्यशेषतेति परस्परशब्देनोक्तम्।

नन्वेवमपि सन्निकृष्टपदान्वयमात्रेण भावनावैशिष्ट्यसिद्धेर्विप्रकृष्टपदानर्थक्यमित्याशङ्क्याह—**एवमिति**। कारकात्मना भावनार्थतैवैवंशब्देनोक्तां व्याचष्टे—**स चेति**। ननु विशिष्टविधौ विशेषणानामपि विधेयत्वात्कथं नानेकशक्तिकल्पनापत्तिरित्याशङ्क्याह—**तथा हीति**। श्लोकं व्याचष्टे—**विशिष्टायामिति**। ननु विशिष्टविधेः स्वार्थान्यथानुपपत्त्या विशेषणविधिकल्पकत्वे विशेषणे विहिते विशिष्टविधिः विशिष्टे च विहिते विशेषणविधिरितीतरेतराश्रयः स्यादित्याशङ्क्याह—**विशेषणेति**। पश्चात्कल्प्यस्यापि विशेषणविधेः प्राक्प्रवृत्तत्वेनैव कल्प्यत्वान्नेतरेतराश्रयापत्तिरित्याशयः। श्लोकं व्याचष्टे—**विशिष्टेति**। एकस्यानेकशक्तिकल्पनापत्तिपरिहारमुपसंहरति—**तेनेति**। विशेषणविशेष्यविधेरन्योन्यनैरपेक्षणापर्यवसानाद्युगपद्व्यापारो गम्यते। विशेष्यानुवादेन विशेषण विधिना क्रमेण। अप्राप्ते त्वित्युत्तरार्द्धं व्याख्यातमुपसंहरति—**इतीति**।

प्राप्ते कर्मणीति—पूर्वार्द्धं व्याख्यातुमुपक्रमते—**नेति**। एतदेव प्रश्नपूर्वं दृष्टान्तेनोपपादयति—**कथमिति**। श्लोकं व्याख्यास्यन् दार्ष्टान्तिकेऽङ्गाकर्षणन्यायं योजयति—**यदा हीति**। प्रतिघातस्य नित्यमपादानापेक्षत्वात्तस्या इति पञ्चम्यन्तसापेक्षत्वेऽपि समासविघातः प्रधाननयनन्यायस्तत्र नास्तीत्याह—**विशिष्टेति**। ननु प्राप्तं कर्मण्यनेकगुणविधानाशक्त्या, अजया क्रीणातीत्यादिष्वनेकजात्यादिविधिः प्राप्ते सोमक्रयादौ न स्यादित्याशङ्क्याह—**तत्रेति**। यथानेककारकविशिष्टभावनाविधिना विशेषणभूतानेककारकविध्याक्षेपः तथानेकजात्यादिविशिष्टकारकविधिना विशेषणभूतानेकजात्यादिविध्याक्षेप इत्यर्थः।

नन्वेवं सत्यनेकस्यापि द्रव्यदेवतारूपस्य कारकस्यैवाग्नेयपदोपादानात्पदान्तरोपात्तस्यापि चाष्टाकपालस्य द्रव्यरूपैककारकत्वात्प्राप्ते कर्मणि विध्युपपत्तिरित्याशङ्क्याह—**यदा त्विति**। एकपदोपात्तस्याप्यनेकस्य कारकस्य परस्परान्वयाभावेनैकविशिष्टेतरविध्ययोगान्नैकयत्नेन विधिः सम्भवतीत्याशयः। एकस्यापि तु कारकस्यानेकपदोपात्तस्यैकयत्नेन विध्यसम्भवेऽनेकपदसम्बद्धमित्यात्राघाराग्निहोत्राधिकरणवार्त्तिके साधयिष्यते। दार्ष्टान्तिकेऽङ्गकर्षणन्यायं योजितमुपसंहरति—**एवं चेति**। अत्रैव सूत्रावयवं योजयति—**तदिति**।

भाष्यकृतां सूत्रानुक्तविशेषणोक्तौ प्रयोजनमाह—**परस्परेति**। दृष्टान्ते श्लोकं व्याचष्टे—**लोकेऽपि चेति**। अमात्येन गन्तव्यमिति सकृदुच्चारणव्यापारे सेनान्यादिगमनहेतुप्रयत्नान्तरोपादानाशक्तेरुच्चारणावृत्तिः स्यादिति दृष्टान्तपर्यवसानम्। श्रुतिशब्दः श्रुतिहेतूच्चारणलक्षणार्थः। यदि तावदित्यादेः स एवाग्निरष्टाकपालस्य नान्यस्येत्यन्तस्य प्राप्ते कर्मण्यनेकगुणविधावुच्चारणावृत्तेर्लक्षणावाक्यभेदाभिधानपरत्वं तावदाह—**एतमिति**। एतदेवावयवशो व्याचिख्यासुर्यदि तावदित्यादिभाष्यं व्याचष्टे—**यदीति**। कर्मान्वयितयाऽष्टाकपालविधौ अष्टाकपालस्वरूपकर्त्तव्यत्वस्यापि क्लेशलभ्यत्वादाग्नेयान्वयरूपार्थान्तरविधानं दूरोत्सादितमित्यर्थः। अर्थान्तरविध्यशक्तौ तदानोमिति भाष्यावयवं योजयति—**तदाहेति**।

अथाग्नेय इति भाष्यं न तदाग्नेयः सत्तया सम्बध्यतइत्यर्थो लभ्यतइत्यनुक्तत्वान्न्यूनमाशङ्क्या—**अथेति**। अथ पौर्णमास्यामित्यथ तस्यामिति च भाष्यद्वयमेकहेलया व्याचष्टे—

**एवमिति ।** केन अष्टाकपालो विहित इत्यनूद्यमानाष्टाकपालोत्पत्तिर्निरस्ता । केन तस्या-विहित इति चावृत्त्या तस्य पौर्णमास्यन्वयो निरस्तः । विधीयमानाग्नेयोत्पत्तिनिरासस्तु प्राग्वत्सिद्धः । इतरत्राप्यनूद्यमानाग्नेयोत्पत्तिपौर्णमास्यन्वयविधीयमानाष्टाकपालोत्पत्ति-निरासः । स एवोत्पत्तिदेशेऽनेनोक्तः । एवं सत्यपि क्लेशेन तद्विधीनभ्युपगम्य, आग्नेयस्याष्टा-कपालस्य वाष्टाकपालेनाग्नेयेन वान्वयविधावतिगौरवं स्यादित्यर्थः ।

अथ पौर्णमासीति भाष्यं व्याचष्टे—**पौर्णमासीपदेति ।** द्रव्यदेवतोभयस्वरूपकर्तव्यता पूर्वोक्तात्रापि योजिता । ननु पौर्णमास्याख्यक्रियान्वयद्वारः परस्परान्वयो भविष्यतीत्या-शङ्क्याह—**न चेति ।** द्रव्यदेवताविशिष्टपौर्णमासीविधौ सत्युभयविशेषणवशीकारं विनोभय-विशिष्टत्वायोगादेकक्रियावशीकारात्परस्परनियमः सिद्ध्येत्, तस्य त्वनिष्टत्वेन दुष्टत्वाद्या पौर्णमासीत्यनूद्य तस्यामाग्नेय इत्युक्तेऽष्टाकपालानुरागाप्रतीतेः, तस्यामष्टाकपाल इत्युक्ते चाग्नेयानुरागाप्रतीतेर्न क्रियाद्वारा द्रव्यदेवतयोः परस्परान्वयः सम्भवतीत्यर्थः । अथ द्रव्यदेवते इति भाष्यव्याख्यानपूर्वमथ केन चिदित्याशङ्काभाष्यमवतारयति—**एतदिति ।** परस्परासम्बन्धपरिहारार्थं प्रागेव द्रव्यदेवतायाः परस्परसम्बन्धं कुर्वन्नन्यतः सिद्धं द्रव्यस्य देवतासम्बन्धमनूद्येत्युक्तम् ।

ननु द्रव्यदेवतान्वयविधिपूर्वककर्मान्वयविध्यभ्युपगमेऽपि, द्रव्यदेवतान्वयसिद्धेरनु-वादाभिधानं किमर्थमित्याशङ्क्यान्यतरसम्बन्धितयाऽन्यतरविधिर्द्वयोर्वा युगपदिति विकल्पै-र्द्रव्यसम्बन्धितया देवताविधौ, देवतासम्बन्धितया द्रव्यविधौ उभयोर्द्रव्यदेवतयोः स्वरूपविधिः सम्बन्धविधिश्चेति क्लेशे युगपत्त्वितरेतरनैरपेक्ष्येणोभयविधौ परस्परसम्बन्धक्लेशमनुभूय, पौर्णमासीसम्बन्धक्लेशो यः तत्परिहारार्थमित्युक्तमिति, तच्छब्दाक्षिप्तयच्छब्दाध्याहारेणैक-ग्रन्थतया योज्यम् ।

अवतारितभाष्यस्य परव्याख्यामुपन्यासपूर्वकं दूषयति—**तत्रेति ।** परस्वहरणमेव तावन्निषिद्धत्वादयुक्तम्, विशेषतो हविषः सुतरामनपवृक्तकर्मण इत्यर्थः ।

केन चिदाग्नेयमष्टाकपालं निर्वपेद्रुक्काम इत्यादिवाक्येन विधानात्सङ्कल्पविषयी-कारित इत्येवं स्वमतेन व्याचष्टे—**तस्मादिति ।** रुक्कामेष्ट्यां विहितस्य पुरोडाशस्य, तत्र त्यक्तस्यान्यत्रात्याज्यत्वेन साधारण्यायोगादाच्छिद्य विधौ च रुक्कामेष्ट्यसिद्ध्यापत्तेः, पौर्णमास्यां विध्ययोगेऽपि पुरोडाशान्तरस्य चाग्निनोपलक्षणायोगेऽपि, योऽष्टाकपालोऽन्यत्रा-ग्नेयतया विहितः, स पौर्णमास्यां भवतीत्यष्टाकपालत्वसाम्यात्पुरोडाशान्तरस्याग्न्युपलक्षितस्य पौर्णमास्यां विधिरित्याशयः ।

तथापीति परिहारभाष्यमाग्नेयपदान्वयेनैवाग्निदेवत्यत्वसिद्धेरयुक्तमाशङ्क्योपपादयति—**तत्राहेति ।** अष्टाकपालस्य पौर्णमासीसम्बन्धविध्यर्थमुपलक्षणार्थमाग्नेय इति शब्दो वाचको-ऽस्येति व्युत्पत्त्याग्नेयशब्दोक्तस्याग्नेयत्वस्यानूद्यमानात्वात्पौर्णमासीगतस्याष्टाकपालस्य नाग्निदेवत्यत्वसिद्धिरित्यर्थः । सिद्ध्यर्थमिति पाठे तूपलक्षणभूताग्निसम्बन्धसिद्ध्यर्थमिति

व्याख्येयम् । अथेति भाष्येणोपलक्षणार्थत्ववद्विधानार्थतामप्याग्नेयशब्दस्याशङ्क्य स वक्तव्य इत्यनेन वैश्वदेवशब्दवत्त्वात्सकृदुच्चरितस्याग्नेयादि शब्दस्य विध्यनुवादत्वासम्भवेन परिहृतम् । तद्व्याचष्टे—**युगपदिति** । कल्पयिष्याम इति भाष्येणाष्टाकपालस्य पौर्णमासी-यागान्वये विहिते, देवतां विना द्रव्यस्य यागान्वयायोगाद्देवताकाङ्क्षायामुपलक्षणत्वेन बुद्धिस्थस्याग्नेर्देवतात्वकल्पनामाशङ्क्य, नासतीत्यनेन यस्य वाचकं शब्दमुद्दिश्य, स्मृत्वा वा हविस्त्यक्ष्यामीति सङ्कल्पः क्रियते । सा देवता भवतीति विधिशब्दाधिकरणवक्ष्यमाण-लक्षणेन त्यज्यमानद्रव्यसम्बन्धापेक्षप्रवृत्तित्वात्मकसम्बन्धिशब्दत्वाद्देवताशब्दस्य गुर्वादिशब्द-स्याध्यापनादिक्रियाजन्याध्याप्याद्यवच्छिन्नाध्यापयित्रादिगतातिशयवाचित्वावगतिवत्त्यागोद्दे-शक्रियाजन्यद्रव्यावच्छिन्नाग्न्यादिगतातिशयवाचित्वावगतेर्विधानं च विनाग्न्यादेर्द्रव्यत्यागो-द्देश्यत्वप्रमाणाभावेनोद्देशक्रियाजन्यातिशयभाक्त्वायोगान्नाग्न्युद्देशेन द्रव्यत्यागविधि विनाग्ने-र्देवतात्वसिद्धिरित्युक्तम् ।

'तदर्थो यादृशो यत्र देवतात्वेन चोदितः ।
मनागपि ततोऽन्यत्वे देवतेति न गम्यते ॥'

इति स्तुतशस्त्राधिकरणवार्त्तिके व्याख्यातम् । इतीतिकरणेन सूचितम् ।

एवं तर्हि योऽष्टाकपालतयान्यत्राग्नेयो विहितः, सः पौर्णमास्यां भवतीत्यन्यतः सिद्धं देवताया द्रव्यान्वयमनूद्य कर्मान्वयमात्रविधानादवाक्यभेदो भविष्यतीत्याशङ्क्य, कर्मविधिं विना न कथं चिद्वाक्यभेदपरिहारः सम्भवतीति दर्शयितुमाह—**अनेनैवेति** ।

'नियोगेन विकल्पेन द्वे वा सह समुच्चिते ।
सम्बन्धः समुदायो वा विशिष्टावेकयेतरे ॥'

इत्यनेन न्यायेन बहुप्रकारावचनव्यक्तीराशङ्क्य, देवतानुपलक्षितद्रव्यमात्रविधौ, द्रव्यानुपलक्षितदेवतामात्रविधौ वान्यतरपदानर्थक्यापत्तेर्यथा देवतोपलक्षितद्रव्यस्यैव विद्व-द्वाक्यविहितकर्मान्वयविधौ विधिं विना देवतानवगतेरुपलक्षणार्थत्वेनोपचरितस्याग्नेय-शब्दस्याविधित्वकल्पने, सकृदुच्चरितविध्यनुवादत्वायोगेनोच्चारणवृत्तिलक्षणो वाक्यभेदः तथा द्रव्योपलक्षिताया देवताया एवं विधौ द्रव्यस्यापि विना कर्मान्वयासिद्धेरुपलक्षणार्थस्या-ष्टाकपालशब्दस्य विधित्वकल्पनेऽपि द्रव्यं वा देवता वा विधीयत इत्यस्मिन्पक्षे विकल्पे-नान्यतरस्योपलक्षणार्थस्य विधित्वकल्पनं वाक्यभेदः । द्रव्यं देवता चेति समुच्चयपक्षे स्पष्टो वाक्यभेदः । द्रव्यदेवतासम्बन्धसमुदाययोर्विधौ सम्बन्धो हि विधीयमानः सम्बन्धिनं तावदाक्षिपेद्धात्वर्थे पुनः स विधातव्यः । एवं सम्बन्धी अन्यथासम्बन्धस्यैवं सम्बन्धी शेषः स्यान्न क्रियाया इत्याघाराग्निहोत्राधिकरणवक्ष्यमाणन्यायेन द्रव्यदेवतयोरपि विध्यापत्ते-र्वाक्यभेदः । अन्यतरविशिष्टान्यतरविधावपि द्रव्यदेवतयोर्भिन्नकारकत्वात्कारकयोश्चा-न्योन्यविशेषणविशेष्यभावाभावेनैककारकविशिष्टकारकान्तरविध्ययोगादेकस्वरूपविशिष्टान्तर-स्वरूपविध्यभ्युपगमेचान्योन्यविशेषणत्वप्रसङ्गाद्धात्वर्थे पुनः स विधातव्य सम्बन्धीत्यनेन न्यायेन क्रियाङ्गत्वसिद्ध्यर्थं विशेषणस्यापि विध्यापत्तेर्वाक्यभेदः प्रपञ्चयितव्य इत्यर्थः ।

पौर्णमासीग्रहणस्योपलक्षणार्थत्वेनामवास्याया अनुवादेनापि द्रव्यदेवताविधानस्य निरस्तत्वात्किं तद्वाग्नेयादिवाक्ये विधीयतइत्याशङ्कायां तस्मादित्यन्तभाष्यं व्याचष्टे—**तेनेति**। विद्वद्वाक्यविहित एव कर्मणि द्रव्यदेवतासम्बन्धो विधीयतामित्याशङ्कानिरासार्थं स एष इति भाष्यं व्याचष्टे—**न चेति**। यजतिस्तु द्रव्यफलभोक्तृसंयोगादि(२-३-१४)त्यनेनैव न्यायेन योगं विना द्रव्यदेवतान्वयायोगाद्यागापेक्षायां वाक्यान्तरप्राप्ते यागे द्रव्यदेवतान्वयविधौ सम्बन्धौ विधीयमान इत्याघाराग्निहोत्राधिकरणवार्त्तिकोक्तन्यायेन द्रव्यदेवतयोरपि विध्यापत्तेर्वाक्यभेदप्रसङ्गादस्मिन्नेव वाक्ये द्रव्यदेवताविशिष्टयागविधानात्स एव **यागो** भवतीत्यपरोक्षवाचिनैषशब्देन वाक्यान्तरविहितात्परोक्षाद्यागाद्भेदः सूचित इत्याशयः।

एवं तर्ह्याग्नेयादिवाक्यविहितं यागान्तरमेव विद्वद्वाक्यविहितयोर्यागयोः पौर्णमास्यमावास्याशब्दोक्तयोरङ्गत्वेन विधीयमानं रूपं भविष्यतीत्याशङ्कानिरासार्थं तेनेत्यादिभाष्यं व्याचष्टे—**कर्मान्तरत्वे चेति**। आग्नेयादिवाक्यस्थयोः पौर्णमास्यमावास्याशब्दयोः श्रुत्या कालार्थत्वप्रतीतेर्लक्षणाहेत्वभावाच्चायुक्तमत्याग्नेयादिवाक्यविहितानां यागानां विद्वद्वाक्यविहितयागाङ्गत्वं प्रौढ्याऽभ्युपेत्य यागस्य यागान्तरव्यवच्छिन्नरूपयागप्रत्यायकत्वायोगात् रूपत्वाभावो भाष्यकृतोक्त इत्यवयवव्याख्यया सूचितम्। श्रुत इति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**इतीति**। पूर्वपक्षसूत्रस्थश्रुतिसंयोगशब्दव्याख्यानार्थं तथा न लक्षणाशब्दो भविष्यतीति भाष्येणार्थादुक्तं विद्वद्वाक्यस्थयोः पौर्णमास्यमावास्याशब्दयोराग्नेयादियागसमुदायपरत्वे लाक्षणिकं दोषं यत्त्वितिभाष्येणानुभाष्य, तत्परिहारार्थं नैष इति भाष्यं व्याचष्टे—**अष्टश्चेति**। एकवचनान्वयाय समुदायलक्षणा श्रुत्यर्थान्वयायोगादगत्याश्रयणीयेत्यर्थः। कालवाचिभ्यां पौर्णमास्यमावास्याशब्दाभ्यां यागलक्षणा त्वत्पक्षेनापि तुल्येति सूचनायादिशब्दः।

यत्तु स्वयं श्रुतिशब्दव्याख्यानार्थं प्रत्यक्षश्रुतश्च यजिर्न द्रव्यदेवतासम्बन्धाक्लेशेनानुमातव्यो भविष्यतीत्युक्तम्। तत्परिहरति—**किं चेति**। भावनैकविषयत्वाद्विधेर्द्रव्यदेवतान्वयं विदधताग्नेयादिवाक्ये तत्तदवच्छिन्नाया भावनाया एव विधेयत्वादव्यापारस्य च व्यापारान्वयं विना भावनावच्छेदकत्वायोगादपुंव्यापारत्वेन च भवत्युक्तस्य व्यापारस्य पुम्प्रयत्नापरपर्यायभावनावच्छेदकत्वायोगाद्भवत्युक्तक्रियातोऽन्यक्रियायोगाभावे वाक्यासमासेरसमासस्य चार्थाभावेनाऽर्थद्वारवाक्यान्तरान्वयायोगान्न वाक्यान्तरे प्रत्यक्षश्रुतोऽपि च यजिराग्नेयादिवाक्येऽन्वीयतइत्यर्थः। श्लोकं व्याचष्टे—**अष्टाकपाल इति**।

यत्तु स्वयं पूर्वपक्षसूत्रस्थगुणशब्दव्याख्यानार्थं समुदायानुवादत्वाच्च विधित्वं गुणवत्तरमित्युक्तं तत्परिहर्तुमाह—**अनुमिते चेति**। प्रकृतप्रत्यभिज्ञानाद्यच्छब्दोपबन्धेन वाऽनुवादसरूपत्वादनुवादतैवेह गुणवत्तरेत्याशयः। ननु सत्यपि यच्छब्दोपबन्धे यदाग्नेयोऽष्टाकपाल इत्यादिवद्विधिशक्त्याशङ्क्याह—**क्रियेति**। न वलोप इत्यत्र यच्छब्दस्य विधिशक्तिप्रतिबन्धकनिरासात्कथं विद्वद्वाक्ययोरनुवादसरूपता। यादृशी क्रिया तां कुर्यादिति क्रियारूपानुवादेऽपि कर्तव्यत्वाननुवादत्वेन क्रियासमानाधिकरणस्य यच्छब्दस्य विधिशक्त्य-

प्रतिबन्धकत्वेऽपि कर्तृसमानाधिकरणं कर्त्तृव्यत्वानुवादित्वाद्विधिशक्ति प्रतिबध्नातीत्याशयः। वृद्धवाक्येनैतदेव द्रढयति—**तथा चेति**। रुजेर्नाशापरपर्यायभङ्गवाचित्वान्न नाशयेदित्यर्थः ॥६॥

भा० प्र०—पूर्वपक्षी ने कहा है कि "यदाग्नेयः अष्टाकपालः" इस वाक्यान्तर से द्रव्यदेवतारूप गुण का विधान होने से "य एवं विद्वान्" यह विद्वद् वाक्य अनुवाद नहीं है। वरन् स्वतन्त्र कर्म का ही विधायक है। इस आपत्ति के उत्तर में सिद्धान्ती का कहना है कि "**चोदना वा**" "यदाग्नेयः", "अष्टाकपालः" इत्यादि श्रुतिवाक्य में कर्म चोदना अर्थात् अनुपदिष्ट कर्म का विधान किया जाता है। किन्तु "यत् आग्नेयः" इत्यादि वाक्य गुणविधि नहीं है। क्योंकि "गुणानां युगपत् शास्त्रात्" कारण एक साथ अनेक गुणों का शास्त्र अर्थात् प्राप्ति होती है। जो कर्म अन्य वचन से विहित है, उसमें अन्य वचन से एक साथ अनेक गुणों का विधान नहीं हो सकता है। क्योंकि एक साथ अनेक गुणों का विधान मानने पर वाक्यभेद की आपत्ति होगी, जिस स्थल में अप्राप्त कर्म वचन के द्वारा विहित होता एवं अनेक गुणविशिष्ट एक भावना ही विहित होती है। इसी प्रकार विशेषण विधान के बिना विशिष्ट की विधि उपपन्न नहीं होने से द्रव्यगुण आदि अनेक विशेषण रहने पर भी एक ही प्रयत्न में अर्थापत्ति के अधीन उनकी विधि सिद्ध होती है। किन्तु प्रत्येक गुण के विधान के लिए वाक्य की आवृत्ति नहीं करनी पड़ती है, इसलिए अप्राप्त कर्म में अनेक गुणों का विधान दोषावह नहीं है, इस प्रसङ्ग में तन्त्रवार्तिक में कहा गया है कि "अप्राप्ते तु विधीयन्ते बहवोऽप्येक यत्नतः।" अन्य पक्ष में यदि प्राप्त कर्म में अनेक गुणों का विधान किया जाता है अर्थात् जिस स्थल में प्रधान कर्म वचनान्तर से प्राप्त और अन्य वचन के द्वारा उसमें गुणों का विधान किया जाता है तो अनेक गुणों का विधान नहीं हो सकता है। क्योंकि उन स्थलों में भावना का विधान नहीं होता है, क्योंकि वह पूर्व में ही अन्य वचन से विहित होती है, ऐसी स्थिति में गुण का ही विधान होता है। केवल गुण का ही विधान होने से वहाँ विशिष्ट विधि नहीं है। विशिष्ट विधि न होने से विशेषण आदि की अर्थापत्ति के बल से ही विधि होगी—किन्तु यह भी नहीं हो सकती है, अतः एक-एक गुण के विधान के लिए एक-एक वाक्य की कल्पना करनी पड़ेगी और ऐसी स्थिति में वाक्यभेद अपरिहार्य होगा। कारण, एक ही विधायक वाक्य श्रुत होता है। ऐसी स्थिति में सभी गुण परस्पर विशिष्ट होकर विहित होंगे—यह भी नहीं कह सकते हैं। कारण, गुण किसी एक प्रधान का ही विशेषण होता है किन्तु गुणसमूह परस्पर विशिष्ट नहीं हो सकते हैं। इस विषय को "गुणानां च परार्थत्वात् असम्बद्धः समत्वात्" ( ३।१।२२ ) के द्वारा कहा जायेगा। इसलिए वाक्यभेद होने से प्राप्त कर्म में अनेक गुणों का विधान नहीं हो सकता है, वरन् भिन्न-भिन्न वाक्य से एक-एक गुण का उपदेश करना होगा। इसीलिए सूत्र मे कहा गया है—"चोदिते हि तदर्थत्वात् तस्य तस्य उपदिश्येत"। आचार्य भट्टपाद ने भी कहा है—

"प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः", अतः "यदाग्नेयः" इत्यादि वाक्य से जो अग्नि देवता एवं अष्टाकपाल पुरोडाश द्रव्य इन दो गुणों का विधान होता है—यह कहना युक्तियुक्त नहीं है। इसीलिए याग का रूप जो द्रव्य एवं देवता उनके न रहने पर इस स्थल में विद्वद् वाक्यबोधित पौर्णमासी एवं अमावस्या नामक कर्मों का विधान नहीं हो सकता है।

कुतुहल वृत्तिकार ने कहा है कि "य एवं विद्वान् वाक्यश्रुतं यजेत" इसमें प्रत्ययांश भावना की पुनः-पुनः आवृत्ति कर अग्नि आदि देवता और अष्टाकपाल आदि पुरोडाश को कहना होगा, किससे याग सम्पन्न किया जाय ? अग्नि देवता से याग सिद्ध करें। अष्टाकपाल पुरोडाश से सिद्ध करें, अग्निषोमीय देवता से सिद्ध करें, एकादशकपाल से सिद्ध करें, इत्यादि रूप से कहा जायेगा। एक बार उपदिष्ट भावना की पुनः-पुनः आवृत्ति ठीक नहीं है।

इस सूत्र का विवरण युधिष्ठिर मीमांसक ने कहा है—"चोदना" कर्मोत्पत्ति विधि, "वा" = पूर्वपक्ष निराश के लिए, "गुणानां युगपच्छास्त्रात्" = गुणों का युगपत् शास्त्र = शासन अर्थात् उपदेश होने से अर्थात् एक वचन से अनेक गुणों का होने से, "हि" = क्योंकि "चोदिते" = पूर्व उपदिष्ट अर्थात् प्राप्त कर्म में, "तदर्थत्वात्" गुणसमूह तदर्थ अर्थात् प्रधान के लिए होने से "तस्य तस्य" = प्रत्येक गुण का विषय, "उपदिश्येत" = भिन्न-भिन्न वाक्य से उपदिष्ट होता, "आग्नेयः अष्टाकपालः" इत्यादि वाक्य में गुण का उपदेश नहीं किया गया है, किन्तु यह अपूर्व विधि है = कर्मोत्पत्ति विधि है, क्योंकि अनेक गुण एक साथ उपदिष्ट होते हैं, यदि गुणविधि रहती तो प्रत्येक गुण का विषय भिन्न-भिन्न विधि के द्वारा उपदिष्ट रहता। यह पूर्व आपत्ति का समाधान ॥ ६ ॥

## व्यपदेशश्च तद्वत् ॥ ७ ॥

**शा० भा०—'उग्राणि ह वा एतानि हवींषि अमावास्यायां संश्रियन्ते, आग्नेयं प्रथमम्। ऐन्द्रे उत्तरे' इति समुच्चयं दर्शयति। आग्नेयादीनां गुणत्वे विकल्पः स्यात्। तत्राऽऽग्नेयं प्रथमम्, ऐन्द्रे उत्तरे द्वे इति व्यपदेशो नावकल्पेन। विकल्पे संभारपौर्वापर्यानुपपत्तिरिति ॥ ७ ॥**

त० वा०— एकेष्टिर्ह्यमावास्या सांनाय्यौषधयोस्ततः।
विकल्पे सति संभारपौर्वापर्यं कुतो भवेत् ॥

कर्मभेदे हि भिन्नविषयत्वात्सांनाय्यपुरोडाशसमुच्चये सति संश्रियन्त इति समस्तसंभरणं प्रथमोत्तराभिधानं चावकल्पते, नान्यथा। प्रथमपक्षे च चतुर्थमप्यपरमस्तीत्युत्तराणीति स्यात् नोत्तरे इति ॥ ७ ॥

न्या० सु०—भाष्यकारीयव्यपदेशशब्दस्य पौर्वापर्यविषयतया व्याख्यानं द्वितीयपूर्वपक्षनिरासार्थम्, सम्भवविषयत्वोपलक्षणार्थं चेत्याह—**एकेष्टिरिति** । यद्येको यागोऽमावास्यायामिति विग्रहेण द्वितीयपूर्वपक्षनिरासार्थतोक्ता । संहत्य युगद्भावो-धारणं निष्पादनं पौर्वापर्यं चेति द्वन्द्वैकवद्भावः । यागैक्येऽपि हविर्भेदादुभयोपपत्तिमाशङ्क्य—**सान्नाय्येऽप्युक्तम्** । यागैक्ये सत्याग्नेयस्यैन्द्रस्य सान्नाय्यस्य दध्नः पयसो वा विकल्पः स्यादित्यर्थः । व्यतिरेकमुखेन श्लोकं व्याचष्टे—**कर्मेति** । आद्यपूर्वपक्षे पौर्वापर्यविवक्षायां देवतान्वयाविवक्षयेन्द्रत्वविशेषणाविवक्षां मत्वा व्याख्याविभावार्थं स्वयमुत्तरइति । द्विवचनविषयत्वेन व्यपदेशशब्दं व्याचष्टे—**प्रथमेति** । पूर्वपक्षद्वयेऽपि सर्वेषां समप्राधान्येनाग्नेयादेः प्राधान्यलक्षणसाधकतमत्वरूपतैक्ष्ण्यशब्दवाच्योग्रत्वाभावादुग्रत्वविषयतयापि व्यपदेशव्याख्यानं च शब्दात्सूचितम् ॥ ७ ॥

भा० प्र०—आग्नेय आदि वाक्य में गुणविधि सम्भव नहीं है, इस प्रसङ्ग में अन्य कारण प्रदर्शन किया जा रहा है "उग्रादि ह वा एतानि हवींषि, अमावस्यायां सम्भ्रियन्ते, आग्नेयं प्रथमम्, ऐन्द्रे उत्तरे" ( निश्चय ही ये उग्र हवियाँ अमावस्या कर्म में समाहृत होती हैं, जो प्रथम आग्नेय हवि है और जो उत्तर दो ऐन्द्र हवियाँ हैं ) इस श्रुति वाक्य में आग्नेय आदि को ( तीन को प्रधान कहा गया है, ऐसी स्थिति में इन विधियों को गुणविधि मानने पर इस प्रत्यक्ष श्रुति से बोधित प्रधानता का बोध होगा । आग्नेय आदि विधियाँ यदि गुणविधि होंगी तो इनमें विकल्प मानना पड़ेगा । विकल्प मानने पर एक पक्ष में इनकी अप्राप्ति होगी । इस श्रुति में "आग्नेयं प्रथमम्", "ऐन्द्रे उत्तरे द्वे" इस रूप में पौर्वापर्य का व्यपदेश = व्यवहार किया गया है, अतः पक्ष में इसकी आपत्ति नहीं मानी जा सकती है, क्योंकि, विकल्प मानने पर पक्ष में अप्राप्त होने से पूर्व एवं परभाव से इनका अनुष्ठान नहीं किया जा सकता है, इसलिए आग्नेयादि वाक्यों में गुणविधि नहीं मानी जा सकती है ।

"तद्वत्" = प्रधान के समान, "व्यपदेशः च" = उल्लेख किया गया है । आग्नेयादि गुणविधि नहीं हो सकती है, क्योंकि शास्त्र में आग्नेय आदि तीन विधियों का प्रधान के समान उल्लेख किया गया है ॥ ७ ॥

**लिङ्गदर्शनाच्च ॥ ८ ॥**

**शा० भा०—लिङ्गं च दृश्यते, चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम् इति ॥ ८ ॥**

**इति तृतीये पौर्णमास्यधिकरणम् ॥ ३ ॥**

त० वा०—कर्मान्तरपक्षेऽभ्यधिकत्वाद्, गुणविधिपक्षे न्यूनत्वात्त्रयोदश-चतुर्दशत्वानुवादविरोधः। कुतः ?

पौर्णमास्यां यदा तिस्रो द्वे दर्शविषये यदा।
प्रधानाहुतयः सन्ति तदा संख्योपपद्यते॥

तस्मात्समुदायानुवादाविति सिद्धम्।

आह च—

'अरूपत्वाद्विधेयस्य प्रकृते शब्दशक्तितः॥
तत्रैव रूपलाभाच्च समुदायानुवादता॥ इति।८॥

( इति तृतीयं पौर्णमास्यधिकरणम्॥ ३॥ )

न्या० सु०—पूर्वपक्षद्वयेऽपि श्रुत्यर्थाभ्यां लिङ्गानुपपत्तिमाह—**कर्मान्तरेति**। पञ्च प्रयाजा। द्वावाज्यभागौ, स्विष्टकृत्त्रयोऽनुयाजा इत्याहवनीये यजिचोदिताङ्गाहुतीनामेका-दशसंख्यत्वाद्विद्वाक्ययोः कर्मान्तरविधित्वपक्षे पौर्णमस्यां प्रधानाहुतिचतुष्ट्वात्पञ्चदशसंख्या-पत्तेः अमावास्यायां च प्रधानाहुतित्रित्वाच्चतुर्दशसंख्यापत्तेराधिक्यात् तयोरेव कर्मत्रिधित्व-पक्षे प्रधानाहुत्यैक्येनोभयत्र द्वादशसंख्यापत्तेन्यूनत्वाच्छ्रुतसंख्यानुपपत्तिरित्यर्थः।

कर्मैक्यपक्षे न्यायेनाग्नेयादिवाक्यविहितानां प्रधानाहुतीनां विकल्पापत्तावपि, 'दशभिः क्रीणातीति'वच्चतुर्दशत्रयोदशवचनपर्यालोचनया समुच्चयावगमाद्याज्यानुवाक्याक्रमाच्चा-हुतिपौर्वापर्योपपत्तेर्लिङ्गव्यपदेशोपपत्तिमाशङ्क्य, सिद्धान्तपक्षेणानुवादतयाप्युपपन्नस्य चतुर्द-शत्रयोदशवचनस्य विधित्वकल्पनायोगात्, विधित्वे च प्राधान्याहुतीनामैवैतत्संख्यत्वापत्तेर-भ्यासलक्षणापत्तेश्च नैतत्समर्थनं युक्तमिति अनुवादशब्देन सूचितम्।

ननु सिद्धान्तेऽप्यसोमयाजिनः पौर्णमास्याम् अग्नीषोमीयाभावात्, अमावास्यायां च सान्नाय्याभावाल्लिङ्गानुपपत्तिरित्याशयेन पृष्टोत्तरमाह—**कुत इति**। सोमयाजिविषयत्वा-त्पौर्णमास्याम्, अमावास्यायां तु सोमयाजिनः सान्नाय्यद्वयस्य सम्प्रतिपन्नदेवतात्वेनैका-हुतित्वात् असोमयाजिनोऽप्यैन्द्राग्नस्य पुरोडाशस्य सान्नाय्यद्वयस्थाने विधानेनैककर्म्यादेवै-काहुतित्वावगतेः सदाप्रधानाहुतिद्वित्वाल्लिङ्गोपपत्तिरित्याशयः। अधिकरणार्थमुपसंहरति—**तस्मादिति**। सुखग्रहणार्थं वृद्धानामधिकरणार्थसंग्रहश्लोकं पठति—**आहेति**॥ ८॥

इति तृतीयं पौर्णमास्यधिकरणम्॥

भा० प्र०—आग्नेय आदि वाक्यों से गुण का विधान मानने पर विकल्प की प्राप्ति होगी, किन्तु ''चतुर्दशपौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावस्यायामिति'' अर्थात् पाँच प्रयाज, तीन अनुयाज, तीन प्रधान याग, (एक आग्नेय पुरोडाश, एक अग्नीषोमीय उपांशु याग, एक अग्नीषोमीय पुरोडाश) दो आज्य याग, एक स्विष्टकृत् इस प्रकार

चौदह । तेरह अमावस्या में पाँच प्रयाज, तीन अनुयाज, दो आज्य भाग, एक स्विष्टकृत् प्रधान याग की दो आहुतियों क्योंकि ऐन्द्रदधि और ऐन्द्र पय का एक देवता होने से एक एवम् आग्नेय पुरोडाश इस प्रकार तेरह आहुतियाँ होती हैं । इस श्रुति वाक्य में द्रव्य आहुतियों का समुच्चय ही उपदिष्ट है । अतः, आग्नेय आदि वाक्यों में गुण का विधान नहीं हो सकता है । इसलिए "य एवं विद्वान्" इत्यादि वाक्यों में अपूर्व अर्थात् अप्राप्त कर्म का विधान नहीं हो सकता है, वरन् ये पूर्व में उपदिष्ट कर्म का ही अनुवाद है ।

"लिङ्गदर्शनात्" = समुच्चयबोधक लिङ्ग अर्थात् ज्ञापक वचनदृष्ट होने से "च" = और सातवाँ पौर्णमासी अधिकरण अर्थात् आधारादि एवं आग्नेयादि का अङ्गाङ्गिभाव अधिक ॥ ८ ॥

### अथ चतुर्थमुपांशुयाजाधिकरणम्

## [४] पौर्णमासीवदुपांशुयाजः स्यात् ॥ ९ ॥ पू०

**शा० भा०—जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति इति । 'विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । तत्र[1] संदेहः उपांशुयाजमन्तरा यजति इति किं विष्ण्वादिगुणकानां प्रकृतानां यागानां समुदायस्य वाचकः, अथ वाऽपूर्वस्य यागस्येति । तत उच्यते पौर्णमासीवदुपांशुयाजो भवितुमर्हति । कुतः ? नामसंबन्धात् । नामसंबन्धो[2] हि विशिष्टो यागः श्रूयते उपांशुयाजसंज्ञकः । न[3] च द्रव्यदेवते रूपम् । प्रकृताश्चोपांशुगुणका याग विद्यन्ते[4] । तस्मात्समुदायशब्द इति ।**

**ननूपांशुगुणकं यागान्तरमुपांशुत्वेन रूपेण रूपवद्विधीयते । नैवंजातीयकः शब्द उपांशुविशिष्टं यागं शक्नोति वक्तुम् । उपांशुयाग इति हि तस्य वक्ता । चजोः कुघिण्ण्यतोरिति कुत्वेन भवितव्यम् । अव्युत्पन्नः पुनरुपांशुयाजशब्दः[5] । तस्मान्न रूपवद्यागान्तरम् । अथापि नामसंयुक्तं यजतिसामान्यमेव[6], तथाऽप्यनुपदिष्टदेवताद्रव्यरूपं[7] न यागान्तरं प्रतिपद्येमहि ।**

**नन्वेवं सति प्रकृतानामप्यवाचकः प्राप्नोति । मा भूदुपांशुयाजशब्दो, यजतिशब्दो भविष्यति । तथा सत्युपांशुयाजशब्देऽप्यनुवादत्वादनाज्ञस्येऽपि न दोषः ॥ ९ ॥ पूर्वपक्षः ॥**

---

१. ब. अत्र ।　२. ब. नामसंबंधविशिष्टो ।　३. ब. नास्य द्रव्यदेवतेरूपं ।
४. ब. विज्ञायंते ।　५. ब. अव्युत्पन्नस्तूपांशु ।　६. ब. यजिसामान्य ।
७. ब. दिष्टेद्रव्यदेवतेरूपाभावात् ।

भा० वि०—यद्यपि सापवादाभ्यासचिन्तायास्समाप्तत्वात् सङ्ख्यात्तनिमित्त-कर्मभेदः चिन्तनीयः तथापि समुदायानुवादापवादात्मकेनाधिकरणत्रयेणापवादापवादः क्रियत इति साधारणी सङ्गतिः। विष्णवादिवाक्यैः यागविधावुपांशुयाजत्रयापत्त्या पौर्णमास्यां षोडषाहुत्यापत्तेः लिङ्गदर्शनस्याप्याक्षेपेण पूर्वपक्षोत्थानादुपांशुयाजचिन्ताया वैशेषिक्यावान्तरसङ्गतिर्द्रष्टव्या। विषयमुदाहरति—**जामित्वाय इति**। प्रकृतकर्मसम्भवासम्भवाभ्यां संशयमाह—**तत्रेति**। सूत्रं व्याकुर्वन् पूर्वपक्षमाह—तव इत्यादिना पौर्णमासीवद्भावस्समुदायानुवादत्वम्।

ननु विष्णवादिवाक्येषु विधेयत्वयोग्यस्वप्रधानभूतयागाश्रुतेः प्रकृतयागाभावात् पौर्णमासीवद्भावो न युक्त इति शङ्कते—**कुत इति**। तद्वद्भावमुपपादयति—**नामसम्बन्धादिति**। एतद्विवृणोति—**नामेति**। यागत्रासामान्यस्य प्रसिद्धतयाननुष्ठेयतया चाविधेयस्य नामसम्बन्धायोगात् यागविशेषस्यारूपतयाननुष्ठेयस्य तत्सम्बन्धासम्भवात् विष्णवादियागत्रसमुदाय एवोपांशुयाजनामविशिष्टोऽनूद्यते इत्यर्थः। अरूपत्वाच्चान्तरावाक्यस्य रूपवत्तया विष्णवादिवाक्यविहितयागसमुदायत्वमेव युक्तमित्याह—**नात्रेति**। विष्णवादिवाक्ये तस्य विधिवाचित्वादुपसर्जनत्वेनापि यागस्यार्थान्निष्कृष्य विधेयत्वोपपत्त्या प्रकृतकर्मसद्भावाच्च तदनुवादत्वमित्याह—**प्रकृत श्चेति**। हेतुत्रयफलमाह—**तस्मादिति**। न च यागत्रयस्योपांशुत्वाद्येकधर्मयोगादेव समुदायीकरणे शक्येऽपि अनुवादस्यानर्थक्यमिति शक्यम्, अन्यथोपांशुपौर्णमास्या यजन्निति कालवाक्येऽग्नीषोमसङ्कीर्तनात् तद्दैवत्यस्यैव कालान्वये सति विद्वद्वाक्येनानुवादात् फलान्वयेन प्राधान्यावगतेः वैष्णवप्राजापत्ययोरङ्गत्वं स्यात् तत्परिहाराय समुदितानां कालान्वयसिद्धये समुदायानुवादोऽर्थवानिति भावः।

यदुक्तं नात्र द्रव्यदेवतं रूपं तत्र चोदयति—**नन्विति**। न हि द्रव्यदेवतं रूपमिति रूपलक्षणं किन्तु येन यागान्तराद्व्यवच्छिन्नो यागो निरुप्यते तदिति, शक्यते चायमुपांशुत्वेन यागान्तराद्व्यवच्छिन्नः प्रत्येतुमिति तद्वान् विधीयत इत्यर्थः। अवयवार्थाङ्गीकरणेन गुणविधित्वे सति नैवायमुपांशुयाजशब्दः साधुः स्यादिति परिहरति—**नैवं जातीयक इति**। कुत इत्यत आह—**उपांश्विति** तदेव कुतस्तत्राह—**घञोरिति**। घञो ञित्वात्तदन्तत्वाच्च याजशब्दस्येति **भावः**।

ननु कात्यायनोपांशुयाजादिशब्दानां कुत्वनिषेधान्तकुत्वापत्तिरित्याशङ्क्य सूत्रविरोधायाव्युत्पन्ननामधेयविषयतया तद्वचनं व्याख्येयमिति मन्वानः परिहरति—**अव्युत्पन्ने इति**। यस्मान्नोपांशुयाजशब्दः उपांशुत्वगुणविशिष्टयागविषयः तस्मान्न तेन रूपेण रूपवत्तेति निगमयति—**तस्मादिति**। भवतु तर्ह्यव्युत्पन्न एवायमुपांशुयाजशब्दः। न च विशेषासिद्ध्या नामत्वासम्भवः यागमात्रनामत्वो-

पपत्तिरिति चोदयति—**अथापीति**। इतरव्यावृत्तिप्रयोजनस्य नाम्नो विशेषविषयत्वेन सामान्यविषयत्वासम्भवेऽपि अभ्युपेत्य परामितासिद्ध्या परिहरति—**तथापीति**। ननु त्वयाप्युपांशुयाजशब्दस्य नामधेयत्वाभ्युपगमादवश्यं तत्प्रख्यन्यायेन विष्ण्वादिवाक्यविहितगुणयोगमाश्रित्य प्रसिद्धिरवाप्तव्या, ततश्च तुल्यो ऽसाधुत्वप्रसङ्गस्तवापीति चोदयति—**नन्विति परिहरति—माभूदिति**। अवाचक इत्यस्यात्समासान्निष्कृष्टस्य वाचक इत्यस्यानुषङ्गः तथाप्युपांशुयाजशब्दोऽनर्थकस्तत्राह—**तथा सतीति**।

ननु तस्यापि वाचकत्वेऽसाधुत्वमुक्तं तत्राह—**अनुवादत्वादिति**। विधौ ह्यत्यन्तमाञ्जस्येन कार्यं नानुवादे तस्य यजि प्राप्तानुवादरूपस्य किंचित्सादृश्यानुगमेऽप्यविरोधादिति भावः ॥ ९ ॥

त० वा०—इदानीमधिकरणत्रयेण समुदायानुवादापवादः क्रियते। तत्र 'उपांशुयाजमन्तरा यजति' इति तावत्सकलः प्रागुक्तो न्यायोऽस्ति। कुतः ?

यागान्विष्ण्वादिसंयुक्तैर्विहितान्रूपवत्तया।
अरूपमन्तरायुक्तमगत्यैवावलम्बते ॥

तेषु तावत् तव्यप्रत्ययेनैकान्तिको विधिः। तत्र यदीदं यागान्तरं कल्प्यते, ततः प्राप्तं रूपाज्ञानम्, अदृष्टान्तरकल्पनं च। किं च।

अजामिकरणं चैषु प्रत्येकमवगम्यते।
जामिदोषेण चोपांशुयाजोपन्यसनं कृतम् ॥

यथोपक्रममुपसंहाराज्जाम्युपन्यासस्याजामितायाश्चैकविषयत्वादेत एव विधयो गम्यन्ते। न ह्यन्तरालवाक्ये तादृगर्थवादो, विधिर्वा स्पष्टो दृश्यते। समुदायानुवादप्रयोजनं च कथं नाम 'उपांशु पौर्णमास्यां यजन्'[1] इत्यत्रैकीकृतानां कालसंबन्धे सति सर्वेषां प्राधान्यं स्यात्।

**ननूपांशुगुणकमिति**—कथं द्रव्यदेवताव्यतिरिक्तं रूपत्वेनोच्यते। नैष दोषः। सर्वथा येन यागान्तराद्व्यवच्छिन्नो यागो निरूप्यते, तदेव रूपम्। शक्यते चोपांशुत्वेनायं व्यवच्छिन्नरूपः प्रत्येतुमिति। अत आह—**नैवंजातीयकः शब्दः शक्नोतीति**। यदि ह्यवयवार्थभेदेन गुणविधिरयं कल्प्येत, ततो याजशब्दस्य घञन्तत्वादकृतकुत्वस्यासाधुत्वं स्यात्। अव्युत्पन्ननामधेयत्वे तु नैष प्रसङ्गः। नन्वेवं सतीति—नामधेयत्वेऽप्यवश्यं 'तत्प्रख्यं चान्यशास्त्रम्' इत्येवं 'विष्णुरुपांशु यष्टव्यः' इत्यादिभिर्विहितं तद्गुणयोगमाश्रित्य प्रसिद्धिरवाप्तव्या। ततश्च तुल्यो दोष इति।

---

१. क. यजन्तीत्यत्र।

तत्परिहरति—**मा भूदुपांशुयाजशब्दः, यजतिशब्दो भविष्यतीति।** विधौ ह्यत्यन्तमाञ्जस्येन कार्यम्। नामधेये तु [1]यजिप्राप्तानुवादरूपेण प्रवर्तमाने किंचित्सारूप्यानुगमेऽप्यविरोधः ॥ ९ ॥

अथ चतुर्थमुपांशुयाजाधिकरणम् ॥ ४ ॥

न्या० सु०—ननु सापवादाभ्यासचिन्तायाः समाप्तत्वात्संख्यादिनिमित्ते कर्मभेद चिन्त्ये, मध्ये चितान्तराण्यसङ्गतानीत्याशङ्क्य साधारणी सङ्गतिमाह—**इदानीमिति।** उपांशुयाजाघाराग्निहोत्रपशुसोमवाक्यानां वाक्यान्तरविहितसमुदायानुवादत्वे सत्युपांशुयाजादिकर्मभेदः विधित्वे त्वभेद इति भेदाभेदफलत्वाल्लक्षणसङ्गतिः सूचिता। अधिकरणत्रयमध्येऽप्यस्य प्राथम्यसिद्ध्यै वैशेषिकसङ्गतिसूचनपूर्वकं सूत्रं व्याचक्षाणः पूर्वपक्षमाह—**तत्रेति।** विष्ण्वादिवाक्यैर्यागविधावुपांशुयाजत्रयापत्त्या पौर्णमास्यां षोडशाहुत्त्यापत्तेर्लिङ्गदर्शनाक्षेपेण पूर्वपक्षोत्थानादुपांशुयाजचिन्ताया वैशेषिक्यनन्तरसङ्गतिस्तावच्छब्देन सूचिता। विष्ण्वादिवाक्येषु विधेयत्वयोग्यस्वप्रधानभूतयागाश्रुतेः प्रकृतयागाभावात्पौर्णमासीवद्भावायोगं कुत इति भाष्येणाशङ्क्य नामसम्बन्धादित्यादिना तद्भावोपपादनं कृतं तत्रोपांशुयाजशब्दस्य नामधेयतायाः स्वानभिमतत्वात्संज्ञावच्छेदनिमित्तमुपेक्ष्य, अरूपत्वकृतयागसद्भावनिमित्तं तद्भावं व्याचष्टे—**कुत इति।** श्लोकं व्याचष्टे—**एतेषु तावदिति।** तव्यस्य विधिवाचित्वादुपसर्जनत्वेनापि निर्दिष्टस्य यागस्यार्थान्निष्कृष्य विधेयत्वोपपत्तिसूचनार्थं तव्येत्युक्तम्। यजतीत्यस्य वर्तमानापदेशत्वान्नैकान्तिकविधितेति तावच्छब्देन सूचितम्। विष्ण्वादिवाक्यानां विधित्वाभावेऽप्यन्तरालवाक्ये रूपाज्ञानसाम्यात्ततो न केवलं रूपाज्ञानं किं त्वदृष्टान्तरकल्पनं च प्राप्तमिति योज्यम्।

तैत्तरीयकशाखाया'मुपांशुयाजमन्तरा यजत्यजामित्वाये'त्यन्तरालवाक्येऽप्यजामिकरणार्थ वाददर्शनाद्भाष्यकृतोपेक्षितमपि हेत्वन्तरमुदाहृते वाक्ये तादृगर्थवादादर्शनात्स्वयमाह—**किं चेति।** विष्ण्वादिवाक्येषु प्रत्येकमजामिकरणावगतेस्तदेकविषयत्वेन जामिदोषोक्तेरपि विष्ण्वादिवाक्यविषयस्तुत्यर्थत्वावगमात्तस्याश्चोपक्रमस्थत्वात्तदनुरोधेनोपसंहारस्थास्यापांशुत्वविशिष्टयागविधेरपि विष्ण्वादिवाक्यप्रतिपाद्यताऽवसीयत इत्याशयः। जामिदोषोपक्रमुपन्यसनमित्यर्थः। सहार्थतृतीययोक्तः। श्लोकं व्याचष्टे—**यथोपक्रममिति।** जाम्युपन्यासाजामित्वयोरेकविषयत्वेनाजामित्वस्य विष्ण्वादिवाक्योक्तयागविषयत्वाज्जामित्वस्याप्युपक्रमस्थस्य। सन्दिग्धेषु वाक्यशेषादि१–४–त्यनेन न्यायेन तद्विषयत्वावगतेः, रुपसंहारस्थस्य विधेरुपक्रमानुसारित्वस्य न्याय्यत्वादिति, विष्ण्वादियुक्ता एव विधय इत्यर्थः। जामिदोषेण सहोपन्यसनमिति योजनसूचनायोपन्यासशब्दः। समुदायानुवादव्यवहितस्यापि जामित्वस्याऽनुवादेन स्तुतेरनपेक्षितत्वेनाऽसम्बन्धाद्।

---

१. क० यथाप्राप्तानु।

यस्य येनार्थसम्बन्धो दूरस्थस्यापि तेन सः ।
अर्थतो ह्यसमर्थानामानर्थक्यमकारणम् ॥

इत्यनेन न्यायेनाऽपेक्षावशाद्विधिवाक्यान्वयोऽनेकैरपि चैकस्य तन्त्रेणान्वयो न विरुद्ध इत्याशयः । यागत्रयस्योपांशुत्वाद्येकधर्मयोगात्समुदायाकरणे शक्येऽप्यनुवादानर्थक्यमाशङ्कयाह—**समुदायेति** । अन्यथा कालवाक्येऽग्नीषोमकीर्त्तनात् तद्देवत्यस्योपांशुयाजस्य कालान्वये सति विद्वद्वाक्यस्थेन पौर्णमासीशब्देनानुवादात्फलवाक्यस्थेन पूर्णमासशब्देन फलान्वयात्प्राधान्यावगतेर्वैष्णवप्राजापत्ययोरङ्गत्वं स्यादित्याशयः ।

नन्वित्याशङ्काभाष्यमाक्षिपति—**नन्विति** । समाधत्ते—**नैष इति** । नैवं जातीयक इति परिहारभाष्यमवतारयन् व्याचष्टे—**अत इति** । नाम्नोऽप्युपांशुत्वगुणकयागत्वनिमित्तत्वादकृतकत्वस्य तदवाचकत्वापत्तेः पक्षद्वयसाम्येनादोषत्वशङ्कानिरासार्थमव्युत्पन्नस्त्विति भाष्यं व्याचष्टे—**व्युत्पन्नेति** । नन्वित्याशङ्काभाष्याशयं व्याचष्टे—**नन्विति** । माभूदिति परिहारभाष्याशयमवतारणपूर्वं व्याचष्टे—**तदिति** ॥ ९ ॥

भा० प्र०—पूर्व अधिकरण में समुदायानुवाद प्रदर्शित किया गया है । प्रस्तुत प्रसङ्ग में क्रमशः तीन अधिकरणों में उसी का अपवाद प्रदर्शित किया जा रहा है । श्रुतियों में दर्शपूर्णमास प्रकरण में "जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति"। विष्णुरुपांशु यष्टव्याऽवजामित्वाय" ( तै० सं० २।६।६ ) इस यज्ञ में जामि अर्थात् आलस्यकर होता हैं, क्योंकि आगे-आगे निरन्तर क्रम में दो पुरोडाश साध्यकर्म किया जाता है, इसलिए इनमें उपांशुयजि करे । अजामित्व के लिए अर्थात् अनालस्य के लिए अर्थात् जामित्व = आलस्य न होने के लिए उपांशु अर्थात् एकान्त में विष्णु का याग = पूजा करनी चाहिए । अजामिता के लिए प्रजापति का याग करना चाहिए, एवम् अजामिता के लिए अग्नीषोमदेवता का याग करना चाहिए । इस प्रकार एक वाक्य पठित है । यहाँ भी क्या यजति के द्वारा एक बार एवं यष्टव्य के द्वारा तीन बार इस प्रकार चार बार धात्वर्थ का अभ्यास होकर चार भिन्न-भिन्न कर्म होंगे या इस स्थल में "उपांशु याजमन्तरा यजति" इस वाक्य से बोधित "उपांशुयाज" नाम का कर्म पूर्व अधिकरण के पौर्णमासी नाम के कर्म के समान अनुवाद माना जायगा एवं "विष्णुरुपांशुयष्टव्यः" इत्यादि तीन वाक्यों से तीन यागों का विधान होगा—यह संशय होता है ।

इस प्रसङ्ग में पूर्वपक्षियों का कहना है कि "पौर्णमासीवत् उपांशुयाजः स्यात्", अर्थात् "उपांशुयाजमन्तरा यजति" इस वाक्य का उपांशु याग स्वतन्त्र कर्म नहीं है । वरन् पूर्व अधिकरण में कथित "पौर्णमासी" पद जिस प्रकार अनुवाद है, यह भी उसी प्रकार अनुवाद है । उपांशुयाज यह शब्द नामधेय के समान ही उल्लिखित है, अतः यह अनुवाद है । इसी प्रकार पौर्णमासी शब्द जिस प्रकार अनुवाद है, यह भी उसी तरह परवर्ती "विष्णुरुपांशु यष्टव्यः" इत्यादि तीन वाक्यों में जो तीन याग विहित होते हैं, उन समुदाय

का ही अनुवाद है। क्योंकि, इस स्थल में द्रव्य एवं देवता का निर्देश न होने से याग रूप रहित होगा। ''उपांशु याजमन्तरा यजति'' इस वाक्य में विधायक आख्यान भी नहीं है। क्योंकि, ''यजति'' पद लट्लकार का होने से उसके द्वारा विधि बोधित नहीं हो सकती है। अन्य पक्ष में परवर्ती तीन वाक्यों में ''यष्टव्य'' इस पद में तव्य प्रत्यय रहने से उसका विधायकत्व अवगत होता है, कारण, लिङ् लकार के समान तव्य प्रत्यय भी विधि का बोधक होता है।

''पौर्णमासीवत्'' = पौर्णमासी के समान अर्थात् पूर्व अधिकरण में कथित विधिवाक्य का ''पौर्णमासीम्'' इस पद के समान ''उपांशुयाजः स्यात्'' = उपांशुयाज होगा अर्थात् ''उपांशु याजन्मन्तरा यजति'' इस श्रुतिवाक्य में जो उपांशुयाज नामक याग प्रतीत होता है, वह भी पौर्णमासी याग के समान होगा अर्थात् पौर्णमासी याग के समान वह भी स्वतन्त्र याग नहीं है, वरन् अनुवाद मात्र है। पूर्वपक्ष ॥ ९ ॥

## चोदना वाऽप्रकृतत्वात् ॥ १०॥ सि०

**शा० भा०—कर्मान्तरस्य वाचकः स्यात्, 'उपांशुयाजं यजती'ति। कुतः? प्रकृतानां यागानामभावात्। न चेत्प्रकृता विद्यन्ते, कस्य समुदायं वक्ष्यति। नन्विदानीमेवोक्तं विष्णवादिगुणकाः प्रकृता यागा विद्यन्त इति। न विद्यन्ते। न हि ते विधयो 'विष्णुरुपांशु यष्टव्यः' इत्येवमादयः। अर्थवादा हि ते। कथम्? अस्मिन्वाक्ये विध्यन्तरस्य भावात्। 'उपांशुयाजमन्तरा यजति' इत्येतदेतस्मिन् वाक्ये विधीयते। यदीमेऽपि विधीयेरन् भिद्यते[1] तर्हि वाक्यम्। अपि च यागस्य, विष्णवादीनां च संबन्धोऽत्र[2] गम्यते[3]। न च यागस्य विधानम्।**

**ननु च 'उपांशुयाजमन्तरा यजति' इत्यत्राप्यन्तरालसंबन्धोऽवगम्यते। बाढम्। स तु विधीयते उपांशुत्वादिसंबद्धः। एकं हीदं वाक्यं नानेकं[4] विधातुमर्हति। कथम्? 'जामि वा एतद्यज्ञस्य क्रियते' इत्येवमुपक्रममेतद्वाक्यमजामित्वायेत्येवमन्तम्। तस्य मध्ये समाम्नातं विष्णवादिवाक्यम्। तेन संबध्यमानं न वाक्यान्तरं भवितुमर्हति। तस्माद् 'विष्णुरुपांशु यष्टव्य' इत्येवमादयो न विधयः, किं तर्हि? अर्थवादाः। कः पुनरर्थवादः? आग्नेयाग्नीषोमीययोर्निरन्तरं क्रियमाणयोर्जामितादोष उक्तः। तं भिषजितुं 'उपांशुयाजमन्तरा यजति' इति विहितम्। कथं तेन भिषज्ययते[5]। तस्मिन् क्रियमाणे ज्ञायत एव यथा विष्णुर्यष्टव्यः प्रजापतिरग्नीषोमौ वेति। ततश्च[2] व्यवधानादजामिताऽवगम्यत एव। तेनाजामितार्थवादं[6] वक्ष्यामीति विष्णवादिसंबन्धोऽनूद्यते, त्वन्तरालसंबन्धस्यान्यत्प्रयोजनमस्त्यतो विधानात्।**

---

१. ब. भिद्येत वाक्यं।	२. ब. यत्र।	३. ब. वाक्येन न यागस्य।
४. ब. भिषज्यते।	५. ब. तत्र।	६. ब. जामितामर्थवादं।

**कथं विष्णवादयो यष्टव्या इत्यवगम्यते ? यष्टव्यानयष्टव्यान्वा विष्णवादीनुपांशुयाजामिष्टवाय संकीर्तयतीति गम्यते ।**

**तत्र केचित्तावदाहुः-प्राप्ता एवेति । कुतः ? शाखान्तरे विधानादिति । यद्यप्यप्राप्तिः तथाऽप्युपांशुत्वसामान्यात्प्रजापतिदेवता विष्णुश्चेत्यनुवादावेव । उपांशुधर्माणौ हि विष्णुप्रजापती । तस्माद्यत्किंचित्प्राजापत्यं यज्ञे, क्रियते इत्येवमादिसंकीर्तनान्मन्त्रसमाम्नाच्च विष्णुमप्राप्तमपि प्राप्तमिव वदेत् । अग्नीषोमयोस्तु विधायकमुदाह्रियत एव 'तावब्रूतामग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्यां यजन्' इति । तस्माद्यागान्तरम् ॥ १० ॥ सि० ॥**

भा० वि०—सिद्धान्तमाह—**चोदना वेति**। तत्र चोदनापदं सोपस्कारं व्याचष्टे—**कर्मान्तरस्येति**। यदिदमाग्नेयादिभ्यः कर्मान्तरं चोद्यते तस्येत्यर्थः। न समुदायस्यानुवादक इति परपक्षव्यावृत्त्यर्थः सूत्रे वा शब्दः। प्रश्नपूर्वकं हेतुभागं व्याचष्टे—**कुत इत्यादिना**। विष्णवादिवाक्यानामर्थवादत्वेनाविधायकत्वादितिभावः।

ननु प्रकृतानां यागानामभावेऽपि किमिति समुदायं नानुवदिष्यति तत्राह—**न चेदिति**। कस्येति जातावेकवचनम्, परस्त्वविदितपराभिप्रायः स्वोक्तं स्मारयति—**नन्विति**। सिद्धान्ती स्वाभिसन्धिमाविष्कुर्वन् परिहरति—**न विद्यत इति**। तेषामविधित्वे हेतुरर्थवादाहित इति।

ननु विधिवाचितव्यप्रत्ययान्तानामेतेषां कथमर्थवादवादतेति पृच्छति—**कथमिति**। उत्तरम्—**अस्मिन्निति**। तव्यप्रत्ययस्त्वर्हार्थतयापि संभवतीति भावः। किं तद्विध्यन्तरम् ? तदाह—**उपांश्विति**। जामि वा इत्यादिना पुरोडाशयोरन्तराले कस्मिंश्चिदनुष्ठीयमानेदोषसङ्कीर्तनादन्तरालकालयोगिनो विधेयत्वप्रतीतेरित्यर्थः।

नन्वेतेऽपि विष्णवादिदेवतायोगात् विधिप्रत्ययसद्भावाच्च विधीयेरन् इति नेत्याह—**यदीति**। विष्णवादिवाक्यानामविधायकत्वे हेत्वन्तरमाह—**अपि चेति**। विष्णवादिदेवतायागान्वये श्रुत्या विहिते यागोऽर्थाद्देवतां प्रत्युपसर्जनभूतो विधेयः स्यात् तच्चान्तरालवाक्येन श्रौते स्वप्रधाने च यागे विधेये सम्भवत्ययुक्तमित्यर्थः।

नन्वन्तरालवाक्ये स्वप्रधानयागप्रतीतावप्यन्तरालसम्बन्धस्य विधेयत्वप्रतीतेः कथं यागविधित्वमिति चोदयति—**नन्विति**। परिहरति—**बाढमिति**। तुशब्दोऽवधारणे, आदिशब्दोऽन्तरालविषयः सत्युभयत्र गुणसम्बन्धे स एवोपांशुत्वान्तरालसम्बन्धस्तद्विशिष्टो यागो विधीयते न तु देवताविशिष्ट इत्यर्थः। नचैवमुपांशुयाजशब्दस्यासाधुत्वदोषः परपक्षेऽपि समानत्वात्, अनुवादत्वस्य चासम-

त्पक्षेऽपि यजिविहितयागानुवादत्वेन सम्भवादिति द्रष्टव्यम्, देवताविशिष्टयागविधानासम्भवे हेतुरेकं हीति। विष्ण्वादिवाक्यानां विधायकत्वे वाक्यभेददोषपरिहारायान्तरा वाक्यमेव विधायकमित्यर्थः।

नन्वेकवाक्यत्वमेव कथमिति पृच्छति—**कथमिति**। जामितादोषोपक्रमस्य तत्प्रतिसमाधानोपसंहारस्य चैकरूपत्वादिति परिहरति—**जामिवा इति**। उपरिधारणवाक्यवैषम्यप्रदर्शनाय तेन च संबाध्यमान इत्युक्तम्। एकवाक्यत्वफलमाह—**तस्मादिति**।

ननु विधौ प्रशंसावादोऽर्थवाद इति। नचान्तरालवाक्यविहितं कर्म अनेन प्रशस्यते, तत्कथमर्थवाद इति पृच्छति—**कः पुनरिति**। प्रशंसार्थत्वं दर्शयितुं विधिप्रवृत्तिप्रकारं तावदाह—**आग्नेयाग्नीषोमयोरिति**। जामितादोषापनयनसमर्थं कर्म विधातुमन्तरावाक्यमित्यर्थः। कथं तस्य दोषापनयनसामर्थ्यमिति पृच्छति—**कथमिति**। प्रसिद्धिं हि तत्र देवता वैचित्र्यमिति वदता विष्ण्वादिवाक्येनोत्तरमाह—**तस्मिन्निति**। यथाशब्दयोगात् तथा ज्ञायत एवेति योज्यम्।

ननु देवतावैचित्र्यप्रसिद्धावपि कथं दोषापनयनसामर्थ्यं कर्मणोऽत आह—**तत्र व्यवधानादिति**। सदृशकर्मनैरन्तर्यकृतो हि दोषः स विसदृशदेवताककर्मव्यवधानात् अपनीयत एव। उपलक्षणं चैतत्। यद्ध्रुवायामाज्यमिति अनिर्दिष्टद्रव्यकस्य यागस्य ध्रौवाज्यविधानात् द्रव्यसादृश्यनिमित्तस्य दोषस्येहाशङ्कितत्वाच्च तेन देवतावैचित्र्यकरत्वद्वारेणाजामिकरत्वरूपप्राशस्त्यपरत्वाद्युक्तार्थवादतेति निगमयति—**तेनेति**। एवं विष्ण्वादिवाक्यानामविधायकत्वादन्तरावाक्यमेव विधायकमित्युक्त्वा तस्य विधायकत्वे हेत्वन्तरमाह—**नत्विति**। तुशब्दश्चार्थे। मासमग्निहोत्रं जुहोतीत्यादाविवानुपादेयान्तरालकालान्वयादपि कर्मविधायकतयैव युक्तेत्यर्थः।

ननु विष्ण्वादिवाक्यानामर्थवादत्वे देवताविधित्वाभावात् विष्ण्वादेरप्राप्तत्वेनानुवादानुपपत्तिरिति शङ्कते—**कथं पुनरिति**। अयष्टव्यत्वेऽपि प्राधान्यगुणयोगादुपांशुयाजस्स्तुत्यर्थः यष्टव्यत्वकीर्तनमुपपन्नमिति परिहरति—**यष्टव्यानीति**।

ननु विष्ण्वादिवाक्यानां देवताविधित्वाभावे तद्विधायकाभावा द्विधिं विना च देवताया यागाक्षेपमात्रेणालाभाद्देवताराहित्येनोपांशुयागविधिरवसीयेदेदित्याशङ्क्याह—**अत्र केचिदिति**। प्रापकं प्रश्नपूर्वकमाह—**कुत इति**। विष्णुर्वास्याद्धौत्राम्नानादित्यादिना मान्त्रवर्णिकत्वस्य वक्ष्यमाणत्वात्तदेव हौत्रमृग्वेदाख्यं शाखान्तरमित्युच्यते। याज्यानुवाक्यायुगलमन्त्रवर्णेषु विधानात् प्राप्ता इत्यर्थः। प्रत्यक्षविधिप्राप्त्यभावेऽपि उपांशुत्वधर्मसाम्येन लिङ्गेन कल्प्यो या मान्त्रवर्णिको विधिः तेन प्राप्ता इत्याह—**यद्यपीति**। कथं विष्णुप्रजापत्योः उपांशुत्वधर्मकत्वमत

आह—**उपांशुत्वेति**। एवमादिशब्देन प्रजापत्यवाक्यसदृशं वैष्णववाक्यं गृहीतं शाखान्तरभाष्योक्तमेव मान्त्रवर्णिकत्वं विष्णुर्वा स्यादिति सूत्रवक्ष्यमाणद्योतनार्थं पुनराह—**मन्त्राम्नानाच्चेति**। वदेत् अर्थवाद इति शेषः। एवं विष्णुप्रजापत्योः मन्त्रवर्णप्राप्तौ लिङ्गमुक्त्वाग्नीषोमयोरपि मान्त्रवर्णिकत्वे लिङ्गमाह—**अग्नीषोमयोस्त्विति**। तावन्नूतामित्यादि कालविधायके वाक्येऽग्नीषोमयोरनुवादात् मान्त्रवर्णिकी प्राप्तिरनुमीयत इत्यर्थः। सूत्रार्थमुपसंहरति—**तस्मादिति**॥ १०॥

त० वा०—कर्मचोदना 'उपांशुयाजं यजति' इति, न समुदायानुवादः। कुतः?

प्रकृतानामसद्भावाद्गम्यते नानुवादता।
यागो विष्ण्वादिसंयुक्तैर्न हि वाक्यैर्विधीयते॥

यथा वैश्वानरवाक्ये द्वादशकपालेनोपक्रमोपसंहाराभ्यामष्टत्वादय एकवाक्यगमापद्यमानाः पृथग्विधित्वं न प्रतिपन्नाः। तथाऽत्रापि 'जामि वा एतदिति' विध्युपक्रमे दोषसंकीर्तनं कस्यचिद्विधीयमानस्याऽऽकाङ्क्षितं तदपनयनद्वारेण स्तुत्यर्थमिति गम्यते। जामिता च पुरोडाशयोरन्तराले कस्मिंश्चिदविधीयमाने भवतीति, यदन्तरालकालसंयोगेन विधास्यते, तस्याजामिकरत्वं प्रशंसेत्यवधारणादुपांशुयाजमन्तरेत्यस्य स्तुत्यर्हत्वेन ज्ञानाद्विष्ण्वादियुक्तेषु च तदपेक्षिताजामिरूपस्तुतिसंकीर्तनादनपेक्षितं विधित्वमनादृत्य स्तुत्यर्थता गृह्यते। न हि विष्ण्वादिसंयुक्तेष्वन्तरालकालसंयोगोऽस्ति, येनोपक्रमोक्तया जामितया तद्विधिः तद्गतं वा जामित्वं स्तावकतयाऽपेक्षितं संबध्येत। अन्तरालकालसंयुक्तस्य पुनर्विस्पष्टजाम्युपक्रमवाक्यविधानार्हत्वात्, तद्वशेन चेतरेषां स्तावकत्वोपयोगे सति नानेकादृष्टकल्पनानुबन्धिविध्यभ्युपगमो युक्तः।

किं च। विष्ण्वादियागसंबन्धे कृते यागोऽर्थतो भवेत्।
उपसर्जनभूतस्तु श्रौते चैतन्न युज्यते॥

कर्मोत्पन्नस्तव्यप्रत्ययो यागोपसर्जनविष्ण्वादिप्रधानः तत्रार्थान्निकृष्य यागकर्तव्यता कल्पनीया। न चासौ युज्यते, अन्तरा यजति इत्यनेन प्रत्यक्षप्रधानोपदेशोपपत्तेः। तत्र यद्यपि तावद्विष्ण्वादियुक्तानि पृथग्वाक्यानि भवेयुः। तथाऽपि तस्मिन्नेवाऽन्तरालविहिते यागे देवता विदध्युः, न कर्मान्तराणि[1]। न च देवताऽप्येवंविधैः सम्यगभिधीयते। न ह्येते संप्रदानम्, देवतात्वं वा वदन्ति, किं तर्हि? कर्मोपसर्जनद्रव्यवचनास्तत्र कर्मशक्तिं प्रधानीकृत्य द्वितीयातुल्यार्थता तावल्लब्धव्या। न च तावता देवतात्वं सिध्यति। त्यागार्थत्वाद्धि यजतेः परमार्थतस्त्यज्य-

१. क० कर्माणि।

मानं द्रव्यमेव कर्म भवति । ततस्तेनाऽऽप्यमाना देवता पश्चात्कर्म संपद्यते । तत्र द्विकर्मलक्षणप्रसक्तौ 'समाप्तिः शब्दार्थः ६-२-१' इत्यनेन न्यायेन पूर्वं त्यज्यमानकर्मतिरोधानेन परपूज्यमानकर्माविर्भावादेककर्मत्वावधारणेन संप्रदानत्वशक्तिमभिभूयैव निर्देशो भवति "विष्णुं यजति" "विष्णुर्यष्टव्य" इति । न तु तत्र देवतात्वमभिधीयते । किं तर्हि ? कर्मत्वान्यथानुपपत्तिलक्षणयैव गम्यमानं निश्चीयते ।

ननु च यजतेर्देवतापूजात्मकत्वात्, तदीयकर्मदेवताशब्दौ पर्यायावेवेति न वक्तव्यं लक्षणया गम्यत इति । नैष साक्षाद्देवतापूजावचनः । कुतः ?

स्तुतेरपि हि पूजात्वाज्ज्ञायते यजिवाच्यता ।
न वाऽतिथिवदेतस्याः पूज्यतेति च वक्ष्यते ॥

न हि देवताः स्तुवानस्तत्पूजाव्यापृतोऽपि सन्कश्चिद्यजत इत्युच्यते । रूपासमवायित्वाच्च नातिथिवद्देवता पूज्यमानतां प्रतिपद्यते । न च यजिस्तत्पर इति नवमे वक्ष्यते । दानेन वोपाध्यायादिः पूज्यमानोऽपि न कर्म संपद्यमानो दृष्टः । एवं तर्हि तद्वदेव नित्यं देवतायाः संप्रदानत्वेनैव निर्देशः प्रसज्यते । नैतस्यास्तादृशं संप्रदानत्वमप्यस्ति, प्रतिग्रहीतृत्वाभावात् ।

अपि च दृश्यते हि क्वचित्संप्रदाननिर्देशः, योऽदाभ्यं गृहीत्वा, सोमाय यजते इति । सर्वथेयं देवता न वाऽन्यैः संप्रदानैस्तुल्या । न च कर्मभिरसाधारणैर्नैव त्वात्मनो केवलं यजिविषयं कर्म, संप्रदानं वा भवति । तच्चैतस्याः क्रियासाधनत्वात्सप्तमकारकासंभवाच्चैवं कल्प्यते । न हि देवताशब्दवाच्येनाऽऽत्मना धात्वर्थसंबन्धित्वं प्रतिपद्यते । तेन तदुद्देशत्यागांशेन प्रतिग्रहीतृव्यापाराद्विनाऽपि कथंचित्साकल्यकल्पनया संप्रदानं निर्दिश्यते ।

यद्वोद्देशगतमाप्यमानत्वं त्यागांशेऽप्यध्यस्य सकलस्य यजेः कर्मत्वेनोच्यते । तेन तत्र संप्रदानत्वनिर्देशः तत्रैतदुक्तं भवति परस्वत्वमिवाऽऽपादयितुं तदुद्देशेन द्रव्यं त्यजेदिति । यत्रापि कर्मनिर्देशः तत्रैषोऽर्थः—त्यक्तुं द्रव्यं देवतामुद्दिशेदिति । तथा च केवलोद्देशव्यापारेषु त्यक्तृत्वरहितेषु यजेति प्रैषो भवति । तदेतदुभयमपि लाक्षणिकम् । तत्रापि संप्रदानत्वं त्यागांशाव्यभिचारित्वादसमस्तात्मकत्वाद् दूषितमपि सत्प्रत्यासन्नतरं देवतात्वस्य । कर्मत्वं तु क्रियान्तरेष्वपि व्याप्तमानत्वसंभवात्सव्याभिचारमिति विप्रकृष्टतरं देवतात्वस्य । न हि तद्देवतात्ववत्सकलं यजिं प्रति कर्मेत्यवधार्यते । परमार्थतः पुनर्देवताशब्देन तद्धितशब्देन वा देवतात्वमभिधीयते, न कारकविभक्त्या कयाचित् । तथा च ।

देवतातद्धितोत्पादे न हि पाणिनिना तथा ।
इदमग्नय इत्येवं तेन क्रीतमिवोदितम् ॥

१. क० ग्रहीतृत्वा ।

ये हि विभक्तिवाच्या अर्था भवन्ति, तद्विभक्तिसमर्थेभ्य एव तेभ्यस्तद्धित-विधानं दृश्यते, तेन क्रीतम्, तस्मै हितम्, ततः आगतः, तस्यापत्यम्, तत्र भवः इति। न तु देवतायां तस्या इदम्, तामनेन यजतीति वा निर्देशो दृश्यते। कथं तर्हि, सोऽस्य देवता इति। तस्मान्नूनमनन्यवाच्योऽयमर्थ इति गम्यते। ततश्च स्थितमेतन्न 'विष्णुरुपांशु यष्टव्य' इत्यनेन देवताऽप्यभिधीयत इति। तत्र क्लेशेन तां कल्पयित्वा यजिभावना कल्पनीया। ततश्च वरमर्थवादत्वमेवाऽऽश्रितम्। 'अन्तरा यजती'ति तु यद्यप्यन्तरालसंबन्धाविधिपरत्वान्न स्वरूपविधानार्थमित्या-शङ्क्यते[1], तथाऽप्यनन्यगतित्वाद्विशिष्टविधानम्। न हि यथेतरेषामर्थवादत्वे-नार्थवत्ता, तथेह केन चित्प्रकारेण। ननु च समुदायीकरणेनार्थवत्तेत्युक्तम्। यथा नैतेनार्थवत्ता तथाऽन्यार्थदर्शनं व्याचक्षाणा वक्ष्यामः।

किं च।

अन्तरालेऽनुपादेये कर्म तत्र विधीयते।
तादृग्विपरिवृत्तिश्च नेत्युत्पत्तिरपीष्यते॥

यादृशी ह्याख्यातेन स्वप्रधाना पूर्वापरीभूता भावनाऽन्तरालमनुपादेयं प्रत्यु-पात्ता, न तादृशी विष्णुर्यष्टव्य इत्यादिभिरुपस्थाप्यत इति, नोत्पत्तिविधिकल्पना-भङ्गः। तत्र सत्यपीतरेषां कर्मविधित्वे[2] कर्मान्तरं स्यात्। न प्रकृतानुवाद इति मत्वाऽऽह—कर्मान्तरस्य वाचकः स्यादिति। देवतायाः पुनरुपादेयत्वात्कर्मोद्देशेन विधिः संभवतीति, नानुवादबुद्धिरपैति। कर्मविध्यभ्युपगमे तु सत्यपि प्रकृत-सद्भावे तद्रूपाणां प्रकृतानामभावादित्यभिप्रायः।

अथ वा यदिदमाग्नेयादिभ्यः कर्मान्तरं चोद्यते, तस्योपांशुयाजं यजतीत्ययं वाचकः स्यात्, नेतरेषाम्। तस्मादन्तरालानुपादेयत्ववशेनास्यैकान्तिके कर्मविधित्वे सतीतरैरर्थवादैरेव भवितव्यम्। धात्वर्थं चान्यत्र विदधत्प्रत्ययः संनिकृष्ट-वृत्तिर्भविष्यति। **स तु विधीयत उपांशुत्वादिसंबन्ध** इति—उपांशुयाजशब्दं गुणविधिं मन्यते। यत्त्ववाचकत्वमस्मिन्पक्षे कुत्वप्रसङ्गादिति। तत्रोच्यते। तुल्य-मेतत्त्वत्पक्षे। कुतः ?

वाच्यवाचकसंबन्ध इष्टः शब्दार्थयोः पुरा।
पश्चाद्विध्यनुवादत्वे स्यातां साधारणाश्रये॥

वाच्यवाचकत्वेऽवधारिते, पश्चाद्विधिविधेयत्वम्, अनूद्यानुवादकत्वं वा कल्प्यते। तत्रोभयोरपि वाच्यवाचकसंबन्धः साधारण इति, तद्गतौ गुणदोषावपि साधारणौ। तेन नैको बोधो भवति।

---

१. क. विधानार्थत्व। २. क० काममित्यधिकम्।

स्यादेतत्। अनुवादत्वमवाचकस्यापि कथंचिद् दृष्टं, न विधित्वमिति। तदुच्यते। ममापि हि—

यजिना विहिते यागे याज इत्यनुवादभाक्।
विधिसंबन्ध्युपांशुत्वं न वैतदसमञ्जसम्॥
न च तत्प्रख्यरूपेण नामैतदुपपद्यते।
विहितं न ह्युपांशुत्वं शास्त्रेणाऽन्येन केनचित्॥

न तावद्विष्ण्वादियुक्तेन विहितम्, अर्थवादत्वात्। न 'उपांशु पौर्णमास्याम्, इत्यनेन। कालविधिव्यापृतेनाऽनेकविध्यशक्तेः। तस्मादुत्पत्तिस्थेनैव विधीयते। तथा च सूत्रकारो वक्ष्यति—'गुणोपबन्धात्' इति। जामित्वापनयनं च सर्वप्रकारं द्रव्यतः स्वरतो देवतातश्च ज्ञायत एव। यथा विष्णुर्यष्टव्यप्रजापतिरग्नीषोमौ वेति यागे चोदितेऽवश्यंभाविन्यां देवतायामनियमप्रसक्तौ केचिद्विष्ण्वादयः प्राधान्यप्रसिद्धया वैचित्र्यप्रदर्शनार्थं संकीर्त्तिताः। तेन यद्यपि परमार्थेन न यष्टव्याः तथाऽपि स्तुतिपरत्वादुपादानं गुणवादेन कथंचिदुच्यते। शाखान्तरे विधानात्प्राप्ता इति अनुदाहरणादस्फुटमेवमभिधाय, न हि किंचिदसाध्यं स्यात्। न च तस्मिन्सति दशमे 'तद्वच्च देवतायां स्यात्' इत्यादि विचार्य 'विष्णुर्वा स्याद्धौत्राम्नानात्' इत्यादिना मान्त्रवर्णिकत्वं जैमिनिराश्रयिष्यति। यद्यप्यप्राप्तिरिति चेहापि स्वयमेवाऽऽशङ्का दर्शिता। यदप्युक्तमुपांशुधर्मत्वात्प्राप्तौ "तस्माद्यत्किंचित्प्राजापत्यम्" इति तदप्ययुक्तम्। वचनव्यक्तिविपर्यासात्। न ह्येवं वचनं यदुपांशु तत्प्राजापत्यमिति। किं तर्हि। यत्प्राजापत्यं तदुपांश्विति। तेन नोपांशुत्वेन प्राजापत्यता लभ्या। अग्नीषोमयोस्तु विधायकमुदाह्रियत एवेति। एतदपि चतुर्थीतद्धितमन्त्रवर्णात्मकत्वादविधायकम्। यदि हि 'तावग्नीषोमावब्रूतां ततोऽस्माकं किमिति हि विजानन्तो यजमाना न वयं देवतायां प्रवर्तिता इति कल्पयेयुः। कालविधिपरत्वाच्च न देवताऽप्यनेन शक्या विधातुम्। देवतापरत्वे वा कालविधिपरित्यागात्पौर्णमासीशब्देनापि नानूद्येतेति पूर्णमासशब्देनाग्रहणादसति प्रधानत्वेऽङ्गत्वप्रसङ्गः। सूत्रकारेण च दशमेऽमावास्यायामुपांशुयाजमनिच्छतैतदेव पौर्णमासीकालविधिपरत्वेनोपन्यस्तम्।

अत्र समाधिः। मान्त्रवर्णिको देवताविधिरिति स्थितम्। उपांशुयाजक्रमे हि वैष्णवप्राजापत्याग्नीषोमीयानि याज्यापुरोनुवाक्यायुगलान्याम्नायन्ते। तैश्च तुल्यार्थत्वाद्विकल्पमानैः वैकल्पिक्य एव देवताः प्राप्यन्ते। तदेव हौत्रं शाखान्तरमित्याह। आध्वर्यवेऽपि तु क्वचिदस्त्येव याज्यानुवाक्याम्नानं हौत्ररूपेणेति तदभिप्रायं वा शाखान्तरवचनम्। उपांशुधर्मत्वं चा[1]स्यैव द्योतनार्थम्। अन्या हि

1. क० वास्यैव।

देवताऽत्रानीयमानाऽऽत्मीयं धर्ममुच्चैष्ट्वं जह्यात्, परधर्ममुपांशुत्वं प्राप्नुयादिति विरुद्धम्। विष्णुप्रजापत्योस्तु प्रत्यासन्नधर्मकत्वादविरोधः। तथा, अग्नीषोमयोस्त्विति—विधायके देवताविध्यसंभवाद्यथा संभवग्रहणेन पौर्णमासीकालस्य विधायकेऽग्नीषोमानुवादः प्राप्तिमुपोद्बलयति॥ १०॥

न्या० सु०—सूत्रं व्याचष्टे—**कर्मेति**। विष्ण्वादिसंयुक्तानां भिन्नवाक्यत्वाभावेऽप्यवान्तरपदसङ्घविषयो वाक्यशब्दः। विष्ण्वादिवाक्यानामविधायकत्वं न हीत्यादि भिद्येत वाक्यमित्यन्तभाष्योक्त्या युक्त्योपपादयति—**यथेति**। तथात्रापि न पृथग्विधित्वप्रतिपत्तिरित्यध्याहारेण, नानेकादृष्टकल्पनानुबन्धिविध्यभ्युपगमो युक्त इति व्यवहितान्वयेन वा पूरणीयम्।

ननु 'वैश्वानरं द्वादशकपालं निर्वपेदित्युपक्रान्ताया वैश्वानरेष्टेर्यस्मिन्जातएतामिष्टिं निर्वपतीत्युपसंहारेणैकवाक्यत्वावगमाद् दृष्टत्वादियुक्तानां शब्दानां पृथग्विधित्वायोगोऽप्यत्र जामित्वोपक्रमादजामित्वोपसंहाराच्चैकवाक्यत्वानवगतेर्न तत्तुल्यतेत्याशङ्क्यैकं हीदं वाक्यमिति भाष्योपपादितमेकवाक्यत्वं प्रपञ्चयितुम्—**जामि वा इत्युक्तम्**। सोदर्यवाचिजामिशब्दलक्षितस्य सादृश्यस्य नैरन्तर्यानुष्ठाने सत्यालस्यापादकत्वेन दोषत्वात् तत्कीर्त्तनस्य च निषेधाश्रुतेर्निन्दापर्यवसायित्वायोगादाकाङ्क्षावशेनाजामित्वकरकर्मस्तुत्यर्थत्वावगमाज्जामित्वोपन्यासयोरेकवाक्यताऽवसीयतइत्याशयः।

ननु जामित्वाजामित्वोपन्यासयोरेकवाक्यत्वादसायेऽप्यजामित्वस्य विष्ण्वादिवाक्योक्तयागविषयत्वात्तदेकवाक्यतया जामित्वस्यापि तद्विषयत्वावगतेस्तस्य चोपक्रमस्थत्वात्तदनुसारेणोपसंहारस्थस्य विधेरपि तद्विषयतावसीयतइत्याशङ्क्य, कः पुनरित्यादिभाष्योक्तार्थवादस्यान्तरालवाक्योक्तयागविषयत्वाद्विधेरपि तद्विषयत्वमुपपादयितुम्—**जामिता चेत्युक्तम्**। पञ्चम्यन्तवैश्वानरवाक्यवदत्रापि वाक्ये विध्यैक्यावसायान्न पृथक् विधितेत्यध्याहारेण, नानेकेति व्यवहितान्वयेन वा पूरणीयम्। नन्वेवमपि विष्ण्वादिवाक्येषु तव्यप्रत्ययैनैकान्तिकविधित्वावगमात्पृथक्विधित्वापत्तिरित्याशङ्क्य तस्मिन्क्रियमाणइति भाष्योक्तं विधित्वानादरमुपपादयितुम्—**विष्ण्वादीत्युक्तम्**। न हीत्यनेन विधित्वानपेक्षोपपादिता। विष्ण्वादियुक्तगतस्याजामित्वस्य जामितयान्वये सति विष्ण्वादियुक्तविधेस्तथान्वयः स्यात् नत्वजामित्वस्य विष्ण्वादियुक्तगतत्वं सम्भवति। विष्ण्वादियुक्तानामन्तरालसंयोगाभावेन स्तुत्यनर्हत्वादित्याशयः। नन्वन्तरालशुक्तस्याप्यजामित्वान्वयाश्रुतेर्न विधानार्हतास्तीत्याशङ्क्य, तत्र व्यवधानादिति भाष्योक्तमन्तरालसंयोगेनैवाजामित्वान्वयावगमाज्जाम्युपक्रमेण वाक्येन विधानार्हत्वं विवरीतुम्—**अन्तरालेत्युक्तम्**।

विष्ण्वादिवाक्यानां यागाविधायकत्वमेवापि चेति भाष्योक्तेन युक्त्यन्तरेणोपपादयति—**किं चेति**। विष्ण्वादिवाक्यैर्यागविधौ सति विष्ण्वादिदेवताया यागान्वये श्रुतेन विधिना कृते यागोऽर्थाद्देवतां प्रत्युपसर्जनभूतो विधेयः स्यात् तच्चान्तरालवाक्येन श्रुते चकारात्स्व-

प्रधानभूते यागे विधेये सम्भवत्ययुक्तमित्यर्थः। अनेन चार्थाक्षेपाधीनत्वेनोपसर्जनभूतस्य देवतासंस्कारकत्वापत्तेरविनियुक्तायाश्च देवतायाः संस्कार्यत्वायोगाद्देवताविधिसापेक्षत्वेन यागविधेर्विप्रकृष्टत्वमभिप्रेत्य भाष्ये वाक्यशब्दः प्रयुक्त इति सूचितम्। श्लोकं व्याचष्टे—**कर्मोत्पन्नइति**। याग उपसर्जनं विष्ण्वादिः प्रधानं यस्मिन्निति बहुव्रीहिं विगृह्य यागोपसर्जनश्चासौ विष्ण्वादिप्रधानश्चेति कर्मधारयो विग्राह्यः प्रत्ययस्य प्रधानस्य च यागस्य कर्त्तव्यत्वोपदेशोपपत्तेरित्यर्थः। एवं सत्यपि विधित्वे देवताविध्यापत्तेर्यागविधित्वं नास्तीत्याह—**तत्रेति**। देवताविधितैव तह्यस्तु इत्याशङ्क्याह—**न चेति**। देवतान्वयानभिधायित्वात्तव्यप्रत्ययानां देवताविधायित्वासम्भवेऽभिहिते चतुर्थ्या देवतात्वानभिधायित्वेऽपि यथादेवताविधायित्वम्, तथा तव्यस्यापि भविष्यतीत्याशङ्क्य—**सम्प्रदानमित्युक्तम्**। त्यज्यमानद्रव्योद्देश्यत्वप्रतिग्रहीतृत्वसमुदायात्मकसम्प्रदानत्ववाचिनी चतुर्थी लक्षणया वाच्यैकदेशत्यज्यमानद्रव्योद्देश्यत्वात्मकं देवतात्वं वदतीत्याशयः। ननु कर्मत्ववाचिन्यःपि द्वितीयया विष्णुं यजतीत्यादौ देवताविधिदर्शनात्तद्वाचिनस्तव्यप्रत्ययस्यापि देवताविधायित्वं कस्मान्न स्यादित्याशङ्क्याह—**तत्रेति**। तव्यस्य द्वितीयावत्प्रधानभूतकर्मानभिधायित्वात्तत्तुल्यार्थतैव तावत् क्लेशलभ्या। न च तल्लाभमात्राद्देवतासिद्धिः देवतायाः कर्मत्वाभावादित्याशयः। कथं तर्हि देवतायास्तव्यद्वितीयाभ्यां निर्देश इत्याशङ्क्य निर्देशालम्बनमाह—**त्यागार्थत्वाद्धीति**। देवतोद्देशद्रव्यत्यागसमुदायवाचित्वाद्यजेस्तादृशस्य च कर्माभावाद् द्रव्यस्यापि पारमार्थिककर्मत्वाभावेऽपि देवतावच्छब्दमात्रोपकारित्वशङ्कानिवृत्तयेऽर्थरूपोपकारित्वप्रदर्शनार्थः परमार्थशब्दः। उद्देशविशिष्टत्यागवाचिनोऽपि यजेर्विशेषणांशानादरेण विशेष्यांशविवक्षया त्यागार्थत्वमभिप्रेत्य कर्म भवतीति ल्यब्लोपे पञ्चमी। नन्वेवं सति देवतायाः कथं कर्मतेत्याशङ्क्य देवतोद्देशेन द्रव्यत्यागोत्तरकालं देवतामुद्दिश्य त्यज्यमानेन द्रव्येण देवतायाः प्रतिग्रहीतृत्वाभावेऽपि प्रतिश्रवणेनेवाप्रतिगृह्णतोऽपि ब्राह्मणस्य स्वाम्यापादनेनाप्यमानत्वात्तप्ते पयसि दध्यानयतीत्यत्रानयतिकर्मणा दध्नेव व्याप्यमानस्य पयसो—**द्वितीयकर्मत्वं भवतीत्युक्तम्**। ननु देवताया द्रव्येणाप्यमानत्वस्य दध्नेव पयसः संस्कार्यत्वमात्रविवक्षायां द्विकर्मकलक्षणो धातुः प्रसज्येत गवेव तु ब्राह्मणस्य स्वाम्यविवक्षायां सम्प्रदानत्वापत्तेश्चतुर्थी स्यादित्याशङ्क्य—**तत्रेत्युक्तम्**।

प्रक्रमात्तु नियम्येतारम्भस्य क्रियानिमित्तत्वादि६–२–त्यत्र षष्ठाधिकरणसूत्रे प्रक्रान्तं कर्म वीतायामपि फलेच्छायां प्राप्ते वा फले, अवश्यं समापनीयमित्येतदुपपादनार्थं भाष्यकृतोपक्रमादारभ्य समाप्तिपर्यन्तस्य व्यापारसमूहस्याख्यातेन विधित्सितत्वात् श्रुत्या चारम्भसमाप्त्योर्विधौ गौरवापत्तेरारम्भमात्रविधौ च नियोगतः समाप्त्यसिद्धेर्यागादि समापयेदिति शास्त्रार्थ इति नायमारम्भसमाप्तिशब्दार्थः किं तर्हि समाप्तिरेव। समाप्त्या व्यर्थप्राप्तत्वादारम्भस्य तस्मात्परिसमाप्तिः शब्दार्थ इति भाष्येण वक्ष्यमाणत्वाद्देवतास्वाम्यापत्तेश्च देवतोद्देशविशिष्टद्रव्यत्यागोत्तरकालत्वेन समाप्तित्वात्तत्कर्ममात्राविर्भावेनैककर्मत्वावधारणात् द्विकर्मकधातुत्वप्रसक्तेर्देवतायाश्च प्रतिग्रहीतृत्वाभावेन सम्प्रदानत्वाभावाच्चचतुर्थ्यप्रसक्तेस्तव्यद्वितीयोपपत्तिरित्यर्थः।

न तु त्यज्यमानद्रव्याप्यमानस्य तव्यद्वितीयावाच्यत्वे तल्लक्षणत्वाद्देवतात्वमेव वाच्यं स्यादित्याशङ्क्याह—**नत्विति ।** त्यज्यमानद्रव्योद्देशकर्मत्वं देवतात्वं तच्चोद्देशांशस्य विशेषणत्वेन द्वितीयानन्वयान्न द्वितीययोच्यते, देवताप्तेस्त्वाहवनीयप्राप्तेर्जुहोत्यर्थत्ववत् यज्यर्थत्वाभावान्नान्तरीयकसिद्धावपि अशास्त्रीयत्वेन तत्कर्मत्वलक्षणमाप्यमानत्वं न देवतात्वमित्याशयः । कथं तर्हि द्वितीयानिर्देशे देवतात्वसिद्धिरित्याशङ्क्याह—**किं तर्हीति ।** देवतामुद्दिश्य त्यज्यमानेन द्रव्येणाप्यमानत्वलक्षणस्य कर्मत्वस्य त्यज्यमानद्रव्योद्देश्यत्वलक्षणाद्देवतात्वाविनानुपपत्तेस्तन्निमित्तया लक्षणया गम्यमानत्वाद्द्वितीयानिर्देशे देवतात्वनिश्चय इत्यर्थः ।

यजदेवपूजासङ्गतिकरणदानेष्विति स्मृतिबलेन पूजाकर्मत्वलक्षणं देवतात्वं द्वितीयावाच्यमित्याशङ्कते—**नन्विति ।** व्याकरणस्यार्थान्वाख्यानार्थत्वाभावेनाऽर्थवत्त्वे प्रामाण्याभावात्पुराणादौ च यज्ञानधिकारिणो भीष्मादेर्यष्टृत्वकीर्तनालम्बनानि पूजाप्रतिष्ठादानानि दर्शयितुमौपचारिकार्थान्वाख्यानोपपत्तेर्यजेः पूजावाचित्वाभावान्न तत्कर्मत्वं देवतात्वमित्याशयेन परिहरति—**नैष इति ।** एतदेव प्रश्नपूर्वकमुपपादयति—**कुत इति ।** श्लोकं व्याचष्टे—**न हीति ।**

अपि वा शब्दपूर्वत्वाद्यज्ञकर्मप्रधानं स्याद्, गुणत्वे देवताश्रुतिरित्यत्र नवमाधिकरणसूत्रे विग्रहाद्यभावेन रूपासमवायाद्देवतायाः पूज्यत्वं निरस्य, तिथौ तत्प्रधानत्वमभावः कर्मणि स्यात्तस्य प्रीतिप्रधानत्वादिति दृष्टान्तवैषम्याभिधानार्थं सूत्रे विग्रहादिसद्भावेऽपि यजेः पूजावाचित्वाभावाद्यागकर्मणि देवताप्राधान्याभावा इति, मध्यमावयवेन देवताप्राधान्यस्य निषेत्स्यमानत्वम्, न चातिथिवदिति चकारसूचितम् । न च यजिरित्यनेन व्याख्यातं किं च पूजयतोः प्रीत्युत्पादनवाचित्वादुत्पादनस्य च करोत्यर्थत्वेन नित्यं सकर्मकत्वात्पूज्यस्य तत्कर्मत्वे सत्यपि, स्वास्थ्यकामः शयीतेत्यादौ प्रत्ययार्थकर्मणि स्वास्थ्यादावदर्शनेन द्वितीयाया धात्वर्थकर्मविषयत्वावसायाद्दानादिना च पूज्यस्य धात्वर्थकर्मत्वदर्शनाद्यागेन देवतायाः पूज्यत्वेऽपि यागकर्मत्वाभावान्न द्वितीयावाच्यतास्तीत्याशयेनाह—**दानेन चेति ।**

नन्वेवं सत्युपाध्यायवद्देवतायाः पूज्यत्वेन यज्यर्थयागकर्मणा त्याज्येन द्रव्येणाभिप्रेयमाणत्वात्सम्प्रदानत्वमेव देवतात्वं स्यादित्याशयेनाशङ्कते—**एवं तर्हीति ।** मुख्यं वा संप्रदानत्वमापद्यते, गौणं वा । तत्र मुख्यं तावन्न सम्भवतीत्याह—**नेति ।** तादृशशब्देनोपाध्यायवन्मुख्यतोक्ता । नन्वप्रतिग्रहीतृत्वान्मुख्यसम्प्रदानत्वाभावेन सम्प्रदानत्वनिर्देशाभावे सति मुख्यकर्मत्वाभावे सति मुख्यकर्मत्वाभावे कर्मत्वनिर्देशस्याप्यभावापत्तेर्विष्णुं यजतीत्यादिकर्मत्वनिर्देशान्मुख्यकर्मतैव देवतायाः प्रतीयतइत्याशङ्क्य, मुख्यसम्प्रदानत्वाभावेऽपि सम्प्रदानत्वनिर्देशवन्मुख्यकर्मत्वाभावेऽपि कर्मत्वनिर्देशोपपत्तिप्रदर्शनार्थं गौणसम्प्रदानत्वनिर्देशमुदाहरति—**अपि चेति ।** क्व चित्शब्देन गौणत्वं सूचितम् ।

एवमौपचारिकपूज्यत्वाभ्युपगमेन गौणे कर्मत्वे, सम्प्रदानत्वे वा सत्यपि देवतात्वं नास्तीत्युक्त्वा, इदानीं देवतायाः पूज्यत्वाभावात्तन्निमित्तं कर्मत्वम्, सम्प्रदानत्वं वा गौणमपि नास्तीत्याह—**सर्वथेति** । न मुख्यवृत्त्या, नापि गौणवृत्त्येति सर्वथाशब्देन सूचितम् । कथं तर्हि विष्णुं यजति सोमाय यजतइत्यादौ द्वितीयाचतुर्थीनिर्देशः इत्याशङ्क्यै-तदालम्बनं वक्तुम्—**आहासाधारेणेन त्विति** । पूजायाः प्रीत्युत्पादनात्मकत्वेन करोत्यर्थ-त्वाद्यजिपरप्रत्ययार्थत्वे सत्योदनस्येव पाके देवतायाः पूजाख्ये प्रत्ययार्थे मुख्येप्सिततमत्व-लक्षणकर्मत्वोपपत्तेर्विषस्येव वा भक्षणे गौणानीप्सितत्वलक्षणकर्मत्वोपपत्तेरप्रतिग्रहीतृत्वेऽपि च यच्चान्यस्मै प्रतिश्रुतमित्यत्राऽप्रतिग्रहीतुरिव पूजाकर्मत्वाद्यागे गौणसम्प्रदानत्वोपपत्तेस्त-द्व्यावृत्त्यर्थः केवलशब्दः । यजिपरस्य प्रत्ययस्य ददातिपरप्रत्ययवत्पूज्यवाचित्वाभावाद्या-गमात्रविषयं देवतायाः कर्मत्वम्, सम्प्रदानत्वं वा स्यात्, तच्च कर्मान्तरसम्प्रदानान्तर-व्यावृत्तेनैव रूपेण भवतीत्याशयः । देवतायाः कर्मान्तरसम्प्रदानान्तरविलक्षणकर्मत्वं सम्प्रदानत्वाभ्युपगमे हेतुमाह—**तच्चेति** ।

तत्कर्मत्वम्, सम्प्रदानत्वं वा यदेवंभूतमन्येभ्यो विलक्षणं कल्प्यते, तद्देवतायाः कारकत्वावगमात्कर्तृकरणापादानाधिकरणकर्मसम्प्रदानातिरिक्तस्य कारकस्याभावाद्देवता-याश्च कर्मसम्प्रदानातिरिक्तकारकत्वस्य कथं चिदप्ययोगात्पारिशेष्यात्कर्मत्वस्य, सम्प्रदान-त्वस्य वावगतेः कर्मान्तरसम्प्रदानान्तरतुल्यस्य च तस्यायोगादित्यर्थः । कथं देवताया कारकत्वावगतिरित्याशङ्क्याह—**न हीति** । कारकत्वं विना क्रियान्वयायोगात्प्रातिपदि-कवाच्येनाकारकरूपेण यागान्वयं न प्रतिपद्यते देवतेति । सर्वथेयं देवतेति देवताशब्दानुषङ्गेण योज्यम् । देवतावाच्यग्न्यादिप्रातिपदिकपरोऽत्रत्यो देवताशब्दो देवताशब्दवाच्येनापि रूपेण देवतायागान्वयं न प्रतिपद्यते, किमुताग्नयादिशब्दवाच्येनेत्यतिशयद्योतनार्थः ।

देवतातद्धितविषयो वा देवताशब्दः । तद्धितनिर्देशेऽपि देवताया द्रव्यमात्रान्वयप्रतीतेर्या-गान्वयार्थमग्निमनेन यजेत, आग्नेय यजेतेति वा वचनव्यक्तिः कल्प्येत्याशयः । कीदृक् विलक्षणं रूपं कर्मसम्प्रदानयोरित्यपेक्षिते सम्प्रदानस्य तावत् त्याज्यद्रव्योद्देश्यत्वप्रतिग्रही-तृत्वसमुदायात्मकस्य तदेकदेशोद्देश्यत्वमात्रेण त्यज्यमानद्रव्यस्यान्यत्राविनियोज्यत्वलक्षण-देवतास्वत्त्वापत्तः देवतायाः प्रतिग्रहीतृत्वाभावेऽपि तत्फललाभात्त्यज्यमानद्रव्योद्देश्यत्वमात्रे सकलसम्प्रदानरूपकल्पनात्मकं वैलक्षण्यमाह—**तेनेति** । येन कारणेनान्यसम्प्रदानतुल्यं देवतायाः सम्प्रदानत्वं नास्ति । तेन कारणेन देवतोद्देशद्रव्यत्यागात्मकस्य यागस्य त्यागांशप्राधान्यविवक्षायां प्रतिग्रहाद्विनापि तत्फललाभात्सकलसम्प्रदानत्वकल्पनेन चतुर्थी-निर्देश इत्यर्थः । उद्देश्यांशप्राधान्यविवक्षायां तद्विशेषणभूते त्यागांशे आप्यमानत्वाध्यासेन सकलं यागं प्रति कर्मत्वरूपं कर्मणो वैलक्षण्यमाह—**यद्वेति** । वचनव्यक्तिभेदेनैतदेव स्पष्टयति—**तनेति** । देवतोद्देशेन द्रव्यत्यागाद्देवतास्वाम्यापत्तावपि तदापादनस्याविहितत्व-द्योतनायेवशब्दः । परस्वत्वापादनत्यागयोः प्राधान्यविवक्षायामपि पश्चाद्भावद्योतनार्थौ तुमुनौ ।

ननु देवताया रूपासमवायेन तदुद्देशस्याप्राधान्यान्न द्वितीयोक्तकर्मान्वयः सम्भवतीत्याशङ्क्य, होत्रादेर्द्रव्यस्यास्वाम्याभावात्त्यक्तृत्वायोगेन त्यागशून्ये देवतोद्देशमात्रे होतयंजेत्यादेर्यजिप्रयोगात्प्राधान्यमुपपादयितुमाह—**तथा चेति**। नन्वेवं रूपयोरपि कर्मसम्प्रदानयोर्विभक्तिवाच्यत्वात् तद्रूपस्य देवतात्वस्य विभक्तिवाच्यता न विरुद्धेत्याशङ्क्या—**तदेतदिति**। अनेकवाच्यशक्तिकल्पनापत्तेर्नानयोर्देवतामात्रविषयोर्वाच्यत्वकल्पना युक्तेत्याशयः। नन्वेवमपि लाक्षणिकत्वाविशेषात्सम्प्रदाननिर्देशवत्कर्मनिर्देशेऽपि देवतात्वं कस्मान्नेष्यतइत्याशङ्क्याह—**तत्रापीति**। प्रतिग्रहीतृत्वाभावेनासमस्तात्मकत्वाद् दूषितमपि सम्प्रदानत्वमुद्देशत्यागाव्यभिचारित्वात्तत्सम्बन्धिनो देवतात्वस्य प्रत्यासन्नं कर्मत्वं तूद्देशत्यागव्यतिरिक्तेषु क्रियान्तरेष्वपि सम्भवेन सव्यभिचारित्वाद्विप्रकृष्टम्। ततश्च कर्मत्वेन देवतात्वलक्षणाऽत्यन्तक्लिष्टेत्याशयः।

ननु कर्मत्ववद्देवतात्वस्यापि सप्तदेवताः शंसतीत्यादौ क्रियान्तरेषु भावात्तु तन्मात्रेण कर्मत्वस्य देवतात्वाद्विप्रकर्षः स्यादित्याशङ्क्याह—**न हीति**। तत्प्रकृतं हविर्भाक्त्वलक्षणं देवतात्वं सकलं यथायजिमेव प्रति ननु क्रियान्तरमपि प्रति न तथा सकलं कर्म यजिमेव प्रतिक्रियान्तरेष्वपि कस्य चित्कर्मणः सद्भावादित्यर्थः। स्तुतिभाक्त्वलक्षणं त्वितरद्देवतात्वं न हविर्भाक्त्वलक्षणमित्याशयः। ननु कर्मत्वसम्प्रदानत्वयोर्देवतात्वाभावाद्द्वितीयाचतुर्थ्यौ देवतानभिधायित्वे कोऽन्यस्तद्वाची शब्दः स्यादित्याशङ्क्याह—**परमार्थतः पुनरिति**। स्मृतितिबलेनैतदेवोपपादयति—**तथा चेति**। क्रीतादितद्धितविधौ यथा तृतीयया कारकविभक्त्या वदनं कृतम्, न तथा देवतातद्धितविधाविदमग्नये, अनेनाग्निमिति वा कारकविभक्त्या वदनं कृतमित्यर्थः। भावे अनिष्टा श्लोकं व्याचष्टे—**ये हीति**। अनन्यशब्दवाच्यत्वोपपादनस्य तव्यप्रत्ययवाच्यत्वोपयोगमाह—**ततश्चेति**। देवतायास्त्ववाच्यत्वोपपादनस्य प्रकृतयागविधायित्वाभावोपयोगमाह—**तत्रेति**। न त्विति भाष्येणान्तरालवाक्येऽपि यागान्तरालान्वयविधिप्रतीतेर्यागस्य स्वरूपविधिक्लेशसाम्यमाशङ्क्य, बाढमित्यनेनोपांशुत्वान्तरालान्वयस्यैव विधेयत्वाभिधानेनाशङ्काशयानतिक्रमाद्विधित्वाभिधानाच्चायुक्तत्वमाशङ्क्यैकग्रन्थेनाशङ्कापरिहारभाष्यद्वयं तात्पर्यतो व्याचष्टे—**अन्तरेति**। विशिष्टार्थप्रतीतौ सम्बन्धस्य नान्तरीयकत्वात्, सम्बन्धशब्देन लक्षणया वैशिष्ट्याभिधानाद्विधित्वं च विनानर्थक्यापत्तेरनन्यगतित्वस्य हेतुत्वेन विविक्षितत्वाच्छङ्कापरिहार इत्याशयः। केन भाष्येणानन्यगतित्वं हेतुत्वेन विवक्षितमित्याशङ्क्यऽनन्वन्तरालसम्बन्धस्यान्यत्प्रयोजनमिति भाष्येणेति सूचयितुमाह—**न हीति**।

उपांशुपौर्णमास्यां यजन्नित्यत्रैकीकृतानां कालसम्बन्धे सति सर्वेषां प्राधान्यं स्यादित्यत्र समुदायानुवादार्थवत्तोक्तेत्याशङ्कते—**ननु चेति**। शिरो वा एतद्यज्ञस्य यदाग्नेयो, हृदयमुपांशुयाजः, पादावग्नीषोमीय इत्यन्यार्थदर्शनस्य प्राधान्यद्योतकत्वेन व्याख्यायां पूर्वपक्षे अग्नीषोमीयोपांशुयाजयोरप्राधान्यापत्त्यभिधानेन समुदायानुवादानर्थक्यस्य वक्ष्यमाणत्वान्न सर्वोपांशुयाजप्राधान्यज्ञापनेनार्थवत्तेति परिहरति—**तथेति**।

एवं तु व्याख्यायमाने यदीमेऽपि विधीयेरन् भिद्यते वाक्यमित्यस्यानन्तरमेकं हीदमित्यादेर्विष्ण्वादिसम्बन्धो अनूद्यतइत्यन्तस्य भाष्यस्यान्वयापत्तेरुपांशुत्वादिसम्बन्धइत्यस्यानन्तरं च न त्वन्तरालसम्बन्धस्येत्यस्यान्वयापत्तेर्व्यवहितान्वयदोषभयान्नन्वित्यनेन विष्ण्वादिवाक्यविहितेषु यागेष्वन्तरालगुणविधानायाऽन्तरालवाक्यमित्याशङ्क्य, उपांशुत्वस्यादिशब्दोपात्तस्य चान्तरालस्य प्राप्ते कर्मण्येकेन वाक्येन विधानाशक्तेश्चोदना वा गुणानां युगपद् शास्त्रादि२–२–६त्यनेन न्यायेन विष्ण्वादिवाक्यैर्यागविधावप्यन्तरालवाक्येन कर्मान्तरविधानापत्तौ वाढमित्यनेनार्हतीत्यन्तेनोक्तायां विष्ण्वादिवाक्यप्राप्तानामुपांशुत्वस्यान्तरालवाक्येऽनुवादात्कथमनेकगुणविधानात्कर्मान्तरापत्तिरित्याशयेन कथमिति पृष्टे जामि वेत्यादिनानूद्यत इत्यन्तेन विष्ण्वादिवाक्यानां विधायकत्वायोगान्न तत्प्राप्तोपांशुत्वानुवादः सम्भवतीत्युक्ते, अनुपादेयान्तरालकालान्वयात्प्रकरणान्तरन्यायेनापि कर्मविधित्वाभिधानार्थम्, नन्वन्तरालसम्बन्धस्येति भाष्यमिति यथान्यासमेव भाष्यव्याख्यां सूचयितुमाह—**किं चेति।** नन्वनुपादेयान्वयेऽपि विष्ण्वादिवाक्यविहितयागविपरिवृत्तेः प्रकरणान्तरन्यायो नास्तीत्याशङ्क्याह—**तादृगिति।** एतदेव व्याचष्टे—**यादृशी हीति।** अस्मिंश्च व्याख्याने विष्ण्वादिवाक्यानां कर्मविधित्वेऽप्यन्तरालवाक्यस्य गुणात्, प्रकरणान्तराद्वा कर्मान्तरविधित्वाभिधानाद्भाष्यस्थः कर्मान्तरशब्दः समञ्जस एवेत्याह—**तत्रेति।** ननूद्देश्यत्वेन देवताया अपि कालवदनुपादेयत्वात्, तदन्वयेऽपि कर्मान्तरापत्तेस्तस्मिन्नेवान्तरालविहिते यागे देवतां विदध्युरिति वार्तिकमयुक्तं स्यादित्याशङ्क्याह—**देवतायाः पुनरिति।** अस्या इदमिति द्रव्यत्यागसङ्कल्पविषयत्वलक्षणोद्देश्यत्वेऽपि देवतायाः कर्मकाले शब्दप्रतिपाद्यत्वेनापाद्यत्वलक्षणोपादेयत्वान्न तदन्वयः—कर्मान्तरत्वापादक इत्याशयः।

ननु कर्मान्तरशब्दस्य विष्ण्वादिवाक्यानां कर्मविधित्वाभ्युपगमविषयत्वे प्रकृतानां यागानामभावादिति भाष्यमयुक्तं स्यादित्याशङ्क्याह—**कर्मेति।** आद्यव्याख्याने त्वाग्नेयाद्यपेक्षया कर्मान्तरशब्द इत्याह—**अथ वेति।** परमार्थतस्तु द्वितीये व्याख्याने विष्ण्वादिवाक्यानां विधित्वमनिष्टमेवेति दर्शयन्नुपसंहरति—**तस्मादिति।** प्रकरणान्तरन्यायाभावेऽप्यनुपादेयान्वयस्याकर्मविधित्वापादकत्वं दर्शयितुमाह—**धात्वर्थं चेति।** अनुपादेयाङ्गविधितोऽपि तदुद्देशेन कर्मैव विधेयमित्याशयः।

ननु कुत्वप्रसक्त्योपांशुयाजशब्दस्य गुणविधित्वायोगेनोपांशुत्वस्याविधेयत्वान्नानेकगुणविधानेन कर्मविधित्वसिद्धिरित्याशङ्कां निराकर्तुं प्रसक्तिं तावत्करोति—**स त्विति।** गुणविधित्वपक्षे कुत्वप्रसक्तिं नैवंजातीयक इति पूर्वपक्षभाष्योक्तां परिहर्तुमनुभाषते—**यत्त्विति।** पक्षद्वयसाम्येन परिहर्तुमुपपत्तिसाम्यं तावदाह—**तत्रेति।** एतदेव प्रश्नपूर्वमुपपादयति—**कुत इति।** श्लोकं व्याचष्टे—**वाचयेति।** यस्त्वव्युत्पन्नस्त्विति, पूर्वपक्षभाष्येण पर्यग्निकृतं पात्नीवतमुत्सृजन्तीति पात्नीवतशब्दस्य त्वाष्ट्रपात्नीवतावाचकस्यापि किं चिद्वर्णसारूप्यावगमात्तदनुवादकत्वदर्शनेनोपांशुयाजशब्दस्यानुवादकत्वे वाचकत्वानपेक्षेति परिहार उक्तः। तन्निरासार्थमनुभाषते—**स्यादिति।** निराकरोति—**तदिति।** नन्वेवमपि नाम-

त्वनिरासेन गुणविधिनिश्चयः कथमित्याशङ्क्याह—**न चेति**। श्लोकं व्याचष्टे—**न तावदिति**। उपांशुयाजनामकत्वाच्चास्य कर्मण इदमवगम्यते नूनमस्योपांशुत्वं धर्म इति दशमोपान्त्याधिकरणभाष्यं त्वाग्नेयाग्नीषोमीयशब्दवद्धदयमुपांशुयाज इत्यादिवाक्यान्तरस्थगुणनिमित्तोपांशुयाजशब्दव्यवहारविषयमित्याशयः। अतोऽन्तरालवाक्यस्थेनैवोपांशुयाजशब्देनोपांशुत्वविधिरित्युपसंहरति—**तस्मादिति**। सूत्रकृतोऽपि गुणविधित्वेष्टेत्याह—**तथा चेति**। कथं तेनेति भाष्येण जामित्वापनयनप्रकारं पृष्ट्वा तस्मिन्नित्यनेन देवतावैलक्षण्यं प्रकारत्वेनोक्तं तत्पुरोडाशनैरन्तर्येणोक्तस्य जामित्वस्य द्रव्यवैलक्षण्यं विनानपनयनादयुक्तमाशङ्क्य, देवतावैलक्षण्यस्योपलक्षणार्थत्वं दर्शयितुमाह—**जामित्वेति**। सर्वस्मै वा तद्यज्ञाय गृह्यते यत् ध्रुवायामाज्यमित्यनेनानिर्दिष्टद्रव्यकेषु यागेष्वाज्यविधानाद् द्रव्यवैलक्षण्यमाग्नेयाग्नीषोमीययोर्मध्यमस्वरत्वात्स्वरवैलक्षण्यं विष्णुप्रजापतिपक्षे देवतावैलक्षण्यम्। युगपत्पुनरिति भाष्येण विष्णवादिवाक्यानामर्थवादत्वदेवताविधित्वाभावा-द्विष्णवादेरप्राप्तत्वेनानुवादानुपपत्तिमाशङ्क्य यष्टव्यानित्यनेनायष्टव्यत्वेऽप्युपांशुयाजस्तुत्यर्थं यष्टव्यत्वकीर्त्तनमित्युक्तम्। तस्य ज्ञायत एवेति भाष्येण विरोधमाशङ्क्य परिहर्त्तुमाह—**ज्ञायत एवेति**। देवतावैलक्षण्येनाग्नेयाग्नीषोमीयाभ्यामुपांशुयाजस्य वैचित्र्यप्रदर्शनार्थं कीर्त्तिता, न विष्णवादिवाक्यविहितत्वप्रदर्शनार्थम्। तेन कारणेन विष्णवादेरवश्ययष्टव्यत्वाभावेऽपि स्तुत्यर्थत्वेनोपादानाभिधानं न पूर्वभाष्यविरुद्धमित्याशयः। अयष्टव्ये यष्टव्यत्वोपपादनालम्बनम्—**गुणवादेनेत्यनेनोक्तम्। कीदृशो गुणवाद इत्यपेक्षिते प्राधान्येत्युक्तम्**। अग्निर्वै देवानामवमो, विष्णुः परम इति श्रुतेर्विष्णोः सर्वदेवानां मध्ये प्राधान्यप्रसिद्धिः। एत इति वै प्रजापतिर्देवानसृजतेति श्रुतेः प्रजापतेः प्राधान्यप्रसिद्धिरग्नीषोमीययोस्तु 'तावब्रूतामग्नीषोमावि'त्यत्र कीर्त्तनादुपांशुयाजे प्राधान्यप्रसिद्धिः। ननु विष्णवादेः प्राधान्यमात्रेण यष्टव्यत्वाभिधाने यागान्तरेष्वपि यष्टव्यत्वापत्तेर्वैलक्षण्यं न स्यादित्याशङ्क्य—**यागइत्युक्तम्**। विधिं विना देवतात्वाभावात्प्राप्तावनियमप्रसक्त्ययोगेऽपि या का चिदिह देवता स्यादित्यपेक्षायामनियमप्रसक्तिरुक्ता। निर्दिष्टदेवताकत्वाद्यागान्तरेष्वप्रसक्तिरित्याशयः।

ननु विष्णुरुपांशु यष्टव्य इत्येवमादीनां विधित्वाभावे विष्णवादेर्विधायकाभावाद्विध्येकगम्यत्वेन च देवताया यागाक्षेपमात्रेणालाभाद्देवताराहित्येनोपांशुयाजविधिरवसीदेदित्याशङ्क्य, तत्रेति भाष्येण शाखान्तरविधानेन विहितत्वमुक्त्वा 'यद्यपीत्यनेन' प्रत्यक्षविध्यभावे उपांशुधर्मकत्वेन विष्णुप्रजापत्योः कल्पविधिविहितत्वम्, विष्णोश्च मन्त्रवर्णकल्पेनापि विधिना विहितत्वम्, अग्नीषोमयोस्तु पुराकल्पसरूपार्थवादकल्पविधिविहितत्वमुक्तम्। तत्सर्वमाक्षेप्तुं शाखान्तरइति तावदाक्षिपति—**शाखान्तरइति**। अनुदाहृत्यैव शाखान्तरेऽस्तीत्यभिधाने, यस्मै यद्रोचते तत्सर्वं सिद्ध्येदित्याशयः। शाखान्तरे च देवताविधौ सत्युपांशुयाजे पूर्वाधिकरणपूर्वपक्षे द्रव्यानियमवत्किं देवतायामप्यनियमः शास्त्रैकप्रमाणत्वाद्वा देवतायास्तेन विनां कल्पनायोगादाग्नेयमुपांशुयाजमन्तरा यजत्यैन्द्रमुपांशुयाजमन्तरा यजतीत्यादिप्राकरणिकवाक्यान्तरस्थाग्नेयादिपदानुषङ्गेण वैकल्पिकप्रकृताग्न्यादिदेवताविधिकल्पनया,

प्रकृतानामेव मध्ये या का चित्प्रजापतिधर्मोपांशुत्वदर्शनाद्वा प्रजापतिविधिकल्पनया, स एव प्रजापतिर्मनसा यजेतेति वा, प्रजापतेस्तूष्णीं भावधर्मकत्वविधानेनोपांशुत्वधर्मकत्वाभावात्प्रजापतिविधिकल्पनानुपपत्तेर्नियमसम्भवे चानियमायोगान्मुख्यत्वेनाग्नेयपदमात्रानुषङ्गेणाग्निविशिष्टोपांशुयाजविधिकल्पनयाग्निनियम इति विचारपूर्वकं 'विष्णुर्वा स्याद्धौत्रादमावास्या हविश्च स्याद्धौत्रस्य तत्र दर्शनादि'ति सूत्रेण मान्त्रवर्णिकदेवताश्रयणं न युज्येतेत्याह **न चेति ।** अत्रत्यश्च यद्यपीति भाष्यावयवः प्रत्यक्षदेवताविधिसद्भावे न युज्येतेत्याह—**यद्यपीति ।** प्रजापतिं मनसा यजेतेति प्रजापतितूष्णीम्भावधर्मकत्वश्रुतेः, तूष्णीं वै श्रेयस आकाङ्क्षते इत्यर्थवादाच्च श्रेयोऽभ्यर्थनतूष्णीङ्कार्यत्वावगतेः तस्मादाहुर्विष्णुर्देवानां श्रेष्ठ इति च विष्णोः श्रेयस्त्वश्रुतेस्तूष्णीम्भावधर्मकत्वावगमाद्यत्कि चित्प्राजापत्यमिति च वर्त्तमानापदेशस्य स्पष्टविधिविहिततूष्णीम्भावविरुद्धोपांशुत्वविध्यशक्तेर्देवताधर्मोपांशुत्वस्य यागे दर्शनेन विष्णुप्रजापतिदेवत्यत्वकल्पनायोगाद्यदुपांशु तत्प्राजापत्यमिति विपरीतवचनव्यक्त्याश्रयणेन तथापीत्यूक्तमित्यापाद्याक्षिपति—**यदप्युक्तमिति ।** उपांशुयाजस्योपांशुधर्मत्वात् विष्णुप्रजापती प्राप्ताविति वदतोपांशुत्वस्य प्राजापत्यत्ववैष्णवत्वनिमित्तस्योपांशुयाजेऽपि समानत्वात्प्रजापतिर्देवता, विष्णुश्च प्राजापत्यवाक्यादेवमादिसङ्कीर्त्तनादित्यादिशब्दसूचिताच्च तत्सदृशाद्वैष्णववाक्याद्विष्णुप्रजापत्योरुपांशुधर्मकयागान्वयावगमादिति देवताया यागाभेदोपचारेणोपांशुधर्मशब्दप्रयोगमभ्युपगम्य भाष्यार्थः सूचितः । स्तुत्यर्थत्वेनापि प्राजापत्यवाक्यार्थोपपत्तेर्वचनव्यक्तिविपर्यासो न युक्त इत्याक्षेपाशयः ।। अग्नीषोमीययोस्त्विति भाष्यमाक्षिपति—**यदपीति ।** ननु ताविति चतुर्थ्यादेशाद्देवताविधिर्भविष्यतीत्याशङ्क्याह—**यदि हीति ।** विध्यधीनत्वात्प्रवृत्तेरग्नीषोमाभ्यामावाभ्यां यजेरन्नित्युक्तेऽप्यस्माकं किमग्नीषोमोक्तार्थानुष्ठानेनेति जानन्तो विधिना वयं प्रवर्तिता इति नावधारयेयुरित्यर्थः । अनेकार्थविधौ वाक्यभेदापत्तेर्नास्य देवताविधायितेत्याह—**कालेति ।** देवतामात्रं तर्हि विधीयतामित्याशङ्क्याह—**देवतेति ।**

ननु पुरोडाशद्वयान्तराले विधानादमावास्यायां च पुरोडाशैक्येनान्तरालयोगादुत्पत्तिवाक्यादेव पौर्णमासीकालत्वावगतेर्विद्वद्वाक्यस्थेन पौर्णमासीशब्देनानुवादात् फलवाक्यस्थेन पूर्णमासशब्देन ग्रहणोपपत्तेः प्राधान्यं सेत्स्यतीत्याशङ्क्याह—**सूत्रेति ।** अपि वा पौर्णमास्यां स्यात्प्रधानशब्दसंयोगात्मन्त्रो यथा प्रधानं स्यादिति सूत्रेण प्रधानस्योपांशुयाजस्योपांशु पौर्णमास्यां यजन्निति शब्देन पौर्णमासीकालं संयोगात्पौर्णमास्यामेवोपांशुयाजः कार्यः । मन्त्रस्तु वैष्णवयाज्यानुवाक्यारूपेऽमावास्याक्रमाम्नातोऽपि प्रधानानुसारात्पौर्णमास्यामेव स्यादिति वदताऽस्यैव कालविधानार्थत्वेनोपन्यासान्नोत्पत्तिवाक्ये कालविधिरित्याशयः । पौर्णमासीशब्देनानपायश्च कालस्य लक्षणं हि पुरोडाशावित्यनेन न्यायेनैकपुरोडाशायां पौर्णमास्यामिवामावास्यायामप्युपांशुयाजोपपत्तिः पौर्णमासी विध्यभावे सूचिता । शाखान्तरइतिभाष्यं तावत्समाधातुमारभते—**अत्रेति ।** शाखाभेदेनोपांशुयाजक्रमे वैष्णवादियाज्यानुवाक्यायुगलाम्नानात् श्रुत्यविनियुक्तस्यापि मन्त्रस्य प्रधानाकाङ्क्षितदेवताप्रकाशनलक्षणोपकारकत्व-

सम्भवेनाकङ्क्षितादृष्टोपकारकल्पनायोगाद्देवताकल्पकत्वोपपत्तेर्मन्त्रवर्णकल्पो देवताविधिर्विष्णुर्वा स्याद्धौत्राम्नानादि१०-८ति दशमोपान्त्यधिकरणगतसूत्रवक्ष्यमाणन्यायेन स्थितइत्यर्थः । सूत्रे विष्णुग्रहणमन्तरेण एकशाखायाममावास्यायां विष्णुयाज्यानुवाक्याम्नानादमावास्यायामेवोपांशुयाजहविः कार्यमिति प्रदर्शनार्थं पूर्वपक्षस्थेन कृतम्, न देवतान्तरनिवृत्त्यर्थमित्याशयः ।

ननु नाना शाखाधीतानामपि याज्यानुवाक्यायुगलानां देवताकल्पनात्प्राक् दृष्टार्थत्वेनाऽनवसायाद्वसन्तमृतूनां प्रीणामीत्यादीनामेको ममेत्यादीनां च प्रयाजानुमन्त्रणानामिव समुच्चयापत्तेस्तत्कल्पानां देवतानामपि समुच्चयः प्रसज्येतेत्याशङ्क्याह—**तश्चेति** । देवताकल्पनात्प्रागपि याज्यानुवाक्यासामान्यतो यागाङ्गदेवताप्रकाशनलक्षणैककार्यत्वावगतेर्न समुच्चयो युक्त इत्याशयः । ननु याज्यानुवाक्यानां हौत्रप्रवचनाख्यवेदाम्नानेन, आध्वर्यवप्रवचनाख्ययजुर्वेदविहितोपांशुयाजापेक्षया वेदान्तरीयत्वाच्छाखान्तरीयत्वाभिधानं न प्रयुज्येतेत्याशङ्क्याह—**तदेव चेति** । वेदान्तरस्य शाखान्तरताप्यस्तीत्याशयः । वेदैक्यएव शाखान्तरव्यपदेशाङ्गस्येनापरितोषात्परिहारान्तरमाह—**आध्वर्यवेऽपि त्विति** । नन्वेवं सत्यध्वर्युप्रयोज्यतैव स्यादित्याशङ्क्य, होतर्यजेति प्रैषसामर्थ्याद्धोतृ—**प्रयोज्यत्वरूपेणेत्युक्तम्** । यथाश्रुतवचनव्यक्त्याश्रयणेनैव विष्णुप्रजापत्योरुपांशुधर्मकत्वावगतेर्यागस्य विष्णुप्रजापत्योश्चोपांशुत्वसाम्याद्विष्णुप्रजापतिदेवत्यत्वप्रापकलिङ्गोपन्यास इत्येवम्, तथापीति भाष्यं समाधत्ते—**उपांश्विति** । उपांशुधर्माणावित्यनेन यद्विष्णुप्रजापत्योरुपांशुत्वधर्मत्वमुक्तम्, तदुपांशुयाजस्य मन्त्रवर्णप्राप्तविष्णुप्रजापतिदेवत्यत्वद्योतनार्थमित्यर्थः । शाखान्तरभाष्योक्तस्य मान्त्रवर्णिकत्वस्य 'विष्णुर्वा स्यादि'ति सूत्रवक्ष्यमाणत्वद्योतनार्थं मन्त्राम्नानाच्चेति भाष्यमितिसूचनार्थश्चकारः । कथं विष्णुप्रजापत्योरुपांशुधर्मत्वेनोपांशुयाजस्य तद्देवत्यत्वद्योतनेत्यपेक्षायामाह—**अन्या हीति** । ननु प्रत्यक्षमानसत्वविधिविरोधान्न लिङ्गेनोपांशुत्वप्राप्तिरित्याशङ्क्याह—**विण्विति** । यथान्यो न शृणोति तथोच्चारणस्योपांशुत्वादन्याश्रवणसादृश्येन मानसत्वएवोपांशुशब्दोऽनुक्तदेवताकेषु विष्णुप्रजापतिदेवत्यत्वद्योतनार्थं प्रयुक्त इत्याशयः । अग्नीषोमयोस्त्विति भाष्यं कालविधायिनि वाक्येऽग्नीषोमयोः प्राप्तिरुदाह्रियतइत्येवं व्याचक्षाणः समाधत्ते—**तथेति** । तावब्रूतामित्यस्मिन्कालस्य विधायके वाक्येऽग्नीषोमीययोरनुवादेन मान्त्रवर्णिकीं प्राप्तिमग्नीषोमयोस्त्विति भाष्यमुपोद्बलयतीत्युक्ते ननु पुराकल्पसदृशस्यापि विधायकत्वाभ्युपगमे देवताविधायकतापि कस्मान्नेष्टेत्याशङ्क्य, कालस्य विधायके वाक्यभेदापत्तेर्देवता—**विध्यसम्भवादित्युक्तम्** । देवतैव तर्हि विधीयताम्, न काल इत्याशङ्क्यऽयथेत्यनेन देवताज्योपांशुत्वकालानामिह वाक्ये कीर्त्तितानां मध्येऽन्यतः प्राप्तिसम्भवासम्भवावालोच्य विधेयतया, अनुवाद्यतया च ग्रहणस्य न्याय्यत्वात्कालव्यतिरिक्तानां चान्यतः प्राप्तिसम्भवात्कालस्यै—**वैतद्विधायकमित्युक्तम्** ॥ १० ॥

भा० प्र०—पूर्व में कथित पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "चोदना वा" विद्वद् वाक्य पठित पौर्णमासी शब्द के समान "उपांशुयाजमन्तरा यजति" इस

वाक्य का उपांशुयाज अनुवाद नहीं हो सकता है। वरन् इसको अपूर्व कर्म ही मानना होगा, कारण, "अप्रकृतत्वात्" क्योंकि इस स्थान में कोई प्रकृत कर्म नहीं है अर्थात् प्रस्तुत प्रसङ्ग में पूर्व में कोई भी अप्राप्त कर्म अन्य वचन के द्वारा विहित नहीं होता है, जिसका इसे अनुवाद माना जाय। "विष्णुरुपांशु यष्टव्यः" इत्यादि वाक्य यदि विधिवाक्य होता तो अन्तरावाक्य को अर्थात् "उपांशुयाजमन्तरा यजति" इस वाक्य को अनुवाद माना जाता। किन्तु "विष्णुरुपांशु" इत्यादि वाक्य विधि नहीं है, क्योंकि आग्नेय = अग्नि देवता के उद्देश्य से किया गया एवम् अग्नीषोम देवता के उद्देश्य में किया गया ये दो पुरोडाश यदि निरन्तर क्रम में किया जाय तो एक ही क्रिया निरन्तर क्रम में अनुष्ठित होने से जामिता अर्थात् आलस्य हो सकता है। वाक्य के आरम्भ में ही 'जामि वा एतत्' इत्यादि अंश में कहा गया है। उसी के परिहार के लिए मध्य में एक अन्य कर्म की व्यवस्था की गयी है, ऐसी स्थिति में नैरन्तर्य दोष नहीं होगा। उपांशुयाग उसी के मध्य अनुष्ठेय होने से अन्तरालगुण विशिष्ट कर्म है। किन्तु "विष्णुरुपांशु" इत्यादि वाक्य अन्तरालगुण विशिष्ट न होने से उससे अन्य कर्म का विधान नहीं हो सकता है। क्योंकि वैसे कर्मों से जामिता दोष का प्रतिकार नहीं हो सकता है। इसलिए अन्तरा वाक्य को ही विधि मानना उचित है अर्थात् उपांशुयाज ही विधेय अपूर्व कर्म है। इस स्थल में 'यजति' यह जो आख्यात है, यह लट् लकार नहीं है, वरन् लेट् पञ्चम लेट् लकार है, वह लकार लिङ्ग का समानार्थक है। इसलिए इस स्थल में विधि विभक्ति न होने से उपांशुयाग विधेय नहीं है, यह आपत्ति ठीक नहीं है। इसीलिए "उपांशुयाजमन्तरा यजति' यह वाक्य अर्थवाद नहीं है, अपितु विधि है। 'अन्तरा वाक्य' यदि विधि माना जाय तो उसके द्वारा अन्तरालत्व एवं उपांशुत्व विशिष्ट एक अपूर्व कर्म विहित होता है, ऐसी स्थिति में **"विष्णुरुपांशु"** इत्यादि को अर्थवाद ही मानना होगा।

यदि यह कहा जाय कि उनके द्वारा विष्णु आदि देवता रूप गुण का विधान किया जाता है, यह भी कहा जा सकता है। ऐसी स्थिति में वह अर्थवाद नहीं रहेगा। इस प्रसङ्ग में यह कहा जा सकता है कि "जामि वा एतद् यज्ञस्य क्रियते' इत्यादि से आरम्भ कर "अग्नीषोमावुपांशु यष्टव्याव जामित्वाय" ये सभी मिलकर एक वाक्य हैं, कारण दो पुरोडाश निरन्तर भाव से अनुष्ठित होने पर जामिता होता है। इसके प्रतिकार के लिए इस वाक्य का उपक्रम या प्रवृत्ति है। "अग्नीषोमौ उपांशु यष्टव्यौ अजामित्वाय" इस अन्तिम वाक्य तक अंश में इस जामितादोषों का ही कथन है। इसलिए समग्र अंशों के मध्य में एकवाक्यता है। उनके मध्य में एकवाक्यता रहने से अनेक विधेय उसका विषय नहीं हो सकता है। अर्थात् उनके द्वारा एक से अधिक कर्म विहित नहीं हो सकता है। क्योंकि ऐसा होने से वाक्यभेद दोष होगा। 'अन्तरा' वाक्य से अन्तरालत्व एवं उपांशुविशिष्ट एक कर्म का विधान होता है। इसको अन्यथा नहीं कर सकते हैं। क्योंकि ऐसा होने से महान् अनर्थ होगा, अतः "विष्णुरुपांशु" इत्यादि वाक्य को ही अर्थवाद मानना होगा, इस

स्थल में अर्थवाद से 'उपांशुयाज' प्रशस्त होने से विष्णु, प्रजापति या अग्नीषोम देवता की पूजा ( याग ) की जाती है---यह प्रशंसा की जाती है। इस स्थल में उपांशुयाज में द्रव्य देवता रूप गुण न रहने से वह रूपहीन हो जायेगा, अतः उसका विधान नहीं हो सकता है। क्योंकि इस स्थल में उपांशुयाज में शाखाभेद से विष्णु, प्रजापति या अग्नीषोम इन तीनों का कोई एक देवता होगा एवं ध्रौव ध्रुवा में = होमसाधन पात्रविशेष में ग्रहण योग्य हवि ही द्रव्य है। "चोदना" = कर्मोत्पत्ति विधि, 'वा' = पूर्वपक्ष का निरासक है, "अप्रकृतत्वात्" = प्रकृत अर्थात् पूर्व से बोधित याग न होने से। उपांशुयाज वाक्य कर्मोत्पत्ति विधि अर्थात् उसके द्वारा "उपांशुयाज" नामक एक स्वतन्त्र कर्म का ही विधान होता है। किन्तु, वह अनुवाद नहीं है, क्योंकि, पूर्व में किसी कर्म का विधान नहीं है, जिसका अनुवाद इसे माना जाय ॥ १० ॥

## गुणोपबन्धात् ॥ 11 ॥

**शा० भा०---यदुच्यते न ज्ञायते कतमोऽसावुपांशुयाजसंज्ञको याग इति। यस्यायं गुण उपबद्ध 'उपांशु पौर्णमास्यां यजन्' इति। तस्मान्न दोषः ॥ ११ ॥ आशङ्कानिरासः ॥**

भा० वि०---सूत्रव्यावर्त्यं दर्शयन् पूर्वपक्षोक्तामरूपत्वा शङ्कामनुवदति---**यदुच्येतेति**। रूपविशेषानवगमादिति भावः। उपांशुत्वगुणोपबन्धान्नारूपतेति सूत्रं व्याकुर्वन् परिहरति---**यस्येति**। स उपांशुयाजसंज्ञको विज्ञायत इत्यनुषङ्गः। उत्पत्तिवाक्यस्थस्योपांशुशब्दस्योपांशुविधानार्थत्वोपोद्बलनायोपांशुपौर्णमास्यामिति वाक्यमुदाहृतम्, न त्वेतदेवोत्पत्तिवाक्यमिति द्रष्टव्यम्, यस्मादुपांशुत्वेन रूपेण रूपवत् तस्मान्नारूपत्वदोष इत्याह---**तस्मादिति**। इतश्च नोपांशुयाजवाक्यं पौर्णमासीवाक्यवत् समुदायानुवाद इत्याह ॥ ११ ॥

त० वा०---यस्यायं गुण उपबद्धो दृश्यते कालविधिपरे वाक्ये 'उपांशु पौर्णमास्यां यजन्नि'ति। न त्वेतदेव गुणस्योत्पत्तिवाक्यम्। अयागविधिपरे सत्यनेकार्थविधिप्रसङ्गात्। अत 'उपांशुयाजमन्तरा' इत्यनेनैव प्राप्तस्य संकीर्तनमिति ॥ ११ ॥

न्या० सु०---यदुच्यत इति भाष्येणोपांशुत्वगुणोपबन्धान्नारूपत्वेन पौर्णमासी लभ्यते इति पूर्वपक्षोक्तारूपत्वपरिहारार्थत्वेनैतत्सूत्रं व्याख्यातुमुपांश्वित्विति वाक्यमुदाहृतम्। तद्देवतावदुपांशुत्वस्याप्यविधायकत्वाद्विध्यर्थत्वे चोपांशुशब्दस्य यागविशेषोपलक्षणार्थत्वायोगात्त्रिष्वपि पौर्णमासीयोगेषूपांशुत्वोपपत्तेर्नोदाहार्यमित्याशङ्क्योत्पत्तिवाक्यस्थस्योपांशुयाजशब्दस्योपांशुत्वविधानार्थत्वोपोद्बलनायैतदुदाहृतमिति सूचयन् व्याचष्टे---**यस्येति**।

यथाश्रुतार्थत्यागे हेतुमाह—**नन्विति**। नन्वार्थवादकल्पविधित्वमात्रेणैकस्य वाक्यस्यानेकार्थपरत्वे वाक्यभेदः शक्यपरिहारः। ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छदित्यादावनेकार्थविधौ चोदिते हि ते हि तदर्थत्वात्तस्य तस्योपदिश्येतेत्यनेन वाक्यभेदाभिधानादात्रिसत्रेऽप्यर्थवादकल्पस्य विधेः फलमात्रपरत्वान्नानेकार्थपरतास्तीत्याशयः। उपांशुत्वादिवच्चाज्यस्याप्यनेनैव विधानापत्तेर्हविर्लिङ्गाश्रुतित्वादिति दशमोपान्त्याधिकरणसूत्रविरोधः। किमर्थं तर्ह्येतदुदाहृतमित्यपेक्षायां पूर्वसूचितमेव प्राप्त्युपोद्बलनार्थत्वं प्रकटयति—**अत इति** ॥ ११ ॥

भा० प्र०—पूर्वपक्षी यदि यह कहें कि "उपांशुयाज" यह कर्म का नामधेय किस प्रकार है? इसके उत्तर में कहना है कि **"गुणोबन्धात्"** "उपांशु पौर्णमास्यां यजन्" इस वाक्य में गुण का निर्देश है, अतः तत्प्रख्य न्याय से वह कर्म का नामधेय है।

"गुणोबन्धात्" = गुण का उपबन्ध अर्थात् निर्देश होने से यह नाम है ॥ ११ ॥

## प्राये वचनाच्च ॥ १२ ॥

**शा० भा०—प्रधानकर्मप्राये वचनं प्रधानकर्मतामुपोद्बलयति। यथाऽग्र्यप्राये लिखितं दृष्ट्वा भवेदयमग्र्य इति मतिः। तस्मान्न समुदायशब्द इति ॥ १२ ॥ इति चतुर्थमुपांशुयाजाधिकरणम् ॥ ४ ॥**

भा० वि०—एतद्व्याचष्टे—**प्रधानेति**। प्रायेवचनमिति। यज्ञपुरुषस्य प्रधानावयवप्रकरणगतेनावयवेन हृदयमुपांशुयाज इति संस्तवनमित्यर्थः। अग्र्यः श्रेष्ठः, अयमप्यग्र्य इति प्रत्यय इति शेषः, विष्ण्वादिवाक्यैर्यागविधावुपांशुयाजभेदे सत्यग्नीषोमीयस्यैवोपांशुयाजस्य कालविधिप्रसङ्गेन विद्वद्वाक्यानूदितयोः फलवाक्यग्रहणेन प्राधान्याद्वैष्णवप्राजापत्ययोः गुणत्वापत्तेः उपांशुयाजमात्रप्राधान्यावगतिप्रसङ्गः इति भावः। प्रायेवचनफलवचनमाह—**तस्मादिति**। प्रयोजनं तु पूर्वपक्षे कर्मनानात्वं सिद्धान्ते तदेकत्वमिति द्रष्टव्यम् ॥ १२ ॥

त० वा०—"हृदयमुपांशुयाज" इति यज्ञपुरुषस्य प्रधानप्रायेणावयवेन संस्तवात्प्रधानमित्यवगम्यते। कथं पुनरप्रधानत्वं पूर्वपक्षे प्रसज्यते। उच्यते।

त्रयाणां वैष्णवादीनां समुदायेऽवधारिते।
अग्नीषोमीय एवैकः पौर्णमास्यां विधीयते ॥

'तावब्रूतामग्नीषोमावि'ति योऽग्नीषोमदेवत्यः, स एवैकः कालविशेषसंयुक्तः पूर्णमासग्रहणेन फले चोद्यते। तत्र वैष्णवप्राजापत्ययोर्गुणभावात्सकलोपांशुयाजप्राधान्यवचनानुपपत्तिः।

ननु तवापि वैकल्पिकदोषत्वाद्देवतासु यदैवाग्नीषोमीयदेवत्यः[1] तदैव प्राधान्यमिति, नित्यवत्प्रधानत्वसंकीर्तनं नैव घटते। नैष दोषः।

कालदेवतयोर्नात्र सम्बन्धोऽयं विधीयते।
यत्तु तल्लक्षितं कर्म तदन्यत्रापि विद्यते॥

यदि ह्यग्नीषोमयोरेव पौर्णमासीसंबन्धः क्रियते, ततो विष्णुप्रजापतिपक्षे न स्यात्। अयं पुनर्देवतोपलक्षितस्य यागस्य सम्बन्धः। सर्वत्र चोपलक्षणापायेऽप्युपलक्ष्यं गृह्यते। यथा वक्ष्यति, 'अनपायश्च कालस्य लक्षणं हि पुरोडाशौ' इति। न वैकस्यैव कर्मणः कदाचित्प्रधानत्वं कदाचिदङ्गत्वमित्युपपद्यते। नानात्वे त्वविरुद्धं स्यात्। न च सम्भवति तत्। तस्मादेककर्मत्वाय 'उपांशुयाजमन्तरा यजति' इत्ययमेव विधिः॥ १२॥

( इति चतुर्थमुपांशुयाजाधिकरणम् ॥ ४ ॥ )

न्या० सु०—प्रधानेति भाष्येणोपांशुयाजस्य प्रधानप्राये वचनात् प्राधान्यावगतेर्विष्णवादिवाक्यैश्च विधावुपांशुयाजभेदे सत्यग्नीषोमीयस्यैवोपांशुयाजस्य कालविधिप्रसङ्गाद्द्विद्वाक्यानूदितत्वात्फलवाक्यग्रहेण प्राधान्याद्वैष्णवप्राजापत्ययोरुपांशुयाजयोर्गुणत्वापत्तेरुपांशुयाजमात्रप्राधान्यावगतिबाधप्रसङ्गान्नोपांशुयाजवाक्यं पौर्णमासीवाक्यवत्समुदायानुवाद इत्येवं सूत्रं व्याख्यातम्। तत्र किं प्राये वचनमित्यपेक्षायामुदाहरति—**हृदयमिति**। यज्ञस्यामूर्त्तत्वेन शिरोहृदयपादायोगमाशङ्क्य स्तुत्यर्थं पुरुषत्वोपचारः।

ननूपांशुयाजभेदेऽपि विध्युद्देशान्तर्गतत्वात्सन्निहितत्वाच्चोपांशुत्वस्यैवार्थवादस्थव्यवहितदेवतानपेक्षस्य यागोपलक्षकत्वात्सर्वेषामुपांशुयाजानां कालविध्यवगतेर्विशेषतश्च समुदायेनैकीकृतानां कालयोगावगतेः पक्षद्वयेऽप्यविशिष्टं प्राधान्यमित्याशङ्कते—**कथं पुनरिति**। यागोपलक्षणत्वं विना देवताकीर्त्तनानर्थक्यापत्तेरर्थवादस्थयोर्व्यवहितयोरपि वाग्नीषोमयोरुपांशुत्ववदुपलक्षणत्वावगमात्कालोद्देशेन चोपादीयमानानां यागानामनेकोपलक्षणान्वयेऽपि वाक्यभेदानापत्तेः, समुदायीकृतानामपि च कालान्वये समुदायशब्दाभावेनाग्नीषोमदेवत्यस्यैवोपांशुयाजस्य कालविधिप्रतीतेः प्राधान्यापत्तिरिति परिहरति—**उच्यत इति**।

अवधारितेऽपीत्यपिशब्दोऽध्याहार्यः। अग्नीषोमीय एवेत्यनेनाग्नीषोमयोरुपलक्षणत्वावश्यंभावः सूचितः। श्लोकं व्याचष्टे—**ताविति**।

नन्वेवं सत्युपांशुयाजैक्येऽप्यग्नीषोमपक्ष एव कालविधानापत्तेर्नित्यवत्प्राधान्यकीर्त्तनं न युज्येतेत्याशङ्कते—**नन्विति**। अष्टदोषदुष्टदेवताविकल्पापत्तेरप्युपांशुयाजैक्यपक्षो न युक्त इति सूचनार्थो दोषशब्दः। कर्मैक्ये सत्युपलक्षणापायेऽप्युपलक्ष्यानपायादेवतान्तरपक्षेऽप्यविशिष्टः कालविधिरिति परिहरति—**नैष इति**। श्लोकं व्याचष्टे—**यदि हीति**। सर्वत्रेत्युक्ते

---

[1]. क० दैवत्यः।

क्त्वेत्युदाहरणापेक्षायामसोमयाजिनोऽग्नीषोमीयपुरोडाशभावादन्तरालकालोपलक्षणीभूतपुरोडाशद्वयाभावेऽपि तदुपलक्षिताग्नेयपश्चाद्भावलक्षककलानपायादुपांशुयाजानिवृत्त्यभिधानार्थं दशमान्त्याधिकरणसूत्रमुदाहृतम्। एवं च सत्यग्नीषोमग्रहणस्योपलक्षणार्थत्वेऽपि देवतान्तरपक्षे काल्योगनिवृत्तिप्रयोजनत्वानवगमात्फलवाक्ये वैरुप्यापत्तेश्च कादाचित्कप्राधान्यप्रयोजनत्वायोगादानर्थक्यपरिहारायाज्यग्रहणवत्स्तुत्यर्थतैव न्याय्येति सूचयितुमाह—**नचेति**। भेदे तूपलक्षणार्थतया विध्युद्देशान्तर्गतत्वेन प्रयोजनवत्तरत्वसम्भवे मन्दप्रयोजनस्य स्तुत्यर्थत्वस्यान्याय्यत्वादुपलक्षणार्थतैवोचितेति। सूचयितुमाह—**नानात्वे त्विति**। तस्मादित्युपसंहारभाष्यं प्रायवचनहेतुसाध्याभिधानार्थत्वेन व्याचष्टे—**तस्मादिति**। अधिकरणसिद्धान्तप्रयोजनाभिधानार्थम्—**चैककर्मत्वायेत्युक्तम्**॥ १२ ॥

इति चतुर्थमुपांशुयाजाधिकरणम्।

भा० प्र०—अन्य प्रधान कर्मों के साथ उल्लिखित होने पर भी उपांशुयाज अपूर्व कर्म है। "तस्य वा एतस्य आग्नेय एव शिरः हृदयमुपांशुयाजः पादावग्नीषोमीयः" इत्यादि वाक्य में आग्नेय एवं अग्नीषोमीय आदि प्रधान कर्मों के साथ पठित होने से उपांशुयाज भी प्रधान कर्म है अर्थात् स्वतन्त्र अप्राप्त कर्म है, इसलिए वह अर्थवाद नहीं हो सकता है।

इस अधिकरण का यह फल है कि पूर्वपक्षी के मत में विष्णु, प्रजापति एवं अग्नीषोम इन तीन देवताओं के उद्देश्य से तीन यागों के समुच्चय में अनुष्ठान करना चाहिये, सिद्धान्ती के मत में विकल्प से एक ही अनुष्ठेय है, इस प्रसङ्ग में शाखाभेद से विकल्प व्यवस्थित है।

"प्राये" = प्रधान की पंक्ति में "वचनात्" = वचन अर्थात् उल्लेख होने से ॥ १२ ॥

## अथ पञ्चममाघाराग्निहोत्राधिकरणम्।

## [५] आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥ पू०

**शा० भा०—'आघारमाघारयति' इति श्रूयते। तथेमान्यपराणि, 'उर्ध्वमाघारयति, संततमाघारयति, ऋजुमाघारयति' इत्येवमादि। इदं च, 'अग्निहोत्रं जुहोति' तथा 'दध्ना जुहोति, पयसा जुहोति' इत्येवमादि। तत्र संदेहः किमूर्ध्वमाघारयति[1], दध्ना जुहोति इत्येवमादिभिराघाराहोमाश्च विहिताः, तेषामाघारयति, अग्निहोत्रं जुहोति' इत्येतौ समुदायानुवादौ, उतैतावेवापूर्वयोराघारहोमयोर्विधाताराविति। किं तावत्प्राप्तं? नापूर्वयोर्विधी इति। कुतः? अरूपत्वात्। न ह्येतयोः पूर्वेभ्यो होमाघारेभ्यो विस्पष्टं[2]**

---

१. ब. ऋजु।　　　　२. ब. विस्पष्टं।

**रूपमस्ति, यतः कर्मान्तरमध्यवस्येम[1] अतः प्रकृतानां[2] रूपवत्त्वात्। प्रकृतानुवादौ ॥ १३ ॥ पूर्वपक्षः ॥**

भा० वि०—यद्यप्युपांशुयाजवत् प्रकृतकर्माभावेनेहापि समुदायानुवादत्वनिरासससिद्धेः पुनः प्रत्यवस्थानानुपपत्तिः तथाप्यूर्ध्वमाघारयति तण्डुलैः जुहोतीत्यादीनां स्वप्रधानकर्मविधायित्वेन विष्णवादिवाक्यवैलक्षण्यात् तद्विहितकर्मसमुदायानुवादत्वशङ्कोत्थानासङ्गतिः। विषयं वदन् निर्गुणकर्मश्रवणं गुणश्रवणं च क्रमेणोदाहरणद्वये दर्शयति—**आघारमित्यादिना**। अविज्ञातरूपस्यैव विधेयत्वसंभवासंभवाभ्यां संशयमाह—**तत्रेति**। प्रश्नपूर्वकं पूर्वपक्षमाह—**किमित्यादिना**। तदनेन पूर्वाधिकरणपूर्वपक्षसूत्रात् पौर्णमासीवत्पदानुषङ्गेणाघाराग्निहोत्रं पौर्णमासीवत्समुदायानुवादः। नापूर्वयोर्विधायकमिति सूत्रं योजितम्। प्रश्नपूर्वकं हेतुभागं व्याचष्टे—**कुत इत्यादिना**। पूर्वेभ्य इति। दध्यूर्ध्वादिवाक्यविहितेभ्य इति यावत्। तावदाघाराग्निहोत्रवाक्ययोः स्ववाक्यविहितं रूपमस्ति न च दध्यूर्ध्वादिवाक्यविहितरूपापेक्षया विधित्वं एतद्वाक्यविहिते कर्मणि वाक्यान्तरैस्तदनुवादेन रूपविधिः वाक्यान्तरविहिते च रूपे सति तदपेक्षया कर्मविधिरितीतरेतराश्रया पत्तेरिति भावः।

ननु दध्यूर्ध्वादिवाक्यानां कर्मविधितैव नास्ति कथं तत्समुदायानुवादत्वम्? तत्राह—**अत इति**। नह्युपांशुयाजवाक्यवदेषामेकवाक्यता विष्णवादिवाक्यवत् स्तुत्यर्थता वेष्टा तेन निश्चिते विधित्वे कर्मनिरपेक्षगुणविध्ययोगाद्गुणविशिष्टकर्मविधितैव न्याय्येत्याशयः।

ननु दध्यादिवाक्ये द्रव्यसद्भावेऽपि देवताभावादूर्ध्वादिवाक्ये द्रव्यदेवतयोः द्वयोरप्यभावात् कथं कर्मविधित्वमत आह—**प्रकृतानां रूपवत्त्वादिति**। दध्यादिवाक्यस्य यदग्नये चेत्यादिवाक्यविहितदेवतावत्त्वादूर्ध्वादिवाक्यस्य च तस्याघारमाघार्येति प्रयाजाङ्गाज्यद्रव्यकत्वात् ऊर्ध्वोऽध्वर इति मान्त्रवर्णिकदेवतावत्त्वाच्च कर्मविधित्वोपपत्तिरित्याशयः। समुदायानुवादत्वे हेत्वन्तरपरत्वं सूत्रस्य दर्शयितुं चशब्दाध्याहारेण व्याचष्टे—**संज्ञोपबन्धश्चेति**। संज्ञायाः कर्मसमीपे विशेषणत्वेन बन्धनं विवृणोति—**अग्निहोत्रं नामेति**। जुहोति करोतीति यावत्। भवतु को दोषस्तत्राह—**न चेति**। सर्वत्र विशेषप्रतिपत्त्यर्थत्वात् संज्ञाया विशेषस्य च रूपं विना निर्धारणात् संज्ञोपबन्धानुपपत्तिरित्यर्थः॥ १३ ॥

---

१. ब. मध्यवसेयम्।

२. ब. प्रकृतत्वात् प्रकृतानुवादौ।

## अथ पञ्चममाघाराग्निहोत्राधिकरणम्

त० वा०—ऊर्ध्वमाघारयति तण्डुलैर्जुहोतीत्यादिभिरेवंभूता एवाऽऽघारा होमाश्च विहिता विपरिवर्त्तन्ते। न हि 'विष्णुरुपांशु यष्टव्यः' इत्यादिवद् द्रव्य-प्राधान्येन यागहोमभावनयोरभिभवः। किं च।

न चैषामेकवाक्यत्वं न च स्तुतिपरा श्रुतिः।
ऐकान्तिको विधिस्तेन गुणवत्कर्मगोचरः॥

नोपांशुयाजवाक्यवदेषामेकवाक्यत्वमिष्टम्, न च स्तुत्यर्थता। तेनोभयपक्षे निश्चिते विधित्वे, गुणमात्रं विधीयताम्, तद्युक्तं वा कर्मेति। कर्मविधानं युक्तम्। कुतः?

विधित्वं प्रत्ययोपात्तं न नामपदमृच्छति।
तद्विधिर्भावनातश्चेत्सैव पूर्वं विधीयताम्॥

न तावद्दध्यादिशब्दैः स्वयं विधित्वमभिधीयते। न च प्रत्ययोपात्तं सत् भाव-नाधात्वर्थव्यतिरेकेण स्वतन्त्रैर्दध्यादिभिः सम्बध्यते। न हि भवति दध्ना यादिति। किं तर्हि दध्ना कुर्यादिति संबध्यते। होमं वाऽनेन कुर्यादिति। तस्मा-द्यत्प्रसादेन दध्यादेः कर्त्तव्यता, तावेव भावना-धात्वर्थौ व विधीयेते इति कुत एतत्। न हि तद्विध्यनपेक्षं कथंचिदपि गुणविधानं शक्यं दर्शयितुम्। यदैव हि दर्शयितुमुपक्रम्यते तदैव पूर्वतरं भावनाधात्वर्थविधिर्बलादापद्यते। तस्माद्धोमद-ध्यादिविशिष्टभावे[1]नैव विधीयते। ततश्च तासां रूपवतीनां प्रचयशिष्टः समुदा-योऽस्ती'त्यग्निहोत्रं जुहोती'ति तदनुभावो विज्ञायते। निमित्त-फलचोदनयोश्च एक-त्वोपजनः समुदायानुवादे प्रयोजनम्। एवं च सति दध्यादेर्भिन्नकर्मविषयत्वाद-न्याय्यो विकल्पो न प्रसज्यते।

तथो'र्ध्वमाघारयती'त्यादिषु यद्यपि द्रव्यदेवतं न श्रूयते, तथाऽप्युपांशुत्व-न्यायेन व्यवच्छेदकारणत्वादूर्ध्वत्वादिभिरेव रूपवत्तायां कल्पितायाम्, आघार-माघारयतीत्यरूपः सन् स्वार्थे विनियोक्तुमशक्नुवन्ननुवादो भवति। तस्यापि प्रयोजनम् 'इन्द्र[2] ऊर्ध्वो अध्वर' इति मन्त्रविनियोगे, 'तस्याऽऽघारमाघार्य' इति च द्रव्यविधावेकत्वसिद्धिः॥ १३॥

### अथ पञ्चममाघराग्निहोत्राधिकरणम्॥ ५॥

न्या० सु०—नापूर्वविधी इति भाष्येण पूर्वाधिकरणपूर्णपक्षसूत्रस्थपौर्णमासीवत्पदानु-षङ्गेणाघाराग्निहोत्रं पौर्णमासीवत् समुदायानुवाद इत्येवमेतत्सूत्रं व्याख्यातम्। तत्रोपांशु-याजवत्प्रकृतकर्माभावेनेहापि समुदायानुवादत्वनिरासप्रसिद्धेः प्रत्यवस्थानानुपपत्तिमाशङ्क्यो-

१. क० दध्यादिविशिष्टाभावना। २. क० इडऊर्ध्वो।

पांशुयाजवैषम्यमाहोर्ध्वमिति । वैषम्योक्त्यऽनन्तरसङ्गतिरपि सूचिता । ननूर्ध्वादिवाक्यानां कर्मविधितैव नास्तीत्याशङ्क्याह—**किं चेति** । एकोपक्रमसंहाराभावेनैकवाक्यत्वावगतेः । कथं चिच्चैकवाक्यत्वप्रतीतावपि ऊर्द्धत्वादेः कथं चित्प्राप्त्यभावेन स्तुत्यर्थत्वायोगाद्विधित्वावगतेः कर्मनिरपेक्षगुणविध्ययोगाद् गुणविशिष्टकर्मविधितैव न्याय्येत्याशयः । श्लोकं व्याचष्टे—**नेति** । कर्मनिरपेक्षगुणविधिसम्भवासम्भवसन्देहोऽत्र मूलसन्देहे हेतुरिति सूचयितुं सन्देहपूर्वं गुणवत्कर्मगोचरपदव्याख्या । एतदेव प्रश्नपूर्वमुपपादयति—**कुत इति** । श्लोकं व्याचष्टे—**न तावदिति** । विधौ स्मृताया लिङो यासुडाडमविधानात् यादित्येतावतः प्रयोगाननुगतमपि विध्यविधायित्वमभ्युपेत्य—**न हीत्युक्तम्** । भावनाभिधायित्वं तु शुद्धस्य न प्रयोजनात्स्मृतेर्वावगम्यतइत्याशयः । कुर्याच्छब्दमात्रान्वयेऽपि धात्वर्थाद्व्यतिरेकः स्यान्न भावनातः वस्तुतस्तु करोत्यर्थस्यापि धात्वर्थानवच्छिन्नस्याप्रतीतेर्न तद्व्यतिरेकेणापि विधित्वस्य दध्याद्यन्वयः सम्भवतीति किं—**तर्हीत्यनेनोक्तम्** ।

ननु भावनाया धात्वर्थानपेक्षगुणविध्ययोगेऽपि तद्वारैव गुणविधिर्भविष्यतीत्याशङ्क्याह—**तस्मादिति** । अशक्तिमेवोक्तवचनव्यक्तिद्वयातिरिक्तवचनव्यक्त्यसम्भवेनोपपादयति—**यदेवहीति** । दध्युद्ध्वादिवाक्यानां गुणवत्कर्मगोचरत्वमुपपादितमुपपादयति—**तस्मादिति** । ननु तस्मादेव तावपि समुदायानुवादाविति पूर्वपक्षोपसंहारभाष्यात्समुदायानुवादत्वं पूर्वपक्ष्यभिमतं गम्यते । न च दध्युद्ध्वादिवाक्यविहितानां कर्मणां समुदायोऽस्त्येकधर्मयोगाभावादित्याशङ्क्याह—**ततश्चेति** । हवनाधारणरूपैकजातीयैकदेशे पठितत्वलक्षणैकधर्मयोगाख्येन प्रचयेनापादितः समुदायोऽस्तीत्यर्थः । धात्वर्थसमुदायस्येव धातुना भावनासमुदायस्यापि प्रत्ययेनानुवाद इति वक्तुम्—**तासामित्युक्तम्** । रूपवतीनामित्यनेनाघाराग्निहोत्रयोः स्ववाक्ये विहितरूपाभावाद्वाक्यान्तरविहितरूपापेक्षणे च विहिते कर्मणि वाक्यान्तरैस्तदनुवादेन रूपविधिः, वाक्यान्तरविहिते च रूपे सति कर्मविधिरितीतरतराश्रयापत्तेः, कर्मविध्ययोगं सूचयता न हीत्यरूपत्वव्याख्यानार्थं भाष्यं व्याख्यातम् । अनुवादप्रयोजनापेक्षायामग्निहोत्रवाक्ये तावद्यावज्जीवमग्निहोत्रं जुहुयादिति निमित्तचोदनाया'मग्निहोत्रं जुहुयादि'ति फलचोदनायां चैकत्वसिद्धिं प्रयोजनमाह—**निमित्तेति** । पूर्वपक्षे निष्प्रयोजनत्वदोषं परिहृत्य, प्रत्युतान्याय्यविकल्पपरिहारो गुण एव स्यादित्याह—**एवं चेति** । नन्वाघारकर्मणोर्द्रव्यदेवतान्वयेन यागरूपतायास्तत्प्रख्याधिकरणेऽभिहितत्वाद्यागरूपस्य च द्रव्यदेवतस्याघारवाक्यवदूर्ध्वादिवाक्येऽप्यश्रुतेररूपता तुल्येत्याशङ्क्याह—**तथेति** । आघारवाक्येष्वनुवादप्रयोजनमाह—**तस्यापीति** ॥ १३ ॥

भा० प्र०—श्रुतियों में कहा गया है कि "आघारमाघारयति" इसके समीप में "ऊर्द्धमाघारयति", "ऋजुमाघारयति" एवं "सन्ततमाघारयति" (तै० सं० २।५।११) ये वाक्य पढ़े गये हैं, इसी प्रकार अन्य स्थल में भी "अग्निहोत्रं जुहोति", "पयसा जुहोति" ( तै० सं० १।५।९ ) यह पठित है। इसमें यह सन्देह होता है कि इस स्थल में

"अग्निहोत्रं जुहोति" एवं आघारमाघारयति, ये दो वाक्य विधि हैं या अनुवाद। इसमें पूर्वपक्षी का कहना है कि "अग्निहोत्रं जुहोति" यह वाक्य "दध्ना जुहोति" और "पयसा जुहोति" इस समुदाय अंश का अनुवाद है और "आघारमाघारयति" यह वाक्य भी "ऊर्द्ध्वमाघारयति" इत्यादि समुदाय अंश का अनुवाद है, किन्तु यह अपूर्व कर्म का विधायक नहीं है। क्योंकि "अरूपत्वात्" "अग्निहोत्रं जुहोति" एवम् "आघारमाघारयति" ये दो वाक्य विधि नहीं हो सकते है, क्योंकि, इस स्थल में याग का रूप जो द्रव्य उसका उल्लेख या प्राप्ति नहीं है।

"आघाराग्निहोत्रम्" = आघार वाक्य एवम् अग्निहोत्र वाक्य अनुवाद है, "अरूपत्वात्" इस स्थल में याग का रूप द्रव्य और देवता श्रुत नहीं है।। १३ ।।

## संज्ञोपबन्धात् ।। १४ ।।

**शा० भा०—संज्ञोपबन्धश्च भवति अग्निहोत्रं नाम होमं जुहोतीति, आघारसंज्ञकं कर्म करोतीति संज्ञाविशिष्टावाघारहोमौ विधीयेते। न च विज्ञायेते कोऽसावघारो नाम कर्मविशेषः? कश्चाग्निहोत्रसंज्ञक इति? ननु विज्ञायत आघारणम्-आघारः, हवनं-होमः। यद्याघारणसामान्यम्, होमसामान्यं च विधीयेते, विज्ञातपूर्वौ तर्ह्याघारहोमौ। तेनानुवादौ। अथाव्युत्पन्ना उभयोरपि संज्ञा, तथाऽपि नाऽऽघाराग्निहोत्रसामान्यमुच्येत, विशेषाश्रयत्वात् संज्ञायाः। न च स विशेषो गम्यत इत्यपूर्वाघारहोमविधीः[1]। नावकल्प्येते। अपि च कथं क्रिया साधनशब्देनोच्येत। ईप्सिततमं हि यत्साधनम्, तद् द्वितीयान्तेनोच्यते। क्रिया तिङन्तेन। अनुवादपक्षे क्रियाणां समुदायोऽर्थान्तरम्, तदीप्सिततमं साधनं भविष्यति ।। १४ ।।**

भा० वि०—नन्वाघाराग्निहोत्रसंज्ञयोः यौगिकत्वाद्विनापि रूपं उद्भिदादिवत्संज्ञयैव कर्मविशेषो विज्ञायते इति चोदयति—**नन्विति**। उद्भित्संज्ञया पश्वनुत्पादककर्मव्यावृत्तेः अतिदेशिकद्रव्यदेवतालाभाच्च पशूत्पादकचित्रादिव्यावृतेः तत्र विशेषज्ञानसंभवेऽपि अत्र व्यवस्थितप्रकृत्यलाभेनातिदेशायोगात् द्रव्यदेवतासिद्धेः अनाघाराहवनरूपकर्मव्यावृत्तावपि संज्ञयाघारणहवनरूपकर्मान्तरा व्यावृत्तेः विशेषज्ञानासंभवेनाघारणहवनसामान्ययोरेव संज्ञित्वापत्तेः, तयोश्च दध्यादिवाक्यविहितविशेषान्तर्गतत्वेन ज्ञातपूर्वत्वादनुवादतैव स्यादिति परिहरति—**यदित्यादिना**।

ननु विधिस्वभावादेव विधेयान्तरव्यावृत्तकर्मविशेषप्रतीतेः अयौगिक्यामपि संज्ञायां विशेषज्ञानं सेत्स्यतीत्याशङ्कते—**अथेति**। तत्र वक्तव्यं संज्ञाया व्यावृत्ति-

---

१. ब. आघारोहोमविधानं नावकल्पते।

रित्यर्थः उताघारणहवनसामान्यं अथ तद्विशेष इति ? नाद्य इत्याह—**तथापीति**। विधिस्वभावाद्विधेयान्तरव्यावृत्तिप्रतीतावपि नन्योगशून्यायाः संज्ञायाः व्यावृत्तिवाचित्वं न संभवतीत्यर्थः। नद्वितीय इत्याह—**नाघारणेति**। विशेषस्यैव विधेयतया संज्ञाविषयत्वेनाविधेयस्य सामान्यस्य तदसंभवादित्यर्थः। न तृतीय इत्याह—**न चेति**। विधेयत्वेन वाच्यत्वार्हस्य विशेषस्य रूपं विनानवगतेरित्यर्थः। फलितमाह—**इतीति**। द्वितीयान्ते संज्ञोपबन्धादित्येवमर्थतयापि सूत्रं व्याचष्टे—**अपि चेति**। साधनशब्देनेति। आघारमग्निहोत्रमिति च द्वितीयान्तेन कारकशब्देनेति यावत्। कानुपपत्तिस्तत्राह—**ईप्सिततमं हीति**। केन तर्हि क्रियोच्यते ? तत्राह—**क्रियेति**। अस्मत्पक्षे तु नायं दोष इत्याह—**अनुवादेति**। यद्यपि समुदायस्य समुदादिभ्योऽत्यन्तभेदो नास्ति तथापि समुदायिनामेव प्रत्येकरूपात् सामान्यरूपस्य भेदात् तस्यैव च समुदायशब्दवाच्यत्वात् तस्य चैकधर्मान्वियाख्यप्रचयद्वारा प्रत्येकरूपैः साध्यत्वात् कर्मकारकत्वोपपत्तिरित्याशयः। पूर्वं स्ववाक्यगतरूपाभावेऽपि वाक्यान्तरविहितरूपेण रूपवत्त्वमाशङ्क्येतरेतराश्रयदोष उक्तः ॥ १४ ॥

त० वा०—अपि च।

> विशेषप्रतिपत्यर्थं संज्ञा सर्वा प्रवर्त्तते।
> यदा तदा विशेषोऽसौ कोऽस्येति न निरूप्यते ॥
> सामान्यं स्यादिदं ज्ञेयं ज्ञातत्वान्न क्रियान्तरम्।
> तदज्ञेयतया नात्र[1] विधानमवकल्पते ॥
> क्रियाश्चाकारकत्वेन युज्यन्ते न द्वितीयया।
> ताभिस्तु साध्यमानत्वात्समुदायस्य कर्मता ॥

आघारम्, अग्निहोत्रमिति द्वितीयानिर्देशः। क्रियेप्सितस्य कारकस्य युज्यते। न च जुहोत्याघारयतिभ्यामात्मैवाप्तुमिष्यते। स्वात्मनि क्रियाविरोधात्। समुदायः पुनर्निष्कृष्य शब्देनार्थान्तरात्मनोच्यमानः शक्यः साध्यत्वेनाभिधातुम्। यथौदनपाकं पचतीति विशेषः सामान्येनेप्सिततमः कर्मत्वेनोच्यते।

ननु च समुदायस्य[2] समुदायिभ्योऽव्यतिरेकान्न कथं चित्साध्यत्वमवसीयत इत्युक्तमेव कर्मत्वम्। न। अवयवक्रियाप्रचयसाध्यत्वात्समुदायस्य। समस्ताभ्यो हि समुदायस्याव्यतिरेकादेवमुपादानं न स्यात्, प्रत्येकरूपात्तु समस्तरूपमर्थान्तरमिष्टम्। न च प्रत्येकरूपैर्विना समस्तरूपनिष्पत्तिरित्युपपन्नमीप्सिततमत्वम्।

ननु चैवमादयः समुदायिवचनत्वेनावधारिता इति समुदायिनां स्वात्मनि क्रियाविरोधस्तदवस्थ एव स्यात्। नैष दोषः। समुदायिवचनेनापि प्रातिपदिकेन

---

१. क० न्यत्र। २. क० समुदायस्याव्यतिरेकात्।

समुदायोऽपि लक्षणया गम्यते। ततश्चैकत्ववत्कर्मत्वं समुदायस्य प्रत्येष्यते। न च सामान्यविशेषभेदेनापि भवतः क्रियात्वकर्मत्वे पाकत्वसंभवतः। सामान्यविशेषशब्दयोर्भेदेनाऽनुपादानात्। एतच्च पौर्णमासीमित्यत्रापि सिद्धान्ते योज्यम्। तस्मात्तद्वदेव समुदायानुवादत्वम् ॥ १४ ॥

न्या० सु०—संज्ञोपबन्धश्चेति सूत्रव्याख्यानार्थं भाष्यं व्याचष्टे—**अपि चेति**। असौ संज्ञाप्रतिपाद्यो विशेषोऽस्य जुहोत्याघारयति वाक्यस्य कर्मणः क इति। रूपं विना न निर्द्धार्यतइत्यर्थः। नन्विति भाष्येणाघाराग्निहोत्रसंज्ञायायौगिकत्वेनोद्भिदादिवत्संज्ञयैव कर्मविशेषो विज्ञायतइत्याशङ्क्य, यदीत्यनेनोद्भित्संज्ञया पश्वनुत्पादककर्मव्यावृत्तेरातिदेशिकद्रव्यदेवतालाभाच्च पशूत्पादकचित्रादिव्यावृत्तेर्विशेषज्ञानसम्भवेऽप्यत्र व्यवस्थितप्रकृत्यलाभेनातिदेशायोगाद्दध्यादिवाक्येषु च शुद्धगुणविध्ययोगेनोपदेशतोऽपि द्रव्यदेवताऽलाभात्संज्ञया नाघारयागाहवनरूपकर्मव्यावृत्तावप्याघारणहवनरूपकर्मान्तराव्यावृत्तेर्विशेषज्ञानासम्भवेनाघारणहवनसामान्ययोरेव संज्ञित्वापत्तेः, तयोश्च दध्यादिवाक्यविहितविशेषान्तर्गतत्वेन ज्ञातपूर्वत्वादनुवादतैव स्यादिति परिहृतम्। तद्व्याचष्टे—**सामान्यमिति**। आघाराग्निहोत्रसंज्ञयोर्यौगिकत्वेऽप्याघारणहवनसामान्यं प्रतिपाद्यं स्यादिदं चान्यत एव ज्ञातत्वान्न क्रियान्तरवद्विधानार्हमिति, वत्यर्थकल्पनया योज्यम्। अथेति भाष्येण विधिस्वभावादेव विधेयान्तरव्यावृत्तकर्मविशेषप्रतिपत्तेरयौगिक्यामपि संज्ञायां विशेषज्ञानं सेत्स्यतीत्याशङ्क्य, तथापीत्यनेन विधिस्वभावाद्विधेयान्तरव्यावृत्तिप्रतीतावपि नञ्योगशून्यायाः संज्ञाया व्यावृत्तिवाचित्वाभावात्, तिष्ठतेरपि गतिनिवृत्तिवाचित्वे सत्युपवेशनादावपि प्रयोगापत्तेरुर्ध्वत्वोपलक्षणार्थत्वेन गतिनिवृत्त्यर्थत्वस्मृतेर्व्याख्येयत्वाच्छुद्धयोश्चाघारणहवनयोः सामान्यरूपत्वेनाविधेयतया विधानार्थं वाच्यत्वानर्हत्वाद्विधेयत्वेन च वाच्यत्वार्हस्य विशेषस्य रूपं विनानवगतत्वेनापूर्वविशेषविधिर्युज्येतेति परिहृतम्। तद्व्याचष्टे—**तदज्ञेयतयेति**। तस्य विधानार्हस्यापूर्वस्य क्रियान्तरस्यान्यत्र दध्यादिवाक्येषु विधिर्युज्यते, न त्वाघाराग्निहोत्रवाक्ययोः तत्र रूपाभावेनाज्ञेयत्वादित्यध्याहारेण योजना। नात्रेति तु पाठः सुगम एव। द्वितीयान्तसत्संज्ञोपबन्धादित्येवमन्यथा सूत्रव्याख्यानर्थमपि चेति भाष्यं व्याचष्टे—**क्रियाश्चेति**। कारकवाचित्वेन साधनशब्दव्याख्यानाय—**कारकत्वेनेत्युक्तम्**। उत्तरार्द्धेनानुवादेति भाष्यं व्याख्यातम्। श्लोकं व्याचष्टे—**आघारमिति**। समुदायस्य समुदायिभ्योऽत्यन्तभेदाभावेऽपि साध्यत्वोपपत्तिर्दृष्टान्तेनोक्ता।

ननु सामान्यशब्दोक्ताया भावनातो विशेषशब्दोक्तस्य धात्वर्थस्य व्यापाररूपत्वेनाभेदवद्भाव्यभाव्यनिष्ठत्वेन भेदस्यापि भावद्युक्तं कर्मत्वं समुदायस्य तु समुदायिभ्यः कथंचिदपि भेदाभावात्कथं कर्मतेत्याशङ्कते—**ननु चेति**। समुदायिभ्यः समुदायस्य भेदाभावेऽपि समुदायिनामेव प्रत्येकरूपासामस्त्यरूपस्य भेदात्, तस्यैव च समुदायशब्दवाच्यत्वादेकधर्मान्वयाख्यप्रचयद्वारा च प्रत्येकरूपैः साध्यत्वात्कर्मत्वोपपत्तिरिति '**क्रियाणामि**'ति

भाष्यसूचितं परिहारमाह—**नेति**। समुदायस्यावयवभूतानां क्रियाणां प्रचयेन साध्यत्वान्नायुक्ता कर्मतेत्यर्थः। एतदेव विवृणोति—**समस्ताभ्यो हीति**।

नन्वाघाराग्निहोत्रशब्दयोः पौर्णमास्यमावास्याशब्दन्यायेन प्रत्येकरूपवाचित्वावधारणात्प्रत्येकरूपस्यैव कर्मत्वं वाच्यम्। तच्च विरुद्धमित्याशङ्कते—**ननु चेति**। अवाच्यस्यापि सामस्त्यरूपस्य लक्षणयाऽवगतेः। कर्मत्वं भविष्यतीति परिहरति—**नैष इति**। ननु विधावप्योदनपाकं पचतीतिवद्भावनाधात्वर्थलक्षणसामान्यविशेषभेदेनापि क्रियाकर्मत्वोपपत्तेर्न कर्मत्वनिर्देशोऽनुवादत्वहेतुरित्याशङ्क्याह—**न चेति**। जुहोत्याघारयतिसामानाधिकरण्यं विनाग्निहोत्राघारशब्दयोर्धात्वर्थवाचित्वानवगतेः जुहोत्याघारयत्योश्च पाकमितिवद्भावनाख्यसामान्यशब्दादाख्यातप्रत्ययाद्भेदेनानुपादानाद्धात्वर्थस्य कर्मत्वम्, यद्भवतो अभिमतं तन्न सम्भवतीत्यर्थः। ननु तत्प्रख्याधिकरणे—

सामाधिकरण्यं च साध्यांशेनेह कर्मण।

इति वार्त्तिके जुहोत्याघारयत्यर्थयोः शब्दभेदानुपादानेऽपि साध्यत्वस्योक्तत्वात् द्वितीयान्तसञ्ज्ञोपबन्धस्य पूर्वपक्षहेतुमात्रत्वप्रतीतेः किमात्रातिनिर्बन्धेनेत्याशङ्क्याह—**एतदिति**। पौर्णमासीसिद्धान्तौपयिकत्वान्निर्बन्ध इत्याशयः।

भाष्यकृता तु धात्वर्थस्य भाव्यनिष्ठत्वाभावेन करोत्यर्थक्रियात्वाभावादकारकत्वे च क्रियारूपया भावनयाऽनन्वयापत्तेः, विधिसामर्थ्याच्च करणत्वावगमेऽपि कर्तृव्यापारव्याप्यत्वं विना करणत्वायोगेनार्थाद्व्याप्यरूपकर्मत्वप्रतीतेर्विधिपक्षेऽपि द्वितीयान्तसञ्ज्ञोपबन्धोपपत्तेरेतद्व्याख्यानादरेणाद्यैव व्याख्या य एवं विद्वान्पौर्णमासीसञ्ज्ञकं यागं यजतइत्यादिना पौर्णमासी सिद्धान्ते योजिता। द्विविधमपि सूत्रार्थमुपसंहरति—**तस्मादिति** ॥ १४ ॥

भा० प्र०—अग्निहोत्र वाक्य एवम् आघार वाक्य विधि नहीं है, इस प्रसङ्ग में पूर्वपक्षी ने अन्य कारणों का निरूपण करते हुए कहा है—"संज्ञोपबन्धात्" अग्निहोत्र और आघार वाक्य को विधि मानने पर अग्निहोत्र एवम् आघार इन दो कर्मों में विधि होगी। किन्तु, इनका रूप न होने से वैशिष्ट्य की अवगति नहीं होती है और वैशिष्ट्य के न रहने पर सामान्याकार होने से नाम भी नहीं हो सकता है, क्योंकि वैशिष्ट्य ही नाम है और नाम ही वैशिष्ट्य है। ऐसी स्थिति में विषय भी नहीं हो सकता है, क्योंकि सामान्य अनुष्ठेय नहीं हो सकता है। इनका विशेष आकार नहीं माना जाता है, वरन् अग्निहोत्र एवम् आघार होम है—यह सामान्य आकार ही अवगत रहता है। इनका सामान्य आकार ही ज्ञेय है, ऐसी स्थिति में विधि नहीं कहा जा सकता है, वरन् अनुवाद ही कहा जायेगा, क्योंकि सामान्य पूर्व से ही ज्ञात है और जो **पूर्व** से ज्ञात होता है, वह विधेय नहीं होता है ॥

"संज्ञोपबन्धात्" = संज्ञा का = नाम का उपबन्ध अर्थात् उल्लेख होने से—वह विधि नहीं हो सकती ॥ १४ ॥

**अप्रकृतत्वाच्च ॥ १५ ॥**

**शा० भा०—न च प्रकृतमपि द्रव्यदेवतमाघारे विद्यते, येन रूपवान् स्यात् । तस्मादेतावपि समुदायशब्दाविति ॥ १५ ॥ युक्तिः ॥**

भा० वि०—सम्प्रत्याघारस्य दर्शपूर्णमासप्रकरणपातित्वेन स्वयं प्रकृतत्वात् तत्संन्धितया वाक्यान्तरप्रकृतस्यापि द्रव्यदेवतस्याभावात् इत्येवं "अप्रकृतत्वाच्च" इति सूत्रं व्याचष्टे—**नचेति** । पूर्वपक्षमुपसंहरति—**तस्मादिति** ॥ १५ ॥

त० वा०—अथोच्येत यथा 'गुणस्तु श्रुतिसंयोगात्" इत्यत्र पक्षेऽन्येषां गुणविधित्वाद्रूपलाभ आशङ्कितः । तथा'ऽग्निहोत्रं जुहोती'त्युत्पत्तिवाक्यत्वेन तण्डुलादिसंयुक्तै रूपलाभ इति । न । तत्र स्ववाक्यगतपौर्णमास्यमावस्यापदनिमित्तत्वादनुवादाशङ्कायाः । न चेह तण्डुलादिवाक्येऽग्निहोत्रशब्दोऽस्ति । यस्त्वस्ति जुहोतिशब्दः, स सर्वहोमसाधारणत्वान्नाग्निहोत्रविधिपर एव । ननु च प्रकरणाद्विशेषोऽवगम्यते । अत आह—**अप्रकृतत्वाच्चेति** । न ह्युत्पत्तिवाक्ये[1] अस्ति कर्मणां प्रकरणम् । फलसम्बन्धोत्तरकालत्वेन कथंभावात्मकस्य प्रकरणस्य प्रयोगवाक्यधीनप्रसू[2]तत्वात् ।

तत्रैतत्स्यात्तदारूढस्यैव द्रव्यदेवतासम्बन्धो भविष्यतीति । तदुच्यते । अनभिज्ञातरूपस्य फले विधातुमशक्यत्वात् । अतः प्रसिद्धरूपाण्येव तेन ग्रहीष्यन्ते । ननु च 'तस्याघारमाघार्य' इति, 'इन्द्र ऊर्ध्वो अध्वरः' आघारमिति च द्रव्यमान्त्रवर्णिकदेवताविधौ नामप्रयोगाद्रूपं विज्ञास्यते । न । आघारशब्दस्य धात्वर्थाव्यतिरेकेण विशेषणकत्वात् । तत्र नाम्ना विशेषः प्रतीयते, यत्र कंचिद्विशेषमुपादाय नामानि प्रवर्तन्ते । अत्र पुनः संनिहितावयवार्थत्वात्समुदायप्रसिद्धिमन्तरेणाऽऽघारशब्दः क्षरणमात्रवाचित्वान्न विशेषे वर्तते ।

ननु च प्रकरणाद्विशेषो लप्स्यते । तत्रापि सूत्रम् । न ह्याघारः प्रकृतः परप्रकरणपातित्वात्, दर्शपूर्णमासप्रकरणमेतत्सकलम्, नान्यस्य प्रकरणस्यान्यत्रावकाशः । सन्निधेर्विशेषागम इति चेत् ? अत्रापि सूत्रम्; न वाक्यबलीयस्त्वेनात्र प्रकृतैरपि सम्बन्धात् । तदेवं वाक्यप्रकरणयोरविरोधो यदि द्रव्यदेवतासंयुक्तान्येवोत्पत्तिवाक्यान्यभ्युपगम्यन्ते, यत्र यः कश्चिद्रूपलेशोऽस्ति, तत्र निरूपिते कर्मणि केन चित्प्रकारान्तरेण गुणान्तराणि कल्पन्ते । सर्वेषु चोर्ध्वत्वं तण्डुलादि किंचिद्रूपमस्ति । न त्वाघारमाघारयति, अग्निहोत्रं जुहोतीत्यनयोः । तस्मात्समुदायानुवादौ ॥ १५ ॥

---

१. क० ह्युत्पत्तिवाक्ये कर्मणां फलसम्बन्धो । २. क० प्रभूतितत्वात् ।

न्या० सु०—न च प्रकृतमपीति भाष्येणैतत्सूत्रमाघारे प्राकरणिकाद्वाक्यान्तरादपि रूपानवगतेररूपत्वोपपादनार्थतया व्याख्यातमित्याभाति। तत्प्रख्याधिकरणे वाक्यान्तरतो द्रव्यदेवतालाभस्योक्तत्वादलाभे वोर्ध्वादिवाक्यैरप्याघार्यद्रव्यं विनाघारणविध्ययोगापत्तेर-युक्तं मत्वा स्वयमाघाराग्निहोत्रवाक्ययोररूपत्वेऽपि वाक्यान्तरेभ्यो रूपावगतेर्विधेयत्वोपपत्ति-शङ्कानिराकर्त्तुमेतत्सूत्रमिति वक्तुमाशङ्कां तावदाह—**अथेति**। तत्र वाक्यान्तरविहिते रूपे सति कर्मविधिः, कर्मणि च विहिते सति तत्र रूपविधिरितीतरेतराश्रयम्। शब्दार्थस्य प्रयोग-भूतत्वादिति सिद्धान्तसूत्रावयवेन परिहरिष्यमाणत्वादनुपन्यस्य, दृष्टान्तवैषम्येण परिहार-माह—**नेति**। न चोर्ध्वादिवाक्येष्वाघारशब्दोऽस्तीत्यपि वाक्यसम्मन्त्रद्रव्यविधावाघारशब्दा-दप्यनुवाद्यविशेषाप्रतीतेर्वक्ष्यमाणत्वान्नोक्तम्। अनेन च तण्डुलादिवाक्येन प्रकृताग्निहोत्र-शब्दाभावादित्येवं सूत्रं योजितम्।

ननु यथा 'व्रीहिभिर्यजेते'त्यादौ दर्शपूर्णमासशब्दाभावेऽपि प्रकरणाद्यजेस्तद्विषयत्वाव-धारणम्, तथेह जुहोतेरग्निहोत्रविषयत्वावधारणं भविष्यतीत्याशङ्कते—**ननु चेति**। प्रकृति-शब्दाभावे व्युत्पाद्यावुत्पत्तिवाक्ये प्रकरणाभावादित्येवमेतच्छङ्कानिरासेऽप्येतत्सूत्रमवतारण-पूर्वं योजयति—**अत इति**। उत्पत्तिवाक्येऽपि सामान्यफलकरणत्वप्रतीतेरितिकर्त्तव्यता-काङ्क्षात्मकप्रकरणसद्भावेऽप्यज्ञातरूपस्य विध्ययोगात्फलकरणत्वप्रतीत्यभावाभिप्रायेणैतदुक्तं प्रयोगवाक्यारूढस्यैव तर्हि जुहोत्यर्थस्य फलकरणत्वात्प्रकरणेन द्रव्यदेवतान्वयोऽस्तीत्य-ज्ञाताशयः शङ्कते—**तत्रेति**। स्वाशयं प्रकटयन्परिहरति—**तदिति**। तण्डुलादिवाक्यविहि-तानां तु कर्मणां प्रज्ञातरूपत्वात्फलान्वये सति प्रकरणोपपत्तेः प्रकरणेन ग्रहणं युक्तमित्याह—**अत इति**।

नन्वाघारशब्दस्य मन्त्रद्रव्यविध्योर्भावादाघाररूपं ज्ञास्यतइत्याशङ्कते—**नन्विति**। विधौ सकलमन्त्रपाठेऽपि लाघवार्थं वार्त्तिके प्रतीकमात्रग्रहणं धात्वर्थानधिकार्थत्वान्नाघार-शब्दो धात्वर्थं विशेष्टुं शक्नोतीति परिहरति—**नेति**। एतदेवोपपादयति—**तत्रेति**। आघा-रेऽप्याशङ्कोपन्यासपूर्वकं तन्निरासेऽपि सूत्रं योजयति—**नन्विति**। एतदेव विवृणोति—**दर्शेति**। दर्शपूर्णमासप्रकरणपठितानामपि प्रयाजानामवान्तरप्रकरणस्याभिक्रमाधिकरणे व्युत्पादयिष्यमाणत्वादेतदप्यज्ञातरूपाघारविध्ययोगाशयं भाष्यमप्यस्मिन्नर्थे योज्यम्। कथं भावात्मकप्रकरणाभावेऽप्यधिकारलक्षणसान्निध्यात्मकात्प्रकरणाद्विशेषावगतिरित्याशङ्कोपन्या-सपूर्वं तन्निरासेऽपि नास्ति प्रकृतमस्येति विग्रहस्थषष्ठ्युक्तस्यसम्बन्धस्य नञा वयं प्रकृतमेवेति च प्रकृतशब्दो अवधारणमभिप्रेत्यैतत्सूत्रं योजयति—**सन्निधेरिति**। स्रौवाघारस्याप्याघार-यतिनानुवादोपपत्तेरित्याशयः। तण्डुलादेरपि वाक्यबलीयस्त्वेनाप्रकृतहोमान्वयसूचनार्थं बहुवचनम्।

नन्वेवं सति पूर्वपक्षेऽप्युदूर्ध्वत्वतण्डुलादेः स्रौवाघारजयाहोमादिभिरप्यन्वयः स्यादित्या-शङ्क्याह—**तदिति**। ज्ञातरूपाणां फलान्वयेन कथम्भावात्मकप्रकरणोपपत्तेः तस्य चापू-र्वसाधनत्वलक्षणार्थं वाक्येनापेक्षितत्वेनाविरोधादबाधः। सिद्धान्ते त्वज्ञातरूपयोराघाराग्नि-

होत्रवाक्योत्पादितयोः कर्मणोः फले विधानाशक्तेः कथंभावात्मकप्रकरणायोगादधिकारात्मकस्य च प्रकरणस्य वाक्येनानपेक्षणाद्विरोध इत्याशयः। तत्राधिकारात्मकस्य प्रकरणस्य वाक्यविरोधे सत्येवं वक्ष्यमाणप्रकारेणाविरोध इति, तत्रशब्दार्थे तच्छब्दो योज्यः।

नन्वेवमपि द्रव्यविशिष्टकर्मवाक्ये देवताभावात् देवताविशिष्टकर्मवाक्ये च द्रव्याभावादूर्ध्वादिवाक्ये वोभयाभावात्कर्मान्तरगुणस्य च कर्मान्तरेऽसन्वयादेकेन च होमानिष्पत्तेर्द्रव्यं च विनोर्ध्वत्वादिमात्रेणाघारानिष्पत्तेर्न विधिर्निवहतीत्याशङ्क्याह—**यत्र चेति**। अन्येनापि रूपेण कर्मान्तराद्व्यावृत्तेः कर्मणि विहिते येन विना कर्मानिष्पत्तिः तत्कर्मान्तरगतमन्यथानुपपत्त्या कल्प्यतइत्यर्थः। कश्चिदित्यनेनाद्रव्यं देवतस्याप्यूर्ध्वत्वादेः कर्मरूपत्वे द्रव्यदेवतादविशेष उक्तः। एवं च यद्यूर्ध्वत्वादिवाक्येष्वपि न किंचित्रूपं स्यात् ततो विशेषाग्रहणेनेतरयोरपि विधित्वं स्यात् न त्वेतदस्तीत्याह—**सर्वेषु चेति**। तस्मादिति पूर्वपक्षोपसंहारभाष्यम्—**तस्मादिति** ॥ १५ ॥

भा० प्र०—आघार वाक्य एवं अग्निहोत्र वाक्य अपूर्व कर्म का विधायक नहीं हो सकता है, इसके समर्थन में कारण प्रदर्शन करते हुए कहा गया है—"अप्रकृतत्वाच्च" आघार वाक्य में याग का रूप श्रुत अर्थात् उपदिष्ट न होने पर भी इनको अपूर्व कर्म का विधायक माना जा सकता था, यदि उनके समीप में प्रकरण में पठित अन्य वाक्य से द्रव्य एवं देवता का उपदेश रहता, किन्तु, ऐसा नहीं है, ऐसी स्थिति में उन्हें विधि नहीं कहा जा सकता है अपितु अनुवाद ही मानना होगा, अतः दध्ना जुहोति एवम् "ऊर्ध्वमाघारयति" इत्यादि वाक्य कर्म का विधान करता है।

"अप्रकृतत्वात्" = इनका प्रकृत अर्थात् प्रकरण में पठित या समीपवर्ती द्रव्यदेवता प्रकाशक वाक्य न होने से 'च' = यह अपूर्व कर्म का विधायक नहीं है। पूर्वपक्ष ॥ १५ ॥

### सिद्धान्तः

## चोदना वा शब्दार्थस्य प्रयोगभूतत्वात्तत्संनिधेर्गुणार्थेन पुनःश्रुतिः ॥ १६ ॥ सि०

**शा० भा०—न चैतदस्ति समुदायशब्दाविति। कर्मान्तरचोदने स्याताम्। कुतः? शब्दार्थस्य प्रयोगभूतत्वात्। आघारयति, जुहोतीति होमाघारौ प्रयोक्तव्याविति शब्दार्थः। तेन कर्मान्तरे विधीयते इत्यवगच्छामः। आघाराग्निहोत्रशब्दौ च हवनाघारणसामान्यवाचिनौ प्रज्ञातौ। अतो नाऽविज्ञातार्थौ। तेन रूपवन्तौ सन्तौ विधीयेते॥**

**यदुक्तम् 'ऊर्ध्वमाघारयति, दध्ना जुहोति' इत्येवमादिभिर्विहतत्वादनुवादाविति। नैतदेवम् न ह्येते होमाघारौ। विधातुं शक्नुवन्ति। 'ऊर्ध्वमाघारयति,**

दध्ना जुहोती'ति च नैतदुक्तं भवति—आघारः कर्तव्यो होमः कर्तव्य इति। किं तर्हि? ऊर्ध्वताघारसंबन्धः[1] कर्तव्यः, दधिहोमसंबन्धः कर्तव्य इति। तस्मादप्राप्तत्वान्नानुवादो। ननु संबन्धे विहितेऽर्थाद्धोमाघारौ भविष्यतः नैतदेवम्। अस्मिन् हि सति विधानेन संबन्धः। तस्मान्नार्थादापद्येते होमाघारौ। अतोऽपूर्वौ विधीयेते इति ब्रूमः।

नन्वाघारयति, जुहोतीति होमाघारगतो व्यापारः श्रूयते, न दध्यूर्ध्वतादिसंबन्धः। सत्यं न श्रूयते। तत्संनिधेर्गुणार्थेन व्यापारश्रवणमवकल्पिष्यते[2]। ननु पदार्थान्तरगतं व्यापारं श्रुतिर्न शक्नोति वदितुम्। सत्यमेवमेतत्[3], स्वपदार्थगतं वक्ष्यति, तं तु स्वपदार्थं गुणशब्दो विशेक्ष्यति। स एव[4] विशिष्टः प्रत्येष्यत इति। भवेदेतद्विशिष्यात्स्वपदार्थं गुणशब्दो, न त्वेवंगुणगतो व्यापारः प्रतीयेत। तत्र किं भविष्यति? अव्याप्रियमाणेऽपि गुणे शब्दार्थोऽवक्लृप्तो भविष्यति[5]। गुणवचनसंनिधिरिदानीं किमर्थः? अनर्थकस्तु[6]। कथं पुनरनर्थको नाम वेदे[7] भवितुमर्हति। सत्यर्थे नानर्थकोऽसति त्वर्थे किमन्यदुच्येत। एवं तर्हि वाक्याद्भविष्यति, श्रुत्यर्थे सति न वाक्यार्थोऽवकल्प्यते। सत्यमेवमेतत्। अविवक्षिते त्ववकल्पिष्यते। कथमविवक्षा। गुणवचनस्याप्रमादपाठात्। स्वपदार्थस्य च शब्दान्तरेण विहितत्वात्। तस्मात्सिद्धं गुणार्थेन दध्ना जुहोतीत्येवमादीनां पुनःश्रुतिरिति। जुहोतेरुच्चारणं चानुवादो गुणसम्बन्धार्थः। यदि जुहोतीत्यनुवादः केनेदानीं गुणो विधीयते। दधिशब्देनेति मा वोचत। नन्विदानीमेव वाक्याद् गुणगतो व्यापारो गम्य इत्युक्तम्। सत्यमेवमेतत्। अविधीयमानस्तु कुतो गम्यत इति प्रमाणमस्य नावगम्येत। असति प्रमाणे व्यामोहः स्यात्।

एवं तर्हि विधायकौ जुहोत्याघारयतिशब्दौ। कस्य तर्ह्यनुवादः? धात्वर्थस्येति ब्रूमः। यदि विधायकौ, पूर्वमेव विहिते स्वार्थे, किमर्थं पुनरुच्चार्येते। वाक्यार्थो यः, तं विधातुमित्यदोषः। तस्मात्कर्मान्तरचोदने। यदुक्तं नास्त्याघारे[8] प्रकृतं द्रव्यदेवतमिति। किमेवं सति द्रव्यदेवतेन, यदा प्रसिद्धार्थाभिधानान्निर्ज्ञातमेवास्य रूपम्। अपि च चतुर्गृहीतं वा एतदभूतस्याऽऽघारमाघार्येत्याज्यमस्य द्रव्यं मान्त्रवर्णिको देवताविधिः। इन्द्र ऊर्ध्वोऽध्वरो दिवि स्पृशतु महतो यशो यज्ञपते इन्द्रवान् स्ववान् स्वाहेत्याघारमाघारयतीति। एवमसाविन्द्रवान् यद्यस्येन्द्रो देवता तद्यदि[9] देवताभिधानमेतदाघारस्य ततोऽनेनाऽऽघारः कृतो भवति। तस्मात्कर्मान्तरे[10] न समुदायशब्दाविति सिद्धम्॥ १६॥ आघाराग्निहोत्राधिकरणम्॥ ५॥

---

१. ब. क. ऊर्ध्वमाघार। २. ब कल्पयिष्यामः। ३. ब. सत्यमेतत्। ४. क० एव। ५. ब. भवति। ६. ब. अनर्थकश्च। ७. क० वेदो। ८. ब. आघारस्य। ९. ब. यदि च। १०. ब. कर्मान्ते।

भा० वि०—सिद्धान्त्याह—**चोदना वेति** । वाशब्दार्थमाह—**नैतदिति** । चोदनापदार्थं सोपस्कारमाह—**कर्मान्तरेति** । स्रौवाघारचतुर्होतृहोमाद्यपेक्षयान्तरश्शब्दः ।

ननु वाक्यान्तरविहितरूपापेक्षणेऽन्योन्याश्रयापत्तेः स्ववाक्येन च रूपाज्ञानादरूपत्वे सति कथं कर्मचोदने स्याताम् इत्याक्षिपति—**कुत इति** । सूत्रावयवव्याख्यानेन समाधत्ते—**शब्दार्थस्येति** । आघारयति जुहोत्योः अन्यानाक्षिप्तविधिशक्तित्वात् कर्मप्रयोगविधानमेव वाच्योऽर्थ इत्यवगम्यत इत्यर्थः । अनेन विधिशब्दार्थस्य प्रयोगेऽनुष्ठाने भूतत्वाद्वर्तमानत्वाद्वाप्रियमाणत्वादिति सूत्रावयवार्थो दर्शितः । भवत्वनुष्ठापकत्वं विधेः ततः किमत आह—**तेनेति** । अप्रवृत्तप्रवर्तनात्मकविधिस्वभावादेव विध्यन्तरविषयकर्मान्तरव्यावृत्तविधानार्हकर्मप्रतीतेः वाक्यान्तरावगतरूपवत्तया चानुष्ठानार्हत्वात् विधिनिर्वाहोपपत्तेः स्ववाक्याज्ञातरूपस्यापि कर्मणो विधेयत्वसम्भवात् कर्मान्तरे विधीयत इत्यर्थः ।

यत्तु संज्ञायाविशेषविषयत्वात् विशेषस्य च रूपं विनासिद्धेः संज्ञोपबन्धानुपपत्तिरिति तत्रापीममेव सूत्रावयवं योजयति—**आघारेति** । हवनाघारणयोश्च विधिविषयभावनैकीभूतयोरेव संज्ञाविषयत्वात् तयोश्च विधिस्वभावादेव रूपं विना विशेषसिद्धेः संज्ञोपपत्तिरिति भावः, अत्राघाराग्निहोत्रशब्दार्थस्य प्रयोज्यात्मभूतत्वादिति सूत्रार्थः । तेन वाक्यान्तरावगतरूपवत्तयापि सम्भवत्येव विधानमिति निगमयति—**तेनेति** । पूर्वेभ्यो होमाघारेभ्यो इति पूर्वपक्षभाष्यावयवेनार्थादुक्तमनुभाषते—**यदुक्तमिति** । दूषयति—**नैतदिति** । अशक्तौ हेतुमाह—**ऊर्ध्वमित्यादिना** । दध्यादिविशेषणाक्षिप्तशक्तीनां विधीनां कर्मविधौ सामर्थ्यासम्भवादित्यर्थः । दध्यादिवाक्यानां कर्मविधित्वासम्भवफलमाह—**तस्मादिति** ।

ननूपपदश्रवणाद्दध्यूर्ध्वादिवाक्यानां शुद्धहोमा घारविध्यशक्तावपि होमाघारसम्बन्धितया दध्यूर्ध्वादि विध्यभ्युपगमात् सम्बन्धस्य च द्विष्ठस्य प्रतिसम्बन्धिभ्यां विनानुपपत्तेः अर्थात्तयोरपि प्राप्तेराघाराग्निहोत्रवाक्ययोरनुवादत्वं भविष्यतीति शङ्कते—**नन्विति** । सम्बन्धशब्दोविशिष्टविषयः कर्मणोऽन्यतः प्राप्तत्वेन विध्यनर्हत्वात् मैवमिति परिहरति—**नैतदिति** । अस्मिन्नाघाराग्निहोत्रवाक्यस्थे कर्मविधाने प्रत्यक्षे सति सम्बन्धविधानेन सम्बन्धिमात्रं विधीयत इत्यर्थः, अस्मिन् पक्षे सम्बन्धिशब्देन स एवोक्तः सम्बन्धविधेरनाक्षेपकत्वे फलितमाह—**तस्मादिति,** होमाघारयोरन्यतः प्राप्तिफलमाह—**अत इति** ।

ननु श्रुत्या धात्वर्थावच्छिन्नभावनाविधिप्रतीतेः न वाक्यीग्रसम्बन्धविधिर्युक्त इत्याशङ्कते—**नन्विति** । व्यापारशब्दो भावनाविषयः, सम्बन्धस्य यदान्तरान्वयलभ्यत्वेनाश्रुतत्वमङ्गीकृत्य सूत्रशेषव्याख्यानेन परिहरति—**सत्यमिति** । तस्य-

धात्वर्थावच्छिन्नावनाख्यकर्मणस्सन्निहिताघारागिनहोत्रविधिप्राप्तत्वेनाविधेयत्वात् वाक्यीयगुणविध्यर्थं दध्यादिवाक्ये व्यापाराख्यकर्मश्रवणं न कर्मविधानार्थमित्यर्थः, नन्वाघारेत्यादि चोद्याशयं विवृणोति—**ननु पदार्थान्तरेऽपीति**। सत्यं न श्रूयत इति परिहाराशयं विवृणोति—**सत्यमिति**। यद्यपि विधिः स्वपदार्थाख्यधात्वर्थतमेव व्यापारं विधास्यति तथापि भावनाविशेषणभूतं स्वपदार्थं गुणशब्दो विशेक्ष्यतीति गुणस्य धात्वर्थद्वाराभावनाविशेषणत्वाद्विधेयत्वोपपत्तिरित्यर्थः।

ननु धात्वर्थावच्छिन्नभावनायाः प्राप्तत्वेनाविधेयत्वात् कथं तद्विशेषणतया गुणविधिस्तत्राह—**स एव इति**, सः स्वपदार्थरूपो धात्वर्थः। एष भावनाख्यव्यापारविशेषणीभूतस्सन् गुणविशिष्टो विधिश्रुत्या प्रत्येव्यते विधास्यत इत्यर्थः, गुणविशिष्टधात्वर्थावच्छिन्नाया अप्राप्तत्वात्तादर्थ्येन विधानमिति भावः, यदि साक्षाद्गुणो न विधीयते ततः पुरुषस्य तत्राप्रवर्तितत्वात् तत्परित्यागेनापि कथंचिदनुतिष्ठतः कृतार्थता स्यादिति मन्वानश्चोदयति—**भवेदिति**। यद्यपि तस्य भावनाख्यस्य व्यापारस्य सम्बन्धिनं धात्वर्थाख्यं पदार्थं गुणशब्दो विशिंषन् व्यापारमपि विशिंषन् स्यात् तथापि नानेनापि प्रकारेण गुणवच्छिन्नरूपेण व्यापारो विधेयः प्रतीयेतेत्यर्थः।

ननु भावनापरेऽपि विधावर्थाक्षेपाद्विशेषणभूतगुणानुष्ठानसिद्धेर्नेयमाशङ्का युक्तेत्याक्षिपति—**तत्रेति**। वाक्यावगतविधेयभावनाविशेषणत्वान्यथानुपपत्त्या गुणेऽपि विधिकल्पनान्तर्किंचिद्दूषणमित्याशयः, शङ्किता स्वाभिप्रायं विवृणोति—**अव्याप्रियमाणेति**। व्यधिकरणे सप्तम्यौ विधेयायाभावनाया धात्वर्थाधीननिरूपणत्ववत् गुणाधीननिरूपणत्वाभावेन गुणे पुंस्यव्याप्रियमाणे विधौ वा तस्मिन्नयोग्यत्वेनाव्याप्रियमाणेऽपि गुणानपेक्षधात्वर्थावच्छिन्नभावनाविधानेन विधिशब्दार्थोपपत्तेः नानुष्ठानं सेत्स्यतीत्याशयः।

ननु भावनाया गुणाधीननिरूपणत्वाभावाद्गुणानपेक्षविधानोपपत्तावपि स्ववाक्योपात्तगुणश्रुत्यानर्थक्यपरिहारार्थं गुणविधिः कल्प्यः इत्याक्षेप्ता शङ्कते—**गुणवचनेति**। भावनाविधिना गुणस्य विधातुमशक्यत्वात् भावनानिरपेक्षस्य च विधेः कल्पयितुमशक्यत्वात् अगत्यानर्थक्यमेव ज्याय इति शङ्किता परिहरति—**अनर्थकश्चेति**। परमित्यर्थे चशब्दः। सर्वस्य वेदस्याध्ययनविधिनार्थवत्त्वावधारणेनानर्थक्यायोगात् अवश्यकल्प्यो गुणविधिरित्याक्षेप्ताह—**कथं पुनरिति**। पूर्वपक्षे भावनानुष्ठानार्थत्वात् विधेः कारकशून्यायाश्चानुष्ठातुमशक्तेः विशिष्टविधिना विशेषणभूतकारकानुष्ठानाक्षेपार्थं गुणकल्प्यवचनसन्निध्यर्थवत्त्वोपपत्तेः नानर्थक्यं सिद्धान्ते तु दध्यादिवाक्ये विधेः भावनाविषयत्वेऽपि तदनुष्ठानार्थत्वाभावात् कारकानुष्ठानाक्षेपाशक्तेः सन्निध्याम्नातस्यापि गुणस्यानुष्ठानविगमादानर्थक्यमेव स्यादित्याह पूर्वपक्षी—**सत्यर्थ इति**। एवं समर्थितामाशङ्कां सिद्धान्ती दूषयति—

**एवं तर्हीति**। श्रौतार्थविधायकेनापि विधिना विधिप्रयोजनभूतगुणसमर्पणार्थं वाक्यापेक्षणात् वाक्यादेव गुणविधिर्भविष्यतीत्यर्थः भावनाविधिद्वारत्वात् गुणविधेः भावनानिरपेक्षे गुणे तात्पर्यायोगात् भावनैव तात्पर्येण विधीयतामिति मन्वानश्चोदयति—**श्रुत्यर्थ इति**। भावनाद्वारापि प्रवर्तमानस्य विधेरप्राप्तप्रापण-स्वभावत्वेनान्यतः प्राप्तायां तात्पर्यायोगात् गुणे तात्पर्यावतारो युक्त इति परिहरति—**सत्यमिति**। अविवक्षिते तु श्रौतेऽर्थे इत्यनुषङ्गः श्रुत्यर्थाविवक्षाम-सहमानः पृच्छति—**कथमिति**। अविवक्षायां कारणद्वयं तत्सन्निधेरिति सूत्रावयव-व्याख्यानेनाह—**गुणवचनस्येत्यादिना**। तस्य दध्नेत्यादिगुणवचनस्यास्मिन् वाक्ये सन्निधेः तदानर्थक्यपरिहाराय गुणे विधिसङ्क्रान्तिरेष्टव्येत्येकं कारणमनेनोक्तम् कारणान्तरमाह—**स्वपदार्थस्य चेति**। तस्य स्वपदार्थस्य धात्वर्थावच्छिन्ना भावनाख्यस्य शब्दान्तरेणाघारादिवाक्येन विहिततया प्राप्तत्वाच्चेत्यर्थः। उक्तहेतुभ्यो भावनायां विधेस्तात्पर्याभावात् गुणे तात्पर्यमवशिष्यत इति सूत्रावयवेनाह—**तस्मादिति**। एवं गुणविधिव्युत्पादनार्थत्वेन तत्सन्निधेरित्यादि सूत्रावयवं व्याख्यायेदानीमाख्यातार्थाविधावाख्यातानर्थक्यमाशङ्क्य तन्निरासार्थ-त्वेनेममेव सूत्रावयवं व्याचष्टे—**जुहोतेरिति**। तस्य कर्मणोऽग्निहोत्रादिवाक्ये चोदितस्य दध्यादिवाक्ये सन्निधानात् गुणार्था पुनः श्रुतिरिति सूत्रार्थः—**जुहोतेरिति**। धातोरेवानुवादत्वे परेणोक्तेऽपि प्रत्ययस्य केवलाप्रयोज्यत्वेनानु-वादत्वमापाद्य चोदयति—**यदीति**। न तावद्दधिशब्देन नामपदस्याख्यातं कृत्यं वान्तरेण विधिशक्त्याभावादिति भावः।

ननु वाक्यावगतस्य गुणान्वयस्याप्राप्तत्वाद्विधेयत्वप्रतीतेस्तदन्यथानुपपत्ति-कल्पितेनाख्यातेन विधिसंभवाच्छङ्कानुपपत्तिरित्याक्षिपति—**नन्विति**। गुणव्यापारो गुणभावना श्रुताख्यातत्यागेनाश्रुतकल्पनायोगान्मैवमिति पूर्वपक्षी समाधत्ते—**सत्य-मिति**। अविधीयमान इत्यनेन श्रुताख्याताविषयता कुतोऽवगम्यत इति विधि-कल्पनानुपपत्तिश्चोक्तेति विभागः क्लृप्तकल्प्ययोर्विध्योरसम्भवफलमाह—**इतीति**। ततः किमत आह—**असतीति**। प्रत्ययस्य विधिवाचित्वान्नोक्तदोष इति सिद्धान्ती परिहरति—**एवं तर्हीति**। ननु प्रत्ययस्य विधिवाचित्वे तद्वाच्याया भावनायाः धात्वर्थानवच्छिन्नायाः विधेयत्वायोगात् तस्यापि विधेयत्वापत्तिरिति शङ्कते—**कस्येति**। इहाविधीयमानस्यापि धात्वर्थस्यान्यतोऽवच्छेदकत्वेन प्राप्तेरनुवादत्वो-पपत्तिरिति परिहरति—**धात्वर्थस्येति**।

ननु स्वपदोपात्तस्यापि धात्वर्थस्यान्यतः प्राप्तत्वेनानुवादाभ्युपगमे भावनाया अपि प्राप्त्यविशेषादनुवादापत्तेः भावनाविधानाभिधानमयुक्तमिति शङ्कते—**यदीति**। विधायको प्रत्ययावित्यनुषङ्गः, भावनानिरपेक्षगुणविधानाशक्तेः गुणविधानार्थं

प्राप्ताया अपि भावनाया गुणविशिष्टरूपेण विधानोपपत्तेः तदर्थं पुनरुच्चारणमिति परिहरति—**वाक्यार्थ इति** ।

सिद्धान्तमुपसंहरति—**तस्मादिति** । आघारवाक्ये प्राकरणिकवाक्यान्तरतोऽपि रूपालाभमुक्तमनुवदति—**यदुक्तमिति** । विधिस्वाभाव्यादेव विधेयान्तरव्यावृत्ततया निर्ज्ञातस्वरूपस्य किं द्रव्यदेवतेनेति परिरति—**किमेवमिति** ।

ननु विनाद्रव्यदेवतमनुष्ठानासिद्धेः तेनापि भाव्यं तत्राह—**अपि चेति** । आज्यं प्रयाजाङ्गभूतं कोऽसौ मन्त्रवर्णः यदीयो देवताविधिरित्याशङ्क्य विनियोजकवाक्यगृहीत इत्याह—**ऊर्ध्वं इति** । कथमनेनाघारदेवताविधीयते तत्राह—**एवमिति** । असौ मन्त्रः इन्द्राभिधायकः ।

ननु मन्त्रस्येंद्रदेवतावत्त्वेपि आघारस्य किमायातमत आह—**यदि चेति** । न च परप्रकरणपठितत्वादाघारस्य वाक्यान्तरतोऽपि रूपालाभः प्रयाजादाविवावान्तरप्रकरणोपगमादितिभावः ।

प्रयोजनं तु पूर्वपक्षे दध्यादिवाक्यानां कर्मविधित्वाद्दध्यादिद्रव्यकेषु दशसु यागेषु यदग्नयेचेत्यादिवाक्यैः देवताविधानादेकदेवत्यत्वेन दध्यादिद्रव्याणां सान्नाय्यद्वयवत् सहप्रदानम्, सिद्धान्ते तु विकल्प इति आघारवाक्ये तु कर्मभेदे सत्यूर्ध्वत्वादीनां मध्ये यस्मान्तरा यस्तद्युक्तं कर्मावर्तनीयं कर्मैक्ये तु गुणलोपनिमित्तप्रायश्चित्तमेव नावृत्तिरिति प्रयोजनमिति द्रष्टव्यम् । अधिकरणार्थं निगमयति—**तस्मादिति** । कर्मान्तरे कर्मान्तरचोदने इति यावत् ॥ १६ ॥

त० वा०—कर्मचोदने स्यातामिति वक्तव्ये, अन्तरग्रहणमुपांशुयाजाधिकरणवान्नेयम् आघारयतिजुहोत्योरनन्याक्षिप्तविधिशक्तित्वात्कर्मप्रयोगविधानमेव शब्दार्थ इत्यवगम्यते । न च प्रकृताघारहोमसद्भावः । प्रकृतवाक्यस्थानां विधीनामप्राप्तदध्याद्याक्षिप्तायां विधिशक्तौ कर्मानुवादबुद्ध्यनपायात् । "न चेदन्येन शिष्टाः" इति वाऽपवादान्न विशिष्टविधानन्यायः संभवति ।

तद्दर्शयति **अस्मिन्हि सति विधाने** । प्रत्यक्षे न संबन्धः शक्नोत्यर्थादाक्षेप्तुमित्यर्थः । अथ वाऽस्मिन् हि सति संबन्धिविधौ, इतरेण गुणविधाने न संबन्ध एव केवल आश्रीयते । तस्मान्नैतद्वाक्यनिरपेक्षैः संबन्धविधिभिरर्थादपरौ कल्पयितुं होमाघारौ शक्येते, यद्बलेनाऽनयोरनुवादत्वं स्यात् । भावनाधात्वर्थावुज्झित्वा न विधिर्दध्यादिभिः संबध्यत इति चेत् सत्यमेतत् । न विधित्वं भावनात उत्तार्यते, तद्गतेनैव तु गुणः संस्पृश्यते । गुणस्य कारकविभक्त्या भावनामध्यनिक्षेपात् ।

तेनैतदुपदिष्टं भवति । सर्वत्रैव विशिष्टविधानोत्तरकालं किं प्राप्तम् ? किं न प्राप्तमित्यन्वेषणायामप्राप्तमात्रविषयोपसंहाराद्विधिर्भावनाधात्वर्थयोरनुवाद इत्य-

भिधीयते। न त्वादित एव तावनूद्य गुणैः द्रव्यं वा विधीयत इति, कदाचिदपि शास्त्रार्थाभिव्यक्तिः। तत्र पश्चात्तने व्यापारे मन्दबुद्धिप्रतिपत्त्यर्थं स्थूलेन न्यायेन कथ्यमाने शास्त्रकृता एवैता वचनव्यक्तय इति मन्यमानाः स्वयमिवान्येषामपि भ्रान्तिमुत्पादयितुमष्टौ श्रुतप्रकारान् परदौर्बल्यवतः केचिद्दर्शयन्ति—केषाञ्चिन्मतेन विधीनामष्टधाभेदनिरूपणम्, प्रथमः किल श्रुतिप्रकारो धात्वर्थविधानम्। द्वितीयः सगुणं धात्वर्थविधानम्। तृतीयः किंचिदुद्दिश्य धात्वर्थविधानम्। चतुर्थस्तत्रैव विशिष्ट-विधानम्। पञ्चमस्तु धात्वर्थोद्देशेनान्यस्य विधानम्। षष्ठस्तु धात्वर्थनान्ययोः संबन्धः सप्तमः पुनर्द्धात्वर्थविशिष्टेन प्रत्ययेनान्ययोः संबन्धः। अष्टमस्तु मुक्त्वा धात्वर्थ-मन्ययोरेव संबन्ध इति। तत्र तावद्यदुच्यते "अग्निहोत्रं जुहोति" इत्येतद्धात्वर्थ-विधानमिति। तन्निरासः तदयुक्तम्। न हि विधिर्भावनामुत्सृज्य धात्वर्थे निपतति, न च भावनां मुक्त्वाऽन्यत्र पुरुषः प्रवर्तते। सा हि पुरुषस्य स्वव्यापारोः धात्वर्थस्तु कदाचित्कर्माश्रितोऽपि भवति। यथाऽयमेव प्रक्षेपो द्व्यवदानाश्रितः, न चान्यदीयं व्यापारमन्यः शक्नोति कर्तुमिति, अवश्यं भावनाविशेषणत्वादेव दध्यादिवद्धात्वर्थो विधातव्यः। इदं च भावार्थाधिकरणेऽभिहितं यथा न धात्वर्थः साध्यत्वेन विधीयत इति। न ह्यकरणभूतोऽसौ साध्यापेक्षत्वाद्वाक्यान्तरेणापि फले विधातुं शक्येत। "सोमेन यजेत" इत्यत्रापि तद्भूताधिकरणोक्तेन मार्गेण धात्वर्थकारकाणामरुणै-कहायन्यादिवत्परस्परेणासंबध्य, भावनासंबद्धानामुत्तरकालं परस्परोपकारित्वम्। तथा च सप्तमनवमाद्ययोर्वक्ष्यतीति, न विशिष्टधात्वर्थविधानम्। भावनां च प्रति यागस्य करणत्वाद् द्रव्यं प्रति कर्मत्वे सति, "ऐकशब्द्ये परार्थवत्" इत्येतदापद्यत इत्ययुक्तमेतत्।

तथा व्रीहीन्प्रोक्षतीत्यत्र न प्रोक्षणेन व्रीहीनिति कश्चित्संबन्धः। तेनोभयोः करोत्यर्थसंबन्धान्न धात्वर्थो व्रीहिषु विधीयते। यदि तु भावनाभिप्रायेणान्यत्र विधानमुच्यते, तत्सर्वत्राविशिष्टम्। न चास्य विशिष्टविधानाद् दुर्बलत्वमस्तीति तृतीयस्थाननिवेशोऽत्ययुक्तः। पक्षद्वयोक्तमपि निराकरणं "दशापवित्रेण ग्रहं संमार्ष्टि" इत्यत्राप्यापद्यत इत्ययुक्तमन्यत्र विशिष्टधात्वर्थविधानम्।

दध्ना जुहोति इत्यत्रापि न कदाचिद्दधि होमे करोतीत्ययमर्थः शब्देनोच्यते। न हि होमस्याधिकरणत्वं शब्दात्, वस्तुतो वा सिद्धम्। न च दध्नः कर्तव्यता, नित्यं करणात्मकत्वात्। इयमपि च श्रुतिर्द्विविधादपि विशिष्टविधेर्बलीयसी, एक-विधिसंभवेऽनेकशक्तिकत्वानुपपत्तेः उभयपक्षभाविनश्च विप्रकृष्टार्थविधेरपर्यनु-योज्यत्वात्संनिकृष्टासंभवकृतमेव चास्य विप्रकृष्टस्य ग्रहणम्। तत्रोभयाश्रयणे युगपद्वि-प्रतिषिद्धसंभवापत्तिरगत्यैव गृह्यते अन्यत्र विशिष्टधात्वर्थविधानान्नातिगुर्व्येवेति, पञ्चमे स्थाने निवेशयितव्या। कामं वा शुद्धधात्वर्थविधानात् तस्य वाऽन्यत्र विधेर-नन्तरा कर्तव्या।

यत्तु प्राकाशावध्वर्यवे ददाति इत्यनेन ददातिधात्वर्थे प्राकाशाध्वर्युसंबन्धो विधीयत इति। तदयुक्तम्, वचनव्यक्त्यविवेकात्। सर्वत्र हि यच्छब्देनानूद्यमानमुपनिबध्य तच्छब्दयुक्तं विधेयमुपनीयते। तदिह यदि तावद्यद्ददातीत्यत्राध्वर्युप्राकाशयोः संबन्ध इति विधीयते, ततः सकलदानानुवादात्समस्तदक्षिणाविकारप्रसङ्गः। प्रत्ययस्थ चानेकविधिशक्तिकल्पना चोदिते सति कर्मण्यपरिहृतैव। संबन्धो हि विधीयमानः संबन्धिनं तावदाक्षिपेत्, धात्वर्थे तु पुनः स विधातव्य एव संबन्धी। अन्यथा संबन्धस्यैव संबन्धी शेषः स्यात्, न क्रियायाः।

तत्रैतत्स्याद्धात्वर्थानुरक्तः प्रत्ययो विदधदवश्यमेव तत्र विधास्यतीति। एवं तर्ह्युत्तरयोरपि श्रुत्योरत्रैवान्तर्भावाद्भेदेनोपादानं व्यर्थम्। न हि वायव्यं श्वेतमालभेत दध्नेन्द्रियकामस्य जुहुयात् इति धात्वर्थाननुरक्तः प्रत्ययः संबन्धं विदधातीति। प्रकृतिलिङ्गमात्रफलश्चालभतिरुच्चार्यमाणो न द्रव्यदेवतासंबन्धविधावात्मानुरञ्जनेन किंचिदुपकरोति। न चाऽसौ संबन्ध आलभतिना संपादयितु शक्यः, यागविषयत्वाद् द्रव्यदेवतयोः। यदि चान्यसंबन्धकरणे प्रत्ययोच्चारणसिद्धिव्यतिरिक्तं किंचिद् धातुः कुर्यात् ततो दधीन्द्रियसंबन्धविधाने किमिति होमः परित्यज्येत। किमिति वा प्रकरणलभ्योऽभ्युपगम्येत। तस्मान्न धात्वर्थेऽन्यसंबन्धविधिः। पूर्ववच्च धात्वर्थाधिकरणता, कारककर्त्तव्यता च निराकर्त्तव्या। न च धात्वर्थे संबन्धस्यापि प्राग्भावनासंगतेर्विधिरित्युक्तम्। एव तावन्न दानमात्रे संबन्धविधिः।

अथाध्वर्युविशिष्टं दानमनू[1]द्यतामध्वर्युर्वा तद्विशिष्टः। एवमपि विशिष्टा[2]नुवादाद्वाक्यभेदः। शुद्धाध्वर्य्वनुवादे तु यद्यपि संप्रदानश्रुतेरर्थाद्दानमाक्षिप्यते, तथाऽपि संप्रदानसंप्रदेयसंबन्धस्य ददातिमन्तरेणानुपपद्यमानत्वाद् द्रव्यदेवतासंबन्धादिव यजेः कल्पनमिति, न धात्वर्थेऽन्यसंबन्ध इति वचनव्यक्तिः संभवति। अवश्यं चात्र[3] दानाध्वर्य्वोश्चादेकेन प्राप्तत्वात्प्राकाशावेव विधातव्यौ। तत्रार्थात्संबन्धविधिरिति न श्रुतित्वोपन्यासो घटते। वक्ष्यति चैतज्जावन्यधिकरणे यत्रान्यतरदप्राप्तं तत्रैवेतरोद्देशेनेतरविधिरर्थात्संबन्ध। उभयप्राप्तावनुभयप्राप्तौ वा केवलसंबन्धविधानमिति। तिसृणामपि च संबन्धविधिश्रुतीनां प्रत्ययविक्षेपसाम्यान्न बलाबले कश्चिद्विशेषः नापि समवायविरोधसंभवो यत्र तज्ज्ञानमुपयुज्यत इति मन्दफलं क्रमगणनोपन्यासस्य। **तस्मात्प्रस्तुताधिकरणन्यायेन सर्वत्र विशिष्टभावनाविधिरेव तत्त्वम्। इतरत्तु तत्र तत्र स्थूलबुद्धिप्रतिपादनोपायमात्रं भाष्यकारेण कृतमिति द्रष्टव्यम्।** यच्च संनिकर्षविप्रकर्षाभिधानम्, तद्भावनास्थ एव विधित्वे कारकाणां भावनाविशेषणत्वं प्रतीति मन्तव्यम्[4]। कथं पुनः प्राप्ता सती भावना

१. क० अनूद्येत। २. क० शिष्टानुवादात्। ३. क० चात्रा। ४. क० प्रतिपत्तव्यम्।

विधीयते। विशिष्टा न प्राप्तेति तादात्म्येन विधास्यते। फलतश्च तदा विशेषणार्थो विधिरिति व्यपदेक्ष्यते।

नन्वेवं सति विशेषणेष्वनवतरन्विधायको भावनाद्वारेणापूर्वविधिवत्प्राप्तकर्म-विधानेऽप्यनेकं विधातुं समर्थ इति "चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत" इत्यस्याविषयत्वं प्रसज्येत।

नैष दोषः। पश्य— विधित्वे भावनास्थेऽपि तादर्थ्यं प्रविभज्यते।
विशेषणफले चास्मिन्वाक्यभेदो भविष्यति॥

यदा हि भावनारूढं विधित्वं भावनार्थत्वेनैव गृह्यते, तदाऽर्थाद्विशेषणविधौ सति अवाक्यभेदं वक्ष्यामः। यदा तु तद्विशेषणार्थमित्यवधार्यते, तदा भावनायाः संनिहितप्रोषितत्वादनेकविशेषणयोगे सति यदर्थं विधित्वमवसीयते, तस्यैवैकस्य विधानं, नेतरस्य तद्देशस्यापि चक्षुषेव स्पर्शादेरिति वाक्यभेदो भविष्यति। सर्वत्र समानदेशमपि विधित्वं फलतः प्रचलितमिवैकत्रोपसंहृतं दर्शितम्। तस्मादविरोधः।

यस्त्वभ्युदितेष्टिप्राकाशादिविधिष्वनेकार्थविधिदोषः स सर्वपक्षेषु तुल्यः। यथा चास्मत्पक्षे न भविष्यति, तथा तदधिकरणेष्वेव वक्ष्यामः। **भवेदेतद्विशिष्यादिति।** यदि साक्षाद् गुणो न विधीयते, ततः पुरुषस्य तत्राप्रवर्त्तितत्वात्तत्परित्यागेना-प्यनुतिष्ठतः कृतार्थता स्यादिति मन्यते। **तत्र किं भविष्यतीति।** वाक्यलक्षण-विध्यभिप्रायेण प्रश्नः। **अध्याह्रियमाणे इति**—स्वाभिप्रायविवरणम्। स एव वा स्वयं कर्म निरूपयति। तेनैवाभिप्रायेण पुनः प्रश्नोत्तरे **गुणवचनसन्निधिरिति** तथा 'कथं पुनरि'ति तुल्यं च साम्प्रदायिकम्, इत्यभिप्रायेण। **असति त्वर्थे** किमिति। त्वयैवं क्रियते येन तदानर्थक्यमापद्यते। मत्पक्षे तु सत्यर्थे नानर्थक्यं भविष्यति। **एवं तर्हीति।** वाक्येन विशिष्टायां भावनायां प्रवर्तमानः श्रौतोऽपि विधिर्वाक्याद् भविष्यतीत्युच्यते। परस्तु यत्प्रसादेन स विधीयते, सैव तावद्वि-धीयतामिति **श्रुत्यर्थे सति न वाक्यार्थ** इत्याह—**सत्यमेतदिति।** विधिशक्ति-संक्रान्ति न चेदन्येन शिष्टा इति च दर्शयति। कथमिति सानुशयः प्रश्नः। स्वोक्तिर्वा। तस्मात्तत्संनिधेर्गुणस्य भावनानुप्रवेशाद्विधेयत्वम्। अथवा गुणसन्निधेः शक्तिसंचरणम्, भावनाधात्वर्थप्राप्तिसंनिधेर्वा श्रुत्यविरोधाद् गुणविधानम्। जुहोतेरिति स्पष्टमपि धातूच्चारणमनवबुध्य सकलाख्यातानुवादाभिप्रायेणाऽऽह—**यदि जुहोतीत्यनुवाद इति। दधिशब्देनेति मा वोचत इति।** वाजपेयाधिकरणवद् ग्रन्थच्छाया योजनीया। प्रत्ययो विधिरेव, धात्वर्थोऽनुवाद इति विवेकः **यदि विधायकाविति**—भावनायां प्राप्तायां कथं विधानमित्यभिप्रायः। **वाक्यार्थो यः तं विधातुमिति।** दध्नः पदार्थत्वान्नैव वाक्यार्थत्वं संभवतीत्येतदपि दधिविशिष्ट-भावनाभिप्रायमेव। **तस्मात्कर्मान्तरचोदने इति**—उपांशुयाजवदेव व्याख्येयम्।

जुहोत्याघारयतिलक्षितासाधारणार्थविषयत्वाच्च संज्ञोपबन्धसिद्धिः। इह विधीयमानत्वेन च कर्मान्तरेभ्यो व्यवच्छेदः। प्रकरणाच्च द्रव्यदेवतां लप्स्यत इति, नारूपत्वम्। न चोत्पत्तिवाक्ये कथंभावो नास्ति, फलसंबन्धं तु यावत्प्रतीक्षिष्यते। न चाविहितद्रव्यदेवतस्य फलविध्यनुपपत्तिः। होममात्रतया विहितस्य पश्चादपि तद्ग्रहणाविरोधात्। इष्यते चैवमादौ संनिधिवशेनाप्यनुवादः। प्राप्त्यपेक्षो ह्यसौ। यथा कथंचित्प्रत्यभिज्ञानं प्रार्थयते[1]। न च परप्रकरणे पाठादाघारत्यावान्तरप्रकरणलोपः। तस्यापि ह्याख्यातप्रत्ययवशेन किं केन कथमित्यस्त्यपेक्षा। तेन शक्यं प्रकरणेन द्रव्यदेवताविधानम्। बहूनि चादृष्टानि त्वया कल्प्यानि। न च तण्डुलादिहोमानामूर्ध्वाद्याघाराणां वा विहिता देवताऽस्ति। न च देवतावद् द्रव्यम्। सर्वे चैतेऽपूर्वकर्मविधित्वान्नान्योन्यं गुणविधयो भवन्ति। ततो यथोक्तमेवास्तु।

यत्तु क्रियायाः कर्मत्वनिर्देशो न युज्यत इति। अत्रोच्यते। भवति हि क्रियाणामपि संकल्पादिभिराप्यमानत्वात्कर्मत्वम्। तेन जुहोत्याक्षिप्तसंकल्पाद्यपेक्षयाऽग्निहोत्रमिति द्वितीयानिर्देशादविरोधः।

ननु च 'यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय च प्रजापतये च प्रातः' इत्यनयोरनेकगुणत्वात्[2]। 'चोदना वा गुणानां युगपच्छास्त्रात्[3]' इत्येतदापद्यते।

### तत्र केषाञ्चिन्मतेन समाधानम्

तथा नामेति केचित्। एवं च यथापूर्वमाहुती जुहुयात्, सायमग्निहोत्रं प्रातरग्निहोत्रमित्येवमादयो भेदव्यवहाराः सिद्धा भवन्ति। न चात्र ज्योतिष्टोमस्येव ग्रहाभ्यासेष्ववयवबुद्धिः, उभयत्रापि साकल्यप्रतीतेः। एवं च दर्शपूर्णमासवदुभयत्र समस्तेतिकर्तव्यतावृत्तिरुपपद्यते। अन्यथा तु पशुतन्त्रविप्रकर्षन्यायेन सकृत्कृतैवोपकुर्यात्। न चैककर्मत्वे किंचित्प्रयोजनमस्ति। तस्माद् द्वयोराहुत्योः समुदायानुवाद इति।

अत्राभिधीयते—

समुदायानुवादस्य न तावद् दृश्यते फलम्।
प्रयोगवचनैकत्वं लप्स्यते राजसूयवत्॥

यथैव हि समुदायानुवादत्वमवयवशिष्टसमुदायैकत्वद्वारेण भवति, एवमेव प्रयोगवाक्यगतम् 'अग्निहोत्रं जुहुयात्स्वर्गकाम। इति भविष्यति। यथा च

---

१. क० प्रत्यभिज्ञानेन प्रार्थ्यते।　२ क० गुणविधित्वात्।　३. क० शासनात्।

'राजसूयेन स्वाराज्यकाम' इति विनाऽप्यन्येन समुदायानुवादेन सिद्धिरेव-मिहापीति।

नन्वेवं सत्यापराग्निकानामपि होमानां प्रधानत्वं स्यात्। समुदायानुवादे वा केन तेषामपकर्षः। न हि यथा पौर्णमास्यमावास्या शब्दयोः प्रयाजादिभ्यः कालसंयोगेनावच्छेदः तथेह केनचित्क्रियते। नन्वग्नये होत्रमस्मिन्निति विशेषणं भविष्यति ? न। तेषामप्यग्निदेवत्यत्वात्। अपि चैवं सत्यनिष्टं तव प्रसज्येत्। प्रातराहुतेरग्निसंयोगाभावादनग्निहोत्रत्वेनाङ्गत्वं प्राप्नोति। तस्मात्सत्यसति वा समुदायानुवादे न कश्चिद्विशेषः। तथा यद्यापराग्निकानां होमानां भेदः, यदि वा सर्वाग्निष्वेकमेवाभ्यस्तकर्म क्रियते, सर्वथाऽग्निहोत्रशब्देन संनिध्यग्निसंयोगहोम-त्वाविशेषात्फलसंयोगेन समवधानत्वम्। तथा चैकेषां सर्वसामानाधिकरण्येनाग्नि-होत्रशब्दप्रयोगो 'गार्हपत्यान्वाहार्यवचनयोश्चतस्रश्चतस्र आहुतीराहवनीये च द्वे विधायाऽऽह 'य एवं विद्वान्विराट् संपन्नमग्निहोत्रं जुहोति' इति तस्मादनन्य-प्रयोजनत्वादग्निहोत्रं जुहोतीत्ययमेव कर्मविधिः। ततश्च तण्डुलादिवाक्यवदेव गार्हपत्यादिसंयोगस्य गुणार्थत्वान्न कर्मभेदहेतुरस्ति। तदेव हि प्रकृतं कर्म तत्र तत्र प्रत्यभिजानीमः।

### दध्यादिवदग्नीनां विकल्पेऽपि केषाञ्चिन्मतेन शंकासमाधानम्

कस्मात्पुनरेककर्मविषयत्वाद्दध्यादिवदेवाग्नयो न विकल्प्यन्ते। केचिदाहुः—अदृष्टार्थत्वादिति। निराधारस्यापि हि प्रक्षेपस्याप्रतिष्ठेऽपि द्रव्ये संभवाददृष्टा-र्थोऽग्निसंयोगः। तच्च सर्वमदृष्टं संभावनीयमिति, आवर्तते होमः। एवं तु सति पदादिभिरप्याहवनीयो न बाध्येत। अथ तत्र सकृद्धोमश्रवणादावृत्तिमयाद्बाधः, इहापि तत्तुल्यमिति, विकलपप्रसङ्गः। तस्माद्विराट्संपन्नमित्येतस्मादेव वचनात्, 'संख्याविहितेषु[1] तु समुच्चयः' इत्यनेन न्यायेन समुच्चयः। अन्यथा हि।

> अग्निभ्योऽपूर्वसिद्धिः स्यादाधारत्वोपलक्षिता।
> व चैकेनावरुद्धत्वादाधारान्तरसंभवः॥

सत्यप्यग्निसंयोगस्यादृष्टार्थत्वे सप्तमीश्रवणादाधारत्वप्रतिपत्तिद्वारं तदित्य-वगमात्, तस्य च प्रत्यक्षप्रतीतेरेकेनावरुद्धे कर्मणि नान्यत्सम्भवतीति विज्ञायते। तेनैकान्तेन विकल्पः प्राप्नोत्येव।

कस्मात्पुनः 'तिस्र आहुतीर्जुहोति' इत्यादिवत्संख्यया कर्मभेदो न भवति ? न। उत्पन्ने सति कर्मणि संख्योपजननात्। उत्पत्तिस्था हि संख्या भेदिका भवति 'तिस्र आहुतीः' इत्यादिषु। इयं पुनरवधारिते कर्मण्युपजायमाना 'एकादश

---

१. क० संख्यायुक्तेषु।

प्रयाजान्' इति वदभ्यासेनैव पूर्येतेति, न स्वरूपभेदाय प्रभवति। तेनैकमेव सर्वाग्निष्वभ्यस्तं कर्मेति निश्चीयते।

यत्तु सायंप्रातर्वाक्ययोरनेकार्थत्वात्कर्मविधित्वमिति। तत्र ब्रूमः। 'सायं जुहोति' 'प्रातर्जुहोति' इति वाक्यान्तरप्राप्तः कालो देवताव्यवस्थापरे वाक्ये संकीर्त्यते। नन्वेवमपि कालविशिष्टकर्मानुवादाद्वाक्यभेदः स्यात्। न। प्रकरणलब्धे कर्मणि कालमात्रे देवताविधानात्। स तु कालो न स्वरूपेण देवतया संबध्यत इति, प्रकरणलभ्यकर्मानुरक्तः संबध्यते।

अथ वा विधीयमानसंप्रदानभूतदेवताकाङ्क्षितप्रकृतहोमपर्युपस्थापने न कालस्योपयोगः। न च लक्षणया लभ्यमानो होमो वाक्यं भिनत्ति। न च सायंकालेनाऽन्यत्र स्थितो लक्षितः। तेन सायंहोमस्याग्निप्रजापती भविष्यतः। एवं प्रातर्होमस्य सूर्यप्रजापती इति सिद्धम्।

नन्वेवमपि भिन्नपदोपात्ते द्वे द्वे देवते विदधती वाक्ये भिद्येयाताम्। न। एककारकत्वादिति केचित्। कारकान्यत्वे हि विधेर्व्यापारभेदो भवति। एककारकनिबन्धनं त्वर्थसहस्रमप्येकप्रयत्नसाध्यमित्युक्तम्।

अत्राभिधीयते—

अनेकपदसंबद्धं यद्येकमपि कारकम्।
तथाऽपि तदनावृत्तैः प्रत्ययैर्न विधीयते॥

विभक्त्या हि कारकं प्रत्याय्यते। सा च यत्रैकाऽग्नीषोमादौ, तत्र सकृदेव प्रत्ययस्य व्यापारो भवति। यत्र पुनर्भिन्नविभक्तिसंबद्धानेकपदोपात्तमेकमपि कारकं भवति। यथाऽत्रैवाग्नये च प्रजापतये चेति। तत्र युगपत्प्रत्यवेक्षणाभावादवश्यं भेदेनाग्निप्रजापती प्रत्ययेनाऽऽलोचयितव्यौ। कारकविभक्तिर्हि नाम पदार्थालोचनाय प्रत्ययं[1] प्रयुङ्क्ते। सा च नानोच्चारितानां नैव प्रयुङ्क्त इत्यावृत्तिप्रसङ्गः। तस्मान्नैष परिहार इति।

एवमभिधीयते। वाक्यद्वयेऽप्यस्मिन्प्रजापतिरेवैको विधीयते। अग्निसूर्ययोः पुनर्मन्त्रवर्णादेव प्राप्तिः, वाक्यान्तरेणैवंदेवत्यौ मन्त्रौ विहितौ। ताभ्यामेव चास्ते देवते प्राप्ते सत्यौ प्रजापतिविधावौचित्येन स्तुत्यर्थमुपादीयेते। यदपि च 'तत्प्रख्यं चान्यशास्त्रम्' इत्यत्रैते वाक्ये निदर्शिते, तदपि मन्त्रवर्णप्राप्तिद्योतनार्थत्वेन द्रष्टव्यम्। एवं मन्त्रविध्योर्न पौनरुक्त्यं भविष्यति। अन्यथा तदर्थशास्त्रदोषपरिहारप्रयोजनगुणविधि-परिसंख्यार्थवादादीनामन्यतमेऽतिक्लेशः स्यात्। तस्मान्नात्र वाक्यभेद इति सिद्धम्।

---

१ क० प्रत्ययप्रयुक्ता।

यत्तु सायंप्रातर्होमयोरवयवबुद्धिर्नास्तीति दाक्षायणयज्ञादिवत्सकलकर्मावृत्तिप्रज्ञानात् तदित्यवगन्तव्यम् । नन्वेवं सति सकलकर्मपरिच्छेदात्मकत्वेन सायंप्रातःकालयोस्तुल्यार्थत्वाद्विकल्पे सति, सायं प्रातर्वाऽग्निहोत्रं होतव्यं, नोभयत्रेति प्राप्नोति । नैतदस्ति । यावज्जीवचोदनया तावज्जीवता सायं हुते, पुनर्जीवत एव प्रातःकाले सति समस्तनिमित्तोपजननान्नैमित्तिकहोमकरणं भविष्यति । सत्यमेवमपि सिध्यति । अयं तु विशेषो यदा सायं प्रातरभ्यस्तोऽयमेक एव प्रयोगो भवति । तदा सायं होमे कृते, यदा नाम यजमानस्य कदाचिदापद्भवति, तदा यथाकथंचित्प्रातर्होमः कर्तव्यः प्रक्रान्तासमाप्तिनिमित्तदोषपरिहारार्थम् । अथ तु वसन्ते ज्योतिष्टोमवत्सायंकाले समाप्तं कर्म, ततो नावश्यं प्रातर्होमः कर्तव्यः ।

किं च । काम्यः सर्वाङ्गसंयुक्तः प्रयोगश्च फलार्थिना ।
सायंप्रातर्विकल्पेन प्रयोक्तव्यस्तदा भवेत् ॥

अभ्यस्तैककर्मपक्षे तु कालद्वयेऽपि प्रयत्नेनावैगुण्यं संपादनीयम् । कथं पुनर्न विकल्प इति । वचनकृतात्समुच्चयादिति ब्रूमः । 'प्रवर्ग्यो वा एषः' इति हि प्रकृत्य ब्रवीति 'स वै सायं च प्रातश्च जुहोति' इति । भेदपक्षेऽपि चशब्दात्समुच्चयः । न च समुच्चये सति साहित्यापत्तिर्भवति । अनुपादेयत्वात्कालस्येत्यविरोधः । प्राप्तयोश्च वचनान्तरेण कालयोः समुच्चयार्थमेवेदं वाक्यमिति, न वाक्यभेददोषः । तस्मादभ्यस्तमेकं कर्म ।

यत्त्वङ्गानां भेदेन प्रयोगो न प्राप्नोतीति । नैष दोषः । कालं प्रति हि कर्मोपादीयमानं विवक्षिताङ्गसंयोगं भवति । तेन सायंतनस्य प्रधानस्य तत्कालाङ्गान्येवोपकुर्वन्ति नान्यकालानि, वैगुण्यात् । एवं प्रातस्तनस्यापीत्यावर्तते ।

यत्तु प्रयोजनं नास्तीति । तत्रोच्यते । कुण्डपायिनामयने 'मासमग्निहोत्रं जुह्वतीत्येककर्मविधानादेकेतिकर्तव्यतापेक्षणे सति सायंहोमस्य, प्रातर्होमस्य वा धर्मा आगच्छन्तीत्येकधर्मयुक्तं सकृदेव प्रयुज्येत । अभेदे तु यथाप्रकृतीति ॥ १६ ॥

( इति पञ्चममाघाराग्निहोत्राधिकरणम् ॥ ५ ॥ )

न्या० सु०—दध्यादिवाक्यानां कर्मविधित्वानभ्युपगमाद्भाष्यस्थकर्मान्तरोक्त्यनुपपत्तिमाशङ्क्य, अभ्युपेत्यवादेन स्रौवाघारचतुर्होतृहोमाद्यपेक्षया वा समाधत्ते—**कर्मेति** । कुत इत्यादिना रूपवन्तौ विधीयेते इत्यन्तेन भाष्येण वाक्यान्तरविहितरूपापेक्षणेऽन्योन्याश्रयापत्तेः स्ववाक्याज्ञातरूपकर्मविध्ययोगस्यारूपत्वादित्यनेनोक्तस्याप्रवृत्तप्रवर्तनात्मकविधिस्वभावादेव विध्यन्तरविषयभूतकर्मान्तरव्यावृत्तविधानार्हकर्मप्रतीतेर्वाक्यान्तरावगतरूपवत्तया चानुष्ठानार्हत्वाद्विधिनिर्वाहोपपत्तेः । स्ववाक्याज्ञातरूपस्यापि कर्मणो विधिसम्भवाद्विधिनिर्वाहार्थं वाक्यान्तरविहितरूपापेक्षणेऽपि विधिप्रवृत्तावनपेक्षणान्नेतराश्रयमित्येवं परिहा-

रार्थतया विधिशब्दार्थस्य प्रयोगेऽनुष्ठाने भूतत्वाद्वर्त्तमानत्वाद्वचाप्रियमाणत्वादनुष्ठापकरूपत्वा-दन्यतः प्राप्ते चानुष्ठानेऽनुष्ठापनानर्थक्याद्रूपं विनापि कर्मान्तरं विधेयं प्रतीयते। तच्च वाक्यान्तरतो रूपावगतया निर्वहतीत्येवं सूत्रावयवो व्याख्यातः। तदन्तर्गतेन चाघारेत्यनेना-विज्ञातार्थावित्यन्तेन हवनाघारणयोर्विधिविषयसमानयोस्तदेकीभूतयोः विधिविषयभूतयोरेव संज्ञाविषयत्वात्संज्ञोपबन्धोपपादनार्थतयाऽघाराग्निहोत्रशब्दार्थस्य प्रयोज्यात्मभूतत्वादित्येवं व्याख्यातः।

तत्र द्वितीयव्याख्यानार्थं भाष्यं जुहोत्याघारयति—**लक्षितेति**। वार्त्तिकेन व्याख्यास्य-मानत्वादुपेक्ष्य, शेषं सङ्क्षेपतो व्याचष्टे—**आघारयतीति**। यदुक्तमिति भाष्येण पूर्वेभ्यो होमाघारेभ्य इति पूर्वपक्षभाष्यावयवसूचितमर्थमनुभाष्य, नैतदित्यादिना वाक्यार्थो यस्तं विधातुमित्यन्तेन तन्निरासार्थतया, तत्सन्निधेर्गुणार्थेन पुनःश्रुतिरिति सूत्रावयवो व्याख्यातः तत्र तस्मान्नानुवादाविति भाष्यं तावत्तात्पर्यतो व्याचष्टे—**न चेति**।

नन्विति भाष्येणोपपादश्रवणाद्दध्यादिवाक्यानां शुद्धहोमाघारविध्यशक्तावपि होमाघार-सम्बन्धितया दध्यूर्ध्वादिविध्यभ्युपगमात्सम्बन्धस्य च सम्बन्धिद्वयनिष्ठत्वात्प्रतिसम्बन्धिभ्यां विनानुपपत्तेः, अर्थापत्त्या तयोरपि प्राप्तिराघाराग्निहोत्रवाक्ययोरनुवादत्वं भविष्यतीत्या-शङ्क्य नैतदेवमित्यनेन ब्रूम इत्यनेन निरस्तम्। तत्तात्पर्यस्तावद्व्याचष्टे—**न चेदिति**। भाष्यस्थस्य सम्बन्धशब्दस्य विशिष्टवाचित्वम्, शङ्कायाश्च विशिष्टविधानाशयत्वं तन्निरा-सार्थत्वं चोत्तरस्यानेनोक्तम्। अत्रैवावतारणपूर्वमस्मिन्ह्नीति भाष्यावयवमध्याहारेण द्वेधा योजयति—**तदिति**। अस्मिन्नाघाराग्निहोत्रवाक्यस्थे प्रत्यक्षे कर्मविधाने सति न सम्बन्धो-ऽर्थादापादक इत्याद्या योजना। अस्मिन्सम्बन्धे विध्यर्थाक्षेप्ये होमाघाराख्यसम्बन्धिविधौ प्रत्यक्षे सति सम्बन्धाख्यगुणविधानेन सम्बन्धमात्रं विधीयतइति द्वितीयसम्बन्धशब्देनाऽस्मिन् पक्षे सम्बन्ध एवोक्त इति गुणशब्देनोक्तम्। तस्मादित्याशङ्कानिरासोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। नन्वाघारयतीति भाष्येण श्रुत्या धात्वर्थावच्छिन्नभावनाविधिप्रतीतेर्न वाक्यीयसम्बन्धविधिर्युक्त इत्याशङ्क्य, सत्यमित्यनेन सम्बन्धस्य पदान्तरान्वयलभ्यत्वेना-श्रौतत्वेऽपि, तच्छब्दपरामृष्टस्य धात्वर्थावच्छिन्नभावनाख्यस्य कर्मणः सन्निहिताघाराग्नि-होत्रविधिप्राप्तत्वेनोद्ध्वादिवाक्यैरविधेयत्वाद्वाक्यगुणविध्यर्थं कर्मश्रवणम्, न कर्मविध्यर्थमिति तन्निरासार्थत्वेन सूत्रावयवो व्याख्यातः तत्द्वयमेतच्छङ्कापरिहाराशयप्रपञ्चार्थैरुत्तरभाष्यैरेव व्याख्यास्यमानत्वान्न व्याख्यातम्।

ननु पदान्तरेत्याशङ्काशयविवरणार्थं भाष्यं व्याचष्टे—**भावनेति**। सत्यमेवमिति परिहाराशयविवरणार्थं भाष्यं व्याचष्टे—**सत्यमिति**। भावनामध्यशब्देन तं व्यापारशब्दो-क्तभावनाविशेषणभूतं स्वपदार्थं धात्वर्थं गुणशब्दो विशेक्ष्यतीति गुणस्य भावनाद्वारधात्वर्थ-विशेषणत्वाभिधानेन भावनाविशेषणतैवोक्तेति सूचितम्। ननु गुणविधावपि भावनातो विध्यनुत्तारणे कर्मानुवादेन गुणविध्युत्घोषौ विरुध्येतेत्याशङ्क्याह—**तेनेति**। येन

कारणेनोद्ध्वादिवाक्येष्वपि स्वपदार्थं धात्वर्थगतव्यापारं भावनां वक्ष्यतीत्युक्तम् । तेन कारणेन सर्वत्रैवैतद्वक्ष्यमाणमुपदिष्टं भवतीत्यर्थः । शास्त्राभिव्यक्तिरितीतिकरणाध्याहारेणोत्तरग्रन्थान्वयः । विशिष्टविधेः सार्वत्रिकत्वेऽपि तात्पर्याभिप्रायः कर्मानुवादेन गुणविध्युद्घोष इत्याशयः । नन्वेवमपि व्याख्यातॄणामष्टप्रकारश्रुत्युद्घोषो विरुध्येतेत्याशङ्क्य, भ्रान्तिमूलत्वं तदुद्घोषस्याह—**तत्रेति** । आत्मना यथा भ्रान्तिरुत्पन्ना, तथान्येषामप्युत्पादयितुमित्युपहासः किलेति भ्रान्तित्वं सूचितम् । भ्रान्तित्वोपपादनायाष्टावपि प्रकारान्, परदौर्बल्यनियमं च दूषयन् शुद्धधात्वर्थविधिरूपं प्रथमं प्रकारं तावत्सोदाहरणानुभाषणपूर्वं दूषयति—**तत्र तावदिति** । कस्मादयुक्तमित्यपेक्षायामेकाभिधानश्रुत्या भावनान्वयस्य प्रागवगमादिति हेतुमाह—**न हीति** । भावनानिरपेक्षस्य धात्वर्थस्य पुम्प्रवृत्त्यविषयत्वादप्यविधेयतेत्याह—**न चेति** । एतदेवोपपादयति—**सा हीति** । देहाश्रितस्यापि विष्णुक्रमादेः, आत्माश्रितस्यापि च यागादेः प्रयत्नरूपभावनां विना प्रवृत्त्यविषयऽपिशब्देन सूचिता । किं च भावनावद्धात्वर्थस्यानुष्ठेयनिष्पाद्यापरपर्यायसाध्यत्वेन विधानस्य ।

अन्यदेव हि यागादौ सामान्यं करणात्मकम् ।<br>
अन्यच्च भावनानाम साध्यत्वेन व्यवस्थितम् ॥

इति वार्त्तिके निरस्तत्वाद्दध्यादितत्करणत्वेनैव विधानावगतेः करणत्वस्य च क्रियारूपभावनान्वयनिबन्धनत्वान्न तां विना विधेयत्वोपपत्तिरित्याशयेनाह—**इदं चेति** । ननूत्पत्तिवाक्ये साध्यत्वेनापि हि विहितस्य किमर्थमपुरुषार्थरूपो धात्वर्थः साध्य इत्यपेक्षायां फलवाक्ये करणत्वेन विधानात्फलवत्त्वोपपत्तेर्नोत्पत्तिवाक्ये करणत्वेन विधिरित्याशङ्क्याह—**नहीति** । धात्वर्थस्य साध्यत्वेन विधौ पुरुषस्य किमर्थमित्यपेक्षायामपि विधेयस्य करणत्वानवगतेः साध्यानपेक्षत्वात्पदार्थापेक्षां च विना पदार्थान्तरान्वयायोगात्फलवाक्येऽपि करणत्वेन विधिर्न सम्भवतीत्युक्ते ननु भावनावत्करणत्वाभावेऽपि साध्यापेक्षा भविष्यतीत्याशङ्क्य—**असावित्युक्तम्** । भावनायाः करोत्यर्थरूपत्वेन नित्यं कर्मापरपर्यायसाध्यापेक्षत्वेऽपि धात्वर्थस्य करोत्यर्थत्वान्न करणत्वं विना साध्यापेक्षत्याशयः ।

विशिष्टधात्वर्थविधिरूपं द्वितीयं प्रकारं दूषयति—**सोमेनेति** । तद्भूतानां क्रियार्थेन समाम्नाय १–१–२५ इत्यनेन न्यायेन धात्वर्थस्य कारकाणां च परस्परान्वयमपेक्ष्य भावनयाऽन्वितानां पश्चाद्धात्वर्थस्यानिष्पन्नस्य करणत्वायोगात्कारकैश्च विना तदनिष्पत्तेः कारकापेक्षायां कारकाणां च सिद्धरूपत्वेन व्यापाररूपधात्वर्थनिष्पादनं विना साक्षाद्भावनान्वयायोगाद्धात्वर्थापेक्षायामरुणैकहायनीन्यायेनान्योन्यनियमान्न भावनाविधिनिरपेक्षो गुणविशिष्टधात्वर्थविधिर्युक्त इत्याशयः । सप्तमनवमाद्ययोश्च यजेतेत्थमितीतिकर्त्तव्यतायाधात्वर्थान्वयनिरासेनेत्थं कुर्यादिति भावनान्वयस्य भाष्यकृता वक्ष्यमाणत्वाद् गुणानां धात्वर्थविशेषणत्वानुपपत्तेर्न तद्विशिष्टधात्वर्थविधिरित्याह—**तथा चेति** । गुणान्वये च धात्वर्थस्य वैरूप्यं स्यादित्याह—**भावनां चेति** ।

धात्वर्थस्यान्यत्र विधिरूपं तृतीयं प्रकारं दूषयति—**तथेति**। भावनानां तु धात्वर्थस्य कारकाणां वा विधेः सर्वत्राविशेषात्तदभिप्रायाऽन्यशब्दव्याख्या न युक्तेत्याह—**यदि त्विति**। अन्योद्देशेन च शुद्धधात्वर्थविधानस्य तन्निरपेक्षशुद्धधात्वर्थविधानात्पदान्तरापेक्षानिमित्त-विप्रकर्षेण दौर्बल्येऽपि अन्योद्देशनिरपेक्षविशिष्टधात्वर्थविधानेऽपि विप्रकर्षसाम्यात्, ततो दौर्बल्यानुपपत्तेः प्रत्युताश्रुतविशेषणविधिकल्पनाभावेन ततो बलीयस्त्वाद् द्वितीयस्थान-निवेशापत्तेः, तृतीयस्थाननिवेशो न युक्त इत्याह—**न चेति**।

अन्योद्देशेन विशिष्टधात्वर्थविधिरूपं चतुर्थं प्रकारं द्वितीयतृतीयपक्षोक्तदोषापादनेन दूषयति—**पक्षेति**। धात्वर्थेऽन्यविधिरूपं पञ्चमप्रकारं दूषयति—**दध्नेति**। तृतीयानिर्दिष्ट-स्यापि दध्नो विधेयत्वेनानुष्ठानविषयत्वाद्विधेर्दध्यनुष्ठेयमित्यभिप्रेत्यानुष्ठानार्थकरोतिप्रयोगो-पपत्ते 'स्तत्र जयान् जुहुयादिति'वच्च प्राधान्यविवक्षयापि सप्तमीप्रयोगोपपत्तेर्होमाधिकरण-दध्यधिकर्त्तव्यत्वस्य परानभिप्रेतत्वेऽपि दधिहोमे करोतीति परोक्ताया वचनव्यक्तेरञ्जसै-षोऽर्थः प्रतिभातीत्यारोप्याच्छलेनेदं दूषणद्वयमुक्तम्। सप्तम्यश्रुतेर्न शब्दाद्धोमस्याधिकरणत्वम् स्थालीवच्च पतनप्रतिबन्धकत्वाभावान्नार्थरूपेण, दध्नश्च तृतीयाश्रुतेर्भूतभव्यसमुच्चारणन्या-येन करणत्वावगमात्कर्मत्वरूपा कर्त्तव्यता न युक्तेत्यर्थः।

यथा चान्यत्र शुद्धधात्वर्थविधिश्रुतिर्विशिष्टविधानाद् बलीयसी, तथा धात्वर्थेऽन्य-विधिश्रुतिरपीति पञ्चमस्थाननिवेशोऽस्या न युक्त इत्याह—**इयमपि चेति**। अन्यत्र शुद्ध-धात्वर्थविधेरपि द्विविधविशिष्टविध्यपेक्षया बलीयस्त्वसूचनार्थश्चकारः। हेतुमाह—**एकेति**। नन्वियं पदान्तरार्थविधिविषयत्वेन विप्रमृष्टार्थत्वार्थं दुर्बलेत्याशङ्क्याह—**उभयेति**। विशिष्ट-विधावपि विशेषणभूतपदार्थान्तरविधिरित्याशयः। 'दध्ना जुहोती'त्यत्र च सन्निकृष्टार्थ-विध्यसम्भवकृतत्वाद्विप्रकृष्टार्थग्रहणं न दोषायेत्याह—**सन्निकृष्टेति**। प्रकृतश्रुतिविधेयदधि-परामर्शार्थोऽस्यशब्दः। तत्र तु विशिष्टविधावुभयोर्विशेषणविशेष्ययोर्विध्याश्रयणात्सन्निकृष्ट-विध्यर्थं तत्सम्भवो, विप्रकृष्टविध्यर्थं चासम्भवोऽभ्युपगन्तव्य इति युगपद्विरुद्धसम्भवासम्भवा-पत्तिरित्याह—**तत्रेति**। सन्निकृष्टासम्भवकृतत्वाद्विप्रकृष्टग्रहणस्योभयाश्रयणे सम्भवासम्भव-विरोधापत्तिरित्येकग्रन्थतया वा विशिष्टविधिदौर्बल्याभिधानार्थतयैतद्योज्यम्।

नन्वेवं सति न क्व चिद्विशिष्टविधिराश्रीयेतेत्याशङ्क्याह—**अगत्यैवेति**। विशिष्ट-विधिरित्यध्याहारः। यद्यपि च श्रौतेन विधिना सन्निकृष्टविधानात्काल्येन च विप्रकृष्टार्थ-विधानात्कालभेदेन विप्रतिषेधपरिहारोपपत्तेरन्योद्देशनिरपेक्षविशिष्टविधेरियं विप्रकृष्टार्थ-विषयत्वात् गुर्वी, तथाप्यन्यत्र विशिष्टविधानात्पदान्तरापेक्षानिमित्तविप्रकर्षस्योभयत्र सद्भा-वेनाविशेषाद् गुर्वी न भवत्येवेत्याह—**अन्यत्रेति**। तदेव त्वतिगुर्विति सूचनार्थोऽतिशब्दः। प्रकृतमुपसंहरति क्व तर्हि निवेशयितव्येत्यपेक्षायामाह—**काममिति**। श्रुतिलिङ्गादिवदासां पूर्वपूर्वानपेक्षत्वान्न क्रमोपन्यासेन प्रयोजनम्। यदि त्ववश्यं क्रमेणोपन्यस्तव्याः, ततो वरमेवं क्रम इति—**काममित्यनेनोक्तम्**।

धात्वर्थेऽन्यसम्बन्धविधिरूपं षष्ठं प्रकारं दूषयति—**यत्त्विति**। किं यद्ददातीति दानमात्रमनूद्य, तत्र प्राकाशावध्वर्यवे इत्यानन्तर्यावगतः प्रदीपाध्वर्युसम्बन्धो विधीयते, उताध्वर्यवे यद्ददातीति क्रियाकारकान्वये, क्रियाप्राधान्यविवक्षयाध्वर्युविशिष्टं दानमनूद्य तस्य प्रदीपसम्बन्धे विधीयमाने'पीमाश्चादिष्टदक्षिणा' इति स्मृतेः। प्राकाशशब्दवाच्ययोः प्रदीपयोर्दानसम्बन्धस्य प्रदानत्वादानर्थक्यतदङ्गन्यायेन विशेषणेऽवताराद्विशेषणभूतस्याध्वर्योः प्रदीपसम्बन्धविधिर्विधेयसम्बन्धित्वेन वाध्वर्योरिव प्राधान्यविवक्षायाम्, दानविशिष्टमध्वर्युमनूद्य तस्य प्रदीपसम्बन्धविधिर्ददात्यविवक्षया वा शुद्धाध्वर्य्वनुवादेन प्रदीपसम्बन्धविधिरिति वचनव्यक्तीनां मध्ये कया धात्वर्थेऽन्यसम्बन्धविधिरित्यशक्यं विवेक्तुमित्यर्थः।

एतदेवोत्तरेण प्रपञ्चेन विवृणोति—**सर्वत्र हीति**। समस्ताया ज्योतिष्टोमिक्या दक्षिणाया अश्वमेधेऽति देशप्राप्तायाः प्राकाशदशमाधिकरणेऽध्वर्युभागमात्रविकारत्वाभिधानेन निवेश्यमानः प्रसज्येतेत्यर्थः। द्विष्ठत्वाच्च सम्बन्धस्याध्वर्य्वाख्यसम्बन्धिप्राप्तावपि प्राकाशाख्यसम्बन्ध्यप्राप्तौ विधातुमशक्यत्वात्प्राकाशयोरपि विध्यापत्तेर्वाक्यभेदः स्यादित्याह—**प्रत्ययस्य चेति**। ननु सम्बन्धविधिनैवार्थाक्षेपान्न वाक्यभेदापत्तिरित्याशङ्क्याह—**सम्बन्धो हीति**। एवमप्यर्थाक्षेपगौरवं तावदेको दोषः। धात्वर्थाङ्गत्वेन चार्थाक्षेपलभ्यस्यापि सम्बन्धिनो विधेयत्वात्प्रत्ययावृत्तिस्तदवस्थेत्याशयः। ननु सम्बन्धिविशिष्टस्यैव सम्बन्धस्य धात्वर्थाङ्गत्वात् विशेषणस्य चाङ्गत्वं विना विशिष्टस्याङ्गत्वासिद्धेः, सम्बन्धिनोऽपि धात्वर्थाङ्गताऽर्थादेव लप्स्यते। अतः सम्बन्धिनो धात्वर्थानङ्गत्वं वदता सम्बन्धस्यापि वाच्यम्। न च तद्वक्तुं शक्यम्। धात्वर्थानुरक्तेन प्रत्ययेन सम्बन्धस्य विधानाद्धात्वर्थाङ्गत्वावगतेरित्याशङ्कते—**तत्रेति**। धात्वर्थानुरक्तेन प्रत्ययेन विधानाद्धात्वर्थाङ्गत्वे च दध्ना जुहोतीत्यस्याः सम्बन्धविधित्वाभावाद्भेदोपादानार्थवत्त्वेऽपि वायव्येन्द्रियश्रुत्योः प्राकाशश्रुतिवत्सम्बन्धविधित्वाभ्युपगमाद्भेदोपादानानर्थक्यं दोषमाह—**एवं तर्हीति**। ननु वायव्यश्रुतावेव धात्वर्थस्य प्रकृतिद्योतनार्थे विधायकप्रत्ययानुरञ्जकत्वं युक्तम्, इन्द्रियश्रुतौ त्वविवक्षितत्वान्न प्रत्ययानुरञ्जकतेत्याशङ्क्याह—**न हीति**। प्रकृतिप्रत्यययोः पौर्वापर्यनियमाच्छुद्धप्रत्ययार्थानुपलब्धेर्धात्वर्थस्यानुरञ्जकता सर्वत्राविशिष्टेत्याशयः। वायव्यश्रुत्युपन्यासो दृष्टान्तार्थः।

नन्विन्द्रियश्रुतौ बलादापतितस्याप्यनुरञ्जकत्वस्यानुपकारित्वेन त्यागानुरञ्जकतेत्याशङ्क्य, वायव्यवाक्येऽपि तर्हि धात्वर्थानपेक्षाद्धातुमात्रादालभतिचोदिताग्निषोमीयपशुयागप्रकृतिद्योतनसिद्धेर्ददात्यर्थस्य चाध्वर्युप्राकाशसम्बन्धापादकत्ववदालभत्यर्थस्य द्रव्यदेवतासम्बन्धानापादकत्वेन विधायकप्रत्ययोपकारित्वाभावान्नानुरञ्जकत्वं स्यादित्याह—**प्रकृतीति**। लिङ्गशब्दो भावव्युत्पत्त्या द्योतनाख्यलिङ्गनवाची। उपकारिणोऽपि धातोरनुरञ्जकत्वानपेक्षणाद्धात्वर्थस्यानुरञ्जकता दूरोत्सारितेति सूचनायातमशब्दः। ननु क्रियागर्भत्वात्सम्बन्धस्य धात्वर्थं विना द्रव्यदेवतसम्बन्धानिष्पत्तेर्धात्वर्थान्तरवाचिशब्दाश्रवणाच्च विधेयसम्बन्धापादनेनात्मनो विधायकस्योपकरिष्यतीत्याशङ्क्याह—**न चेति**।

त० वा०—पशोर्दुष्प्रतिपादनतरत्वात्पूर्वाभिधानम्। द्वौ चात्र शब्दौ समुदाया-नुवादत्वेनाऽऽशङ्क्येते पशुशब्दस्तदग्नीषोमसंबन्धानुमितश्च यजिः। ईदृशं ह्येत-द्वाक्यं श्रुतानुमितैकदेशनिष्पन्नं यदग्नीषोमीयेण पशुना यजेतेति। तत्र किं हृदया-दीना पशुशब्दोऽनुवादः, अवद्यत्यनुमितानां यागानां च यजिः, उतापूर्वः पशुः, यागश्च विधीयते। तत्रेतरे गुणविधय इति संदिह्यते। तथैन्द्रवायवादिवाक्यैर्द्रव्य-देवतासंबन्धानुमिता[1] यागाः तद्गतश्च सोमरसः किं यजतिसोमशब्दाभ्यामनूद्यते, किं वा द्रव्ययुक्तं कर्म विधीयत इति।

**'किमवद्यतिगृह्णातिभ्यां चोदितानामि'ति।** अनयोर्यागपर्यायत्वाभावात्, तत्संबन्धानुमितानाम्, तद्गताख्यातप्रत्ययविहितानां वेत्येतत्प्रदर्शनार्थं तद्भाष्यम्। आलभतिरपि च तदनुमितयज्युपलक्षणार्थः।

अथ वाऽवद्यतौ नैव यागानुवाद इत्युपन्यस्यते। कथं तर्हि। तदाक्षिप्तस्य संस्पर्शनस्याऽऽलभतिरनुवादः। तद्द्वारेणैव च प्रत्यवदानं देवतासंयोगात् तावतां, च यागानामनुमानं उत् पशुसंयुक्त एको यागोऽनुमीयत इति। तथा सोमेऽप्ययमेव यागो यद्देवतोद्देशेन द्रव्यग्रहणमिति। तथा सति यथाश्रुतेनैव भाष्येण संदेहो-पन्यासः।

तत्र पौर्णमासीवदेव समुदायानुवादत्वम्।

तथा हि—

यथाऽऽग्नेयादिवाक्यानां न प्राग्यागानुमानतः।
स्वार्थपर्यवसायित्वं तथा सोमेऽपि गम्यताम्॥

न ह्यैन्द्रवायवमित्यादिद्रव्यदेवतासंयोगोऽननुमिते यागे निराकाङ्क्षी न भवति। न चापरिपूर्णं वाक्यं वाक्यान्तरमाकाङ्क्षति, येनानुमानवेलायां 'सोमेन यजेत' इत्ययमनुप्रविशेत्। एतद्विहितस्य वा देवताविरहादरूपस्य सतस्तैर्देवता विधीयते। यदा तु तैः कल्पितो यजिः। तदा नैव यागस्य यागान्तरं रूपं भव-तीति, बलात्प्रकृतानुवादत्वमापद्यते। यश्चात्र पक्षे विशिष्टविध्याश्रयणदोषः, स भवत्पक्षेऽत्यविशिष्ट, सोमद्रव्यकयागविधानात्। अपि च तवेह चैन्द्रवायवादि-वाक्येषु च। मत्पक्षे तु तेष्वेव केवलेष्विति विशेषः।

किं च।

यादृशं द्रव्यसंबद्धं भवान्कर्म विधित्सति।
तादृशस्याविधेयत्वमनन्तरमुदाहृतम्॥

एकत्रैवेदृशे गुणे श्रूयमाणे विधिशक्तिः संक्रामतीत्यग्निहोत्रेऽभिहितम्। अतो न कर्मानुवादबुद्धिपैतीत्यनुवादत्वं यजेः। तत्र सोमशब्देन द्रव्यमेव गृह्णातिना सामान्याक्षिप्तं नियम्यते।

१. क० संयोगानुमिता यागाः। संबन्धानुमितो यागः।

अथवा 'सोमं क्रीणाति' 'सोममभिषुणोति' 'सोमं पावयति' इत्यादिभिः प्राकरणिकैर्गुणवाक्यैः सोमरसे कल्पिते गृह्णातिचोदना प्रवृत्ता इति। सोमो न विधीयते, ततश्च स्वाभाविककरणत्वयुक्तयागसासानाधिकरण्यात्—'तत्प्रख्यं चान्यशास्त्रम्' इति नामधेयी भवति। ननु ज्योतिष्टोम इत्यपरं नामधेयमस्त्येव। यदीदमप्यवगम्यते, किं नो बाध्यते। तथा च याज्ञिकानां व्यवहारेषु नामद्वयमुपलभामहे। समस्तवाक्यानुवादस्य तु तदेव प्रयोजनम्, यत्प्रयोगवाक्यगतैकत्वोपजननं नाम। तस्मानुवाद इति।

भवेदत्र द्रव्यदेवतासंयोगादेवम्। पशौ तु 'वत्समालभेत' इत्येतत्सदृशेन देवतारहितहृदयादिद्रव्यमात्रसंयोगिनाऽवद्यतिना कथं यागविधानम्? कथं वा हृदयाद्यनुवादः पशुग्रहणेनेति वक्तव्यम्?

उच्यते।

यथैवपशुसामान्ये मन्त्राच्छागः प्रतीयते।
तथैव हृदयादीनां ममासौ प्रकृतिर्मतः॥

हृदयादिभिः प्रकृतिद्रव्येऽपेक्षिते मन्त्रवर्णाच्छागे लब्धे, तदन्तर्गतं पशुत्वं तावदनूद्यते। तत्र तु देवतायां यागो विधीयतां नाम।

अथवा सांनाय्यं वा तत्प्रभवत्वात्' इत्यनेनैव न्यायेनाऽयमवद्यतिः सारूप्यात्सांनाय्यावद्यतिप्रकृतिः। स च दर्शपूर्णमासयागद्रव्यसंस्कारार्थः प्रसिद्धः। तत्र यदि हृदयादीनि यागद्रव्याणि, ततस्तत्संयोगभाञ्जि भवन्ति, नान्यथा। तेन यथैव पूतीकानामभिषसंबन्धे[1] श्रूयमाणे, तदर्हत्वान्यथाऽनुपपत्त्या यागसंगतिरश्रूयमाणाऽपि गम्यते, तथाऽत्रेत्युत्प्रेक्ष्यमाणे यागमनुमाय तदनुपपत्तेर्यागोऽप्यस्तीति गम्यते, तथाऽनुमितानां च प्रतिद्रव्यमवस्थितानां समुदायोऽनूद्यते। साधारणश्चायं तवाप्यानुमानिकयागाभ्युपगम इति नैतेनास्मत्पक्षदौर्बल्यम्। सोमयागैकत्वे तुल्यार्थानामिन्द्रवाय्वादीनां विकल्पे सति, क्रमसमुच्चयदर्शनं नोपपद्यते।

पश्य—

यथैकबन्धनार्थत्वात्पलाशखदिरादयः।
तत्संबन्धे विकल्पन्ते यागेऽस्मिन्देवतास्तथा॥

मम तु भिन्नयागविषयत्वाद्देवतानाम्, यागानां चादृष्टार्थानां युगपदेकशब्देन फले विधानादुपपत्स्यते। पशावपि 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया' इति क्रमदर्शनम्, 'एकादश वै पशोरवदानानि' इति च समुच्चयदर्शनं सदपि नोपात्तम्, एकयागत्वेऽपि समस्तपशुसाधनत्वेन तदुपपत्तेः। न हि हृदयादिष्वसमुच्चीयमाने-

---

१. क० फलचमसस्य च—भक्षसंबन्धे इत्यधिकम्।

षूत्पत्तिवाक्यश्रुतेन समस्तेन पशुनेष्टं स्यात्। यन्मात्रं तत्र वचनान्तरवशेनाव-नेष्यते, तन्मात्रव्यतिरिक्तेन सर्वेण यष्टव्यमिति न्यायः। सोमे तु नैवं समस्त-चोदनोत्पत्तावस्तीत्युदाह्रियते। तस्मात्समुदायानुवादाविति प्राप्ते।

अभिधीयते—

प्रकृतप्रत्यभिज्ञानं वाक्ये यत्रोपलक्ष्यते।
तत्र स्यादनुवादत्वं[1] न चात्रैव प्रतीयते॥

यदि पौर्णमासीवदशेषरूपप्रत्यभिज्ञानं भवेत्, ततोऽनुवादः कल्प्येत। यदि वा यजिमात्रस्यानुवादत्वमिष्यते, ततः परित्यक्तविशेषणोऽनुवाद इत्यवधार्येत। अत्र पुनः प्रकृता हृदयादिद्रव्यका, रसद्रव्यकाश्च यागाः। इमौ च पशुसोमद्रव्यकौ, न चैवं सति प्रत्यभिज्ञानमस्तीत्यनुवादत्वासंभवः।

तत्रैतत्स्यात्, विकारेषु प्रकृतिवदुपचारात्, हृदयादिष्वेव रसे च पशुसोम-शब्दौ वर्त्स्येते इति? तत्, न। विना कारणेन लक्षणानाश्रयणात्। विस्पष्टे हि परशब्दसामानाधिकरण्ये सत्यनन्यथासंभवे च जघन्यवृत्तिः शब्दो भवति। न चैतदुभयमप्यस्ति। शक्यं हि मुख्यपशुसोमद्रव्यं यागान्तरं विधातुम्। न च प्रकृते-ष्वनिविशमानावेतौ शब्दौ नोपपद्येते। तेन यद्यपि तावदवद्यति-गृह्णातिभ्यां चोदिता यागाः। तथाऽपि कर्मान्तरत्वप्रसङ्गः। कस्मात्? तेष्वेव यागेषु स्वद्रव्य-प्रकृत्यपेक्षेषु पशुसोमौ न विधीयेते। तत्राऽऽह—**'श्रुत्या हि रस ऐन्द्रवायव' इति।** पशुस्तावद्देवताविधिपरत्वादनुपत्तिवाक्ये सति अशक्य एव विधातुमिति नैवोप-न्यस्यते। सोमलतापि वाक्यविधेया श्रौतरसविरोधे सति न संबध्यते।

कथं पुनरनुपात्तद्रव्यविशेषेष्वैन्द्रवायवदादिविधिषु रसस्य श्रौतत्वम्। अधिकार-लभ्यो ह्यसौ। ततश्च वाक्यप्राप्ता लतैव बलीयसी स्यात्? उच्यते—

श्रुत्यैव द्रव्यसंबन्धो देवतातद्धितैः कृतः।
अधिकारेण तस्यैव केवलेष्टा विशेष्यता॥

गुणश्चापूर्वसंयोगे, इत्यत्राधिकरणे विस्तरेणाभिधास्यते, यथा तद्धि तच्छ्रुत्या वाक्यप्रकरणादिलभ्यस्य विशेषस्यैवास्यशब्दवाच्यस्य देवतासंबन्धे कृते, कोऽसौ द्रव्यविशेष इत्यपेक्षायाम्, वाक्यप्रकरणादिभिस्तदवाप्तिः केवला। न तु तैरेव देवतासंबन्ध इति।

किं च—

उत्पत्तिवाक्यशिष्टश्च रसो वाक्यान्तराल्लता।
प्रकृतापेक्षिणस्तेन दुर्बलैषाऽवगम्यते॥

---

१. क० तत्र तस्यानुवादत्वं।

ततश्च गुणादपि ते भेदः प्राप्नोति । शक्यपरिहारं त्विदम् ।

कुतः ?

यथैवाष्टाकपालादौ श्रौतेऽपि सति वाक्यतः ।
व्रीह्यादयो विधीयन्ते तथा सोमो विधास्यते ।

विधीयमानं हि दुर्बलं विरुद्धं बाध्यते, नानुगुणम् । अनुगुणश्च सोमो रसस्य प्रकृत्यपेक्षिणः, तादर्थ्येन संबन्धात् । तद्यथा 'आग्नेयोऽष्टाकपाल' इति श्रुति विहितेऽप्यष्टाकपाले सति, व्रीहियवौ विधीयमानौ न विरुध्येते, पुरोडाशापेक्षित-प्रकृतिरूपत्वात् । न हि व्रीहीन् गृह्णन्नष्टाकपालं न करोति । तेन चात्र न कर्मान्त-रता । तथाऽत्र न सोमे गृह्यमाणे, रसः परित्यक्त इत्यविरोधात्पूर्वत्रैव संभवन्न गुणो भेदकः स्यात् । अपि च सिद्धान्तेऽप्येतत्तुल्यमनभिषुतलतादानानभ्युपगमात् । तत्र यथा तव रसप्रकृतिर्लता भवति, तथा पूर्वपक्षेऽपि भविष्यति । अपि च विरुद्ध-तरं तवाऽऽपद्यते । कथम् ?

उत्पत्तिवचनात्सिद्धा लता चेद्यागसाधनम् ।
न सा वाक्यान्तरैः पश्चाद्रसीभवितुमर्हति ॥

रसस्य प्रकृत्या विना निष्पत्त्यभावादाकाङ्क्षितः प्रकृतिसंबन्धो वाक्यान्त-रेणापि क्रियमाणो न विरुध्येत । प्रकृतेस्त्वविकृताया एव सामर्थ्यादनपेक्षिता विकारापत्तिरुत्पत्तिवाक्यविरोधिनी न युक्ता वाक्यान्तरैः कर्तुम् । तस्माद् व्रीहि-यववाक्यमुद्रामुद्रितत्वादनुद्घाट्यैव[1] गुणविधित्वम्, समुदायानुवादमात्रं निराकार्यं पशौ तन्मात्रेणापि सिद्धेः । सोमे तु व्रीहिवाक्यतुल्यत्वाशङ्कामधिकां निराकर्तु-मुत्तरं सूत्रं प्रस्तोतव्यम् ।

अथ वा भङ्क्त्वैव पूर्वोपपत्तिम्, उत्तरयैव निर्णयः । पूर्वसूत्रेण वा पूर्वपक्षं परिगृह्य, उत्तरं तु सूत्रं तुशब्दस्थानचशब्दमुत्तरपक्षे योजयितव्यम् । कथं पुनर्द्रव्य-संयोगादित्यनेन पूर्वपक्षोऽभिधीयते ? तदुच्यते । 'हृदयस्याग्रेऽवद्यति' 'ऐन्द्रवायवं गृह्णाति' इत्येताः किं दध्यादिवद्[2] गुणार्थाः श्रुतयः, ततश्चोत्तरयोरुत्पत्तिचोद-नार्थत्वम्, उतैता एव कर्मचोदना इति ॥ किं प्राप्ते ? नैताः पूर्ववद् गुणार्थाः पुनः-श्रुतयः, किं तूत्पत्तिचोदनाः । कथम् ? द्रव्यसंयोगात्—हृदयादिद्रव्यसंयोगात्तैरेव वाक्यैश्चोदना पशुसोमयोः । किं कारणम् ? इतरथा हि प्रकरणेन हृदयादिसंयोगो यागाङ्गत्वं[3] प्रतिपद्येत । न चासौ तस्य गुणार्थेन संभवति, उत्पत्तिवाक्यशिष्टपशु-लताविरोधात् ।

---

१. क० अनुवाद्यैव ।		२. क० पूर्ववत् ।		३. क० यागत्वं ।

अथ वा पूर्वोक्तेन न्यायेनाऽन्यत एव पशुसोमयोः सिद्धत्वात्, अस्मिन्प्रकरणे पुनरर्थको द्रव्यसंयोगस्त्वत्पक्षे भवेत्। मम तु सोमशब्दो नामधेयम्। अग्नीषोमीयवाक्यं च देवताविधानार्थमिति, न किंचिदनर्थकम्। तस्मादवद्यतिगृह्णातिसंयुक्तैव यागोत्पत्तिचोदना स्यात् ॥ १७ ॥

अथ षष्ठं पशुसोमाधिकरणम् ।

न्या० सु०—द्रव्यसंयोगाच्चोदनापशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणोऽर्थेन नन्वाघाराग्निहोत्रयोरङ्गाङ्गिसम्बन्धाभावेनाभ्यर्हितं पूर्वं निपततीत्यस्याविषयत्वादल्पाच्तरत्वेनाघारशब्दस्य पूर्वनिपातो युक्तः। इह तु पशुशब्दस्य घ्यन्तत्वेऽपि 'लक्षणहेत्वोः क्रियायाः' इत्यादौ घ्यन्तस्य पूर्वनिपातव्यभिचारात्सोमस्य प्राधान्येनाभ्यर्हितत्वात्पशोः पूर्वतराभिधानमयुक्तमित्याशङ्क्याह—**पशोरिति**। न्यायनिष्ठे शास्त्रे न्यायव्युत्पादनादरविषयस्याभ्यर्हितत्वात्पशोश्च पूर्वपक्षस्य क्लिष्टत्वेन न्यायव्युत्पादनादरविषयत्वात् पूर्वनिपातो युक्त इत्याशयः। सूत्रे च पशुमात्रग्रहणेऽपि 'दैक्षस्य चेतरेष्वि'ति दैक्षस्य सर्वपशुप्रकृतित्वेन वक्ष्यमाणत्वादग्नीषोमीयस्यैव 'वरुणपाशाभ्यां वा एषोऽभिधीयते यो दीक्षित' इति दीक्षोपक्रमविधानेन दैक्षशब्दवाच्यत्वात्स एवोदाहर्त्तव्य इति सूचयितुं भाष्येऽर्थवादावयवोदाहणम्। 'हृदयादींस्तु पशुशब्देनानुवदति' **सोमशब्देन च रसमिति**। पूर्वपक्षभाष्ये पशुसोमशब्दयोरप्यनुवादत्वाभिधानाच्छब्दद्वयस्य सन्देहविषयत्वमाह—**द्वौ चेति**। पशावपि यज्यनुवादेन पूर्वपक्षवचनव्यक्तिं परमतेन दर्शयितुम्, तस्मिन्पक्षे हृदयादिवाक्येष्वेव यज्यनुमानात्पशुवाक्ये यजेरभावान्न शङ्का युक्तेत्याशङ्क्य देवतान्वयान्यथानुपपत्त्या 'यत्पशुना यजेत तदग्नीषोमीयेणेति प्राप्तेष्वपि यागेषु—यज्यमुमानं युक्तमित्युक्तम्'। सन्देहस्वरूपमाह—**तत्रेति**। कथं तर्हि भाष्यकृताधातुमात्रानुवादतावद्यतिगृह्णात्यभिहितकर्मविषयताचोक्तेत्याशङ्क्याह—**किमवद्यतीति**। गृह्णात्यवद्यत्योर्यागानभिधायकत्वाद्यजतिचोदनादुपायिचोदनादित्यादावभिधानार्थत्वेन दृष्टस्यापि चोदयतेरिहाभिधानार्थत्वानुपपत्तेराक्षेपापरपर्यायकल्पनावाचित्वमङ्गीकृत्यावद्यतेर्यागीयद्रव्यसंस्कारार्थावदानवाचित्वेन यागकल्पत्वमङ्गीकृत्यावद्यतिसम्बन्धानुमितानामित्येवं व्याख्याते गृह्णातावेतद्व्याख्यानासम्भवेनापरितोषाद्विधिवाचित्वमङ्गीकृत्यावद्यतिगृह्णातिशब्दयोः प्रत्ययलक्षणार्थत्वाभ्युपगमेन व्याख्यान्तरं कृतम्। हृदयादिरससमुदायवाचिनौ पशुसोमशब्दावित्यप्यनेन भाष्येणोपलक्षितमिति प्रदर्शनशब्देनोक्तम्।

ननूभयत्र यजेरनुवादकतायामालभतिशब्दो न युज्येतेत्याशङ्क्याह—**आलभतिरपि चेति**। अस्यां पूर्वपक्षवचनव्यक्तौ भाष्यानार्जवापत्तेरवद्यतिगृहणात्याक्षिप्तानां स्पर्शनयागकर्मणां समुदायस्यालभतियजती वदिताराविति यथाश्रुतं भाष्यं व्याख्यातुम्, स्वमतेन पशावालभत्यनुवादपूर्वपक्षवचनव्यक्तिमङ्गीकृत्य सन्देहस्वरूपमाह—**अथ वेति**। अवद्यतियुक्तेषु वाक्येषु यागविध्यप्रतीतेः पशुवाक्ये यागानुवादायोगद्योतनाय—**अवद्यताविद्युक्तम्**। नन्वेवं सति पूर्वपक्षेऽपि पशुवाक्ये यागविध्यापत्तेः कः पूर्वोत्तरपक्षयोर्विशेष इत्याशङ्क्य,

यत्पशुशब्दलक्षितं हृदयाद्यालभतेस्तदग्नीषोमीयं कुर्यादिति हृदयाद्यालम्भानुवादद्वारेणैकादशानामवदानानां प्रत्येकं देवतान्वयादेकादशयागाः पूर्वपक्षे, सिद्धान्ते च पशुद्रव्यैक्येन देवतानन्वयैक्यादेको याग इति विशेषोऽभिहितः। लक्षणसङ्गतिश्चानेन भेदाभेदफलत्वात् सूचिता। अनन्तरसङ्गतिस्त्वाघाराग्निहोत्रवाक्यविहितयोः कर्मणोर्दध्यूद्ध्र्वादिवाक्यानां गुणविधित्वोपपत्तेकर्मविधित्वाभावात्प्रकृतकर्माभावेन समुदायानुवादे निरस्ते, हृदयैन्द्रवायवादिवाक्यानां पशुसोमवाक्यविहितयोः कर्मणोर्गुणविधित्वायोगात्कर्मविधित्वापत्तेः प्रकृतकर्मसद्भावात्पशुसोमवाक्ययोः समुदायानुवादत्वं भविष्यतीत्याशङ्कानिरार्थत्वात्स्पष्टा।

नन्ववद्यतिना स्पर्शनाक्षेपेऽपि गृह्णातिना यागानाक्षेपान्नेयं व्याख्या युक्तेत्याशङ्क्य यथावद्यतौ स्पर्शनाक्षेपः, तथा सोमेऽपि यागाक्षेपइत्युक्ते तदुपादनाय—**अयमेवेत्युक्तम्।** ग्रहणस्य यागपर्यन्तत्वं विना देवतान्वयायोगाद्यागपर्यन्तत्वं सामानाधिकरण्योक्त्या विवक्षितम्।

यद्वा यथा पशौ पूर्वपक्षे बहवो यागाः। सिद्धान्ते त्वेकः तथा सोमेऽपीत्युक्ते तदुपपादनार्थं पूर्वपक्षे ग्रहणवाक्येष्वेव यागकल्पनाभिधानायाऽयमेवेत्युक्तम्। भाष्याञ्जस्यादालभत्यनुवादव्याख्यैव युक्ता, न यज्यनुवादव्याख्येत्याह—**तथा सतीति**। भाष्यकृद्व्याख्यानेऽपि पूर्वपक्षस्य सौत्रत्वसिद्ध्यर्थमुपांशुयाजाधिकरणपूर्वपक्षसूत्रस्थेन पौर्णमासीवच्छब्देनेहापि पूर्वपक्षाभिधानं सूचयत्पूर्वपक्षमारभते—**तत्रेति**।

नन्विह रूपश्रवणात्कथं पौर्णमासीतुल्यतेत्याशङ्क्य, सोमवाक्येदेवतानवगतेः, ऐन्द्रवायवादिवाक्यानां च यागानुमानात्प्रागपर्यवसानेन वाक्यान्तरानन्वयाद्देवतासंसर्पकत्वानुपपत्तेः, यागानां च रूपत्वाभावादरूपत्वमुपपादयति—**तथा हीति**। श्लोकं व्याचष्टे—**न हीति**। ननु दध्यादिवाक्यवदैन्द्रवायवादिवाक्येष्वपि विधिगौरवापत्तेः कर्मविधित्वाभ्युपगमो न युक्त इत्याशङ्क्याह—**यश्चेति**। सिद्धान्ते चैन्द्रवायवादिवाक्येष्वपि देवताविशिष्टग्रहणविध्यभ्युपगमादुभयत्र गौरवापत्तिरित्याह—**अपि चेति**। तत्सन्निधेर्गुणार्थेन पुनः श्रुतिरित्यत्र चोपपदश्रुतौ सम्भवदनुवादस्य कर्मणो विधेयत्वनिषेधान्न सोमवाक्ये यागविधिरित्याह—**किं चेति**। सम्भवदनुवादत्वं यादृशशब्देनोक्तम्। पूर्वपक्षे सोमशब्दस्याप्यनुवादत्वात्—**भवानित्युक्तम्**। श्लोकं व्याचष्टे—**एकत्रैवेति**। सत्याङ्गतावेकत्रैव विधिशक्त्यभ्युपगमस्य न्याय्यत्वात्सम्भवदनुवादे कर्मणि सति गुणे विधिशक्तिः संक्रामतीत्यग्निहोत्राधिकरणेऽभिहितमित्यर्थः।

किं तावदित्यादिभाष्येणालभतियजत्योरनुवादत्वेऽभिहिते हृदयादिरसद्रव्यकेषु यागेषु पशुसोमशब्दयोरप्राप्तार्थत्वेनानुवादायोगादुत्पत्तिशिष्टगुणावरोधेन च विध्ययोगादानर्थक्यमाशङ्क्य हृदयादीस्त्वित्यनेन लक्षणया हृदयादिरसानुवादकतोक्ता। तत्र पशुवाक्ये देवताविध्यभ्युपगमाद्वाक्यभेदापत्तेर्द्रव्यविध्ययोगेऽपि सोमवाक्ये 'अथैन्द्रवायवादिवाक्येषु लता विधीयत' इति भाष्ये द्रव्यविधेराशङ्क्ष्यमाणत्वात्पक्षद्वयमाह—**तत्रेति**। ननु

पशुशब्देन हृदयाद्यनुवादो देवतान्वयायाऽर्थवान्, सोमशब्देन तु रसानुवादोऽनर्थक इत्याशङ्क्य, लक्षितलक्षणया नामधेयत्वेनोपयोगमाह—**ततश्चेति**। द्रव्ये रूढत्वाद्यागनामत्वेनावभासमानमप्यानर्थक्यपरिहारार्थं नामधेयं भवतीति च्विप्रत्ययार्थः। नामान्तरसद्भावान्नामानर्थक्यमाशङ्क्यते—**नन्विति**। स एष यज्ञः पञ्चविधोऽग्निहोत्रम्, दर्शपूर्णमासौ, चातुर्मास्यानि, पशुः सोम(आ—श्रौ० सू०)इत्यादौ सोमशब्देनापि व्यवहारान्नानर्थक्यमिति परिहरति—**यदीति**।

नन्वेवं सति समस्तवाक्यानुवादोऽनर्थकः स्यादित्याशङ्क्याह—**समस्तेति**। यत्पौर्णमासीवाक्ये प्रयोगवाक्यगतसंख्योपजननं प्रयोजनमुक्तम्, तदेवात्रापीत्यर्थसोमशब्दस्यानुवादत्वमुक्तमुपसंहरति—**तस्मादिति**।

नन्वैन्द्रवायवादिवाक्येषु द्रव्यदेवतान्वयाद्यागकल्पनोपपत्तेः, क्रयादिवाक्येभ्यश्च सोमरसावगतेः सोमवाक्ये पूर्वपक्षसम्भवेऽपि, हृदयादिवाक्येषु देवताविरहाद्यागकल्पनानुपपत्तेर्हृदयादेश्च पशुप्रकृतित्वस्यान्यतोऽनवगतेः पशुवाक्ये पूर्वपक्षो न सम्भवतीत्याशङ्कते—**भवेदिति**। पशुशब्देन हृदयाद्यनुवादं तावदुपपादयति—**उच्यत इति**। षष्ठान्त्यवक्ष्यमाणो दृष्टान्तः। उत्तरार्द्धं व्याचष्टे—**हृदयादिभिरिति**। नन्वेवमपि यागानुवादो न सम्भवतीत्याशङ्क्याह—**तत्र त्विति**। आलम्भानुवादेनेह पूर्वपक्षोः न यागानुवादेनेत्याशयः। यागानुवादमपि प्रौढ्योपपादयति—**अथ वेति**। पशुसान्नाय्ययोः पशुप्रभवत्वसाम्येन द्रव्यसारूप्यात्पशुयागस्याष्टमे सान्नाय्ययागविकारत्वाभिधानात्, तेनैव न्यायेन हृदयाद्यवदानस्य द्रव्यसारूप्यात्सान्नाय्यावदानप्रकृतिकत्वावगतेः सान्नाय्यावदानस्य च यागीयद्रव्यसंस्कारार्थत्वेनाऽस्यापि तथात्वावसायाद् हृदयादीनां संस्कार्यत्वान्यथानुपपत्त्या पूतीकफलचमसवद्यागान्वयप्रतीतेः प्रत्यवदानं यागकल्पनात्पशुवाक्ये यागसमुदायानुवादोपपत्तिरित्यर्थः। परमतत्वद्योतनायोत्प्रेक्ष्यमाणशब्दः।

यच्च सोमवाक्ये प्रत्यक्षयजिसद्भावान्नैन्द्रवायवादिवाक्येषु तत्कल्पना युक्तेति दूषणम्, तदिहोभयत्राप्यानुमानिकत्वाविशेषान्नाशङ्क्यमित्याह—**साधारणश्चेति**। 'दश गृह्णातीति ग्रहणसमुच्चयदर्शनात्, तस्य च यागार्थत्वाद्यागसमुच्चयप्रतीते'र्दशमो गृह्यते, तृतीयो हूयत इति च द्वयोरपि क्रमदर्शनाद्यागैक्ये च दध्यादिवद्दे'वताविकल्पापत्तेः क्रमसमुच्चयानुपपत्तिप्रसङ्गाद्यागभेदार्थमपि ऐन्द्रवादिवाक्यानामेव यागविधिताश्रयणीयेत्यभिधानार्थमपि चेति भाष्यं व्याचष्टे—**सोमेति**। एतदेव 'संस्कारस्तु न भिद्येते'ति सूत्रे खादिरतादिवैषम्यस्य वक्ष्यमाणत्वात् तद्दृष्टान्तेनोपपादयति—**पश्येति**। ननु भेदपक्षेऽपि 'ग्रहं वा गृहीत्वा, चमसं वोन्नीय, स्तोत्रमुपाकरोती(तै० सं० ३-३)ति प्रत्येकं ज्योतिःशब्दवाच्यस्तोमयोगनिमित्तज्योतिष्टोमशब्दवाच्यत्वात्प्रत्येकं फलान्वयेन यागविकल्पापत्तेः क्रमसमुच्चयदर्शनानुपपत्तिरित्याशङ्क्य, समुदायानुवादबलात्समुदितानां फलान्वयावगत्यभिधानार्थमथ पुनरिति भाष्यं व्याचष्टे—**मम त्विति**। पशौ क्रमसमुच्चयदर्शनानुपन्यासस्याशयमाह—**पशाविति**।

एतदेव विवृणोति—**न हीति**। ननु हृदयादिसमुच्चयेऽपि लोहितं निरस्यतीत्यादिवाक्यान्तरवशेन केषां चित्पश्ववयवानामपनयान्न सर्वेण पशुनेष्टं स्यादित्याशङ्क्याह—**यन्मात्रमिति**। किं चिद**पनयेति** बाहुल्यात् सामस्त्यव्यवहारोपपत्तिरित्याशयः। नन्वेवं सत्यनिसिद्धेन हृदयाद्येकादशावदानातिरिक्तेनापि यागापत्तेरेकादशभ्य एव हृदयादिभ्योऽवदेयमिति दशमाधिकरणसिद्धान्तो विरुध्येतेत्याशङ्क्याह—**एतीति**। न्यायात्सर्वप्राप्ताव'प्येकादश'पशोरवदानानीत्यस्यानन्यप्रयोजनत्वादवयवान्तरपरिसंख्यार्थत्वेन तत्रत्यः सिद्धान्त इत्याशयः। समुच्चयांशेन त्वनुवादकत्वादिह लिङ्गत्वेनोपन्यासः।

ननु सोमस्यापि दशमुष्टेस्त्रिपवर्णो द्रोणकलशादिषु बहूदकादिषु[1] तस्य प्रादेशमात्रेण पात्रेण समस्तस्य ग्रहीतुमशक्यत्वात्सोमयागैक्येऽपि समस्तसोमसाधनकत्वादेव क्रमसमुच्चयदर्शनोपपत्तिरित्याशङ्क्याह—**सोमे त्विति**। उत्पत्तिवाक्ये सोमस्य समस्तचोदनाभावात्पशुवैषम्यं भाष्यकृतोऽभिमतमित्याशयः। तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। सूत्रे चोदनेत्येकवचनप्रयोगेऽपि पशुसोमयोरिति सप्तमीद्विवचनेनोदाहरणद्वयपरिग्रहात्कर्मणोश्चोदने इति द्विवचनान्तेन व्याख्याय, शुद्धकर्मचोदनाशङ्कानिरासार्थं प्रकारवाचिविधानशब्दप्रयोगेण विशिष्टचोदनात्वमुक्तम्, तत्स्पष्टत्वादव्याख्या अपूर्वद्रव्यसंयोगादि'त्येकं द्रव्यसंयोगलक्षणहेतुव्याख्यानर्थस्य कुत इत्यादिभाष्यस्य तात्पर्यं व्याचष्टे—**इतीति**। श्लोकं व्याचष्टे—**यदि हीति**। एवं विद्वानित्येवंशब्देन प्रकृताशेषरूपपरामर्शादशेषरूपप्रत्यभिज्ञानेऽभिहिते विद्वच्छब्दान्वयेनैवं शब्दस्य यज्यनन्वयाद्यागरूपापरामर्शकत्वे तु द्रव्यं संयोगमात्रमनेनैव भाष्येणोक्तमिति सूचयितुम्—**यदि वेत्युक्तम्**। पशुविकारस्य हृदयादेर्लक्षणया पशुशब्देनाभिधानात्सोमविकारस्य च रसस्य सोमशब्देनाभिधानान्नपूर्वद्रव्यसंयोगोऽस्तीत्याशङ्कानिरासार्थत्वेन 'प्रकरणे ह्यनर्थको द्रव्यसंयोग' इति सूत्रावयवस्य पशुसोमाख्यं द्रव्यं यागे संयोजयतीति व्युत्पत्त्या द्रव्यसंयोगशब्दोक्तः।

पशुशब्दः, सोमशब्दश्च प्रक्रियतइति व्युत्पत्त्या प्रकृते हृदयादौ रसे च मुख्यार्थत्यागापत्तेर्न प्रवर्त्ततइत्येवं व्याख्यानार्थं नन्वित्याशङ्काभाष्यं तावद्व्याचष्टे—**तत्रेति**। नैतदित्यादिव्याख्याभाष्यं व्याचष्टे—**तत्रेति**। किं लक्षणाश्रयणे कारणं यदिह नास्तीत्यपेक्षायामाह—**विस्पष्टे हीति**। यञ्चाक्रोशन्तीतिवत्परशब्दसामानाधिकरण्याभावेऽपि गङ्गायां घोष इत्यादौ लक्षणां विना पदान्तरान्वयासम्भवे लक्षणादर्शनाद्—**अनन्यथासम्भवे वेत्युक्तम्**।

ननूत्पत्तिशिष्टरसहृदयाद्यवरुद्धयोर्यागयोर्लता-प्राणिविध्ययोगात्पशुशब्दस्य च प्रकृतहृदयाद्यनिवेशे देवताविधिपरे वाक्ये द्रव्यविध्ययोगेनार्थक्यापत्तेः, अस्त्यनन्यथा सम्भव इत्याशङ्क्याह—**शक्यं हीति**। यागान्तरविध्यभ्युपगमान्नैकोऽपि दोष इत्याशयः। अपूर्वयोः कर्मणोरिति सिद्धान्तोपक्रमस्थमपूर्वशब्दं उपांशुयाजाघाराग्निहोत्राधिकरणसिद्धान्तोपक्रम-

---

1. बहुरकादिषु इति मु० पु० पा०।

भाष्यस्थकर्मान्तरशब्दवदभ्युपेत्यवादत्वेन व्याचक्षणः, तस्मादित्युपसंहारभाष्यं तदनुसारितया व्याचष्टे—**तेनेति**। न हि तस्य गुणार्थिनेति सूत्रावयवं प्रकृतेषु यागेष्वनर्थको द्रव्यसंयोग इत्येवमर्थावृत्तपूर्वावयवसहितमाशङ्कोत्तरत्वेन व्याख्यातुमथेत्याशङ्काभाष्यमुत्पत्तिशिष्टर-सावरुद्धे यागे प्रदेयतया लताविध्याशङ्कानुपपत्तेरयुक्तमाशङ्क्य, प्रदेयप्रकृतित्वेन लताविध्याशङ्कार्थतया व्याचष्टे—**कस्मादिति**। भाष्यानारूढपशुग्रहणेन सिद्धान्ते द्वयोरपि प्रदेयप्रकृतित्वेन विधिः सूचितः।

न सेति भाष्यं मध्यप्रतीकेनोत्तरतयावतारयति—**तत्राहेति**। प्रदेयप्रकृतित्वेनापि विधौ शङ्किते गृह्णादिवाक्येष्वण्व्या धारया गृह्णातीति प्राकरणिकवाक्यान्तरालोचनेन धाराग्रहण-योग्यद्रव्यप्रतीतावपि स्वाभाविकद्रवत्वयुक्तस्योदकादेरपि धाराग्रहणोपपत्तेर्विकारद्रव्यानवगमेन 'सोममभिषुणोतीत्यादिवाक्यालोचनाद्विकारद्रव्यावगमाभ्युपगमे तु प्रकृतिद्रव्यस्याप्यवगमे प्रकृत्यनपेक्षणात्प्रदेयतयैव विधेयत्वं शङ्कनीयमित्यापाद्य, श्रौतरसावरुद्धेषु योगेषु वाक्येन लताविध्यनुपपत्त्यभिधानार्थत्वेन भाष्यं व्याचिख्यासुरवद्यतिवाक्येषु हृदयादिविकारद्रव्य-प्रतीतेस्तत्प्रकृतित्वेन पशुविध्याशङ्कापरिहारौ कस्मान्नौपन्यस्तावित्याशङ्कानिरासपूर्वं व्याचष्टे—**पशुस्तावदिति**। ननुतद्धितश्रुत्यनुपात्तत्वान्न रसस्य लतातो बलीयस्त्वम्, प्रत्युत प्रकरणलभ्यत्वाद्दौर्बल्यमित्याशङ्कते—**कथं पुनरिति**। सास्य देवतेति सन्निहितविशेष-वाचिसर्वमानस्यशब्दार्थे तद्धितस्मृतेः श्रौतत्वमाहोच्यत इति। नन्वनुपात्तस्य द्रव्यविशेषस्य देवतान्वयो न सम्भवतीत्याशङ्क्याह—**अधिकारेणेति**। सन्निहितत्वोपलक्षितस्य द्रव्य-विशेषस्य तद्धितश्रुत्या देवतान्वये कृते, कस्येति निर्द्धारणापेक्षायां प्रकरणान्निर्द्धार्यत इत्यर्थः। एतच्च 'तद्धितनिर्देशे श्रुत्ये'ति गुणाधिकरणभाष्यव्याख्यावेलायां [ देवतासङ्गतिः श्रुत्या तद्धितान्तात्प्रतीयते ] इत्यादिवार्तिकेनोपपादयिष्याम इत्याह—**गुणश्चेति**। वैश्वदेवाधिकरणव्युत्पादितोत्पत्त्युत्पन्नशिष्टबलाबलाभिधानार्थं चैतद्भाष्यमिति सूचयितुं युक्त्यन्तरमाह—**किं चेति**। दुर्बलतरत्वसूचनार्थं प्रवृत्तापेक्षत्वं वाक्यान्तरस्य विशेषणम्। लतायाश्च दौर्बल्याद्रसावरुद्धेषु यागेषु विधातुमशक्यत्वे सति न केवलं प्रकृतप्रत्यभिज्ञानानु-वादायोगाद्यागस्य-विधेयत्वापत्तेः पुनर्विधानलक्षणादभ्यासाद्भेदः, किं तु गुणादपीत्याह—**ततश्चेति**। व्याख्यातं भाष्यं दूषयितुमारभते—**शक्येति**। प्रकृतेषु यागेषु रसविरोधा-त्प्रदेयतया लताविध्ययोगेऽपि व्रीहिवत्प्रदेयप्रकृतितया विध्युपपत्तेः शक्यपरिहारं भाष्योक्तं दूषणमित्याशयः।

नन्वष्टाकपालादिशब्दानां संस्कृततद्धितान्तत्वात् 'ते पुरोडाशं कूर्मं भूत्वा सर्पन्तमपश्यन्नि-(तै. सं.—२.५)त्याग्नेयवाक्यशेषाच्चाष्टाकपालशब्दस्य पुरोडाशविषयत्वावगमाद्विकारद्रव्य-प्रतीतेः प्रकृत्यपेक्षायां युक्तः प्रकृतित्वेन व्रीहिविधिः, ऐन्द्रवायवादिवाक्येषु तु धारावाक्या-द्द्रवद्रव्यावगमेऽपि विकारद्रव्यत्वानवगतेरभिषवादिवाक्यालोचने तु प्रकृतिद्रव्यस्याप्यवगतेर्न लतायाः प्रकृतित्वेन विधिर्युक्त इत्याशयेन पृच्छति—**कुत इति**। विकारद्रव्यत्वाभावेऽपि धानादिवत्कपालसंस्कार्यत्वोपपत्तेर्वाक्यशेषस्य च 'विष्णुरुपांशु यष्टव्य' इत्यादिवत्

'ऊर्जोऽवरुध्या' इत्यादिवच्च स्तुतिमात्रोपयुक्तस्य विध्युद्देशापेक्षितार्थसमर्पकत्वायोगादश्वशफमात्रः पुरोडाशो भवतीत्यादिविध्यन्तरालोचनाच्च पुरोडाशप्रतीत्या विध्युद्देशपर्यवसानोपपत्तौ स्तुत्युपयुक्तस्य रात्रिसत्रवत्परावृत्त्यविधित्वकल्पनानुपपत्तेरष्टाकपालादौ प्रकरणानालोचने प्रकृतिविकारद्रव्ययोर्द्वयोरप्यप्रतीतेस्तदालोचने च द्वयोरपि प्रतीतेः, किं प्रकृतिकोऽसावित्यनपेक्षायामपि किं पुरोडाशप्रकृतिभूता व्रीहयस्तन्निष्पत्तौ व्यापारयितव्याः, किं वाऽन्योवासो-जाघनीवद्यथाकथंचिन्निष्पन्नं व्रीहिमयपुरोडाशस्वरूपमात्रं व्यापारयितव्यमित्यपेक्षायां निर्वापावघातपेषणसंयवनपिण्डकरणादिनिष्पादकविधिदर्शनेन प्रयोगकाले निष्पादनावगमात्, असम्भवेऽपि निष्पादकविध्यनालोचने च 'पर्णमयी जुहुर्भवती'त्या-(तै० सं०–३२)दिवत्प्रकृतिद्रव्यविधानेऽपि यथाकथंचिद्विशिष्टद्रव्यलाभेनापि प्रयोगोपपत्तेः, प्रयोगकाले निष्पादनानाक्षेपापत्तेर्यथा व्रीहीणामविधानेसक्तुवदसंस्कार्यत्वापत्तेर्निर्वापादिविधीनामारादुपकारित्वप्रसङ्गाद्यागाङ्गत्वेनैव विहितेषु व्रीहिषु योग्यतया पुरोडाशप्रकृतित्वेनाऽविरोधोपपत्तौ विरोधापादकसाक्षाद्यागसाधनत्वाङ्गीकरणानौचित्यात्प्रकृतिताऽवसीयते, तथा सोमेऽपीत्याशयेनोत्तरमाह—**यथैवेति । श्लोकं व्याचष्टे । विधीयमानं हीति ।**

लताविशिष्टयागविधिपक्षेऽपि चाभिषवेण लतास्वरूपनाशात्प्रदेयप्रकृतित्वेनैव यागाङ्गता तुल्येत्याह—**अपि चेति ।** रसलतयोश्च विरोधाभ्युपगमे रसस्योत्पत्तिशिष्टत्वपक्षे लताया दौर्बल्यात्तदानुगुण्येन प्रवृत्तेस्तदा । अपेक्षितप्रकृतित्वाङ्गीकरणेन विरोधः शक्यपरिहारः लतायास्तूत्पत्तिशिष्टत्वे दुष्परिहर इत्याह—**अपि चेति । श्लोकं व्याचष्टे । रसस्येति ।** का तर्ह्यैन्द्रवायवादिष्वित्यादेर्भाष्यस्य गतिरित्यपेक्षायामुत्पत्तिशिष्टरसावरोधात्प्रदेयत्वेन लताविध्याशङ्कानुपपत्तेः प्रदेयप्रकृतित्वाशङ्कायाश्च निराकर्त्तुमशक्यत्वादुपेक्षणीयत्वं वक्तुमाह **तस्मादिति ।** पशुसोमाख्यगुणस्य प्रदेयप्रकृतित्वेन विधिरित्याशङ्का नोद्घाटनीयेति वाच्ये, तन्निरासार्थस्य न हीति सूत्रावयवस्याप्युपेक्षणीयत्वसूचनायाऽनुद्घाट्यैवोत्तरं सूत्रं प्रस्ताव्यमिति ल्यपि प्रयुक्ते, अवयवद्वारेण सकलसूत्रापेक्षां प्रसज्यमानां निराकर्त्तुं समुदायेत्युक्ते गुणविधित्वाशङ्कायामनिरस्तायां कथं कर्मविधित्वसिद्धान्तसिद्धिरित्याशङ्क्य पशावित्युक्तम् । प्राप्ते कर्मण्यनेकगुणविध्ययोगादेव तत्राशङ्का नोत्तिष्ठतीत्याशयः । सोमे कथं सिद्धान्तसिद्धिरित्यपेक्षायामुत्तरसूत्रेण गृह्णातिवाक्यानां कर्मविधित्वनिरासादिति सोमे त्वित्यनेनोक्तमिति योज्यम् । समुदायानुवादत्वमात्रं निराकृत्यमिति सुगमः पाठः ।

एवं तु सूत्रभाष्यकृतोर्द्वयोरप्यबुद्धिपूर्वकारित्वापत्तेः पूर्वत्रापरितोषेणोत्पत्तिशिष्टरसावरोधान्नैन्द्रवायवादिवाक्यविहितेषु यागेषु लताविधानं तु शक्येति पूर्वसूत्रावयवोक्तामुपपत्तिं चकारेणोत्पत्तिशिष्टरसावरोधेऽपि तत्प्रकृतित्वेन लताविधिसम्भवरूपनिराकरणहेतुसूचनपूर्वमुत्तरसूत्रेणैन्द्रवायवादिवाक्यानां कर्मविधायित्वाभावान्न रसस्योत्पत्तिशिष्टतेत्येवं निराकृत्यैन्द्रवायवादिवाक्यानां कर्मविधित्वाभावलक्षणयैवोपपत्त्या सोमवाक्यस्य कर्मविधित्वं निर्णेतव्यमिति पक्षान्तरमाह—**अथ वेति ।**

निराकार्योपपत्त्युपन्यासस्यापि मन्दप्रयोजनत्वेनेहाप्यरितोषात्स्वयमन्यथा सूत्रव्याख्यामारभते—**पूर्वेति**। पशुसोमवाक्योदाहरणेऽस्य सूत्रस्य पूर्वपक्षोक्तचाशक्तिमाशङ्कते—**कथं पुनरिति**। गृह्णात्यवद्यतिवाक्योदाहरणाङ्गीकरणेन पूर्वपक्षे सूत्रं योजयितुं सन्देहस्वरूपं तावदाह—**उच्यते इति**। योजयति—**किमति**। पशुसोमवाक्ययोरुत्पत्तिचोदनात्वे सति प्रकरणापेक्षो गृह्णात्यवद्यतिवाक्येषु रसहृदयादिद्रव्यसंयोगो विधीयमानो न यागाङ्गत्वं प्रतिपद्येतेति मध्यमावयवे व्याख्याते ऽवदानग्रहणयोः पशुसोमसंस्कारार्थत्वेनाविरोधशङ्कानिरासार्थतयाशङ्क्य, स्वरूपनाशकत्वात्संस्कारार्थत्वायोगाभिधानार्थत्वेन न हीति सूत्रावयवं व्याख्याय, प्रदेयप्रकृतित्वेनाविरोधाशङ्कानिरासार्थतया तस्योत्पत्तिवाक्यैः प्रदेयत्वेन प्रकृतस्य रसहृदयादेः प्रकृतित्वलक्षणगुणार्थेन पशुसोमयोः संस्कारवाक्यैरेव 'सोमं क्रीणाती'त्यादिवार्त्तिकोक्तेन न्यायेन सिद्धतया विध्ययोगात्प्रकृतेरसहृदयादौ प्रकृतित्वेन पशुसोमद्रव्यसंयोगोऽनर्थक इति व्याख्यान्तरेऽथवेत्यनेन कृते, मम त्वित्यनेन पूर्वपक्षेऽर्थवत्तोक्ता। पूर्वपक्षसूत्रार्थमुपसंहरति—**तस्मादिति** ॥ १७ ॥

भा० प्र०—श्रुति में ज्योतिष्टोम प्रकरण में "यो दीक्षितो यदग्नीषोमीयं पशुमालभेत" (जो यज्ञ में दीक्षित है, वह अग्नीषोमीय पशु का वध करे) इस वाक्य के सन्निधान में "हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः" तै० सं० ६।३।१० ) प्रथम पशु के हृदय भाग का अवदान ( खण्ड ) करे, अनन्तर जिह्वा अंश का अनन्तर वक्ष अंश का यह वाक्य पढ़ा गया है।

इसी प्रकार "सोमेन यजेत" सोमयाग करे इस श्रुति के समीप में "ऐन्द्रवायवं गृह्णाति" अर्थात् इन्द्र वायु देवता के उद्देश में सोम का ग्रहण करे एवं मित्रावरुण देवता के उद्देश में सोम ग्रहण करे—ये दो वाक्य कहे गये हैं। इनमें यह संशय है कि "हृदयस्याग्रे अवद्यति" इत्यादि वाक्य में एवम् "ऐन्द्रवायवं गृह्णाति" इत्यादि वाक्य में जो याग विहित है उसी का "अग्नीषोमीयं पशुमालभेत" एवं "सोमेन यजेत" ये दो वाक्य अनुवाद हैं या "अग्नीषोमीयम्" इत्यादि दो वाक्य अनुवाद नहीं हैं, वरन् उन्हीं के द्वारा याग का विधान किया गया है।

इस प्रसङ्ग में पूर्वपक्षी का कहना है "हृदयस्याग्रे अवद्यति" इत्यादि वाक्यों के द्वारा ही हृदयादि द्रव्य विशिष्ट कतिपय यागों का विधान किया गया है। अग्नीषोमीयम् इत्यादि वाक्यों से उन्हीं का अनुवाद कर अग्नीषोम नाम के देवता का विधान किया गया है। इसी प्रकार "ऐन्द्रवायवम्" इत्यादि कतिपय यागों का विधान किया गया है, कारण, इस स्थल में 'इन्द्रवायू' इस प्रातिपदिक से देवता एवं इन्द्रवायू के आगे विहित तद्धित प्रत्यय से सोम स्वरूप द्रव्य की प्रतीति होती है। "सोमेन यजेत" इस वाक्य में उन्हीं के समुदाय का अनुवाद करता है।

समाधान में सिद्धान्ती ने कहा है "चोदना पशुसोमयोः", पशु एवं सोमपद युक्त वाक्य से ही अपूर्व कर्म का विधान किया जाता है। अतः, इस स्थल में अग्नीषोमीय

वाक्य एवं "सोमेन यजेत" यह वाक्य अनुवाद नहीं हो सकता है। हृदयादि वाक्य में एवम् ऐन्द्रवायवादिवाक्य से जो याग विहित होता है—यह उसी का अनुवाद होगा—यह नहीं कहा जा सकता है। क्योंकि, "द्रव्य संयोगात्" पशु एवं सोमरूप अपूर्व द्रव्य का सम्बन्ध उपदिष्ट होता है। आशय यह है कि पशुपद हृदयादि का वाचक न होने से उसके द्वारा हृदयादि याग का अनुवाद नहीं हो सकता है। क्योंकि, हृदयादि ही पशु नहीं है। वरन्, ये पशु के विकार या अवयव विशेष हैं। इस प्रकार सोमपद इसका अभिधायक न होने से वह प्रदेय नहीं है। प्रदेय न होने पर ऐन्द्रवायवादि वाक्य से विहित याग का अनुवाद नहीं हो सकता है। ऐन्द्रवायवादि विहित याग में सोम लभ्य रूप गुण का विधान भी नहीं हो सकता है, कारण, "अन्य्या धारया" इत्यादि वाक्य में रस विषय कहना आरम्भ कर ऐन्द्रवायव इस पद के तद्धित प्रत्यय के श्रवण से वही विहित होता है, अतः, उसका अतिक्रमण कर सोमलता की प्राप्ति नहीं हो सकती है। इसीलिए पशुपद एवं सोमपद प्रकरण प्रतिपादित हृदयादि का एवं रस द्रव्य वाचक न होने से उसका आनर्थक्य होने से यह अनुवाद नहीं वरन् विधि है। इसीलिए सूत्र में, कहा गया है प्रकरणे ह्यानर्थक्ये द्रव्यसंयोगाः।

"पशुसोमयोः" = पशु एवं सोमपद प्रयुक्त दो वाक्यों में "चोदना" = अपूर्व कर्म का उपदेश, "द्रव्यसंयोगात्" = पशु एवं सोमरूप द्रव्यों के साथ संयोग अर्थात् सम्बन्ध होने से, "हि" = क्योंकि "प्रकरणे" = प्रकृत हृदयादि वाक्य में एवम् ऐन्द्रवायवादि वाक्य में याग विहित होने पर "द्रव्यसंयोगः" = पशु सोमपद प्रयुक्त दो वाक्यों में उपदिष्ट द्रव्य का संयोग, "अनर्थकः" अनर्थक होता है, कारण, उसमें अर्थात् पशुशब्द एवं सोमशब्द में लक्षणा करनी होगी, "हि" = क्योंकि, "तस्य" = उसका अर्थात् हृदयादि वाक्य से विहित याग का, "गुणार्थे न" = गुण के लिए विधान नहीं हो सकता है ॥ १७ ॥

## अचोदकाश्च संस्काराः ॥ १८ ॥

**शा० भा०—एवं तावत्प्रकृतेषु सत्स्वपि नानुवादावित्युक्तम्। अथेदानीं प्रकृता एव यागा न सन्तीत्युच्यते। कुतः? अचोदकाः संस्काराः। न चैन्द्रवायवादिभिर्यागा विधीयन्ते[1]।**

**अत 'ऐन्द्रवायवं गृह्णाति' इति इन्द्रवायुभ्यां संकल्पयतीत्येतावदुक्तं भवति। तत्र यागमन्तरेण संकल्पयतीत्येतन्न युज्यत इति, यागः कल्प्येत। स[2] एवाऽऽम्नातो यागो यस्मिन्सति संकल्पोऽवकल्प्येत। तस्मान्न ऐन्द्रवायवं गृह्णातीत्येवमादिभिर्यागा विधीयेरन् तेन ग्रहणमुपकल्पनमात्रं दृष्टार्थम्। उपकल्प्यमाने तु**

---

१. ब. ऐन्द्रवायवं गृह्णातीति इन्द्रवायुभ्यां संकल्पयती-त्येतावदुक्तं भवति (इत्यधिकम्)।

२. ब. स चात्रास्ति यागो।

**देवतासंकीर्तनमदृष्टाय। प्रकृतानां यागानामभावान्न समुदायशब्दो यजतिः। तथाऽऽलभतिशब्द इति ॥ १८ ॥ आ० नि० ॥**

भा० वि०—नन्वैन्द्रवायवादिवाक्यविहितेषु यागेषु स्वद्रव्यप्रकृत्यपेक्षिषु प्रकृतित्वेन लतामात्रं विधीयतां किमपूर्वयागविधानेनेति चोदयति—**अथेति**। आवृत्तपूर्वावयवसहितं नहीति सूत्रावयवं व्याचक्षाणः परिहरति—**नसेति**। कुत इत्यत आह—**श्रुत्या हीति**। ऐन्द्रवायवादिपदस्य द्रव्यमात्रविषयतया तद्विशेषाकाङ्क्षायां **अण्वया** धारया गृह्णाति इति द्रवद्रव्यप्रतीतावपि स्वाभाविकद्रवत्वयुक्तस्योदकादेरपि सम्भवेन प्रकृत्यपेक्षानवगमात् सोममभिषुणोतीत्यादिवाक्यालोचनया विकारद्रव्यविशेषाभ्युपगमे प्रकृतिद्रव्यस्यापि सोमस्यावगमेन प्रकृत्यनपेक्षणात् प्रदेयद्रव्यतयैव लताया अपि विधेयत्वमापतति, तत्र चैन्द्रवायवादिश्रुत्या रसस्य प्रदेयद्रव्यत्वावगमात्, न सोमवाक्येन लताया अपि प्रदेयतया विधानं सम्भवति श्रुतिविरोधे वाक्यस्य दौर्बल्यात् उत्पत्तिशिष्टरसावरुद्धे च यागे लताविधानानुपपत्तेरितिभावः, लताविध्यसम्भवे फलितं दूषणमाह—**तस्मादिति**। द्रव्यस्य यागेन संयोगं वक्तीति द्रव्यसंयोगवचनः सोमशब्दः अनुवदितुमिति विकारसम्बन्धेन रसमनुवदितुमिति लक्षणापत्तेरशक्नुवन्निति भावः, अनेन यस्माद्गुणार्थेन प्रकृतिद्रव्यस्य प्रदेयद्रव्यस्य वा विधानार्थत्वेन सोमशब्दस्यार्थवत्ता न सम्भवति तस्मात् प्रकृतेषु कर्मसु सत्स्वप्यनर्थको द्रव्यसंयोग इति सूत्रार्थो दर्शितः पशुवाक्यस्य तु पूर्वपक्षे देवताविधित्वान्न पशुशब्दस्य द्रव्यविधित्वशङ्कापीत्यभिप्रेत्योपसंहरति—**तस्मादिति**।

ननु गुणाधिकरणवक्ष्यमाणन्यायेन तद्धितस्यैव द्रव्यविशेषविषयत्वादैन्द्रवायवादिवाक्यैरेव सोमरसप्रतीतावप्यभिषवादीनां सोमसंस्कारत्वात् सोमविनियोगोऽभ्युपगन्तव्यः अन्यथा तेषामर्थकर्मत्वप्रसङ्गात्, तेनादित एव सोमरसस्यैव देवतासम्बन्धप्रतीतेः कास्य प्रकृतिरिति जिज्ञासाभावेऽपि प्रकृतिरूपलताप्रभृत्युपादानप्रयोजनोविधिः प्रकृतिर्द्रव्यविधिरित्युच्यते ततः प्रदेयतया लताविध्यसम्भवेऽपि प्रकृति तया तद्विधानासम्भवात्, नहि तस्येत्यादिनोक्तः परिहारोऽनुपपन्न इत्याशङ्क्य परिहारान्तरमाह—**अचोदकाश्चेति**। अभ्युपगम्य वादत्वान्न विवक्षितः पूर्वसूत्रावयवोक्तः परिहारः किन्तु आवादिक इति सूचनाय सूत्रतात्पर्यमाह—**एवमिति**। नानुवादार्थमालभतियजत्योरिति शेषः, प्रकृतयागाभावे हेतुं पृच्छति—**कुत इति**। सूत्रमादाय चोदका इति भागं हेतुत्वेन व्याचष्टे—**न चेति**। किं तर्हि विधीयत इत्याशङ्क्य संस्कारा इति भागं व्याचष्टे—**ऐन्द्रवायवमिति**। ग्रहणाद्युपकल्पनाख्यानि संस्काररूपाणि विधीयत इत्यर्थः, ननु देवतोद्देशेन गृहीतं द्रव्यं यावद्यागेन न सम्बध्यते न तावद्देवत्यं कृतं भवति इति तदन्यथानुपपत्त्या

यागोऽपि तत्र कल्प्यते, तत्राह—**तत्रेति।** यदैवान्यथानुपपत्त्या यागं कल्पयितुमारभते तदैव सोमेन यजेतेति सन्निहितः प्रत्यक्षो यजिरविशेषात् सर्वद्रव्यदेवतासंयोगानुपपादयितुमुपतिष्ठन् यागान्तरकल्पनाप्रमाणं निरुवद्धीत्यर्थः। तेन निष्प्रमाणकत्वान्नाश्रिता यागकल्पना शक्येत्याह—**तस्मादिति।** ननु देवतोद्देशेन ग्रहणमपि तस्य द्रव्यदेवतासम्बन्धोपपादकयागकल्पकत्वाभावेऽनर्थकं स्यादत आह—**नैनेति।** इन्द्रवायुभ्यामित्यादिसङ्कीर्तनमदृष्टार्थत्वान्नानर्थकमित्यर्थः, ऐन्द्रवायवादिवाक्यान्तं देवताविशिष्टग्रहणसंस्कारविधायकत्वेन कर्मविधित्वाभावे फलितमाह—**अत इति।** अवद्यतेश्चावखण्डनमात्रार्थतया द्रव्यदेवतासम्बन्धवद्यायागानुमापकत्वाभावेन तत्रापि यागाप्राप्तेः आलभतिशब्दोऽपि न समुदायानुवाद इत्याह—**तथेति** ॥ १८ ॥

त० वा०—नैवैतौ समुदायानुवादौ 'चोदना वाऽप्रकृतत्वात्' इत्येतस्मादेव हेतोः। कथं प्रकृता न संभवन्ति। यतोऽवद्यतिगृह्णातयो न यागानां चोदकाः, किं तर्हि ? संस्कारमात्रविधयः। तन्मात्रपर्यवसानात्। तन्मात्रपर्यवसायिनि निष्प्रमाणकत्वान्नाश्रुतयागकल्पनं शक्यम्। एवं हि स कल्प्यमानः कल्प्येत देवतोद्देशेन गृहीतं द्रव्यं न यावद्यागेन संबध्यते, न तावत्तद्दैवत्यं कृत्यं कृतं भवतीति। तत्र यदैवाथानुपपत्त्या यागं कल्पयितुमारभते, तदैव संनिहितः प्रत्यक्षो यजिरविशेषात्सर्वान्द्रव्यदेवतासंयोगानुपपादयितुमुपतिष्ठन्यागान्तरकल्पनाप्रमाणं निरुणद्धि। तस्मिंश्चाप्रमिते कस्य समुदानुवादो भविष्यति।

यदुक्तमाग्नेयादिवन्नापरिकल्पिते यजौ वाक्यान्तरापेक्षेति। तत्र ब्रूमः—

पुंव्यापारनियोगेन वाक्यं सर्वत्र पूर्यते।
तदलाभे त्वपूर्णत्वं तल्लाभे वाक्यसंगतिः॥

'आग्नेयौऽष्टाकपालो भवती'ति न यागादन्यः पुंव्यापारः प्रतीयत इति प्राक्तदनुमानादपरिपूर्णं वाक्यम्। इह 'त्वैन्द्रवायवं गृह्णाती'ति ग्रहणभावनायां पुरुषो नियुज्यते। तत्र प्रागपि यज्यनुमानादस्ति विधेर्विषय इति समाप्यते वाक्यम्। इदं त्वन्यत्, यत्-ततः परमपि किंचिदपेक्ष्यते। सर्वमेव हि वाक्यं स्वार्थे पर्यवसिते अर्थान्तरापेक्षां न जहाति। न च तावता तदसमाप्तं भवति। या त्वसावपेक्षा, सा वाक्यान्तरेण पूरयिष्यत इत्यवगमान्न वाक्यान्तरसम्बन्धं न सहते। तेन यज्यनुमानवेलायां प्रतिवाक्यं सोमेन यजेत' इत्यस्योपस्थानं न विरुध्यते। 'आग्नेयोऽष्टाकपालः' इति तु भवतेरपुरुषव्यापारात्मकत्वात्प्राग्यजेर्न किंचिद्विहितम्, न किंचित्प्रतिषिद्धमित्यसमाप्ते वाक्ये, वाक्यान्तरे चानपेक्षिते यजिरनुमीयमानो न वाक्यान्तरगतः सम्बध्यत इति वैषम्यम्।

अथ यदुक्तमुत्पत्तिशिष्टयोः पशुसोमयोर्न वाक्यान्तरगता विकारापत्तिर्युक्तेति। तत्र ब्रूमः—

द्रव्येणात्यन्तभिन्नेन सह चिन्त्यं बलाबलम्।
हृदयादिरसद्वारमङ्गत्वं पशुसोमयोः॥

यद्यत्रौत्पत्तिकौ पशुसोमौ परित्यज्य, अत्यन्तव्यतिरिक्तं किंचिद् द्रव्यं विधीयते, ततो विरोधः स्यात्। इह तु पशुनैव हृदयादिद्वारेण यागः साध्यते। सोमेन च रसद्वारेण। न चेतिकर्तव्यतासम्बन्धे कश्चिद्विरोधः। पशुसोमौ हि यागसाधनत्वेन चोद्यमानावितिकर्तव्यतामाकाङ्क्षतः। तत्र च रसहृदयादि-निष्पत्तिद्वारेणेत्येवं कथंभावः पूर्यते। तेनानुग्राहकत्वान्न तत्कल्पने विरोधापत्तिः।

यत्तु प्राकरणिकैः क्रयादिवाक्यैरेव प्राप्तत्वादिह द्रव्यसंयोगोऽनर्थक इति। तत्रापि अचोदकाश्च संस्कारा इत्येवोत्तरम्। न हि ते विधयः-सोमस्य पशोर्वा चोदकाः, किं तर्हीतयोरेव संस्कारकाः। तेन चोदितस्य द्रव्यस्य यथाकथंचिदु-पादानेन यागसाधनत्वे प्रसक्ते, क्रयोपात्तेनैव, अभिषवादिसंस्कृतेन च साधयि-तव्यामिति विधीयते। न च मन्त्रवर्णस्यात्यन्ताविहितच्छागप्रापणसामर्थ्यम्, पशुचोदनाविहितस्य तु सन्देहापनयनमात्रमुपयुज्यते[1]। न चाव्यतिरेकान्तेन यागमनुमापयति, विनाऽपि तेन खण्डनमात्रतया लोके वेदे चोपपत्तेः। द्रव्यदेवता-संयोगस्तु न कथंचिद्यागाद्विना सिध्यतीत्यनुमानवैषम्यम्।

न[2] च सांनाय्यावद्यतिः प्रकृतौ चोदितः, अर्थगृहीतत्वाद्यतस्तद्धर्मप्राप्तिरपि स्यात्। न चास्य यागद्रव्यार्थत्वमितिकर्तव्यता, येन तदतिदिश्येत। न चेदृशेऽर्थे सामान्यतोदृष्टं प्रक्रमते। पूतिकाभिषव-फलचमसभक्षयोस्तु वाक्यप्रकरणाभ्यां तादात्म्यविज्ञानमित्यसमानता। सोमवाक्येऽपि विशिष्टविधौ प्रत्यक्षोपात्ते सत्यानुमानिकासम्भवादेवातुल्यत्वम्। न चैन्द्रवायवादिवाक्येऽप्यष्टाकपालादि-वाक्येष्विव गुणवाक्यत्वेऽपि वाक्यभेदः ?

कुतः ?

विधेयानेकभावेऽपि देवताग्रहणात्मना।
क्रियान्तरप्रसादेन विशिष्टविधि सम्भवः॥

शक्यते हीन्द्रवाय्वादिविशिष्टग्रहणभावनाविधिराश्रयितुम्। अर्थप्राप्ते वा ग्रहणे समासोपात्तैकदेवताविधानमात्रमविरुद्धम्। प्रकरणलभ्यश्च प्रधानसम्बन्ध इति, गुणवाक्यत्वेऽप्यदोषः। तस्मादेषां संस्कारत्वादन्यतो यागमपेक्षमाणानाम विरुद्धोऽन्येन यागविधिः। एवं च सति ज्योतिष्टोमेनेत्येकवचनं मुख्यमेव भवति। न च सोमशब्दः क्लेशेनानर्थकं द्वितीयना[3]मत्वं प्रतिपत्स्य[4]ते। न चाऽऽघाराग्नि-

१. क० युज्यते। २. क० न चावद्यतिसान्नाय्यैः न चायं सान्नाय्यावद्यतिः।
३. क० द्वितीयमानत्वं। ४. प्रतिपत्स्यति।

होत्रपूर्वपक्षसदृशः समस्तवाक्यानुवादोऽनर्थक आश्रितो भविष्यति। तेन चोदना पशुसोमयोरिति सिद्धम् ॥ १८ ॥

न्या०सु०—पूर्वसूत्रसमर्थनार्थं गृह्णात्यवद्यतिवाक्यानां कर्मविधित्वपूर्वपक्षकरणेऽप्यधिकरणत्रयस्य समुदायानुवादापवादार्थत्वेन पशुसोमवाक्ययोः समुदायानुवादपूर्वपक्षस्यैव विवक्षितत्वात्तन्निवृत्त्यर्थत्वेन तुशब्दस्थाने वाशब्दं व्याचष्टे—**नैवेति**। पशुसोमवाक्यस्थयोराख्यातशब्दयोः समुदायानुवादत्वनिराससाध्येऽवद्यतिगृह्णातिपराणां प्रत्ययानां यागाचोदकत्वस्य साक्षाद्धेतुत्वात्पूर्वाधिकरणसिद्धान्तहेतोश्चशब्दार्थस्य प्रयोगभूतत्वादित्यस्य निर्गुणाख्यातश्रुतिविषयत्वेनेहाभावात्तत्पूर्वाधिकरणसिद्धान्तहेतोरप्रकृतत्वादित्यस्य पूर्वाधिकरणेऽपि प्रकृतकर्मसद्भावे निर्गुणश्रुतावपि पौर्णमासीवत्समुदायानुवादापत्तेरपेक्षितत्वेनानुषक्तस्यात्राप्यनुषङ्गं करोति—**चोदना चेति**। अप्रकृतत्वोपपादनार्थत्वेन प्रश्नपूर्वं सूत्रं योजयति—**कथमिति**। संस्कारविधिष्वपि यागकल्पनं पूर्वपक्षोक्तं निराकर्त्तुमारभते—**तन्मात्रेति**। ऐन्द्रवायवादिवाक्येषु तावत्सोमेन यजेतेति श्रुतयागप्रत्यभिज्ञानात्कल्पनानुपपत्तिमाह—**एवं हीति**। भाष्यमप्यनेन व्याख्यातं भवति। यागानुमानात्प्रागाग्नेयादिवाक्यवत्स्वार्थपर्यवसानं पूर्वपक्षोक्तमनुभाषणपूर्वं परिहरति—**यदुक्तमिति**। अतोऽत्र नियोगापरपर्यायविधिविषयभूतपुंव्यापारलाभाद्वाक्यस्य सङ्गतार्थत्वं पर्यवसानमस्तीत्यर्थः। तल्लाभे पूर्णत्वात् वाक्यान्तरसङ्गतिर्युक्तेति वा योज्यम्। श्लोकं व्याचष्टे—**आग्नेय इति**। समाप्यते शब्देन सङ्गतिशब्दस्य समाप्त्यर्थत्वं व्याख्यातम्।

ननु ग्रहणभावनालाभेऽपि यागं विना देवतान्वयासिद्धेः कथं वाक्यसमाप्तिरित्याशङ्क्याह—**इदं त्विति**। स्वकार्याक्षमत्वनिबन्धनत्वेनासमाप्तेर्विधिविषयलाभमात्राद्विधानाख्ये कार्ये विधिवाक्यस्य क्षमत्वसिद्धेः, सापेक्षत्वेऽपि समाप्त्युपपत्तिरित्याशयः। सापेक्षत्वनिबन्धनया त्वसमाप्त्या वाक्यान्तरानन्वयेन कस्य चिद्वाक्यस्य वाक्यान्तरानन्वयः स्यादिति दर्शयितुमाह—**सर्वमेव हीति**। समाप्त्यभिधानस्य प्रकृतोपयोगं दर्शयन्वाक्यान्तरान्वयार्थत्वेन सङ्गतिशब्दं व्याचष्टे—**तेनेति**। न सापेक्षस्यापि वाक्यान्तरान्वये सत्याग्नेयादिवाक्यस्यापि कस्मान्न स्यादित्याशङ्क्य, विधिविषयालाभादित्याह—**आग्नेय इति**। पूर्वपक्षसूत्रस्थचोदनाशब्दसूचितं यागानुमानात् प्रागपर्यवसानं परिहृत्य, अवदानग्रहणयोः पशुसोमस्वरूपनाशकत्वेनोत्पत्तिशिष्टस्य पशुसोमद्रव्यस्य संस्कारलक्षणगुणार्थेन विध्ययोगात्प्रकरणे विधीयमानो हृदयादिरसः संयुक्तो अवदानग्रहणाख्यः पदार्थः अनर्थकः स्यादिति प्रकरणे हीत्यादिसूत्रावयवोक्तं सिद्धान्तदूषणमनुभाषणपूर्वं परिहरति—**अथेति**। सूत्रोक्तस्य दोषस्य सूत्रेणापरिहारे सूत्रकृतः शून्यहृदयत्वापत्तेश्चोदयतेः प्रेरणे स्मरणेन नुदिसमानार्थत्वान्नुदेश्चापनयनाख्ये बाधे प्रयोगाच्चोदकशब्दस्य बाधकवाचित्वमङ्गीकृत्यावदानग्रहणपदार्थाः संस्कारत्वात्पशुसोमयोरबाधका इत्येवमस्मिन्परिहारे सूत्रं योज्यम्। विशसनाभिषवादिना पशुसोमयोर्विनाशात्साधनत्वासम्भवाशङ्का द्वारशब्देन निरस्ता। प्रदेयप्रकृतित्वेनैव पशुसोमयोः साधनतेत्याशयः। श्लोकं व्याचष्टे—**यदीति**।

ननु 'न हि द्रव्यकथम्भावादतिदेशोऽत्र कल्प्यत' इति संख्याधिकरणवार्त्तिके द्रव्यस्येतिकर्त्तव्यताकाङ्क्षाया निराकरिष्यमाणत्वान्न पशुसोमयोरितिकर्त्तव्यतान्वयः सम्भवतीत्याशङ्क्याह—**पश्विति**। संख्याधिकरणपूर्वपक्षे सप्तदशानां पशूनामेकसाधनत्वेन प्रत्येकं साधनत्वाभावादितिकर्त्तव्यतानाकाङ्क्षत्वेऽपीह साधनत्वसद्भावाद्युक्तेतिकर्त्तव्यताकाङ्क्षेत्याशयः। संस्कारवाक्येभ्य एव पशुसोमयोः प्रदेयप्रकृतित्वेन प्राप्त्युपपत्तेः प्रकृतित्वलक्षणगुणार्थत्वेन विध्ययोगात्प्रकृते हृदयादौ रसे पशुसोमद्रव्यसंयोगोऽनर्थकः स्यादित्येवमर्थाङ्गीकरणेन प्रकरणे हीत्यादिसूत्रावयवोक्तं दूषणमनुभाषणपूर्वं परिहरति—**यत्त्विति**। उत्पत्तिशिष्टविरोधोत्तरस्यापि सौत्रतापिशब्देनोक्ता। पशुसोमयोरविनियोगे क्रयोपाकरणादिवाक्यानां सक्तुहोमादिवाक्यवदारादुपकारिकर्मविधायित्वापत्तेर्न पशुसोमाक्षेपशक्तिरस्तीत्याशयः। या च हृदयादिभिः प्रकृतिद्रव्यापेक्षिते 'छागस्य वपाया मेदसोऽनुब्रूही' ति मन्त्रवर्णेन छागलाभात्तदन्तर्गतपशुत्वप्राप्तिरुक्ता। साऽस्य मन्त्रस्य सूक्तवाकादिवच्छ्रुत्यविनियुक्तत्वेनात्यन्ताप्राप्तार्थप्रापणाशक्तेर्विनियोजकस्य लिङ्गस्य सामर्थ्यलक्षणत्वात्तस्य च वाक्यशेषवत्सन्दिग्धार्थनिर्णायकत्वेनाऽर्थाद्वा कल्पनैकदेशत्वादि'त्यत्र स्थितत्वादयुक्तेत्याह—**न चेति**। कथं तर्हि षष्ठान्त्ये छागप्राप्त्यभिधानमित्याशङ्क्याह—**पश्विति**।

अनेनैव 'यथैव पशुसामान्य' इति वार्त्तिकोक्तस्य पूर्वपक्षस्य निरस्तत्वात्प्रसङ्गेनाथ वा सान्नाय्यं वा तत्प्रभवत्वादित्यनेन न्यायेनेत्यादिवार्तिकोक्तं पूर्वपक्षं निरस्यति—**न चेति**। ततश्च साधारणश्चायं तवाप्यानुमानिकयागाभ्युपगम इति यदुक्तम्, तदप्ययुक्तमित्याह—**द्रव्येति**। या च सान्नाय्यावदानप्रकृतित्वेन हृदयाद्यवदानानां यागीयद्रव्यसंस्कारार्थत्वाद्यागानुमापकतोक्ता, सापि सान्नाय्यावदानस्य चतुरवत्तहोमविधिनार्थगृहीतत्वेनाविधेयत्वाद्विधेयानि हृदयाद्यवदानानि प्रति प्रकृतित्वानुपपत्तेः संस्कारार्थत्वस्य चानङ्गत्वेनानतिदेश्यत्वादयुक्तेत्याह—**न चेति**।

नन्वतिदेशाभावेऽप्यवदानत्वेन हेतुना यागीयद्रव्यसंस्कारार्थतानुमास्यते। अत आह—**न चेति**। पूतीकानभिषुणुयात् 'तत्तमस्मै भक्षं प्रयच्छेदित्यनयोस्तु प्रकृताभिषवभक्षप्रत्यभिज्ञाना' यदि सोमं न विन्देत, यदि सोमं बिभक्षयिषेदित्येकवाक्यत्वाच्च यागद्रव्यार्थत्वविज्ञानं युक्तमिति दृष्टान्तवैषम्यमाह—**प्रतीकेति**। प्रसङ्गाद्यश्चात्र पक्षे विशिष्टविधितुल्यत्वं निरस्यति—**सोम इति**।

नन्वैन्द्रवायवादिवाक्येषु यागविध्यभावे देवताया ग्रहणानन्वयाद्विशेषणविशेष्यत्वशून्ययोर्देवताग्रहणयोर्विधेयत्वापत्तेर्वाक्यभेदप्रसङ्गादालभतिवत्प्रकृतिवल्लिङ्गयातनाय गृह्णातिपरप्रत्ययेनैन्द्रवायवं कुर्यादिति वचनव्यक्त्याश्रयणेन विशिष्टयागविधिरवसीयतइत्याशङ्क्याह—**न चेति**। सोमरसमिन्द्रवायुदेवत्यं कर्त्तुं पात्रे गृह्णीयादिति विहिते यागसम्पाद्यत्वाद् द्रव्यदेवतान्वयस्य ग्रहणमात्रेणासिद्धावपि प्रकरणलभ्ययागान्वयासिद्ध्युपपत्तेर्न वाक्यभेद इत्याशयेन प्रश्नपूर्वमुपपादयति—**कुत**। इति देवताग्रहणं चेतयनेन रूपेण विधेयानेकभावेऽपि

प्रकरणलभ्ययागाख्यक्रियान्तरप्रसादेन देवताविशिष्टग्रहणविधिसम्भव इत्यर्थः। श्लोकं व्याचष्टे—**शक्यते इति**। 'ग्रहैर्जुहोतीतिविध्यर्थस्य ग्रहणपात्रेषु ग्रहणमन्तरेणानिष्पत्तेरर्थ-प्राप्तग्रहणानुवादसम्भवाद्विशिष्टविधिगौरवमपि नास्तीत्यर्थप्राप्त्यभिधानेनोक्तम्। समासेत्यनेन देवताद्वयनिमित्तवाक्यभेदाशङ्का निरस्ता। यागान्वयं विना ग्रहणस्य देवतान्वयानुपपत्त्या शङ्कानिरार्थत्वेन क्रियान्तरप्रसादेनेति व्याख्यातुम्—**प्रकरणेत्युक्तम्**। देवताग्रहणयोर्याग-गुणत्वात्परस्परानपेक्षत्वेऽपि यागद्वारा परस्परान्वयोपपत्तेर्देवताविशिष्टग्रहणविधिसम्भवा-भिधानार्थम्—**गुणेत्युक्तम्**। 'यादृशं द्रव्यसम्बद्धमि'त्येतद्वार्त्तिकोक्तं प्रकृतयागसद्भावात्सोम-वाक्ये यागविध्यसम्भवं परिहर्त्तुमाह—**तस्मादिति**। सोमवाक्यस्य यागविधित्वे गुणत्रय-माह—**एवं च सतीति**। समुदायानुवादाभावेऽपि राजसूयवत्प्रयोगवाक्यस्थैकत्वसिद्धेर्ज्योति-ष्टोमशब्दस्य च सोमद्रव्यकयागवाचित्वाद्दीक्षणीयादिव्यावृत्तिसिद्धेरानर्थक्यमित्याशयः। आद्यसूत्रोक्ताया युक्तेः सिद्धान्तेऽनुपपत्तेः, पूर्वपक्षे तद्योजितम्। पशुसोमवाक्ययोस्तु विधि-त्वसिद्धान्तोऽतो युक्त एवेति सूचयन्सिद्धान्तमुपसंहरति—**तेनेति**॥ १८॥

भा० प्र०—पूर्व अभ्युपगमवाद में कहा गया है कि प्रकृत याग रहने पर भी अनुवाद नहीं हो सकता है। प्रकृत में दिखाया गया है कि पूर्व में पुरोवाद रूप में किसी याग का उल्लेख नहीं है। पुरोवाद के बिना अनुवाद नहीं हो सकता है। "हृदयस्य" इत्यादि वाक्य से बोधित अवदान अर्थात् खण्डीकरण एवम् "ऐन्द्रवायवं गृह्णाति" इत्यादि वाक्यों से विहित ग्रहण "अचोदका." = याग नहीं है, वरन् "संस्काराः" = संस्कार मात्र है। अवदान एवं शूलभेदन आदि से पशु का संस्कार होता है एवं ग्रहण से सोम-रस का भी संस्कार होता है, उसके साथ देवता का स्मरण है वह भी अपूर्व का साधन होता है। "अचोदकाः" = अपूर्व कर्म की विधि नहीं है, "च" = किन्तु "संस्काराः" = ग्रहण संस्कार है॥ १८॥

## तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात्॥ १९॥

**शा० भा०-पशौ वृत्ता कथा दशमे पुनरुद्धविष्यति। सोम इदानीं वर्तते कथं क्रमसमुच्चयाविति? इन्द्रवाय्वाद्या देवता नैवं श्रूयन्ते इन्द्रवायुभ्यां यागो निर्वर्त-यितव्यो, मित्रावरुणाभ्यां यागो निर्वर्तयितव्य इति। यद्येवमश्रोष्यन्त यागं प्रति देवता व्यकल्पिष्यन्त। केवलया हि देवतया तदा यागो निर्वर्त्यत इति विहितमभविष्यत्। अथ पुनरिमा अदृष्टार्थं गृह्णातिसंस्कारं प्रति देवता विधीयन्ते। तत्रेन्द्रवायुसंकल्पादन्यो मित्रावरुणसंकल्पः। तेन गृह्णातौ तत्कृता-ददृष्टाददृष्टान्तरमुत्पादयति[1]। एवमपरेष्वपि ग्रहणेषु। तस्मात्समुच्चयः।**

---

१. ब० उत्पाद्यते।

**ग्रहणं च नियतपरिमाणेषूर्ध्वपात्रेषु प्रादेशमात्रेषु नियतपरिमाणेषु द्रोणकलशेषु संस्कृतस्य दशमुष्टिपरिमितस्य[1] कृत्स्नस्य सोमस्य[2] नावकल्पिते। यद्यपि चावकल्पेत[3], तथाऽपि नित्यवद्विहितानां देवतानां विकल्पपक्षे तावत्प्रयोगवचनो मा बाधीति, अवयवग्रहणमेव न्याय्यम्। कृत्स्नग्रहणे[4] हि तदेवेन्द्रवायुभ्यां संकल्पितम्, तदेव मित्रावरुणाभ्यामिति नावकल्पेत। तस्मात्कल्पनभेदात्पृथगवस्थितः सोमो नानादेवतत्वादेव नैक्येन शक्यः कर्तुम्। न चासति यागे देवताभ्यः शक्यते संकल्पयितुम्। तस्मादवश्यं यथासंकल्पिता देवता यष्टव्याः। तासु चेज्यमानासु 'ज्योतिष्टोमेन यजेते'ति श्रुतो यागो निर्वृत्त एव भवति। न देवतान्तरमाकाङ्क्षति। कृत्स्नेन च दशमुष्टिना सोमेन यागः श्रुतः, सोऽसति अभ्यासे नावकल्पत इति, अर्थात्स गुणो भविष्यतीत्यभ्यसितव्यो यागः। न ह्यनभ्यस्तः सर्वाभिर्देवताभिः सर्वेण सोमेन सम्पन्नो भविष्यति। तस्मिंश्चाभ्यस्यमाने क्रमसमुच्चयौ युक्तावेव भवतः। तस्मात्तयोर्दर्शनं युज्यत एवेति॥ १९॥ उपसंहारः॥**

भा० वि०—सूत्रस्य सोमविचारविषयत्वं वक्तुं पशुविषयायाश्चिन्तायाः पर्यवसितत्वमाह—**पशाविति**।

ननु पशावपि किं प्रत्यङ्गमवदानं उतैकस्मात्? अथ परिगणितेभ्यो हृदयादिभ्य इत्यादि विचारस्य कर्तव्यत्वात् कथं पर्यवसानमत आह—**दशम इति**। पशोरेकहविष्ट्वं समस्तचोदितत्वादित्यादावित्यर्थः सोमे तु क्रमसमुच्चययोः परिचोदितत्वात् तत्परिहारेण विना न पर्यवसानमित्याह—**सोम इति**। वर्तते कथेत्यनुषङ्गः। तामेवाह—**कथमिति**। एवं परिचोदनापरिहारं प्रतिज्ञातमुपपादयति—**इन्द्रवाद्या इति**। यदि वाक्येनैव दध्यादीनामिव होमेन देवतानामपि यागेन सम्बन्धः श्रूयेत ततस्तद्वदेवान्योन्यनिरपेक्षैर्वाक्यैस्तुल्यार्थत्वेन ज्ञायमाना विकल्पभाजो भवेयुरिति न क्रमसमुच्चयावुपपद्येयाताम्, इमाः पुनः प्रकरणेन यागसम्बन्धं प्रतिपद्यमाना अपर्यायमेव तेन सम्बध्यन्त इति न विकल्पावकाश इत्यर्थः।

ननु वाक्येन यागसम्बन्धेऽपि कथं विकल्पप्राप्तिरत आह—**यद्येवमिति**। तत्र हेतुः—**केवलयेति**। अन्यनिरपेक्षयेति यावत्। नन्विहापि ग्रहणद्वारादेवतानां यागान्वयात् तत्र च वाक्येन प्रत्येकमेव विनियोगात् प्रत्येकं तुल्यार्थतया विकल्पोऽवसीयत इत्याशङ्क्याह—**अद्य पुनरिति**। ग्रहणस्य स्वरूपेण दृष्टार्थत्वेऽपि

---

१. ब० दशमुष्टेः कृत्स्नस्य।
२. ब० सोमरसस्य।
३. ब० वावकल्पेत।
४. ब० कृत्स्नग्रहणेऽपि यद्देवेन्द्र।

देवतोद्देशस्य विधीयमानस्यादृष्टार्थतया तद्विशिष्टरूपेण तस्याप्यदृष्टार्थतैवेत्यर्थः तत्र च विधीयमानदेवताभेदात् ग्रहणस्यापि भेद इत्याह—**तत्रेति**। **ग्रहणभेदे** तज्जन्यादृष्टभेदमाह—**तेनेति**। गृह्णातौ मित्रावरुणसङ्कल्पे तत्कृतादिन्द्रवायु-सङ्कल्पकृतादित्यर्थः। अश्विनादिष्वप्यदृष्टभेदमाह—**एवमपरेष्विति**। तेनायं सूत्रार्थः—पूर्वसूत्रस्थसंस्कारशब्दोऽवस्थापितग्रहणविशेषणभूतो देवतासंयोगस्त-च्छब्देन परामृश्यते ततश्च देवतासंयोगभेदाद्ग्रहणकर्मणोऽभ्यास इत्युक्तं भवति।

ननु गृहीतस्य ग्रहणमनर्थकमत आह—**द्रव्यपृथक्त्वादिति**। ग्रहणसंस्कार्य-द्रव्यपृथक्त्वादर्थवत्तेत्यर्थः। कथं देवतोद्देशभेदस्य ग्रहणाभ्यासहेतुतेत्याशङ्कां निरस्यति—**अनर्थकं स्यादिति**। सकृद्ग्रहणेनेकदेवतोद्देशस्यावश्यकत्वेनानुष्ठाना-योगात् तच्छ्रवणमनर्थकं स्यात् इत्यर्थः। अतो भिन्नार्थत्वाद्देवतानां समुच्चयो-पपत्तिरित्यभ्यासप्रयोजनमाह—**भेद इति**। ग्रहणकर्मण इति शेषः।

ननु देवतोद्देशभेदेन द्रव्यभेदेऽप्येकस्मिन् ग्रहणे बन्धने खादिरादिवद्विकल्पेना-नेकद्रव्यान्वयसम्भवादनेकदेवतान्वयोपपत्तेः न देवतोद्देशभेदाद्ग्रहणाभ्यासकल्पना युक्तेत्याशङ्क्याह—**द्रव्यगुणाभावादिति**। बन्धनस्य खादिरादिकान् प्रति गुणा-भावाभावेन तद्भेदेऽपि भेदाभावात् खादिरादीनां विकल्पेनान्वयः ग्रहणस्य तु द्रव्यं प्रति गुणीभावात्तद्भेदेन भेदान्न विकल्पेन द्रव्यान्वय इत्यर्थ इति सूत्रार्थ-मुपसंहरति—**तस्मादिति**। दृष्टार्थत्वेऽपि ग्रहणस्य ग्राह्यभेदात् समुच्चयसिद्धि-माह—**ग्रहणं चेति**। ग्रहणं च कृत्स्नस्य सोमरसस्य समुच्चयं विनावकल्पत इत्यध्याहारेणान्वयः। कुत इत्यत आह—**दशमुष्टीति**। दशमुष्टीर्मिमीत इति वचनात् तावन्मात्रपरिमितसोमरसस्येत्यर्थः। ननु दशमुष्टेरप्यभिषवे सति रसस्याल्पत्वादेकस्मिन्पात्रे ग्रहणोपपत्तेर्न ग्राह्यभेदस्तत्राह—**नियतपरिमाणे-षूदककलशोष्विति**। पात्रमहत्त्वाशङ्कानिरासाय नियतेत्यादि विशेषणम्। नियत-त्वमेवाह—**प्रादेशेति**।

ननु कृत्स्नग्रहणसमर्थमहापरिमाणपात्रोपादाने तस्मिन्नेव कृत्स्नस्य ग्रहणं भविष्यतीत्याशङ्क्याह—**यद्यपि चेति**। तथापि नावकल्पेतेत्यन्वयः, श्रुतपरिमाण-पात्रत्यागेनाश्रुतपात्रान्तरोपादानानुपपत्तेरित्याशयः। इतश्चावयवग्रहणमेव न्याय्यं न कृत्स्नग्रहणमित्याह—**नित्यवदिति**। यदि च नित्यवद्विहितानामप्यैकार्थ्यं भवेद्व्रीहियवादिवदगत्या विकल्पाश्रयणं न त्वेतदस्तीत्याह—**कृत्स्नस्येति**। यद्द्रव्य-मिन्द्रवायुभ्यां दातव्यमिति सङ्कल्पितं तस्य त्यक्तप्रायस्य मित्रावरुणाभ्यामपि त्यागानुपपत्तेरित्यर्थः।

नन्ववयवशो ग्रहणेन ग्राह्यभेदाद्ग्रहणाभ्यासोपपत्तेः तद्विषयकक्रमसमु-च्चयदर्शनोपपत्तावप्यवयवशो गृहीतस्यापि सोमरसस्यैकीकरणेन कृत्स्नस्य सकृ-

त्यागोपपत्तेः। तृतीयो हूयत इति यागविषयकक्रमसमुच्चयदर्शनानुपपत्तिरित्याशङ्कां निरसितुमपि सूत्रं योजयति—**तस्मादिति**। एकीकरणे प्रकल्पनभेदस्य वैयर्थ्यापत्तेः पृथगवस्थितसोमसंभावनार्थमभ्यसितव्यो याग इत्यर्थः। एवं च तद्भेदात्प्रकल्पनभेदादेव प्रकल्पितद्रव्यपृथक्त्वात् यागकर्मणोऽभ्यास इति सूत्रावयवो व्याख्यातः। एकीकरणसम्भवे हेत्वनन्तरमनर्थकं हि स्यादिति सूत्रावयवं व्याचष्टे—**नानेति**। एकीकरणे यथा सङ्कल्पितानां देवतानां स्वैःस्वैर्भागैः पृथक् पृथक् संबन्धानुपपत्तेरित्यर्थः।

नन्वेकीकरणसम्भवेऽप्येकेनैव भागेन विहितयागनिष्पत्तेरश्रुताभ्यासकल्पना न युक्तेत्याशङ्क्याह—**न चेति**। देवताविशिष्टस्य ग्रहणस्य यागाङ्गत्वात् इत्यर्थः। तथापि किमित्याशङ्क्य देवताभेदाद्यागाभ्याससिद्धिरित्याह—**तस्मादिति**। ज्योतिष्टोमशब्दस्याभ्यस्तरूपयागवाचित्वादपि न यागैक्यमित्याह—**तासु चेति**। सर्वास्वेवेज्यमानासु ज्योतिष्टोमेनेति श्रुतो यागो निवृत्तो भवति नैकस्यां देवतायामित्यर्थः।

ननु ज्योतिष्टोमस्येन्द्रवाय्वादिदेवतानिर्वर्त्यत्वे तद्भेदात् भेदः स्यात् देवतान्तरनिर्वर्त्यत्वे तु नैवमत आह—**न देवतान्तरमिति**। श्रुतदेवतात्यागेनाश्रुतकल्पनानुपपत्तेररूपत्वप्रसङ्गादित्यर्थः। यागाभ्यासे हेत्वन्तरं भेदो द्रव्यगुणीभावादिति सूत्रावयवं व्याचष्टे—**कृत्स्नेन चेति**। असत्यभ्यास इति ग्रहणसाधनकत्वाद्यागस्य तत्र च ग्रहणं चेत्यादिनाभ्यासस्योक्तत्वादित्यर्थः। स गुणो भविष्यतीति। स याग ऐन्द्रवायवादिसोमगुणस्तदधीनो भविष्यतीत्यर्थः। एवं द्रव्यदेवताभेदान्यथानुपपत्त्या यागभेदमभिधादान्यथोपपत्तिं जानीते—**न हीति**। इति शब्दः सूत्रव्याख्यानसमाप्त्यर्थः अभ्यासोपपादनप्रयोजनमाह—**तस्मिंश्चेति**। परिचोदनापरिहारमुपसंहरति—**तस्मादिति**॥ १९॥

त० वा०—क्रमसमुच्चययोः पशावपरिचोदितत्वाद् वृत्ता कथा 'पशोरेकहविष्ट्वम्, इत्यत्रोद्भविष्यति—किं समस्तादवदातव्यमुत प्रत्यङ्गमुतैकस्मादथवा हृदयादिभ्यः परिगणितेभ्य इति।

सोमे तु परिचोदनापरिहारोऽभिधीयते—

> वाक्येन यदि यागस्य श्रूयेरन् देवताः पृथक्।
> व्यकल्पिष्यन्त सर्वास्तु युगपद्यागसंगताः॥
> यत्र वाक्येन सम्बन्धो निरपेक्षेण[1] चोद्यते।
> तत्र तुल्यार्थवर्तित्वान्नोपपन्नः समुच्चयः॥

१. क० निरपेक्षोऽवधार्यते।

यद्यैन्द्रवायवेन यजेत, इन्द्रवायुभ्यां वा यागं निर्वर्तयेदिति श्रूयेत, ततोऽन्योन्यनिरपेक्षैर्वाक्यैस्तुल्यार्थत्वेन ज्ञायमाना विकल्पभाजो भवेयुः। इमाः पुनर्ग्रहणसम्बद्धाः श्रुताः प्रकरणेन यागसम्बन्धं प्रतिपद्यन्ते। न च प्रकरणव्यापारः पर्यायः, येनान्योन्यनिरपेक्षाः सम्बध्येरन्। सर्वग्रहणेषु हि युगपदितिकर्तव्यतात्वेन गृहीतेषु तद्गता देवतास्तन्मात्रेणापर्यवस्यन्त्यः प्रकरणिना योगेनाऽऽकाङ्क्षिता युगपदेव सम्बध्यन्ते।

**विकल्पप्रयोजकवर्णनम्**

तत्र नाम विकल्पो युज्यते, यत्रेतरेतरनिरपेक्षाः समानार्थे नियुज्यन्ते। किं कारणम्?

प्रत्येकं हि समर्थत्वं वाक्यादेवावधारितम्।
सापेक्षत्वे विपद्येतेत्येवं सर्वं विकल्पते॥

न त्विह प्रत्येकं ज्योतिष्टोमनिर्वर्तनसामर्थ्यमिन्द्रवाय्वादीनामवगम्यते, तादृग्विनियोजकाभावात्। सत्यपि च प्रत्येकं यागनिर्वर्तनसामर्थ्ये, तद्विशेषज्योतिष्टोमनिर्वृत्तिर्यथावचनं विज्ञायत इति, नैव प्रत्येकं तुल्यार्थत्वम्। प्रत्येकं तुल्यार्थाश्च व्रीहियवादयो विकल्पन्ते। वाक्यसंयोगिनो हि ते परस्परनिरपेक्षाः स्वेन स्वेन वाक्येन विनियुज्यन्ते।

ननु 'ऐन्द्रवायवं गृह्णाति' इति वाक्यमेव विनियोजकमुपलभ्यते। अतश्च 'मैत्रावरुणम्' इत्येतस्य पूर्वनिरपेक्षमेव देवताविधिसामर्थ्यं विज्ञायते। सत्यम्। ग्रहणं प्रत्यन्योन्यनिरपेक्षा विधीयन्ते, न तु तत्रैकार्थत्वम्, अदृष्टार्थत्वात्। कथमदृष्टार्थत्वमिति चेत्?

उच्यते।

पूर्वं प्रधानसम्बद्धं संस्कारे श्रूयते यदि।
यद् दृष्टार्थं विना तेन यदि वाऽसौ न सिध्यति॥

यदि हि प्रथमं यागेन सम्बद्धाः सत्यो देवता निर्वापावाहनादिष्विव ग्रहणेषु पुनः श्रूयेरन्, यदि वा ताभिर्विना ग्रहणमेव न निर्वर्तेत, ततस्तत्र श्रवणं दृष्टार्थमनागतस्मृतिरूपेण कल्पेत। न त्विन्द्रवाय्वादयः प्रथमं ज्योतिष्टोमे श्रुताः। नापि तदभावेन ग्रहणं सिध्यति। तत्रैवं च सत्यपि यत् देवतायुक्तं ग्रहणं कर्तव्यमिति श्रूयते, तत्रादृष्टादृते न किंचित्प्रयोजनमस्ति।

ननु च यागस्यैता देवता भविष्यन्तीति ज्ञात्वा विनाऽपि प्रथमविनियोगेन तद्विषयस्मृत्यर्थत्वं विज्ञायते?

नैतदस्ति । कुतः ?

सर्वेण विधिवेलायां प्रयोजनमपेक्ष्यते ।
तद्वेलायामतः कल्प्यो दृष्टादृष्टार्थनिर्णयः ॥

'ऐन्द्रवायवं गृह्णाति' इत्येतद्वाक्यप्रवृत्तिकाले किं प्रयोजनमित्यपेक्षा भवति । तत्र यद्यपि प्रकरणवशादिति कर्तव्यतात्मकस्य ग्रहणस्य यागसम्बन्धः कथमपि भवतीत्यवधार्यते, तथाऽपि देवतानामन्यसंयुक्तत्वादक्रियारूपत्वाच्च न प्रकरणेन यागार्थत्वं विज्ञायत इत्यवश्यम्, यागसम्बन्धनिरपेक्षं तावद् ग्रहणं प्रति प्रयोजनं कल्प्यमित्यदृष्टकल्पनमापद्यते । तस्मिंस्तु शास्त्रवेलायामवधारिते यद्यनुष्ठानकाले दृष्टमप्यनुनिष्पादि भवति, केन तन्निवार्यते । न तु तेन शास्त्रप्रवृत्तिः प्रतिबध्यते । तेन प्रतिवाक्यं देवतासंयोगानामदृष्टार्थत्वात्समुच्चयः । तत्र 'न च यत्समित्सं-बन्धेन क्रियते तत् तनूनपात्सम्बन्धेन' इत्यनेन न्यायेनभेदेन श्रुता देवता ग्रहणसम्बद्धा नोपपद्यते, यदि ग्रहणं नाऽऽवर्तते इति, प्रतिदेवतं सोमो ग्रहीतव्यः ।

## सूत्रार्थवर्णनम्

एषे तावत्सूत्रार्थः—तद्भेदात्—देवतासंयोगभेदाद् ग्रहणकर्मणोऽभ्यासः देवता-संयुक्तग्रहणसंस्कार्यद्रव्यपृथक्त्वादनर्थकं हि संयोगान्तरश्रवणमननुष्ठीयमानमनर्थकं स्यात् । तेन ग्रहणस्य भेदः, संस्कार्यं द्रव्यं प्रति गुणभावात् । एतद्देवतावन्ति ग्रहणानि यागप्रक्रमात्मकत्वान्न यागादृते देवतार्थं द्रव्यं संस्कर्तुं शक्नुवन्तीत्येवम-पेक्षिते, भविष्यति कश्चिद्यागो य एतानि देवतासंबन्धमापादयिष्यतीति । यागोऽपि चाविहितदेवताकः श्रुतिलिङ्गवाक्यैर्देवतामलभमानः प्रकरणस्य चेदृशे वस्तुन्य-क्रियात्मके व्यापाराभावाद् ग्रहणेषु तावद्विनियोजकं भवति । तानि चापर्याय-विधानाद्भिन्नादृष्टसंबन्धित्वाच्च युगपद् गृह्यन्ते, तद्वशेन देवतानामपि समुच्चयसिद्धिः ।

ननु प्रकरणगृहीतानामप्येकार्थानां पुरोडाशविभागमन्त्रप्रभृतीनामिष्यत एव विकल्पः । सत्यमिष्टः न तु तत्र प्रकरणं केवलं व्याप्रियते । लिङ्गानुमितया श्रुत्या प्रत्येकं विभागाङ्गत्वे विज्ञाते, दर्शपूर्णमासविभागार्थत्वमात्रं प्रकरणाद्भवति, विभागान्तरेऽप्यानर्थक्यात्[1] । तत्र यद्यपि दर्शपूर्णमासौ समुच्चयेन गृहीतः, तथाऽपि न विभागद्वारनिरपेक्षयोः सामर्थ्यमस्ति । यच्च द्वारम्, तत्-द्विकल्पेनावरुद्धं न समुच्चयगम्यम् । इह पुनर्विपरीतमेव[2] तत् । यान्येव हि द्वाराणि ग्रहणानि, तेष्वेव देवताः समुच्चिताः । तत्र प्रत्येकं प्रहणयोग्योऽपि द्वारसमर्पणवशेन प्रवर्तमानः किमिदानीं करिष्यति ।

---

१. क० विभागान्तरेष्वानर्थक्यात् । २. क० विपरीतमेतत् ।

ननु ग्रहणानामपि प्रत्येकं द्रव्यप्रकल्पनरूपेण देवतासमर्पणेन च प्रधानोपकारसामर्थ्यमस्तीति, विभागमन्त्रवद्विकल्पेन भवितव्यम्। भवेदेवं यदि पूर्वं नानादेवतो यागोऽवगतः स्यात्। ततस्तदर्थोऽयं द्रव्यप्रकल्पनभेद इत्यवगम्यते, न न त्वसावेवमवगत इति प्रकल्पनभेदाम्नानमदृष्टार्थं विज्ञायते। अवश्यं च गुणात्प्रकल्पनानि भेत्तव्यानि। न ह्येकस्मिन्प्रकल्पने युगपत्, पर्यायेण वा देवताः संकल्पयितुं शक्यन्ते। यौगपद्यं तावत्क्रमवर्तिन्या वाचा नैव शक्यम्, अदेवताभूत एव समुदायः संकल्पितः स्यात्। न हीन्द्रवाय्वादिसमुदाये देवतात्वं केनचिदुक्तम्। प्रतिपदोत्पन्नैस्तद्धितैः प्रत्येकं प्रतीयमानत्वात्। न च क्रमेणोद्देशः। कथम्?

द्रव्यस्य गृह्यमाणस्य देवतोद्देशचोदना।
न चैकां देवतां मुक्त्वा तदुद्देशस्य सम्भवः॥

यदि तु प्रागूर्ध्वं वा ग्रहणादुद्दिशेत्, अचोदितमेव कुर्यात्।

किं च—

एतस्या इति संकल्प उद्देशोऽत्ताभिधीयते।
अन्यस्मिन्क्रियमाणे च पूर्वस्तत्र विपद्यते॥

यद् द्रव्यमिन्द्रवायुभ्यां दातव्यमिति संकल्पितम्, तस्य त्यक्तप्रायत्वादनीशो यजमानः कथमिव वक्ष्यति मित्रावरुणाभ्यामेतदेवेति। तत्रैकामुद्दिश्य देवतान्तरसंकल्पे क्रियमाणे पूर्वदेवतातस्तद् द्रव्यमाच्छिन्नं स्यात्। पूर्वसंकल्पालोचनेन वा नैवोत्तरः पारमार्थिकत्वं प्रतिपद्यत इत्यसत्संव्यवहारमात्रमेवानुष्ठीयेत, न चोदनार्थः। तेनावश्यं यावद्देवतं ग्रहणभेदः कर्तव्यः।

किं च—

शक्यते चागृहीतेऽपि यत्र क्वचिदवस्थिते।
द्रव्येऽस्मिन्देवतोद्देष्टुमित्यदृष्टार्थता विधेः॥

देवतोद्देशस्वत्वत्यागात्मको हि यागः। शक्यते च पूयमानावस्थेनापि सोमेन क्रयोत्तरकालं वा सर्वावस्थावियुक्तेनापि निर्वर्तयितुमित्यशेषोत्तरसंस्कारविधानमदृष्टार्थम्। यत्र तु पुरोडाशादि द्रव्यं चोद्यते, तत्र यावदवहन्त्यादिविधानं सत्सर्वं तन्निष्पत्त्यर्थत्वाद् दृष्टार्थं भवति। न च[1] ग्रहचयसस्थेन सोमेन यष्टव्यमित्युत्पत्तिचोदना, लतामात्रपर्यवसानात्। तेनाऽत्मीयादृष्टभेदनिर्वृत्त्यर्थमपि ग्रहणानि समुच्चेतव्यानि। 'दशमुष्टीर्मिमीते' इति च प्रकरणे परिमाणं श्रुतम्। अतः 'सोमेन यजेत्' इत्येतद्वचनमेव विशेष्यते दशमुष्टिना सोमेन यजेतेति। स च नियतपरिमाणोनोदकेनाभिषुतोऽल्पपरिमाणेषु भिन्नेषु ग्रहचमसेषु न ग्रहणभेद-

---

१. क० न चेह।

मन्तरेण शक्यते ग्रहीतुमिति, भेदेन गृह्यते। तथावस्थेन च यागो निर्वर्तयितव्यः। सोऽप्यनभ्यस्तस्तथाऽवस्थितं न शक्नोति सर्वं संभावयितुमिति प्रयोजनवशेनाभ्यस्यते।

तेन तत्रापि सूत्रम्—तद्भेदात् प्रकल्पितसोमभेदाद्यागकर्मणोऽभ्यासः, स्वीकृतद्रव्यपृथक्त्वादशेषमत्यज्यमानमनर्थकं स्यात्। अत उत्पत्तौ सकृच्छ्रुतस्यापि वाक्यान्तरप्रकल्पितावस्थौत्पत्तिकद्रव्यगुणत्ववशेनानुष्ठानभेदः।

तद्धि द्रव्यमवश्यं यथागृहीतमेव दातव्यम्। पुनरेकीकरणे पूर्वकृतग्रहणभेदवैयर्थ्यप्रसङ्गात्। न च यथासंकल्पिताः स्वैर्भागैर्देवताः सम्बध्येरन्। न च त्यागकाले सर्वाः संकल्पयितुं शक्यन्ते, येनाभ्यासभीतैः सर्वोद्देशेन सकृदेव सर्वं द्रव्यं मिश्रीकृतं दीयेत। तथा कृतेऽपि च भागसंकरः प्राप्नोत्येव। प्रकल्पिते च भागनानात्वे वचनादृतेऽवश्यं परिहार्या संकरापत्तिः। तस्माद्यथासंकल्पितस्य प्रदानात्सर्वदेवतासमुच्चये सत्युपपन्नमेतत्—'दशैतानध्वर्युः प्रातःसवने ग्रहान्गृह्णाति' 'आश्विनो दशमो गृह्यते' 'तं तृतीयं जुहोति' इति। तेन सिद्धमेककर्मत्वम्॥ १९॥

न्या० सु०—पशुविषयायाश्चिन्तायाः पर्यवसितत्वं भाष्योक्तमुपपादयति—**क्रमेति**। क्वाधिकरणे कीदृशी वोद्धविष्यतीत्यपेक्षायामाह—**पशोरिति**। 'अग्नीषोमीयं पशुमालभेते'ति तद्धितेनाष्टाकपालादिवत्समस्तपशोर्देवतान्वयात्प्रदेयत्वलक्षणविष्ट्वावगतेः 'समस्तादवदाने पशोरेकहविष्ट्वं समस्तचोदितत्वादि'ति सूत्रेण पूर्वपक्षिते प्रत्यङ्गं वा ग्रहणवदङ्गानां पृथक्प्रकल्पनादिति सूत्रेण पशुस्वरूपस्य विशसनेन नाशितत्वात्प्रदेयत्वानुपपत्तेः पृथक्कल्पितेभ्यश्च हृदयादिभ्योऽवदानविधानात्, तद्धितोक्तस्य देवतान्वयस्य साक्षादसम्भवादगत्या व्यवहितविषयत्वावगतेः प्रत्यङ्गं हविष्ट्वेनावदानस्य सिद्धान्तयिष्यमाणत्वात्प्रत्येकमङ्गानां हविष्ट्वविवक्षयोत प्रत्यङ्गमित्युतशब्दं पूर्वन्निपात्य साङ्गानां हविष्ट्वे सिद्धे तद्विशेषचिन्तायां सर्वाङ्गविवक्षया प्रत्यङ्गमुतैकस्मादित्यावृत्त्या योज्यम्। हृदयजिह्वावक्षोयकृद्वृक्कौ सव्यन्दोरुभे पार्श्वे दक्षिणाश्रोणिगुदं तृतीयमित्येकादशदैवतान्यवदानानि परिगणितानि।

सोम इति परिहारप्रतिज्ञाभाष्यं व्याचष्टे—**सोमेत्विति**। इन्द्रवाय्वा इति परिहारभाष्यं व्याचष्टे—**वाक्येनेति**। ततो विकल्पिष्यन्ते इत्यध्याहारेण यदिशब्दान्वयः, वाक्यव्यतिरेकवाचिना तुशब्देन प्रकरणसूचनात्प्रकरणेन तु यागसङ्गतत्वात्सर्वासां समुच्चय इति, सर्व्वशब्देन समुच्चये सूचिते। प्रकरणेनाप्यन्वये तुल्यार्थत्वाद् द्विकल्पः कस्मान्न भवतीत्याशङ्क्य अन्योन्यनैरपेक्ष्येणान्वयाभावाद्विकल्पानापत्त्यभिधानार्थम्—**युगपदित्युक्तम्**। वाक्येनान्वये समुच्चयः कस्मान्न भवतीत्याशङ्क्य, यत्र 'दध्ना जुहोतीत्या'दौ वाक्येनान्वयश्चोद्यते, तत्र तुल्यार्थत्वादसमुच्चय इत्युक्ते, प्रकरणेनाप्यन्वये तुल्यार्थत्वाविशेषमाशङ्क्या-

न्योन्यसापेक्षतुल्यार्थत्वाभावात्समुच्चयानापत्यभिधानार्थं निरपेक्षेणेत्यनेन पृथक्शब्दोक्तं नैरपेक्ष्यं व्याख्यातम् । आद्यं श्लोकं व्याचष्टे—**यदीति** । य इमाः पुनरित्यादियुगपदेव सम्बन्ध्यन्तइत्यनेन सर्वास्स्विवति श्लोकावयवो व्याख्यातः । देवतानामक्रियात्मकत्वात् प्रकरणग्रहणानुपपत्तिमाशङ्क्य, सर्वेत्यनेन ग्रहणाख्यक्रियाद्वारा तदुपपादितम् । द्वितीयं श्लोकं व्याचष्टे—**तत्र नामेति** । एतदेव प्रश्नपूर्वकमुपपादयति—**किमिति** ।

नन्विन्द्रवाय्वादीनां देवतात्वेनैव सामर्थ्यात्प्रत्येकं च देवतात्वावगतेः प्रत्येकमेव सामर्थ्यमवसीयतइत्याशङ्क्याह—**नन्विति** । ननु त्यज्यमानद्रव्योद्देश्यत्वमात्रेण देवताया यागनिष्पादकत्वात्प्रत्येकमेव चोद्देश्यत्वप्रतीतेकैकया देवतयाऽस्त्वेव यागसिद्धिरित्याशङ्क्याह—**सत्यपि चेति** । यागरूपनिष्पत्तावपि यागाभ्यासात्मकज्योतिष्टोमरूपनिष्पादनसामर्थ्यस्य शब्दैकसमधिगम्यत्वाद्देवताविनियोजकशब्दकल्पनायाश्च प्रकरणधीनत्वात्तस्य चापर्यायप्रवृत्तित्वान्न प्रत्येकं सामर्थ्ये प्रमाणमस्तीत्याशयः ।

नन्वेकार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यात्प्रधानस्ये१२-३-८ति द्वादशाधिकरणे तुल्यार्थत्वमात्रेण विकल्पस्य वक्ष्यमाणत्वात् प्रत्येकत्वविशेषणमयुक्तमाशङ्क्याह—**प्रत्येकमिति** । 'दधिमधुपयोघृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यमि'ति चित्रेष्टिद्रव्याणां तुल्यार्थत्वेऽप्यन्योन्यसापेक्षत्वेन विकल्पाभावाद्विशेषणार्थवत्तेत्याशयः । दृष्टान्तेऽन्योन्यनैरपेक्ष्यमुपपादयति—**वाक्येति** ।

ननु ग्रहणद्वारा देवतानां यागान्वयात्, तत्र च वाक्येन प्रत्येकमेव विनियोगात्प्रत्येकं तुल्यार्थताऽवसीयत इत्याशङ्कानिरासार्थं भाष्यकारस्यादृष्टसंस्काराभिधानमितिसूचयितुमाशङ्कां तावदाह—**नन्विति** । ग्रहणासंस्कारस्यादृष्टार्थत्वेन प्रमाणान्तरतो भेदाभेदानवधारणान्न तादर्थ्येन विहितानां भिन्नानां देवतानामैकार्थ्ये प्रमाणमस्तीत्याशङ्कानिरासार्थमथ पुनरित्याद्येवमपरेष्वपि, ग्रहणेष्वित्यन्तं भाष्यं ग्रहपात्रे सोमग्रहणं विना 'ग्रहैर्जुहोतीति'विध्यर्थानिष्पत्तेर्ग्रहणस्य दृष्टार्थत्वादयुक्तमाशङ्क्योद्देश्यत्वेन देवताया ग्रहणसाधनत्वाद्यागवच्च ग्रहणस्य देवतोद्देशाधीननिष्पत्तित्वाभावेन ग्रहणं देवतोद्देशस्यादृष्टार्थत्वात्तद्विशिष्टरूपेण ग्रहणस्यादृष्टार्थताभिप्रेतेति सूचयन्परिहरति—**सत्यमिति** । ग्रहणे देवतान्वयस्यादृष्टार्थत्वान्नैकार्थ्यमिति वदता ग्रहणसंस्कारार्थत्वेन देवताविधानाद् तत्र देवतोद्देशस्य दृष्टार्थत्वायोगात् ग्रहणेनादृष्टः संस्कारो जन्यत इति भाष्यार्थः—**सूचितः** ।

ननु निर्वापादिष्विव देवतोद्देशस्य वक्ष्यमाणदेवतास्मृत्यर्थत्वान्नादृष्टार्थतेत्याशङ्कते—**कथमिति** । ग्रहणान्वयात्प्राग्देवताया यागेऽन्वये सति देवतास्मृत्या प्रधानोपकारसिद्धेर्ग्रहणे देवतोद्देशः स्मृत्यर्थः स्यात्, नत्विह तथास्तीति परिहरति—**उच्यतइति** । नन्वन्यत्राविनियोगे अपि यागवद्ग्रहणे देवतोद्देशस्यादृष्टार्थत्वं भविष्यतीत्याशङ्क्य, विनेत्युक्तम् । देवतोद्देश्ययागावयवत्वात्तेन विना यागासिद्धेर्यागसिद्ध्यर्थमेव तत्रोद्देशः । ग्रहणावयवत्वाभावात्तु नोद्देशेन विना ग्रहणसंस्कारासिद्धिरित्याशयः । श्लोकं व्याचष्टे—**यदि हीति** । ततःशब्देन तदित्यव्ययं व्याख्यातम् । श्रवणशब्देन कर्मव्युत्पत्त्या देवतावाचिशब्दाभिधानाद्देवतोद्देशोऽदृष्टार्थ-

मिति नपुंसकलिङ्गसिद्ध्यर्थं विवक्षितः। ननु प्राग्यागान्वयानवगमेऽपि ग्रहणान्वयद्वारा यागान्वयज्ञानात्तत्स्मृत्यर्थत्वाविरोध इत्याशङ्कते—**ननु चेति**। विधीयमानस्य देवतोद्देशस्य प्रयोजनापेक्षावेलायां देवतास्मृतेः प्रधानोपकारित्वानवगमेन प्रयोजनत्वयोग्यत्वानवधारणात्प्रयोजनत्वकल्पना न युक्तेत्याशयेन प्रतिज्ञाहेतुप्रश्नपूर्वं परिहरति—**नैतदिति**।

ननु विधीयमानाया एव देवतायाः प्रकरणात्प्रधानार्थत्वावगतेः तत्स्मृतेः प्रयोजनत्वयोग्यतावधारयिष्यतइत्याशङ्कां निरस्यन् श्लोकं व्याचष्टे—**ऐन्द्रवायवमिति**। देवतानां वाक्येन ग्रहणसंयोगादसंयुक्तग्राहिणा प्रकरणेनाऽग्राह्यत्वेऽभिहिते व्रीहिप्रोक्षणादिवदविरोधात्संयुक्तस्यापि ग्राह्यत्वोपपत्तिमाशङ्क्य, अक्रियात्मकत्वेन प्रकरणग्रहणायोग्यतोक्ता। ननु पश्चादपि देवतास्मरणस्य प्रयोजनत्वयोग्यतावधारणे दृष्टे सम्भवत्यदृष्टकल्पना न न्याय्येत्याशङ्क्याऽनुनिष्पादिनोऽपि शास्त्रेण प्रयोजनतयाऽनङ्गीकृतत्वान्न तेन शास्त्रस्यादृष्टप्रयोजनकल्पने—**प्रवृत्तिः प्रतिबध्यतइत्युक्तम्**। तस्यापीत्युपसंहारभाष्यं देवतोद्देशसमुच्चयद्वारग्रहणसमुच्चयाभिधानार्थत्वेन व्याचष्टे—**तेनेति**।

नन्वदृष्टार्थत्वाद्देवतोद्देशसमुच्चयेऽपि ग्रहणानां स्वरूपेण दृष्टार्थत्वाद्विकल्पो भविष्यतीत्याशङ्क्य, न चेत्यभ्यासाधिकरणभाष्योक्तगुणभेदनिमित्तकर्मभेदन्यायाभिधानम्। यदि ग्रहणानि न समुच्चीयन्तइति वाच्ये भेदानभ्युपगमेऽभ्यासेनापि समुच्चयः स्येत्स्यतीति प्रौढिप्रदर्शनार्थम्—**नावर्त्ततइत्युक्तम्**। अत्रैव सूत्रं योजयति—**एष तावादिति**। यागाभ्यासविषयतया वक्ष्यमाणार्थान्तरसूचनार्थस्तावच्छब्दः। संस्कारशब्दोक्तेन ग्रहणेन विशेषणभूतदेवतासंयोगोपस्थापनात्तच्छब्देन परामर्शोपपत्तिः गृहीतस्य ग्रहणायोगाशङ्कानिरासार्थं द्रव्यपृथक्त्वादिति सूत्रावयवपूरणार्थम्—**देवतासंयुक्तेत्युक्तम्**। कथम्, देवतोद्देशभेदस्य ग्रहणाभ्यासे हेतुतेत्याशङ्कानिरासार्थमनर्थकं हीत्यवयवं सकृद् ग्रहणेनैकदेवतोद्देशस्याशक्यत्वेनानुष्ठानायोगात्तच्छ्रवणानर्थक्याभिधानार्थत्वेन व्याख्यातुम्—**संयोगान्तरेत्युक्तम्**। अतो भिन्नार्थत्वाद्देवतानां समुच्चयोपपत्तिरित्यभ्यासोक्तिप्रयोजनाभिधानार्थत्वेन भेदशब्दं व्याख्यातुम्—**तेनेत्युक्तम्**। देवतोद्देशस्य द्रव्यविषयत्वादेकस्मिंश्च द्रव्येऽनेकदेवतोद्देशायोगात्प्रकृतिप्रत्ययपौर्वापर्यनियमाच्च धात्वर्थभेदेन भावनाभेदवत्प्रकृत्यर्थदेवताभेदेन प्रत्ययार्थद्रव्यभेदस्य न्याय्यत्वाद्देवतोद्देशभेदेन द्रव्यभेदेऽप्येकस्मिन् ग्रहणे बन्धने खादिरत्वाद्विकल्पेनानेकद्रव्यान्वयसम्भवेनाऽनेकदेवतान्वयोपपत्तेर्न देवतोद्देशभेदाग्रहणाभ्यासकल्पना युक्तेत्याशङ्कानिरासार्थं द्रव्यगुणीभावादित्यवयवं पूरयितुम्—**संस्कार्यमित्युक्तम्**। खादिरादेस्त्वसंस्कार्यत्वेन बन्धनं प्रति गुणत्वान्न बन्धनभेदोपपादकतेत्याशयः।

ननूक्तप्रकारेण ग्रहणे देवतोद्देशस्यादृष्टार्थत्वात्तत्समुच्चयेन ग्रहणाभ्यासप्रतीतेर्दशमो गृह्यते, दश गृह्णातीति ग्रहणविषयक्रमसमुच्चयदर्शनोपपत्तावपि विना तेन 'यदि वासौ न सिद्ध्यतीत'यनेनैव न्यायेन यागे देवतोद्देशस्य दृष्टत्वात्प्रकरणगृहीतानामपि देवतानां विभागमन्त्रादिवद्विकल्पोपपत्तेः, यागाभ्यासानापादकत्वा'त्तृतीयो हूयते' इति यागविषये क्रमसमुच्चयदर्शने नोपपद्येयातामेवेत्याशयेनाशङ्क्याह—**एतद्देवतावन्तीति**। देवतासंयोगानाम-

दृष्टार्थत्वादित्यनेनैव देवतासमुच्चयस्योक्तत्वाद्यागेऽपि देवतानां समुच्चयसिद्धिरिति प्रतिज्ञाने, तदुपपादनार्थमिन्द्रवाय्वादिदेवतायुक्तानां ग्रहणानां द्रव्यदेवतान्वयापादकयागापेक्षत्वाद्यागस्य च श्रुत्यादित्रयालभ्यमानदेवतत्वेनाविहितदेवताकतया देवतापेक्षत्वात्प्रकरणस्य चाक्रियात्मकदेवताविनियोगे व्यापाराभावाद् ग्रहणविनियोगद्वारा देवताविनियोजकत्वावगतेर्देवताविशिष्टात्मना च ग्रहणानामदृष्टार्थत्वाद्यागप्रकरणेन समुच्चितानां ग्रहणमुक्तं तद्विनियोजकमिति तच्छब्दोऽध्याहार्यः ।

ननु भगो वां विभजत्वित्यादिमन्त्राणां प्रकरणग्राह्यत्वेऽपि विकल्पदर्शनान्न यागे देवतासमुच्चयसिद्धिरित्याशङ्कते—**नन्विति ।** मन्त्राणामप्यक्रियात्मकत्वेन साक्षात्करणाग्राह्यत्वात्पौरोडाशिकसमाख्यया लब्धसामान्यसम्बन्धेन लिङ्गेन विभागाङ्गत्वज्ञानोत्तरकालं तद्द्वारा प्रकरणेन ग्रहणाल्लिङ्गेन च विभागे विकल्पेन मन्त्रविनियोगाद्वैषम्यमाह—**सत्यमिति ।**

ननु समाख्ययैव सामान्यसम्बन्धलाभे प्रकरणानपेक्षेण लिङ्गेन त्रैयम्बकपुरोडाशविभागेऽपि मन्त्रविनियोगापत्तेः प्रकरणबाधान्न दार्शपौर्णमासिकपुरोडाशविभागमात्रार्थत्वं स्यादित्याशङ्क्य—**विभागान्तरेष्वित्युक्तम् ।** आनर्थक्यपरिहारायापूर्वसाधनलक्षणार्थं प्रकरणमप्यनुग्राह्यमित्याशयः । ग्रहणानां भेदेऽपि सामान्यरूपेणैक्यविवक्षया देवतासमुच्चयाभिधानम् । नन्वेवमपि यागस्य प्रत्येकं देवताग्रहणसमर्थत्वाद्विकल्पो भविष्यतीत्याशङ्क्य—**तत्रेत्युक्तम् ।** ननु द्वारभूतानां ग्रहणानामपि यागीयद्रव्यपृथक्करणार्थत्वेन दृष्टार्थत्वाद्देवतोद्देशस्यापि च यागापेक्षितदेवतासमर्पणेन दृष्टार्थत्वोपपत्तेर्विकल्पस्य न्याय्यत्वात्तद्द्वाराऽपि प्रविष्टानां देवतानां विकल्प एव युक्त इत्याशङ्कते—**नन्विति ।** एकदेवतासमर्पणेन यागस्य नैराकाङ्क्ष्यसिद्धेरनेकदेवताविशिष्टग्रहणाम्नानानर्थक्यप्रसङ्गाद्देवताविकल्पार्थे चानेकाम्नाने गुणपरत्वेन ग्रहणभेदकत्वायोगाद् ग्रहणस्य भेदाभावेन विकल्पानुपपत्तेस्तद्द्वारा देवताविकल्पायोगादनेकदेवताविशिष्टग्रहणानुष्ठानायैवानेकाम्नानस्याङ्गीकार्यत्वादनेकदेवत्ययागानवगतेश्चानेकदेवताविशिष्टग्रहणानुष्ठानस्य दृष्टार्थत्वायोगाद्विकल्पानुपपत्तिरिति परिहरति—**भवेदिति ।** ग्रहणस्य दृष्टार्थत्वेऽपि तद्भेदस्यादृष्टार्थतेति भेदशब्देनोक्तम् ।

ननु पुनः श्रुतेर्देवतान्वयार्थत्वेन भेदकत्वाभावाद् ग्रहणस्य भेदानुपपत्तेस्तत्राप्यैकार्थ्याद्देवतानां विकल्पापत्तेः कथं तद्द्वारा यागे समुच्चयः स्यादित्याशङ्क्याह—**अवश्यं चेति ।** निर्गुणग्रहणाश्रुतेः केन चिद्वाक्येन देवताविशिष्टग्रहणापत्तेरङ्गीकार्यत्वाद्वाक्यान्तरैरुत्पत्तिशिष्टदेवतावरुद्धग्रहणे देवतान्तरविध्यशक्तेः ग्रहणान्तराण्येव विधीयन्तइत्याशयः । वस्तवशक्तेरपि गुणस्यात्र भेदकतोत्पत्त्यतिशयं वक्तुमारम्भते—**न हीति ।** युगपत्तावत्सर्वोद्देशोऽशक्य एवेत्याह—**यौगपद्यं तावदिति ।** नन्विन्द्रवायुमित्रावरुणाद्यास्तैः प्रातिपदिकैर्निदिश्य सर्वान्ते सकृच्चतुर्थ्युच्चारणेन सर्वा युगपदुद्देष्टुं शक्या इत्याशङ्क्याह—**अदेवताभूत एव चेति ।** सकृच्चतुर्थीनिर्देशे समुदायो देवत्वेनोद्दिष्टः स्यात् । न चास्य देवतात्वमस्तीत्यर्थः । क्रमोद्देशासम्भवं प्रतिज्ञाहेतुप्रश्नपूर्वमुपपादयति—**न चेति ।** विशिष्टविधिना विशेषण-

विशेष्ययोर्देवतोद्देशग्रहणयोरिन्द्रवायूद्देशविशिष्टं ग्रहणं कार्यमिति युगपद्विधानाद्वागाख्यकरणभेदेन च यौगपद्यसम्पादनशक्तेर्विक्षेपः। ननु ज्ञानाद् गृह्यमाणे द्रव्ये देवतोद्देशः कार्यः। न च ग्रहणकाले सर्वदेवतोद्देशः शक्य इत्यर्थः। त्रिचतुरदेवतोद्देशसम्भवेऽप्यल्पाभिप्रायेण—**एकमित्युक्तम्**। नचैककाल्यासम्भवेऽपि प्रागूर्ध्वं वा ग्रहणप्रत्यासन्ने काले क्रमेण सर्वोद्देशः सम्भविष्यतीत्याशङ्क्याह—**यदि त्विति**। (प्राकृतदेवतोद्देशनाशापत्तेरपि क्रमेणोद्देशो न भवतीत्याह—**किं चेति**। दास्यामीति त्यागरूपतेतिकरणेन परामृष्टा। श्लोकं व्याचष्टे—**यदिति**।[1]) एकदेवतोद्देशेन त्यक्षामीति सङ्कल्पितस्य। तदानीमित्युक्तस्याप्यन्यत्राविनियोज्यत्वम्—**प्रायशब्देनोक्तम्**। 'इन्द्रवायुभ्यां गृह्णामी'ति शब्दोच्चारणरूपस्योद्देशस्याध्वर्यवत्त्वेऽपि त्यागसङ्कल्परूपोद्देशं विना तस्यापर्यवसानात्, तस्य च यजमानादन्येन कर्त्तुमशक्यत्वात्—**यजमानइत्युक्तम्**। पूर्वपक्षीएयुक्ते रुपलक्षणार्थत्वम्—**पूर्वसङ्कल्पेत्यनेनोक्तम्**। गुणहेतुकभेदाक्तिमुपसंहरति—**तेनेति**।

एवं ग्रहणस्वरूपस्य दृष्टार्थत्वेऽपि देवतोद्देशविशिष्टरूपेणादृष्टार्थत्वाभिधानपरतया भाष्यं व्याख्याय, इदानीं स्वरूपेणैव दृष्टार्थत्वाभिधानपरतया व्याख्यातुमाह—**किं चेति**। श्लोकं व्याचष्टे—**देवतोद्देशेति**। प्रकरणालोचनेन रसस्य प्रदेयत्वावसायात्, तत्सिद्धेश्च पाचनान्नसंस्काराधीनत्वात्पूयमानावस्थेनेत्युक्तम्। उत्पत्तिवाक्यमात्रालोचने तु लतायाः प्रदेयत्वप्रतीतेः, क्रयातिरिक्तसंस्काराणामदृष्टार्थत्वं प्रौढ्या वक्तुं क्रयोत्तरकालतोक्ता। रसविधानमेव पुरोडाशादिवैषम्याभिधानेन सूचयितुमाह—**यत्र त्विति**। ननु 'ग्रहैर्जुहोति, चमसैर्जुहोती'ति विध्यर्थस्य ग्रहचमसपात्रेषु ग्रहणमन्तरेणासिद्धेः तत्सिद्धयर्थत्वाद् ग्रहणं दृष्टार्थमेवेत्याशङ्क्याह—**न चेति**। ग्रहचमसविध्योरप्यदृष्टार्थत्वात्, तद्वारा ग्रहणस्यापि प्रधानं प्रति दृष्टोपकारित्वाभावाददृष्टार्थतेत्याशयः। सोमस्य यागसाधनत्वविधिकाले ग्रहचमसस्थत्वविधौ सत्यन्यत्रस्थस्य साधनत्वाभावाद् ग्रहचमसस्थत्वं दृष्टार्थं स्यात्। उत्तरकालं तु प्रकरणालोचनयागवत्तस्यापि तत्स्थत्वस्य साधनानन्तर्गतेरदृष्टार्थतेति सूचनायोत्पत्तिशब्दः। अतो न केवलं नानादेवतोद्देशजन्यादृष्टभेदनिष्पत्त्यर्थंग्रहणानि समुच्चेतव्यानि, किं तु स्वजन्यादृष्टभेदनिष्पत्त्यर्थमपीत्यदृष्टार्थत्वोक्तिप्रयोजनमाह—**तेनेति**। दृष्टार्थत्वेऽपि ग्रहणस्य ग्राह्यभेदात्समुच्चयाभिधानार्थं 'ग्रहणं चे'ति भाष्यं व्याचष्टे—**दशेति**। 'कृत्स्नस्य ग्रहणं नावकल्पत'इत्यभिधानमनिष्टापादकत्वादयुक्तमाशङ्क्य, समुच्चयं विनेत्यध्याहारेण व्याख्यातुं स कृत्स्नः सोमो न ग्रहणभेदमन्तरेण शक्यते—**ग्रहीतुमित्युक्तम्**। दशमुष्टेरभिषवे सति रसस्याल्पत्वादेकस्मिन्पात्रे ग्रहणोपपत्त्याशङ्कानिरासार्थत्वद्रोणकलशेषु संस्काराभिधानं व्याख्यातुम्—**नियतेत्युक्तम्**।

यानि चैवाभिपूयन्ते पुष्पमूलफलैः शुभैः। इति—

मिश्रीकरणेऽभिषुणोतिप्रयोगदर्शनात् मिश्रीकृतवाच्यभिषुतशब्दः प्रादेशमात्रोक्तिप्रयोजनमल्पशब्देनोक्तम्।

---

१. अयं पा० २ पु० मा०।

नन्वयागसाधनभूतसोमावयवग्रहणस्यादृष्टार्थत्वोपपत्तेः कृत्स्नस्यैव ग्राह्यताया न्याय्यत्वात्कृत्स्नग्रहणसमर्थमहापरिमाणपात्रोत्पादनेनैकस्मिन्पात्रे कृत्स्नस्य सोमस्य ग्रहणमुपपत्स्यतइत्याशङ्कानिरासार्थं यद्यपि चेत्यादिनाऽवकल्पेतेत्यन्तं भाष्यं श्रुतपरिमाणपात्रकलशत्यागेनाश्रुतपात्रान्तरोत्पादनाशङ्कानुपपत्तेर्नित्यवद्विहितानामपि चैकार्थ्ये व्रीहियवादिवदगत्या विकल्पाश्रयणोपपत्तेर्देवतासमुच्चयशङ्कानिरासार्थस्य कृत्स्नस्य ग्रहणं हीतिभाष्यावयवस्यैतस्या इति सङ्कल्प इत्यादिवार्त्तिकेन व्याख्यातार्थत्वन्न व्याख्यातम् । नन्ववयवशो ग्रहणेन गृह्यभेदाग्रहणाभ्यासोपपत्तेस्तद्विषयक्रमसमुच्चयदर्शनोपपत्तावप्यवयवशो गृहीतस्यापि सोमस्यैकीकरणेन कृत्स्नस्य सकृद्यागसाधनत्वोपपत्तेस्'तृतीयो हूयते' इति यागाविषयक्रमसमुच्चयदर्शनानुपपत्तिरित्याशङ्कानिरासार्थं 'तस्मादित्या'दिभाष्यं तात्पर्यस्तावद्व्याचष्टे—**तथावस्थेन चेति**। भेदेन गृहीतस्य सोमस्यैकीकरणायोगाद्भिदावस्थितस्यैव यागनिष्पादकत्वावगतेरनभ्यस्तस्य च यागस्य तथावस्थितसर्वसोमविषयसमीहितकार्योपयोगित्वकरणलक्षणसम्भावनयाभ्यसितव्यो याग इत्यर्थः। येन कारणेन यागाभासो भाष्यकृतोक्तः तेन कारणेन ग्रहणाभ्यासवद्यागाभ्यासेऽपि सूत्रं योज्यमित्याह—**तेनेति**। योजयति 'तद्भेदादिति' दृष्टार्थत्वे ग्रहणस्य भेदकप्रमाणाभावेन भेदायोगाद्भाष्यकृतोक्तं तद्भेदमनादृत्य, संस्कारेण संस्कार्यद्रव्योपस्थापनात्तच्छब्देन परामर्शः। यागवेलायामेकीकरणे प्राक् पृथक्करणमनर्थकमिति भाष्यकृद्व्याख्यानं सूत्रादप्रतीतेरनादृत्य यागानभ्यासे द्रव्यपृथक्त्वमनर्थकमित्येवं व्याख्यातुम्—**अशेषमित्युक्तम्**। पश्ववयवानामिव सोमावयवानामप्यसर्वत्यागोपपत्तिमाशङ्क्यैकादशपशोरवदानानीति वदिहावयवान्तरपरिसंख्याभावात्पशुवैषम्याभिधानार्थत्वेन पृथक्कृतस्य कृत्स्नस्य द्रव्यस्य यागं गुणीभावाद्यागानुष्ठानभेद इत्येवं व्याख्यातुम्—**अत इत्युक्तम्**। 'अङ्गैः स्विष्टकृतं यजतीत्या'दिना अवयवान्तराणामन्यत्र विनियोगवत्सोमावयवानामन्यत्राविनियोगेनानर्थक्यपरिहारायोगसूचनार्थोऽतः शब्दः। वाक्यान्तरैः कल्पिताभेदावस्था यस्यौत्पत्तिकस्य द्रव्यस्य, तस्य यद्यागं प्रति गुणत्वं तदंशेनेत्यर्थः। तात्पर्यतो व्याख्यातं भाष्यवयवशो व्याचिख्यासुरनर्थकं हि स्यादिति सूत्रावयवव्याख्यानार्थं नानेति भाष्यं कथमशक्यतेत्यपेक्षायामुपपादयितुमाह—**तद्धीति**। सूत्रावयवोक्तोपपत्त्यभिधानात्तद्व्याख्यानार्थतैकध्यनिरासभाष्यस्य सूचिता। भाष्योक्तामुपपत्तिं व्याचष्टे—**न चेति**। पुनरेकीकरणइत्यनुषङ्गः। भागव्यवस्थानुपपत्त्याशयेन भाष्योक्तामुपपत्तिं व्याख्याय, सर्वदेवतोद्देशानुपपत्त्याशयेन व्याचष्टे—**न चेति**। प्रस्तरप्रहरणोत्तमप्रयाजवत्क्रमेण सर्वा देवता उद्दिश्य सर्वतत्त्यागोपपत्तेः सर्वदेवतोद्देशानुपपत्तिपरिहारसम्भवेऽपि भागव्यवस्थानुपपत्तिरशक्यपरिहरेत्याह—**तथा कृतेऽपि चेति**। सर्वदेवतोद्देशेन सकृद्दाने कृतेऽपीत्यर्थः।

ननु वायव्यैन्द्रवायववत्सङ्करोऽपि न दोषायेत्याशङ्क्याह—**प्रकल्पते चेति**। सङ्करे भागनानात्वकल्पनानर्थक्यापत्तेरेकपात्रा गृह्यन्ते इति वच्चेत्सङ्करविध्यभावात्सङ्करोऽनर्थक इत्याशयः। नन्वैकध्यकरणाशक्तावप्येकेन भागेन विहितयागनिष्पत्तेर्नाश्रुताभ्यासकल्पना युक्तेत्याशङ्कानिरासार्थं 'न चेति भाष्यमेतद्देवतावन्ति ग्रहणानीत्या'दिवार्त्तिकेन व्याख्यातार्थत्वात् ज्योतिष्टोमशब्दस्याभ्यस्तयागरूपवाचित्वेनाभ्यासस्य ज्योतिष्टोमश्रुत्युक्तत्वा-

भिधानार्थं च 'तासु चेति' भाष्यं न त्विह प्रत्येकं ज्योतिष्टोमनिर्वर्त्तनसामर्थ्यमित्यादि-वार्त्तिकेन सर्वास्वेवेज्यमानासु श्रुतो ज्योतिष्टोमाख्यो यागो निर्वृत्तो भवति नैकस्यां देवतायामिति व्याख्यातार्थत्वान्न देवतान्तरमिति च भाष्यं प्रकृतदेवताविनिर्वृत्यत्वादेव च श्रुतो यागो न देवतान्तरमाकाङ्क्षत्यन्यथा देवताशून्यत्वेनारूपत्वाच्छ्रुतो यागो न निर्वर्तेतेत्येवं स्पष्टार्थत्वात्कृत्स्नेन चेत्यादि च भाष्यं 'देश मुष्टीर्मिमीत'इति चेत्यादिवार्त्तिकेन भाष्यान्तरव्याख्यानार्थेनापि तस्मात्प्रकल्पनभेदादिभाष्यसमुदायतात्पर्यव्याख्यानार्थतयाऽवस्थि-तेन चेत्यादिवार्त्तिकसहितेनार्थाद्भेदो द्रव्यगुणीभावादिति सूत्रावयवव्याख्यानार्थत्वेन व्याख्यातत्वादव्याख्याय तस्मिश्चेत्येत्यभ्यासोपपादनप्रयोजनाभिधानाभिधार्थं तस्मादिति परिचोदनापरिहारोपसंहारार्थं च भाष्यं निगमनपूर्वकमेकहेलया व्याचष्टे—**तस्मादिति**। दशेति ग्रहणसमुच्चयदर्शनं दशम इति क्रमदर्शनं तृतीयमित्येकमेव प्रकृत्यंशेन समुच्चयदर्शनं प्रत्ययांशेन च क्रमदर्शनं यथासङ्कल्पितस्य पृथगवस्थितस्य कृत्स्नस्य सोमस्य प्रदानात्सर्व-देवतासमुच्चयाच्चोपपन्नमित्यर्थः । समुदायानुवादापवादस्य कर्मभेदापवादसिद्ध्यर्थत्वा-ल्लक्षणसङ्गतिरप्यस्तीति सूचयन्नधिकरणार्थमुपसंहरति—**तेनेति** ॥ १९ ॥

भा० प्र०—इस प्रकार आशङ्का की जा सकती है कि "सोमेन यजेत" इस वाक्य को विधि मानने पर इसके द्वारा एक याग का ही विधान होगा, किन्तु ऐसा मानने पर इस याग में ऐन्द्रवायव आदि अनेकानेक देवता का सम्बन्ध श्रुतियों में कहा गया है, वह सम्भव नहीं होगा, क्योंकि एक याग में एक से अधिक वाक्य में अनेक देवता की विधि रहने पर देवताओं का समुच्चय नहीं हो सकता है, वरन् विकल्प ही होगा। इस प्रकार की आशङ्का के उत्तर में कहा जाता है—"तद्भेदात् कर्मणः अभ्यासः" इस स्थल में देवता का भेद रहने से विहित सोमग्रहण रूप कर्म का अभ्यास अर्थात् आवृत्ति या अनेक बार अनुष्ठान करना होगा, क्योंकि "द्रव्यपृथक्त्वात्" सोम द्रव्य का पृथक्त्व यतः दशमुष्टि सोम के ग्रहण की विधि है और वह एक देवता का सङ्कल्प करने से प्रत्येक देवता के ही रहते हैं, ऐसा न मानने पर "अनर्थकं स्यात्" इस प्रकार देवता के सम्बन्ध का उपदेश अनर्थक होगा। इसलिए देवता का समुच्चय होगा, अतः यह विकल्प होता है—यह न कहकर सभी देवताओं के साथ याग का सम्बन्ध रहता है।

"तद्भेदात्" = देवता के सम्बन्ध का भेद होने से "कर्मणः अभ्यासः" = विहित ग्रहण रूप कर्म का अभ्यास अर्थात् आवृत्ति पुनः-पुनः अनुष्ठान करना होगा, "द्रव्यपृथक्त्वात्" = ग्रहण के द्वारा संस्कार्य द्रव्य का अर्थात् सोम का पृथक्त्व अर्थात् भेद होने से "हि" = क्योंकि "अनर्थकम्" = संयोगान्तर का अर्थात् द्रव्यान्तर के सम्बन्ध का जो श्रवण अर्थात् श्रुतियों में उल्लेख रहने से उसके अनुसार अनुष्ठान न होने पर वह अनर्थक होगा "द्रव्यगुणीभावात्" क्योंकि द्रव्य के प्रति गुणीभाव अर्थात् अङ्गत्व रहने से अर्थात् संस्कार्य द्रव्य के प्रति ग्रहण का गुणीभाव होने से अर्थात् ग्रहण संस्कार्य द्रव्य का गुण होता है ॥ १९ ॥

**संस्कारस्तु न भिद्येत परार्थत्वाद् द्रव्यस्य गुणभूतत्वात् ॥ २० ॥**

**शा० भा०—यदप्युच्यते—यथा खादिरे बध्नाति, पालाशे[1] बध्नाति, इति खादिरादयः संस्कारे विकल्पन्ते, तद्वद्देवता विकल्पयिष्यन्त इति। तच्च नैवं युक्तम्। तत्र संस्कारमभिनिर्वर्तयितुं खादिरादयः श्रूयन्ते। यदि चेन्द्रवाय्वाद्या अपि ग्रहदेवता[2] यागमभिनिर्वर्तयितुं श्रूयेरन्, ततोऽत्रापि विकल्पः स्यात्। न त्वेता यागे श्रुताः। तस्मात्समुच्चीयेरन् ॥ २० ॥ आशङ्कानिरासः ॥ इति षष्ठं पशुसोमाधिकरणम् ॥ ६ ॥**

भा० वि०—देवतानां विकल्पेन यागान्वये पराभिमतं दृष्टान्तं दूषयति—संस्कारस्त्विति। चोद्यमनूद्योत्तरत्वेन सूत्रं व्याचष्टे—**यदपीत्यादिना**। तत्र हि बन्धनाख्यसंस्कारमभिनिर्वर्तयितुं तद्गुणभावेन श्रूयमाणानां खदिरादीनां भेदेऽपि न बन्धनभेद इति खदिरादयो वकल्प्यन्त इति युक्तमित्यर्थः। देवतास्तु नैवमित्याह—**यदि चेति**। देवताविशिष्टद्रव्यं प्रति गुणभावस्योक्तत्वादित्यर्थः। विकल्पासंभवफलमाह—**तस्मादिति** ॥ २० ॥

त० वा०—प्रयोजनं पूर्वपक्षे सोमविकारेष्वेकस्यैव ग्रहस्य धर्मैः सकृदनुष्ठानेन भवितव्यम्। सिद्धान्ते तु प्रकृतितुल्यमेवाऽनुष्ठानमिति ॥ २० ॥

इति षष्ठं पशुसोमाधिकरणम् ॥ ६ ॥

वृत्तिकारमतेन

**प्रयोजनविचारः**

न्या० सु०—ननु कर्मैक्येऽपि तत्तद्देवतोद्देशेन पृथक् द्रव्यत्यागे सत्यनुष्ठाने विशेषाभावात्किं चिन्तायाः प्रयोजनमित्याशङ्क्याह—**प्रयोजनमिति**। प्रकृतौ विशेषाभावेऽपि कर्मभेदे सत्यकर्मणि विकल्पो विभागो हि चोदनैकत्वादित्याष्टमाधिकरणन्यायेनैकस्यैन्द्रवायवादिवाक्यविहितस्य यागस्य विकृतौ विकल्पेन विध्यन्तातिदेशाद्विकल्पेनैकस्य धर्माः कार्या सकृच्च यागः, कर्मैक्ये यथा प्रकृतीति विशेष इत्यर्थः। ऐन्द्रवायवादिवाक्यैश्च यागविधावैन्द्रवायवेन यजेतेति वचनव्यक्त्यापत्तेर्ज्योतिष्टोमस्यापि स्वार्थविहितद्रव्यदेवतावत्वलक्षणव्यक्तचोदनत्वादेकाहाहीनसत्रेष्वव्यक्तचोदनत्वेन ज्योतिष्टोमसादृश्याभावान्न तदीयविध्यन्तप्रवृत्तिः सोमवाक्ये। ननु विधौ द्रव्यश्रवणेऽपि स्वार्थविहितदेवताराहित्येन ज्योतिष्टोमस्याप्यव्यक्तचोद-

---

१. ब० पालाशे बध्नाति इति नास्ति।　　२. ब० ग्रहपदं नास्ति।

नत्वात्तत्साद्दृश्येनैकाहादिषु ज्योतिष्टोमिकविध्यन्तप्रकृतिरिति । प्रयोजनान्तरं त्वव्यक्तासु तु सोमस्येत्यष्टमाधिकरणेन सुज्ञानत्वान्नोक्तम् ॥ २० ॥

इति षष्ठं पशुसोमाधिकरणम् ।

भा० प्र०—यदि पूर्वपक्षी यह कहता है कि "खादिरे बध्नाति" "पालाशे बध्नाति" अर्थात् "खदिर के काष्ठ के यूप में बाँधे" "पलाश के काष्ठ के यूप में बाँधे" इत्यादि स्थलों में जैसे खदिर आदि का विकल्प होता है वैसे ही देवता का भी विकल्प होता है, ऐसी स्थिति में यह कहा जायगा कि "संस्कारस्तु न भिद्यते" ऐसे स्थलों में खण्ड बन्धन रूप संस्कार का भेद अर्थात् अनेक बार अनुष्ठान नहीं होता है, कारण "द्रव्यस्य परार्थत्वात् गुणभूतत्वात्" द्रव्य यूप बन्धन रूप संस्कार निष्पादन के लिए होने से जिस किसी एक यूप के द्वारा ही बन्धन रूप संस्कार सम्पादित होता है। यूप रूप द्रव्य संस्कार का अङ्ग होने से अङ्ग के अनुरोध में जो संस्कार रूप प्रधान की आवृत्ति अर्थात् पुनः पुनः अनुष्ठान होगा, वह भी नहीं हो सकता है। इसलिए यूप का ही विकल्प होता है। किन्तु ग्रह के अर्थात् सोम पात्र के इन्द्र, वायु आदि जो देवता उपदिष्ट हुए हैं, वे याग के सम्पादन के लिए उपदिष्ट नहीं हुए हैं। इसलिए यूप के समान उनका विकल्प नहीं होगा, वरन्, ये ग्रह के देवता हैं ग्रह अनेक हैं एवं सभी को सोम ग्रहण भी करना होगा इसलिए उनका समुच्चय ही होगा।

"संस्कारः तु" = किन्तु पशुबन्धन रूप संस्कार, "न भिद्यते" = भिन्न-भिन्न नहीं होता है, "द्रव्यस्य" = यूप रूप द्रव्य का, "परार्थत्वात्" = परार्थत्व होने से अर्थात् यूप बन्धन सम्पादन के लिए होने से, "गुणभूतत्वात्" = गुण भूत ही होता है ॥२०॥

यह छठा पशुसोमाधिकरण है।

**अथ सप्तमं संख्याधिकरणम्**

## [७] पृथक्त्वनिवेशात्संख्यया कर्मभेदः स्यात् ॥ २१ ॥ सि०

**शा० भा०—अस्ति वाजपेयः—'वाजपेयेन स्वाराज्यकामो यजेत' इति। तत्र प्राजापत्याः पशवः। 'सप्तदश प्राजापत्यान्पशूनालभते'—सप्तदशो वै प्रजापतिः। प्रजापतेराप्त्यै। श्यामास्तूपरा एकरूपा भवन्ति, एवमेव हि प्रजापतिः समृद्धयै। तत्र संदिह्यते-किं सप्तदशैतानि कर्माणि, अथ सप्तदशपशुगुणकमेकं कर्मेति। किं तावत्प्राप्तम्? एकं कर्मेति। कुतः? प्रजापतये सप्तदश पशवः संकल्प्यन्ते। किमेकं यागमभिनिर्वर्तयितुम्, उत बहूनिति संशये, एकमिति न्याय्यम्। यो हि बहून्यागान्कल्पयति, कल्पयत्यसावेकम्। तत्रैकस्मिन्नेव**

परिक्लृप्ते सप्तदशानामेव पशूनां परिकल्पनमुपपन्नं[1] भवति। केन च द्वितीयादीन्यागानवकल्पयेम। एवमल्पीयस्यदृष्टानुमानप्रसङ्गकल्पना[2] भवति। तस्मादेको यागः सप्तदशभिः पशुभिर्निवर्तयितव्य[3] इति। एवं प्राप्ते—

ब्रूमः—संख्यया कर्मभेदो भवेत्। पृथक्त्वे पशूनां सति सप्तदशसंख्या निविशेत। तच्च पशूनां पृथक्त्वं बहुषु यागेष्ववकल्पते, नैकस्मिन्। कथम्? एकादशभिरवदानैरसौ यागो निर्वर्तयितव्य इत्येवं चोदकः प्रतिदिशति। तानि चैकस्मादेव पशोरवाप्यन्ते। तत्र द्वितीयादेरालम्भो नावदानसम्पादनाय भवितुमर्हति। एकमालभ्यमानमन्वालभ्येरन्नदृष्टार्थायापरे[4]। तथा सति, अतदर्थत्वान्न ते प्राजापत्या भवेयुः। तत्र प्राजापत्यानिति श्रवणमुपरुध्यते। तेनैकस्मिन्पशौ पृथक्त्वनिवेशिनी[5] सप्तदशसंख्या नावकल्प्येत। बहुषु यागेषु बहुभिरेवावदानगणैः प्रयोजनम्। तेन सप्तदशभ्यो यागेभ्यः सप्तदश पशूनुपाददीरन् तत्र संख्यासामञ्जस्यं भविष्यति। तस्मात्सप्तदश यागाः।

नन्वेकस्मिन्नपि यागे सप्तदशभिरवदानगणैर्यक्ष्यते, वचनात्। नैतदेवम्[6]। पशुषु हि सा संख्या श्रूयते, नावदानगणेषु। अवदानानि हवींषि यागसाधनानि, न पश्वाकृतिः। सा ह्यवदानप्रकृतिद्रव्यं विशिषन्ती[7] प्रकृतौ प्रधानस्योपकृतवतीति, विकृतावप्यवदानप्रकृतिद्रव्यं विशिषन्ती प्रधानस्योपकरिष्यति। तत्र च पशोः सप्तदशसंख्या विकारिका, नावदानगणस्य। तस्मादेकस्मै अवदानगणायैकः पशुरालब्धव्यः प्राप्नोति। तत्र सप्तदशसंख्या नोपपद्यते। एवमेवावकल्पिष्यते, यदि शृङ्गाभिप्राया, वर्णाभिप्राया[8], रूपाभिप्राया वाऽभविष्यन् सप्तदश पशवः श्वेतः कृष्णो रोहित इत्येवमादयः। तेषामन्यतमो गृह्यत इति।

अथवा तूपराः शृङ्गिण एकशृङ्गा इत्येवमादयस्तेषामन्यतम इति। ते हि श्यामास्तूपरा एकरूपाः श्रूयन्ते। तदेषु[9] बहुषु यागेषूपपद्यते, नैकस्मिन्। तस्मात्सप्तदश यागा इति।

प्रयोजनम्—एकस्मिन्नष्टे, दुष्टे, कृत्स्नः पशुगण आवर्तेत। एकमालभ्यमानमन्वालभेरन्[10] पूर्वपक्षेऽदृष्टार्थम्। सिद्धान्त एक एव पशुरावर्तते। न हि कर्मभेदे पशुः पश्वन्तरमाकाङ्क्षतीति[11]॥ २१॥ इति सप्तमं संख्याधिकरणम्॥ ७॥

---

१. ब० संकलपनं। २. ब० अनुमानकल्पना। ३. क० निर्वर्त्यते।
४. ब० अदृष्ट्यापरे। ५. क० पृथक्त्वें निवेशिनी। ६. ब० नैतत्।
७. ब० विशिषंती प्रधानस्य। ८. ब० एतत्पदं नास्ति। ९. ब० तदेतद्बहुषु।
१०. ब० अन्येत्वालभ्येरन् अस्मिन्पक्षे अदृष्टार्थाः। ११. ब० पशुः पशुमाकांक्षतीति।

भा० वि०—प्रयोजनं पूर्वपक्षे सोमविकारेष्वेकस्यैव च ग्रहस्य सकृदनुष्ठानेन च भवितव्यम्। सिद्धान्ते यथाप्रकृतीतिपृथक्त्वनिवेशितत्वात्सङ्ख्यया कर्मभेदः स्यात्। एवमभ्यासभेदनिमित्तभेदापवादभूतायाः पौर्णमास्यधिकरणकृतायाः समुदायानुवादचिन्तायाः अपवादत्वेन येयं चिन्ता अधिकरणत्रयेण कृता तस्यां समाप्तायामपवाद्यद्वारेणाभ्यासचिन्तायाः बुद्धिस्थत्वादभ्यासस्य चासकृच्छ्रवणरूपत्वादिह च सकृच्छ्रुतेरभ्यासप्रत्युदाहरणरूपेण पूर्वपक्षोत्थानात्सङ्गतिः। वृत्तिकारोदाहरणेन तिस्र आहुतीर्जुहोतीत्यादौ कर्मण्येव सङ्ख्याश्रवणात्पूर्वपक्षाशङ्का मन्देति मत्वा विषयान्तरमाह—**अस्तीति**। अत्र प्रजापतिर्देवता अस्येति प्राजापत्य इति तद्धितमुत्पाद्य प्रजापत्यश्च प्राजापत्यश्चेति सप्तदशकृत्व उच्चार्य सरूपैकशेषः क्रियते, किं वा सास्यदेवतेति सर्वनामार्थे तद्धितस्मरणात् प्रजापतिर्देवतैषामिति कृतैकशेषेण सर्वनाम्ना निर्दिश्य तद्धितः क्रियते इत्यनिर्धारणात् संशयमाह—**तत्रेति**। प्रश्नपूर्वकं पूर्वपक्षमाह—**किमिति**। ननु देवताविशिष्टद्रव्याणां यागकल्पकानामनेकत्वात् कथमेकत्वमिति पृच्छति—कुत इति। विमर्शपूर्वकमेकत्वे युक्तिमाह—**प्रजापतय इति**। प्राजापत्यशब्दस्यैकशेषत्वकल्पने तस्यावृत्तिपूर्वकत्वात् केवलप्रत्ययप्रयोगासम्भवेन प्रकृतिनिरपेक्षप्रत्ययावृत्त्ययोगात् प्रकृतिप्रत्ययोर्द्वयोरप्येकशेषकल्पनापत्तेर्गौरवं स्यात्, सर्वनाम्नस्त्वेकशेषकल्पने गौरवानावत्तिरतश्च कृतैकशेषेण सर्वनाम्नाभिहितस्य द्रव्यसमुदायस्य प्रजापतिनैकेन संयोगात् द्रव्यदेवतासंयोगैक्येन यागैक्योपपत्तिरिति न्याय्यमित्यनेनोक्तम्। अनेककल्पनादेककल्पनस्य लघीयस्त्वाच्च कर्मैक्यमित्याह—**यो हीति**। यद्वा ननु प्रागेवानेककल्पनादलपस्याकलिपतत्वेनानुपपत्त्यपरिहारात् कथमनेककल्पनालाभ इत्याशङ्क्यैकादिक्रमेणैव सप्तदशकर्माणि कल्पयितव्यानि तत्र प्रथमेनैव चरितार्थत्वादितरानर्थक्यमित्याह—**यो हीति**।

ननु लघीयस्त्वेऽप्येकस्य यागस्यैकेनैव चरितार्थत्वात् पश्वन्तरानर्थक्यपरिहाराय यागान्तरकल्पनमत आह—**तत्रेति**। वचनवशेन समुदितानामेव साधनत्वकल्पनादिति भावः। कल्पनं श्रवणं केनेति न कोऽपि हेतुरित्यर्थः। न केवलमेवं सत्यनेककल्पनापरिहार एवानेकादृष्टकल्पनापरिहारोऽपीत्याह—**एवं सतीति**।

पूर्वपक्षमुपसंहरति—**तस्मादिति**। सिद्धान्तसूत्रमवतार्य व्याचष्टे—**एवमित्यादिना**। कथं सङ्ख्यया भेदावगतिरित्याशङ्क्य अवयवान्तरं व्याचष्टे—**पृथक्त्वे हीति**। पृथक्त्वेन सहैकार्थनिवेशित्वादिति सूत्रार्थः।

ननु पशुसङ्ख्यया पशुभेदेऽपि कथं कर्मभेदस्तत्राह—**तच्चेति**। ननु बहूनामपि द्रव्याणां समुदितानां प्रजापतिना संयोगस्यैक्यं स्यादिति पृच्छति—**कथमिति**॥ २१॥

॥ श्रीः॥

## अथ सप्तमं संख्याधिकरणम्

त० वा०—गतोऽभ्यासापवादप्रसङ्गः[१]। संख्याया भेद इदानीमभिधीयते। तत्र 'तिस्र आहुतर्जुहोति' 'द्वादश द्वादशानि जुहोति' इत्येवमादय उत्पद्यमानकर्मसामानाधिकरण्यचोदिताः स्वसंख्यायुक्ता उदाहर्तव्याः। सकृज्जुहोतिश्रवणात्कर्मैकत्वे सति, संख्यानुग्रहोऽभ्यासेन भविष्यतीति प्राप्ते।

अभिधातव्यम्। उत्पद्यमानस्यैवात्र होमस्य संख्यासंबन्धः श्रूयते, नोत्पन्नस्य पश्चात् 'एकादश प्रयाजान्' इतिवत्। न च पृथक्त्वेन विना संख्याया आत्मलाभः संभवति। न चाभ्यासपूरिता संख्या समञ्जसा भवति। अगत्या हि सा नियतपरिमाणप्रयाजोपसदादिविषयत्वेनाऽऽश्रयिष्यते। संभवति चात्र प्रागनवधारितसंख्यान्तरत्वात्स्वरूपत[२] एव भेदः। तस्मात्कर्मपृथक्त्वनिवेशिन्येवैषा, नाभ्यासपृथक्त्वाश्रयाऽऽश्रयितव्या। तथा च वक्ष्यति 'आगमेन[३] वाऽभ्यासस्याश्रुतत्वात्' इति।

ननु च जुहोतिशब्दात्प्रथममेको होमोऽवधारित इत्यभ्यासेन पूरणमेव प्राप्नोति। न। जुहोतिशब्दाभिहितस्य कर्मणोऽसत्त्वभूतत्वेनासंख्यत्वात्। या हि तत्र जुहोतिपदे संख्या, कर्तुः खलु सा भविष्यति, न भावनाधात्वर्थयोः। तत्र सकृदाम्नानवशादर्थादेकसंख्यं होममुत्प्रेक्षितुमारभमाण एव स्ववाक्यश्रुतया संख्यया वार्यमाणस्तत्परिच्छिन्नमेवाङ्गीकुर्वन्स्वरूपभेदं सर्वत्र प्रतिपद्यते। तस्मात्कर्मभेद इति।

### भाष्यमतेनाधिकरणरचना

यत्तु भाष्यकारेण 'सप्तदश प्राजापत्यान्' इत्युदाहृतम्। तत्र द्रव्यगताऽपि संख्या कर्मभेदं करोतीत्येतद् दुष्प्रतिपादं प्रतिपादयामीत्यनेनैवाभिप्रायेण। कुतः संशयः ? उच्यते।

किं न्वयं तद्धितान्तानामेकशेषः कृतो भवेत्।
किं वा कृतैकशेषाणां पश्चात्तद्धितसंगतिः॥

यदि प्रजापतिरेतेषां देवतेति कृतैकशेषेण सर्वनाम्ना निर्दिश्य तद्धितः क्रियते, तत एक एव संबन्धः सप्तदशानां द्रव्याणामेकस्याश्च देवताया इत्येककर्मत्वम्। अथ तु प्रजापतिर्देवताऽस्येति प्राजापत्यश्च प्राजापत्यश्चेति सप्तदशकृत्व उच्चार्य प्राजापत्या इति सरूपैकशेषः क्रियते, ततः सप्तदशैव द्रव्यदेवतासंयोगाः पृथक्प्रदर्शिता इति, प्रतिसंयोगं यागानुमानात्कर्मभेदः। किं तावत्प्राप्तम् ? एककर्मेति। कुतः ?

---

१. क० प्रसङ्गविचारः। २. स्वत एव। ३. क० आगमाद। आगमो वा।

प्रत्ययार्थबहुत्वं हि प्रत्यक्षमुपलभ्यते ।
तत्कृतं चैकशेषत्वमिति न प्रकृतौ भवेत् ॥

यो हि प्राजापत्यः प्राजात्यश्चेत्येवमेकशेषं करोति, तेनोभयोः प्रकृतिप्रत्यययोरसावभ्युपगतो भवति। तस्य च निमित्तं बहुवचनान्यथानुपपत्तिः। न च तत्प्रातिपदिके बहुवचनमुपलभ्यते, येन तस्याप्येकशेषः क्रियते। न च तदेकशेषमन्तरेण प्रत्ययार्थस्य दर्शयितुं न शक्यते, विगृह्यमाणवेलायां सर्वनाम्ना कथ्यमानत्वात्। तस्मात्सकृच्छ्रुत एव प्रजापतिर्बहुभिर्द्रव्यैः संबध्यते।

किं च।

कर्माण्यश्रूयमाणानि तदपूर्वाणि चात्र मे।
न कल्प्यानि भविष्यन्ति सिद्धेऽर्थे स्तोककल्पनात् ॥

कृत्वाऽपि तद्धितान्तेनैव[1] चैकशेषम्, न तावन्मात्रेण मुच्यते। पुनरदृष्टाश्रुतानि कर्माणि, अपूर्वाणि च कल्पयितव्यानि। न च तानि यथेष्टं कल्पयितुं लभ्यन्त इत्युक्तं शब्दान्तराधिकरणे। यन्मात्रेण विना चोदितद्रव्यदेवतासम्बन्धानुपपत्तिः[2]। तन्मात्रमेवादृष्टाश्रुतमर्थापत्त्या कल्पयितुं शक्यते, नान्यत्। तेनाभ्यधिकं न लभ्यते। अवश्यं ह्येकादिक्रमेण सप्तदश कर्माण्यपूर्वाणि च कल्पयितव्यानि। तत्र प्रथमकल्पनेनैवानुष्ठानतन्त्रत्ववदगृह्यमाणविशेषत्वात्सर्वद्रव्याणि यागवन्ति जातानीति, नोपरिष्टादुगन्तुं शक्यते।

किं च।

न चान्यभेदेनान्यस्य भेदो भवितुमर्हति।
हृदयाद्यवदानानां न भेदात्कर्म भिद्यते ॥

यदि हि द्रव्यभेदात्क्रियाणां भेदः स्यात्, ततो हृदयादिभेदेन द्व्यवदानभेदेनापि वा भेदः स्यात्। न चार्हति भवितुम्, वक्ष्यति हि—'अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च' इति। प्रकृतौ च कृत्स्ने पशौ यागसाधनत्वेन चोदिते तथैवोत्स्रष्टव्ये प्राप्ते, हृदयाद्येकादशावदानप्रकृतित्वेन पशुना यागः साधयितव्य इति वाक्यान्तरवशादवगम्यते। तेनासौ पशोर्धर्मो, न यागस्य। इहापि सप्तदशानां यागसाधनत्वेऽवगतेऽतिदेशेन प्रत्येकं सर्वधर्माः प्राप्यन्त इत्येकोऽपि यागः सप्तदशावदानगणानतिदेशेन गृह्णन्न विहन्यते। तस्मादेकं कर्मेति प्राप्ते।

उच्यते।

एककर्मत्वपक्षे स्यादेक एवात्र चोदकः।
ततश्चैकगणप्राप्त्या न सर्वपशुसंग्रहः ॥

---

१. क० तद्धितन्ते नैव। २. क० चोदितव्ये देवता।

न ह्येतदेतावत्येव वाक्यं पर्यवस्यति प्राजापत्यान्पशूनिति, किं तर्हि ? प्रकृतिवदित्यपरो वाक्यशेषः । एककर्मत्वे चात्र सवनीयः प्रकृतिर्भवेत् । तत्र चैकोऽवदानगणो यागस्य साधनमासीदिति[1], अत्राप्येक एव प्राप्नोति । सोऽपि विवक्षितैकसंख्यपशुनिष्पन्न आसीदिति, तादृगेव कर्तव्यः । ततश्चैकेनैव पशुना सिद्धत्वान्न पश्वन्तराणि प्रजापतिना सम्बध्यन्त इति, स्वपादोपात्तं बहुत्वम्, वाक्यप्राप्तं च सप्तदशत्वमुभयमपि नानुष्ठीयेत । यदा तु सप्तदश यागा इति बुद्धिः क्रियते, तदा प्रतिकर्मावसायिभिश्चोदकैस्तावन्तः एवावदानगणाः प्राप्यन्ते । तत्सिद्ध्यर्थं चाश्रुतानामपि सप्तदशानां पशूनामागमः क्रियते, किं पुनः ? श्रुतानामुपादानम् ।

ननु च प्रत्यक्षं यागैकत्वमुत्सृज्य, न युक्तमानुमानिकचोदकानुरोधेन नानात्वं कल्पयितुम् । पश्य—

यागोपदेशवेलायामेकानेकत्वकल्पना ।
तद्दर्शनाऽतिदेशश्च नोपदेशस्तदाश्रयः ॥

उत्पत्तिवेलायां हि कर्मणामेकानेकत्वनिर्णयो भवति । उत्पत्तिश्च सर्वत्रोपदेशेन गम्यते, नातिदेशेन । न ह्यनुत्पन्ने कर्मणि कथंभावो भवति । न च तस्मिन्नसत्यतिदेशः प्रवर्तते । तस्माच्चिरप्रवृत्तभेदाभेदज्ञानावसरभावित्वान्नातिदेशवशेन भेदज्ञानं युक्तम् ।

अत्रोच्यते ।

संदिग्धे वाक्यशेषेभ्यो निर्णयः प्राक्समर्थितः ।
सामर्थ्याच्च तदत्रास्ति द्वयं निर्णयकारणम् ॥

नात्रास्माभिरतिदेशेनैव कर्मभेदोऽवधारितः । केन तर्हि ? प्राजापत्यानित्युपदेशेनैव । स तु द्रव्यदेवतायजिसद्भावमात्ररूपेण निर्णीतः । परिमाणं प्रत्यनिश्चितसामर्थ्यविशेषः प्रागुपदिष्टसंदिह्यमानैकशेषतद्धितपौर्वापर्यरूपः सन्नतिदेशात्मकेन वाक्यशेषेण तद्ग्रहणानुरूपसामर्थ्येन च निर्णीयते । यद्यपि च पश्चात्तनोऽतिदेशः । तथाऽपि सोऽत्र भविष्यतीत्यादित एव ज्ञात्वा तदविरुद्धार्थवृत्तित्वमुपदेशस्याध्यवसीयते । ततश्च यद्यपि प्रजापतिर्देवतैषामिति विगृह्य वाक्यार्थोन्नयनं प्रक्रम्यते, तथाऽप्यन्ते विसंवाददर्शनाद् भ्रान्त्या मयाऽसौ विग्रहः कृत इति न बुद्धिपूर्वकारी नाध्यवस्यति । न चात्रैष प्रकारोऽस्ति, येनातिदेश एवं पूर्वज्ञानानुरोधेन प्रवर्तेत । न ह्यसौ प्रकृतावपठ्यमानान्सप्तदशावदानगणानेकस्मिन्कर्मणि[2] ज्ञापयितुं समर्थः । नाप्येकस्यैव गणस्य सप्तदश प्रकृतिद्रव्याणि । न वाऽसौ संदिग्धः येनोपदेशान्निर्णीयेत । न च संदेहावस्थत्वादुपदेशेनैकान्तिकोऽतिदेशस्य विरोधो, येनैकगणप्राप्तिर्बाध्येत । न ह्येककर्मत्वमुपदिष्टम् । सर्वत्र चाविरोधसंभवे विरोधो

१. क० अवदानगणः साधन ।  २. क० अविद्यमानान् ।

नाऽऽश्रीयते। शक्यते चात्र कर्मबहुत्वाभ्युपगमेनाविरोधः सम्पादयितुम्। तस्मादेवमुपदेशवचनं व्यज्यते। प्रजापतिर्देवताऽस्येति विगृह्य सप्तदशानां तन्त्रेणोच्चारणम्। ततश्चाऽऽग्नेयाग्नीषोमीयादिवदेव भिन्नैर्देवतासंयोगैर्भिन्ना यागाश्चोद्यन्ते।

यदुक्तं—भवति पशोरयं धर्म एकादशावदानं[1] नाम। स चैककर्मत्वेऽपि प्रतिपशु भेत्स्यत इति। तदयुक्तम्। कुतः ?

न हि द्रव्यकथंभावादतिदेशोऽत्र कल्पते।
कर्मोद्भूतः कथंभावः कर्मधर्मान्प्रतीच्छति ॥

प्राजापत्यपशुयागेन भावयेत्कथमिति ह्यपेक्ष्यते, न पशुना कथमिति, त्यज्यमानत्वेन द्रव्यस्य ज्ञातप्रकारत्वात्, प्रवृत्तावपि चैकपशुनिष्पन्नैकादशावदानगणसाध्यत्वं यागधर्मो न पशोः, निष्फलत्वात्। तद्धर्मत्वपक्षे ह्यवदानैरसौ संस्क्रियेत। न च तेन[2] प्रयोजनम्, विनाशितत्वात्। यागेन तु सिद्धेनार्थस्तत्सम्बन्धिनाऽपूर्वेण वेति सर्वमिदं तन्निर्वृत्तिप्रकारत्वेनाऽऽश्रीयते। तस्मान्नैका यागोऽनेकगणं समर्थो ग्रहीतुम्। न च तदग्रहेऽनेकपशुग्रहणम्। यद्यपि चावदानप्रकृतेरेकत्वं सप्तदशसंख्यया बाध्यत इति नानापशुनिष्पन्न एक एव गण गृह्यतामिति बुद्धिर्भवेत्, तथाऽप्येकादश पशव उपयुज्येरन्। न सप्तदश **नन्वेकस्मिन्नपि यागे सप्तदशभिरवदानगणैर्यक्ष्यत इति** अनेकादृष्टकल्पनाभयात्पशुशब्देनावदानगणं यागप्रत्यासत्तेर्लक्षयित्वा तत्परिच्छेदार्था सप्तदशसंख्या विधास्यत इति मन्यते। नैतदेवम्, लक्षणाकारणाभावात्। न ह्यसति विरोधे लक्षणा युक्ता। तेनैतत्संकटमापद्यते—सप्तदश पशवः कर्तव्याः, एकेन चावदानगणेनैकपशुनिष्पन्नेनैको यागः साधयितव्य इति। न चैतत्कथंचिदनुष्ठान[3]शक्यम्। अथान्यत्रापि श्रुता संख्याऽन्यत्रापि नीयते, ततोऽपूर्वप्रत्यासन्नतरेषु वरं यागेष्वेव कल्पिता। न चाविरोधसम्भवात्किंचिदपि चोदकस्य बाधनीयमित्युक्तम्। प्रमाणवशाच्चानेकादृष्टकल्पनाऽपि निर्दोषा। कृत्स्नवाक्यगमनिकार्थं शृङ्गीभिप्रायाद्युपन्यासः। एतदुक्तं भवति। ये सप्तदशवर्णादिभेदभिन्नाः पशवः तेषां कश्चित्प्राजापत्यः कर्तव्य इति। तत्राऽऽह—**ते हि श्यामास्तूपरा एकरूपाः[4] श्रूयन्ते। तस्मात्सप्तदश यागा इति।**

प्रयोजनं यद्यपि पूर्वपक्षवादिनो नाभिप्रेतम्, तथाऽप्येकस्यैव साक्षाद्यागसाधनत्वमितरे तत्संख्यासम्पादनार्थमुपादीयन्ते इत्येकस्मादवदातव्यम्। तद्विनाशे चेतरेऽप्यावर्तेरन्। अथवाऽर्धकृतेषु[5] य एव नष्टः, तत्रैव समस्तानामावृत्तिः।

---

१. क० एकदशावदानगणप्रदानं। २. ४ क० तेन संस्कृतेन।
३. क० अनुष्ठातुं। ४. क० एतत्पदंनास्ति। ५. क० संस्कारेषु इत्यधिकम्।

ननु च तथैव सप्तदशसु यागेषु सहक्रियमाणेषु एकविनाशे सति 'अहर्गणे तु यस्मिन्नपच्छेदः[1] इत्यनेन न्यायेनेतरेषु प्रतीक्ष्यमाणेषु स एवाऽऽवर्तते, तथैव द्रव्यसाहित्येऽपि स्यात्। नैतदेवम्। तथाहि—सप्तदशसंख्यैकार्थसमवायिव्यासङ्गि-यागसाधनत्वमिति तादृशस्यैवोपकरणादिभिर्भवितव्यम्। तत्र यदेव द्रव्यं नष्टं, तेनैव विना यथाश्रुतसाधनविनाशो जात इति संस्कारास्तिष्ठत्स्वपि द्रव्येषु साधनात्प्रच्युता इति पुनरादित एव कर्तव्याः। तथा यस्याप्यभिनवानीतस्य ते क्रियन्ते, तस्यापि ते साधनभूतस्य श्रुताः। न च सप्तदशत्वेन विनाऽस्य साधनत्व-मस्तीति तत्सिद्धयेऽवश्यमितरेऽप्यपेक्षितव्या इति।

सिद्धान्ते त्वन्योन्यनिरपेक्षसाधनत्वशक्तियुक्तानां सहप्रयोगमात्रं क्रियत इत्युपपन्ना तन्मात्रावृत्तिः। नन्वेवं सति पूर्वपक्षन्यायेन स्तोत्रशस्त्रेषु, 'तां चतुर्भिरादत्ते' इत्यादिषु चैकमन्त्रविनाशे समस्तावृत्तिः प्राप्नोति। न। तत्र प्रत्येकं साधनत्वे सति वचनेन समुच्चयाश्रयणात्। यत्कुर्वाणा हि ते मन्त्राः स्तोत्रादीनि साधयन्ति, तत्रैषां प्रत्येककाङ्क्षानिवर्तनसामर्थ्यम्। अन्यथा ह्येक-मन्त्रतैव स्यात्। भिन्नैरेव च प्रात्यात्मिकैर्मन्त्रकार्यैः संहत्य कार्यान्तरमारभ्यते, न मन्त्रेषु व्यासङ्गि साधनत्वम्। पशूनां तु व्यासङ्गीत्युक्तम्। मन्त्रकार्याणां तर्हि संहत्यकारित्वादेकविनाशे समस्तावृत्तिः स्यात्। नैतदस्ति साधनविनाश-व्यतिरेकेण कार्यविनाशाभावात्। साधनेष्वेव पुरुषस्य व्यापार इति तद्विनाशा-नुरोधेनैवानुष्ठानमिति विशेषः ॥ २१ ॥

(इति सप्तमं संख्याधिकरणम्) ॥ ७ ॥

**अथ सप्तमं संख्याधिकरणम् ।७॥**

न्या० सु०—संख्यानिमित्तभेदविचारस्याऽभ्यासनिमित्तभेदविचारेण सकृच्छ्रुतेरभ्यास-प्रत्युदाहरणरूपेण पूर्वपक्षोत्थानात्संमतिं दर्शयितुमाह—**गत इति।** प्रासङ्गिकचिन्तायाः सम्बन्धित्वेन प्रसञ्जकचिन्ताबुद्धिस्थकरणसामर्थ्याद्यथा यत्प्रसक्त्या या चिन्ता क्रियते, तत्समाप्तौ प्रसञ्जकचिन्ता बुद्धिस्था भवति, तथापवादकचिन्ता अपि सम्बन्धित्वाविशेषेणाप-वाद्यचिन्ताबुद्धिस्थीकरणसामर्थ्याद्यदपवादेन चिन्ताया चिन्ता क्रियते, तत्समाप्तावपवाद्य-चिन्तापि बुद्धिस्थी भवतीत्यधिकरणत्रयकृतया समुदायानुवादापवादचिन्तया अभ्यासनिमित्त-भेदापवादभूतायाः समुदायानुवादचिन्तायाः पौर्णमास्यधिकरणकृताया बुद्धिस्थीकरणात् तद्द्वारा समुदायानुवादापवाद्याभ्यासचिन्ताया बुद्धिस्थत्वात् तत्सङ्गत्याभिधानोपपत्तिसूचना-याभ्यासनिमित्तभेदापवादानन्तरं तदपवादत्वेन प्रसङ्गो बुद्धिस्थत्वं यस्येति विग्रहाभ्युपगमेना-भ्यासापवादापवादः प्रसङ्गशब्देनोक्तः। सोमयागस्यैकत्वेऽप्यभ्यासेन क्रमसमुच्चयदर्शनो-पपत्तिवत्तिस्र आहुतीरिति त्रित्वसंख्याया अभ्यासेनोपपत्तेर्न कर्मभेदकतेत्यनन्तरोक्ताभ्यासोप-जीवनेन पूर्वपक्षकरणादनन्तरसङ्गतिसूचनायेदानीं शब्दः।

---

१. क० अवच्छेदः।

ननु प्राजापत्यवाक्येऽभ्यासेन पूर्वपक्षाकरणान्नेदानीं शब्दसूचितानन्तरसङ्गतिः सम्भवतीत्याशङ्क्याह—**तत्रेति**। द्रव्यसंख्यानिवृत्त्यर्थं स्वशब्देन कर्मणि परामृष्टे 'समिधो यजतीत्यादिबहुत्वसंख्याया अप्युदाहरणत्वोपपत्तेस्तन्निवृत्त्यर्थम्—**चोदिता इत्युक्तम्**। समिदादिनामधेयस्य देवतायोगनिमित्तत्वा'त्समिधोऽग्नआज्यस्य व्यन्त्वि'त्यादिमन्त्रवर्णप्राप्तदेवता, बहुत्वानुवादोपपत्तेर्न कर्मभेदकतेत्याशयः 'एकादश प्रयाजान्यजतीत्याद्युत्पन्नकर्मसंख्यानिवृत्त्यर्थमुत्पद्यमानत्वविशेषणम्। पार्वणौ [1]जुहोत्याज्यभागौ यजतीत्याद्युत्पद्यमानकर्मगतसंख्यान्तरग्रहणायादिशब्दः। सर्वत्रानन्यपरपुनःश्रुत्या कर्मोत्पत्त्यवगतेर्न प्रमेयानुप्रवेशित्वापत्तिः। सकृच्छ्रुत्या कर्मैक्यावगतेर्विज्ञातसंख्ये कर्मण्येकादशप्रायाजानित्यादिवदनपेक्षितपदान्तरोपात्तसंख्यानिवेशायोगादावृत्तिकल्पनया च संख्यानुग्रहोपपत्तेर्न कर्म भेदे इति वक्ष्यमाणाशयेन पूर्वपक्षमाह—**सकृदिति**।

आख्याते कर्मसंख्यानुपादानाद्वाक्यान्तरश्रुतयागसम्भवे चैन्द्रवायवादिवाक्ये यागकल्पनानुपपत्तिवत्पदान्तरश्रुतसंख्यासम्भवात्स्वपदसंख्याकल्पनानुपपत्तेरनिर्ज्ञातसंख्यत्वात्कर्मस्वरूपे संख्यानिवेशोपपत्तेः। पृथक्त्वैकार्थनिवेशित्वाच्चैकातिरिक्ते संख्याया भेदं विनानुपपत्तेः संख्यापि भेत्रीति वक्ष्यमाणाशयेन सिद्धान्तमाह—**इतीति**। धात्वर्थनामत्वेनाहुतिशब्दस्याहुतीरिति संख्याया धात्वर्थविषयत्वावधारणाद्धात्वर्थमात्रभेदकत्वं होमशब्देन सूचितम्। पृथक्त्वेन विनेत्यनेन यत्र पृथक्त्वं, यत्र निवेश इत्येवं पृथक्त्वैकार्थनिवेशवाचित्वेन पृथक्त्वनिवेशशब्दो व्याख्यातः। यस्त्वभ्यासेन संख्यानुग्रहोऽभिहितः। स न युक्त इत्याह—**न चेति**। कथं तर्हि दशमे पशुपुरोडाशस्यारादुपकारित्वनिरासेन देवतासंस्कारत्वे सिद्धान्तिते, सौत्रामण्यामाश्विनसारस्वतैन्द्रेषु पशुष्वैन्द्रसावित्रवारुणानां पुरोडाशानां पशुदेवतासंस्कारत्वायोगमाशङ्क्य तन्निरासार्थे अभ्यासो वा प्रयोजवदेकदेशोऽन्यदेवत्य १०—१इति सूत्रे तद्यथा पशौ पञ्चानां प्रयाजानां चोदकेन प्राप्तानामेकादशसंख्या विधीयते, सा चान्तरेणाभ्यासं नावकल्पतइत्यभ्यस्यन्ते प्रयाजा इत्यभ्यासेन संख्यापूरणं भाष्यकृद्वक्ष्यतीत्याशङ्क्याह—**अगत्या सा हीति**। इह त्वनिर्ज्ञातसंख्यत्वात्स्वरूपभेदोपपत्तेर्नागतिरस्तीत्याह—**सम्भवति चेति**। तु शब्दार्थे चशब्दः। एतदेवोपसंहरति—**तस्मादिति**। अत एवैकविंशेनातिरात्रेण प्रजाकामं याजयेदित्यादिस्तोमवृद्धावागमेन संख्यापूरणं दशमे वक्ष्यते इत्याह—**तथा चेति**। पूर्वपक्षाशयं विवृणोति—**ननु चेति**। सिद्धान्ताशयं विवृणोति—**नेति**। निष्पन्नरूपत्वेनाप्रतीतिः असत्वम्। ननु तिङ्वाच्यायाः संख्यायाः सुब्वाच्यसंख्यावत्प्रकृत्यर्थविषयत्वावगतेः कथं धात्वर्थस्यासंख्यतेत्याशङ्क्याह—**या हीति**। तिङ्वाच्यायाः संख्यायाः प्रकृत्यर्थविषयताया स्मृत्याचारविरोधान्नानुमातुं शक्येत्याशयः। भावनाग्रहणं दृष्टान्तार्थम्। ननु तिङ्वाच्यस्यैकत्वस्य धात्वर्थगामित्वाभावेऽपि निः संख्यधात्वर्थानुष्ठानाशक्तेः संख्यापेक्षायां सकृच्छ्रुत्यैकत्वावगतेर्न पदान्तरोक्तसंख्याश्रमणं युक्तमित्याशङ्क्याह—**तत्रेति**। सिद्धान्तमुपसंहरति—**तस्मादिति**।

---

१. पार्वणं जुहोतीति ३ पु० पा०।

कर्मसंख्यानुदाहार्यत्वे कस्माद्भाष्यकृता द्रव्यसंख्योदाहृतेत्याशङ्क्याह—**यत्त्विति**। तत्रेति सन्देहभाष्यं यागकल्पकप्राजापत्यशब्दार्थभूतदेवताविशिष्टद्रव्यसप्तदश्यात्कर्मसाप्तदश्यप्रतीतेः पूर्वपक्षायोगेनाक्षिपति—**कुत इति**। 'सास्य देवतेति' सर्वनामार्थे तद्धितप्रवृत्तेः सर्वनाम्नश्च सन्निहितपशुपरामर्शित्वात्पशुशब्दस्य बहुवचनान्तत्वेनैकशेषत्वावधारणात्तत्परामर्शित्वसिद्धये सर्वनाम्नोऽप्यस्य चास्य चेति सप्तदशकृत्व उच्चार्यैषामिति सरूपैकशेषं कृत्वा प्रजापतिर्देवतेति देवतासम्बन्धे प्राजापत्य इति तद्धितः कार्यः। सन्निहितपरामर्शित्वेऽपि वा सर्वनाम्नस्तद्धितान्तपदान्तर्गतत्वेन बहुवचनान्वयात्प्रागपरिपूर्णे तद्धितान्ते पदे पदान्तरान्वयायोगात्पशुशब्दगतबहुवचनालोचनेनैकशेषाप्रतीतेः। पशुशब्दस्य च तद्धितविषयसमर्पकत्वेन के प्राजापत्या इत्यपेक्षायासन्वयात्तद्गतस्य बहुवचनस्य प्राजापत्यशब्दगतबहुवचनोक्तसंख्यानुवादित्वावगतेः, सर्वनाम्नस्तद्वशेनैकशेषत्वकल्पनायोगात्तद्धितान्तानामेव शब्दानामेकशेषत्वं न सर्वनाम्न ( इति सर्वनामैकशेषत्वसदसद्भावसन्देहे तत्द्रव्यदेवतान्वयभेदाभेदसन्देहात्कर्मभेदाभेदसन्देहमुपपादयितुमाह—**उच्यत इति**। यो बहुवचनान्यथानुपपत्त्यैकशेषः कथ्यते किमयं तद्धितान्तानां प्राजापत्यशब्दानामेव कृतः, स न युक्तो भवेन्न तु सर्वनाम्नः[1] ) कार्य इति सिद्धान्तवचनव्यक्तिः कृतैकशेषाणां वा सर्वनाम्नां पश्चात्कृतेन तद्धितेन देवतासङ्गतिरिति पूर्वपक्षवचनव्यक्तिरितरेतरयोगाख्यचार्थस्मृतद्वन्द्वापवादत्वेनैकशेषस्येतरेतरयोगवाचित्वावगतेरितरेतरयोगिनां चेतरेतरसापेक्षत्वेनासामर्थ्यापत्तेरेकशेषे कृते तद्धितानुपपत्तिप्रसङ्ग इति पूर्वपक्षदूषणसूचनार्थं पश्चादुक्तवचनव्यक्तिद्वयस्य प्रातिलोम्येन पूर्वसिद्धान्तपक्षोपयोगितामाह—**यदीति**। सप्तदशानामित्यनेन पशुसमूहस्य द्रव्याख्यसम्बन्ध्यैक्ये सम्बन्धैक्यसिद्धयेऽभिहिते द्रव्यैक्येऽपीन्द्राय रथन्तरायेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय रैवतायेन्द्राय शाक्वरायेतिवद्देवताभेदे सम्बन्धभेदापत्तेस्तच्छङ्कानिरासाय—**एकस्याश्चेत्युक्तम्**। कुक्कुटावानय मिथुनं करिष्याम इत्यादिविरूपैकशेषस्यार्थप्रकरणसापेक्षत्वाद्विलम्बेनावगतेः शीघ्रप्रतीतिसूचनार्थः सरूपशब्दः।

किं तावदिति पूर्वपक्षप्रतिज्ञाभाष्यं व्याचष्टे—**किं तावदिति**। ( कृत इत्यादिभाष्येण प्रश्नजिज्ञासोपन्यासपूर्वं सप्तदशपशुसमूहस्यैकदेवतासङ्कल्पेनोपपत्तिं यागैक्ये हेतुत्वनोक्तामुपपादयितुमाह—**कुत इति**[2]। ) विग्रहवाक्यस्य तद्धितपदार्थकथनार्थत्वाद्विग्रहवाक्यस्थसर्वनामपरामृष्टस्य पशुशब्दार्थस्य तद्धितप्रत्ययार्थत्वावगतेः पशुशब्दस्थेन बहुवचनेन तद्धितप्रत्ययार्थस्य पशुद्रव्यस्य तद्धितोत्पत्तेः प्राग्विग्रहवेलायामेव बहुत्वोपलम्भात्प्राजापत्यशब्दस्थस्य बहुवचनस्य तदनुवादित्वोपपत्तेस्तद्धितान्ते प्राजापत्यशब्दे बहुवचननिमित्तैकशेषत्वकल्पनायोगात्सर्वनाम्नामेवैकशेषः कार्यो, न तद्धितान्तानामेवेत्याशयः। प्राजापत्यशब्दस्य चैकशेषत्वकल्पने तस्यावृत्तिपूर्वकत्वात्केवलप्रत्ययप्रयोगासम्भवेन प्रकृतिनिरपेक्षतद्धितमात्रवृत्त्ययोगात्प्रकृतिप्रत्यययोर्द्वयोरप्येकशेषकल्पनापत्त्या गौरवं स्यात् सर्वनाम्नस्त्वेकशेष-

---

१. अयं पा० ३ पु० ना०।  २. अयं पा० ३ पु० ना०।

आह। मन्त्रस्य तावदविधायकत्वाल्लिङ्गवच्छ्रुतितो दौर्बल्यं भवेत्। चतुर्थीतद्धितयोस्तु को विशेष इति वक्तव्यम् ? तदुच्यते।

देवतासंगतिः श्रुत्या तद्धितान्तात्प्रतीयते।
चतुर्थ्यन्तात्तु वाक्येन पदद्वयसमीपतः॥

वैश्वदेवीति हि श्रुत्यैव देवतासम्बन्धः प्रत्यायितः[1]। इतरत्र तु 'वाजिभ्यो वाजिनम्' इति पदद्वयसामीप्याद्गम्यते।

नन्विहाप्यामिक्षापदसंनिधानवशेनैव द्रव्यदेवतासम्बन्धः प्रतीयत इति तुल्यं वाक्यगम्यत्वं भवेत्। अथ वैश्वदेवीति श्रुत्या देवतात्वम्, वाक्येन द्रव्यसम्बन्धः, स इहाप्यविशिष्टः। चतुर्थीश्रुत्या देवतात्वेऽभिहिते, वाक्येन द्रव्यसंगतिमात्रकरणात्। अथ द्रव्यमात्रसम्बन्धे तद्धितान्तेनैव कृते विशेषमात्रमामिक्षापदसंनिधेर्भविष्यतीत्युच्यते। तदप्यविशिष्टमितरत्रापि। वाजिभ्य इत्येकपदेनैव सम्प्रदानं ब्रुवता सम्प्रदेयाद्विना तदनुपपत्तेः सामान्याक्षेपे सति वाजिनपदसंनिधानेन विशेषमात्रप्रतीतेः। अपि च भवतु नाम तद्धितश्रुतेर्द्रव्यमात्रसम्बन्धः। तत्र द्रव्यमात्रं वाजिनेऽप्यविशिष्टमिति न विरुध्यते। विशेषयोस्त्वमिक्षावाजिनयोर्विरोधः। तयोश्चोभयत्र वाक्यलभ्यसम्बन्धत्वादविशेषः। तेन विकल्पः प्राप्नोत्येव।

तदुच्यते।

नैव हि द्रव्यमात्रस्य तद्धितैर्देवतोच्यते।
अस्य शब्दाभिधेयस्य विशेषस्यैव देवता॥

विश्वेदेवा देवताऽस्या इति हि न सर्वनाम्ना द्रव्यसामान्यमभिधीयते। किं तर्हि, संनिहितो विशेषः, स एव व्यवहारक्षमो नानिरूपितं द्रव्यमात्रम्। अतः प्रातिपदिकेन योऽर्थ उपात्तः स प्रमाणान्तरगम्यस्य द्रव्यविशेषस्य देवतेत्येतत्तद्धितेन श्रुत्यैवोच्यते। ततश्चान्तर्णीतसम्बन्धदेवतोपसर्जनद्रव्यविशेषप्रत्यये पदान्तरनिरपेक्षेण तद्धितान्तेन पदेन निर्वर्तिते, कः पुनरसौ द्रव्यविशेषो यस्य तद्धितेन देवतोक्तेत्यन्वेषणायामयमित्यामिक्षापदेनोपनीयते। तत्र तदा तावत्प्रागेव विशिष्टप्रत्ययात्सम्बन्धोऽभिहितः। तदा न लक्ष्यमाणो भवति। अथापि प्रकृतिप्रत्यययोः स्वार्थवृत्तयोरेव नैरन्तर्यादन्तराले सम्बन्धोऽवगम्यमानो भवति। तथाऽप्यत्रैकपदस्थत्वात्पदद्वयसंनिधिगम्याद्बलीयान्विज्ञायमान श्रौत इत्युच्यते। तेनैतौ द्वौ सम्बन्धावेको द्रव्यदेवतासम्बन्धः। परो विशेषणविशेष्यभावः। तत्र पूर्वः श्रौतः। उत्तरो वाक्यलक्षण इति विशेषः।

---

१. क०प्रत्यायितः।

अतश्च नैवात्र नीलोत्पलादिवदर्थद्वारं वैश्वदेव्यामिक्षाशब्दयोर्विशेषणविशेष्यत्वम्, किं तर्हि ?

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।
आमिक्षापदसांनिध्यात्तस्यैव विषयार्पणम् ॥

नवात्र तद्धितान्तेनैकोऽर्थोऽभिहितः, आमिक्षापदेनान्यः। पश्चात्तयोर्विशेषणविशेष्यता, तद्धितान्तवाच्यस्य प्रथमप्रतीतेः। किं तर्हि तद्धितान्तस्यानुपयुक्तानभिधानशक्तेरेव प्रतीक्षमाणस्योपपदेन विषयदानमात्रं क्रियते। तेनाऽऽमिक्षापदसंनिधिबलाद्वैश्वदेवीशब्द एव तामभिधत्ते। न चेदानीमामिक्षापदस्यानुवादत्वम्, तेन विना तद्धितान्तस्य तद्विषयत्वाप्रतीतेः। न च वाक्यार्थत्वम्, तद्धितान्तपदार्थस्य पृथगप्रसिद्धेः। न हि द्वौ स्वतन्त्रौ पदार्थावगृहीत्वा वाक्यार्थः प्रतीयते। तेनाभिधेयोपनयनमात्रकारित्वान्न तद्धितश्रुतेरामिक्षापदेनार्थविप्रकर्षः क्रियते। तथा चाऽऽह।

'श्रुत्यैवोपपदस्यार्थः सर्वनाम्नाऽभिधीयते।
तदर्थस्तद्धितेनैवं त्रयाणामेकवाच्यता ॥ इति।

तेन यैवाऽऽमिक्षा, सैव देवतासम्बन्धं यास्यतीत्येवमुक्ता सती वैश्वदेवीशब्दे नोच्यते। तेन शब्दयोरेवात्र सामानाधिकरण्यम्, नार्थयोः। इतरत्र तु—

न प्रातिपदिकेनोक्तं न विभक्त्या हविः स्वतः।
न वास्य देवतायोग इति वाक्यात्प्रतीयते ॥

वाजिभ्य इति तु नात्र प्रातिपदिकेन, विभक्त्या, वोभाभ्यां वा द्रव्यसामान्यविशेष, तत्सम्बन्धानामन्यतममप्यभिधीयते। किं तर्हि प्रातिपदिकार्थः सम्प्रदानमित्येतावन्मात्रमित्युक्तम्। तत्र न कथंचिद् द्रव्यसम्बन्धः पदेऽन्तर्गत इत्यवश्यं वाक्येनैव वाजिनपदसामीप्यात्प्रत्यययायितव्यः। अपि च।

यथेहास्यपदार्थोऽपि[1] तद्धितेऽन्तर्गतः स्मृतः।
न सम्प्रदानमस्येति चतुर्थ्येवं विधीयते ॥

### श्रुतिवाक्ययोर्यथाश्रुतार्थपरतया व्याख्या

'साऽस्य देवता' इति अस्य पदार्थे देवतातद्धितो विधीयते, नत्वेवं तत्सम्प्रदानमस्येति चतुर्थी विधीयते, येनास्य पदार्थोऽप्युपादीयेत। किं तर्हि ? सम्प्रदानमात्रमेव तदभिधेयत्वेनोक्तम्। तथा च प्रतीयते। तेन त्वन्यथानुपपद्यमानेन सम्प्रदेयविषयमाकाङ्क्षामात्रं केवलमुत्पाद्यते। न चैतावताऽभिधेयत्वं भवति,

---

१. क० यथेहान्यपदार्थोऽपि।

सर्ववाक्यार्थानां पदार्थत्वप्रसङ्गात् । अकाङ्क्षया त्वेतावत्क्रियते । येन पदान्तरोच्चारणे सति सम्बन्धी जायते । निराकाङ्क्षत्वे पुनः सोऽपि न स्यात् । तेन यद्यपि चतुर्थीश्रुत्या देवतात्वमुक्तम्, तथाऽपि द्रव्यसम्बन्धो वाक्येनैव । तत्र चास्माकं विवाद इति, दुर्बलो वाजिनसम्बन्धः ।

**श्रुत्यर्थ-वाक्यार्थयोस्संनिकृष्टत्वविकृष्टत्वाभ्यां प्रबलाबलनिरूपणम्**

किं च ।

श्रुत्यर्थः संनिकृष्टत्वं वाक्यार्थो विप्रकृष्टता ।
विप्रकृष्टप्रकारोऽतः सर्व एव प्रपञ्च्यते ॥

सर्वप्रकारमामिक्षासम्बन्धस्य संनिकर्षलक्षणं श्रौतत्वम् ।

वाजिनसम्बन्धे च विप्रकर्षाद्वाक्यीयत्वम् । तद्यथा यद्यपि तावद् द्रव्यविशेषणस्य तद्धितो न ब्रूयाद्देवतात्वं, तथाऽपि सामान्यस्य तावद् ब्रवीति, न चतुर्थ्यन्तेनं सामान्यमप्युच्यत इति विशेषः । यत्तु सामान्यं वाजिनेऽप्यविरुद्धमिति, तदयुक्तम् । वैश्वदेवीति हि स्त्रीप्रत्ययेन समानपदगतेनैव स्त्रीद्रव्यं किमपि संनिहितमित्यवधार्यते । न च वाजिनस्य स्त्रीत्वम्, संनिधिर्वाऽस्तीत्यनाश्रयणम् । अपि च ।

वाजिभ्यो वाजिनं कुर्यादिति नैवास्ति संगतिः ।
तत्र तत्सिद्धयेऽवश्यं दानाध्याहारकल्पना ॥

कर्तव्यतावचनमामिक्षावाक्येऽप्यध्याहारात्, प्रयोगवचनाद्वा लब्धव्यमिति, न पर्यनुयुज्यते । 'वाजिभ्यो वाजिनम्' इति तु ददातिमनध्याहृत्य न शक्यः सम्बन्धः प्रत्येतुं, यथा वैश्वदेव्यामिक्षेति । कुतः ?

नाम्नां द्विधैव सम्बन्धः सर्ववाक्येष्ववस्थितेः ।
सामानाधिकरण्येन षष्ठ्या वा प्रतिपाद्यते ॥

**संक्षेपेणोक्तस्यार्थस्य विस्तरेण व्याख्यानम्**

न चात्र सामानाधिकरण्यं, षष्ठीं वा[1] पश्यामः । न च वाजिभ्य इति कारकविभक्तिः क्रियापदादन्येन सम्बध्यते । न चेह तदुपात्तम् । तत्राध्याहारकल्पनादेको विप्रकर्षः । त्रिपदसम्बन्धगौरवादपरः । इतरत्रापि यजिकल्पनादविशेष इति चेत् ? न । तस्य सम्बन्धोत्तरकालानुमेयत्वात् । वैश्वदेव्यामिक्षेति हि निष्पन्ने सम्बन्धे यजिरनुमीयते, न तदधीना सम्बन्धप्रतीतिः । तव तु परस्वत्वापादनासम्भवात्स च भविष्यत्यर्थसम्बन्धार्थम् । आदितश्च द्रव्यदेवतापदैकवाक्यत्वसिद्धये ददातिरिति विशेषः । कल्पिते च ददातौ कारकयोः परस्परसम्बन्धा-

---

१. १क० षष्ठीं च ।

भावात् तेन तावत्सह सम्बन्धः। तत एकार्थत्वात्परस्परनियम इति विप्रकृष्टता। न त्वामिक्षायां तद्विंत्किचिदिति संनिकर्षः। सत्यपि च वाजिवाजिनयोः साक्षात् सम्बन्धे वैयधिकरण्याद्विप्रकृष्टत्वम्। वैश्वदेव्यामिक्षेति तु सामानाधिकरण्यात्संनिकृष्टता। तथा च वक्ष्यति 'समर्थतराणि हि समानविभक्तीनि भवन्ति दुर्बलो विविभक्तिरिति'।

किं च।

सम्प्रदानत्वमात्रं चतुर्थी वाजिनां वदेत्।
देवता लक्ष्यमाणा तु पुनर्दूरेण वाजिने॥

न हि तद्धितवद्देवतायां चतुर्थ्युत्पत्तिः स्मर्यते। क्व तर्हि ? सम्प्रदाने। न च सम्प्रदानस्यैव देवतात्वं, मा भूत् 'हिरण्यमात्रेयाय ददाति' इत्यत्राऽऽत्रेयो देवता। यदि च देवतासम्प्रदानं स्यात्, ततो यागदानयोरभेद एव स्यात्। प्रतिग्रहे व्यापृतं च कारकं सम्प्रदानं भवति। न च देवतायाः प्रतिग्रहीतृत्वं सम्भवति। तेनावश्यं यः सम्प्रदानत्वात्प्राग्भावी तदुद्देशः चतुर्थ्या लक्षयितव्यः।

यद्वा परस्वत्वापादानसम्बन्धोत्तरकालभाव्यैश्वर्यम्, तादात्म्यप्रसिद्धेर्देवतात्वस्य। यद्यप्यनिराकरणात्मकसंप्रदानमेव देवतेत्यभ्युपगमः तथाऽपि सामान्येन व्यभिचारिविशेषलक्षणाद्विप्रकृष्टत्वम्।

अपि च—

चतुर्थीपञ्चमीरूपसंदेहाद्विप्रकृष्टता।
तद्धितस्य त्वसंदेहान्न बुद्धिर्विप्रकृष्यते॥

वाजिभ्य इति रूपसामान्यात्प्रसक्तं सद्यावत्पञ्चमीत्वमपनीय, चतुर्थीत्वं साध्यते, तावन्मतिविक्षेपः। ननु तद्धितेऽप्यनेकापत्याद्यर्थसंदेहात्तुल्यमेतत्। विषम उपन्यासः। शब्दसंदेहो मयोपन्यस्तः, त्वयाऽर्थसंदेहः। सर्वथा तावत्तद्धितत्वमसंदिग्धम्। अर्थः पुनर्योग्यत्वादितरासंभवेन देवतात्मको निर्णेष्यते। भवतस्तु निर्णीतेऽपि शब्दे चतुर्थ्यर्थानेकत्वादुपपदकारकलक्षणसंदेहादस्त्येव विप्रकर्षः। तेनार्थसंदेह उभयोः समत्वान्नैकश्चोद्यते। शब्दसंदेहस्त्वसाधारणत्वाच्चोदितः।

किञ्च—

आमिक्षोत्पद्यमानेन कर्मणा सह युज्यते।
ततो वाक्यान्तरोपात्तमुत्पन्नेन तु वाजिनम्॥

यथा चोत्पत्तिशिष्टस्य बलीयस्त्वं, न च क्रियामात्रं निष्कृष्य गुणान्तरं विधातुं शक्यते। तथोक्तं चित्राधिकरणे वैश्वदेवाधिकरणे च। वैश्वदेवाधिकरणन्यायेन च प्रकरणमपेक्षितव्यमपरं वाजिनवाक्येन।

कुतः ?

द्रव्यदैवतसंबन्धा[1] यागमात्रमपेक्षते ।
आमिक्षायाग एवेति तत्र प्रकरणाद्भवेत् ॥

वाजिनं हि विना यागेन वाजिभिर्न संबध्यत इति कञ्चिद्यागमपेक्षते तत्र यदामिक्षायागस्यैव तदप्यङ्गमिति कल्प्यते, तत्प्रकरणात् । ततश्च यद्यपि वाक्येनैवाऽऽमिक्षायागे विश्वे देवा विधीयन्ते, तथाऽप्यन्यनिरपेक्षविहितत्वादामिक्षायाः प्रकरणसापेक्षवाक्यविहितांद्वाजिनाद्बलीयस्त्वं भवेदिति विशेषः । प्रकरणानपेक्षयागसंबन्धे चान्येषामिहाप्रतीरेतपूर्वयागः संबन्धी भवतीति भेदः । न चैवमादीनामनुपात्तपुरुषव्यापाराणामननुमिते यागे वाक्यान्तरापेक्षाऽस्तीत्युक्तमाग्नेयादिषु ।

**रूढिर्योगाद्बलायसीति निरूपणम्**

विश्वे देवाश्च रूढ्यैव संबध्यन्ते पयस्यया ।
वाजिनेन तु संबन्धो भवेदवयवानुगः ॥

वाजिन इति ह्यवयवप्रसिद्ध्या विश्वे देवाः प्रत्याय्यन्ते । वाक्यार्थवच्चावयवार्थौ समुच्चित्य संबन्धं कल्पयित्वा सा भवन्ती श्रुतिमात्रोपनिपातलभ्यायाः समुदायप्रसिद्धेर्दुर्बला भवतीति, दुर्बलतरः संयोगो वाजिनस्य ।

वाजिशब्दोऽपि वाऽश्वादौ सुनिरूढः स्वभावतः ।
क्लेशेनैव विना कार्याद्विश्वदेवेषु[2] वर्तते ॥

देवतात्वं नाम यस्यैव शब्दनोक्तम्, तस्यैत योगस्यायोग्यस्य वा भवतीति, न जातिनिमित्तम्, येनायं वाजिशब्दो बलादन्यत्र नीयते । अतश्च वाजिशब्दोऽश्वानां देवतात्वं वदन्विता कार्येण दुर्बलयाऽवयवप्रसिद्ध्या विश्वदेवेषु[3] कल्प्यते—इति विप्रकर्षः ।

**उभयोरतुल्यबलत्ववर्णनम्**

सत्यप्यवयवार्थे च वाजिन्यन्याऽपि देवता ।
पुरोडाशादिनेत्येवं क्लेशात्प्रकृतनिश्चयः ॥

सर्वे ह्यग्न्यादयः पुरोडाशादिभिरन्नैर्वाजिनो विज्ञायन्ते । तत्राऽऽमिक्षायां तावदन्नशब्दः प्रयुक्तः, न पुरोडाशादावित्येकः क्लेशः । पुनरपि चाऽऽमिक्षामात्रग्रहणे सति वैश्वदेव्यामिक्षयैव तद्वतां ग्रहणमित्यपरः । ततश्च स्वरसेन श्रुतिरन्यत्रापि वर्तमाना सती प्रकरणेनैव विशेषे स्थापयितव्या । न च तत्र किञ्चिन्निमित्तमस्ति । गुणभावेनोपादीयमानत्वाद्देवतायाः । संस्कार्यत्वे च 'व्रीहीन्प्रक्षति' इत्यादिष्विव कथञ्चिदपूर्वसाधनलक्षणायां[4] प्रकृतग्रहणं भवेत् । न चात्र तदस्ति,

---

१. क० संयोगो, २. क० विश्वेदेवेषु ।
३. क० विश्वेदेवेषु, ४. क० लक्षणया ।

विनाऽपि तेन कर्मणः प्रयोजनवत्त्वोपपत्तेः। कामं वाजिनस्यैव प्रतिपत्तिः संस्कारो भवेत् न देवतायाः, प्रकृतग्रहणे चाग्न्यादीनां सद्भावादनवधारणम्।

अथ विश्वदेवेषु सर्वे संगृहीता भविष्यन्तीति तेषां ग्रहणम्। तदयुक्तम्। सर्वसंग्रहस्याप्रमाणकत्वात्। बहुवचनश्रुत्या सर्वग्रहणमिति चेत्? न। तस्य त्रिष्वेव चरितार्थत्वात्। न च त्रिष्ववधारणज्ञानमिति चेत्? न। 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इत्यवधारणहेतुसद्भावात्। तस्मान्न विश्वदेवग्रहणे किञ्चित्प्रमाणम्। साकाङ्क्षा च देवता द्रव्येण संबध्येत्। सा चात्र वाजिशब्देन द्रव्यवत्येवोपादीयमाना[1] निराकाङ्क्षेव प्रत्यायितेति, च द्रव्यान्तरसंबन्धं क्षमते। तस्मादतुल्यबलत्वम्।

**आवाहनादिनिगमेषु देवतावाचकपदनिवेशेऽनियमइत्याद्यनेकदोषवर्णनम्**

किं च।

श्रुत्यैव समवायित्वं देवतानां स्वकर्मसु।
विश्वदेवश्रुतिस्तत्र वाजिशब्देन दुर्लभा॥

यदि हि वाजिनयागेऽपि विश्वे[2] देवा एव देवतात्वेनाभ्युपगम्यन्ते, ततोऽवश्यं निगमस्थानेषु विश्वदेवश्रुतिरेवोच्चारणीया। सा चात्र विधिशब्देऽनुच्चारितत्वादशक्या लब्धुम्। तत्रैवं क्लेशेन लभ्यते। वाजिशब्दः किञ्चिदर्थं वदति। सोऽपि रूपासमवायाद्विश्वदेवशब्दं लक्षयति। ततोऽसौ वाजिनत्यागवेलायामुच्चार्यमाणत्वेन विधीयत इति क्लेशः। तत्रापि चार्थेन शब्दलक्षणायामविशेषात्सर्वे देवा निःशेषा देवा इत्यादयः सर्वे पर्यायाः प्राप्नुवन्तीति, विश्वदेवशब्दो दुर्लभः। न चान्यशब्दोच्चारणे, तेषां देवतात्वं भवति। विधिशब्दस्य मन्त्रत्वे भावः' इति वक्ष्यति। वाजिनशब्द[3] एवात्र पुरुषः शास्त्रेण प्रवर्तित इति, तदुच्चारणेनैव वाजिनस्य देवता सम्पादनीया। ततश्च यद्यपि विश्वदेवार्थ एवेह वाजिशब्देनोच्यमानो देवता भवति, इतरत्र विश्वदेवशब्देन, तथाऽपि महेन्द्रन्यायेन विनियोगभेदाद्विस्पष्टं देवतापृथक्त्वमित्यपरोऽयं द्रव्यदेवतासंबन्धो[4] विज्ञायते। न च प्राप्ते कर्मण्यनेकार्थगुणविधानं संभवतीत्युपपन्नमेतत्, गुणश्चापूर्वसंयोगे भेदक इति॥ २३॥

( इति नवमं गुणाधिकरणम् ) ॥ ९॥

**अथ नवमं गुणाधिकरणम् ॥ ९ ॥**

न्या० सु०—संज्ञावद् गुणस्यापि पूर्वकर्मनिवेशानर्हत्वेन भेदकत्वाद् गुणचिन्तायाः संज्ञाचिन्तानन्तरं सङ्गतिमाह—अत इति। वाजिनवाक्यमेवाधिकरणस्य विषयः।

---

१. क० द्रव्यइत्येव, २. क० विश्वदेवा, ३. क० वाजिशब्द एवात्र।
४. क० संयोगीविधीयते।

प्रतियोगियागविधायित्वेन तु वैश्यदेवीवाक्यम्, दध्यानयसंस्कृततत्पयः परामर्शितच्छब्द-व्याख्यानार्थं च तत्तवाक्यमुपन्यस्तमिति विवेक्तुमाह—**चातुर्मास्येष्विति।** सन्देहभाष्यं व्याचष्टे—**तत्रेति।** देवताया अप्यप्राप्यत्वादुभयविधिः कस्मान्न पूर्वपक्षित इत्याशङ्क्याह—**तत्रेति।** तस्माद्युक्तं सन्देहभाष्यमित्याह—**तेनेति।** पूर्वपक्षप्रतिज्ञाभाष्यं व्याचष्टे—**किमिति।** वाजिनामप्यप्राप्तेर्विधेयत्वावगमात्प्राप्ते च कर्मण्यनेकगुणविध्ययोगान्न पूर्वत्र गुणविधिः सम्भवतीत्याशयेन प्रश्नपूर्वं कुत इत्याशयेन पूर्वं कुत इत्यादिपूर्वपक्षभाष्यं व्याचष्टे—**कुत इति।** नन्वेवं देवताप्रतीतावपि कर्माप्रतीतेः कथं तत्र द्रव्यविधिरित्याशङ्क्य, द्रव्यदेवतान्वयस्य कर्मनिबन्धनतयैवावगतत्वाद्विश्वेदेवामिक्षान्वयानुमितं कर्मापि वाजिशब्दादेव प्रतीयतइत्युक्तम्। तस्मादिह पूर्वविहिते कर्मणि वाजिनविध्युपत्तिरित्युपसंहारः। ननु वाजिशब्दस्य रूढ्या देवताविशेषवाचित्वान्नावयवयोगकल्पना युक्तेत्याशङ्कां निरस्यन् श्लोकं व्याचष्टे—**वाजिनो नामेति।**

नन्वेकस्मिन्कर्मणि गुणद्वयसमावेशः कथमित्याशङ्कानिरासार्थं तेनोभयमिति भाष्यं द्वेधा व्याचष्टे—**तस्मादिति।** वाजयोगस्य देवताविशेषणत्वे वाजिदशब्दादामिक्षान्वयापरित्यागेनैव वाजिनान्वयावगतेः समुच्चयः। उपलक्षणमात्रत्वे तु वाजिविधावामिक्षान्वयाप्रतीतेरन्योन्यनिरपेक्षैकार्थ्याद्विकल्प इत्याशयः। ननूत्पत्तिशिष्टबलीयस्त्वस्य वैश्वदेवाधिकरणे स्थितत्वादुत्पत्तिशिष्टामिक्षावरुद्धे यागे वाजिनविध्यनुपपत्तेर्न विकल्पः, समुच्चयो वा युक्त इत्याशङ्क्याह—**सत्यपि चेति।** वैश्वदेवशब्दवत् वाजिनशब्दस्य नामधेयत्वायोगाद् गुणविधित्वं विनानर्थक्यापत्तेर्वाजमेषामस्तीति च सर्वनामार्थवृत्तिना वाजिशब्देन देवताद्वारा सन्निहितयागोपस्थापनात् गुणविशिष्टकर्मान्तरविध्यनुपपत्तेरामिक्षानिराकाङ्क्षेऽपि सोमक्रये हिरण्यादिविधिवत्सम्भवतीति स्पष्टत्वादनुक्त्वा विकल्पोपपादनार्थं निष्कर्षोक्तिः।

ननु क्रयवद्यागस्येह स्वशब्दानुक्तत्वाद् द्रव्यदेवतानुमितत्वं च। ततो निष्क्रष्टुमशक्यत्वान्न निष्कृष्टे यागे गुणान्तरविधिः सम्भवतीत्याशङ्क्याह—**यद्यपि चेति।** द्रव्यदेवतानुरक्तत्वेनाप्यनुमितस्य यागस्य क्रियारूपतया कारकरूपाभ्यां द्रव्यदेवताभ्यां निष्कर्षः सम्भवतीत्याशयः। ननु सत्यपि व्यतिरेके वैश्वदेवीशब्दाच्छुद्धयागाप्रतीतेरशब्दावगतस्य च शाब्दवाजिनान्वयायोगान्न तस्मिन्वाजिनविधिः सम्भवतीत्याशङ्क्याह—**यागेति।** वैश्वदेव्यामिक्षाया यजेतेति श्रुतानुमितैकदेशनिष्पन्ने वाक्ये शुद्धयागवाचिपदानुमानाच्छब्देनापि निष्कर्षः सम्भवतीत्याशयः। नन्वेवं वैश्वदेवीवाक्ये निकृष्टयागोक्तावपि वाजिशब्देन निष्कृष्टाननुवादान्न तत्र वाजिनविधिः सम्भवतीत्याशङ्क्याह—**वाजीति।** तत्रापि वाजिदेवत्यो यो यागस्तत्र वाजिनं कुर्यादिति निष्कृष्टयागवाची शब्दोऽनुमीयत इत्याशयः। तेन पूर्वपक्षोपसंहारभाष्यं व्याचष्टे—**तस्मादिति।**

अनेकगुणोपादानलक्षणस्य पूर्वकर्मासंयोगहेतोः पौर्णमास्यधिकरणव्युत्पादितस्यात्राभावात् गुणान्तरावरोधलक्षणं हेत्वन्तरमत्राभिमतमिति दर्शयन् सिद्धान्तमाह—**अत्रेति।** अप्रकृतेतेति भाष्येण नञ्समासपूर्वकोत्तरपदसमासेनापूर्वसंयोगव्याख्यानेऽपि दध्यादेः

कर्मान्तरसंयोगार्हस्य भेदकत्वनिवृत्त्यर्थमपूर्वेणैव संयोग इत्यवधारणेन पूर्वकर्मासंयोगस्यैवोक्तत्वात्पूर्वकर्मण्यसम्भवादित्यनेनैव सूचितमपूर्वसंयोगशब्दस्य व्याख्याद्वयमाह—**अपूर्वेति**। कारकयोः साक्षादनन्वयाद्देवताशब्दं कर्मलक्षणार्थं मत्वा—**कर्मान्तरेत्युक्तम्**।

द्वितीयव्याख्यायामुत्तरपदसमासपूर्वको नञ्समासः पूर्वकर्मसंयोगानर्हत्वेऽपि वैश्वदेववाक्यत्वकर्मोत्पादकत्वाभावे भेदकत्वायोगादपूर्वसंयोगस्य भेदापादकत्वाय कर्मविध्याक्षेपकत्वाभिधानार्थत्वेन वाक्ययोरिति सूत्रावयवव्याख्यानार्थं 'स मे ही'ति भाष्यमिति सूचयन्सूत्रावयवं व्याचष्टे—**वाक्ययोरिति**। अपूर्वसंयोगाक्षेपार्थं कथं पुनरिति भाष्यं व्याचष्टे—**सत्यमिति**। यदेत्याक्षेपभाष्यावयवं शङ्कोत्तरत्वेन व्याख्यातुं सिद्धान्तिनः शङ्कामाह—**तत्कार्थेति**। समुच्चयाशयत्वेन तावद् व्याचष्टे—**कथमिति**। विकल्पाशयेनैतमेव भाष्यावयवं व्याख्यातुमेकार्थास्तु विकल्पेरन्समुच्चये ह्यावृत्तिः स्यान्प्रधानस्येति द्वादशाधिकरणन्यायेन समुच्चयासम्भवं शङ्कते—**एकार्थास्त्विति**। आमिक्षावाक्ये निरपेक्षामिक्षासाधनकत्वेनावगते यागे समुच्चयविध्ययोगाद्वाजयोगस्य चोपलक्षणमात्रत्वोपपत्तेर्न क्रयद्रव्यवद्वचनात्समुच्चयसिद्धिरित्याशयः। विध्यकल्पाशयत्वेन व्याचष्टे—**विकल्प एवेति**।

समाधानार्थं तदुच्यत इति भाष्यं व्याचष्टे—**नेति**। तद्धितेति भाष्यं पूर्वभाष्योक्तातुल्यबलत्वत्वविवरार्थत्वेन व्याचष्टे—**तदिति**। भाष्यद्वयेऽपि तद्धितचतुर्थ्योः श्रुतिवाक्यत्वकृतबलाबलोक्त्यविशेषात्पौनरुक्त्यमाशङ्क्य, पूर्वस्य तावत्सामान्यन्यायोक्त्यार्थत्वं सूचयितुमाह—**सर्वत्रैव तावदिति**। क्व चित्तद्धितेन, क्व चिच्चतुर्थ्येति वाच्ये बलाबलोक्तये श्रुतिवाक्योपन्यास इत्यनेन सूचितम्। द्वितीयस्य बलाबलोपपादनार्थत्वं सूचयितुं शङ्कते—**आहेति**। द्वयोः श्रुतित्वाविशेषादित्याशयः। विशेषोक्तौ भाष्यं योजयति—**तदिति**। यत्रेति भाष्यस्य प्रकृते सामान्यन्याययोजनार्थत्वं सूचयितुमाह—**वैश्वदेवी हीति**।

देवतान्वयस्योभयत्र श्रौतत्वाद् द्रव्यान्वयस्य तूभयत्र वाक्यीयत्वाच्छ्रुतिवाक्यत्वकृतविशेषायोगाशङ्कानिरासार्थं 'तत्रैषामि'ति भाष्यमाक्षिपति—**नन्विति**। भाष्यस्थो विशेषशब्दस्तद्धितान्तर्गतास्यशब्दोक्तद्रव्यान्वयस्याश्रौतत्वाद्वाक्यीयत्वोक्तचयोगमाशङ्क्य, सामान्यस्याप्रदेयत्वेन देवतान्वयानर्हत्वाद्विशेषस्यैवान्वयो वाच्यः। स च वाक्याधीन इत्यभिधानार्थोऽथ द्रव्यमात्रान्वयस्य श्रौतत्वेऽपि विशेषान्वयो वाक्यगम्य इत्यभिधानार्थं इति विकल्प्य, आद्यपक्षे द्रव्यान्वयस्योभयत्र वाक्यीयत्वाद्देवतात्वस्य उभयत्र श्रौतत्वादविशेषे द्रव्यसङ्गतिमात्रं करणादित्यन्तेनोक्तेऽथ द्रव्यमात्रसंयोग इत्यादिना चतुर्थ्या अपि कर्माभिप्रेयमाणत्वलक्षणसंप्रदानवाचित्वात्कर्मभूतद्रव्यान्वयोक्तिं विना सम्प्रदानोक्त्यनुपपत्तेर्द्रव्यान्वयवाचित्वस्यापि सम्प्रदानवाचित्वस्मृत्याक्षेपाद् द्रव्यान्वयस्यापि श्रौतत्वावगत्याशयेन द्वितीयपक्षेऽप्यविशेषमुक्त्वापि चेत्यादिना द्रव्यमात्रान्वये विरोधाभावेन बलाबलस्यावाच्यत्वात् विशेषान्वयस्योभयत्र वाक्यीयत्वान्नैकस्यापि श्रौततास्तीत्युक्तमिति विवेकः।

आक्षिप्तं भाष्यं समाधातुं श्रुत्या देवतात्वमिति भाष्यावयवं तावत्तद्धितान्ताद्देवताशब्दात्परस्यभावप्रत्ययस्य सम्बन्धवाचित्वमङ्गीकृत्य द्रव्यविशेषस्य श्रौतदेवतान्वयोक्त्यर्थत्वेन व्याचष्टे—**तदिति**। विशेषस्यैव देवतोच्यतइत्यनुषङ्गः। अस्य शब्दस्य विशेषवाचित्वमुपपादयन् श्लोकं व्याचष्टे—**विश्वेदेवा इति**। विशेषस्यैव सर्वनामवाच्यत्वात्त्यागलक्षणव्यवहारयोग्यत्वाच्चास्यशब्देनाभिधानात्तद्धितेन देवतान्वयोक्तिरित्यर्थः। सम्बन्धग्रहणाशक्तेर्विशेषस्य वाच्यत्वायोगमाशङ्क्य, सन्निहितत्वं सम्बन्धोपलक्षणत्वेनोक्तम्।

ननु द्रव्यविशेषस्यैव देवतान्वये तद्धितेनोक्ते सत्यामिक्षाशब्दोऽनर्थक इत्याशङ्कानिरासार्थत्वेन द्रव्यविशेषस्य देवतासम्बन्धितया तद्धितोक्तस्यामिक्षया सह विशेषणविशेष्यसम्बन्धो वाक्येन गम्यतइत्येवमुत्तरावयवं व्याख्यातुमाह—**ततश्चेति**। त्यज्यमानं द्रव्यं प्रत्युद्देश्यत्वेन देवताया विशेषत्वात्सामान्यस्य च त्यागायोगाद्विशेषावगत्युपादानायोपसर्जनत्वमुक्त्वा, सम्बन्धं विनोपसर्जनत्वासिद्धेस्तत्सिद्धयेऽन्तर्णीतः सम्बन्धो यस्यां देवतायां सोपसर्जनं यस्य द्रव्यस्य तत्प्रत्यये तद्धितान्तेन सन्निहितो द्रव्यविशेषो देवताविशिष्ट इत्येवं निष्पादिते स्वरूपावगतिं विना तदपर्यवसानात्तत्समर्पणाय—**आमिक्षापदेनेत्युक्तम्**।

ननु देवताविशिष्टस्य तद्धितान्तपदवाच्यत्वाभ्युपगमे सम्बन्धस्य लक्ष्यमाणत्वापत्तेः श्रौतत्वोक्तिरयुक्तेत्याशङ्क्य, वैय्याकरणमतेन श्रौतत्वोक्तिरित्याह—**तत्रेति**। एवं तु स्वमते श्रौतत्वासिद्धेरपरितोषादेकपदगम्यत्वेनौपचारिकी श्रौतत्वोक्तिरित्यन्यथा परिहरति—**अथापीति**।

भाष्यावयवद्वयस्योक्तमेव विविक्तविषयत्वं स्पष्टयति—**तनेति**। येन कारणेनामिक्षापदेन तद्धितोक्तो द्रव्यविशेषः समर्प्यते, तेन कारणेन विशेषणविशेष्यत्वलक्षणस्यासम्बन्धस्याभावात् द्वाविह सम्बन्धावित्यर्थः। नन्वेवं सति पदान्तरान्वयसापेक्षत्वाच्छ्रुतेरपि न वाक्याद्विशेषः स्यादित्याशङ्क्याह—**इतीति**। सर्वनाम्नः पदान्तरसन्निधापितार्थविषयत्वात्तेन विना स्वार्थाभिधानपर्यवसानानुपपत्तेः पदान्तरस्यापि सन्निधापकस्य सर्वनामश्रुतिव्यापान्तरार्गतत्वावसायात्पर्यवसिताभिधानाभिधेयार्थाकाङ्क्षासन्निधियोग्यत्वाधीनपदान्तरान्वयात्सर्वनामार्थवृत्तितद्विषयसमर्पकपदद्वयान्वयस्य शीघ्रं प्रतीतेरस्त्यामिक्षावाजिनयोर्विशेष इत्याशयः।

ननु विशेषणविशेष्यत्वलक्षणसम्बन्धाभ्युपगमे तस्य भेदाधिष्ठानत्वाद्वैश्वदेव्यामिक्षाशब्दयोर्भिन्नार्थत्वापत्तेर्नीलोत्पलशब्दयोरिव वाक्यलक्षणएवान्वयः स्यात्, न श्रौत इत्याशङ्क्याह—**ततश्चेति**। यतश्च कारणादामिक्षापदेन तद्धितोक्तद्रव्यविशेषसमर्पणनिमित्तं विशेषणविशेष्यत्वम्। अतोऽर्थभेदसमर्पणायोगाद्भिन्नार्थत्वानुपपत्तेर्नार्थयोर्विशेषणविशेष्यत्वम्, किं तु शब्दयोरेवेत्यर्थः। किं तर्हि विशेषणविशेष्यत्वे द्वारमित्यपेक्षायामामिक्षापदसन्निधानात्तद्धितस्य द्रव्यविशेषवाचित्वव्यवस्थापनं द्वारमाह—**किं तर्हीति**। पदद्वयश्रवणानन्तरं तत्प्रतीतेः समुदायवाच्यत्वशङ्का तद्धितएवेत्येवकारेण निरस्ता। सर्वनामार्थवृत्तित्वलक्षणोपपत्तिर्वेषशब्देनोक्ता। श्लोकं व्याचष्टे—**नैवेति**। अपत्यादितद्धितवद्विशेषानाभिधानेऽपि

सन्निहितत्वमात्रत्वाभिधानात्पर्यवसानमाशङ्क्य—**अनुपयुक्तेत्युक्तम्** । औपगवादिशब्दे देवदत्तादिविशेषाप्रतीतावप्युपगवपत्यत्वमात्रप्रतीत्युपपत्तेर्युक्तमभिधानपर्यवसानं, सन्निहितत्वस्य तु प्रकृत्यर्थेनाविशेषणान्निर्विशेषणस्य च सर्वपदार्थसाधारण्येनानुपयोगितयाऽनभिधेयत्वादपत्यादिविशेषणवच्चोपपदार्थविशेषणफलत्वाभावान्न सन्निहितत्वमात्राभिधाने तद्धितस्य शक्तिः कल्प्येत्याशयः । वैश्वदेवीशब्दे एवेत्यनेन तद्धितएवेत्यन्वयः सूचितः । न चेत्यनेनोत्तरार्द्धं व्याख्यातम् ।

नन्वामिक्षापदेन विनामिक्षाविषयत्वाप्रतीतौ देवतायोगस्यामिक्षाविषयत्वं वाक्यार्थः स्यादित्याशङ्कानिरासायामिक्षामेवेत्यावृत्त्यैवकारान्वयसूचनार्थम्—**न च वाक्यार्थत्वमित्याद्युक्तम्** । सन्निहितार्थविशेषविहितत्वात्तद्धितस्य तत्समर्पकपदानपेक्षस्यान्वर्थाप्रसिद्धेः स्वतन्त्रपदार्थाग्रहणाद्वाक्यार्थत्वानुपपत्तिरित्यर्थः । भाष्यस्थविशेषपदोक्तशङ्कानिरासोपपादनार्थं तद्धितस्य विषयार्पणमेवेत्येकारान्वयं सूचयितुम्—**तेनेत्युक्तम्** । उपपदसर्वनामतद्धितानामैकार्थ्ये वृद्धसम्मतिमाह—**तथा चेति** । आमिक्षाशब्देनैव सिद्धेर्वैश्वदेवीशब्दानर्थक्यं त्वनाशङ्क्यमेवेति सूचयन्नैकार्थ्यमुपसंहरति—**तेनेति** । यैवेत्येवकारेणामिक्षा—**शब्दोक्तैवेत्युक्तम्** । सैव वैश्वदेवीशब्देनोक्ता सती देवतासम्बन्धं यास्यतीत्येतदर्थं वैश्वदेवीशब्देनोच्यते इति । क्रियार्थायां क्रियायामुपपदे लृङ्व्याख्यानेन योज्यम् । एकार्थे प्रवृत्तिनिमित्तभेदाभावात्सामानाधिकारण्यायोगमाशङ्क्यामिक्षाशब्दस्यामिक्षात्वम्, वैश्वदेवीशब्दस्य देवतान्वयं प्रवृत्तिनिमित्तं देवतान्वयार्थामिक्षाशब्दोक्तार्थोक्तिपरामर्शिना तच्छब्देन सूचयन्नर्थविशेषणविशेष्यत्वानपेक्षत्वमुपसंहरति—**तेनेति** । वाजिने तु द्रव्यदेवतान्वयो, विशेषणविशेष्यत्वं च द्वयमपि वाक्यीयमेवेत्यभिधानार्थमेकत्रेति भाष्यं व्याचष्टे—**इतरत्र त्विति** । सम्प्रदेयाद्विना सम्प्रदानायोगादर्थाक्षेपेण विभक्त्या द्रव्यदेवतायोगोक्तिमाशङ्क्य—**स्वत इत्युक्तम्** । समान्यतो द्रव्यदेवतायोगाक्षेपेऽपि स्वेन वाजिनशब्दवाच्येन रूपेण हविषो देवतायोगो न विभक्त्योक्त इत्यर्थः । श्लोकं व्याचष्टे—**वाजिभ्य इति** । तस्य द्रव्यविशेषस्य देवतासम्बन्धः । तत्सम्बन्धः सामान्यतो विशेषतो वा द्रव्यदेवतासम्बन्धो 'न वाजिपदेऽन्तर्गत इति, कथं चिच्छब्देनोक्तम् । यदि च तद्धितवच्चतुर्थी सर्वनामार्थे स्मर्येत, ततः सम्प्रदेयस्य द्रव्यस्य सम्प्रदानभूतदेवतान्वयश्चतुर्थ्यन्ते पदेऽन्तर्गतः स्यात् । नत्वेतदस्तीत्याह—**अपि चेति** । देवतात्वापेक्षयापिशब्दः । श्लोकं व्याचष्टे—**सास्येति** । यदि चान्यपदार्थोऽपि चतुर्थ्यन्तात्प्रतीयेत, ततो स्मृतोऽपि देवतान्वश्चतुर्थ्यन्ते पदेऽन्तर्गतः स्यात्, न त्वेतदप्यस्तीति सम्प्रदानमात्रं प्रतीयत इति वदतोक्तम् ।

ननु सम्प्रदेयं विना सम्प्रदानायोगात्सम्प्रदेयमपि चतुर्थ्यन्तात्प्रतीयतएवेत्याशङ्क्याह—**तेन त्विति** । ननु सम्प्रदानमात्रस्य चतुर्थ्यर्थत्वे देवतात्वस्यापि तयानुक्तत्वाद्वाक्येनापि द्रव्यदेवतावगत्यनुपपत्तेरुभयस्य वाक्यीयत्वोक्तिरयुक्ता स्यादित्याशङ्क्याह—**तेनेति** । लक्षणया देवतात्वोक्तिमभ्युपगम्य भाष्यमित्याशयः । नन्वेवं सति देवतात्वस्यामिक्षावाजिनवाक्ययोः, श्रौतत्वाविशेषात्तुल्यबलत्वं स्यादित्याशङ्क्याह—**तत्र चेति** । अनेन च

तदिहेति भाष्यस्थोऽपि देवतात्वशब्दः पूर्वभाष्यस्थवत्सम्बन्धवाचितया व्याख्यातः । श्रौतवाक्यीयत्वविशेषोक्तिप्रयोजनाभिधानार्थं 'विरोधे चेत्यादि' भाष्यं व्याचष्टे—**इतीति ।**

सन्निकर्षविप्रकर्षौ वा भाष्यस्थाभ्यां श्रुतिवाक्यशब्दाभ्यां विवक्षिताविति व्याख्यानान्तरमाह—**किं चेति ।** श्रुतिशब्दस्य सन्निकृष्टत्वमर्थो, वाक्यशब्दस्य विप्रकृष्टतार्थ इत्यर्थः । कथमामिक्षान्वयस्य सन्निकृष्टत्वम्, वाजिनान्वयस्य विप्रकृष्टापेक्षितेऽष्टप्रकारं संनिकर्षविप्रकर्षाभिधानं प्रतिजानाति तावत्—**विप्रकृष्टेति ।** एतदेव व्याचष्टे—**सर्वेति ।** आमिक्षायां सामान्यतो देवतान्वयाभिधानं, न वाजिनस्येति तावत्प्रकारमाह—**तद्यथेति ।** यद्यपि च भवतु नामेत्यनेन द्रव्यमात्ररूपत्वाविरुद्धात्मतोक्ता, तामनुभाषणपूर्वं दूषयति—**यत्त्विति ।** वैश्वदेवीतीतिकरणेन सन्निहितार्थवृत्तितद्धितपरस्त्रीप्रत्ययपरामर्शात्, तेन च सन्निहितस्त्रीद्रव्योक्तेर्वाजिने न नपुंसकव्यवहितशब्दनिर्दिष्टे स्त्रीत्वसान्निध्ययोगाद्विरोधोऽस्त्येवेत्याशयः ।

ददातिकल्पनाकल्पनरूपं प्रकारान्तरमाह—**अपि चेति ।** अवश्यकल्पकर्त्तव्यतावचनेनैव पदद्वयान्वयसिद्धौ ददातिकल्पनानापत्तेस्तत्कल्पनसिद्ध्यर्थं सम्प्रदानसम्प्रदेयसङ्गतिर्ददाति विना—**नास्तीत्युक्तम् ।** देवशब्देऽपि कल्पनीये धातुमात्रकल्पनस्यासाधारण्येन पर्यनुयोज्यत्वसूचनार्थं धात्वर्थेन तल्लक्षणा अवश्यकल्पकर्त्तव्यतावचनकल्पनेऽपि विप्रकर्षसिद्धेः कस्मान्न निरस्ता इत्याशङ्कां निरस्यन् श्लोकं व्याचष्टे—**कर्त्तव्यतेति ।** प्रश्नपूर्ववैधर्म्यमुपपादयति—**कुत इति ।** वैश्वदेव्यामिक्षाशब्दयोस्तु सामाधिकारण्याद्वैधर्म्यदृष्टान्तत्वोपपत्तिरित्याशयः ।

वाजिशब्दस्य कारकविभक्त्यन्तत्वादपि न नाम्नान्वयः सम्भवतीत्याह—**न चेति ।** ददात्यध्याहारे च विप्रकर्षद्वयापत्तिर्दोष इत्याह—**तत्रेति ।** नन्वामिक्षावाक्येऽपि वैश्वदेव्यामिक्षया यजेतेति कल्पनाद्विप्रकर्षद्वयापत्तिरविशिष्टेत्याशङ्कते—**इतरत्रापीति ।** पदद्वयान्वयहेतुत्वाभावान्नान्वयविप्रकर्षापादकं यजिकल्पनमित्याशयेन परिहरति—**नेति ।** आमिक्षावाक्ये च यजिमात्रं कल्प्यम्, वाजिनवाक्ये तु यजिर्ददातिश्चेति विशेषमाह—**तव त्विति ।** वाजिनवाक्यस्यानेकदोषदुष्टत्वसूचनार्थं परकीयत्वं विवक्षितुम्—**तवेत्युक्तम् ।** त्वदीये वाजिनवाक्येऽर्थयोर्द्रव्यदेवतयोः सम्बन्धसिद्ध्यर्थम्, यजिश्च पश्चाद्भविष्यत्यादौ च द्रव्यदेवतापदयोरन्वयार्थं ददातिरित्युक्ते ददातिनैवार्थयोरप्यन्वयसिद्धेः, किं यजिनेत्याशङ्क्य—**परेत्युक्तम् ।** परस्या देवतायाः प्रतिगृहीतृत्वाभावेन तत्स्वत्वापादनलक्षणदानायोगान्न तेन द्रव्यदेवतान्वयः सम्भवतीत्याशयः ।

व्यतिरेकवाचिना तुशब्देनामिक्षावाक्ये यजिमात्रकल्पनेति सूचितं चतुर्थ्याश्चोत्सर्गतोऽवगतस्यापि सम्प्रदानवाचित्वस्य वाजिनपदन्वयात्प्रागपवादकोपपदयोगाभावानिश्चयेनानिर्णीतस्य देवतात्वलक्षकत्वायोगात्प्रागेव च देवतात्वलक्षणायां ददातिकल्पनायोगापत्तेः, सम्प्रदानसम्प्रदेयपदैकवाक्यत्वार्थं कल्पितेन ददातिना तदन्वयं निष्पादिते वाजिनप्रतिग्रही-

तृत्वाभावात्सम्प्रदानत्वानुपपत्तेर्देवतालक्षणार्थत्वं वाजिपदस्याभिप्रेत्य देवतापदत्वोक्तिर्ददाति-कल्पनोत्तरकालमपि कारकपदयोरन्योन्यान्वये विप्रकर्षमाह—**कल्पितेऽपि चेति**। वैश्वदेव्या-मिक्षाशब्दयोस्तु सामानाधिकरण्यात्कारकविभक्त्यन्तत्वाभावाच्च न कश्चिद्विप्रकर्षहेतु-रित्याह—**नन्विति**।

सामानाधिकरण्यवैयधिकरण्यलक्षणं तृतीयं प्रकारमाह—**सत्यपि चेति**। सर्वत्रैक-विषयत्वनिबन्धनत्वादन्वयस्यैकविभक्त्यन्तत्वं विनैकविषयत्वाप्रतीतेर्वाजिसम्प्रदानकं वाजिन-विभक्त्यन्तत्वाय सम्प्रानवाचिन्याश्चतुर्थ्याः सम्प्रदेयलक्षणार्थत्वाद्वैयधिकरण्ये विप्रकृष्ट-त्याशयः। एतदेवारुणाधिरण्यभाष्यसम्मत्या द्रढयति—**तथा चेति**।

श्रुतिलक्षणात्मकं चतुर्थं प्रकारमाह—**किं चेति**। लक्षणामुपपादयति—**न हीति**। दृष्टान्तेनामिक्षायां श्रुतिः सूचिता प्रसिद्धिविरोधान्नात्रेयस्य देवतात्वमस्तीत्याशयः। सम्प्रदानस्य देवतात्वेऽनिष्टापत्त्यन्तरमाह—**यदि चेति**। विरुद्धलक्षणत्वादपि सम्प्रदानस्य देवतात्वं नास्तीत्याह—**प्रतिग्रह इति**। एवमपि कथं सम्प्रदानत्वेन देवतात्वं लभ्यतइत्य-पेक्षायां प्रकारद्वयमाह—**तेनेति**। तस्या देवताया उद्देश इति समासान्तर्गतषष्ठ्युक्तस्यो-द्देशकर्मत्वस्य विशेषणप्रधानेन निर्देशेन लक्ष्यतोक्ता। नन्वप्रतिग्रहीतृत्वाद्देवतायामैश्वर्यं सम्भवतीत्याशङ्क्याह—**तादात्म्येति**।

देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम्।

इत्यादौ ब्राह्मणादिवद्देवताया अप्यैश्वर्यप्रसिद्धे'र्यस्यै वा कस्यै देवतायै पशुरालभ्यते सैव मेधपति'रित्यार्थवादेभ्यश्च देवतात्वस्यैश्वर्यरूपत्वप्रसिद्धेः, प्रति'ग्रहाभावेऽपि तदुद्देशपूर्वकेण त्यागेनं तदधीनत्वापादनान्मुख्यैश्वर्याभावेऽपि ओपचारिकमैश्वर्यमस्तीत्याशयः।

येऽपि सम्प्रदानद्वैविध्यमभ्युपगम्य प्रतिग्रहणात्मकस्य सम्प्रदानस्य देवतात्वाभावेऽप्य-निराकरणात्मकसम्प्रदानस्य देवतात्वमिच्छन्ति, तन्मतेऽपि चतुर्थ्युक्तेन सम्प्रदानत्वसामान्ये तत्तद्विशेषदेवतात्वलक्षणाद्विप्रकर्ष इत्याह—**यद्यपीति**। सन्दिग्धत्वलक्षणं पञ्चमं पञ्चमं प्रकारमाह—**अपि चेति**। श्लोकं व्याचष्टे—**वाजिभ्य इति**। शङ्कोत्तरत्वेनोत्तरार्द्धं व्याख्यातुम्—**नन्वित्याद्युक्तम्**। सकलरूपसाम्येपि।

पदावधारणोपायान् बहूनिच्छन्ति सूरयः।
क्रमन्यूनातिरिक्तत्वस्वरवाक्यस्मृतिश्रुतीः ॥ इति

प्रकृतिप्रत्ययान्वाख्यानस्मृतेरपि पदभेदावधारणोपायत्वेनेष्टत्व'प्रयाजाः सविभक्तिकाः कर्त्तव्या' इत्यादौ च वेदेऽपि विभक्तिप्रसिद्धेर्विभक्तीनां पारिभाषिकत्वाभावादन्वाख्यानभेदेन शब्दभेदात्सन्देहोपपत्तेरर्थसन्देहस्य चोभयसाधारण्येनापर्युनुयोज्यत्वाच्छब्दसन्देह एव विप्रकर्षापादक इत्याशयः।

उत्पन्नशिष्टत्वलक्षणं षष्ठं प्रकारमाह—**किं चेति**। अस्तु तावदुत्पन्नशिष्टत्वलक्षणो विशेषो वैश्वदेवाधिकरणोक्तेनो'त्पत्तिवाक्यविज्ञातमित'यादिचित्राधिकरणवार्त्तिकोपपादिते-

नोत्पत्तिशिष्टबलीयस्त्वेनोत्पत्तिशिष्टगुणावरुद्धे कर्मणि गुणान्तरं विधातुमेवाशक्यमित्याह—**यथा चेति**।

श्लोकोक्तमुत्पत्त्युत्पन्नशिष्टत्वविशेषस्य सन्निकर्षविप्रकर्षप्रकारत्वमुपपादयितुं प्रतिजानाति—**वैश्वदेवेति**। प्रश्नपूर्वं वैश्वदेवाधिकरणोक्तमेव न्यायमुपपादनार्थं स्मारयति—**कुत इति**। श्लोकं व्याचष्टे—**वाजिनं हीति**। अस्मिंश्च व्याख्यानप्रकारे सामान्यतोऽप्यामिक्षान्वयस्य श्रौतत्वाभावेऽपि वाजिनाद् बलीयस्त्वमित्याह—**ततश्चेति**। वाक्येनैव सामान्यतोप्यामिक्षादेवतान्वयितया विधीयत इति वाच्ये, तथापि सामान्यस्यऽब्रवीतीत्याद्यप्रकारानभ्युपगमेऽपि आमिक्षाया बलीयस्त्वोक्तचैतद्बुद्धिस्थीरीकरणार्था विपरीतोक्तिः।

ननु यागमात्रान्वयेऽपि भेदस्तावन्न सिध्यतीत्याशङ्क्याह—**प्रकरणानपेक्षेति**। अप्रकृतानां यागानामप्रतीतेः, प्राकृतानां चानपेक्षणाद्यागान्वयायोगाद्विशिष्टविधिरेवापद्येतेत्याशयः। स्वार्थसमासत्वेन च वाक्यान्तरानपेक्षत्वान्न तद्विहिते कर्मण्यनेन गुणविधिः सम्भवतीत्याह—**न चेति**। रूढियौगिकत्वलक्षणं सप्तमं प्रकारमाह—**विश्वदेवाश्चेति**। उत्तरार्द्धं व्याचष्टे—**वाजिन इति हीति**। अवयवप्रसिद्धेर्विप्रकर्षोपपादनार्थं 'मक्षरैरेव बुध्यन्त' इति प्रोक्षण्याधिकरणवार्त्तिकोक्तं दौर्बल्यं स्मारयति—**वाक्यार्थवच्चेति**। न केवलं विश्वेदेवस्थे शब्दस्थया रूढ्या वाजिशब्दस्थावयवप्रसिद्धिबाधः, किं त्वात्मस्थयापीत्याह—**वाजीति**। देवतात्वेऽश्वानामयोग्यत्वादस्त्येव विश्वेषु देवेषु वृत्तेर्देवतात्वसिद्धिः। कार्यमित्याशङ्कां निरस्यन् श्लोकं व्याचष्टे—**देवतात्वं नामेति**। अन्यत्र देवतात्वोक्त्यानवगतयोग्यत्वस्याग्न्यादेः, अनवगतयोग्यत्वस्य वाश्वादेः शब्दैकसमधिगम्यत्वाद्युक्तं देवतात्वमित्यर्थः। यौगिकत्वाभ्युपगमेऽपि विश्वदेवविषयता क्लेशगम्येत्याह—**सत्यपीति**। श्लोकं व्याचष्टे—**सर्वे हीति**।

ननु व्रीहीन्प्रोक्षती'त्यादिवत् प्रकृतग्रहणं भविष्यतीत्याशङ्क्य वैषम्यमाह—**गुणेति**। एतदेव विवृणाति—**संस्कार्यत्वे हीति**। देवतायाः संस्कार्यत्वे विनाप्यारादुपकारित्वाद्यागस्य प्रयोजनवत्त्वापपत्तिरित्यर्थः। संस्कारकर्मत्वेऽपि तत्तस्य पयसो दध्यानयनसंस्कृतस्यामिक्षाशब्देन घनीभूतस्य वैश्वदेवयागे विनियोगात्तदनुनिष्पादिनो द्रवस्य वाजिनशब्दोक्तस्योपयुक्तशेषत्वात्प्रतिपत्त्युपेक्षस्य प्रतिपत्तिर्भविष्यतीत्याह—**कामं वेति**। प्रकृतग्रहणेऽप्यग्न्यादीनामष्टानां प्रकृतत्वाविशेषाद्विश्वेदेवमात्रविषयत्वं न सिध्यतीत्याह—**प्रकृतेति**। ननु विश्वदेवशब्देनाष्टानामपि ग्रहणं भविष्यतीत्याशङ्कते—**अथेति**। एकदेवतोद्देशेन यागसिद्धेः सर्वदेवतोद्देशो निष्प्रमाणक इति परिहरति—**तदिति**। बहुवचनं प्रमाणत्वेनाशङ्कते—**बह्विति**। न तत्सर्वोद्देशे प्रमाणमिति परिहरति—**नेति**। अष्टानां मध्ये केऽत्रयोग्राह्या इत्यनवधारणात्सर्वग्रहणं भविष्यतीत्याशङ्कते—**न त्रिष्वति**। द्वादशाधिकारणन्यायेनाद्यास्तिस्रा देवता इत्यवधारणं सम्भवतीति परिहरति—**न मुख्यं वेति**। अतोऽष्टानां मध्ये विश्वदेवमात्रग्रहणं निष्प्रमाणकमित्युपसंहरति—**तस्मादिति**। अनन्तरोपदिष्टवाजवतां च वाजिशब्देनोक्तौ नैराकाङ्क्ष्यान्न वाजिनान्वयो युक्त इत्याह—**साकाङ्क्षा चेति**।

सप्तमं प्रकारमुपसंहरति—**तस्मादिति**। देवशब्दस्य वाजिशब्देन लाभोपपत्तेर्दुर्लभत्वोक्तिरयुक्तेत्याशङ्क्य—**तत्रापि चेत्युक्तम्**। वाजिशब्दोच्चारणेनैव विश्वेदेवग्रहणसिद्धेः किं प्रयोजनलाभेनेत्याशङ्क्याह—**न चेति**। शास्त्रेण च वाजिशब्दोच्चारणएव पुरुषस्य प्रवर्त्तितत्वान्न वाजिशब्देनार्थद्वारा विश्वदेवशब्दलक्षणायां प्रमाणमस्तीत्याह—**वाजीति**। एवं च वाजिनयागे विश्वेषां देवतात्वे सत्यपि वाजिशब्देनैवोक्तानां देवतात्वात् देवताभेदेनामिक्षावाक्यस्थदेवतानुवादायोगात्पौर्णमास्यधिकरणव्युत्पादितया प्राप्ते कर्मण्यनेकार्थविध्यशक्त्यापि कर्मभेदसिद्धिरित्याह—**ततश्चेति**। परस्मादिति सूत्रार्थोपसंहारभाष्यं व्याचष्टे—**इतीति**॥ २३॥

भा० प्र०—चातुर्मास्य प्रकरण के वैश्वदेव नामक प्रथम पर्व में कहा गया है "तप्ते पयसि दध्यानयति। सा वैश्वदेवी आमिक्षा। वाजिभ्यो वाजिनम्"। तप्त दूध में दधि दे, उसमें जो आमिक्षा = छेना होगा, वह विश्वदेव नामक देवता को और वाजिन अर्थात् उसका जल वाजी देवता का होगा। इस स्थल में "वाजिभ्यो वाजिनम्" यह जो वाक्य है वह आमिक्षागुणप्रयुक्त कर्म में गुणविधि है या वाजिनगुणप्रयुक्त अपूर्व कर्म की विधि है—यह सन्देह है। पूर्वपक्षी ने कहा है यहाँ विश्वदेव नामक देवता और वाजि नामक देवता भिन्न नहीं होने से इस स्थल में पूर्व उपदिष्ट कर्म में 'वाजिन' रूप गुण का विधान किया गया है और यह वाजिनरूप गुण आमिक्षा द्रव्य के साथ समुचित भाव में या विकल्पित भाव में प्रकृतकर्म में स्थान प्राप्त करेगा। वाज = अन्न वह जिसका है, उस देवता को वाजी कहा जाता है। यहाँ विश्वदेव नामक देवता के उद्देश्य से आमिक्षारूप बाज = अन्न का निवेदन करने से विश्वदेव नामक देवता ही 'वाजी' शब्द से कहा जाता है, इसलिए एक ही देवता के उद्देश्य से वाजिनरूप गुण का ही विधान है, अतः कर्मभेद नहीं हो सकता है।

इसके समाधान में सिद्धान्ती का कहना हैं कि "गुणश्चापूर्वसंयोगे" नवीन देवता का निर्देश रहने पर उसके साथ सम्बद्ध गुण भी कर्म भेद का साधन होता है। यहाँ वैश्वदेव याग में जो वाजिन गुण का विधान किया गया है, यह नहीं कह सकते हैं, क्योंकि, इस स्थल में प्रकृत-कर्म में 'आमिक्षा' द्रव्यरूप गुण उत्पत्ति वाक्य में उपदिष्ट होने से वह "उत्पत्ति शिष्ट" है। अन्य वाक्य में वाजिन गुण का विधान होने से वह उत्पन्न शिष्ट है। उत्पत्ति विशिष्ट और उत्पत्ति शिष्ट में विकल्प नहीं हो सकता है, क्योंकि, उत्पत्ति शिष्ट गुण और उत्पन्न शिष्ट गुण में उत्पत्ति शिष्ट गुण बलवान् होता है। प्रकृत में आमिक्षा और वाजिन इन दो गुणों में विकल्प नहीं हो सकता है, पूर्वोक्त कारण से हो इनका समुच्चय भी सम्भव नहीं है, अतः वाजिन द्रव्य प्रकृत कर्म में प्रविष्ट नहीं हो सकता हैं अतः, वाजी नामक देवता पूर्वोक्त विश्वदेव नामक देवता से स्वतन्त्र है—यह भी प्रतीत होता है। शब्दगत कुछ भी पार्थक्य रहने पर जब देवता का भेद हो

जाता है। यह "स्वतन्त्राधिकरणे" (२।१।५) अधिकरण के १३ से २९ सूत्रों में इन्द्र एवं महेन्द्र देवता की आलोचना में व्याख्यात है। ऐसी स्थिति में अत्यन्त पृथक वाजी शब्द भिन्न देवता का वाचक है इसमें सन्देह का अवसर ही नहीं है। अतः इन स्थलों में द्रव्य और देवता का भेद होने से कर्म का भी भेद है। इसलिए वाजिरूप देवता ही कर्म भेद का साधन है। अतः गुणकृत कर्मभेद यहाँ मानना ही होगा।

"अपूर्वसंयोगे" = पूर्व संयोग न रहने पर अर्थात् पूर्व कर्म में निवेश न होने पर "गुणः च" = गुण और कर्म का भेद प्रकाशित करता है, "वाक्ययोः समत्वात्" = क्योंकि इन स्थलों में दो वाक्यों की समता अर्थात् परस्पर निरपेक्षता रहती है ॥२३॥

**अथ यदुपवर्णितं यथा 'अग्निहोत्रं जुहोति' इत्युक्ते, दध्ना जुहोति इत्येवमादयो गुणविधय इति। तत्रोच्यते—**

## [१०] अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ॥२४॥ सि०

**युक्तं यत्तत्र गुणविधानम्, न तत्राप्रकृतेन केनचिद् गुणेन संबन्धः। प्रकृतेन [1]त्वस्ति [2]यागेन। तस्मादनुपवर्णनमेतत्। शङ्कानिरासः॥**

**इति नवमं गुणाधिकरणम्।**

**अथ दशमं गुणप्रत्युदाहरणविकरणम्।**

**अथवा अधिकरणान्तरम्। 'दध्ना जुहोति' इत्येवमादीनि कर्मान्तराणि विकल्पपरिजिहीर्षयाऽवकल्प्यन्ते। तदेव तु कर्म जुहोतीतिशब्दादवगम्यते, न कर्मान्तरम्। तस्मात्तत्रैव गुणविधिः वचनाद्विकल्पश्चेति सिद्धम् ॥२४॥**

**यद्वा द्रव्यविशेषानुक्तिकृतकर्मैक्याधिकरणम् ॥१०॥**

त० वा०—अगुणे तु कर्मशब्द इति प्रत्युदाहरणसूत्रम्।

अन्येनानवरुद्धे हि गुणो यत्र विधीयते।
तस्मिन्गुणविधिः शक्य इति कर्म न भिद्यते ॥ २४ ॥

(इति दशमं गुणप्रत्युदाहरणाधिकरणम्) ॥ १० ॥

न्या० सु०—अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेतेति सूत्रमथेत्यादिभाष्येणोपवर्णनापरिहारार्थत्वेन व्याख्यायाऽथवेत्यादिना दध्यादेरपि गुणस्याष्टदोषविकल्पापत्तेः पूर्वकर्मण्यसम्भवाद्भेदकत्वप्रसक्तावयवादार्थतयाऽधिकरणान्तरत्वेन व्याख्यातम्। तत्र द्वितीयव्याख्यायां तत्सन्निधेर्गुणार्थेन पुनः श्रुतिरित्यनेन पौनरुक्त्यापत्तेः प्रयोगकालीनविकल्पालोचनेन चोत्पत्तिशास्त्रान्यथात्वकरणायोगात्पूर्वपक्षानुपपत्तेराद्यैव व्याख्या युक्तेत्याह—**अगुणेति**। गुणान्तरा-

---

१. ब. चास्ति। २. ब. योगः।

वरुद्धकर्मोत्पत्त्यभावेनोदाहरणभेदहेतुत्वेनोक्तस्यापूर्वसंयोगस्याभावात्प्रत्युदाहरणत्वं दध्यादेर्वैषम्योक्त्येऽनेनोच्यतइत्यर्थः । प्रत्युदाहरणत्वं विवृणोति—**अन्येनेति** ॥ २४ ॥

इति दशमं गुणाधिकरणम्

भा० प्र०—पूर्वपक्षी ने कहा है कि "दध्ना जुहोति", "पयसा जुहोति" इन दो वाक्यों के द्वारा जैसे "अग्निहोत्रं जुहोति" इस वाक्य से विहित कर्म में दो गुणों का विधान होता है । इस स्थल में भी उसी प्रकार "आमिक्षा" एवं "वाजिन" द्रव्य रूप दो गुणों का विकल्प विहित होगा । ऐसी स्थिति में कहा जायगा कि "अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयते", अग्निहोत्र वाक्य में जो कर्म विहित होता है, वह गुण विहित होने से परवर्ती दो वाक्यों में उनके गुणों का विधान किया गया है । इन दो वाक्यों से विहित दो गुण ही उत्पन्न शिष्ट होने पर तुल्यबल होने में उनका विकल्प हो सकता है, किन्तु इस स्थल में "आमिक्षा" उत्पत्ति शिष्ट एवं "वाजिन" उत्पन्न शिष्ट होने से समबल नहीं हैं, अतः उनका विकल्प नहीं हो सकता है । ( यह ९ वाँ गुणाधिकरण है । )

इस सूत्र को भगवान् भाष्यकार ने पूर्वोदाहरण के प्रत्युदाहरण के रूप में अधिकरणान्तर रूप में भी व्याख्या की है । "दध्ना जुहोति" एवं "पयसा जुहोति" इन दो वाक्यों में भी पूर्व के समान गुणभेद के कारण कर्मभेद होगा—इस प्रकार पूर्वपक्ष होने पर सिद्धान्त रूप में कहा गया है कि "अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयते" पूर्वाधिकरण में गुण से इन दो वाक्यों के द्वारा उपदिष्ट गुणों का अतिशय पार्थक्य है, क्योंकि इस स्थल में दोनों गुण उत्पन्नशिष्ट हैं, किन्तु पूर्व अधिकरण में दो गुणों में एक उत्पत्तिशिष्ट और दूसरा उत्पन्नशिष्ट है । अतः पूर्व अधिकरण के समान इस स्थल में गुणकृत कर्मभेद नहीं हो सकता है, किन्तु "अग्निहोत्रं जुहोति" इस वाक्य में जो निर्गुण कर्मों का विधान "दध्ना जुहोति" एवं "पयसा जुहोति" इन दो वाक्यों से किया गया है, उन्हीं का द्रव्यरूप गुण उपदिष्ट होता है । दही एवं पयो द्रव्यरूप दो गुण ही उत्पन्नशिष्ट होने से तुल्यबल होने के कारण उन्हीं का विकल्प होगा, समुच्चय नहीं होगा, क्योंकि एक गुण के द्वारा ही याग के निष्पन्न हो जाने से गुण की आकङ्क्षा निवृत्त हो जाती है, इसलिए अन्य गुण निरर्थक हैं, इसीलिए व्रीहि एवं यव के समान इनका विकल्प ही होगा । पूर्व अधिकरण के प्रत्युदाहरणस्वरूप में इस अधिकरण की प्रवृत्ति है ।

"कर्मशब्दे अगुणे ( सति ) तु" = किन्तु कर्मशब्द अर्थात् कर्मोत्पत्ति विधि यदि अगुण अर्थात् गुणरहित हो तो "गुणस्तत्र प्रतीयते" = उस कर्म में गुण की प्रतीति होती है अर्थात् विधान होता है ॥ २४ ॥

यह दशम गुणप्रत्युदाहरण अधिकरण है ।

अथैकादशमिन्द्रियकामाधिकरणम् ।

## [११] फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥२५॥

अग्निहोत्रं प्रकृत्य समामनन्ति[1] 'दध्नेन्द्रियकामस्य जुहुयात्' इत्येवमादि। तत्र संशयः[2]। किमग्निहोत्रहोमाद्धोमान्तरं दध्यादिहोम[3]:, उत दध्यादेर्गुणात्फलमिति।

किं प्राप्तम् ? होमान्तरमिति। कुतः ? फलश्रुतेः। फलमिह श्रूयते। तच्च कर्मणो न्याय्यम्। किं दृष्टं हि कर्मणः फलं कृष्यादितो व्रीह्यादि ? नेति ब्रूमः। न ह्येतद् दृष्टेनाऽनेन सिध्यति। यदि दर्शनं हेतुः फलज्ञाने, कृष्यादौ पदार्थे तद्दर्शनम्, न होमे। अथ कृषौ दृष्टमन्यत्रापि भवति। द्रव्यादपि प्रसज्यते। अथ कृषिसदृशा[4]द्भवतीत्युच्यते, कृषिसदृशो[5] होमः, क्रियात्वात्। न द्रव्यम्। असदृशं हि तदिति, होमोऽप्यसदृशः।

मन्त्रदेवतादिसाधनत्वाद्धोमस्य। लाङ्गलादिसाधनत्वाच्च कृषेः। त्यागात्मकत्वाद्धोमस्य। पाटनात्मकत्वाच्च कृषेः।

अथ किंचित्सादृश्यं गृह्यते। द्रव्यस्यापि सदनित्यमित्येवमादि किंचित्सादृश्यमस्ति। अथ द्रव्यादन्यत्सदृशतरमस्तीति कृत्वा न द्रव्यं सदृशमित्युच्यते। होमादप्यन्यत्कृषेः सदृशतरमस्ति दृष्टार्थमिति कृत्वा होमोऽप्यसदृशः स्यात्। न चैतत्सिद्धं यत्क्वचिद् दृश्यते, तदन्यस्मिन्सदृशमात्रेऽदृष्टमपि भवितुमर्हतीति। यद्धि यस्य कारणभूतं दृष्टम्, सिद्धे तच्चेत् ? साध्येऽपि कारणभूतमित्यवगम्यते। भवति तत्तस्य साधकम्। यन्न ज्ञायते कारणभूतमिति, न तत्सदृश[6]मपि साधकम्। तस्मात्सदृश[6]मपि साधकम्, असाधकं वेति परीक्षितव्यमिति।

अथ यत्कर्म तत्फलवद् दृष्टम्।

होमोऽपि कर्म, तेनापि फलवता भवितव्यमिति। उपरते कर्मणि द्रव्याणाम्, तत्संयोगानां च द्रव्यान्तरं फलं दृष्टमिति, द्रव्यमपि फलवत्स्यात्। अपि च कृषेर्नादृष्टमिति, तत्सादृश्याद्धोमादपि नादृष्टं भवेत्। कृषिसादृश्याद्वा व्रीहिरेव भवेत्, नेन्द्रियम्। तस्मान्नैवंजातीयकंब्वेतद्भवति दृष्टसिद्धेरिति।

कथं तर्हि होमान्न्याय्यं फलमिति। उच्यते। शब्देनावगम्यते तत्फलम्। यतः फलमिति शब्द आह। ततो न्याय्यम्। होमाच्च फलमिति श्रुत्याशब्देन गम्यते, दध्नः फलमिति वाक्येन। श्रुतिश्च वाक्याद्बलीयसी। तस्माद्धोमात्फलमिति न्याय्यम्, दध्नः फलमिति चान्याय्यम्।

---

१. ब. इदमाम्नायते। २. ब. संदेहः। ३. ब. दध्यादिभिः।
४. ब० भविष्यतीत्युच्यते। ५. ब० सदृशश्च। ६. ब० सादृश्य।

**अपि च दध्युभयमसमर्थं कर्तुम्, फलं साधयितुम्, होमं च। ननु कम्बल-निर्णेजनवदेतद्भविष्यति। निर्णेजनं ह्युभयं करोति— कम्बलशुद्धिम्, पादयोश्च निर्मलताम्। न ब्रूम एकस्योभयं प्रयोजनमभिनिष्पादयितुं सामर्थ्यं नास्तीति। किं तर्हि? फले गुणभूतं दधि, होमे चेत्येकं वाक्यं वदितुमसमर्थमिति। यदि फलं दध्ना कुर्यादिति ब्रूयात्, न दध्ना होममिति। अथ दध्ना होमं साधयेदिति ब्रूयात्, न फलमिति। उभयवचने भिद्येत वाक्यम्। अभिन्नं चेदमुपलभ्यते। तस्मान्न गुणात्फलमिति, अतोऽग्निहोत्रहोमाद्दधिहोमः कर्मान्तरमिति ॥ २५ ॥ पूर्वपक्षः ॥**

त० वा०—'अग्निहोत्रं जुहोति' इति प्रकृत्य 'दध्नेन्द्रियकामस्य' इति श्रूयते। तत्र संदेहः—किं पूर्वस्मादिदं कर्मान्तरम्, उत तस्यैव गुणात्फलमिति। द्वयमेव पुरस्तादवस्थितम् अगुणोत्पत्तौ कर्मणि तत्रैव गुणः, सगुणोत्पत्तौ तु प्रकारान्तरेण चाविधीयमानानेकगुणसंगतौ सत्यां कर्मान्तरत्वमिति। तदिहागुणश्च कर्मशब्दः, अनेकार्थोपादानं च वाक्ये श्रूयते। तेन सम्भवासम्भवयोः संदेहः। तत एतत्सि-द्ध्यर्थमिदं विचारयितव्यम् किमिह होमात्फलम्, उत गुणात्।

**शंकासमाधाने**

किमर्थं पुनः 'गोदोहनेन पशुकामस्य' इत्येतद् वृत्त्यन्तरोदाहृतमति-क्रम्यते, भेदाभेदयोरनुपयोगात्। क्रत्वर्थपुरुषार्थविचारे हि तस्यैतस्य वोदाहरणे न कश्चिद्विशेषः स्यात्। इह तु भेदाभेदलक्षणे तदनुगुणमुदाहर्तव्यम्। न च प्रणय-नस्य देशान्तरप्राप्तिसंस्कारात्मकत्वाद्भेदाभेदयोर्विशेषः। यदि च गोदोहनात्फलम्, यदि च तद्वतः प्रणयनात्, उभयथाऽपि तादृगेवानुष्ठानम्। इह पुनर्यदि गुणात्फलम्, ततः सायंप्रातराहुत्योरेव दधि प्रयोक्तव्यम्। अथ होमात्। ततो नैयमिकहोम-व्यतिरिक्तमनियतकालं दधिसाधनकं होमान्तरं सकृदेव दर्विहोमत्वादपूर्वं क्रियत इत्यस्ति भेदज्ञाने विशेषः।

**निमित्तफलाभ्यां तदेव कर्मेति आक्षेपप्रतिक्षेपौ**

ननु च होमादपि फले 'संनिधौ त्वविभागात्' इत्यनेन न्यायेन स्वर्गयावज्जी-वयोरिव तदेव कर्म विधीयते। नैतदेवम्—

यदि नामाविभागः स्यात्कर्मणः प्रत्यभिज्ञया।
ततस्तदेव कर्म स्यादन्यथा भेदनिश्चयः॥

फलनिमित्तादौ हि विधीयमानं कर्मानुत्पन्नं तैः सम्बन्द्धुं न शक्नोतीत्यर्था-दुत्पत्तिविधित्वमप्यनुभवितुमुपक्रमते। तत्र यदि बलीयस्या विपरिवृत्त्या ताद्रूप्या-दप्रच्युतया पूर्वकर्मोत्पत्तिरूपं स्थाप्यते, तत्रोत्पादकशक्तिविरोधात्प्रत्यभिज्ञावबलेन

तदेव कर्माऽध्यवसीयत इति, न भिद्यते । यदा तु पूर्वकर्मरूपात्किंचिदप्याधिक्यं[1] विज्ञायते, तदा नैवाविभागज्ञानमस्तीत्यर्थादुत्पत्तिविधिर्भवन्नन्येन तद्रूपोत्पत्तिसमर्थेन विध्यन्तरेणानिवारितशक्तिः सत्यप्यन्यपरत्वेऽनुपादेयं प्रत्युपादानात्कर्म भिनत्ति । न च 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यत्रेन्द्रियं प्रत्युपादानाद्दधिविशिष्टहोमान्तरबुद्धिर्भवन्ती केनचित्तद्रूपोत्पत्तिमुपस्थापयता वार्यते ।

कुतः ?

मोहो हि प्रकृतः शुद्धः स्ववाक्यादवधारितः ।
सोऽस्मिन्दधिविशिष्टत्वाद्विभागेनैव गम्यते ॥

'अग्निहोत्रं जुहोति' इति होमः शुद्ध उत्पन्नः । इह च दधिविशिष्टः श्रूयते, तेनाविभागादित्यस्याभेदहेतोरसिद्धत्वाद्भिद्यते ।

ननु 'दध्ना जुहोति' इत्यस्त्येव दधिविशिष्टो होमः । न । तस्यानुत्पत्तिवाक्यत्वात् । येन तावदसावुत्पादितः । न तत्र दधिविशिष्टः, यत्र दधिसम्बन्धः । तत्र नोत्पादितः, तत्संनिधेर्गुणार्थेन पुनः श्रुतिरिति साधितत्वात् । उत्पत्तिवाक्येनैव च फलवाक्यस्योत्पादकत्वं प्रतिबध्नता कर्मान्तरत्वं निराक्रियते, न गुणवाक्येनानुत्पादकत्वात् ।

**उत्पत्तिवाक्येन गुणफलनिमित्तवाक्यानां सम्बन्ध इत्याशङ्कानिरासः**

उत्पत्तिवाक्येनैव च सर्वाणि प्राकरणिकानि गुणफलनिमित्तवाक्यानि सम्बध्यन्ते, न परस्परेण । कुतः ?

तान्युत्पत्तिमपेक्षन्ते सा चाऽव्यवहिता यतः ।
गुणादीनां त्वसम्बन्धाद् व्यवधिः स्यात्परस्परम् ॥

अनुत्पन्नस्य गुणादिभिरसम्बन्धादुत्पत्तिः सर्वैरपेक्ष्यते । न तु परस्परापेक्षायां किञ्चित्कारणमस्ति । सैव च सर्वत्रानुस्यूतत्वादसंबन्धिनाऽव्यवधीयमाना सम्बध्यते । गुणानां च परार्थत्वादसम्बन्धे सति एकेनापि व्यवहितानामननुषङ्गान्न केनचिदेकवाक्यत्वमस्तीति न 'दध्नेन्द्रियकामस्य' इत्यत्र 'दध्ना जुहोति' इत्येददुपतिष्ठते । वक्ष्यति चैतत् 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इत्याधिकरणे ।

**उत्पत्तिवाक्येनैव भेदप्रतीतिनिरास इत्याशङ्कानिरासकरणम्**

तत्रैतत्स्यात् सैवोत्पत्तिर्वाक्यान्तरेण दधिमती कल्पिताऽनुषज्यमानाऽत्र भेदबुद्धिं निराकरिष्यति ।

---

१. क० किञ्चिदप्यर्थाधिक्यं ।

तदनुपपन्नम् । एवं हि सति—

वाक्यान्तरेण तत्कर्म यथा दध्ना विशेषितम् ।
तण्डुलादिभिरप्येवमिति नैकात्मिकं भवेत् ॥

उत्पत्तिवाक्ये तावत्केवले निरीक्ष्यमाणे शुद्धहोमावगमादप्रत्यभिज्ञानम् । अथ प्राकरणिकगुणवाक्यानुरक्तमालोच्यते, तथाऽपि तण्डुलादिद्रव्यविशिष्टत्वान्नैव केवलदधियुक्ते वाक्येऽस्ति प्रत्यभिज्ञानम् । अथ दधिसद्भावमात्रापेक्षिण्णिन्द्रियकामवाक्ये सत्यपि तण्डुलादीन्यनपेक्षितत्वादसत्तुल्यान्यनाश्रित्य केवलं दधि ग्रहीष्यत इति । तथा सति तदेवाऽऽपतितं भवति । 'दध्ना जुहोति' इत्येतदेव वाक्यं केवलं गृह्यत इति । निवारितं चैतत् ।

**भेदविरुद्धायाः प्रत्यभिज्ञाया निरासः**

अपि च—

दध्यत्र दशमे पक्षे तद्धोमस्य विशेषणम् ।
नित्यं चेन्द्रियकामस्य तेनापि न निरूप्यते ॥

यद्यपि तावद्दध्यादीनि नित्यं होमे समुच्चीयेरन्, तथा सति विचित्रमपि कर्मैकदेशग्रहणेन चोदितमिति कथंचित्कल्प्येत । दध्यादीनां तु वैकल्पिकत्वादेकैकस्यैव दशमे पक्षे होमाङ्गत्वम् । अतश्च दधिवाक्येऽप्यालोच्यमाने[1] पाक्षिकं दधि दृश्यते । नित्यवच्च तदिन्द्रियकामहोमे श्रूयते । तस्मादपि न प्रत्यभिज्ञायते । न च यदा[2] 'दध्ना जुहुयादि'त्येवमनुवदितुं शक्यते । फलस्याविधेयत्वात् । एषा ह्यत्र वचनव्यक्तिः यदीन्द्रियकामः तदा नित्यं केवलदधिविशिष्टं होमं कुर्यादिति । न चासौ तादृगन्यतः प्राप्त इति भिद्यते ।

ननु होमरूपमात्रं तावत्प्रतिज्ञातं तत्प्रत्यभिज्ञानाच्चाभेदसिद्धिः । यत्तु द्रव्यं न प्रत्यभिज्ञायते, न तत्कर्मभेदकारणम् । तस्मात्तदेव कर्म गुणमात्राभ्यधिकं फले विधीयते ।

नैतदेवम् । कुतः ?

प्राप्ते कर्मण्यनेकार्थविधिः पूर्वं निराकृतः ।
त्वत्पक्षेऽनेकसम्बन्धविधिश्चात्र प्रसज्यते ॥

दधिहोमसम्बन्धं, होमफलसम्बन्धं च विदधद्वाक्यं भिद्यते । तेनावश्यं विशिष्टविधिरभ्युपगन्तव्यः । ततश्च सिद्धं कर्मान्तरत्वम् । यथैव चार्थादनियतानेकद्रव्यकत्वे प्राप्ते केवलदधिनियमानेकार्थविधानम्, तथैव परस्परानपेक्षैस्तण्डुलादिविधिवाक्यैर्वैकल्पिकदशद्रव्यकत्वे कल्पिते तण्डुलादिव्युदासेन केवलदधिनियम-

१. क० आलोच्यमानं । २. क० यद्दध्ना ।

करणात्। न ह्यसावेतस्माद्वाक्यादृते कथंचिदपि प्राप्तः, तेन होमात्फले भवति कर्मान्तरत्वम्। अतः पूर्वपक्षः परिगृह्यते।

कर्मशब्देऽगुणेऽप्यत्र कर्म भूयो विधीयते।
फलं हि श्रुतमेतस्मिन्कर्मतस्तच्च युज्यते॥

समस्तमेव भावार्थाधिकरणं पूर्वपक्षः। तत्र ह्येतदवस्थितम्—आख्यातशब्दाः फलपदेन सम्बध्यते, न द्रव्यगुणशब्दा इति। तस्मात्फलस्य कर्मयोगित्वात्, फलश्रुतौ सत्यां कर्म विधीयते, न कर्मणि गुणः। कथम्?

प्राप्तस्तावद् गुणो नैव विधानं पुनरर्हति।
अप्राप्तविधिपक्षेऽपि भवेद्व्यर्था फलश्रुतिः॥

तत्र नामागुणे कर्मशब्दे सति गुणो विधीयते। यत्र सगुणो न भवति। यत्र चार्थान्तरं न श्रूयते। न चेह द्वयमपि तदस्ति। दध्नो वाक्यान्तरेणैव प्राप्तत्वात्, फलस्य चाभ्यधिकस्योपादानात्। अत आह—'**फलमिह श्रूयते तच्च कर्मणो न्याय्यमि**'ति। **तत्र किं दृष्टं हि कर्मणः फलमिति** प्रश्नस्य द्विधा प्रतिभासः। एकस्तावन्नेति **ब्रूमः। न ह्येतद् दृष्टेनानेन** सिध्यतीत्यादेर्निराकरणपरत्वेन सिद्धान्तच्छायानुसारात्किमित्येतावानेव प्रश्नः। किमित्येतन्न्याय्यमित्यर्थः। इतर आह—**दृष्टं हि कर्मणः फलमिति**। तस्योत्तरं **नेति ब्रूम**[1] इति। यदोत्यादि तावत्स्वयमेवाऽऽशङ्क्य निराकरोति—**यावत्तस्मान्नैवजात यकेऽप्येतद्भवतीति। तत्र तु कथं तर्हि होमान्न्याय्यं फलमि**त्ययमैकान्तिकः सिद्धान्तवादिनः प्रश्नः। स चाऽऽत्मीयवचनोपसंहारादनन्तरं दुःश्लिष्टः प्रतिभातीत्येषैव ग्रन्थयोजना युक्ततरा। **तच्च कर्मणो न्याय्यमिति** पूर्वपक्षवादिनाऽभिहिते सिद्धान्तवादी दधिपदानर्थक्यभयेन भावार्थाधिकरणन्यायासम्भवाच्छब्दस्यासामर्थ्यं मन्यमानः पृच्छति—**किं दृष्टं हि कर्मणः फलं कृष्यादित** इत्यनेन न्यायेन सामान्यतोदृष्टेन होमात्फलं मन्यस इति। यद्यपि च चोदनालक्षणधर्माभ्युपगमादनुमानादीनामीदृशेष्वर्थेष्वसामर्थ्यं स्थापितम्, तथाऽपि वेदार्थनिर्णये तेषां कारणत्वानिषेधात्तदर्थमनुमानोपन्यासः।

**सामान्यतो दृष्टा अनुमाने हेत्वाभासवर्णनम्**

परः पुनर्भावार्थाधिकरणवासितान्तःकरण आक्षिपन्नाह—मा मे अध्यारोपमेवं दाः। शब्दे सति न ह्यनुमानं ब्रवीमि। न चैतेन सामान्यतोदृष्टेनास्मदभिमतं सिध्यति। असिद्धानैकान्तिकविरुद्धादिदोषदुष्टत्वादनुमानस्य। कथम्? यदि तावद्धोमः फलवान्फलवत्तया दृश्यमानत्वादित्युच्यते। ततः प्रतिज्ञातार्थैकदेशत्वाद-

---

१. क० ब्रूमे इत्यादि। तावत्स्वयमेव।

सिद्धत्वम्। अथ कृष्णादीनां फलवत्तया दृश्यमानत्वादिति ततोऽप्यपक्षधर्मत्वम्। अथ विनैव पक्षधर्मत्वाद्यदृच्छामात्रेण कल्प्येत, ततस्तद् द्रव्येष्वविशिष्टम्।

### सादृश्यमादाय शङ्का

अथ सादृश्यद्वारेणोपमया कल्प्येत्, तच्च सादृश्यं फलवद्भिः कृष्यादिभिः सह होमस्य क्रियात्मना विद्यते, न द्रव्यस्याक्रियात्मकत्वात्, इति। तत्र द्रव्यस्याप्यस्त्येव किञ्चित्सादृश्यमिति मनसि कृत्वा यदि प्रत्यासन्नावान्तरसादृश्यापेक्षया तन्निराक्रियते, ततः शक्यं प्रत्यासन्नतरापेक्षया होमस्यापि निराकर्तुमिति मन्यमान आह—**होमोऽप्यसदृशः** साधनस्वरूपफलभेदात्कृषेः।

**अथ किञ्चित्सादृश्यं गृह्यते**—तद्द्रव्यस्यापि सदनित्यम्, द्रव्यवत्कार्यमित्यादिधर्मभेदादस्तीति पूर्वाभिप्रायविवरणम्। **अथ द्रव्यादन्यत्सदृशतरमस्तीति**—आपेक्षिकत्वात्सादृश्यस्य सुसदृशेऽपेक्षिते विप्रकृष्टं विसदृशमेव भवति। तेन क्रियात्वे कृषिहोमवर्तिन्यपेक्षिते विप्रकृष्टत्वात्सदनित्यादियुक्तं द्रव्यमसदृशमेवेत्युच्यते। तथा सति क्रियान्तरमपि दृष्टार्थभोजनगमनाद्यवान्तरसादृश्यापेक्षया कृषिहोमयोर्विप्रकृष्टत्वादसादृश्यमेवेत्यकारणं स्यात्।

आह च—

> 'नास्मिन्परमसादृश्यं दृश्यते कृषिहोमयोः।
> किञ्चित्सादृश्यदृष्टिस्तु द्रव्येऽप्यस्तीत्यनिश्चयः' ॥ इति।

**न चैतत्सिद्धमिति** उपमानेन, साधर्म्यमात्रानुमानेन वा सर्वधर्मप्राप्तिः, अनुमानोक्तव्याप्यव्यापकभावनिरपेक्षाऽयुक्ता, सर्वपदार्थानामेकत्वप्रसङ्गात्। तथा चोक्तं—न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्य श्यामत्वं भवितुमर्हति।

तथा हि—

> न सास्नानुगतिर्दृष्टा गवये सदृशे गवा।
> प्रकृतेश्च फलादीनि न यान्ति विकृतिं क्वचित् ॥

### अस्य भाष्यस्यावलम्बनावगम्यगमकभावात् न भाष्याभिमत इति केषाञ्चिन्मतस्योपन्यासनिरासौ

**यद्धि यस्य कारणभूतं** दृष्टं, **सिद्धे**—दृष्टान्तधर्मिणि, **तच्चेत्साध्येऽपि**—पक्षे, **कारणभूतमिति** गम्यते, **भवति तत्तस्य साधकमिति**। अतो वचनात्कार्यकारणयोरेव गम्यगमकभावो भाष्यकाराभिप्रेत इति केचिन्मन्यन्ते। तत्त्वयुक्तम्। अकार्यकारणभूतानाप्यनित्यत्वकृतकत्वादीनां गम्यगमकभावप्रसिद्धेः। कार्यकारणयोरपि च न तथा कारणं गमकं व्यभिचारबहुत्वाद्यथा कार्यम्। तस्माल्लिङ्गमेव व्याप्यत्वेन दृष्टं सपक्षे व्यापकस्यान्यत्र साध्यभूतस्य गमकत्वसम्भावनया गृह्यमाणं

कारणमित्युक्तमिति[1] द्रष्टव्यम्। एतच्च हेत्वधिकरणे व्याख्यातम्। तथा च विवृणोति **तस्मात्सदृशमपि[2] साधकमसाधकं वेति परीक्षितव्यमिति।**

**उक्तानुमाने व्यभिचारां भावनम्**

यदि तर्हि परीक्षितेन च[3] कारणेनाभिहितेन कार्यमिदमभिधीयते। 'दध्नेन्द्रियकामस्य' इत्यत्र वाक्ये यत्कर्म तत्फलात्, कर्मत्वात् कृष्यादिवत्। कर्मसाध्यं वेदं फलं फलत्वाद् व्रीह्यादिवत्। इत्येतदनुमाय, अथ **यत्कर्म तत्फलवदिति,** प्रतिसाधनाभिधानेनानैकान्तिकीकरोति, **उपरते कर्मणि द्रव्याणां**—तन्त्वादीनाम्, **तत्संयोगादीनां च द्रव्यान्तरं**–पटादि फलं दृष्टमिति। उपरतग्रहणं च कर्मव्यतिरेकप्रदर्शनार्थम्। एवं हि शङ्क्यते कदाचिदिहापि कर्मनिमित्तमेव फलं वदेत्। तेन ब्रवीति इन्द्रियकामवाक्ये दधि फलवद्द्रव्यत्वात्तन्तुवत्। इन्द्रियं वा द्रव्यजन्यं फलत्वात्पटादिवत्। **अपि च कृषेर्नादृष्टमिति** हेतोर्विरुद्धत्वं वदति। यथैव ह्ययं हेतुः कर्मणः फलवत्त्वं, फलस्य वा कर्मजन्यत्वं साधयति एवं दृष्टार्थफलत्वम्[4]। अशब्दगम्यफलत्व[5] वा साधयति तस्मान्नैवंजातीयके कार्यकारणभावे समस्तहेतुदोषसङ्गादेतद्भवति क्वचिद् दृष्टादन्यत्रादृष्टस्यापि सिद्धिरिति। यद्येतदनुमानं त्वयैव निराकृतं, **कथं तर्हि होमान्न्याय्यं फलमित्युच्यते।**

यद्वा, इतिकरणान्त एव प्रश्नः। उच्यते। **शब्देनावगम्यते तत्फलमिति।** भावार्थाधिकरणोपन्यासेनोत्तरम्। **तस्माद्धोमात्फलमिति न्याय्यम्। दध्नः फलमिति चान्याय्यमि**त्यर्थसिद्धं सद्यदुच्यते, तत्तुल्यबलवत्त्वनिराकरणार्थम्। कदाचिद्धि द्वयमपि न्याय्यं भवेत्।

अपि च **दध्युभयमसमर्थं कर्तुमिति।** न तावत्कर्मानपेक्षस्य दध्नः करणत्वमस्ति। येन केवलं फलसंबन्ध्येव स्यात्। अत उभयत्र विधातव्यम्। न च तच्छक्यमिति। **ननु कम्बलनिर्णेजनवादात** प्रासङ्गिककर्मसंबन्धाभिप्रायेण, वस्त्वसामर्थ्यनिराकरणार्थं वा। तथा हि **दध्युभयमसमर्थमिति**— यथाश्रुतगृहीतेन परवचनेन वस्त्वसामर्थ्यमेवोक्तमिति दृश्यते।

**न ब्रूम एकस्योभयं प्रयोजनं** न युक्तमिति। न वयं वस्तुसामर्थ्यमपह्नुमहे। किं तर्हि ? समर्थेऽपि वस्तुन्यविहितादनुष्ठानादवश्यं दध्युभयार्थत्वेन विधातव्यम्। न चैतदस्ति, अनेकसम्बन्धकरणे वाक्यभेदप्रसङ्गात्। सन्निकृष्टासम्भवेन विप्रकृष्टोऽर्थो विधीयते। तदिह दधिहोमसम्बन्धे संनिकृष्टे, दधिफलसम्बन्धे

---

१. क० कारक। २. क० सादृश्य। एवञ्चेति० मु० पु० पा०।
३. क० तव। ४. क० दृष्टफलत्वं।
५. क० व्रीह्याद्यन्यतम–फलत्वं–इत्यधिकम्॥

समाप्तिभाष्यं कथं तर्हि समर्थनीयमित्याशङ्क्य, द्वेधा समर्थयते—**समाप्तीति**। विशेषणभूतसम्बन्धप्रधानोऽयं निर्देश इत्याशयः। ननु कारकाणामन्योन्यान्वयायोगाद् गुणस्य साक्षात्फले विध्यनुपपत्तेर्भावनायां विधेयत्वात्, प्राप्तायां च तस्यां फलान्वये, गुणान्वये च ज्ञाप्यमाने सकृदुच्चरितस्य वाक्यस्यानेकार्थपरत्वायोगादावृत्तिलक्षणवाक्यभेदापत्तेस्तत्परिहारार्थं गुणफलान्वितापूर्वभावनाविध्यभ्युपगमेऽपि गौरवलक्षणो वाक्यभेदः स्यादित्याशङ्कते—**नन्विति**। पदद्वयान्वयव्यापारस्य पदद्वयसमभिव्याहारलभ्यत्वेनैकार्थवाच्यनेकपदकल्पनाकार्थापत्तिप्रसवशक्तिकल्पनालक्षणगौरवानापादकत्वादनेकार्थविशिष्टैकभावनाविधायकस्य विधिप्रत्ययस्य नैकविधिकल्पकार्थापत्तिप्रसवशक्तिकल्पनाद् गौरवं वाच्यम्। तच्चेह फलान्वयस्याविधेयत्वान्नास्तीत्याशयेन प्रतिज्ञाहेतुप्रश्नपूर्वं परिहरति—**नैष इति**। श्लोकं व्याचष्टे—**बहवोऽपीति**। फलभावनायां प्रवृत्तेर्विध्यनपेक्षत्वोपपादनार्थम्—**यो हीत्युक्तम्**। ननु भावनास्थेऽपि विधित्वे गुणार्थत्वाद्विधेर्भावनायामतात्पर्याद्विधेयस्य च गुणस्य करणत्वात्क्रियात्मकभावनाकाङ्क्षत्वेऽपि प्रकृतस्वर्गफलकभावनान्वयान्नैराकाङ्क्ष्योपपत्तेर्भाव्यानाकाङ्क्षत्वादनुवाद्यायाश्च भावनाया भाव्येन विशेष्टुमशक्यत्वाद्भावनामात्रानुवादेन दधिविध्यापत्तेः, इन्द्रियविशिष्टभावनानुवादोक्तिरयुक्तेत्याशङ्क्य, दधिविशिष्टायां भावनानुवादोक्तिरयुक्तेत्याशङ्क्य दधिविशिष्टायां भावनायां विधेस्तात्पर्यं वक्तुम्—**भावनां विधत्तइत्युक्तम्**। विधिमात्रार्थस्यापि प्रत्ययस्य स्वारसिकफलांशप्रवृत्त्यनुमोदत्वाभिप्रायेणानुवादकत्वोक्तेर्नैकस्य प्रत्ययस्य विध्यनुवादार्थत्वविरोधः।

ननु गुणकामेषु भावनाविध्यभ्युपगमे विहितविध्ययोगाद्भावनाभेदः स्यात्, विधेयायाश्च भावनायाः करणाकाङ्क्षायां प्रत्यासत्तेर्धात्वर्थस्यैव कारणात्वान्न गुणात्फलं स्यादित्याशङ्काद्वयं निरस्यन्नधिकरणार्थमुपसंहरति—**तस्मादिति**। प्राप्तायां भावनायां गुणफलयोर्द्वयोरन्वयायोगादन्यतरानर्थक्यापत्तेः, अभावनान्तरविध्यभ्युपगमेऽपि धात्वर्थस्य प्राप्तत्वेनाविधेयत्वात्करणत्वानुपपत्तेर्गुणस्यैव करणत्वम्, विधेयत्वादेव च धात्वर्थस्याभेदात्तस्यैव चेह कर्मशब्देनोक्तत्वादकर्मान्तरता युक्तेत्याशयः ॥ २६ ॥

इत्यैकादशमिन्द्रियकामाधिकारणम् ॥

भा० प्र०—पूर्वकथित पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि फल सम्बन्ध रहने पर अपूर्व ही कर्म रहेगा—यह बात नहीं है। कारण, "अतुल्यत्वात् तु वाक्ययोः", "अग्निहोत्रं जुहोति स्वर्गकामः" इस वाक्य में फलश्रुति है एवं "दध्ना इन्द्रियकामस्य जुहुयात्" इस वाक्य में भी फलश्रुति है और ये दोनों वाक्य समान नहीं हैं, क्योंकि समीक्षा करने पर शुद्ध कर्म से फल लाभ होता है। 'दध्ना' इत्यादि वाक्य की समालोचना करने पर इस स्थल में गुण से फल की उत्पत्ति कही गयी है। इसलिए "गुणे तस्य प्रतीयेत"—"दध्ना इन्द्रियकामस्य" इस वाक्य में पूर्वोपदिष्ट कर्म का ही गुण में फल सम्बन्ध प्रतीत होने से यह अपूर्व कर्म नहीं है, अपितु गुणफल विधि है। फल के

उद्देश्य से दधिरूप गुण विहित होता है। यदि यह कहा जाय कि गुण अक्रियात्मक होता है अर्थात् क्रियास्वरूप नहीं होता है, अतः फल की उत्पत्ति नहीं हो सकती है। ऐसी स्थिति में यह कहा जा सकता है कि होमरूप क्रिया का आश्रयण कर दधिद्रव्यरूप गुण भी उपदिष्ट फल का जनक होगा। अतः इस स्थल में फल के उद्देश्य से गुण का विधान किया गया है। यदि कहा जाय कि "दध्ना जुहोति" इस वाक्य में पूर्व से ही गुण का विधान किये जाने से वह प्राप्त है। इसलिए इस स्थल में पुनः दही का विधान नहीं हो सकता है, क्योंकि, अप्राप्त का ही विधान होता है, प्राप्त का विधान नहीं होता है। दही रूप गुण इन्द्रियरूप फल का जनक है, वह अज्ञात होने से इस स्थल में इन्द्रियरूप फल के साथ दहीरूप गुण का सम्बन्ध बोधित होता है। किन्तु इसको अपूर्व कर्म की विधि मानने पर मत्वर्थ लक्षणा अथवा गौरव दोष होता है, क्योंकि इसमें "दधिमता होमेन इन्द्रियं भावयेत्" इस प्रकार का वाक्य होना चाहिये।

इस अधिकरण से यह लाभ है कि पूर्वपक्षी के मत में किसी भी समय होम किया जा सकता है, कारण, यह फल के लिए अनुष्ठित होता है। सिद्धान्ती के मत में अग्निहोत्र के समय सायंकाल एवं प्रातःकाल समय में ही नित्य होम में दही का प्रयोग करना चाहिये।

"वाक्ययोः अतुलभ्यत्वात्" = उत्पत्ति विधि एवं गुणविधि का दोनों वाक्य समान नहीं हैं, अतः "तु" = पूर्वपक्ष व्यावर्तक है, "तस्य" = उसका अर्थात् होम का, "गुणे प्रतीयेत"—गुण में फलसम्बन्ध प्रतीत होगा। एकादश इन्द्रिय कामाधिकरण।

दध्यादि द्रव्य का सफलत्वाधिकरण। सिद्धान्त ॥ २६ ॥

## अथ द्वादशं रेवत्यधिकरणम्

## [ १२ ] समेषु कर्मयुक्तं स्यात् ॥ २७ ॥ सि०

**शा० भा०—'त्रिवृदग्निष्टुदग्निष्टोमः। तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत' इति। एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम-साम कृत्वा पशुकामो ह्येतेन यजेत' इति। अत्रायमर्थः सांशयिकः—किं तस्यैवाग्निष्टुतोऽग्निष्टोमस्य गुणाद्वा[1] रवन्तीयात्पशवः फलम्। एतेन यजेतेत्यनु-वादः। अथ किम् 'एतेन यजेतेति विदितस्यैतद्वचनम्, नाविदितस्य। अतो न विध्यन्तरम्। पशुकाम एवं[2] यजेतेत्युच्यते, न यजेतेति। कथं कृत्वा वारवन्तीयं कृत्वेति। अपि चैतस्यैवेति विस्पष्टमकर्मान्तरवचनम्। तस्माद्गुणात्फल[3]मित्येवं प्राप्तम्। एवं प्राप्ते।**

१. ब. गुणेवारवन्तीये। २. ब. एवं कृत्वा। ३. ब. गुणात्फलमिति एवं प्राप्ते।

ब्रूमः—

समेष्वेवंजातीयकेषु भिन्नवाक्येषु कर्मयुक्तं फलं भवेत् एतस्यैव रेवतीषु वारवन्तीयं कृत्वेति । न ह्येतस्य रेवत्यः सन्ति, यास्वस्य वारवन्तीयं भवेत् । तत्र रेवत्यो भवन्ति, तासु च वारवन्तीयं विधीयेतेति वाक्यं भिद्येत । अथोच्यते—अस्य पूर्वा रेवतीरुपादाय तासु च वारवन्तीयं कृत्वा, एतेन यजेतेत्यनुवदतीति । तथाऽग्निष्टोमसामेति नावकल्प्येत । अथाग्निष्टोमसामकार्यं भवतीत्युच्यते, एतस्यैवेत्येतदविवक्षितं स्यात् । उभयस्मिन्विवक्ष्यमाणे[1] भिद्येत वाक्यम् । तस्मात्कर्मान्तरम् ।

अथ कर्मान्तरे कथमवाक्यभेदः । रेवतीषु ऋक्षु वारवन्तीयं साम कृत्वा पशुकामो यजेतेत्यपूर्वो यागः सर्वैर्विशेषणैर्विशिष्टो विधीयते । तेनैकार्थत्वं, विभागे च साकाङ्क्षत्वमित्येकवाक्यत्वमुपपद्यते[2] । नन्वर्थभेदो यागश्चैवं ह्यपूर्वः कर्तव्यः, रेवतीषु वारवन्तीयमपूर्वमिति । नेति ब्रूमः । निर्वृत्तवारवन्तीयरेवतीगुणको यागो विधीयते । न वारवन्तीयनिर्वृत्तिः । अर्थाद्रेवतीषु वारवन्तीयमभिनिर्वर्त्स्यति । शक्यते च तन्निर्वर्तयितुम् । उच्यते । रेवतीनां वारवन्तीयस्य च सम्बन्धो न विहितः स्यात् । तत्र च रेवतीष्वन्यान्यपि सामानि भवेयुः । वारवन्तीयं चान्यास्वपि ऋक्षु । नैष दोषः । कृत्वेत्यभिनिर्वृत्तः सम्बन्धो यागायोच्यते[3], तेन सम्बन्धो गम्यते । द्वावप्येतावर्थौ कृत्वेत्येष शब्दः शक्नोति वदितुमभिनिर्वृत्तिं, पूर्वकालतां च । यथा शोणमानयेति रक्तगुणसम्बद्धोऽश्वः शब्देनैवाऽऽनयतौ[4] विधीयते इति, न वाक्यभेदो भवत्येवमत्रापि द्रष्टव्यम् ।

नन्वेवमपि बहवोऽर्था रेवत्यो वारवन्तीयं सत्सम्बन्धो, यागः, पशुकामश्चेति । नैष दोषः । बहवः श्रूयन्ते । एकोऽत्र विधीयते यागो विशिष्टः । ननु रेवत्योऽपि विधीयन्ते, वारवन्तीयमपि । यदि न विधीयेरन्नैव तद्विशिष्टो यागः प्रतीयेत । न ह्यविधाय विशेषणं, शक्यते विशिष्टो विधातुम् । तस्माद्बहुषु विधीयमानेषु नैकार्थ्यम् ।

अत्रोच्यते । अर्थ इति प्रयोजनमभिधीयते । यावन्ति पदान्येकं प्रयोजनमभिनिर्वर्तयन्ति, तावन्त्येकं वाक्यम् । न चात्र बहूनि प्रयोजनानि । न ह्यत्रानेकस्याभिप्रेतस्यानेकं पदं विधायकमस्ति । रेवतीष्विति नैतत्केवलं रेवतीनां विधायकम् । रेवतीषु वारवन्तीयमित्यत्रापि पदद्वये वारवन्तीयशब्दो द्वितीयान्तः । तस्मात्सम्बन्धोऽभिप्रेतो गम्यते । प्रातिपदिकार्थेऽस्याव्यतिरेकात् ।

---

१. ब. विवक्षिते । २. ब. इत्येकं वाक्यमुपपद्यते ।
३. ब. यागस्याच्येत । ४. ब. अ नयतो ।

कृत्वेत्यपि करोतिर्न सम्बन्धमात्रे पर्यवसितः परप्रयोजनसम्बन्धमाह। एवं विशिष्टस्तु यजतिर्न परार्थः। तदेकमेषां पदार्थानां प्रयोजनम्। तस्मादेकवाक्यत्वम्। गुणे पुनः फले प्रकल्प्यमानेऽग्निष्टोमसाम्नः कार्ये वारवन्तीयम्। एतस्य च यदग्निष्टोमसामेति वाक्यभेदः स्यात्। अथोच्यते, रेवत्यादिसर्वविशेषणविशिष्टो याग एतस्याग्निष्टुतो विधीयेत। तथाऽपि पशुकामसम्बन्धाद् भिद्यते[1] शक्यम्। अथैवमुच्येत। रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेतेति। नैवं शक्यम्। ऋगन्तरप्रगाणाद्विशेषहानाद्वैगुण्यं स्यात्।

नन्विदानीमेवोक्तं शक्यते हि रेवतीषु वारवन्तीयं कर्तुमिति। सति वचने असति वचने न वारवन्तीयग्रहणेन गृह्यते। वचनं तर्हि भविष्यति। पशुकामो रेवतीषु वारवन्तीयमभिनिवर्तयेत्। ततो यजेतेति यजतिरनुवादः। यदि वचनं रेवतीषु वारवन्तीयसम्बन्धस्य, सिद्धं कर्मान्तरं, नाग्निष्टुतो गुणविधिः। ननु ततो यजेतेति यागानुवादाद्यागेनास्याङ्गप्रयोजनसम्बन्धोभविष्यति। नैवं शक्यम्। यागं प्रत्यङ्गभावे[2] पशुकामं प्रत्यसम्बन्धः[3]। उभयसम्बन्धे वाक्यं भिद्येत।

अथ यागसम्बन्धोऽनुवादः प्रकरणेन[4] चाङ्गता। नेदमुपपन्नम्[5]। प्रकरणाद्धि वाक्यं बलवत्तरम्। तस्मात्कर्मान्तरंयागगुणकं वा रेवतीषु वारवन्तीयं, तद्गुणको वा यागः। तत्र यागपशुकामयोः सम्बन्धस्य विधात्रीं यजतेरुपरितनीं विभक्तिमुपलभामहे लिङ्गम्। न तु रेवतीवारवन्तीयसम्बन्धस्य विधायकं साक्षात्किंचिदुपलभ्यते तस्मात्सर्वविशेषणविशिष्टो यागः पशुकामस्य विधीयत इति सिद्धम्।

अथ पुनर्विशिष्टे यागे विधीयमाने तद्रेवतीषु वारवन्तीयं कथमग्निष्टोमसाम भवतीति। उच्यते। वचनादग्निष्टोमसाम्नः कार्ये भविष्यतीति। किमिव[6] हि वचनं न कुर्यात्। नास्ति वचनस्यातिभारः। अथ यदुक्तमेतस्यैवेति। अनन्तरापेक्षं वचनमिति। तत्राप्यविरोधादेतद्धर्मकस्येति[7] लक्षणाशब्दो भविष्यति। तस्मान्न गुणात्फलम्[8]। कर्मान्तरमेवंधर्मकमिति, सिद्धं समेष्वेवंजातीयकेषु कर्मयुक्तं फलमिति ॥ २७॥

इति द्वादशं रेवत्यधिकरणम् ॥ १२ ॥

---

१. ब. भिद्येतैव। २. ब. प्रत्यगभावेविधीयमाने। ३. ब. असम्बन्धः प्राप्तः। ४. ब. प्रकरणाच्चांगतेति। ५. ब. तदुपपन्नम्। ६. ब. किंनुवचनं। ७. ब. तन्न्यायविरोधात्। ८. ब. गुणेफलं।

## अथ द्वादशं रेवत्यधिकरणम्

त० वा०—इदानीमस्यापवादार्थमुत्तरमधिकरणमारभ्यते। तत्र विषयं तावद्दर्शयति—'त्रिवृदग्निष्टुदग्निष्टोमः' 'तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत्' इत्येतमग्निष्टुतं प्रकृत्य वारवन्तीयमग्निष्टोमसाम कार्यम्—इति च गुणं विधाय पुनर्ब्रवीति—'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। तत्रापि पूर्ववदेव संदेहः किं गुणविशिष्टो यागः पूर्वस्माद्व्यतिरिक्तश्चोद्यते? किं वा पूर्वस्यैव गुणादिन्द्रियवत्पशवः फलमिति। किं तावत्प्राप्तं? समस्तेनैव पूर्वाधिकरणेन गुणात्फलमिति।

तथा हि—

रेवतीवारवन्तीयसम्बन्धव्यापृते विधौ।
श्रूयते फलमत्रापि यागोऽतो न विधीयते॥
रेवतीवारवन्तीयसम्बन्धं च करिष्यति।
विनैव प्रत्ययावृत्त्या कृत्वा शब्दः पृथक्श्रुतिः॥

यस्तु रेवतीवारवन्तीयसम्बन्धोत्पत्तिविधानात्, तस्य च फलं प्रति विधानात्प्रत्ययावृत्तिलक्षणो वाक्यभेद आशङ्क्यते, सोऽपि नाऽऽशङ्कितव्यः, स्वयमेव वेदेन तत्फलस्योपात्तत्वात्। रेवतीषु वारवन्तीयं कृत्वेति निष्पादिते हि सम्बन्धे यजेः परेण लिङा फलसम्बन्धः केवलः कर्तव्यः। तेन नाऽऽवृत्तिदोषो भविष्यति। तत्राप्याधारनिर्देशाद्रेवतीनां परार्थता, प्राधान्याद्वारवन्तीयं फलं प्रति विधीयते। गुणोपादानवशेन धात्वर्थादुत्तारितो विधायकः फलाय गुणं विदधद्यदन्यत्राज्ञातशेषत्वं विधत्ते। रेवत्यश्च सप्तमीनिर्देशाद्वारवन्तीयशेषभूतत्वात्प्रयोजनान्तरमनपेक्षमाणा न फलेन सम्बध्यन्ते। तद्गुणकं तु वारवन्तीयं द्वितीयानिर्देशादवगतप्राधान्यं करोत्यभिहितां भावनां प्रति धात्वर्थस्थानीयं प्रतीयमानं प्रयोजनापेक्षत्वात्फलवत्तां प्रतिपद्यते।

अथवोभय[1]तिरस्कारेणात्रापि सम्बन्धादेव फलमिति वक्तव्यम्। एवं च सति विपरिवृत्तिप्राप्तो यजिः प्रकृतार्थावलम्बी वैतच्छब्दः। तस्माच्च यजिसमानाधिकरणात्परा षष्ठी फलवता गुणेन सह प्रकरणात्प्राप्तमाश्रयाश्रयिसम्बन्धं वदन्ती प्रमाणाभावाच्चाऽऽश्रयान्तरासंबन्धात्तन्निवृत्तिरूपप्रवृत्त एवकारः पूर्वोच्चरितेन वचनान्तरेण च प्राप्तमग्निष्टोमसंबन्धविशिष्टं वारवन्तीयमित्यादि[2] सर्वकर्मान्तरत्वान्नित्यप्राप्तमनूद्यमानं न प्रत्ययमायासयिष्यति। कर्मान्तरपक्षे तु सर्वमप्राप्तत्वाद्विधातव्यम्। न च तल्लभ्यते। कुतः?

---

१. क० अथचोभय। २. क० इत्यादिवत्।

एकशक्तिः स्वभावेन सर्वदैव विधायकः ।
अल्पार्थविधिसंतुष्टो नानेकार्थविधिक्षमः ॥

तेन कृत्वाशब्देन रेवतीनां वारन्तीयसंबन्धमात्रम्, लिङ्गा च फलसम्बन्धमात्रं विधीयत इति ज्यायान्गुणविधिपक्षः । सर्वे चैतेऽनुवादा यज्यनुवादेनैव तन्मूलत्वात्प्रदर्शिता भवन्तीति, न भाष्यकारेण प्रत्येकमुपवर्णिताः । तस्मान्न कर्मान्तरमिति प्राप्ते ।

अभिधीयते—

### सिद्धान्तः

आश्रयत्वेन गृह्णाति यो गुणः प्रकृतां क्रियाम् ।
तत्संस्बन्धानुवादत्वात्तत्र भेदो न गम्यते ॥

इदं तावद्वाक्यमेतस्यैव रेवतीष्वित्यादि यजिमच्छ्रूयते । स च यजिर्यादृगत्र श्रूयते, तादृग्यदि कुतश्चित्प्राप्तः, ततः शक्यकर्मान्तरत्वमध्यवसातुम् । तद्यथा—दधिहोमसंबन्धा[1]लाभादिन्द्रियकामवाक्ये । श्रुतफलसंबन्धमात्रे वाक्येन विधीयमाने, प्रकरणादेवाऽऽश्रयापेक्षायां[2] लब्धो होमसंबन्ध इत्यनूद्यते । शक्नोति हि दधि साक्षादेव होमं निर्वर्तयितुम्, न तु रेवतीगुणकं वारवन्तीयं यागनिर्वृत्तिसमर्थम्, अद्रव्यदेवतात्मकत्वात् । तथा हि—

देवताद्रव्यकर्तृभ्यो नातिरिक्तमपेक्षते ।
यागः साधनमित्येवं साम्ना नैवैष साध्यते ॥

तस्मात्प्रकरणवशेन बुद्धावुपप्लवमानोऽपि यागः सामाश्रयत्वमयोग्यत्वादप्रतिपद्यमानो न रेवतीवारवन्तीयवाक्ये शक्योऽनुवदितुम्. प्राप्तिप्रमाणाभावात् ।

यत्तु वारवन्तीयस्य साध्यत्वेनाऽऽश्रयत्वप्रतिपत्तिक्षमं स्तोत्रम्, न तस्य प्रकरणम् । आतिदेशिकत्वादग्निष्टुति स्तोत्राणाम् । आह च—

'स्तोत्रसाधनभूतत्वं साम्नो योग्यतया स्थितम् ।
स्तोत्रं च प्रकृतं नास्तीत्याश्रयो न प्रतीयते ॥' इति ।

### शङ्का

अथोच्येत यथाऽनेन शक्यते यागः कर्तुम्, तथा कुर्वदाश्रयिष्यति । यथा च शक्नोति याग आश्रयत्वं प्रतिपत्तुम्, तथा प्रतिपत्स्यते । सर्वाख्यातसहकारिशक्त्यनुसारेणावगमात् । 'आनर्थक्यात्तदङ्गेषु' इत्यनेन न्यायेनाङ्गभूतस्तोत्रद्वारेणाऽऽश्रयाश्रयिसंबन्धः सेत्स्यतीति ।

---

१. क० दधिहोमसंबन्धादिन्द्रिय । २. क० आश्रयापेक्षया ।

### तन्निरासः

तदनुपपन्नम् । उक्तं ह्येतत्—

तन्नामाङ्गेषु कल्प्येत यदङ्गत्वेन चोदितम् ।
प्राधान्यावस्थितं यत्तु तदङ्गं नोपसर्पति ॥

'सप्तदशारत्निर्वाजपेयस्य यूपः' इति सप्तदशारत्नित्वं गुणत्वेन चोद्यमानं साक्षाद्वाजपेयस्यासंभवाद्यथा शक्नोति, तथोपकरिष्यतीत्यध्यवसानात्तदङ्गपशुयूपाङ्गत्वेनावधार्यते । यदि तथैव वारवन्तीयमपि यागाङ्गत्वेन चोद्येत, ततस्तत्रासंभवात्तदङ्गानि स्तोत्राण्युपसर्पेत् । इदं पुनः फले विहितं गुणभूतां क्रियामाश्रयत्वेनोपेक्षमाणं यदि योग्यां लभते, ततो गृह्णाति । अथ न लभते ततो वाक्यादर्थान्तरत्वं प्रतिपद्यते । न चैतदन्यथाऽनर्थकं भवति । कर्मान्तरविधाने सुतरामर्थवत्त्वात् । अत्यन्तभेदाच्च यागस्तोत्रयोर्न स्तोत्रे साधिते, यागः साधित इति शक्यं वक्तुम् । तत्र यथैव क्रत्वन्तरे श्रुतम्, क्रत्वन्तरे क्रियेत तादृगेवैतत्स्यात् । वाजपेयस्येति तु सामान्यसम्बन्धमात्रवाचिनी षष्ठी पारम्पर्याद्यागेऽप्यविरुद्धेति वैषम्यम् । यद्यपि स्तोत्रद्वारेण क्रतोराश्रयत्वं स्यात्, तथाऽपि सर्वस्तोत्रेषु प्रसज्यमानेष्वग्निष्टोमसोमत्यनर्थकं भवेत् । तत्राग्निष्टोमसाम्नि वाक्येनैवाऽऽश्रये कल्प्यमाने वाक्यभेदः, पुनरपि च वाक्येनाग्निष्टोमसाममात्रसंबन्धेऽवगम्यमाने यद्येतस्यैवेति विशेष्यते, ततोऽपि वाक्यभेदः । एतस्यैवेति च[1] पूर्वं संबन्धे, तथैव सर्वतदीयस्तोत्रसंबन्धापत्तेरग्निष्टोमसामेति विशेषणात्, स एव वाक्यभेदः । ऋक्सामसंबन्धकरणकृतं चातिगौरवं स्थितमेव ।

ननु चास्मिन्नग्निष्टुत्याश्रयत्वेन लब्धे पूर्वविधिनैव शेषमवाप्स्यते । वारवन्तीयं हि क्रतुमाश्रयद्यत्र स्थाने स्थितं साधयद् दृष्टम्, न[2] ततोऽन्यत्र भविष्यति । क्रतुरपि च तन्नान्यस्तोत्रगामित्वेनापेक्षिष्यते । प्रकृतक्रत्वग्निष्टोमसामसंबन्धि वारवन्तीयातिक्रमकारणाभावाच्च न क्रत्वन्तरस्तोत्रान्तरसंबन्धाशङ्का । नैतदेवम् । यदि हि वारन्तीयाग्निष्टोमसामविधिवाक्यं रेवतीवाक्येनापेक्ष्यते, तत एवं विज्ञायेत । न तु तदपेक्षाऽस्ति । गुणादिवाक्यानां परस्परसंबन्धाभावादित्युक्तं प्राक् । पूर्वसंबन्धविलक्षणश्चायं क्रतोर्वारवन्तीयेन संबन्धो न तत्कल्पितस्थानविषयत्वं प्रतिपत्स्यते । कर्माङ्गभूतस्य हि तस्यैतत्क्रमत्वग्निष्टोमसामत्वं विज्ञातम् । इदानीं पुरुषार्थभूतत्वाद्वेदस्तावन्न तदेव स्थानं कल्पयति । सामान्यतोदृष्टकल्पनायाश्चैवंजातीयकेष्वप्रमाणत्वमुक्तम् ।

आह च—

फलाय विहितं साम स्वतन्त्रं रूपमात्रतः ।
वेदस्वाध्यायमेवैकमुत्पत्त्यर्थमपेक्षते ॥ इति ।

---

१. क० चापूर्वसंबन्धे । २. क० नेति ।

यदि वारवन्तीयमग्निष्टुत्येव प्रथममुत्पाद्येत, ततो गत्यन्तराभावादनुक्तमपि तद्विषयं विज्ञायेत । इदं पुनः समाम्नायमात्राधीनोत्पत्ति तत एव गृहीत्वा फलाय चोद्यते । तत्र क्रत्वन्तरस्तोत्रान्तरैरेतत्क्रत्वग्निष्टोमसाम्नो न कश्चिद्विशेषः । यदि च वारवन्तीयसंस्कारः कश्चिद्विधीयेत, ततः कथंचिद्व्रीहिप्रोक्षणादिष्विव प्रकृतप्रत्ययो भवेत् । न चैवमस्ति । तस्मान्नाग्निष्टोमसामसंबन्धसिद्धिः ।

ननु च पुरुषार्थमपि सदेतत्क्रतुमसाधयन्न शक्नोति पुरुषार्थं भवितुमिति, प्रासङ्गिक्यां क्रतुसिद्धौ पूर्वक्लृप्तं स्थानं लभ्यते[1] । यथेज्यार्थे दधिपयसी प्रणीताधर्मानुपलभेते । तत्रैवैतद्भवति, यत्र गुणभूता धर्मा भवन्ति । न चेहाग्निष्टोमसामत्वं नाम वारवन्तीयस्य गुणः । प्रकरणग्रहणे हि सति गुणत्वमपि स्यात् । तदेव त्वद्याप्यसिद्धावस्थम् । यदि तु केनचित्प्रकारेणाग्निष्टोमसामसंबन्धोऽवगम्यते, ततस्तद्धर्मास्तस्य प्रणीताधर्मवन्नैव कश्चिद्वारयिष्यति । तस्मान्नैषोऽपि परिहारो भवतीति, अपूर्वकर्मविधिनैवैकवाक्यत्वमुपपादनीयम् । तथा सति हि यद्यपि सर्वमप्राप्तम्, तथाऽपि विशिष्टविधिना शक्यं विधातुम् । किं पुनर्यदा निकायित्वात्पूर्वाग्निष्टुद्धर्मेष्वत्रादिम्यमानेषु बह्वेव प्राप्तम् । एतच्छब्दस्तावद्धर्मलक्षणयाऽनुवादो भविष्यति । न चानुवादे लक्षणादोषः । प्रस्तूयमानकर्मवचनत्वेन वा 'अथैष ज्योतिः' इत्यादिवन्मुख्यरूपेणैव वर्तिष्यते । तदा[2] वारवन्तीयं क्रत्वर्थभूतमतिदेशेनैव प्राप्नोतीति तदप्यनुवदिष्यते । कृत्वाशब्दकल्पितरेवतीवारावन्तीयसंबन्धविशिष्टयागमात्रविधानात्तु लाघवं विधेः ।

नन्वग्निष्टोमसाम्नो रेवतीवारवन्तीयसंबन्धो यागश्चात्र विधीयत इत्यन्यैर्विशिष्टविधिभिर्वैषम्यं विधायकस्य स्यात् । तथा हि—

नैकप्रयत्नसाध्यत्वं क्रियान्तरविशेषणे ।
तेन क्रियां विधायाऽन्यस्तत्र कार्यः पुनर्विधिः ॥

यान्येकक्रियाविशेषणानि भवन्ति, तानि तया विधीयमानयाऽर्थादाक्षिप्यमाणानि न विधायकव्यापारं भिन्दन्ति । क्रियान्तरविशेषणे पुनर्विधीयमाने तया क्रियया संबन्धरहितयाऽनाक्षिप्यमाणे, अवश्यं विधायकस्याऽऽवृत्तिरेष्टव्येति वाक्यभेदः प्राप्नोत्येव ।

नैष दोषः ।

कृत्वा शब्दार्थमेवैकं गृह्णीते भावनोत्तरा ।
सोऽपि स्वगोचरप्राप्तं ग्रहीष्यति विशेषणम् ॥
नवेन क्रतुना पश्चादृक्सामग्रहणे कृते ।
क्लृप्तस्थानेन साम्नैव रेवतीस्थानकल्पना ॥

---

१. क० लप्स्यते । २. क० तदत्रक्रत्वर्थमग्निष्टोमसाम्नैव संबद्धम् ।

रेवतीवारवन्तीयसंबन्धं निष्पाद्य, उत्तरभावनापेक्षोऽवस्थितः स्वविशेषणविशिष्टः कृत्वाशब्दार्थः क्रतुना गृह्यते । अतश्च स्वविशेषणाक्षेप एव क्रतोः । स तु तत्संबन्धं साक्षादनुपजीवन्गुणभूतत्वादङ्गेषु निक्षिपन्नतिदेशविज्ञातस्थानावारवन्तीयवशेन रेवतीरपि तद्विषयाः कल्पयति । तेन यद्यप्यत्र वाक्येऽग्निष्टोमसाम न विधीयते, तथाऽपि क्रतुविशेषणमपि तन्न संक्रामतीत्यदोषः । अतश्च प्रकृतयागसंबन्धस्त्वत्पक्षे वारवन्तीयस्य नास्ति ।

पश्य— आत्मना ह्यक्रियारूपैर्गुणैराश्रीयते क्रिया ।
वारवन्तीयगीतेस्तु क्रियया किं प्रयोजनम् ॥

दधिगोदोहनादीनि क्रियया विना करणत्वमलभमानानि तामपेक्षन्ते । वारवन्तीयं पुनर्गायतिधातुवाच्यक्रियात्मकत्वाद्विनैव क्रियान्तरेण यागवत्फलभवनसमर्थमित्यनपेक्षत्वाद्यागेनासंबध्यमानं स्वतन्त्रमेव रेवतीषु गीयमानमग्निष्टुत्प्रयोगाद्बहिरेव फलं साधयेत् । ततश्चैतस्यैवेति चाग्निष्टोमसामेति च कृत्वाशब्दश्च यजेतेति च सर्वमसंबद्धं स्यात् । तस्माद्यागात्फलम् । स च पूर्वविलक्षणविशेषणविशिष्टत्वात्कर्मान्तरम् ।

**समेष्विति**—अयोग्यत्वाद्यागगुणयोराश्रयाश्रयिसंबन्धानपेक्षत्वाभिप्रायम् । क्रियात्मकत्वाद्वा क्रियान्तरानपेक्षत्वमुच्यते । **भिन्नवाक्येष्विति** । पक्षद्वयेऽपि गुणफलसंबन्धस्य यागान्तरविधानस्य वाऽर्थान्तरत्वात्सेत्स्यत्येव लक्षणतो वाक्यभेदे पूर्वक्रतुसंबन्धे भवत्येव किंचिदेव वाक्यरूपम् । क्रत्वन्तरसंबन्धे त्वत्यन्तभेद इत्यभिप्रायः । **न ह्येतस्य रेवत्यः सन्ति**—आनन्तर्यात्तावदेषा वचनव्यक्तिः प्रतिभाति, एतस्य या रेवत्यस्तासु वारवन्तीयं कृत्वेति । तत्र यद्यपि प्रकरणलभ्यत्वादेतस्येति विशिष्टानुवादो न वाक्यं भिनत्ति, तथाऽपि रेवतीस्वरूपकर्तव्यतैव तावदप्राप्तेति नानूद्यते । तत्र रेवत्यः प्रयोक्तव्याः, तासु च वारवन्तीयमित्येको वाक्यभेदः, एतच्छब्दवैयर्थ्यं च । अथ त्वेतच्छब्दानुग्रहार्थमेतस्य रेवत्यः कर्तव्याः, तासु च वारवन्तीयं, तच्च फलायेति विधीयते यजिश्चानूद्यत इति, तथाऽप्यर्थत्रयनिमित्तवाक्यभेदाभ्युपगमेनाग्निष्टोमसामसंबन्धो विधातुमनुवदितुं वाऽशक्यत्वादुभयथाऽपि नावकल्पते । अथ सोऽपि विधीयेत, तथा सति पूर्वस्माद्विध्यपगमादग्निष्टोम[1]-साममात्रप्रसङ्गादेतस्यैवेत्यनर्थकं, विधीयमाने वाक्यभेद इत्येका ग्रन्थयोजना ।

अथवा—यथाक्रमावस्थित एवैतच्छब्दो रेवतीविशेषणं, स तथाभूतएवाभ्युपगम्यते । ततश्चैवं वचनं व्यज्यते—एतस्य या रेवत्यस्तासु वारवन्तीयमग्निष्टोमसाम कृत्वेति । तत्तु[2] कस्य क्रतोरित्यविशेषणादेतच्छब्दस्य च रेवतीविशेषणत्वेनोपक्षीणत्वादेतस्याग्निष्टोमसामेति न लभ्यते । तद्विवक्षायां वा पुनरपि वाक्यभेदः ।

---

१. क० अग्निष्टोममात्र प्रसङ्गात् । २. क० तत्र ।

इहैव सर्वाः पूर्वपक्षवचनव्यक्तीर्निराकृत्य, सिद्धान्ते कथमवाक्यभेद इति प्रष्टव्ये पूर्वपक्षवादी विस्मितः पृच्छति। तथा नाम संप्रति[1] विहिते सति अनेनाऽऽकाश एवेयन्तो वाक्यभेदा इन्द्रजालवदेव दर्शिताः। ततः पृच्छामि तावदेतस्य कथमवाक्यभेद इति। सिद्धान्तवादी त्वप्राप्तकर्म विधीयते। विशिष्टविधानोपपत्तौ सत्यामेकार्थत्वादित्याह।

**वारवन्तीयोद्देशेन रेवतीविधानायेति शङ्का**

नन्वर्थभेद इति—क्तान्ताख्यातोपात्तभावनाद्वयैकवाक्यत्वासंभवाभिप्रायेण। **नेति ब्रूम** इति—गुणभूतैकभावनाविशिष्टप्रधानभूतभावनान्तरविधानाभिप्रायम्। **रेवतीनां वारवन्तीयस्य[2] च सम्बन्धो न विहितः स्यादिति**—विशेषणविशेषणानामविधेयत्वल्लिङ्ग तावन्न विधीयते। क्त्वाशब्दश्च नैव विधौ स्मर्यते। तेन यद्यपि सम्बद्धा भावनाऽभिधीयते तथाऽपि। विध्यधीनप्रवृत्तित्वात्पुरुषः सतीमपि तामसतीमिव प्रतिपद्यते। तेन[3] यागभावनामात्रविशेषणत्वाद्रेवतीवारवन्तीययोस्तदबहिर्भावमात्रेण प्रयोक्तव्ययोरन्योन्यनियमप्रमाणाभावादेकस्तोत्रविषयत्वे, तदेकदेशनियमे चासति रेवतीषु ऋक्ष्वन्यान्यपि गायत्रामहीयवादीनि सामानि प्राप्नुवन्ति। सामापि वारवन्तीयमन्यास्वावापभूतासु गायत्रीबृहत्यनुष्टुप्सु प्राप्नोति। तत्र रेवतीषु वारवन्तीयमिति सम्बन्धप्रतीतिर्व्यर्था स्यात्। अतो वारवन्तीयमेव यथावधूतस्थानमुद्दिश्य रेवत्यो विहिता इति।

**क्त्वा शब्दस्य विधायकत्वाभावेऽपि फलतोविधायकत्वमिति तन्निराशः**

नैष दोषः—

विधित्वं यद्यपि श्रुत्या न क्त्वेति ब्रवीत्ययम्।<br>
तथ्याऽप्येवंविधे तस्य विधित्वं फलमिष्यते॥

सर्वत्रैव यत्रेदं कृत्वेद कुर्यादिति श्रूयते। तत्र यदि तावत्त्वान्तधातुवाच्या क्रियाऽन्यत एव प्राप्ता, ततो निमित्तार्थं श्रवणं भवति। अथ तु न प्राप्ता, तत उत्तरस्याः करणं पूर्वनिर्वृत्त्युत्तरकालत्वेन विहितं तामननुष्ठाय यथा कर्तुं न शक्यत इत्यर्थादवश्यं कर्तव्या सती विहितवद्विज्ञास्यते। न चेह रेवतीवारवन्तीयसम्बन्धः प्राग्विधेः कुतश्चित्प्राप्तो, येन निमित्ततयाऽऽश्रीयेत। तस्मादनुष्ठेय एव विज्ञायते। यदि तर्ह्यनुष्ठेयत्वेन सम्बन्ध उपपन्नः कथमुत्तरयाऽनुष्ठेयत्वोपात्तयैव सह सम्बध्यते।

तदर्थमाह—**द्वावप्येतावर्थौ क्त्वेत्येष शब्दः शक्नोति वदितुमिति**। कथमेकनानेकार्थावगतिरिति चेदत आह—दृष्टा हि क्वचिदियमपि गतिः। **यथा शोण-**

---

१. क० सुप्रतिविहिते। २. क० वारवन्तीयस्यासम्बन्धो।

३. क० तेनप्रतिपद्ययागभावना।

**मानयेति** । प्रमाणान्तरप्राप्तेऽप्यानयतौ रक्तोऽश्वश्चोद्यमानो न रक्ताश्वशब्दाभ्यामिवाभिहितो वाक्यभेदं जनयति । तथाऽत्र त्वाशब्दोपात्ता निर्वृत्तिः, पूर्वकालत्वं चेति ।

**तत्रैव प्रकारान्तरवर्णनम्**

अथवा ।

तत्रैव न विधीयेत विशेषणविशेषणम् ।
यत्र द्रव्याङ्गभूतं तन्न कर्माङ्गं प्रतीयते ॥

"तत्रैकत्वमयज्ञाङ्गभूतमर्थस्य गुणभूतत्वात्" इति द्रव्यविशेषणानां विध्यसंस्पर्शो[1] वक्ष्यते । रेवतीवारवन्तीयसम्बन्धस्तु करोतेर्विशेषणम् । सामान्यभूतत्वाच्च करोत्यर्थस्तद्रहितो नानुष्ठेयत्वं प्रतिपद्यते । तेन मृष्यामहे हविषा विशेषणमितिवद्यजिभावनाविशेषणस्य करोत्यर्थस्यावश्यं रेवतीवारवन्तीयसम्बन्धविशिष्टताऽभ्युपगन्तव्या । तथा च क्रियाविशेषणानामपि प्रयाजादीनां विशेषणानि द्रव्यदेवतादीनि दर्शपूर्णमासादिषूपयोक्ष्यन्ते । तस्मान्निष्पन्नसम्बन्धविशेषितायां भावनायामृक्सामयोर्नियमः सेत्स्यति । क्त्वाशब्दश्चात्र प्रतिपत्तिक्रमनियमनिर्वृत्त्यर्थ एव द्रष्टव्यो, नानुष्ठाननिर्वृत्त्यर्थः । अग्निष्टोमसाम्नः प्राग्यागादप्रयोगात् । अतो नैवं विज्ञायते रेवतीषु वारवन्तीयं प्रयुज्य यष्टव्यमिति । किं तर्हि ? एवं करिष्यामीति परिकल्प्य यागः प्रक्रमितव्य इति । **नन्वेवमपीति** । यावदभिधेयं विधिकल्पनादनेकार्थत्वान्नैकवाक्यत्वमिति मन्यते । **नैष दोष इति** । न तावदभिधेयनानात्वेनानेकार्थत्वं भवतीत्युक्तम् । अथ प्रयोजनभूतविधेयनानात्वमेव मन्येथाः । तत्रोच्यते—

श्रूयन्ते बहवोऽत्रार्था एक एव विधीयते ।
विशिष्टा भावना सा च याग इत्युपलक्षिता ॥

**ननु रेवत्योऽपि विधीयन्त** इति । यदि श्रुतमात्रानुपात्येवानेकार्थत्वं भवेत्, तत एष परिहारः स्यात् । एते तु सर्वे विधीयमानत्वात्प्रयोजनभूतास्तस्मादनेकार्थत्वमस्त्येवेति । उच्यते—

विधेयमात्रमप्यत्र नार्थ इत्यभिधीयते ।
प्रधानविधियुक्तोऽर्थः स चैकोऽत्र विधीयते ॥

तदाह **न ह्यत्रानेकस्य** प्रयोजनत्वे**नाभिप्रेतस्यानेकं पदं** विधायकमिति । तथा ह्यवान्तरकर्मत्वात्तत्क्रियाणां न प्राग्यजिभावनातः पर्यवसानम् । विशिष्टविध्युत्तरकालं तु न किंचिदपेक्ष्यते । तस्मात्सिद्धमेकार्थत्वादेकवाक्यत्वम् । गुणविधित्वे चोक्ता वाक्यभेदाः ।

---

१. क० विध्यसम्भवो ।

**अथोच्येत** इति । एतच्छब्दसमर्थनार्थम् । सिद्धेऽपि कर्मान्तरत्वे कर्मयुक्तफल-पक्षात्पक्षान्तरमिति निराक्रियते । तत्रैषा वचनव्यक्तिः—रेवतीषु वारवन्तीय-मग्निष्टोमसाम कृत्वा, एतस्याङ्गत्वेन यजेतेति । किमेवं भविष्यति प्रकरणं तावन्न बाधिष्यते । एतस्यैवेति च प्रकृतग्राहि समीपस्थितसंबन्धिपदमनुग्रहीष्यते । तत्रो-च्यते । न पशुकामपदानर्थक्यप्रसङ्गात् । तदपरित्यागे वाक्यभेदप्रसङ्गः । न ह्येकस्य[1] क्रतुं फलं च प्रति युगपद्विधानमवकल्पते ।

**अथैवमुच्येत रेवतीषु कृतेनेति ।** प्रथमोपन्यस्तमेव पक्षं दोषान्तराभिधित्सया पुनरुपन्यस्यतीति केचित् । अथवा नैवम् । कथं तर्हि गुणकामेषु याज्ञिकानां द्वयी प्रतिपत्तिः, केषांचिन्मीमांसकवदेव गुणात्फलम् । अपरेषां तु गुणः क्रत्वर्थ एव, तद्वस्तु क्रतोः फलान्तरसंबन्धः । अत्रैषा वचनव्यक्तिः । नित्यं तावदनेन ब्रह्म-वर्चसकामो यजेत । यदि तु पशुकामः स्यात् ततोऽनेनैव रेवत्यादिविशिष्टेनेति । तथा सति च—

प्रत्ययः संनिकृष्टार्थविधिं तावत्करिष्यति ।
न चान्यपर उत्पत्तिं विधानाच्च विशिष्टता ॥

यागं हि फले विदधत्प्रत्ययो न विप्रकृष्यते । न चानुत्पत्तिपरः सन्नुत्पत्तिमपि कल्पयिष्यति । अनेकार्थविधानं च यथैवौत्पत्तिविधौ कर्मविधाननिमित्तं लभ्यते, तथा फलविधावपि फलोद्देशेन कर्मविधानादित्येवं मन्यमानो वदति—**अथ रेवतीषु कृतेन वारवन्तीयेन पशुकामो यजेतेति ।** स्तोत्रद्वारेण यागसाधनत्वोपपत्तेः करण-तृतीयैवैषा । अथवेत्थंभूतलक्षणा । अनेनैवेत्थंभूतेन पशुकामो यजेतेति । तत्रोत्तरम् । **नैवं शक्यम् ऋगन्तरप्रगाणाद्विशेषहा नाद्वैगुण्यमिति ।** यदि तदेवेदं कर्म, ततस्तस्य वायव्यास्वग्निष्टोमसाम विहितं । तदृगन्तरे रेवत्याख्ये गयिमानं पूर्वविहितवायव्याख्यविशेषहानाद्विर्गुणं भवेत् । नन्विदानीमेवाऽऽत्मीये पक्षे भवतैव तत्र रेवतीषु ऋक्ष्वन्यान्यपि सामानि प्राप्नुवन्त्येवं पर्यनुयुक्तेनाभिहितम् । नैष दोषः । कृत्वेति निर्वृत्तः सम्बन्धो यागा[2]योच्यते । द्वावेतावर्थौ कृत्वेत्येष शब्दः शक्नोति वदितुमिति ।

सिद्धान्तवादी त्वपूर्वकर्मविधावनेकार्थविधानं शक्यं, नान्यत्रेति मन्यमान आह—**सति वचने** मत्पक्षे शक्यं, भवत्पक्षे त्वसति वारवन्तीयग्रहणमात्रेण लभ्यमानासु रेवतीष्वशक्यमिति । परः पुनराह—**वचनं तर्हि भविष्यतीति ।** तेनैवाभिप्रायेण । फले विशिष्टकर्मविधानात्कृत्वाशब्दस्य चाविधायकत्वात् । यजिरनुवाद—इति च सत्यपि फलं प्रति विधान उत्पत्त्यविधानाभिप्रायेण । सिद्धान्तवादो स्वाभिप्रेतानेकार्थविध्यन्यथानुपपत्तिफलं कथयति—**यदि वचनं**

---

१. क० ह्येकस्य यागस्य । २. क० यागस्य ।

सिद्धं तर्हि कर्मान्तरं न पूर्वस्यैवाग्निष्टुतो गुणविधानमिति । **ननु ततो यजेतेति यागानुवादादिति** वचनेनानिराकृतत्वादद्यापि स्वपक्षमेव बलीयांसं मन्यते । **नैवं शक्यमिति** सिद्धान्तविवरणम् । यदि हि रेवतीगुणकं वारवन्तीयं यागं प्रति गुणत्वेन विधीयते ततोऽवश्यं स उद्देष्टव्यः । ततश्चोद्दिश्यमानत्वादेव फलपदं न तेन गुणेन वा सम्बध्यत इत्यनर्थकमेव स्यात् । सम्बध्यमानं वा वाक्यं भिन्द्यात् । गुणविशिष्टकर्मविधाने वाऽप्रत्यभिज्ञायमानत्वादेकान्तेन कर्मान्तरत्वम् । न च यत्पशुकामो यजेतेत्यप्राप्तत्वादनुवादः सम्भवति । एतेन रेवतीवारवन्तीयविधिं प्रत्यस्य, निमित्तत्वं प्रत्युक्तम् । अतश्च न वारवन्तीयं केनचिद्बलवत्तरेण प्रमाणेन रेवतीभिः सम्बद्धमिति विशेषहानाद्विगुणं भवेत् । अथ **यागसम्बधोऽनुवाद इति ।** गुणादेव फले सति प्रकरणादवगतं यागाङ्गत्वमस्मिवाक्येऽनुवदिष्यत इति । कः पुनराश्रयाश्रयिसम्बन्धात्पूर्वंनिराकृतादस्य विशेषो, येनोपन्यस्यते । स उच्यते । तत्र हि 'आनर्थक्यात्तदङ्गेषु' इत्येतन्निराकृतम् । अङ्गत्वज्ञाने तु तत्सम्भवादग्निष्टोमसामसम्बन्धः सुलभ इत्यभिप्रायः । तन्निराकरोति—**प्रकरणाद्धि वाक्यं बलवत्तरमिति ।** आश्रयाश्रयिसम्बन्धो हि फलसम्बन्धानुगुणत्वात्सम्भवन्गृह्यते । स तु न सम्भवतीत्युक्तम् । अङ्गाङ्गिसम्बन्धस्तु क्रतुकथंभावग्रहणात्स्यात् । तच्च नास्ति । "असंयुक्तं प्रकरणात्" इति वक्ष्यति । संयुक्तं चैतत्फलेन । तस्मादविरोधात् गुणफलविशिष्टकर्मान्तरविधानम् ।

तत्रैतत्स्यात् । सत्यपि कर्मान्तरत्वे तदनुगृहीताद् गुणादेव फलमिति । तद्विकल्प्य भावार्थाधिकरणन्यायेन प्रत्ययसन्निकर्षेण यागफलसम्बन्धावगमान्निराकरोति । तस्मात्कर्मविधिः । **अथ पुनर्विशिष्टे यागे विधीयमाने** क्रियान्तरस्याग्निष्टोमसाम्नो विशेषणेन कथं सम्बन्ध इति । तत्रोत्तरं **वचनादिति ।** प्रागुक्तन्यायेनाऽऽतिदेशिकं वचनं द्रष्टव्यम् । **अग्निष्टोमसाम्नः** कार्य इति । न किंचिदग्निष्टोमाख्यं सामावस्थितं विद्यते यस्य वारन्तीयं कार्यापन्नमिति कल्पते । तेन प्राकृतयज्ञायज्ञीयकार्यापत्त्यभिप्रायेणोक्तम् । अथवाऽग्निष्टोमसाम्न इति स्तोत्रस्यैव कार्ये तादर्थ्येन वर्तिष्यत इत्यर्थः । तस्मात्समेषु कर्मयुक्तं फलं स्यादिति सिद्धम् ॥२७॥

( इति द्वादशं रेवत्यधिकरणम् ॥१२॥ )

**॥ अथ द्वादशं रेवत्यधिकरणम् ॥ १२ ॥**

न्या० सु०—प्रकृताश्रयालाभे गुणफलान्वयापवादार्थत्वेन, धात्वर्थाभेदापवादार्थत्वेन वाऽनन्तरसङ्गतिमाह—**इदानीमिति ।** रेवतीवाक्यस्यैव विचार्यत्वादग्निष्टुद्वाक्योदाहरणानर्थक्यमाशङ्क्याह—**तत्रेति ।** गुणफलान्वयस्य, कर्मान्तरत्वस्य च पूर्वकर्मापेक्षत्वाद्विचार्यप्रतियोगिकर्मविधायित्वेनाग्निष्टुद्वाक्यस्यापि विचारविषयताऽस्तीत्याशयः । वारवन्तीयस्याग्निष्टोमसामत्वाप्राप्तौ पक्षद्वयेऽपि वाक्यभेदापत्तेस्तत्परिहारार्थं भाष्यानुदाहृतमपि

वारवन्तीयवाक्यमुदाहृतम्—**तत्रेति**। सन्देहभाष्यं व्याचष्टे—**तत्रापीति**। पूर्वपक्षवचनव्यक्तिः क्लिष्टत्वसूचनार्थं पश्चादुक्ता। पूर्वपक्षभाष्यं संक्षिप्य व्याचष्टे—**किमिति**। विदितस्येति भाष्योक्तो धात्वर्थानुवादः। पशुकाम एवंकृत्वेत्यादिभाष्योक्तश्च। फलस्य कर्मसमभिव्याहारनिरासेन गुणसमभिव्याहारः समस्तशब्देन व्याख्यातः। एतदेवोपपादयति—**तथा हीति**।

ननु रेवतीवारवन्तीयान्वयविधानात्, तस्य च फलान्वयविधानाद्वाक्यभेदः स्यादित्याशङ्क्याह—**रेवतीति**। पृथक्श्रुतिः—श्रवणमस्येति विग्रहः। शङ्कोत्तरत्वेन श्लोकं व्याचष्टे—**यस्त्विति**। उत्पत्तिशब्देनोत्पत्तिफलत्वाल्लक्षणया रेवतीवारवन्तीययोः सम्बन्धापादिका रेवत्याधारवारवन्तीयक्रियोक्ता। तेन रेवतीषु वारवन्तीयं कुर्यात्, तेन च पशून् कुर्यादित्यावृत्तिः स्यादित्याशङ्कार्थः। क्त्वाप्रत्ययेन विधावस्मृतेनापि धातुवाच्यायाः क्रियायाः पूर्वकालत्वोक्तेस्तस्याश्चाप्राप्तत्वेनानुष्ठानं विना पूर्वकालत्वायोगाद्विधिफलानुष्ठानाक्षेपसिद्धेर्न विधिप्रत्ययावृत्तिरित्युत्तरार्थः। नन्वेवमप्यग्निष्टुति वारवन्तीयस्य प्राप्तत्वाद्रेवतीषु विधिसंक्रान्तेस्तासामेव फलहेतुत्वापत्तेर्वारवन्तीये पशवः फलमिति भाष्यमयुक्तमित्याशङ्क्याह—**तत्रापीति**। गुणफलान्वयविवादे तेनेति सर्वनाम्नो गुणपरामर्शित्वस्याभ्युपगन्तव्यत्वात्, तस्य च प्राधान्यनिर्दिष्टपरामर्शित्वाद्रेवतीषु कृतेन वारवन्तीयेन पशून्कुर्यादिति वाक्यार्थप्रतीतेर्वारन्तीयस्य क्रत्वर्थत्वेन प्राप्तस्यादपि दधिवत्फलं प्रति विधिर्युक्त इत्याशयः। यागवद्वारवन्तीयस्यापि प्राप्तत्वाद्विधिर्न सम्भवतीत्याशङ्कां गुणोपादानवशेन यागाद्विधायकोत्तारणं न प्राप्तमात्रेण, रेवतीनां च करणीभूतगुणपरामर्शिनैतच्छब्देन विलिङ्गसंख्यात्वादुपादानाशक्तेर्न वारवन्तीयाद्विधायकोत्तरणावगतिरित्याशयेन निरस्यन् श्लोकं व्याचष्टे—**गुणेति**।

नन्ववगतप्राधान्यस्यान्यार्थता न युक्तेत्याशङ्क्य धात्वर्थस्थानीयशब्देनेप्सिततमत्वाभावेऽप्यनीप्सितकर्मत्वेन प्राधान्योपचार इत्युक्ते, तथापि कर्मत्वेनोक्तस्य कथं करणतेत्याशङ्क्य करोतिवाच्यां भावनां प्रति कर्मत्वेऽप्याख्यातोक्तां प्रतिकरणत्वाविरोधः। करोत्यभिहितामित्यनेनोक्तः दधिहोमसम्बन्धो वाक्येन विधीयते इति पूर्वाधिकरणभाष्योक्तेन न्यायेनेहापि रेवतीष्विति सप्तमीश्रुतेरधिकरणभूताभ्यो रेवतीभ्यः फलमित्यवगमादधिकरणत्वाक्षिप्तस्य चाधाराधेयसम्बन्धस्य विभक्त्यन्तर्गतत्वेन प्रत्ययार्थतया प्राधान्याच्छ्रुतया फले विधिप्रतीतेरेतेनेत्येकवचनान्तेन च सर्वनाम्नो परामर्शोपपत्तेर्यत्पशून्भावयेत्तदेतेन रेवतीवारवन्तीयसम्बन्धेनेति वचनव्यक्त्यभ्युपगमे तु सम्बन्धादेव फलमित्याह—**अथ वेति**।

नन्वन्येषामपि वाक्यभेदानां सिद्धान्ते वक्ष्यमाणानां कः परिहारः पूर्वपक्षिणोऽभिमत इत्याशङ्क्याह—**एवं च सतीति**। कृत्वाशब्दार्थस्य, रेवत्यन्वयविषयत्वेनाप्राप्तस्याऽप्येकविंशतिमग्निष्टोमसाम कृत्वेत्यतो वारवन्तीयवाक्यसहिताद्वारवन्तीयाग्निष्टोमसाम विषयत्वेन प्राप्तस्यादिशब्देनानुवादः सूचितः। सिद्धान्तएव त्वतिगौरवलक्षणो वाक्यभेदः स्यादित्याह—**कर्मान्तरेति**। अल्पार्थविधौ च सर्वपदार्थासम्भवे बह्वर्थविधिर्न लभ्यत इति प्रतिज्ञाहेतुप्रश्नगौरव-

लक्षणोऽपूर्वमुपपादयति—**तवेति**। पूर्वपक्षे वाक्यभेदपरिहारमुपसंहरति—**तेनेति**। भाष्यकृता तर्ह्येतच्छब्दादीनामनुवादकता कस्मान्नोक्तेत्याशङ्क्याह—**सर्वे चेति**। प्रकृतवाच्येतच्छब्दान्वयेनाभेदोक्त्यर्थमपि चेतिभाष्यं स्पष्टत्वादव्याख्याय तस्मादिति पूर्वपक्षोपसंहारभाष्यं फलतो व्याचष्टे—**तस्मादिति**।

प्रकृताश्रयलाभाद् गुणफलान्वयानुपपत्तिं वक्तुं गुणफलान्वयस्य प्रकृताश्रयलाभापेक्षां दर्शयन् सिद्धान्तमारभते—**इतीति**। स गुणः फले विधातुं शक्य इति वाच्ये प्रकृताश्रयालाभे गुणफलान्वयायोगवद्धात्ववगतस्य कर्मसम्बन्धस्यानुवादत्वायोगाद्विध्यापत्तेः प्रकृतयागाश्रितस्य वारवन्तीयस्य फलान्वयाभ्युपगमेऽपि दुष्परिहरो वाक्यभेद इति सूचयितुं फलभूतयागाभेदोक्तिः। उत्तरार्द्धसूचितमर्थं विवृणोति—**इदं तावदिति**। फले विधीयमानस्य गुणस्याश्रयभूतधात्वर्थापेक्षायामेकवाक्योपात्तस्य यागस्याश्रयत्वप्रतीतेस्तादृशस्य प्राप्तत्वेनानुवादायोगाद्विध्यापत्तेर्विध्ययोगाद्यागान्तरत्वं स्यादित्याशयः। स चेति यज्यर्थः परामृष्टः। अत्रैव दृष्टान्तमाह—**तद्यथेति**। यथेन्द्रियकामवाक्येऽन्यत एव दध्नो होमान्वयलाभान्न कर्मान्तरता व्यवसितेति पूर्वानुषङ्गेण योज्यम्। दृष्टान्तं विवृणोति—**श्रुतेति**।

यद्वा दधिहोमसम्बन्धमात्रे विधीयमानइति ल्यब्लोपे पञ्चमीमङ्गीकृत्यैकग्रन्थतया योज्यम्। नन्विहाप्याश्रयापेक्षायां प्रकरणान्वयो लप्स्यत इत्याशङ्क्याह—**शक्नोति हीति**। साम्नो यागनिष्पत्त्यशक्तावपि रेवतीनां याज्यानुवाक्यावद्देवतोद्देशद्वारा निष्पादकत्वं भविष्यतीत्याशङ्कामग्निष्टुत्याग्नेया ग्रहा भवन्तीति सर्वाभ्यासेष्वग्निदेवत्याच्च श्रुतेरैन्द्रीणामृचां साधनत्वायोगान्निराकर्त्तुं शक्यामपि सप्तम्या सामाधारत्त्वश्रुतेर्यागसाधनत्वाशङ्कैव नोत्तिष्ठतीत्येवं निराकर्त्तुम्—**रेवतीगुणकमित्युक्तम्**। एतदेवोपपादयति—**तथा हीति**। साक्षाद्यागसाधनान्तरपरिसंख्यार्थं कर्तृग्रहणम्, देवताभिधानार्थगक्षराभिव्यक्तिद्वारापि स्तोत्रसाधनत्ववद्यागसाधनत्वं यज्ञकर्मणीत्यैकश्रुत्यविधिविरोधान्नानास्वरसमाहारात्मकस्य साम्नो न सम्भवतीति सूचयितुम्—**साम्नेत्युक्तम्**। तत्सम्बन्धानुवादित्वादित्यनेन सूचितमर्थमुपसंहरति—**तस्मादिति**। नन्वेवमपि स्तोत्रस्याश्रयत्वोपपत्तेर्गुणफलान्वयो निर्वक्ष्यतीत्याशङ्क्याह—**यस्त्विति**।

नन्ववान्तरप्रकरणात्प्रणयनस्य गोदोहनाश्रयत्ववदिहापि वारवन्तीयमग्निष्टोमसाम कार्यमित्यग्निष्टोमस्तोत्रावान्तरप्रकरणान्तःपातकल्पतयाग्निष्टोमस्तोत्रस्याश्रयत्वमभ्युपगमिष्याम इत्याशङ्क्य—**आदिदेशिकत्वादित्युक्तम्**। उत्पत्तावेव प्रकरणाभिव्यक्तेर्विकृतावुत्पत्त्यभावान्न स्तोत्राणां प्रकरणं सम्भवतीत्याशयः। वारवन्तीयस्याश्रयालाभं वृद्धवाक्येन द्रढयति—**आह चेति**। ननु षड्जादिस्वरसमाहाररूपाया गीतेः सिद्धरूपायाः फलसाधनत्वेन विधीयमनाया निर्व्यापारायाः साधनत्वायोगात्साध्यभूतव्यापारापेक्षायां प्रकरणाद्यागसाधनत्वस्यावगतस्य साक्षादसम्भवेऽपि तदङ्गस्तोत्रद्वारोपपत्तेर्गुणफलान्वयो निर्वक्ष्यतीत्याशङ्कते—**अथेति**। वारवन्तीयस्य यागानङ्गत्वाद्याङ्गाङ्गभूते स्तोत्रेऽवतारो न सम्भवतीति परिहर्त्तुं यो हि प्रधानोपकारित्वेन श्रूयते, स तदङ्गेऽपि स्थित उपकरोतीत्येवं कल्पतइत्यौदुम्बराधि-

करणवार्त्तिकोक्तमङ्गावतारन्यायस्याङ्गमात्रविषयत्वं स्मारयति—**तदिति** । एतदेवाङ्गावतारन्यायोदाहरणे सप्तदशारत्नित्वे वाजपेयाङ्गत्वं दर्शयन्नुपपादयति—**सप्तदशेति** । वाजपेयोपकारित्वं विना तदङ्गत्वायोगाद्वाजपेयस्य च साक्षात्परिमाणेनोपकारासम्भवाद्यथा वाजपेयस्योपकर्त्तुं शक्नोति सप्तदशारत्नित्वम्, तथोपकरिष्यतीत्यध्यवसानाद्वाजपेयाङ्गपशुयागाङ्गयूपाङ्गत्वद्वारोपकरोतीत्यवधार्यतइत्यर्थः । इदं पुनरित्यनेनोत्तरार्द्धमुपपादितम् । वारवन्तीयस्य क्रियानङ्गत्वं वक्तुमनङ्गभूताया अपि क्रियाया वारवन्तीयस्य करणत्वोपजननेनोपकारित्वाद् गुणभूततोक्ता । ननु वारवन्तीयस्य क्रियां प्रत्यनङ्गत्वेऽपि फलसाधनत्वान्यथानुपपत्त्या साधनत्वावगमात्साक्षात्साधनत्वायोगेऽपि स्तोत्रद्वारा कल्पयिष्यत इत्याशङ्क्य, योग्यतानपेक्षेणाकाङ्क्षामात्रेण साध्यक्रियान्वयायोगं केवलम्, न तु सप्तदशारत्नित्ववच्चद्योद्यमानमित्युक्तम् । अङ्गत्वं चपरम्परयाप्युपकारित्वमात्रेण युक्तम् । आश्रयापेक्षायास्तु निर्व्यापारस्य कारकत्वानुपपत्तेर्व्यापारवत्त्वसिद्ध्यर्थत्वादयोग्यतया च क्रियया व्यापारवत्त्वासिद्धेः फलसाधनत्वानुपपादकव्यवहिताश्रयकल्पना न युक्तेत्याश्रयत्वोक्त्या सूचितम् । अप्रकृतमेव तर्ह्याश्रयत्वयोग्यं क्रियान्तरं कल्पयिष्यतइत्याशङ्क्य—**अथेत्युक्तम्** । कर्मान्तराङ्गत्वरूपवाक्यार्थान्तरप्रतिपत्त्यापि वारवन्तीयार्थवत्त्वोपपत्तेः फलान्वयस्यावश्योपादेयत्वाभावान्नाप्राकृताश्रयकल्पना युक्तेत्याशयः । अन्यथापि चानर्थक्यपरिहारोपपत्तौ नानर्थक्यतदङ्गन्यायोऽस्तीत्याह—**न चेति** । फलान्वयवत्कर्मान्तरान्वये प्राकरणिकाश्रयान्वयकल्पनक्लेशाभावात्—**सुतरामित्युक्तम्** ।

नन्वावृत्तिसंस्थादेर्गुणस्य प्रकृतकर्मस्वरूपसाधनत्वाभावेऽपि कर्मसम्बन्धिप्रयोगपरिच्छेदसाधनत्वात्फलान्वयद्वारवन्तीयस्यापि यागसम्बन्धिस्तोत्रसाधनत्वात्फलान्वयो भविष्यतीत्याशङ्क्याह—**अत्यन्तेति** । कर्मसिद्धिं विना प्रयोगपरिच्छेदसिद्धेः प्रयोगपरिच्छेदे साधिते कर्मसाधितमिति बुद्धेर्वैषम्यमित्याशयः । नन्वत्यन्तभेदेऽपि सम्बन्धिसम्बन्धात्पशुयागेऽनुगृहीते वाजपेयोऽनुगृहीत इति बुद्धिवत्स्तोत्रे कृते यागः कृत इति बुद्धिर्भविष्यतीत्याशङ्क्याह—**वाजपेयस्येति** । पशुयागविषयो यागशब्दः । साध्यसाधनभावलक्षणसम्बन्धविशेषस्तु न व्यवधाने सम्भवतीत्याशयः । यथा कथंचिद्यागाश्रयत्वप्राप्तेस्तत्सम्बन्धानुवादोपपत्तावप्यष्टोमाख्यस्तोत्रसाधनसामत्वलक्षणस्याग्निष्टोमसामत्वलक्षणस्याग्निष्टोमसामत्वस्याप्राप्तेरनुवादायोगाद्वाक्यभेदापत्तेश्च विध्ययोगादग्निष्टोमसामशब्दोऽनर्थकः स्यादित्याह—**यद्यपीति** । आश्रयत्वेन प्रसज्यमानेष्वित्यध्याहारः । अग्निष्टोमसाम्नीति सामशब्दः स्तोत्रलक्षणार्थः । एवमेतस्येत्युभयथा[1] अनर्थकं स्यादित्याह—**पुनरपि चेति** । सन्निधानेनाग्निष्टुद्यागाङ्गाग्निष्टोमस्तोत्रसम्बन्धलाभशङ्कानिरासार्थम्—**वाक्येनेत्युक्तम्** । 'एतस्य यदग्निष्टोमस्तोत्रसाधनं साम' तद्रेवतीषु वारवन्तीयं कृत्वा पशून्भावयेदित्यग्निष्टोमसाम्नोऽग्निष्टुता विशेषणे विशिष्टानुवादाद्वाक्यभेदः स्यादित्यर्थः । अथैतस्य यत्स्तोत्रसाम तद्रेवतीषु

---

१. एवमेतस्येत्यारभ्यऋक्समित्यन्तस्य ग्रन्थस्य पाठान्तरं वाक्येनेत्यारभ्य ऋक्सामेत्यन्तं ज्ञेयम् ।

वारवन्तीयं कृत्वेति पूर्वं वारवन्तीयस्याग्निष्टुत्सम्बन्धः क्रियते, ततः पूर्ववत्सर्वस्तोत्रान्वयापत्तेरग्निष्टोमशब्दानर्थक्यात्प्रसङ्गात्तत्परिहारार्थं विशेषणे यथा वाक्येनाश्रयकल्पने वाक्यभेदः तथैव स्यादित्याह—**तस्यैवेति**। तथैव वाक्यभेदे पौनरुक्त्यमाशङ्क्यैतस्यैवेति विशेषणे यो विशिष्टानुवादलक्षणः, स एवेत्यनेकार्थविधिलक्षणादन्यतोक्ता। रेवतीवारवन्तीयान्वयस्य च क्त्वाप्रत्ययेनाक्षेपोपपत्तेः विधायकानावृत्तावप्येकस्य वाक्यस्यानेकार्थव्यापाराद् गौरवमपरिहार्यमित्याह—**ऋक्सामेति**। वारवन्तीयस्य फलं प्रति विधेयोपादेयगुणभावाद्रेवतीः प्रत्यनुवाद्योद्देश्यप्रधानभावाद्वैरूप्यं चकारेण सूचितम्।

नन्वग्निष्टुत्प्रकरणेनाश्रयान्वयलाभात्तस्मिंश्च वारवन्तीयमग्निष्टोम सामकार्यमिति विधिना वारवन्तीयस्याग्निष्टुत्सम्बन्ध्यग्निष्टोमस्तोत्रान्वयासेर्न वाक्यभेदापत्तिरित्याशङ्कते—**ननु चेति**। क्रत्वर्थस्य वारवन्तीयस्याग्निष्टोमस्तोत्रान्वयविधानेऽपि फलार्थस्य कथं तदन्वयसिद्धिरित्याशङ्क्याह—**वारवन्तीयं हीति**। वारवन्तीयेन साध्यतया क्रत्वपेक्षणादग्निष्टोमस्तोत्रद्वारैव च वारवन्तीयस्य साधनत्वात्क्रतोश्च साध्यत्वात्प्रकृतातिक्रमकारणाभावाच्च नान्यगतत्वाशङ्केत्यर्थः। पुरुषार्थस्य वा [1]वाक्येनाग्निष्टोमस्तोत्राश्रयत्वविधाने च प्रकरणलभ्याश्रयानपेक्षणात्स्वतन्त्राग्निष्टोमस्तोत्रप्रयोगाभावेऽपि क्रत्वन्तरार्थप्रयोज्यस्याप्यग्निष्टोमस्तोत्रस्याश्रयत्वोपपत्तेरेतच्छब्दानर्थक्यप्रसङ्गं परिहर्त्तुम्, तेनाश्रयविशेषणे वारवन्तीयस्याश्रयान्वयविधिनिमित्तवाक्यभेदवदाश्रयस्याग्निष्टुद्विशेषणविधिनिमित्तोऽपि वाक्यभेदः स्यादित्याह—**पुनरपि चेति**। एतस्य यद्वारवन्तीयं, तद्रेवतीषु कृत्वा पशून् भावयेदिति। प्रकरणप्राप्तक्रत्वङ्गत्वस्यैव वारवन्तीयस्य रेवत्याधारतया विधीयमानस्य फलान्वयविधानात्तस्य च वारवन्तीयाग्निष्टोमसामविधिवाक्येनाग्निष्टोमस्तोत्रद्वारैवाग्निष्टुदङ्गत्वावगमान्नैतद्वाक्यभेदद्वयापत्तिरित्याशङ्क्याह—**एतस्यैवेति**। वारवन्तीयस्य रेवत्यन्वयात्प्रागग्निष्टुदन्वयेऽप्याग्नेय्याग्नीध्रमुपतिष्ठतइत्यत्र प्राकृतानामाग्नेयीनां स्तोत्रादिद्वारा क्रत्वन्वयेऽपि द्वारविशेषानपेक्षे क्रत्वन्वयाश्रयणेनोपस्थानान्वयवद्वारवन्तीयस्याप्यग्निष्टोमस्तोत्रान्वयानपेक्षक्रत्वन्वयमात्रोपलक्षितस्य फलान्वयोपपत्तेः। क्रत्वन्वयप्राग्भाविफलान्वयपक्षवत्पश्चाद्भाविफलान्वयपक्षेऽपि सर्वस्तोत्रान्वयापत्तेः द्वितीयवाक्यभेदाभावे चाद्यो वाक्यभेदः स्यादेवेत्यपिशब्दार्थे वाशब्दः। स एवेत्येवशब्दोऽत्कर्षाङ्गीकारेण व्याख्येयम्। क्रत्वन्वयानुवादपूर्वं च वारवन्तीयस्य रेवत्यन्वयकरणे कृत्वाशब्दस्यातिगौरवं स्यादित्याह—**ऋक्सामेति**[2]। रेवतीयस्य वारवन्तीयवाक्येन वाऽग्निष्टोमस्तोत्रगामित्वं स्यात्, तद्वाक्यविहिताद्वास्याभेदात्, सामान्यतोदृष्टेन वेति त्रेधा विकल्प्य, गुणादीनां त्वसम्बन्धादिति वार्त्तिके गुणादिवाक्यानामन्योन्यान्वयाभावस्योक्तत्वाद्रेवतीवाक्यस्य वारवन्तीयवाक्यैकत्वाभावेनाद्यं तावत्कल्पं दूषयति—**नैतदिति**। वारवन्तीयरूपैक्येऽपि क्रत्वर्थपुरुषार्थरूपेण भेदाद्देवदत्तस्येव युद्ध-

---

१. इदं पाठान्तरं।

२. इदं पाठान्तरमित्यारभ्यैतावत्पर्यन्तः ग्रन्थः पुनरुक्तः प्रतिभाति।

भोजनावस्थयोः स्थानैक्यनियमो नास्तीति द्वितीयं दूषयति—**पूर्वेति** । पुरुषार्थस्य वारवन्तीयस्यात्मनो व्यापारत्वसिद्धचर्थं क्रतुं साधयतोऽपि क्रत्वङ्गत्वं वैलक्षण्योक्त्या निरस्तम् । ननु वेदस्य तत्स्थानत्वाकल्पकत्वेऽपि क्रत्वर्थवारवन्तीयवत्, क्रत्वन्तःप्रयोज्यवारवन्तीयत्वात्पुरुषार्थस्यापि सामन्यतोदृष्टेनाप्यग्निष्टोमस्तोत्रस्थानत्वकल्पना भविष्यतीति तृतीयं कल्पमाशङ्क्य दूषयति—**सामान्यतोदृष्टेति** । विशेषणेनाधानाङ्गवारवन्तीयादिव्यभिचारनिवृत्तावपि शब्दैकसमधिगम्येष्वर्थेषु सामान्यतोदृष्टप्रमाणत्वस्य 'नैवंजातीयकेष्वेतद्भवति दृष्टाददृष्टसिद्धिरि'तीति पूर्वाधिकरणभाष्येणोक्तत्वान्न सामान्यतो दृष्टेनाप्यग्निष्टोमस्तोत्रस्थानत्वसिद्धिरित्यर्थः । अग्निष्टोमस्तोत्रस्थानत्वानवगतिमेव वृद्धवाक्येनोपपादयति—**आह चेति** । फलाय विहितं सामवेदमध्ये पाठं स्वरूपज्ञानार्थमपेक्षते, न क्रतुकालीनमग्निष्टोमस्तोत्रस्थाने पाठं वारवन्तीयरूपमात्रविधानेनाग्निष्टोमस्तोत्रान्वयनैरपेक्ष्यलक्षणस्वातन्त्र्यावगमादित्यर्थः ।

ननूक्थ्यादीनां फले विधीयमानानां ज्योतिष्टोममाश्रयतां वाक्यान्तरवशेनान्ते निवेशवद्वारवन्तीयस्याप्याश्रयभूतेऽग्निष्टुत्यग्निष्टोमस्तोत्रस्थाने विधानात्तत्रैव निवेशो भविष्यतीत्याशङ्क्याह—**यदीति** । स्थानान्तरादर्शनेनोक्थ्यादीनामन्यत्र निवेशो, नाश्रये तत्स्थानत्वदर्शनमात्रादित्याशयः । प्रकृतातिक्रमकारणाभावादिति यदुक्तम्, तदपि दूषयति **यदि चेति** । शङ्कादूषणमुपसंहरति—**तस्मादिति** ।

ननु पुरुषार्थस्यापि वारवन्तीयस्य प्रसङ्गेन क्रतुसाधनत्वात्क्रत्वर्थवारवन्तीयधर्मलाभो भविष्यतीत्याशङ्कते—**ननु चेति** । यथाभ्युदितेष्ट्यामिज्यार्थयोरपि दधिपयसोस्तण्डुलैः सहश्रपणविधानेन प्रासङ्गिकतण्डुलश्रपणरूपप्रतीतौ कार्यसाधनत्वात्प्रणीताधर्मलाभ इति नावमिकदृष्टान्तार्थः । ग्रहणप्रणयनादीनां प्रणीताद्यङ्गत्वात्, कार्यप्रयुक्तत्वाच्चाङ्गानां प्रणीताकार्यश्रपणापूर्वोपकारित्वावगतेरनङ्गस्थितानामपि चोपकारिस्थितत्वमात्रेणोपकारित्वोपपत्तेः श्रपणोपकारिणोर्दधिपयसोः स्थितानां श्रपणापूर्वोपकारित्वात् प्रणीताकार्यापन्नयोर्दधिपयसोर्युक्तं कारणम् । अग्निष्टोमसामत्वस्य तु क्रत्वर्थवारवन्तीयानङ्गत्वात्, अनङ्गस्य चानतिदेश्यत्वात्क्रत्वर्थवारवन्तीयकार्यापन्नेऽपि पुरुषार्थरूपवारवन्तीये अतिदेशानुपपत्तेर्नानुष्ठानं युक्तमिति वैषम्यमाह—**तत्रैवेति** । क्रत्वर्थवारवन्तीयाङ्गताऽग्निष्टोमसामत्वस्यानाशङ्क्यैवेत्यर्थान्तरन्यासेनाह—**प्रकरणेति** । फलार्थेन वारवन्तीयेन प्रकृताग्निष्टुद्ग्रहणे सति वारवन्तीयस्याष्टुत्साधनत्वे अग्निष्टोमसामत्वस्य द्वारत्वेनोपकारित्वात्पुरुषार्थं वारवन्तीयं प्रति गुणत्वं शङ्क्येत क्रत्वर्थं तु प्रतिगुणताशङ्कितुमप्यशक्येत्याशयः । साक्षाच्च साम्नो यागसाधनत्वाशक्तेरग्निष्टोमस्तोत्रद्वारा यागसाधनत्वम्, यागसाधनत्वाच्चाग्निष्टोमस्तोत्रान्वय इत्यन्योन्याश्रयापत्तेः प्रकृताग्निष्टुद्ग्रहणस्यैवासिद्धत्वात्पुरुषार्थमपि प्रति गुणत्वं नास्तीति—**तदेव स्विरत्यनेनोक्तम्** । कदाचिदप्यसिद्धमितिवाच्ये—**मृद्धक्त्याद्यापीत्युक्तम्** ।

नन्वग्निष्टोमसामत्वस्य क्रत्वर्थवारवन्तीयानङ्गत्वेऽपि प्राकृताग्निष्टोमसाम यज्ञायज्ञीयधर्माणां कार्यापत्त्या वारवन्तीयाङ्गत्वात्पुरुषार्थेऽपि वारवन्तीये प्रासङ्गिकक्रतुसाधनत्वात्

प्राप्ते अग्निष्टोमसामधर्मकत्वात् गुणवृत्त्याग्निष्टोमसामत्वानुवादोपपत्तेर्न वाक्यभेदो भविष्यतीत्याशङ्कामर्थान्तरन्यासेनैव निरस्यन्नाह—**यदि त्विति**। पुरुषार्थस्य वारवन्तीयस्याग्निष्टोमसामशब्दवाच्याग्निष्टोमस्तोत्रसम्बन्धावगमे सत्यग्निष्टोमसामभूतक्रत्वर्थवारवन्तीयधर्माणां पुरुषार्थे वारवन्तीये दधिपयसोरिव प्रणीताधर्माणां प्राप्तिः स्यात् तदनवगमात्तु क्रतुसाधनसामत्वमात्रेण सामान्तरेष्विवाग्निष्टोमसामधर्मप्राप्तेः कार्यप्रयुक्तत्वाच्च धर्माणां वारवन्तीयत्वमात्रेणाधानाद्यङ्गवारवन्तीय इव प्राप्तचयोगान्न गुणवृत्त्याप्यग्निष्टोमसामत्वानुवादोपपत्तिरित्याशयः। अतः प्रासङ्गिकक्रतुसाधनत्वेनाग्निष्टोमसामत्वलाभादपि वाक्यभेदपरिहारो न सम्भवतीत्युपसंहरति—**तस्मादिति**। अतो गुणफलान्वये वाक्यभेदपरिहाराशक्तेः तत्परिहारार्थं यागान्तरविधिरेष्टव्य इत्याह—**इतीति**।

ननु यागान्तरविधावप्राप्तानेकार्थविशिष्टयागविधानाद् गौरवं स्यादित्याशङ्क्याह—**तथा सति हीति**। 'साद्यस्काः साहस्रा' इति चैकेन शब्देन युगपदुपादानलक्षणसङ्ख्यनिकायवतामग्निष्टुदादीनामेकाहानां निकायित्वावान्तरसामान्येन सुसदृशत्वात्पूर्वस्याग्निष्टुतो विध्यन्तो रेवत्यादियागेषु उत्तरेषु प्रवर्त्तते इत्यष्टमे निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यादि८-१त्यत्र वक्ष्यमाणत्वात्तदीयधर्मप्राप्तेरित्यर्थः। बहुप्राप्तिमेव विवृणोति—**एषशब्दस्तावदिति**। अतः कृत्वाशब्दाक्षिप्तार्थविशिष्टयागमात्रविधानाल्लाघवमित्युपसंहरति—**कृत्वाशब्देति**।

ननु रेवतीवारवन्तीयान्वयस्याग्निष्टोमस्तोत्रक्रियाविशेषणत्वात्तस्याश्चेहाविधेयत्वात् न विशिष्टविधिः सम्भवतीत्याशङ्कते—**न त्विति**। एतदेव विवृणोति—**तथा हीति**। श्लोकं व्याचष्टे—**यानीति**। अग्निष्टोमस्तोत्रस्याविधेयत्वात्तत्विशेषणत्वेन रेवतीवारवन्तीयान्वयानपेक्षेऽपि कृत्वाशब्दोक्तायाः अग्निष्टोमस्तोत्रभावनायाः स्वरूपेण प्राप्ताया अपि रेवतीवारवन्तीयान्वयविशिष्टरूपेणाप्राप्तेस्तादर्थ्येन विधेयत्वात्तद्विशेषणसत्त्वेनाक्षेपोपपत्तेर्वाक्यभेदाप्रसङ्गाद्विशिष्टविधिः सम्भवतीति परिहरति—**नैष इति**। करोत्यर्थमिति वाच्ये करोत्यर्थस्याकारकर्त्वात्क्रियारूपभावनान्वयायोगाशङ्कानिरासार्थं धातुसम्बन्धाधिकारविहितक्त्वाप्रत्ययसामर्थ्यात्क्रिययोरप्यन्वयः प्रतीतेः क्रियाकारकलक्षणान्वयायोगेऽपि च समानकर्तृकत्वेन पूर्वोत्तरकालत्वेन च विशेषणविशेष्यरूपान्वयोपपत्तिसूचनार्थं क्त्वान्तकरोत्युक्तिः। ननु कृत्वाशब्दोक्तभावनाद्वारा यागभावनाया रेवतीवारवन्तीयान्वयग्रहणेऽप्यग्निष्टोमसाम्ना विशेषणे वाक्यभेदापत्तेरग्निष्टोमस्तोत्रावच्छिन्नैव भावना कृत्वाशब्देनोक्तेति ज्ञातुमशक्यत्वाद्वारवन्तीयस्य च स्वरूपेणातिदेशतो अग्निष्टोमस्तोत्रान्वयप्राप्तावपि रेवत्याधाररूपेणाप्राप्तेस्तद्रूपविधावग्निष्टोमसामत्वानुवादायोगादग्निष्टोमसामशब्दोऽनर्थकः स्यादित्याशङ्क्याह—**नवेनेति**। भावनावच्छेदकधात्वर्थान्वयं विना रेवतीवारवन्तीयान्वयस्य भावनाविशेषणत्वायोगात्साम्नश्च यागसाधनत्वाशक्तेः प्रधानभूतयागाख्यधात्वर्थान्वयायोगाद्रेवतीषु वारवन्तीयं यागसाधनं कृत्वेति, यागस्य कृत्वाशब्दोक्तभावनावच्छेदकत्वानुपपत्तेस्तदवच्छेदकधात्वर्थापेक्षायां वारवन्तीयस्यातिदेशतो अग्निष्टोमस्तोत्रभावनाविशेषणत्वावगतेर्वारवन्तीयान्वितानां

रेवतीनामपि तद्विशेषणत्वावगताद्रेवत्यधारस्य वारवन्तीयस्याप्यग्निष्टोमसामत्वानुवादोपपत्ति-रित्याशयः। आद्यं श्लोकं व्याचष्टे—**रेवतीति**। कृदन्ताक्षेपशब्दयोगेन क्रतोरिति षष्ठ्याः कर्तृवाचित्वात्स्वविशेषणस्यैव क्रतुनाक्षेप इत्यर्थः। द्वितीयो व्याचष्टे—**सत्विति**। साक्षाद्रेवतीवारवन्तीयसम्बन्धोपजीवनाशक्तेर्गुणत्वेन चानर्थक्यतदङ्गन्यायविषयत्वादङ्गेषु तत्सम्बन्धं विक्षेप्तुमारभमाणः क्रतुः क्वाङ्गे निक्षेप्तव्य इत्यपेक्षायां वारवन्तीयस्यातिदेशेन विज्ञातस्थानत्वाद्रेवतीरपि तत्स्थानाः कल्पयतीत्यत्र वाक्येऽग्निष्टोमस्तोत्रसाधनायाविधानेऽपि रेवतीवारवन्तीयान्वयः क्रतुविशेषणमप्यग्निष्टोमस्तोत्रे संक्रामतीत्यग्निष्टोमसामशब्दानर्थक्यदोषो नास्तीत्यर्थः। एवमद्रव्यदेवतात्मकत्वेन वारवन्तीयस्य यागसिद्ध्यशक्तत्वान्न साक्षात्प्रकृतयागान्वयोऽस्ति। अङ्गावतारन्यायाविषयत्वाच्च स्तोत्रद्वारापि पुरुषार्थत्वपक्षे नास्ति। क्रत्वर्थत्वपक्षे त्वङ्गावतारन्यायविषयत्वादस्तीति वैषम्यमुक्त्वा, साम्नः स्वयं क्रियारूपत्वेनाश्रयभूतक्रियान्तरानपेक्षत्वात्पुरुषार्थस्य चाङ्गत्वेनान्वयायोगादिति वक्ष्यमाणादपि कारणात्प्रकृतयागान्वयो नास्तीत्याह—**अतश्चेति**। परपक्षदूषणवेलायामेवैतदपि कारणं वाच्यं-सत्कस्मात्स्वपक्षसमर्थनात्पश्चादुक्तमित्याशङ्क्य, मन्दत्वसूचनायेतीषदर्थवाच्याङ्प्रयोगेण दर्शितम्। वारवन्तीयस्य गीतिरूपत्वेन क्रियात्वादाश्रयभूतक्रियानपेक्षत्वे सौभरस्यापि वृष्ट्यादिफलार्थस्यानेनैव न्यायेनाश्रयानपेक्षत्वाद्व्यूहः। क्रतुप्रयोगापत्तेः क्रत्वङ्गभूतस्तोत्राश्रयत्वप्राप्त्यभावेन स्तुवीतेत्यनुवादानुपपत्तिप्रसङ्गात्करणनिर्देशमात्रेण त्वाश्रयापेक्षत्वे यागादेरपि करणत्वाभ्युपगमादाश्रयापेक्षापत्तेर्वारवन्तीयस्यापि च फलभावनाकरणत्वे पशुकामो ह्येतेनेत्येतच्छब्देन परामर्शापत्तेः करणत्वनिर्देशेनाश्रयापेक्षत्वस्यापरिहार्यत्वप्रसङ्गाद्यागादिवच्च सौरभस्यापि फलभावनाकरणत्वमात्रात्करणत्वनिर्देशोपपत्तेः। प्रत्युतैकक्रियाकरणस्यान्यकरणत्वानुपपत्तेः फलभावनाकरणत्वमात्रात्करणत्व[illegible]ोपपत्तेर्वाच्यत्वादनभिमतैव साम्नः क्रियारूपता प्रौढ्योक्तेति गम्यते। षड्जादिस्वरसमूहात्मकत्वेन गीतेः सिद्धरूपत्वात्तद्रूपस्यापि साम्नः क्रियात्वाभावात् अपि तु कर्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैरि-७-२-ति सामिक्याश्च क्रियात्वोक्तेः 'सामार्थो यः कश्च गीतेः सस्वर' इति श्रुतेः सामशब्दस्य षड्जर्षभगान्धारमध्यमपञ्चमधैवताख्यस्वरसमूहवाचित्वावगमात् स्वरशब्दस्य च [मारुतस्तूरसि चरन्भद्रं जनयति स्वरमि] त्यादिदर्शनाद्वायवीयसंयोगविभागजनितनादाख्यध्वन्यपरपर्यायघोषात्मकशब्दपरत्वावगतेस्तस्य चाकाशगुणत्वप्रसिद्धेः, क्रियात्वे च साम्नो अशब्दात्मकत्वेनोच्चारणाख्याध्ययनायोगात्सामान्यधीयतइति प्रयोगायोगापत्तेर्ध्वनिनाप्रापरपर्यायस्वरात्मकगीतिजनिकायामुच्चारणक्रियायामृचं प्रति प्रधानसाम्नो गुणभूतत्वाय संस्कारकर्मत्वव्यपदेशसिद्ध्यर्थं गीतित्वमुपचर्य व्याख्यातुं शक्यत्वादुच्चारणक्रियाद्वारैव च वक्ष्यमाणाधिकरणस्थायाहीषयादिप्रति सौरभस्याश्रयत्वोपपत्तेरुपपादयितुं शक्यत्वाद्वारवन्तीयस्य च क्रियात्वे तस्यैवाग्निष्टुतो अग्निष्टोमस्य गुणे वारवन्तीये पशवः फलमिति पूर्वपक्षवचनव्यक्त्ययोगात्सन्देहासम्भवेनाधिकरणा रम्भानापत्तेर्न पारमार्थिकी क्रियात्वोक्तिः सप्तमाधिकरणे तु स्वरस्य सामत्व निरासो न ह्यभिवत्पक्षेणाभिव्यञ्जको योऽनादेः स कवतीषु भावयितुं शक्यो, यदि भाव्येत न

कवत्यो भवेयुरिति तत्रत्यभाष्यालोचनयैव गीत्याख्यषड्जादिस्वराभावेऽप्यक्षराभिव्यक्तिदर्शनेन तेषां स्वानुरक्तत्वरूपाभिव्यञ्जकत्वेऽप्यक्षरस्वरूपानभिव्यञ्जकत्वात्तदभिव्यञ्जकवायवीयसंयोगविभागानां स्वरजनकत्वात्स्वरत्वमुपचर्यतइति द्रष्टव्यम्। तद्वैधर्म्योक्त्यैव षड्जादिस्वरूपस्यार्थस्याभिवनीयस्य कवतीषु भावयितुं शक्यताया भावोऽर्थ इति, तत्रत्यसिद्धान्तसूत्रावयवेनाभिधानात्तेनापि क्रियावाचिता सामशब्दस्योक्तेति नाशङ्कनीयम्। रथन्तरादिशब्दस्य च गायति वाच्यत्वेन प्रसिद्धगानवाचित्वादृग्वाचित्वे प्रसिद्धग्रहणत्वादित्यवयवेन निरस्ते, हन्तिपिष्यादिजन्यविकारवदृग्विकारवाचित्वात् दृग्वाचिता न युक्तेति, विकारो ह्यविशिष्टोऽन्यैरित्यन्त्यावयवेन हेत्वन्तराभिधानान्न हन्त्यादिदृष्टान्तोक्त्या क्रियात्वं सामसु चिन्तितमिति शङ्कनीयम्। किं तत्कारणमित्यपेक्षायामाह—**पश्येति**। श्लोकं व्याचष्टे—**दधीति**। गडिवदनैकदेशे शकिशक्तौ विशिअवयवइत्यादावक्रियायामपि धातुस्मृतेर्गण्डादिशब्दाच्च क्रियानवगतेर्धातुवाच्यत्वमात्रात् क्रियात्वासिद्धेः परमार्थतो वारवन्तीयस्याव्यापारत्वेनाक्रियात्वेऽपि प्रायेण धातूनां क्रियावाचित्वादौपचारिकक्रियात्वसूचनार्थं धातुवाच्यत्वोक्तिः। क्रियानपेक्षत्वे को दोष इत्यपेक्षायामाह—**ततश्चेति**। सिद्धान्तमुपसंहरति—**तस्मादिति**।

सूत्रतात्पर्यं व्याख्याय, भाष्यमनुसन्दधानः समेष्विति सूत्रावयवं भाष्यकृद्व्याख्यानस्य क्लिष्टत्वात्स्वयं तावद्व्याचष्टे—**समेष्विति**। गुणशब्दस्येह सिद्धरूपार्थवाचित्वादाश्रयत्वानपेक्षत्वेऽभ्युच्चयमात्रेण क्रियात्मकत्वहेतूक्तिः। भाष्यकृद्व्याख्यानमपि समर्थयते—**भिन्नेति**। न हीति भाष्यमप्राधान्याद्रेवतीनामेतच्छब्दान्वयायोगादप्राप्तेश्चोद्देश्यत्वायोगाशङ्कानुपपत्तेरयुक्तमाशङ्क्योपपादयति—**न हीति**। वारवन्तीयात् प्राथम्योक्ते[र्यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणमि]ति न्यायेनोद्देश्यत्वम्, उद्देश्यत्वाच्च प्राधान्यमप्याभातीत्यानन्तर्योक्त्या सूचितम्। ननु सतीष्वपि रेवतीषु विशिष्टानुवाददोषः प्राप्नुवन्कस्मानोक्त इत्याशङ्क्याह—**तत्रेति**। तच्चाग्निष्टोमसामेत्यपरोऽपि वाक्यभेदः प्राप्नोतीति सूचनायैकशब्दः। असतीनां च रेवतीनां फलार्थवारवन्तीयान्वयविधौ क्रत्वन्वयाप्तेरन्यत्र च गुणभूतानामन्यान्वयविध्ययोगाद्देतच्छब्दोऽर्थशून्यः स्यादित्येतच्छब्दान्वयानुक्त्या सूचितम्।

भाष्यकृतेत्युत्तरभाष्यपातनिकार्थमाह—**तच्छब्देति**। शुद्धानां रेवतीनां वारवन्तीयं प्रति विधौ पश्चादग्निष्टुद्यागान्वयायोगेऽपि प्रागेव यागान्वयितया तां विधाय, तासां च यागान्वये द्वारापेक्षायाम्, द्वारतया वारवतीयान्वयं विधाय, यागविशिष्टरेवतीविशिष्टस्य वारवन्तीयस्य फलान्वयविधिर्भविष्यतीत्याशङ्कार्थमथेति भाष्यं व्याचष्टे—**अथ त्विति**। रेवतीविशिष्टस्य वारवन्तीयस्याग्निष्टोमसामत्वाप्राप्तेरनुवादायोगाद्वाक्यभेदापत्तेश्च विध्ययोगादग्निष्टोमसामशब्दानर्थक्यदोषोक्त्यर्थं 'तथेति भाष्यं रेवतीयागान्वयरेवतीवारवन्तीयान्वयवारवन्तीयफलान्वयरूपार्थत्रयविधिनिमित्तवाक्यभेदानुपन्यासयुक्तमाशङ्क्य व्याचष्टे—**तथापीति**।

गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम्।
वेदोयमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्॥ (तं० वा० पृ० २२३)

इत्यनेन न्यायेन वाक्यभेदत्रयाभ्युपगमवच्चतुष्टयाभ्युपगमेऽप्यदोष इत्याशयेनाशङ्कार्थमथेति भाष्यं व्याचष्टे—**अथेति**। एतस्यैवेति परिहारभाष्यमेतत्पदानुरोधेनैवाग्निष्टुद्रेवत्यन्वयाभ्युपगमादयुक्तमाशङ्क्य, द्वेधा व्याचष्टे—**तथा सतीति**। वारवन्तीयस्याग्निष्टोमसामत्वविधावनुज्ञाते वाक्यभेदत्रयातिरेकापत्तेस्तत्परिहारार्थमग्निष्टुद्रेवत्यन्वयविध्यपगमाद्वाक्यभेदत्रयातिरेकापत्तेरेव चैतच्छब्दस्य रेवतीशब्दवदग्निष्टोमसामशब्देनाप्यनन्वयादानर्थक्यम्। तच्चैतस्याग्निष्टोमसामेत्यन्वयविधौ वाक्यभेदत्रयातिरेकापत्तेरित्याद्यव्याख्यानेऽर्थः। रेवतीविशेषणत्वेनैतच्छब्दविवक्षायामपि वाक्यभेदपञ्चकापत्तेः सकृच्छ्रुतस्यैतच्छब्दस्यानेकविशेषणत्वायोगादग्निष्टोमसामविशेषणत्वाविवक्षाविवक्षायां वा वाक्यभेदपञ्चकापत्तिरिति द्वितीये। यथा विशिष्टानुवादपक्षे यथाक्रममवस्थितस्यैतच्छब्दस्य रेवतीविशेषणत्वम्, तथा रेवत्युपादानपक्षेऽपि यथाक्रममेवावस्थानम्, नोत्कर्ष इत्येवकारार्थः। अस्मिन्पक्षे रेवतीनामुपादेयत्वात्सामाम्नायसिद्धा या रेवत्यः। ता एतस्याग्निष्टुतः कार्या इति स्वरूपानुवादार्थतया यच्छब्दो योज्यः।

सिद्धान्तेऽपि कर्मान्तरस्य क्रियान्तरविशेषणस्यैव विधानात् वाक्यभेदोऽपरिहार्य इत्याशयेनाथेति प्रश्नभाष्यं गुणे पुनः फले कल्पनातः इत्यादिभाष्येण पूर्वपक्षे वक्ष्यमाणानां वाक्यभेदानामसमाप्तत्वान्मध्ये सिद्धान्तदोषं शङ्कानवकाशादयुक्तमाशङ्क्योपपादयति—**इहैवेति**। यागान्तरस्याग्निष्टुद्यागाङ्गत्वेन विधिः। गुणविशिष्टस्य वाग्निष्टुतः फले विधिः। फलार्थस्यापि वा गुणस्य प्रकरणप्राप्तागाङ्गत्वानुवाद इति पक्षान्तराणां सिद्धान्तप्रतियोगित्वात्पूर्वपक्षत्वमभ्युपेत्यापि प्रश्नावसरसमर्थनायैतदुक्तं फले गुणविधिः प्रकरणप्राप्ताश्रयीभूतयागानुवादश्चेति। त्वत्रत्यपूर्वपक्षवचनव्यक्तयः सर्वा निरस्ता एव। विस्मयहेतुदर्शनपूर्वं भाष्यं व्याचष्टे—**तथा नानेति**। यजेतेति विदितस्यैतद्वचनमिति पूर्वभाष्योक्तयागानुवादद्वारेतरानुवादसिद्धिः, एवं च सति विपरिवृत्तिप्राप्तौ यजिरित्यादिवार्त्तिकोक्त्या तथा शब्देन परामृष्टायागस्यायोग्यत्वेनाश्रयत्वाप्राप्तेर्वस्तुतोऽसम्भवन्नप्यनुवादः पूर्वपक्षे स्थित्वोक्त इति नामशब्देन सूचितम्।

रेवतीष्वित्युत्तरभाष्यं व्याचष्टे—**सिद्धान्तेति**।

नन्विति प्रश्नाशयविवरणभाष्यं स्वविशेषणविशिष्टायाः क्त्वाशब्दोक्ताया भावनाया यागभावनाविशेषणत्वाद्विशिष्टैकार्थविध्युपपत्तेरयुक्तमाशङ्क्योपपादयति—**नन्विति**। क्त्वान्तत्वोक्त्या 'तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वेति' कृत्वाशब्दोक्तभावनाया रेवती यागेऽतिदेशप्राप्तायाः प्रत्यभिज्ञानादविधेयत्वेन विधेयभावनाविशेषणत्वायोगः सूचितः। स्वरूपेणाविधेयत्वेऽपि रेवतीवारवन्तीयान्वयविशिष्टरूपेण विधेयत्वाद्विशेषणत्वोपपत्तिरित्याशयेनेतीति परिहारभाष्यं व्याचष्टे—**नेति**। उच्यतइत्याशङ्काभाष्यं विधेययागभावनाविशेषणत्वात्क्त्वाशब्दार्थस्य लिङ्गाऽर्थाद्विधानेऽपि, रेवतीवारयन्तीयान्वयो लिङा, क्त्वाप्रत्ययेन वा न विहित इत्येवं व्याचष्टे—**रेवतीनामिति**।

ननु रेवतीवारवन्तीयान्वयाविधानेऽप्युभयोः क्त्वाशब्दोक्तैकभावनाविशेषणत्वेनारुणै-कहायनीवदन्योन्यनियमसिद्धेः। समभिव्याहारलभ्यान्वयप्रतीतिरविरुद्धेत्याशङ्कानिरासार्थं तत्रेति भाष्यमरुणैकहायनीन्यायवैषम्योक्त्यशक्तेरयुक्तमाशङ्क्योपपादयति—**तेनेति**। रेवती-वारवन्तीयविशिष्टक्त्वाशब्दार्थविशिष्टयागभावनाविध्यर्थाक्षेपात्क्त्वाशब्दार्थस्य रेवतीवार-वन्तीयविशिष्टत्वप्रतीत्या तयोरन्योन्यनियमः प्रतीतोऽप्यविधेयत्वान्नादर्त्तव्य इत्याशयः। सम्बद्धेति विशेषणप्रधानो निर्देशः। नन्वविधेयत्वे रेवतीवारवन्तीययोरप्रयोग एव स्यादि-त्याशङ्क्य—**यागेत्युक्तम्**। क्त्वाशब्दोक्तभावनाविशेषणत्वेन प्रतीयमानयोः कथं याग-भावनाविशेषणतेत्याशङ्क्य—**यद्यपीत्युक्तम्**। रेवतीवारवन्तीयसम्बद्धत्वरूपेणोक्तत्वात्सम्बद्ध-त्वरूपेण सतीं प्रतीयमानामपि क्त्वाशब्दवाच्यां सम्बद्धत्वरूपस्याविधेयत्वाच्छुद्धायाश्चानु-ष्ठानाशक्तेरनादरणीयत्वादसतीमप्रतीयमानामिव प्रतिपद्य रेवतीष्वन्यान्यपि सामानि प्राप्नुवन्ति, सामाप्यन्यास्वृक्षु प्राप्नोतीत्यध्यवस्यतीत्यध्याहारेण ल्यप्प्रत्ययो योज्यः। सन्निहितक्त्वाशब्दोक्तभावनाविशेषणत्वस्याविधेयत्वेनानादरणीयत्वाद्व्यवहितयाप्येकवाक्यो-पात्तया प्रधानभूतया यागभावनयाऽन्वयो युक्त इत्याशयः।

ननु यागभावनाविशेषणत्वेऽपि साक्षात्तदन्वयायोगात्, अङ्गत्वेन चाङ्गावतारन्याय-विषयत्त्वात्तदङ्गावतारावगतेः। कस्मिन्नङ्गविशेषेऽवतार इत्यपेक्षायाम्, वारवन्तीयस्य प्रकृतावग्निष्टुत्यग्निष्टोमस्तोत्रविषयत्वेनेहापि तद्विषयत्वावगमाद्रेवतीनां चाधारत्वश्रुतेः। सामैव प्रत्यृचामाधारत्वप्रसिद्धेः सामान्तराणां चातिदेशतो निर्ज्ञातर्चेनर्गन्तरानाकाङ्क्ष-त्वादेकाग्निष्टोमस्तोत्रविषयतयान्योन्यनियमः सेत्स्यतीत्याशङ्क्य—**एकस्तोत्रेत्युक्तम्**। वार-वन्तीयस्याग्निष्टोमस्तोत्रविषयत्वेनातिदेशतः प्राप्तेरुपदेशानर्थक्यापत्तेः स्तोत्रान्तरविषयत्वा-वगमाच्चात्र च प्राकृतसामकार्यापत्तिप्रमाणाभावेनाधिकावापावगतेरारोप्यमाणानां च साम्नां 'त्रीणि ह वै' यज्ञस्योदराणि गायत्रीबृहत्यनुष्टुबत्र ह्येवावपन्त्यत एवोद्वपन्तीति श्रुत्या प्राकृतास्वेव गायत्र्यादिष्वभ्यस्यमानासु निवेशावगतेः ऋगन्तरानाकाङ्क्षत्वाद्रेवतीनां तद्विषयत्वानवगतेरेकस्तोत्रविषयत्वानियमादेकस्तोत्रविषयत्वेऽपि वानेकसामकयोर्माध्यन्दिना-र्भवपवमानयोर्यस्मिन्नेवाद्ये, मध्यमे, अन्त्ये वा स्तोत्रैकदेशे वारवन्तीये तस्मिन्नेव रेवत्यइति नियमाभावान्नान्योन्यनियमः सेत्स्यतीत्याशयः। उप्यन्ते प्रक्षिप्यन्ते सामान्यास्त्वित अधिकरणवाचि घञन्तेनावापशब्देनागन्तुकस्य साम्नोऽभिनिर्ज्ञातप्राकृतर्गाधारत्वेनाधारभूतर्ग-न्तरानाकाङ्क्षत्वं सूचितम्।

एवं सति को दोष इत्यपेक्षायामाह—**तत्रेति**। तेनानयोरन्वयातिदेशेऽवगताग्नि-ष्टोमस्तोत्रस्थानवारवन्तीयोद्देशेन रेवतीविध्यापत्तेर्यागभावनानन्वयान् दुष्परिहरो वाक्यभेदः स्यादित्याह—**अत इति**। यागभावनान्वयनिरासायैवकारः। नैष दोष इत्यादिपरिहार-भाष्याशयमाह—**नैष इति**। अप्राप्तविषयत्वं विधिशब्देनोक्ता अप्राप्तेऽर्थे क्त्वेत्यस्य विध्यन्वयः विधेयत्वाख्यः फलमित्यर्थः।

श्लोकार्थमुपपादयति—**सर्वत्रैवेति**। क्त्वाशब्दार्थविशिष्टयागभावनाविधिना विशेषण-स्याविधानेऽपि क्त्वाप्रत्ययेन धातुवाच्यायाः क्रियायाः क्रियान्तरसमानकर्तृकत्वाभिधानात्,

अनुष्ठानं च विना कर्तृत्वायोगादनुष्ठानागवतेरप्राप्तत्वाच्च रेवतीवारवन्तीयानुवादायान्वयक्रियाया 'अभिषुत्य हुत्वेति'वन्निमित्तार्थश्रवणायोगादनुष्ठानानुवादानुपपत्तेः, विधावस्मृतस्यापि क्त्वा शब्दस्यार्थाद्विध्याक्षेपकत्वाद्विधेयं क्त्वा शब्दार्थविशेषणस्य रेवतीवारवन्तीयान्वयस्य विधेयत्वोपपत्तिरित्याशयः।

क्त्वाशब्दोक्तायाः क्रियायाः प्राप्तत्वान्निमित्तार्थश्रवणोपपत्तिमाशङ्क्य, स्वरूपेण प्राप्तावपि रेवतीदारवन्तीयान्वयवैशिष्ट्यरूपेणाप्राप्तेः, तदर्थ्येनैव च विधेयत्वाभ्युपगमान्न निमित्तत्वाश्रयणं युक्तमिति—**न चेहेत्यनेनोक्तम्**। द्वाविति भाष्यं शङ्कोत्तरत्वेन व्याचष्टे—**यदि तर्हीति**। यथेति दृष्टान्तभाष्यमपि सकृदुच्चरितस्य क्त्वाप्रत्ययस्यऽनुष्ठेयत्वपूर्वकालत्वरूपानेकार्थपरत्वायोगादाप्रवृत्तिलक्षणो वाक्यभेदः स्यादिति शङ्कोत्तरत्वेन व्याचष्टे—**कथमिति**। पूर्वकालत्वानुष्ठेयत्वयोर्विशेषणविशेष्यभावात्पूर्वकालत्वविशिष्टानुष्ठेयत्वरूपैकार्थोपपत्तेर्विशिष्टरूपेण च क्त्वाप्रत्ययेनोपादानादेकशब्दोपादानलक्षणाया अपि च वाक्यभेदपरिहारप्रक्रियायाः शोणशब्दे च त्वैकार्थसमवायिरक्तावान्तरजातिवाचिनि दृष्टत्वान्न वाक्यभेदापत्तिरित्याशयः।

क्त्वाप्रत्ययान्निष्पादितापरपर्यायानुष्ठानावगमेऽपि भुक्त्वागच्छतीत्यादौ विध्यभावे तत्कार्यत्वाप्रतीतेः क्त्वाशब्देनैव च तदर्थाविधौ 'न चेदन्येन शिष्टा' इत्यनेन न्यायेन विशिष्टयागभावनाविध्ययोगापत्तेर्भाष्यौक्तपरिहारापरितोषात्स्वयं निर्विशेषणस्य करोत्यर्थस्य विशेषणत्वायोगाद्रेवतीवारवन्तीयान्वयस्य विधेययागभावनाविशेषणान्तर्भावाभ्युपगमेन लिङैव विधेयत्वमुपपादयति—**अथ वेति**। द्रव्यस्याविशेषितस्यापि स्वरूपमात्रेण विशेषणत्वोपपत्तेः, तद्विशेषणस्यानन्तर्भावादविधेयत्वेऽपि करोत्यर्थस्याविशेषितस्य निरूपणाशक्तेर्विशेषणात्वायोगाद्विधेयविशेषणान्तर्गतत्वाद्रेवतीवारवन्तीयान्वयस्य विशेषणविशेषणत्वेऽपि विधेयता युक्तेत्याशयः।

श्लोकं व्याचष्टे—**तत्रेति**। पश्वेकत्वाधिकरणपूर्वपक्षन्यायस्यापि क्रियाविशेषणत्वहेतुकविवक्षासिद्धान्तेनाबाधादुपन्यासः। यागभावनाविशेषणस्य करोत्यर्थस्य रेवतीवारवन्तीयान्वयविशिष्टतां विना विशेषणत्वायोगात्सावश्यमभ्युपगन्तव्येत्युक्ते, कथं पदान्तरोपात्तस्यान्तर्गतिरित्यपेक्षायां, यस्योभयं हविरार्त्तिमाच्छेदित्यत्रार्तेर्निमित्तभूतया 'मृष्यामहे हविषा विशेषणमि६-४ति वदता भाष्यकारेण पदान्तरोक्तहविर्विशिष्टाया आर्तेर्निमित्तात्वोक्त्य निमित्तान्तर्गतिमुक्तां दृष्टान्तत्वेन सूचयितुमार्त्त्यधिकरणभाष्यं पठितम्। ननु विशेषणविशेषणस्य कथं प्रधानान्वय इत्याशङ्क्याह—**तथा चेति**। अङ्गगुणविरोधे च तादर्थ्यादि-१२-३त्यत्राङ्गसाद्गुण्यानुष्ठानस्य प्रधानसाद्गुणार्थताया वक्ष्यमाणत्वादित्याशयः। रेवतीवारवन्तीयान्वयविध्युपपादनस्यानियमाशङ्कापरिहारोपयोगमाह—**तस्मादिति**। रेवतीवारवन्तीयान्वयेन विशेषितायां क्त्वाशब्दोक्तायां भावनायामृक्सामयोर्नियम इत्युक्ते तस्याः पूर्वकालत्वलक्षणनिष्पन्नरूपत्वात्कथमनिष्पन्नरूपेणान्वयेन विशेषणमित्याशङ्क्य, शुद्धस्य

करोत्यर्थस्य पूर्वकालत्वनिरूपणाशक्तेर्विशिष्टस्य पूर्वकालत्वोक्त्या विशेषणस्य पूर्वकालत्वोक्तिर्निष्पन्नशब्देन सूचिता ।

ननु वारवन्तीयस्यातिदेशतोऽग्निष्टोमस्तोत्रसाधनत्वावगमात्, तस्य च सर्वस्तोत्रान्त्यत्वेन यागात्प्रागयोगात्पूर्वकालत्वानुपपत्तेः । क्त्वाप्रत्ययस्य च 'मुखं व्यादाय स्वपितीतिवत्समानकर्तृकत्वमात्रेणोपपत्तेः, पूर्वकालवाचित्वायोगान्न तद्वशेनानुष्ठेयतया क्त्वाप्रत्ययोपात्तस्य रेवतीवारवन्तीयान्वयस्योत्तरक्रियान्वयः सिद्ध्येदित्याशङ्क्याह—**कृत्वाशब्दश्चेति** । मुखं व्यादाय स्वपिति, सम्मील्य, हसतीत्युपसङ्ख्यानात्समानकर्तृत्वमात्रवाचित्वेऽपीह स्मृतेः प्रयोगाच्च पूर्वकालवाचित्वस्यावगतस्य त्यागायोगादनेकार्थस्य करोतेरिहानुष्ठानवाचित्वायोगेऽपि यागप्रक्रमात्प्रागेवाविकलानुष्ठानसिद्ध्यर्थं सर्वं पदार्थानामिदं करिष्यामीत्येवमध्यवसेयत्वाद्वाचा करोति मनसा करोतीत्यादौ चाध्यवसानेऽपि प्रयोगदर्शनात्परिकल्पनाध्यवसानापरपर्यायप्रतिपत्तिवाचित्वावगतेः । सामानुष्ठानस्य चर्त्विक्कर्तृत्वाद्यजमानकर्तृकयागसमानकर्तृकत्वस्याप्यनुपपत्तेः क्त्वाप्रत्ययस्य, पूर्वकालवाचित्वाविरोध इत्याशयः ।

नन्वेवमपीत्याशङ्काभाष्यमर्थैकत्वादेकं वाक्यमित्यत्रार्थशब्दस्य प्रयोजनवाचित्वाभ्युपगमाद्वाच्यभेदमात्रेण वाक्यभेदानापत्तेरयुक्तमाशङ्क्य, विधिप्रयोजनत्वाद्वाक्यस्य विधेयभेदाशयत्वेन व्याचष्टे—**नन्विति** । नैष इति परिहारभाष्यं रेवत्याभिधानस्याप्यप्राप्तार्थत्वेन विधिप्रयोजनत्वाद्विधेयभेदप्रतीतेरयुक्तमाशङ्क्य रेवत्यादिविशिष्टैकयागभावनाविधिसिद्ध्यर्थं रेवत्याद्यभिधानोपपत्तेर्न विधेयभेदोऽस्तीत्येवमर्थत्वेन व्याचष्टे—**नैष दोष इति** । वाच्यनानात्वेनाऽनेकार्थत्वस्यार्थैकत्वादित्यत्र प्रयोजनैकत्वादुपपन्नमिति भाष्येण निरस्तत्वात्प्रयोजनस्य च विशिष्टभावनाविधानस्यैकत्वान्न वाक्यभेदापत्तिरित्युक्ते भावनाया विधेयत्वे यागविध्युक्तिर्भाष्यकारीया न युक्तेत्याशङ्क्य—**सा चेत्युक्तम्** ।

नन्वितिभाष्यं पूर्वशङ्काशयविवरणार्थत्वेन व्याचष्टे—**नन्विति** । वाच्यानेकत्वनिमित्तानेकार्थत्वशङ्काभ्रान्तिनिवृत्त्यर्थम्—**यदीत्युक्तम्** । अत्रेति परिहारभाष्यं विशिष्टविध्यन्यथानुपपत्तिकल्पितैर्विधिभिरनेकार्थविधानेऽपि प्राधान्येनैव विधेयस्य प्रयोजनत्वात् तस्य चात्रैकत्वान्न वाक्यभेदापत्तिरित्येवमर्थत्वेन व्याचष्टे—**उच्यतइति** । न हीति भाष्यावयवमनेकप्राधान्यनिरासोपपादनार्थत्वेनावतारणपूर्वकं व्याचष्टे—**तदाहेति** । एतदेवोपपादयति—**तथा हीति** । धारणव्यापृतरेवतीपर्यवसाने रेवत्यो धारयेयुरिति निर्देशप्रसङ्गाद्रेवत्याश्रयणव्यापृतवारवन्तीयपर्यवसाने, सम्बन्धिद्वयसम्बन्धेन व्यापृतसम्बन्धपर्यवसाने वा रेवतीषु वारवन्तीयं कुर्यादिति निर्देशापत्तेः फलपर्यवसाने पशवः स्युरिति निर्देशापत्तेः, तच्छब्दपरामृष्टरेवत्यो वारवन्तीयमितिं भाष्योक्तरेवतीवारवन्तीयतत्सम्बधयागपशुक्रियाणां यजमानव्यापारयागभावनान्तरव्यापारत्वावसायात्ततः प्राग्विधेरपर्यवसानापत्तेर्नानेकस्य प्राधान्येन विधिः सम्भवतीत्याशयः ।

तस्मादिति वाक्यभेदपरिहारोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** । ननु गुणफलान्वयपक्षेऽप्येतच्छब्दस्याग्निष्टोमसाममात्रविशेषणत्वाभ्युपगमादेतच्छब्दस्योभयविशेषत्वनिमित्तो वा-

क्यभेदः परिहर्त्तुं शक्य इत्याशङ्कानिरासार्थं 'गुणे पुनरि'ति भाष्यं व्याचष्टे—**गुणेति**। तथाप्यग्निष्टोमसाम्नो वारवन्तीयेनाग्निष्टुतान्वयविधानाद्वाक्यभेदोऽपरिहार्य इत्याशयः। अथेति भाष्येणाग्निष्टुद्यागाङ्गत्वेन यागान्तरं रेवतीवारवन्तीयवाक्येन विधास्यतइत्याशङ्क्य, तथाप्रीत्यनेन निरस्तम्। तदनेनापि प्रकारेण कर्मान्तरत्वसिद्धेः पूर्वपक्षानुपयोगित्वात्सिद्धान्ताविरोधाच्चानर्थकमित्याशङ्क्याह— **थेति**। शङ्काभाष्यं व्याचष्टे—**तत्रेति**। एवंविधपक्षान्तराभ्युपगमे को गुणो भविष्यतीति पृच्छति—**किमिति**। गुणविषयत्वेऽपि सामान्यविवक्षया नपुंसकनिर्देशाविरोधः प्रकरणाबाधैतत्पदानुग्रहरूपं गुणद्वयमाह—**प्रकरणं तावदिति**। परिहारभाष्यं व्याचष्टे—**तत्रेति**। कीदृग्वाक्यभेद इत्यपेक्षायां प्रत्युद्देश्यं वाक्यपरिसमाप्तिलक्षण इति दर्शयितुमाह—**न हीति**। अथैवमित्यादिशङ्काभाष्यं गुणफलान्वयस्याभिधानात्पुनरुक्तमाभासमानं परमते तादर्थ्यमभ्युपेत्यैव रेवत्याख्यर्गन्तप्रगानाद्वायव्यर्गाधारत्वलक्षणविशेषहानेताश्रयवैगुण्यरूपदोषान्तरोक्त्यर्थत्वेन व्याचष्टे—**अथेति**।

अग्निष्टुद्यागस्यैव गुणान्तरविशिष्टस्य फलान्वयाभिधानायैतदिति स्वमतेनार्थान्तरं गुणकामत्वापरित्यागेनैव वक्तुमाह—**अथ वेति**। एतदेव पक्षान्तरमुपपादयति—**तथा सतीति**। कर्मान्तरपक्षेऽपि सन्निकृष्टार्थविधिर्लप्स्यतइत्याशङ्क्य—**न चेत्युक्तम्**। गुणविशिष्टकर्मान्तरविधौ गुणपरत्वात्कर्मोत्पत्तिपरत्वायोगेऽपि कर्मोत्पत्तिसिद्ध्यर्थं उत्पत्तिपरत्वस्यापि कल्प्यत्वात् गौरवापत्तिर्नास्मिन्पक्षइति विशेष इत्याशयः। उत्पत्तिं करिष्यतीत्यनुषङ्गः। नन्वनुत्पत्तिपरत्वे रेवत्यः तासां च पदान्तरोपात्तवारवन्तीयान्वय इत्यनेकार्थविधिर्न लभ्यतइत्याशङ्क्य—**विधानाच्चेत्युक्तम्**। फलस्यानुपादेयत्वेन प्राप्तस्यापि कर्मणः फले विधानादनेकगुणविशिष्टता सेत्स्यतीत्यर्थः।

श्लोकं व्याचष्टे—**यागं हीति**। फलस्याज्ञातज्ञापनं विधिर्विवक्षितः। [ननु विशेषणफले चास्मिन् वाक्यभेदो भविष्यति]। इत्यनेन न्यायेन कर्मविधानेऽपि तात्पर्यस्य फलेऽवतारादुगुणविशिष्टत्वानुपपत्तिरित्याशङ्क्य विधेः। फलपरत्वनिरासार्थं तस्योद्देश्यतोक्ता। इति करणः श्लोकार्थसमाप्त्यर्थः।

ननु फले विधीयमानस्य कर्मणोऽर्थादुत्पत्तिविधिमप्यनुभवितुं प्रक्रममाणस्य गुणान्तराधिक्ये बलवद्विपरिवृत्त्यभावेनोत्पत्तेरनिवारणात्कथमकर्मान्तरतेत्याशङ्क्य, मन्यमानशब्देनानभिमतत्वं सूचयितुमाह—**एवमिति**। नन्वेवं सति साम्नो यागासाधनत्वात्तृतीया न युज्येतेत्याशङ्क्य, द्वेधा समर्थयते—**स्तोत्रेति**। दोषान्तरोक्त्यर्थं नैव शक्यमिति भाष्यं व्याचष्टे—**तत्रेति**। गुणान्तरविशिष्टत्वे प्रत्यभिज्ञानतिरोधानेनानुपादेयान्वयनिमित्तकर्मोत्पत्त्यनिवारणात्कर्मान्तरत्वापत्तेर्न पूर्वस्मिन्यागे रेवतीवारवन्तीयान्वयविधिः शक्य इत्याशयः।

रेवतीवारवन्तीयान्वयस्य क्रियान्तराविशेषणत्वाल्लिङां विध्यशक्तेर्ऋगन्तराणामविधेयत्वमभिप्रेत्यैतदुक्तमिति, तन्निरासाय लिङोऽशक्तत्वेऽपि कृत्वाशब्दस्य विधिशक्तेरुक्तत्वाद्विधेयत्वोपपत्तेर्गुणफलान्वयपक्षे काम्येनैव गुणविशिष्टकर्मफलान्वयपक्षे नैमित्तिकेन ऋगन्तरप्रगानेन नित्यवायव्याधारत्वरूपविशेषबाधाद्धानेऽपि वैगुण्यानापत्तिरित्यभिधानार्थं

नन्वित्याशङ्काभाष्यं व्याचष्टे—**नन्विति**। कृत्वाशब्देन विधातुं शक्यमिति सूचनार्थो भाष्ये करोति। कर्मान्तरपक्षे नीरूपस्य कर्मणो विधेयत्वायोगेन साधनाकाङ्क्षत्वाद्विधायाच्च प्रागतिदेशतो लाभाभावादर्थात्साधनान्तरविधिर्युक्तः। पूर्वकर्मपक्षे त्वनाकाङ्क्षितसाधन-विधायित्वकल्पना कृत्वाशब्दस्य न युक्तेत्याशयं सतीति परिहारभाष्यं व्याचष्टे—**सिद्धान्तेति**। वचनं तर्हीत्याशङ्काभाष्यं वचनशब्दस्य पूर्वभाष्यस्थवचनशब्दवत्कर्मान्तरविधिवाचित्वेऽभ्युप-गमविरोधापत्तेर्गुणान्तरविशिष्टप्रकृतकर्मविधिवाचित्वे तु प्रकृते कर्मानाकाङ्क्षितगुणान्तर-विधिकल्पनस्यानन्तरभाष्यनिरस्तत्वेन गुणान्तरविशिष्टप्रकृतकर्मविध्ययोगादयुक्तमाशङ्क्यो-पपादयितुमाह—**वचनं तर्हीति**। केनेत्यपेक्षायां गुणान्तरविशिष्टप्रकृतकर्मविधेर्निरस्तस्याप्य-निरस्तत्वं मत्वेयमाशङ्केति सूचनार्थं पूर्वोक्ताभिप्रायद्वयोक्तिः।

ननु कर्मविध्यभ्युपगमे यजत्यनुवादोक्तिर्न युज्येत्याशङ्क्याह—**यजिरिति**। फलोद्देशेन कर्मविधानेऽपि फलान्वयस्यापि गुणान्वयद्विशेषणत्वात्, तत्पक्षपरत्वे गुणविधेरेवायोगेना-नेकगुणविधेर्दूरोत्सारितत्वापत्तेरुत्पत्तिपरत्वं विनानेकार्थविध्ययोगात्तदन्यथानुपपत्त्योत्पत्ति-परत्वावगतेरुत्पन्नोत्पत्त्ययोगात्कर्मान्तरत्वसिद्ध्युक्त्यर्थं 'यदीति परिहारभाष्यं व्याचष्टे—**सिद्धान्तेति**। स्वाभिप्रेतं कर्मान्तरत्वं यदनेकार्थविध्यन्यथानुपपत्तेः फलं तत्कथयतीति वदताऽनेकार्थविध्यन्यथानुपपत्त्या प्रकृतकर्मविधिनिरस्तइति प्रकटितम्। अनेन वा रेवती-वारवन्तीयसम्बन्धसम्बन्धितया कर्मणो वचनमित्यध्याहारेण भाष्यव्याख्या सूचिता।

ननु कृत्वा यजेतेत्युपपदाक्रान्तत्वेन विधिशक्तेर्योगादवताराद्यागस्वरूपानुवादावगते-रङ्गाङ्गिसम्बन्धार्थत्वेन चानुभावादार्थवत्त्वोपपत्तेर्न कर्मान्तरत्वसिद्धिरित्याशङ्कार्थं नन्विति भाष्यं पूर्वस्मिन्कर्मण्यनेकार्थविधौ वाक्यभेदापत्तेः कर्मान्तरत्वसिद्ध्युक्त्या सूचितत्वादयुक्त-माशङ्क्योपपादयति—**नन्विति**। गुणान्तरविशिष्टप्रकृतकर्मविधिपक्षस्य कर्मान्तरत्वसिद्ध्यु-क्तिसूचितवाक्यभेदापत्त्या निरस्तस्यापि कण्ठोक्त्या वाक्यभेदवचनेनानिरस्तत्वात्पुनः शङ्को-पपत्तिरित्याशयः। भाष्यं च कृत्वाशब्दसमभिव्याहाराद्गुणे विधिसंक्रान्तिसूचनार्थस्ततः शब्दः। प्रयोजनशब्दस्य प्रधानवाचित्वाद्रेवतीवारवन्तीयसम्बन्धस्याङ्गप्रधानलक्षणो यागेन सम्बन्धो भविष्यतीत्यर्थः। इहाप्युत्पत्त्यविधानाभिप्रायैवानुवादोक्तिः। नैवमिति परिहार-भाष्यं कर्मान्तरत्वसिद्ध्युक्तिसूचितार्थविवरणत्वेन व्यचष्टे—**नैवमिति**। कीदृग्विवरणमित्य-पेक्षायामाह—**यदि हीति**। न तेन यागेन सम्बध्यइत्युक्ते, गुणेन तर्हि सम्बध्यतामित्या-शङ्क्य गुणेनापि न सम्बध्यतइति नञनुषङ्गापिशब्दाध्याहाराभ्यां वदता यागस्य रेवतीय-सम्बन्धस्य च पशुकामं प्रत्यसम्बन्ध इत्येवं भाष्यं व्याख्यातम्।

यद्वा गुणेनेतीत्थंभूततृतीयया गुणविशिष्टेन यागेनेत्यभिधानाद्विशिष्टस्य यागस्य पशुकामं प्रत्यसम्बन्ध इत्येवं व्याख्यातम्। उभयेतिभाष्यं रेवतीयसम्बन्धस्य यागफलाभ्यां सम्बन्ध इत्येवमर्थमाभासमानमस्मिन्पक्षे गुणस्य फलान्वयाभावादयुक्तमाशङ्क्य, यागस्य गुण-फलाभ्यां सम्बन्ध इत्येवं व्याख्यातुमाह—**सम्बध्यमानं चेति**। फलपदं गुणविशिष्टेन यागेन सम्बध्यमानं यागस्योभयसम्बन्धापादकत्वाद्वाक्यं भिन्द्यादित्यर्थः। वाक्यभेदोक्तेरुपलक्षण-

त्वात्स्वयं पूर्वाधिकरणोपक्रमोक्तं कर्मान्तरत्वे युक्त्यन्तरं स्मारयति—**गुणेति** । या च यदि तु पशुकामः स्यात्ततोऽनेनैव रेवत्यादिविशिष्टेनेति वचनव्यक्तिरुक्ता, साप्यप्राप्तफलान्वयानुवादायोगादयुक्तेत्याह—**न चेति** । अप्राप्तत्वादेव फलान्वयस्य यदिशब्दोक्ता निमित्ततापि प्रत्युक्तेत्याह—**तेनेति** । फलान्वयस्य निमित्तत्वाभावे नैमित्तिकेनगंन्तरप्रगानेन नित्यवाय-व्याधारत्वाख्यविशेषबाधाद्वैगुण्यपरिहाराशङ्का न युक्तेत्याह—**अतश्चेति** ।

ननु रेवतीवारवन्तीयान्वयस्य यागाङ्गत्वे यागस्य च फलान्वये विधीयमाने वाक्यभेदापत्तेः, प्रकृतस्य यागस्य गुणविशिष्टस्य फले विध्ययोगेऽपि गुणस्यैव फले विधिः, प्रकरणप्राप्तयगाङ्गत्वानुवादश्च भविष्यतीति पक्षान्तराशङ्कार्थमथेति भाष्यं व्याचष्टे—**अथेति** । नन्वाश्रयाश्रयिभावानुवादनिरासन्यायेनैवाङ्गत्वानुवादनिरासेसिद्धेः पृथगुपन्यासो न युक्त इत्याशङ्कानिरासार्थं प्रश्नपूर्वं विशेषमाह—**कः पुनरिति** । गुणफलान्वयविधायिनो वाक्यस्याश्रयलाभार्थं प्रकरणापेक्षत्वेन तद्बाधकत्वायोगात्प्रकरणेनाऽङ्गत्वज्ञाने सत्यानर्थक्यतदङ्गन्यायविषयत्वसम्भवाद्योग्यत्वात्स्तोत्रंऽवतरतो वारवन्तीयस्य तद्विशेषापेक्षायां क्रतुमात्रार्थो वारवन्तीयेऽग्निष्टोमस्तोत्रसाधनत्वदर्शनेनास्यापि तत्स्थानत्वावगतेस्तद्द्वारा रेवतीनामपि तत्स्थानत्वावधारणादनुवादोपपत्तिरित्याशयः । 'तदिति' परिहारभाष्यं व्याचष्टे—**तदिति** । आश्रयलाभायाधिकारलक्षणप्रकरणापेक्षत्वेऽप्यङ्गत्वप्रमाणभूतकथम्भावलक्षणप्रकरणानपेक्षत्वात्, तस्य 'चासंयुक्तंप्रकरणादि३।३-६ति तृतीयाधिकरणसूत्रे श्रुत्यादित्रयसंयुक्ताङ्गविषयत्वविषेधाद्वाक्यबाधितेन प्रकरणेनाङ्गता न शक्यावगन्तुमित्याशयः । तस्मादित्युपसंहारभाष्यं व्याचष्टे—**तस्मादिति** । 'यागगुणकं वेति' भाष्यं शङ्कोत्तरत्वेन व्याचष्टे—**तत्रेति** । रेवतीवारवन्तीयस्येति भाष्यावयवेन रेवत्याधारस्य वारवन्तीयस्य फलसम्बन्धोऽभिहितः । तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ।

रेवत्याधारस्य वारवन्तीयस्य यागगुणत्वेऽग्निष्टोमस्तोत्रान्वयो न स्यादित्याशङ्कार्थमथ पुनरिति भाष्यं व्याचष्टे—**अथ पुनरिति** । क्रियान्तरस्य यागस्य विशेषणंन रेवत्याधारेण वारवन्तीयेन सहाग्निष्टोमसाम्नः कथं सम्बन्ध इत्यर्थः । 'उच्यत' इति परिहारभाष्यं कृत्वाशब्दस्य रेवतीवारवन्तीयान्वयार्थत्वेनाग्निष्टोमसामान्वयायोगादनेन वचनेनाग्निष्टोमसामत्वासिद्धेरयुक्तमाशङ्क्य वारवन्तीयमग्निष्टोमसाम कार्यमित्यग्निष्टुत्प्रकरणस्थातिदेशप्राप्तवचनान्वयेनोपपादयति[1]—**तत्रेति** । नन्वतिदेशाद्वारवन्तीयस्याग्निष्टोमस्तोत्रस्थानत्वप्राप्तावपि, रेवतीनां कथं तत्स्थानत्वप्राप्तिरित्याशङ्क्य क्लृप्तस्थानेन साम्नैव रेवतीस्थानकल्पनेति प्रागुक्तन्यायोपन्यासः । अस्यैव भाष्यस्य स्वरूपार्थं व्याख्यातुमाक्षिपति—**अग्निष्टोमेति** । द्वेधा व्याचष्टे—**तेनेति** । प्रकृतौ ज्योतिष्टोमे यज्ञायज्ञीयस्याग्निष्टोमाख्यस्तोत्रसाधनत्वेनाग्निष्टोमसामशब्दवाच्यत्वात्, तत्कार्यापत्तिर्वारवन्तीयस्याद्यव्याख्यानेऽभिप्रेता । द्वितीये सामशब्दस्य सामसाध्यस्तोत्रलक्षणार्थत्वमभिप्रेत्य कार्यार्थत्वात्साधननियमस्य

---

१. वचनाशयत्वेनेति २ पु० पा० ।

स्तोत्रकार्यार्थत्वेन वृत्तिर्विवक्षिता। अथेति भाष्येणापि चैतस्यैवेति विस्पष्टकर्मान्तरवचनमिति पूर्वपक्षभाष्यार्थमनुभाष्य, तन्न्यायविरोधादित्यनेन परिहृतम्। तदेतच्छब्दस्तावद्धर्मलक्षणायानु'वादो भविष्यतीति वार्तिकेन व्याख्यातत्वादव्याख्याय तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। ॥ २७ ॥

इति द्वादशं रेवत्यधिकरणम्

भा० प्र०—पूर्व अधिकरण में वर्णित विचार का अपवाद प्रदर्शन का एक दध्यादि द्रव्य के सफलत्व के अधिकरण का वर्णन किया गया है। श्रुति में "त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वृक्षेकविंशमग्निष्टोम साम कृत्वा ब्रह्मवर्चसकामो यजेत" (तै० सं० ७।१।१०) यह वाक्य है, इसी के पास "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोम साम कृत्वा पशुकामो ह्येतेन यजेत" (तै० सं० १।८।१८) यह वाक्य है। इसका अर्थ यह हैं कि "त्रिवृत् अग्निष्टुत् अग्निष्टोमः" इस वाक्य में जो अग्निष्टुत् शब्द है, वह अग्निष्टोम नामक याग का विकृतिभूत एक दिन में साध्य एक याग का नाम है, उसी को गुणविशेष के कारण 'त्रिवृत्' इस नाम से कहा जाता है, यह साम "यज्ञा-यज्ञा वो अग्नयः" इत्यादि अग्निसम्बद्ध ऋक् में "एकविंशस्तोम" अर्थात् सामविशेष युक्त होकर गीत होता है। इस स्थल में "तस्य वायव्यासु एकविंशम् अग्निष्टोम साम कृत्वा ब्रह्मवर्चसकामो यजेत" इस वाक्य में कहा गया है कि "अग्निष्टुत्" नामक यज्ञ में ब्रह्मवर्चस की कामना करने पर अग्निष्टोम नामक साम मन्त्र को आग्नेयी ऋचाओं में गान कर "उपत्वा जामयो गिरः" इत्यादि वायव्य अर्थात् वायुदेवता सम्बन्धी ऋचाओं में एकविंश स्तोम से युक्त कर गान करे। इस वाक्य के ही समीप में "एकस्यैव रेवतीषु वायवन्तीयम् अग्निसाम कृत्वा पशुकामः हि एतेन यजेत" इस वाक्य में कहा गया है कि पशुरूप फल की कामना होने पर रेवती नामक ऋचाओं में अर्थात् 'रेवती' इस शब्द से युक्त "रेवतीर्नः सधमादः" इत्यादि ऋचाओं में "वायवन्तीय" नामक साम का गान करे और इसी से अग्निष्टोम नामक साम का गान हो जायेगा।

इस प्रसङ्ग में यह संशय होता है कि "एतस्यैव रेवतीषु" इत्यादि वाक्य के पशुरूप फल के लिए 'रेवती' नाम की ऋचाओं में "वारवन्तीय" नाम के सोम का विधान किया गया है, वह "अग्निष्टुत्" याग में गुणफल विधि है या वह अपूर्व कर्म की विधि है? इस संशय में पूर्वपक्षी का कहना है कि पूर्व अधिकरण में "दध्ना इन्द्रियकामस्य" इत्यादि वाक्य को जैसे गुणफल विधि मानकर सिद्धान्त किया गया है, इस स्थल में भी "एतस्यैव रेवतीषु" इत्यादि वाक्य भी उसी तरह गुणफल विधि ही होगी। इस स्थल में "एतस्यैव" इन दो पदों का अर्थात् 'एतद्' एवं 'एव' इन दो शब्दों से यह प्रतिपादित होता हैं, कारण, 'एतद्' शब्द प्रकृत का परामर्श करता है, अर्थात् प्रस्तुत जो विषय है उसी का प्रतिपादन आरम्भ करता है अर्थात् उसी विषय का स्मरण कराता है और

'एव' शब्द अन्य योग का व्यवच्छेद अर्थ को कहता हैं, अतः, इस एव शब्द के द्वारा अन्य के सम्बन्ध का निवारण होता है।

इसके समाधान में सिद्धान्ती का कहना है कि यह गुण फलविधि नहीं हो सकती है, क्योंकि, इससे वाक्यभेद हो जायगा, कारण, एक ही वाक्य से 'अग्निष्टुत्' याग में 'रेवती' ऋचाओं में वायवन्तीय साम का सम्बन्ध एवं उससे पशुरूप फल का सम्बन्ध दोनों का बोधन नहीं हो सकता है, अतः वाक्यभेद मानना होगा। यदि 'अग्निष्टुत्' याग में 'रेवती' ऋचाओं का सम्बन्ध पूर्व से प्राप्त है, अतः इस वाक्य से केवल रेवती ऋचाओं के साथ वायवन्तीय सोम का सम्बन्ध बोधित होता है किन्तु 'अग्निष्टुत्' याग में 'रेवती' ऋचाओं का सम्बन्ध पूर्व से प्राप्त न होने से उसके द्वारा गुणफल का विधान नहीं हो सकता है। पूर्व प्रसङ्ग के पक्ष में होम के साथ दधि का सम्बन्ध लोक से प्राप्त होने से वह शास्त्र का विषय नहीं है, केवल दही और फल का सम्बन्ध बोध ही शास्त्र का विषय है, अतः वहाँ वाक्यभेद नहीं होता है। इसलिए "एतस्यैव रेवतीषु" इत्यादि वाक्य को गुणफल विधि नहीं कहा जा सकता है, वरन् इसको गुणविशिष्ट अपूर्व कर्म की ही विधि कहा जायगा। 'एतद्' और 'एव' इन दो शब्दों को प्रकृत परामर्शी न मानकर विधीयमान कर्म विषयक मानने में भी दोष नहीं है।

'समेषु' = समान स्थल में अर्थात् जिस स्थल में गुण को क्रिया के समान मानकर क्रिया का आश्रित नहीं है उस स्थल में "कर्मयुक्तं स्यात्" = कर्मयुक्त होगा अर्थात् गुण के साथ सम्बन्ध नहीं होगा वरन् कर्म के साथ सम्बन्ध होगा। ऐसे स्थल में गुणविधि नहीं है अपितु अपूर्व कर्मविधि होगी। बारहवाँ देवताधिकरण अर्थात् वायवन्तीय आदि का कर्मान्तराधिकरण ॥ २७ ॥

### अथ त्रयोदशं सौभराधिकरणम्

## [१३] सौरभे पुरुषश्रुतेर्निधने कामसंयोगः ॥२८॥ पू०

**शा० भा०–यो वृष्टिकामो, योऽन्नाद्यकामो, यः स्वर्गकामः, स सौभरेण स्तुवीत, सर्वे वै कामाः सौभर[1] इति समाम्नाय ततः समामनन्ति 'हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, ऊ इति स्वर्गकामाय' इति। तत्र विचार्यते–किं सौभरं वृष्टेर्निमित्तं, हीषित्येतदपरं वृष्टेर्निमित्तम्, अथ सौभरमेव वृष्टेर्निमित्तम्। यदा तदवृष्टेर्निमित्तं, तदा हीषिति सौभरस्य निधनं कर्तव्यमिति, एवमूर्गित्यन्नाद्यकामस्य, ऊ इति स्वर्गकामस्य च तुल्यो विचारः। कथं निधनादपरं फलम्? कथं वा निधनव्यवस्थार्थं श्रवणमिति। यद्येवमभिसम्बन्धः क्रियते हीषिति वृष्टिकामाय कुर्यादिति, ततो निधनादपरं फलम्। अथैवमभिसम्बन्धः— हीषिति निधनं कुर्यादिति, तदा निधनव्यवस्थार्थं श्रवणम्। तदा वृष्टिकामावेति**

---

१. ' ब. सिति।

**सौभरविशेषणं क्रियते, न हीषा सम्बन्धः। किं तावत्प्राप्तम्? सौभरे निधनेऽपरः कामो विधीयत इति। कुतः? पुरुषश्रुतेः। पुरुषप्रयत्नस्यात्र श्रवणं भवति कुर्यादिति। तद्वृष्टिकामस्य हीषश्च सम्बन्धे कर्तव्ये वक्तव्यं भवति, न तु सौभरनिधनसम्बन्धे। तत्र हि[1] साङ्गं सौभरं कुर्यादिति प्रयोगवचन[2]सामर्थ्यादेव सिद्धम्[3]। तस्मात्कुर्यादिति पुरुषप्रयत्नवचनादवगच्छामो यतरस्मिन् पक्षे पुरुषप्रयत्नवचनमर्थवत्, तत[4]रोऽयं पक्ष इति। तत्रास्मिन् पक्षेऽर्थवद्, निधनादपरं फलमिति। तस्मात्सौभरे एकः कामः भेदेन निध[5]नादपि द्वितीयः काम इति।**

**अथवा वृष्टिकामायेति पुरुषश्रुतिः। वृष्टिं यः कामयते, स पुरुषो वृष्टिकामशब्देनोच्यते। तदस्मिन् पक्षे श्रुतिर्विनियोक्त्री। इतरस्मिन् पक्षे पुनर्वृष्टिकामशब्देन पुरुषवचनेन सता सौभरं लक्ष्येत। तथा लक्षणाशब्दः स्यात्। श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या, न लक्षणा। तस्मात्पश्यामो निधने द्वितीयः काम इति। एवं च फलभूयस्त्वं भविष्यति। तस्मान्निधनेऽपरः कामः॥ २८॥ पूर्वपक्षः॥**

## **अथ त्रयोदशं सौभराधिकरणम्**

त० वा०—ज्योतिष्टोमे सौभरमुक्थ्यानां ब्रह्मसाम विहितम्। पुनश्च तदेव 'यदि रथन्तरसाम' 'यदि बृहत्साम' इति च निमित्तयोर्विहितम्। ततः पुनः 'यो वृष्टिकामो, योऽन्नाद्यकामो, यः स्वर्गकामः; स सौभरेण स्तुवीत' इति नित्यस्यैव सतः फलत्रयसंबन्ध कृतः। तथा च वक्ष्यति एवंजातीयकेषु कामेषु 'नित्यस्य समत्वात्' इति। ऋत्वर्थपुरुषार्थं चैवंजातीयकं भवतीति वक्ष्यति एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति। एतदपि वक्ष्यति यथा विकल्पेनैतान्यस्य फलानि भवन्ति 'योगासिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वात्' इति।

तदेवंरूपं सौभरं प्रकृत्य पुनः श्रूयते 'हीषिति वृष्टिकामाय निधनं कुर्यात्, ऊर्गित्यन्नाद्यकामाय, 'ऊ इति स्वर्गकामाय' इति। निधनमिति चान्त्या सामभक्तिरभिधीयते। तत्रैतद्विचार्यते किं सौभरं निरपेक्षं फलानि साधयति, इमानि वृष्ट्यादीनि हीषादिनिधनफलानि पृथगेव भवन्ति, उत सौभरस्यैव तत्तत्फलं साधयतस्तत्तन्निधनं नियम्यत इति। यद्यपि चात्र कर्मभेदाभेदौ न स्तः तथाऽपि प्रसङ्गादुपन्यस्येते।

अथवा कर्मभेदाभेदवत्फलापूर्वभेदाभेदावपि लक्षणार्थाविति संबन्धः। एवं चानुष्ठानेऽपि विशेषो भवति। यदा वृष्टिकामेन सौभरं प्रक्रान्तं तदेतरयोरपि निधनयोः स्वफलप्रार्थनावशेन प्रयोगः। अपि च वृष्टिप्रार्थनयोरपि भेदः कर्तव्यो,

---

१. ब. हीषंगं। २. ब. प्रयोगवचने, ३. सिद्धं स्यात्।
४. ब. अर्थवद्भवतितरोऽयं। ५. ब. निधनेऽपि।

यदि निधनादपरं फलम्। अथ तु निधननियमः ततो हीषेव प्रयोक्तव्यमेकैव वृष्टिः प्रार्थयितव्या। एवमन्नाद्यकाम-स्वर्गकामयोरपि दर्शयितव्यम्। कुतः संशयः ?

**भाष्यानुसारिणा केषाञ्चित् व्याख्यानस्य अनुवादनिरासौ**

केचित्तावद्भाष्यकारकृतेन वचनव्यक्तिद्वयप्रतिभानेन वर्णयन्ति किं हीषादिशब्दानां वृष्टिकामादिपदैः संबन्धः अथ निधनपदेनेति। यद्यपि चोत्तरयोर्निधनमिति न श्रूयते, तथाऽप्याकाङ्क्षावशेनानुषज्यमानं सर्वसंबन्धित्वेन कथ्यते। किं तावत्प्राप्तम्—

पुनर्विधानसामर्थ्यात्स्वार्थत्वाच्च फलश्रुतेः।
फलभूयस्त्वलाभाच्च हीषादेरपरं फलम्॥

यदि हि सौभरफलान्येवै[1]तान्यभविष्यत् ततः पुनर्वचनमनर्थकमापत्स्यत। नं हि विधेयं तस्य तदा किंचिदपि लभ्यते। हीषादीनां शाखान्तरेषु सौभरनिधनत्वेन पाठादेव प्राप्तत्वात्। नियमार्था श्रुतिरिति चेत् ? न। श्रुतिप्राप्तानां नियमेन निवर्तयितुमशक्यत्वात्। सर्व एव तावन्नियमोऽन्यव्यावृत्तिफलत्वादन्याय्यः।

तथाऽपि तु यथाऽर्थाक्षिप्तावस्थानि वस्त्वन्तराणि भवन्ति। तत्रैकश्रवणवशेनेतरन्नि[2]वर्तते। न त्विह हीषादीनामर्थात्प्रयोगः, येनैकविधानादितरनिवृत्तिर्गम्येत। सौभरश्रुत्या हि तानि प्राप्यन्ते। तत्र न शक्यं विधिमात्रप्रवृत्तया पुनःश्रुत्या गत्यन्तरे संभवति बाधनं कर्तुम्। अस्मत्पक्षे तु काम्यत्वादन्य[3]तरद्वचनं क्रत्वर्थप्राप्तेतरबाधेनैव भविष्यति। वाक्यान्तराविहितं च वृष्टिहीषादिसंबन्धं विदधद्वाक्यमर्थवद्भवति। वृष्टिकामशब्दश्च स्वार्थत्वेन संभवन्न निधनव्यवस्थापरे वाक्ये सौभरविशेषणार्थः कल्पितो भविष्यति। पुरुषार्थभूयस्त्वं च विध्यात्मके वेदे पुरुषप्रवर्तनसौकर्यादिष्यते। तस्मान्निधनादपरं फलमिति॥२८॥

**॥ अथ त्रयोदशं सौभराधिकरणम्॥ १३॥**

न्या० सु०—सौभरस्य केवलकाम्यत्वे हीषादेः समाम्नायावगतस्य निधनान्वयस्य क्रत्वर्थे सौभरेऽनुपयुक्तत्वात्समाम्नायानर्थक्यपरिहारार्थं काम्यसौभरविषयत्वावगतेर्निधनत्वानुवादसम्भवाद्वाक्यभेदापत्त्या पूर्वपक्षानिरासासम्भवम्, तत्साध्यफलार्थस्य हीषादेर्भेदेन प्रार्थनेऽपि मन्दप्रयोजनत्वापत्तेः, फले विध्ययोगात्पूर्वपक्षासम्भवं चाशङ्क्य नित्ये नैमित्तिके च सौभरे हीषादेरनन्यसाध्यफलसाधनत्वं भविष्यतीति सूचयितुं त्रैविध्यमाह—**ज्योतिष्टोम इति**। 'यदि बृहत्सामातिरात्रः स्यात्सौभरमुक्थ्यानां ब्रह्मसाम कार्यं यदि रथन्तरसामा सौरभं कुर्यादि'ति वाक्याभ्यां बृहद्रथन्तरयोर्निमित्तयोः सौरभविहितमित्यर्थः। नित्यविधिस्तु

---

१. क० फलान्येतानि। २. क० इतराणि निवर्त्यन्ते। ३. क० बलवत्।

षोडशीसंस्थाविषयः। फलान्वये कादाचित्कत्वापत्तेर्नित्यत्वायोगात्सौभरमुक्थ्यानां ब्रह्मसाम भवतीति साक्षायणयज्ञे 'द्वे पौर्णमास्यौ यजेत' द्वे अमावास्ये इति काम्याया दर्शपूर्णमासावृत्तेरिवोत्पत्त्यर्थं भविष्यतीत्याशङ्क्य—**नित्यस्यैवेत्युक्तम्**। फलोद्देशपूर्वकस्यानुष्ठानस्य कादाचित्कत्वेऽपि तन्निरपेक्षानुष्ठानस्य नित्यतोपपन्नेत्याशयः। काम्यस्यापि नित्यत्वाविरोधं संस्थाधिकरणसिद्धान्तसूत्रावयवेन द्रढयति—**तथा चेति**।

ननु क्रत्वर्थे सति पारार्थ्यज्ञानात्फलश्रुतिरर्थवादः स्यादित्याशङ्क्याह—**क्रत्विति**। अर्थवादकल्प्यफलविषयः पर्णमय्यधिकरणन्याय इत्याशयः। नन्वेवमप्येकस्मात्सौभरप्रयोगात्फलत्रयसिद्धेर्निधनव्यवस्थानुपपत्तेः, सिद्धान्तासम्भवे नेदमनारभ्यमित्याशङ्क्य, प्रयोगभेदेनानेकफलसाधनत्वं चतुर्थाधिकरणे वक्ष्यमाणमाह—**एतदपि चेति**। 'सर्वेभ्यो दर्शपूर्णमासावित्याविशेषश्रुतेरेकस्मिन्प्रयोगे सर्वफलोत्पत्तिं पूर्वपक्षयित्वा, अर्थस्य फललक्षणस्योत्पत्त्या प्रयोगे सोपादानलक्षणयोगाभावादनुपादेयस्य चाविवक्षितसाहित्यत्वात्सर्वशब्दस्य च प्रकृतग्राहित्वात्प्रकृतानां चेष्टिसाध्यानां पशुग्रामादीनामन्योन्यनिरपेक्षसाध्यत्वावगमात्तादृशानामेव सर्वशब्दानिर्दिष्टानां दर्शपूर्णमाससाध्यत्वावगतेरेकमेव फलमेकस्मिन्प्रयोगे भवतीति योगेन पर्यायेण फलसिद्धिरिति सिद्धान्तयिष्यते।

अधिकरणारम्भसिद्ध्यर्थं क्रत्वर्थस्यैव सौभरस्य फलत्रयान्वयः। स च पर्यायेणेत्युक्त्वा निधनवाक्यमात्रस्य चिन्ताविषयत्वात्सौभरवाक्योदाहरणमनर्थकमाशङ्क्य, गुणफलान्वयस्याश्रयलाभार्थं निधनव्यवस्थायाश्च विषयलाभार्थमिति पक्षद्वयेऽप्युपयोगं प्रकृत्येतिशब्देन सूचयन्नुदाहरणभाष्यं व्याचष्टे—**तदिति**। तत्रेति सन्देहभाष्यं व्याचष्टे—**तत्रेति**। ननु संख्यासञ्ज्ञावद् गुणस्यापि धात्वर्थानपेक्षस्य भावनानन्वयात्साक्षाद्भावनाभेदकत्वानुपपत्तेः संख्याया कर्मभेद इति धात्वर्थभेदवाचिनः कर्मभेदपदस्यात्रानुषङ्गाद्धात्वर्थभेदाभेदयोर्गुणप्रकरणे विचार्यत्वावगतेरिह वोभयथापि धात्वर्थभेदात्प्रकरणसङ्गतिं विचारस्याशङ्क्य, भावनाभेदाभेदविचारस्य प्रासङ्गिकत्वेन तावत्सङ्गतिमाह—**यद्यपि चेति**।

भावनाभेदाभेदयोरपि वा लक्षणार्थत्वेन गुणप्रकरणेऽप्यनुषङ्गाद्धात्वर्थभेदाभेदवत्प्रकरणसङ्गतिः सम्भवतीति परिहारान्तरमाह—**अथ वेति**। तस्या एव च शब्दान्तरं भेदकं भविष्यत्यपूर्वस्यानभिधेयत्वात्कर्मभेदानुनिष्पाद्येव च तदिति, न पृथग्विचारमर्हतीति शब्दान्तराधिकरणवार्तिकेऽपूर्वभेदस्य लक्षणार्थत्वनिषेधाद्भावनाभेदाभेदावितिं वाच्ये। शुद्धाया भावनाया निरूपणाशक्तेर्भेदचिन्तानुपपत्तिमाशङ्क्य धात्वर्थावच्छेदनेन भेदानिरूपणेऽपि फलावच्छेदेन भेदं निरूपयितुं फलतोऽपूर्वाभिभवेति व्युत्पत्त्या भावना फलापूर्वशब्देनोक्ता। भावनाभेदाभेदयोरेव लक्षणार्थत्वेऽपि धात्वर्थानिरपेक्षायास्तस्या निरूपणाशक्तेस्तत्सिद्ध्यर्थं धात्वर्थभेदाभेदयोरपि विचार्यत्वाल्लक्षणार्थतापिशब्देनोक्ता।

यद्वा लक्षणार्था चेत्? वेदा कृत्वाप्रकरणेनापि सम्बन्ध इति सूचनार्थत्वेनोत्कृष्यापिशब्दो योज्यः। फलभेदादेव च कर्मैक्याविशेषेऽप्यनुष्ठानविशेषसिद्धेर्विचारस्य प्रयोजनवत्त्वं

सेत्स्यतीत्याह—**एवं चेति**। हीषादेः फले विधौ निधनव्यवस्थापकाभावात् वृष्ट्यर्थे सौभरे हीष्वनियमाभावादन्नाद्यर्थं स्वर्गार्थं वा इतरयोरपि प्रयोगे निधनव्यवस्थायां हीषेव प्रयोक्तव्यमित्येको विशेषः। यदा तु हीषापि वृष्टिमेव प्रार्थयते, तदा द्वे वृष्टी पूर्वपक्षे प्रार्थनीये सिद्धान्ते त्वेकैव। सौभरेणेति विशेषान्तरं वृष्ट्यभावात्सस्यशोषापत्तौ यावत्या वृष्ट्या सस्यानि निष्पद्यन्ते, तावत्या एव काम्यमानत्वात्तावत्याश्च सौभरादेव सिद्धेर्वृष्टेः सर्वस्य चासन्नतयैव कान्तं वृष्ट्यादीति विचारग्रन्थवार्त्तिके कालान्तरीयतया काम्यत्वनिषेधात्कालान्तरीयशोषशङ्कायामपि वृष्टिकामनानुपपत्तेरभ्युच्चयमात्रेणोक्तमिति सूचनयापि च शब्दः। कथमिति सन्देहहेतुप्रश्नभाष्यं व्याचष्टे—**कुत इति**।

यद्येवमित्यादेरधिकरणसमाप्तिपर्यन्तस्यान्येषां व्याख्यां दूषयितुमुपन्यस्यति—**केचित्तावदिति**। ननूत्तरयोर्वाक्ययोर्निधनपदाश्रुतेर्निधनपदान्वयो न सम्भवतीत्याशङ्क्याह—**यद्यपि चेति**। शाखान्तरे त्रिष्वपि वाक्येषु निधनपदश्रुतेस्तदालोचनेनेहास्याकाङ्क्षाकल्पनयाऽनुषङ्गोपपत्तिर्यद्यपिशब्देन सूचिता। पूर्वपक्षभाष्यं व्याचष्टे—**किं तावदिति**। पुरुषप्रवर्त्तकविधिलक्षणार्थं पुरुषशब्दमभिप्रत्य पुरुषश्रुतिव्याख्यानार्थं पुरुषस्येत्यादिभाष्यमाद्यपदेन व्याख्यातम्। विधौ पुरुषस्येत्यादिभाष्यमाद्यपदेन व्याख्यातम्। विधौ पुरुषशब्दस्यासाधुत्वा'न्न चाविहितमङ्गं भवती'ति च न्यायेन नियतस्य निधनस्याङ्गत्वात् समाम्नायात्साधारण्यतः प्राप्तस्यापि विध्यर्थवत्त्वोपपत्तेरपरितोषादन्यथापुरुषश्रुतिव्याख्यानार्थमथ वेति भाष्यम्। निधनपदेनापि हीषान्वये निधनाक्षिप्तसौभरविशेषणत्वेन श्रुतिवृत्तस्यैव वृष्टिकामपदस्याऽन्वयोपपत्तेः सौभरलक्षणार्थत्वायोगादयुक्तमाशङ्क्य, श्रुतिशब्दः स्वप्राधान्यवाची। लक्षणाशब्दश्चान्यविशेषणत्ववाचीत्येवं द्वितीयेन व्याख्यातम्, सूत्रसूचितहेत्वन्तरोक्त्यर्थमेवं चेति भाष्यम्। वृष्ट्याद्यर्थं सौभरावयवत्त्वाद्धीषादेः सौभरद्वारा वृष्ट्याद्यन्वयसिद्धेर्निधने कामसंयोग इति प्रतिज्ञासूत्रावयवानुपपत्तिमाशङ्क्य फलान्तराभिप्रायत्वेन व्याख्यानार्थं सौभर इति पूर्वपक्षोपक्रमभाष्यम्।

श्लोकस्य समस्तपूर्वपक्षभाष्यव्याख्यार्थत्वसूचनायान्त्येन व्याख्यातम्। हीषादेरित्यनेन निधनशब्दस्य हीषादिलक्षणार्थतोक्ता। फलान्तरान्वय हीषादेः सौभरानपेक्षत्वापत्तेर्निधनत्वासिद्धिमाशङ्क्य, फले विहितस्य हीषादेराश्रयापेक्षायां प्रकरणात्सौभराश्रयत्वावगतेस्तत्र च निधनत्वेनैव समाम्नानान्निधनत्वानुवादोपपत्तिरिति सूचनार्थः। सौभर इति सूत्रावयवो निधनशब्दस्य हीषादिलक्षणार्थत्वव्याख्ययैव व्याख्यातो भवति। आद्यपादं व्याचष्टे—**यदि हीति**। शाखाभेदेन हीषादेः सौभरनिधनत्वेन पठितस्य सौभरविधिश्रुत्या विकल्पेन प्राप्तस्य स्वरसतः प्रापणात्मकविधिमात्रप्रवृत्त्यैकपुनःश्रुत्या फलान्वयित्वेनाप्राप्तविध्यर्थतया गतिसम्भवेऽन्यव्यावृत्तिफलत्वायोगाद् बाधानुपपत्तेर्नियमोऽनर्थकः स्यादित्याशयः। द्वितीयं व्याचष्टे—**वृष्टिकामेति**। तृतीयं व्याचष्टे—**पुरुषार्थेति**। चतुर्थं व्याचष्टे—**तस्मादिति** ॥२८॥

भा० प्र०—वेद में कहा गया है कि "यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः स सौरभेन स्तवीता सर्वे वै कामाः सौभरे" (ता० म० ब्रा०-८-८) जो व्यक्ति वृष्टि की कामना करे एवं जो व्यक्ति अन्नाद्यकामी एवं जो स्वर्गकामी है, वह सौभर के द्वारा याग करे, इस प्रकार की एक विधि है। इसी के बाद पुनः वेद में कहा गया है—'हीषिति वृष्टिकामाय निधनं कुर्यात्। ऊर्गित्यन्नाद्यक.माय। ऊइति स्वर्गकामाय।" वृष्टि की कामना के लिए "हीष्" इस निधन = सामविशेष को करे, अन्नाद्य कामना के लिए "ऊर्क" इस सामांश विशेष को करे। स्वर्ग की कामना के लिए "ऊ" इस निधन = सामविशेष को करे। इस स्थल में जो "सौभर" शब्द यह सामांश विशेष का नाम है। "निधन" यह साम के अंश विशेष का नाम हैं। साम दो प्रकार है (१) 'पाञ्चभक्तिक' और (२) 'साप्तभक्तिक' अर्थात् पाँच भाग और सात भाग से युक्त। उनमें प्रत्येक अंश का 'प्रस्तार', 'उद्गीथ' इत्यादि विशेष-विशेष नाम हैं। उनमें जो अन्तिम अंश है, उसका नाम 'निधन' है। इस स्थल में "यो वृष्टिकामः" इत्यादि श्रुतिवाक्य में 'सौभर' नाम के साम के द्वारा स्तोत्र करना चाहिये और 'वृष्टि', 'अन्नाद्य' एवं 'स्वर्ग' उसके फल के रूप में है। आगे की श्रुति में भी 'हीष्', 'ऊर्क्' एवं 'ऊ' इन तीन निधनों का विषय कहा गया है और इन तीनों का भी वृष्टि, अन्नाद्य और स्वर्ग फल कहा गया है। इसमें यह संशय होता है कि 'हीष्' इत्यादि निधनों में जो वृष्टि आदि फलों का उपदेश है, वह क्या सौभर वाक्य में उपदिष्ट फलों से स्वतन्त्र है या 'हीष्' इत्यादि वाक्यों में सौभर वाक्य में उपदिष्ट फलों का ही अनुवाद कर 'हीष्' इत्यादि निधनों का विधान किया गया है। इसमें पूर्वपक्षी का कहना है कि "निधनं कामसंयोगः"—हीष् इत्यादि वाक्यों में "हीष् इति वृष्टिकामाय कुर्यात्" इस प्रकार अन्वय करना चाहिये अर्थात् वृष्टि की कामना के साथ 'हीष्' इसका सम्बन्ध होगा। कारण "पुरुषश्रुतेः" 'वृष्टिकामाय' आदि पदों में तादर्थ्य में चतुर्थी होने से 'हीष्' आदि निधन वृष्टिकामी पुरुष की कामना के लिए अंग होता है और 'हीष्' आदि निधन वृष्टि आदि कामी पुरुष की कामना के लिए अंग होता है। 'हीष्' आदि पुरुष की अभिलषित वृष्टि आदि फल का यदि साधन = हेतु या निष्पादक होता है, तभी उसकी कामनावान् पुरुष का अंग हो सकता है। इसीलिए 'हीष्' इत्यादि वाक्य में जो वृष्टि आदि फल श्रुत होता है, वह 'हीष्' आदि निधन का स्वतन्त्र फल है। अतः इस स्थल में सौभर का फल वृष्टि है एवं 'हीष्' इस निधन का फल भी वृष्टि है, दोनों को मिलाकर अधिक वृष्टि होगी—यही सूचित होता है।

"सौभरे" = सौभर नाम के साम में अर्थात् "सौभर" नाम के साम में आश्रित "हीष्" इत्यादि निधन में, "पुरुषश्रुतेः" = पुरुष संयोग होने से अर्थात् कामनावान् अधिकारी पुरुष का निर्देश होने से 'निधनं' = निधन अर्थात् साम का अंश विशेष, "कामसंयोगः" = कामसंयोग अर्थात् फलसंयोग अर्थात् फलान्तर की जनकता होगी। यह पूर्वपक्ष है ॥२८॥

**सर्वस्य वोक्तकामत्वात्तस्मिन् कामश्रुतिः स्यान्निधनार्था पुनः श्रुतिः ॥ २९ ॥ सि०**

**शा० भा०—वाशब्दः पक्षं व्यावर्तयति। न चैतदस्ति—यदुक्तं निधनेऽपरः काम इति। नैवं सम्बन्धः क्रियते वृष्टिकामाय हीषिति कुर्यादिति। कथं तर्हि? हीषिति निधनं सौभरस्येति। कथम्? हीषो वृष्टिकामसम्बन्धे क्रियमाणे, निधनं कुर्यादिति सम्बन्धो न कृतः स्यात्। तत्र हीषिति निधनमिति नावकल्प्येत। तत्रोभयसम्बन्धे, वाक्यभेदः। तत्र निधनशब्दः प्रमादसमाम्नात इति गम्यते। न चैवंजातीयकः प्रमादसमाम्नात इत्युक्तम्। तस्मान्न हीषो वृष्टिकामेन संबन्धः। तेन न निधनादपरं फलम्।**

**अथ हीषो निधनसम्बन्धे कथमवाक्यभेद इति। उच्यते। वृष्टिकामाय सौभरमस्त्येव सौभरस्य निधनप्राप्तिरस्त्येव। तत्र हीषिति कुर्यादित्येष[1] एवार्थो विधीयते। तस्मादवाक्यभेद इति। अतो निधनव्यवस्थेति गम्यते। एवमेव ऊर्गिति, ऊ इति च वदितव्यम्। सर्वस्य सौभरस्य ऊर्ग्वृष्टिस्वर्गकामत्वाच्छक्यते कामवचनैः सौभरं लक्षयितुम्। किमर्थं लक्ष्यत इति? निधनार्था पुनःश्रुतिर्निधनव्यवस्थां करिष्यतीत्यर्थः ॥ २९ ॥ सिद्धान्तः ॥**

**इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः।**

त० वा०—उच्यते—

निधनश्रुतिवैयर्थ्यान्न हीषः फलसंगतिः।
निधनेन तु संबन्धे फलशिष्टं विशेषणम् ॥

हीषा वृष्टिं कुर्यात्तां च निधनभूतेनेति वाक्यभेदः तदसंबन्धे चाऽऽनर्थक्यम्। अस्मत्पक्षे न किंचिदनर्थकम्। सर्वस्य सौभरस्य वचनान्तरैरुक्तवृष्ट्यादिकामत्वेन, तत्पदानां च प्राप्तत्वाद्धीषादिसंबन्धमात्रे विधीयमाने वाक्यभेदाभावः। न च वचनमनर्थकं, निधनविशेषनियमार्थत्वात्। विनाऽपि च गुणकामत्वेनास्त्येवात्र हि परोक्षवृत्त्या निधनान्तरं प्राप्नोति। इदं पुनः प्रत्यक्षं, तस्माद्बलीयः। यथा चाऽर्थादाक्षिप्यमाणं श्रौतेन निवर्त्यते, यथा परोक्षवृत्त्याऽपीति।

अथवा सौरभशब्दवाच्याया गीतेर्नैव, किंचिद्बाध्यते। अक्षरविधानेनाक्षरान्तरमात्रबाधनात्। यदि हि गीत्यन्तरावयवो विधीयेत्, ततः सौभरावयवोऽपि बाध्येत। स्तोभाक्षरबाधस्त्वयं निधनविषय इत्यदोषः। तस्मान्निधननियमार्थं पुनःश्रुतिरिति।

---

१. ब. एकएवार्थो।

### केषाञ्चित् पक्षस्य समीक्षा

एवं तु व्याख्यायमानेऽस्ति किंचिद्वाच्यम् । तदुच्यते—

न तावत्संशयो युक्तो वचनव्यक्तिभेदतः ।
हीषो निधनसंबन्धो नेष्टो हि व्यवधानतः ॥

हीषिति निधनमिति व्यवहितकल्पनादोषादनिष्टः संबन्धः । तथोत्तरपक्षेऽपि—

निधने हीष्विधानं चेद्वृष्टिकामविशेषिते ।
विशिष्टार्थानुवादत्वाद्वाक्यभेदः स्फुटो भवेत् ॥

निधनानुवादेन हीषादिविधाने फलपदमनर्थकं, पुनःश्रुतिवैयर्थ्यं च स्यात् । सौभरग्रहणेनैव हि निधनमात्रसंबन्धः प्राप्त इति, न तन्मात्रवचनेनाऽर्थः । तत्र यदि वृष्टिकामाय[1] यद्यत्सौभरं, तस्य यन्निधनमिति विशिष्टमनूद्य, तत्र हीष्पदं प्रयुञ्जीतेति विधीयते, ततोऽनेकसंबन्धकरणाद्वाक्यं भिद्येत । यद्यपि वृष्टिकाम-सौभर-तन्निधनानि प्राप्तानि, तथाऽप्यनेकेषामपि संनिधिरस्तीति व्यवच्छेदार्थमवश्यं यत्नः कर्तव्यः । ततश्चानेकार्थत्वमिति दुर्बलः सिद्धान्तः । पूर्वपक्षनिराकरणमपि न सम्यक्कृतं, समाम्नायादेव हीषादीनां निधनत्वसिद्धेः ।

### अत्र वार्तिकमतम्

तस्मादेवं वर्णनीयम् ।

वृष्टिकामपदेनैव संबन्धे सति संशयः ।
फलेन साधनेनेति वाक्यसामर्थ्यवीक्षणात् ॥

अत्र हीषिति वृष्टिकामायेत्येवमेवावस्थिते संदेहः—किं साक्षात्फलेन हीषः संबन्धः अथ फललक्षितेन साधनविशेषेणेति । तदा च **हीषिति निधनमिति,** एतत्फलं भवतीति वचनव्यक्तिरिव भाष्यकारेण दर्शिता । **वृष्टिकामायेति सौभर-विशेषणमिति** सौभरस्य निधनवाक्ये स्वपदेनानुपादानाल्लक्षणारूपेणैव विशेषणत्वम् । **न हीषा संबन्ध** इति फलस्वरूपासंबन्धाभिप्रायेण । तत्र तथैव विधिपुनःश्रुत्यपेक्षं व्याख्यानम् ।

प्रयोगवचनसामर्थ्यादेव सिद्धं स्यादिति, अपरा व्याख्या । यदि हि स्वार्थप्रवृत्तस्यैव सौभरस्य निधनमात्रं नियम्येत, ततस्तत्प्रयोगवचनेनैवोपनीतमात्रहीषादिविधिसिद्धेर्विध्यानर्थक्यं भवेत् । फलसंबन्धपक्षे तु न प्रयोगवचनः समर्थ इत्यर्थवत्ता ।

किं च ।

वृष्टिकामपदेनात्र श्रुत्यैवाभिहितः पुमान् ।
साधनापेक्षिणस्तस्य हीषादिपदसंगतिः ॥

---

१. क० वृष्टिकामो ।

अन्यथाऽनेन सौभरं प्रकरणावगतमपि वृष्टिसाधनशक्तियुक्तं लक्ष्येत। न च तदाश्रयणे किंचित्प्रयोजनमस्ति। तथा श्रुतिलक्षणाविषये चेति ब्रुवतो भाष्यकारस्याप्येतदेव व्याख्यानमभिप्रेतमिति गम्यते।

सिद्धान्तस्तु—

सौभरस्य समस्तस्य यः कामोऽभिहितः पुरा।
नियन्तुं निधनं तस्य स एवायमनूद्यते॥

सर्वस्यैव सौभरस्यायं कामसंयोगः पूर्वोक्त एव प्रत्यभिज्ञायमानः कीर्त्यत इति, नापूर्वफलप्रतिपत्तिः। किमर्था तु प्राप्तस्य पुनःश्रुतिरित्यत आह—निधनार्था पुनःश्रुतिरिति।

कस्मात्पुनःश्रुत्युपात्तेन फलेनैव हीषादयो न संबध्यन्ते। तत्रोच्यते—

यथैव वारवन्तीयं नेष्टमाश्रयमाप्नु[१]यात्।
फले तथैव हीषादि नाऽऽप्नोत्याश्रयमीप्सितम्॥

हीषा वृष्टिं साधयेदिति हि गृह्यमाणेऽवश्यं किमाश्रितेनेत्यपेक्ष्यते। तत्र यत्सौभरं प्रकृतम्, तत्तावन्न शक्तमाश्रयत्वं प्रतिपत्तुम्। समस्तं हि साम सौभरशब्देनोच्यते। न च तद्धीषा साधयितुं शक्यम्। यथा दध्ना होमः। तद्धि सकलं होमं व्याप्तुं शक्नोति। न तु हीषा सौभरं व्याप्यते, बह्वक्षरसाध्यत्वात्। न च तदसाधयत आश्रयाश्रयिसंबन्धोऽवकल्पते। यत्तु तेन व्याप्त्या साधयितुं शक्यते निधनम्, न तस्य प्रकरणमस्तीति, न वाक्याद्विनाऽऽश्रयत्वं प्रतिपद्यते। तत्र यदि वाक्येनैव फलसंबन्धः। तेनैव चाऽऽश्रयलाभस्ततो वाक्यं भिद्यते। तथा निधनमात्रानुवादेन हीषादिसंबन्धे प्रकरणं बाधित्वा सर्वसाम[२]संबन्धप्रसङ्गे पुनः सौभरस्य यदिति कथमपि विशेषणीयम्, तत्रापि पुनर्मतिः क्लेशनीया।

किं च।

यद्यप्यवयवद्वारं भवेत्सौभरसाधनम्।
तथाऽपि भवत्यनेकत्वात्क हीषिति न गम्यते॥

न तावत्सौभरावयवेन निधनेन साधितेन प्रकरणलभ्यसौभरं साधितं भवति, अवयवस्य सौभरत्वेनाप्रतीतेः। न च यथा शक्नुयात् तथाऽऽश्रयेदित्येषा कल्पनाऽस्तीत्युक्तम्। उपेत्यापि त्वाश्रयत्वमनेकप्रस्तावादिभक्तिनि सौभरे कतमस्यां भक्तौ हीषादयः प्रयुज्यन्तामिति नैव ज्ञायते। 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति प्रस्तावे वा प्राप्नुवन्ति। तत्र निधनमित्यनुवादो नावकल्प्यते।

---

१. क० आप्तवत्। २. क० सामेति।

अथोच्येत यथोक्थ्यादीनां फलाय चोदितानां प्रकरणाज्ज्योतिष्टोममाश्रयतामसमस्तव्यापित्वेनानेकावयवत्वेऽपि सति वाक्यान्तरवशेनान्ते निवेशो भवति। एवमत्रापि फले विहितानां हीषादीनामाश्रयत्वेन सौभरमुपसर्पतां समाम्नायवशेन लब्धस्थानानां निधनत्वमनुवदिष्यत इति। तदयुक्तम्। कुतः—

अनन्यविषयत्वेन स्थानमुक्थ्यादिषु स्थितम्।
हीषादिस्तु बहुस्थानः क्व स्यादिति न गम्यते॥

युक्तमुक्थ्यादीनां प्रदेशान्तरेष्वदृष्टेरलौकिकत्वाच्च क्रत्वन्तरनिवेशित्वम्। न हि तेषां स्थानान्तरं दृष्टपूर्वम्। न चाविज्ञातस्थानविशेषाणां रूपावधारणम्, फलसंबन्धो वा। न चान्यत्रवर्तमानानां स्वरूपप्रयुक्त उक्थ्यादिव्यपदेशसंभवः। योऽपि वचनान्तरेण स्थानविशेषलाभः, सोऽपि पृथक्क्रत्वर्थत्वाविज्ञानादनयैव फलचोदना गृह्यत इति, तदर्थ एव विज्ञायते। हीषादीनां यः पुनः समाम्नायप्राप्तः स्थानविशेषसंबन्धः, स तावत्सौभरविधानेन, क्रत्वर्थत्वेन, सौभरफलार्थत्वेन चोप[1]योजितः। इदानीं तु फलं प्रति स्वतन्त्रस्य हीषो विधानाल्लोकवेदसामान्तरभक्त्यन्तरप्रकृतभक्तिवर्तित्वादिविशेषो न ज्ञायते, क्वावतिष्ठताम्। यदि हि प्रकृत एव विहित इति विज्ञायेत, ततस्तस्य ज्ञातस्थानत्वात्संदेहो न स्यात्।

ननु चैकत्वाच्छब्दस्य य एवायं प्रकृतः स्यात्, स एव लोकादिष्वपीति तद्गतग्रहणेऽपि तदेव विशेषस्थानं भविष्यतीति। नैतदेवम्। कुतः ?

एकत्वेऽपि हि शब्दस्य शक्तिभेदः प्रयोजने।
तत्र कार्यान्तरस्थानं न स्यात्कार्यान्तरेष्वपि॥

न शब्दैकत्वेन यत्किंचित्कार्ये स्थानं दृष्टसामर्थ्यम्, तदेवान्यत्रापीति शक्यते वक्तुम्। न हि यत् देवदत्तस्य युध्यमानस्य स्थानमवगतम्, तदेव भुञ्जनस्यापि भवतीति गम्यते। कार्यप्रयुक्ता हि स्थानविशेषादयो, न स्वरूपप्रयुक्ता। स्वरूपस्य स्थानान्तरेऽप्यविभागात्। अतः कार्यान्यत्वादेकस्यापि स्थानभेदप्राप्तिः। न च यत्सौभराङ्गभूतस्य हीषः स्थानम्, तदेव पुरुषार्थस्यापीत्यवधारणं शक्यम्। प्रासङ्गिकसौभरसाधनत्वादिति चेत् ? न। तस्यैव स्थानविशेषलाभात्प्रागसिद्धत्वात्। इतरेतराश्रयं हि स्यात् सौभरसाधनत्वेन स्थानविशेषः। तस्माच्च साधनत्वमिति।

ननु यथाऽभ्युदितेष्ट्यां मध्यमादितण्डुला उपादीयमानत्वेऽपि प्रकृता गृह्यन्ते, तथाऽत्र हीषादयो ग्रहीष्यन्ते। युक्तं तत्र प्रकृतगामिविभजतिवाक्यापेक्षितानां देवतासंयोगवाक्यानां तद्विषयत्वाद्यच्छब्दोपबद्धमध्यमादिविभागस्य च प्रकृत-

---

१. क० चोपयुज्यते।

प्रत्ययानतिरेकादन्येषामग्रहणम्। इह तु न हीषादीनां तादृक्कारणमस्तीति, न लौकिकप्रत्ययो निवर्तते। तस्मान्नैवं वाक्यार्थः संभवतीत्ययमपरः परिगृह्यते। यदा सर्वप्रकारमन्विष्यमाणोऽपि श्रौतः फलसंबन्धो न लब्धः, तदा मा बाधितरां श्रुतिरिति, प्रकृतसाधनलक्षणा विज्ञायते। तत्रैषोऽर्थो भवति—प्रकृताय वृष्टिसाधनाय हृषिशब्दोऽङ्गमिति। प्रकृतगामी च वृष्टिशब्दस्तत्साधनभूतं सौभरमेव लक्षयति, नान्यत्। न चान्यसाधनभूतम्, अप्रतीतेः। सत्यामपि च हीषादीनां प्राप्तौ नियमार्थत्वादर्थवद्वाक्यमित्युक्तम्। ते च हीषादयो यथाभूताः सौभरेणाऽऽक्षिप्ताः। तथाभूता एव नियम्यन्त इति, विनाऽपि निधनशब्दसंयोगेन सिद्धं निधनत्वमनूद्यते। तद्दर्शयति—**वृष्टिकामाय सौभरमस्त्येवेत्यादि**।

तदेतदधिकरणं गुणक्रियाफलप्रतिपादनपरयोरन्तराधिकरणयोरुभयोरत्यपवादभूतम्। वृष्ट्यादिशब्दैनैवेदं फलं साधनलक्षणयेति प्रतिपादनात्। यस्तु वाक्यभेदश्चोदित आसीत्, स निधनसंबन्धे सति श्रुत्या प्रकरणेन वा सौभरे विशेषणत्वेनोपादीयमाने भवेत्। न त्विह तदुभयमप्यस्ति। वृष्टिकामपदेनैव संबन्धात्, प्रकरणलभ्यत्वाच्च सौभरविशेषणत्वस्य। न च प्रकरणलभ्या विशेषा वाक्यं भिन्दन्ति। तस्माददोषः।

## अत्र वार्तिकमतम्

इदं त्विह विचारयितव्यं भवति—किं यत्र क्वचन शाखायामधीतस्य सौभरस्य वृष्ट्यादिसाधनभूतस्य हीषादयो नियम्यन्ते, उत यत्र हीष्निधनकं पठ्यते, तच्छाखागतं वृष्टिकामस्य प्रयोक्तव्यम्, एवमूर्ङ्निधनकम्, ऊनिधनकं चेति सदृशो विचारः। तत्रानियमेन सहस्रशाखागतसौभरप्रयोगविकल्पे सति वृष्टिकामादिनिमित्ते हीषादिमात्रनियम इति प्राप्ते।

अभिधीयते—यत्र तन्निधनकं पठ्यते, तच्छाखागतैव वृष्टिकामादेः समस्ता गीतिरुपादातव्येति, कुतः ?

प्रपद्यते रूपविनाशभीतेर्गीतिर्न गीत्यन्तरभक्तियोगम्।
अतः समस्तैव विकल्प्यमाना यथासमाम्नायमसौ नियम्या ॥

सामरूपं हि समाम्नायादवगम्यते। तच्चाल्पेनान्यत्वेनाप्रत्यभिज्ञानादन्यदेव भवति। तत्र यदि शाखान्तरीयायां गीतौ शाखान्तरीयनिधनं प्रयुज्येत, ततो रूपान्यत्वं स्यात्। न च वचनादृते ऐरवद्विकारः। तच्छाखागतगीतिग्रहणेनाविरोधोपपत्तेः सर्वत्रासंभवाद्विकाराश्रयणम्। अस्ति चात्र गतिः विकल्पप्राप्तौ चायं नियमः। समस्तस्य च साम्नः पदार्थत्वाद्विकल्पप्राप्तिः। नावयवानाम्। अतो नान्यदीयनिधनविधानम्। अत एकदेशनियमे सति कांस्यभोजिन्यायेन

समस्तनियमः। एषोऽपि चात्र वाक्यार्थः संभवति—उभयोः प्राप्तयोः संबन्धमात्रं विधीयते। यद्वृष्टिकामाय सौभरम्, यच्च हीषित्येवं निधनं तदेकत्र संपादनीयमिति। तस्मात्समस्तगीतिनियम इति सिद्धम् ॥२९॥

( इति त्रयोदशं सौभराधिकरणम् ॥१३॥ )

इति श्रीभट्टकुमारिलविरचिते मीमांसाभाष्यव्याख्याने तन्त्रवार्तिके

द्वितीयाध्यायस्य द्वितीयः पादः ॥

न्या० सु०—वाशब्दव्याख्यानार्थं तेन नास्य निधनादपरं फलमिति भाष्यं व्याचष्टे—**उच्यत इति**। अथेति भाष्येण हीषादेर्निधनपदान्वये फलपदस्य वाक्यभेदभयेनानन्वयात्प्रमादसमाम्नायापत्तिरित्याशङ्क्य तन्निरासार्थत्वेन वृष्टिकामायेत्यादिका या कामश्रुतिः, सा तच्छब्दपरामृष्टसौभरविषया तद्विशेषणार्था। न हीषादेः फलान्वयविध्यर्थत्येवं 'सर्वस्योक्तकामत्वात्तस्मिन्कामश्रुतिः स्यादिति सूत्रावयवव्याख्यानार्थंतुच्यतइत्यादिभाष्यं व्याचष्टे—**निधनेन त्विति**। फलश्रुतेर्हीषाद्यनन्वयेऽपि निधनव्यवस्थाविषयभूतसौभरविशेषणार्थत्वान्नानर्थक्यापत्तिरिति विशेषणत्वोक्त्या सूचितम्। निधनमात्रे हीष्विधौ निधानान्तरानर्थक्यापत्तेर्निर्विशेषणस्य निधनस्यार्तिवदनुवादायोगाद् वृष्टिकामस्य प्रकरणलभ्यनिधनविशेषणसौभरद्वारा निधनविशेषणत्वेनावगतस्यानुवादान्तर्गत्यवगतेरवाक्यभेदाशयः। भाष्ये लक्षयतिर्विशेषणवाची।

पूर्वार्द्धं व्याचष्टे—**हीषेति**। हीषः निधनपदेनासम्बन्धे निधनपदानर्थक्यमित्यर्थः—**उत्तरार्द्धं व्याचष्टे। अस्मत्पक्षे त्विति**। सौभरफलान्वयविधायिनो यो वृष्टिकाम इति वचनान्तरस्यैक्येऽपि फलस्योद्देश्यत्वाप्रत्युद्देश्यं च वाक्यसमाप्तेर्वचनान्तरैरिति बहुवचनं पदशब्दस्य लक्षणयावयववाचित्वात्सौभरावयवानां निधनादीनां समाम्नायादेव प्राप्तत्वाद्धीषादिनियममात्रविधौ नानेकार्थविधिलक्षणवाक्यभेदापत्तिरित्यर्थः। किमर्थं त्वित्याशङ्कोत्तरत्वेन निधनार्थेति सूत्रावयवव्याख्यानार्थं भाष्यं व्याचष्टे—**न चेति**। वृष्ट्यादिफलत्वेनोक्तस्यापि सौभरस्यात्रोपलक्षणं नानर्थकमित्यर्थः। यत्तु काम्यत्वाभावे हीषादीनां बलविशेषाभावेनान्योन्यबाधकत्वायोगान्नियमानर्थक्यमुक्तं तत्परिहरति—**विनापि चेति**। सौभरत्वसामान्याभावात्सर्वासां प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्यानां भक्तानां यः साधारणत्वात्सामान्यरूपः समूहस्तद्वाचित्वादित्यर्थः। तथापि कथं बाध इत्यपेक्षायामाह—**तच्छ्रुत्या हीति**। सौभरश्रुत्या लक्षणया निधनान्तरप्राप्तेरर्थाक्षिप्तवद्धिप्रकर्षाविशेषाद् बाधा युक्तेत्यर्थः। सौभरशब्दस्य वाक्षरवाचित्वाभावात्तद्बाधे श्रुत्यर्थबाधो नास्तीति परिहारमाह—**अथ वेति**। स्तुतिसाधनर्गक्षराभिव्यक्त्यर्थत्वात्साम्नस्तद्बाधे प्रधानबाधद्वारापि बाधः शङ्क्येत ऋगक्षरातिरिक्तविवर्णाक्षराख्यसौभरबाधे तु तस्य नियतकालसामभागपरिपूर्णार्थत्वेन साम प्रति गुणभूतत्वात्तद्बाधेन कथं चित्सामबाधेति सूचनार्थम्—**स्तोभेत्युक्तम्**। परव्याख्यां दूषयितुमुपक्रमते—**एवं त्विति**। सन्देहहेतुं तावत् दूषयति—**तदिति**। श्लोकं व्याचष्टे—**हीषिति**।

सिद्धान्तं दूषयति—**तथेति**। श्लोकं व्याचष्टे—**निधनेति**। निधनमात्रानुवादेन हीष्विधौ फलपदानर्थक्यात्सौभरश्रुत्यैव च प्राप्तत्वेन पुनः श्रुत्यानर्थक्याद्व्यवहितान्वयदोषपरिहारार्थं च वृष्टिकामविशिष्टनिधनानुवादेन हीष्विधानस्योक्तत्वाद्वृष्टिकामत्वादेः प्राप्तत्वादनेकार्थविधिलक्षणवाक्यभेदाभावेऽप्यबाधः कामत्वादेरपि प्राप्तेर्नित्यानुवादायोगाद्यथा चार्त्तेः शुद्धाया नित्यत्वेन निमित्तत्वायोगाद्विशिष्टाया निमित्तताश्रिता तथेह विधेयान्वयनिरपेक्षस्वरूपमात्रालोचने शुद्धस्यापि निधनस्यानुवादोपपत्तेर्विशेषणस्यानुवादान्तर्गत्याश्रयणहेत्वभावाद्विशिष्टानुवादलक्षणो वाक्यभेदोऽपरिहार्य इत्यर्थः। प्रकृताश्रयालाभस्य पूर्वपक्षनिरासहेतोरनुक्तत्वान्निधनान्वयविधिनिमित्तवाक्यभेदप्रसङ्गस्य च निरासहेतोः सुपरिहरत्वात्स्वपूर्वपक्षनिरासोऽप्ययुक्त इत्याह—**पूर्वपक्षेति**। स्वमतेन व्याचक्षाणः सन्देहस्वरूपं तद्धेतुं च तावत्प्रतिज्ञापूर्वमाह—**तस्मादिति**। श्रुत्या फलपरत्वसम्भवे साधनभूतसौभरलक्षणानुपपत्तेः सन्देहायोगमाशङ्क्य प्रकृतसौभराश्रयत्वसम्भवासम्भवलक्षणसन्देहहेतुसूचनार्थम्—**वाक्येत्युक्तम्**। प्रकृताश्रयालाभाद् गुणफलान्वये वाक्यासामर्थ्ये सति श्रुत्यसम्भवाल्लक्षणोपपत्तेर्वाक्यसामर्थ्यसदसद्भावालोचनात्सन्देहोपपत्तिरित्याशयः।

श्लोकं व्याचष्टे—**हीषिति**। कथं तर्हि भाष्यं व्याख्येयमित्यपेक्षायामाह—**तदा चेति**। वृष्टिसाधने सौभरे हीष्विधौ समाम्नायादेव प्राप्तेः फलतो निधनव्यवस्थार्थत्वावगतेर्हीषिति निधनमित्यर्थो लभ्यत इत्याशयः। विधेयहीषक्षरान्वये च वृष्टिकामशब्दस्य हीषक्षरान्वयान्यथानुपपत्त्या सौभरलक्षणार्थत्वकल्पनोपपत्तेस्तद्विषयतया विशेषणशब्दो व्याख्येय इत्याह—**वृष्टिकामायेति**। ननु सिद्धान्तेऽपि हीषक्षरान्वयिसौभरोपलक्षणार्थत्वाद् वृष्टिकामशब्दस्य हीषक्षरान्वयाभ्युपगमेन हीषेति सिद्धान्तवचनव्यक्तिभाष्यावयवेन तन्निरासो न युज्येतेत्याशङ्क्याह—**न हीषेति**। वृष्टिकामशब्दोक्तस्य फलस्य सौभरोपलक्षणत्वमनपेक्ष्य स्वेन रूपेण न सम्बन्ध इत्यर्थः।

पूर्वोक्ते सन्देहे सन्देहभाष्यमुपपाद्य, पुरुषश्रुतिव्याख्याभाष्यं यथापुनर्विधानसामर्थ्यादित्यनेन हीषादित्वनियोगविध्याशयं व्याख्यातम्। तथैव व्याख्येयमित्याह—**तत्रेति**। तत्रशब्दस्योक्तेन प्रकारेण सन्देहोपपत्तौ सत्यामित्यर्थः।

व्याख्यातभाष्यान्तर्गतस्य 'प्रयोगेति' भाष्यावयवस्य श्रुतिप्राप्तानां नियमेन निवर्त्तयितुमशक्यत्वादित्यादि वाक्यात्तर्केन हीषादिप्रयोगस्य सौभरश्रुत्याख्यवचनप्राप्तत्वेन समर्थत्वाद् बाधितुमशक्यत्वान्नियमार्थत्वेनापि विधेरर्थवत्त्वेन सम्भवतीति सूचिताद्व्याख्यानादन्यथा सौभरप्रयोगविधिनैव तदङ्गभूतहीषाद्यनुष्ठानसिद्धेः कुर्यादिति पृथक्प्रयोगविधिरनर्थकः स्यादित्येवमपि व्याख्या सम्भवतीत्याह—**प्रयोगेति**। तामेव दर्शयति—**यदि हीति**।

अथ वेति द्वितीयपुरुषश्रुतिव्याख्याभाष्यम्। अस्मिन्व्याख्याने सिद्धान्तेऽपि निधनपदानन्वयेन तस्य सौभरलक्षणार्थत्वायोगात्स्ववाक्यानुपात्तस्य विशेष्टुमशक्यत्वाद् वृष्टिकामशब्दस्य सौभरलक्षणार्थत्वेऽपि तद्विशेषणत्वानभ्युपगमात्स्वप्राधान्योपपत्तेर्भाष्यानाञ्जस्या-

पत्तेश्च स्वार्थत्वाच्च फलश्रुतेरिति स्वप्राधान्याशयव्याख्यानायोगाद्यथाश्रुतं व्याचष्टे—**किं चेति**।

ननु प्रकृतसौभराधिकारिपुरुषप्रत्यभिज्ञानात्तस्य चावगतसौभरसाधनत्वेन काम्यमानवृष्टिसाधनानपेक्षत्वात्साधनवाचिहीषादिपदान्वयानुपपत्तेः। शाखाभेदप्राप्तानेकहीषादिव्यवस्थापेक्षत्वावगमाद्धीषादिपदानां निधनव्यवस्थार्थत्वप्रतीतेः क्व तेषां व्यवस्थेति निधनव्यवस्थाविषयापेक्षायां यथा 'यदग्नये च प्रजापतये च सायं जुहोति, यत्सूर्याय च प्रजापतये च प्रातरि'ति देवताव्यवस्थार्थयोर्वाक्ययोर्व्यवस्थाविषयभूतहोमलक्षणार्थत्वेन सायम्प्रातशब्दयोर्देवतापदान्वयः, तथा वृष्टिकामादिशब्दानां निधनव्यवस्थाविषयभूतसौभरलक्षणार्थत्वेन हीषादिपदान्वयसम्भवे प्रत्यभिज्ञाऽविरुद्धा। पूर्ववृष्टिकामादिकल्पनया प्रकृताश्रयलाभक्लेशापादिका गुणफलान्वयकल्पना न युक्तेत्याशङ्क्याह—**साधनेति**। अग्निसूर्ययोरन्यतोऽप्राप्तयोः कालद्वयलक्षितहोमे विधानात्फलतो व्यवस्था युक्ता। इह तु सौभरश्रुतिप्राप्तनिरन्तरव्यावृत्तौ त्रिदोषपरिसंख्यापत्तेः व्यवस्थार्थत्वायोगात्प्रकृतानुपपत्तेरपूर्ववृष्टिकामाद्यवगमात्साधनापेक्षायां साधनसमर्पणार्थेनैव हीषादिपदेन वृष्टिकामादेः सम्बन्धः, न व्यवस्थार्थेनेत्याशयः। अपूर्वेष्टिकामाद्यवगतिः साधनापेक्षित्वोक्त्या सूचिता। इतरस्मिन्निति भाष्यं व्याचष्टे—**अन्यथेति**। अनेन च भाष्येणास्मत्कृतमेव सन्देहव्याख्यानं स्फुटीकृतमित्याह—**तथेति**। अभ्युच्चयमात्रार्थत्वाद् भूयस्त्वभाष्यमुपेक्षितम्—हीषो निधनपदान्वयाद्वाक्यभेदाशङ्कानुपपत्तेस्तन्निरासार्थत्वेनाद्यसिद्धान्तसूत्रावव्याख्यानायोगात्, स्वयं सर्वस्य सौभरस्योक्तकामत्वेन प्रकृतप्रत्यभिज्ञानाल्लक्षणया प्रकृतसौभरानुवादिका कामश्रुतिर्नापूर्वफलोक्त्यर्थेत्येवं व्याचष्टे—**सिद्धान्ते त्विति**।

श्लोकं व्याचष्टे—**सर्वस्येति**। परोक्षवृत्त्या निधनान्तरप्राप्तेर्मन्थरत्वादप्राप्तावस्थस्यैव हीषः प्रत्यक्षवृत्त्या शीघ्रं विधानान्न त्रिदोषत्वापत्तिरित्याशयः। वृष्ट्यादेः स्ववाक्यानुपात्तसौभरविशेषणत्वायोगात्किमर्थं सौभरं विशेष्यतइत्याशङ्कोत्तरत्वेनोत्तरावयवव्याख्यानायोगात्किमर्थमनूद्यतइत्याशङ्कोत्तरत्वेन व्याचष्टे—**किमर्थेति**। वृष्टिकामादिशब्दैः श्रुत्युपात्तफलत्यागेन सौभरलक्षणा न युक्तेत्याशङ्कते—**कस्मात्पुनरिति**। प्रकृतस्य सौभरस्यैकाक्षरसाध्यत्वेनाश्रयत्वायोग्यत्वादाश्रयत्वयोग्यस्य च निधनस्य प्रकरणाभावात्प्रकृताश्रयालाभेन गुणफलान्वयायोगाच्छ्रुत्यर्थान्वयानुपपत्तेर्लक्षणा युक्तेति परिहरति—**तदिति**। फले साध्ये नेष्टमाश्रयमाप्नुवदित्यन्वयः। श्लोकं व्याचष्टे—**हीषेति**। न केवलं फलान्वयपरेण वाक्येनैवाश्रयलाभाद्वाक्यभेदः, किं त्वाश्रयभूतस्य निधनस्य सौभरेण विशेषणादपीत्याह—**तथेति**। स्ववाक्ये सौभरानुपादानात्प्रकरणाद्विशेषलाभः कथमपीत्यनेन सूचितः। एवं सति को दोष इत्याशङ्क्याह—**तत्रापीति**।

ननु साक्षात्सौभरस्याश्रयत्वायोग्यत्वेऽप्यवयवावियविनोरत्यन्तभेदाभावेनाऽत्यन्तभेदाच्च यागस्तोत्रयोर्न स्तोत्रे साधिते यागः साधित इति शक्यं वक्तुमिति, पूर्वाधिकरणवार्त्तिकोक्तन्यायाभावादवयवद्वाराऽश्रयत्वोपपत्तेस्तस्य च प्रकरणलभ्यत्वान्न वाक्यभेदापत्तिरित्याशङ्क्या-

भ्युपेत्यवादेन परिहरति—**किं चेति**। हीषित्यक्षरं यद्यपि सौभरस्य साधनं, तथापि क्व भक्तौ तन्निविशतइत्यनेन च धारणान्निधनानुपपत्तेस्तद्विधावपरिहार्यो वाक्यभेद इत्याशयः। सामानाधिकरण्यबुद्धिहेतुकत्वादभेदस्यैकस्मिंश्चावयवेऽवयविसामानाधिकरण्यबुद्ध्यभावेनाभेदाभावादेकावयवसाधनत्वेनावयविसाधनत्वानुपपत्तेरनङ्गे चाङ्गावतारन्यायस्य प्रधान्यावस्थितम्। यत्तु तदङ्गेनोपसर्पतीति पूर्वाधिकरणवार्त्तिके निषिद्धत्वाद्यथा शक्नुयात्तथाश्रयेदिति कल्पनानुपपत्तेरभ्युपेत्यवादमात्रत्वं दर्शयन् श्लोकं व्याचष्टे—**न तावदिति**। द्वादशाधिकरणसूत्रोदाहरणेनातिशयोक्तिः। ननु यथा पशुकामस्यौक्थ्यं गृह्णीयात्षोडशिना वीर्यकामः स्तुवीतातिरात्रेण प्रजाकामं याजयेदित्युक्थ्यादिग्रहयागाभ्यासानां फले विहितानां यागाभ्याससमुदायात्मकज्योतिष्टोमाश्रितत्वेनावगतानां ज्योतिष्टोमस्यानेकयागाभ्यासरूपावयवस्योक्थ्याद्यभ्यासमात्रेणाव्याप्तेः क्वावयवे स्थितानां ज्योतिष्टोमसाधनतेत्यपेक्षायां तमग्निष्टोमात्पराञ्चं गृह्णीयादित्युक्थ्यस्याग्निष्टोमपरत्वं वाक्यात्तं पराञ्चमुक्थ्येभ्यो गृह्णीयादिति च षोडशिनस्तत्परत्वं वाक्यादतिरात्रे षोडशिनं गृह्णातीतिचोक्थ्यपरत्वेनावगतस्य षोडशिनाऽतिरात्रे विधानादतिरात्रस्य सर्वान्त्यत्वप्रतीतेरन्ते निवेशस्तथा समाम्नायाद्भविष्यतीत्याशङ्कते—**अथेति**। उक्थ्यादीनां ज्योतिष्टोमस्याद्ये मध्यमे वा प्रदेशान्तरे क्वाप्यदृष्टेरलौकिकत्वेन चान्यत्र स्थितानां रूपावधारणफलान्वयोक्थ्यादिव्यपदेशासम्भवात्सम्भवत्स्वपि रूपावधारणफलान्वयोक्थ्यादिव्यपदेशेषु वाक्यान्तरावगतस्यान्ते निवेशस्य विषयान्तराविज्ञानेन फलार्थोक्थ्यादिविषयत्वावधारणाद्युक्तोऽन्ते निवेश हीषादीनां लोकावेदसामान्तरभक्त्यन्तरेष्वपि दृष्टेरन्तनिवेशानियमात्सौभरान्तनिवेशस्य च पाठप्राप्तस्य क्रतुपुरुषार्थसौभरसिद्ध्यर्थहीषादिविषयत्वेनोपयोजितत्वात्स्वातन्त्र्येण फले विहितानां स्थाननिवेशानवगतेर्निधनानुवादो न सम्भवतीति परिहरति—**तदिति**। श्लोकं व्याचष्टे—**युक्तमिति**। अलौकिकत्वं त्रैधोपपादयितुम्—**न चेत्युक्तम्**। ग्रहयागाभ्यासत्वस्यान्यत्रापि भावात् ज्योतिष्टोमरूपनिष्पत्त्यर्थाभ्यासातिरिक्तत्वेनैषां निरूप्यत्वात्तन्मध्यपाते च ज्योतिष्टोमरूपनिष्पत्तावेव व्यापारापत्तेरद्रव्यत्वात्केवले कर्मशेषः स्यादित्यश्वदाभ्यन्यायेन यागान्तरत्वायोगान्नान्तनिवेशं विना रूपावधारणं न चानवधारितरूपाणां फले विधिरुक्थ्यादिसंज्ञा चोपपद्यतइति स्वरूपेण फलान्वयित्वेन संज्ञित्वेन च त्रेधाप्यलौकिकतेत्याशयः। सम्भवत्यप्यन्यथा रूपाद्यवधारणे वाचनिकस्यान्ते निवेशस्यानन्यविषयत्वात्फलार्थस्यैवोक्थ्यादेर्विषयत्वावसाय इत्यधानार्थोऽनन्यविषयत्वेनेति श्लोकावयवो अन्तनिवेशं विना रूपाद्यवधारणाभ्युपगमे अप्यन्तनिवेशोपपादनार्थं इति योऽपि चेति पश्चाद्व्याख्यया सूचितम्। अनेन चोक्थ्यादिषु व्यवस्थितं नियतमेव स्थानं यद्यप्यव्यवस्थितं तथापि वाचनिकस्य स्थाननिवेशस्यानन्यविषयत्वादेतद्विषयतयैव व्यवस्थितमित्यपि योजना सूचिता। क्रत्वर्थत्वेन फलार्थत्वेन च यत्सौभरविधानन्तेनोपयोजित इत्युक्ते गुणफलान्वयविधिवाक्येनाश्रयान्वयाविधाने अप्यविहितस्याग्राह्यत्वापत्तेः कल्पितविधिविषयत्वाभ्युपगमाद्धीषादेः फलान्वयसिद्ध्यर्थेन सौभरविधानेनोपयोजित इति भ्रान्ति निरसितु सौभरेण फलं विशेषितं नन्वस्य हीषादेर्लोकादिवर्त्तित्वे

अपि प्रकृतस्य सौभरावयवभूतस्यानन्यवर्त्तित्वान्निश्चय इत्याशङ्क्याह—**यदीति**। प्रकृतनियमे प्रमाणं नास्तीत्याशयः। ननु स्वरूपेण हीषादेः प्रकृतग्रहणनियामकाभावे अप्याश्रयत्वेन गृहीते सौभरे हीषादेर्निधनस्थानत्वात्फलार्थस्यापि हीषादेः सौभरावयवत्वेन सौभरे समाप्ता तेन हीषादिनैक्यान्निधनस्थानत्वं सेत्स्यतीत्याशङ्कते—**ननु चेति**। यद्यपि लोकादिगतो हीषादिर्गुणफलान्वये विधिना गृह्यते तथापि प्रकृतसौभराश्रितत्वाद्य एव सौभरावयवत्वेन समाम्नातो हीषादिः प्रकृतः फलार्थो अपि स एवेति सौभरावयवत्वेनैकत्वात्तदेव स्थानं भविष्यतीत्येकस्य हीषादेर्नानास्थानत्वादर्शनेनैवान्तनिवेशनियामकाभावस्योक्तत्वात्स्वरूपैक्यमात्रेणाशङ्कानुपपत्तेः सौभरावयवत्वेनैक्यं व्याख्येयम्। सत्यप्यैक्ये प्रयोजनभेदे स्थानस्य देवदत्तादौ शक्तिभेददर्शनात्स्थानान्तरे अपि च सौभरारम्भसमाप्त्यन्तराले प्रयुक्तस्य हीषादेः सौभरावयवत्वोपपत्तेरवयवान्तरोपजनापत्तेश्चोक्थ्यादिवदविरोधान्न कार्यान्यत्वे तत्स्थानत्वनियमसिद्धिरिति परिहृति—**नैतदिति**। श्लोकं व्याचष्टे—**न शब्दैकत्वेनेति**। स्थानं इष्टसामर्थ्यमित्यनेन शक्तिभेदः तत्स्थानस्येत्यध्याहारः सूचितः। स्वरूपनाशाशङ्कानुपपत्तेस्तन्निरासायोगादात्मीयवाचिस्वशब्दाङ्गीकारेण सौभरात्मीयस्य तदवयवत्वरूपस्यानाशादिति व्याख्येयम्। न चेत्यनेनोत्तरार्द्धं व्याख्यातं वारवन्तीये निरस्तमपि प्रणीताधर्मन्यायमितरेतराश्रयाख्यदोषान्तराभिधित्सया पुनरुपन्यासपूर्वं निरस्यति—**प्रासङ्गिकेति**। निधनस्थानप्रयोगाभावे समाम्नातेनैव हीषा सौभरसिद्धेः फलार्थस्य हीषः सौभरसाधनत्वायोगात्स्थाननिवेशादेव सौरभसाधनता वाच्येत्याशयः।

नन्वप्रकृतस्य हीषादेः फले विधौ तस्य सौभरसाधनत्वात्प्राक् स्थानविशेषासिद्धेरितरेतराश्रयं स्यात्, प्रकृतप्रत्यभिज्ञाने तु तद्विरोधेनाऽप्रकृतग्रहणायोगात्। प्रकृतग्रहणावगतेस्तस्य च समाम्नायादेव स्थानविशेषसिद्धेर्नेतरेतराश्रयापत्तिरित्याशयेनाशङ्कते—**नन्विति**। यदि च वारवन्तीयसंस्कारः कश्चिद्विधीयेत, ततः कथं चिद् व्रीहिप्रोक्षणादिष्विव प्रकृतप्रत्ययो भवेदिति पूर्वाधिकरणवार्त्तिकन्यायेनोपादीयमानत्वे, प्रकृतग्रहणायोगमाशङ्क्य, 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्स त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दध्नश्चरुम्, ये क्षोदिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुमि'ति अभ्युदितेष्टावुपादीयमानत्वेऽपि तण्डुलादीनां प्रकृतग्रहणं दृष्टान्तितम्। चन्द्राभ्युदयेनिमित्ते दार्शं हविः दार्शेभ्यो देवताभ्योऽपनयेदिति विभजतिवाक्यार्थस्य षष्ठे वक्ष्यमाणत्वात्, देवतां विना प्रक्रान्तदर्शानिष्पत्तेर्देवतान्वयाकाङ्क्षायां मध्यमादिवाक्यैरत्र प्रकृतस्य हविषो देवतान्तरविधावनपेक्षितविध्यापत्तेः प्रकृतहविर्विषयत्वावगमाद्यच्छब्दोपबन्धेन प्रकृतविषयत्वदृढीकरणात्प्रकृतनियमो युक्तः, इह तु श्रुतिकृतस्य हीषादिमात्रप्रत्ययस्य प्रत्यभिज्ञारूपेण सन्निधिना—

'श्रुतेः कर्मान्तरज्ञानं सन्निधेरेककर्मता।
तत्र श्रुतिबलीयस्त्वं जानतां कथमेकता॥'

इति न्यायेन बाधायोगाद्धेत्वन्तराभावाच्च न प्रकृतनियमस्स भवतीति वैषम्योक्त्या परिहरति—**युक्तं तत्रेति**। अतो गुणफलान्वयरूपवाक्यार्थायोगान्निधनव्यवस्थारूप एव वाक्यार्थो युक्त इत्युपसंहरति—**तस्मादिति**।

ननु वृष्टिकामादिशब्देन सौभरलक्षणापत्तेर्निधनव्यवस्थापक्षोऽप्ययुक्त इत्याशङ्क्याह—**यदेति**। अनेन च पुरुषश्रुतेरिति पूर्वपक्षहेतोर्द्वितीयव्याख्यापक्षे परिहारः उक्तः। ननु साधनलक्षणायामपि कारीर्यादिसाधनलक्षणाप्रसङ्गे सौभरेण विशेषणाद्वाक्यभेदः स्यादित्याशङ्क्याह—**तत्रेति**। लक्षणायाः प्रकृतविषयव्यवस्थापकत्वात्प्रकृतस्यैव साधनस्य लक्षणेत्याशयः। निधनव्यवस्थाविषयभूतप्रकृतसौभरविशेषलक्षणार्थत्वाच्च वृष्टिकामशब्दस्य कारीर्यादिलक्षणाशङ्कामपि नाधिरोहतीत्याह—**प्रकृतेति**। कामोपबद्धानां पदानां फलपरत्वस्यैकादशाद्ये वक्ष्यमाणत्वाद् वृष्टिकामशब्दएव वृष्टिशब्द उक्तः। यथान्नाद्यस्य, स्वर्गस्य वा साधनभूतं सौभरं वृष्टिशब्दो लक्षयतीत्याशङ्का न सम्भवति, तथा वृष्टिसाधनकारीर्यादिलक्षणाशङ्कापि न सम्भवतीति सूचनार्थम्—**दृष्टान्तत्वेन न चेत्युक्तम्**। पुरुषश्रुतेरिति पूर्वपक्षहेतोर्विधिपुनःश्रुत्यपेक्षव्याख्यापक्षे परिहारमाह—**सत्यामपि चेति**। काम्यत्वाभावे हीषादीनां तुल्यबलत्वेनैकस्येतरबाधकत्वायोगान्नियमायोगाशङ्का विनापि च गुणकामत्वेनेत्यादिवार्त्तिके निरस्तेतीत्युक्तमित्यनेनोक्तम्।

ननु प्रवो देवाऽग्नय इत्याज्यसूक्ते समाम्नायावगतक्रमाक्रमान्तरेण चाप्रयोगदर्शनेन सौभराङ्गरूपापि विधीयमानस्य हीषादेः समाम्नायावगतस्थाननियमप्रमाणाभावात् वृष्टिसाधनं यत्सौभरं तस्य च यन्निधनमिति विशिष्टानुवादाद्वाक्यभेदोऽस्मिन्नपि पक्षे स्यादित्याशङ्क्याह—**ते चेति**। नियमस्य यथाप्राप्तविषयत्वान्नापूर्वविधाविव क्रमान्तराशङ्केत्याशयः। व्याख्यातेऽर्थे भाष्यं योजयति—**तदिति**।

समाप्तेऽधिकरणार्थे परव्याख्यादूषणव्याक्षिप्तचित्तत्वात्प्रागनुक्तामनन्तरसङ्गतिमाह—**तदिति**। ननु वृष्टिसाधनस्य सौभरेण विशेषणादस्मिन्नपि सिद्धान्तव्याख्याने परव्याख्यावद्विशिष्टानुवादलक्षणवाक्यभेदस्य प्रसक्तस्यापरिहृतत्वेनाधिकरणार्थासमाप्तेरन्तराले स्वावसरानुक्तानन्तरसङ्गत्यभिधानमयुक्तमाशङ्क्यास्मिन् व्याख्याने वाक्यभेदाप्रसक्तिमाह—**यस्त्विति**। हीषो निधनान्वये तस्योद्देश्यत्वेनाविवक्षितविशेषणत्वाद्वाक्यापन्नस्य निधनमात्रान्वयस्य प्रकरणलभ्यसौभरविशेषणत्वेनापादनप्रसङ्गाद्वाक्यभेदापत्तिः। फलपदान्वये तु तस्योद्देश्यलक्षणार्थत्वेन स्वयमनुद्देश्यत्वाल्लक्षणायाश्च हीषाद्यन्वयसिद्ध्यर्थत्वेन तदन्वयापादकप्रकृतसौभरविषयत्वावगमान्न वाक्यभेदप्रसक्तिरित्याशयः।

परव्याख्याने चोदित आसीदिति भूतनिर्देशेनोक्तं प्रसङ्गान्निधनमात्रव्यवस्थार्थान्येतानि वाक्यानि तन्निधनकसौभरविशेषव्यवस्थार्थानि वेत्यनुष्ठानौपयिकं चिन्तान्तरं प्रस्तौति—**इदं त्विति**। सर्वशाखागतानां सौभरविशेषाणां 'न चैकं प्रतिशिष्यतइत्यनेन व्यवस्थाया प्राप्तेरेकस्माच्च फलसिद्धेः समुच्चयायोगेऽपि विकल्पेन प्रयोगोपपत्तेर्हीषादिश्रुतेः सौभरावाचित्वेन तद्व्यवस्थापकत्वायोगान्निधनमात्रव्यवस्थार्थानीति पूर्वपक्षमाह—**तत्रेति**।

सिद्धान्तं प्रतिजानातीति प्रश्नपूर्वमुपपादयति—**कथमिति**। सौभरगीत्यविशेषेऽपि प्रतिशाखमवान्तरगीतिविशेषसद्भावाच्छाखान्तरस्थस्य सौभरगीतिविशेषस्य शाखान्तरस्थसौभरभक्तियोगे सत्याधारभूताक्षरभूताक्षरविशेषाधीनत्वात्स्वरविशेषात् क्रमगीतिविशेषाभिव्यक्तेर्विकल्पप्राप्तिविषयस्यैव नियमविषयत्वात्समस्तस्य च सौभरस्य वृष्ट्यादिसाधनत्वेन विधानाद्विकल्पप्राप्तेः शाखाभेदेन पठितस्य समस्तस्यैव सौभरस्य व्यवस्थेत्यर्थः।

श्लोकं व्याचष्टे—**सामरूपं हीति**। सूक्ष्मभिदभिन्नत्वाद् गीतिविशेषाणां भक्त्यन्तरयोगे रूपनाशापत्तेरित्याद्ययुक्त्यर्थः।

ननु 'न गिरागिरेति' ब्रूयादिति गिरापदनिषेधानुवादेनैरं कृत्वोद्गेयमितिरापदविधानाद्यज्ञायज्ञीयस्य गिरापदस्थाने इरापदप्रयोगाद्रूपान्यत्वापत्तिर्यथा न विरुध्यते, तथा रूपान्यत्वापत्तिरविरुद्धेत्याशङ्क्य—**न चेत्युक्तम्**। तत्र रूपान्यत्वात्मकविकारानभ्युपगताविरापदविधिविरोधापत्तेस्तत्परिहारार्थं विकारो युक्तः। न त्विह विरोधो अस्तीत्याशयः।

ननु विकाराश्रयणे विरोधो नास्तीत्याशङ्क्य—**सर्वत्र चेत्युक्तम्**। प्राप्तरूपान्यत्वात्मके विकारे प्राप्तिप्रमाणविरोधापत्तेः शरैः कुशानां, फलचमसेन सोमस्य सूर्यादिपदेन वाग्न्यादिपदस्यागत्यैव बाधदर्शनात् सत्याङ्गतौ बाधा न युक्तेत्याशयः। विकल्पप्राप्तौ चेत्यनेन समस्तैव चेति चशब्दाध्याहारेण युक्त्यन्तरोक्त्यर्थत्वेनोत्तरार्द्धं व्याख्यातम्। ननु निधनमात्रनियमश्रुतौ अश्रुतसमस्तनियमाभ्युपगमो न युक्त इत्याशङ्क्याह—**अत इति**। शिष्याचार्ययोः सहभोजनप्राप्तौ शिष्यस्य कांस्यभाजित्वनियममनियतपात्रभोज्याचार्यो अनुरुन्धानो लोके दृश्यतइति द्वादशाधिकरणसिद्धो दृष्टान्तः।

यद्वा वृष्टिकामः सौभरेणेति विधितः सौभरप्राप्तेः समाम्नायाच्च हीष्प्राप्तेरुभयप्राप्तौ च सम्बन्धविधिर्जाघन्यधिकरणे वक्ष्यमाणत्वात्सम्बन्धविधिप्रतीतेर्हीष निधनसौभरविशेषोपादानं च विना सम्बन्धासिद्धेर्हीष्निधनकसौभरनियम एव विध्यर्थ इत्याह—**एषोऽपि चेति**। एवमेव सिद्धान्तमुपसंहरति—**तस्मादिति** ॥२९॥

इति त्रयोदशं सौभराधिकरणम्।

**इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरकृतौ तन्त्रवार्तिकटीकायां सर्वानवद्यकरिण्यां न्यायसुधाख्यायां द्वितीयाध्यायस्य द्वितीयः पादः।**

भा० प्र०—पूर्वपक्षी ने जो 'हीष्' इत्यादि वाक्य की फलश्रुति को फलान्तर विधि कहा—वह ठीक नहीं है। कारण, ऐसा मानने पर वाक्यभेद होगा, क्योंकि एक वाक्य के द्वारा निधन के साथ 'हीष्' आदि का सम्बन्ध एवं फल के साथ सम्बन्ध का बोध नहीं हो सकता है। इस प्रकार के अर्थबोध के लिए दो वाक्यों की आवश्यकता है। प्रस्तुत प्रसङ्ग में दो वाक्य न होने से एक वाक्य को ही दो वाक्यों के रूप में परिणत कर उस

अर्थ की प्रतीति करानी होगी। इसीलिए वृष्टिकामना के साथ ''हीष्'' इसका सम्बन्ध नहीं है, अपितु ''हीष्'' इस ''निधनं सौभरस्य'' इस प्रकार से ही अभिसम्बन्ध होगा। अतः वृष्टि आदि 'हीष्' आदि निधन का फल नहीं है, वरन् वह पूर्व में उपदिष्ट सौभर का ही फल है और 'हीष्' इत्यादि वाक्यों में उसी का अनुवाद है, इसीलिए 'हीष्' इत्यादि वाक्य का फल पूर्वनिर्दिष्ट फल से भिन्न नहीं है। अतः इसमें नवीन फल की चर्चा नहीं की गयी है। यदि नूतन फल की चर्चा होती तो 'हीष्' इत्यादि नियम के लिए ही विधि होती है, अतः 'हीष्' इत्यादि नियमविधि है। वृष्टिरूप फल को उद्दिश्य कर 'हीष्' इस प्रकार 'निधन' करना चाहिये, अन्य प्रकार से नहीं—इस प्रकार नियम का विधान ही इसका उद्देश्य है और इसमें 'वृष्टिकामाय' आदि पद वृष्टिसाधन की सौभर में लक्षणा कर उसके उद्देश्य से 'हीष्' आदि विधान किया गया है। अतः ''हीषिति वृष्टिकामाय'' इसका अर्थ 'निधन' के स्थान पर स्थित 'हीष्' इस स्तोत्र के द्वारा वृष्टिरूप फल की भावना = उत्पादना करे। अन्यान्य अर्थ को भी इसी प्रकार समझना चाहिये।

''सर्वस्य'' = समग्र सौभर साम का, ''वा'' = पूर्वपक्ष नियमार्थक है, ''उक्त कामत्वात्'' = काम अर्थात् फल कहा गया है, ''तस्मिन्'' = उसमें ही अर्थात् यह सौभर वाक्य ही ''कामश्रुतिः स्यात्'' = कामश्रुति अर्थात् काम फल सम्बन्ध कहा गया है, ''निधनार्था'' = निधन के लिए अर्थात् ''निधन के नियम के साधनार्थ, ''पुनःश्रुति'' = कामना का पुनः कथन की चर्चा है अर्थात् 'हीष्' इत्यादि वाक्य 'हीष्' आदि निधन के नियम विधि की व्यवस्था के लिए फलकीर्त्तन अनुवाद है और सौभर वाक्य में ही फल सम्बन्ध कहा जाता है। यह १३ वाँ सौभर अधिकरण समाप्त हुआ ॥२९॥

**मीमांसाधिकरण के द्वितीय अध्याय का द्वितीय पाद समाप्त हुआ ॥**

# अथ द्वितीयाध्यायस्य तृतीयः (रथन्तर) पादः ।

### अथ प्रथमं रथन्तराधिकरणम्

### [१] गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥ पू० ]

शा० भा०—अस्ति ज्योतिष्टोमः । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । तं प्रकृत्य श्रूयते 'यदि रथन्तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' इति । तत्र संदिह्यते—किं ग्रहाग्रताविशेषो ज्योतिष्टोमस्य विधीयते, उत कर्मान्तरस्य रथन्तरसाम्नो, बृहत्साम्नश्चेति ।

यदि रथन्तरसामग्रहणेन बृहत्सामग्रहणेन च ज्योतिष्टोमोऽभिधीयते, ततस्तस्य ग्रहाग्रताविशेषः । अथ नाभिधीयते, ततः कर्मान्तरस्येति । किं तावत्प्राप्तम् ? प्रकरणाज्ज्योतिष्टोमस्येति प्राप्ते ।

उच्यते—गुणस्तु क्रतुसंयोगादिति । तुशब्दः पक्षं व्यावर्तयति—नैतदस्ति, ज्योतिष्टोमस्येति । कुतः ? क्रतुसंयोगात् । कथं तर्हि । कर्मान्तरस्येति । ननु ज्योतिष्टोमक्रतोरेवैष एवंजातीयकोवादः,—रथंतरसामा बृहत्सामेति । नेति ब्रूमः । यदि न कृत्स्नक्रतुसंयोगो भवेत् । ज्योतिष्टोमस्य वादः । कृत्स्नक्रतुसंयोगस्त्वेषः । कथं कृत्स्नक्रतुसंयोगो भवति ? कथं वा न कृत्स्नक्रतुसंयोग इति ? यदि रथन्तरसत्ता वा, बृहत्सत्ता वा निमित्तं ग्रहाग्रताविशेषस्य, ततो न कृत्स्नक्रतुसंयोगः ।

रथन्तरं बृहद्वा यदि सामास्ति, तत ऐन्द्रवायवाग्रता शुक्राग्रता चेति[१], [२]ततो ज्योतिष्टोमस्य गुणविधिः । अथ रथन्तरसामसत्ता बृहत्सामसत्ता वा न निमित्तं, ततः कृत्स्नक्रतुसंयोगः । यदि रथंतरसामेति कोऽर्थः ? अयमर्थः—यदि रथंतरसाम अस्य विशेषणं क्रतोरिति । कुत एतत् ? समासपदसामर्थ्यात् । समर्थानां हि पदानां समासो भवति । सामर्थ्यं च भवति विशेषणविशेष्यभावे । असाधारणं च भवति विशेषणम् । तत्रायमर्थो—यदि रथन्तरमेव साम, बृहदेव वा, नान्यदिति । ज्योतिष्टोमस्य च बहूनि सामानि गायत्रादीनि । तस्मान्न ज्योतिष्टोमस्य वाचकावेतौ शब्दाविति । तेन यद्यपि प्रकरणाज्ज्योतिष्टोमस्य गुणविधिरिति गम्यते, तथाऽपि तद्बाधित्वा वाक्येन रथंतरसाम्नो बृहत्साम्नश्च भवितुमर्हति ।

---

१. ब० वेति ।      २. ब. तत्र ।

ननु यथा ज्योतिष्टोमो न रथंतरसामा, एवमन्योऽपि न रथंतरसामा[1] कश्चिदस्ति। उच्यते। कर्मान्तरं रथंतरसामकं कल्पयिष्यत्येतद्वाक्यम्—यदि रथंतरसामा सोमः स्यात्, इति। ननु नास्त्यत्र विधायकः शब्दः ? उच्यते। अस्ति य एष स्यादिति। आह। नैष विधातुं शक्नोति, यदिशब्दसंबन्धात्। विद्यमानस्य निमित्तार्थेन एवंजातीयकः शब्दो भवति, न विधानार्थेनेति।

अत्र ब्रूमः। यदेतत्, सयदिकं वाक्यम्—यदि रथंतरसामा सोमः स्यादिति। अत्रावान्तरवाक्यमस्ति, रथंतरसामा सोमः स्यादिति। यदवान्तरवाक्यं, तस्यान्योऽर्थः, अन्यश्च सयदिकस्य। सय[2]दिको न शक्नोति विधातुम्। यद् अवान्तरवाक्यं, तद्विधास्यति। न च रथंतरसाम्नो बृहत्साम्नो वा भावो निमित्तत्वेन श्रूयमाणोऽप्यर्थवान्भवति। तस्मादविवक्षितो यदिसंबन्धः। तस्मिंश्चाविवक्षिते पदद्वयमिदं रथंतरसामा सोमः स्यादिति शक्नोति रथंतरसामानं क्रतुं विधातुं, यदीत्यनर्थकम्।

अथ वा, यदि रोचेतेत्यध्याहारः। अथ वा, यथैतद्भवति-पयसा षाष्टिकं भुञ्जति, यदि शालिं भुञ्जीत, तत्र दध्युपसिञ्चेदिति। एवंजातीयकेन वाक्येन शालिभोजनं विहितं भवति। एवमत्रापि विहितं द्रष्टव्यम्। यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान्गृह्णीयादिति। कथं पुनः शालिभोजनं तेन वाक्येन[3] विहितं भवतीति ? उच्यते। व्यत्यासेन संबन्धः कल्प्येत[4], यदि दध्युपसेचनमिच्छेच्छालिं भुञ्जीतेति।

ननु न खल्विच्छतेः परां लिङ्विभक्तिमुपलभामहे, सिञ्चतेर्हि तां परां समामनन्तीति। सिञ्चतेः खलु सा परा समुच्चरन्ती कमेरर्थं गमयति कामप्रवेदने हि तां मन्यामह इति, एवमिहापि[5] यद्यैन्द्रवायवाग्रान्ग्रहान् गृह्णीयादिति गृहीतुमिच्छेदित्यर्थः, ततो रथंतरसामानं क्रतुं कुर्यादिति। नन्वेवं सतीच्छामात्रं भवेत्, न ग्रहाग्रताविशेषविधानम्[6]। उच्यते। यथाऽस्मिल्लौकिके वाक्ये यदि दध्युपसेचनमिच्छेच्छालिं भुञ्जीतेति दध्युपसेचनसंकीर्तनाद्दध्युपसिक्तं शालिं भुञ्जीतेति तेनैकवाक्यत्वाद्गम्यते, एवमत्रापि ग्रहाग्रताविशेष[7]संकीर्तनात्तेनैकवाक्यत्वाद् ग्रहाग्रताविशिष्टो रथंतरसामा गम्यते।

अथवाऽत्र हेतुहेतुमतोर्लिङ्। रथंतरसामा सोम ऐन्द्रवायवाग्राणां ग्रहाणां हेतुः कर्तव्य इति। तस्मात्कृत्स्नक्रतुसंयोगाद्गुणः कर्मान्तरं प्रयोजयेत्। एवं कृत्स्नक्रतुसंयोगोऽर्थवान्भविष्यति।

---

१. ब० सामाख्यः। २. ब० सयदिकं। ३. ब० 'वाक्येन' इत्येतत् पदंनास्ति। ४. ब० कल्पते। ५. ब. मत्रापि। ६. ब० ग्रहाग्रताविधानं। ७. ब० कीर्तनात्।

**अपि च पूर्वेण निमित्तेन भवितव्यं, परेण नैमित्तिकेन। कथम्? सति[1] हि निमित्ते नैमित्तिकं भवितुमर्हति, नासति। यच्च भविष्यत्तन्न सत्, भविष्यच्च रथंतरसाम, तत्कथं पूर्वकालस्य ग्रहाग्रताविशेषस्य निमित्तं भविष्यतीति।**

**अपि च निःसंदिग्धं जगत्सामा कर्मान्तरं, तत्सामान्यादितरदपि कर्मान्तरमिति गम्यते। तस्मान्न ज्योतिष्टोमस्य गुणविधानमिति ॥१॥ पूर्वपक्षः ॥**

### अथ प्रथमं रथन्तराधिकरणम्

त० वा०—ज्योतिष्टोमे प्रथमं बृहद्रथन्तरे वैकल्पिके[2] पृथक् पृष्ठसाधनत्वेन चोदिते। तत पुनः श्रूयते 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान्गृहणीयात्', 'यदि बृहत्सामा शुक्राग्रान्' इति। तत्र सगुणं कर्म श्रूयमाणं संदिह्यते—किं कर्मान्तरं ज्योतिष्टोमात् उत तस्यैव ग्रहाग्रताविशेषविधानं प्रति रथंतरावच्छिन्नस्य निमित्तार्थं श्रवणमिति। तत एतत्सिद्ध्यर्थमिदं विचारयितव्यं—किमयं कृत्स्नक्रतुसंयोगो रथंतरस्य, अथ सत्तामात्रसंयोग इति। तत्सिद्ध्यर्थमप्येतच्चिन्तनीयम्—किं क्रतुविशिष्टं रथंतरम्। उत रथंतरविशिष्टः क्रतुरिहाऽऽश्रीयते इति।

ननु च यदिशब्दोपबन्धादिह निमित्तं प्रतीयते, तस्य चोद्दिश्यमानत्वाद्विशेषणविशेष्यभावो नावकल्पेत। भवेन्निमितार्थत्वमेतस्य यदि यादृगयं प्रत्येष्यते, तादृशस्य कुतश्चित्प्राप्तिर्विज्ञायेत। अप्राप्तिपक्षे तु बलाद्विधानमापद्यते। निमित्तत्वमपि च यादृशस्येह श्रूयते, यदि तादृशो ज्योतिष्टोमः ततस्तस्यैव गुणार्थत्वेन श्रवणमिति संगस्यते[3]। यदि तु तादृङ् न भवति, ततस्तादृशत्वमापाद्य निमित्तीकर्तव्यः। यत्संबन्धाच्च प्राङ्निमित्तत्वमेव नोपजायते, भवति तन्निमितस्यापि विशेषणम्। यथाऽऽर्त्यधिकरणे वक्ष्यते–'मृष्यामहे हविषा विशेषणमिति'। तस्मान्न विशिष्टानुवाददोष इति।

किं तावत्प्राप्तम्? प्रकरणाद्रथन्तरसामत्वस्य, बृहत्सामत्वस्य च वचनान्तरेण प्राप्तेर्यदिशब्देन च प्राप्त्यपेक्षत्वनिमित्तत्वप्रतीतेर्ग्रहाग्रताविशेषस्य च प्रयोगवचनेन ग्रहणाद्बलीयसा च विरोधिना गुणान्तरेणानवरोधात्, 'तत्संनिधेर्गुणार्थेन पुनश्रुतिः' इत्यकर्मान्तरत्वम्।

एवं सिद्धान्तं प्राप्तं तुशब्देन व्यावर्त्य, सौत्रः पूर्वपक्षः परिगृह्यते कर्मान्तरमिति। कुतः?

समासः सति सामर्थ्ये तच्चापीष्टं विशेषणे।
विशेषणं व्यवच्छेत्तृ ज्योतिष्टोमे च नास्ति तत् ॥

'गुणश्चापूर्वसंयोगे' इति पूर्वकर्मासंबद्धो गुणो भेदक इत्युक्तम्। इह च बहुव्रीह्यर्थसद्भावस्य यदिशब्दोपबन्धेन निमीत्तत्वं गम्यते, न रथंतरसत्ताया-

---

१. ब० सतिनिमित्ते। २. क० पृथगिति। ३. क० गम्यते।

उपसर्जनत्वात्। न च क्रतुविशिष्टं रथंतरमिह प्रतीयते, येन तदेव निमित्तं कल्प्येत। न च तत् क्रतुनाऽवच्छेत्तुं शक्यते, अन्यत्रापि विद्यमानत्वात्। एवं हि तदवच्छिद्यते यदि रथंतरमस्यैव सामेति, न त्वेवं सम्भवति। तस्मादवश्यमेव कर्तव्यं यदि रथंतरमेवास्य सामेति। न चैवमात्मकत्वं ज्योतिष्टोमस्य, अन्यस्य वाऽवगतं, यन्निमित्तं भवेत्। अतो निमित्तप्रतीतिं परित्यज्य तदन्यथानुपपत्त्यैव केवलरथंतरसामककर्मान्तरविधिरध्यवसीयते। शक्यं हि तदपूर्वं कर्तुम्। न च रथंतरसत्तामात्रं विशेषणम्, अव्यापकत्वात्। न विशेषणादृते सामर्थ्यम्। न च सामर्थ्येन विना समासोऽवकल्पते। दृश्यते वाऽसावत्रेति पूर्वस्यात्राप्रत्यभिज्ञानम्।

अथ कस्मात्स एव केवलरथंतरसामकः पक्षे न क्रियते, न शक्यमेवं कर्तुम्, साक्षाद्विहितस्तोत्रसम्बन्धिसामान्तरविरोधात्। इदं हि क्रतुसम्बन्धेन श्रुतम् 'आनर्थक्यात्तदङ्गेषु' इत्यनेन न्यायेन स्तोत्रेष्ववतरति। गायत्र्यादीनि तु स्तोत्रेषु साक्षाद्विधीयन्ते, तस्माद्बलवन्ति। क्रत्वन्तरे तु प्रत्यक्षशिष्टं तथंतरं तेभ्यश्चोदकप्राप्तेभ्यो बलवत्तरं भवतीत्यदोषः। एवं चान्यपदार्थविधानात्तत्प्रधानो बहुव्रीहिरनुग्रहीष्यते। अन्यथा ह्युपसर्जनपरत्वं लोहितोष्णीषादिवाक्यवदगत्या परिगृह्येत। यदि य ग्रहाग्रताविधानेन सहैतदेकं वाक्यं, ततस्तच्चापि रथंतरविधानं चानेकत्वादपूर्वभावनाविधिनैव निस्तीर्यते। सोमः स्यादिति चाऽऽनन्तर्यात् कर्तव्यतैव विज्ञायते, रथंतरसामत्वकर्तव्यता तु व्यवहितकल्पनयैव स्यात्। सोमशब्देन च प्रकृतिलिङ्गेन ज्योतिष्टोमप्रकृतिरेवायं भविष्यति। तस्मात्कर्मविधिः। इदमेव भाष्यकारो दर्शयति—**यदि रथंतरसामेत्यस्य कोऽर्थ** इत्यादिना। ग्रहाग्रताविशेषश्चास्यैव क्रतोर्वाक्येन, अवान्तरप्रकरणेन वा भविष्यति। यद्यपि महावाक्येष्ववान्तरवाक्यान्यप्रमाणं, तथाऽप्यर्थासम्भवादविवक्षिते महावाक्येऽवान्तरवाक्याश्रयणाद्विधिशक्तेरबाधः।

परित्यागाद्वरमध्याहृत्य पूरणमिति मत्वा, **'अथ वा यदि रोचेतेति'** दर्शयति। तत्कर्तव्य[1]**ताक्षिप्तायाश्च रुचेः प्रमाणवानेवाध्याहार इति,** न स्वमनीषिकामात्रमभिहितम्। अध्याहारादपि स्वपदवृत्तिरेव व्यवहितकल्पनया लघीयसी, धर्ममात्रबाधादिति मत्वा **यदि शालिं भुञ्जीतेत्युदाहृत्य** पक्षान्तरं कल्पयति। परस्तु दृष्टान्तस्यैवासिद्धेः **कथं पुनरिति** व्यत्ययेन सम्बन्धः, **कामप्रवेदने हि**[2] लिङ् इच्छां प्रत्यायतीति सिद्धान्तविवरणम्। तत्रैष वाक्यार्थो भवति। यद्यैन्द्रवायवान् ग्रहान् ग्रहीतुमिच्छेद्रथंतरसामानं क्रतुं कुर्यादिति। ततश्च यदिशब्दरहितं सोमः स्यादिति पदद्वयं विधायकं ग्रहान् गृह्णीयादित्येतत्तु यद्यप्यविधायकं, तथाऽपीच्छार्थत्वाद्यो हि यदिच्छति, स तत्करोतीत्येवं विधिफलं लप्स्यते।

---

१. क० तत्कर्तव्यताङ्गत्वाक्षिप्ताया। २. क० च।

अथ वा इच्छामात्रयुक्तमुपात्तं ग्रहाग्रत्वं स्यादित्येषैव लिङ् विधास्यति ।

विनैव व्यवहितकल्पनयाऽप्ययं पक्षो भवन् बलवत्तर इति मन्वानोऽथवा हेतुहेतुमतोर्लिङित्युपन्यस्यति । तत्र सोमः स्यादिति हेतौ लिङ् गृह्णीयादिति विधावेव । तेनैतदुक्तं भवति—रथंतरसामसोमहेतुकानैन्द्रवायवाग्रान् ग्रहान् गृह्णीयादिति । न चाक्रियमाणेऽसौ हेतुत्वं प्रतिपद्यत इत्यर्थाद्विहितो भविष्यतीति ।

अथ वा हेतुमति गृह्णीयादिति लिङ्, सोमः स्यादिति विधावनुक्तमपि च सोमस्य हेतुत्वं हेतुमदाक्षेपात्संनिधेश्च भविष्यति । तत्राप्येषोऽर्थोग्रहाग्रताविशेष-कारणभूतः सोमयागः कर्तव्य इति ।

यदिशब्दपरित्यागो रूढ्यध्याहारकल्पना ।
व्यवधानेन सम्बन्धो हेतुहेतुमतोश्च लिङ् ॥

इति पक्षविकल्पसंग्रहश्लोकः । सर्वं चैतदवैष्ट्यधिकरणसिद्धान्त एवोपयोक्ष्यत इत्यत्र प्रपञ्चितम् ।

किं च ।

निष्पन्नेन निमित्तेन निष्पाद्यं प्रतिभूयते ।
न रथंतरसत्ता च निष्पन्ना क्रतुसत्त्ववत् ॥

प्रातःसवने हि ग्रहग्रता भवति, माध्यंदिने रथंतरम्, न चानिष्पन्नस्य निमित्तता युक्ता । कारणपर्यायत्वान्निमित्तशब्दस्य । मम तु नैव किंचिन्निमित्तम् । अथ वा क्रतुः । स चाऽऽदित एव विद्यते । जगत्सामा च न ज्योतिष्टोम इति 'जगत्साम्नि सामाभावात्, इति वक्ष्यते । अतश्च 'तत्सामान्यादितरेषु तथात्वम्' इति कर्मान्तरत्वमिति ॥ १ ॥

### अथ प्रथमं रथन्तराधिकरणम् ॥१॥

न्या० सु०—निश्चितविधेयत्वस्य गुणस्य क्व पूर्वत्रासम्भवाद्भेदकत्वं क्व फले विधानेन, व्यवस्थार्थत्वेम् वा पूर्वत्र सम्भवात् अभेदकतेति निर्णीते सन्दिग्धविधेयत्वस्य क्व विधेयत्वात् भेदकत्वं क्व वा तदभावादभेदकतेति निर्णतुं यदि रथन्तरसामा यदि बृहत्सामेति वाक्ययोः किं रथन्तरसामत्वबृहत्सामत्वे विधीयेते ज्योतिष्टोमएव वा ग्रहाग्रविशेषविधौ निमित्ततयोच्यते इति चिन्तां दर्शयितुं तत्रेति सन्देहभाष्यं एकपूर्वसाधनीभूतस्तुतिसमूहात्मकस्तोत्रविशेषरूप-पृष्ठैक्येऽप्यवान्तरकार्यभूतायाः स्तुतेर्गुणसङ्कीर्णात्मिकत्वाद् द्रव्यान्तरेण शूरादेर्बृहता च चित्रादेर्गुणस्य कीर्त्तनात् बृहद्रथन्तरयोर्द्वारभेदेन पृष्ठसाधनत्वात्समुच्चयावगतेर्नित्यत्वेन कादा-चित्कत्वान्निमित्तत्वानुपपत्तेः, सिद्धान्तवचनशक्ययोगादयुक्तमाशङ्क्योपपादयितुमाह—**ज्योतिष्टोम इति** । न्यायाद् बृहद्रथन्तरयोः समुच्चयावगमेऽपि बृहद्वा रथन्तरं वेति वचनाद्वि-कल्पावगतेः पाक्षिकत्वान्निमित्तत्वोपपत्तिरित्याशयः ।

एवमपि कर्माश्रुतेस्तद्भेदाभेदसन्देहो न युक्त इत्याशङ्कां निरस्यन्, भेदाभेदविषयत्वेन सन्देहभाष्यं व्याचष्टे—**तत्रेति**। रथन्तरसामत्वस्य बृहत्सामत्वस्य वा गुणस्य सोमयागविषयत्वात्सोमशब्दस्य सोमसाध्ययागलक्षणार्थत्वसूचनार्थं सगुणमित्युक्तम्। बृहद्रथन्तरसामत्वयोर्ज्योतिष्टोमे प्राप्तत्वेन विधेयत्वात्सामान्तरनिवृत्त्यर्थत्वे च तद्विध्यानर्थक्यापत्तेः। कर्मान्तरत्वनिश्चयात्सिद्धान्तासम्भवेन सन्देहायोगमाशङ्क्य, प्राप्तयोरपि बृहद्रथन्तरसामत्वयोर्ग्रहाग्रविशेषविधौ निमित्तार्थं कीर्त्तनमिति सूचनार्था ग्रहाग्रताविशेषविध्युक्तिरित्येवं सिद्धान्तवचनव्यक्तिभाष्यं व्याख्यातुम्—**तस्यैवेत्युक्तम्**। यदीति सन्देहहेतुभाष्यं प्रकरणाद् बृहद्रथन्तरसामशब्दयोर्ज्योतिष्टोमवाचित्वावगतेः पूर्वपक्षायोगादयुक्तमाशङ्क्योपपादयितुमाह—**तत इति**। सर्वसामकार्येषु रथन्तरमेव, बृहदेव वा, न सामान्तराणीति कृत्स्नेन क्रतुना रथन्तरस्य, बृहतो वा संयोगे ज्योतिष्टोमे सामान्तरविध्यानर्थक्यापत्तेस्तदयोगात्कर्मान्तरत्वं, रथन्तरं बृहद्भवत्येवेति सत्तामात्रेण रथन्तरस्य, बृहतो वा क्रतुसंयोगे त्वकर्मान्तरतेत्याशयः।

नन्वेवं सति बृहद्रथन्तरयोर्विशेषणत्वेन सामान्तरव्यावर्त्तकत्वावगतेः कृत्स्नक्रतुसंयोगस्यैव न्याय्यत्वात्सिद्धान्तानुपपत्तेः, सन्देहो न युज्येतेत्याशङ्क्य, सत्ताव्यावृत्त्यापि बृहद्रथन्तरयोः पाक्षिकत्वात् विशेषणत्वोपपत्तेर्न तन्मात्रेण कृत्स्नक्रतुसंयोगसिद्धिरिति परिहारसम्भवेऽपि प्रौढ्या क्रतोरेव विशेषणत्वाभ्युपगमने सिद्धान्तसम्भवं वक्तुमाह—**तत्सिद्ध्यर्थमपीति**। विशिष्टानुवाददोषापत्तेर्विशेषणविशेष्यत्वायोगमाशङ्कते—**ननु चेति**। पूर्वपक्षे तावन्निमित्ततैव नास्तीति परिहरति—**भवेदिति**। केवलबृहद्रथन्तरसामकत्वस्याप्राप्तत्वान्निमित्तत्वं न सम्भवतीत्याशयः।

ननु सिद्धान्तेऽपि अप्राप्तत्वादेव केवलबृहद्रथन्तरसामकत्वस्य निमित्तत्वं न सम्भवतीत्याशङ्क्याह—**निमित्तत्वमपि चेति**। समासश्रुत्यवगतस्य केवलरथन्तरसामकत्वस्य, केवलबृहत्सामकत्वस्य वा प्राप्त्यभावान्निमित्तत्वायोगेऽपि रथन्तरवत्त्वस्य बृहद्वत्त्वस्य वा निमित्तत्वसम्भवात्बृ हद्रथन्तरयोरसत्ताव्यावृत्त्याऽन्योन्यमात्रव्यावृत्त्या वा विशेषणत्वाभ्युपगमेन विशेष्यत्वाभ्युपगमेन वा बृहद्रथन्तरसामकत्वापादनेन निमित्तता सिद्धान्तेऽभ्युपगन्तव्येत्याशयः।

नन्वेवमपि विशिष्टानुवाददोषापत्तेः कः परिहार इत्यपेक्षायामाह—**यत्सम्बन्धाच्चेति**। शुद्धस्य क्रतोः, साम्नो वा ग्रहाग्रविधौ निमित्तत्वायोगाद्विशिष्टस्यैव निमित्तत्वावगतेर्विशेषणस्याप्युद्देश्यान्तर्गतेर्न विशिष्टानुवाददोषापत्तिरित्याशयः। शुद्धस्योद्देश्यत्वायोगे विशेषणस्योद्देश्यान्तर्गभ्युपगमेऽपि वाक्यभेदानापत्तिसूचनायाऽऽस्त्यधिकरणभाष्यपाठः। पूर्वपक्षसूत्रस्थतुशब्दव्यावर्त्यसिद्धान्तोक्तयर्थं किं तावदिति भाष्यप्रकरणोक्तिर्युक्त्यन्तराणामभ्युपलक्षार्थेत्येवं व्याचष्टे—**किं तावदिति**। सन्निधिलभ्रणात्प्रकरणात्सोमशब्दस्य ज्योतिष्टोमविषयत्वप्रतीतेर्बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवतीति वचनान्तरेण बृहद्रथन्तरप्राप्तेर्यदिशब्दप्रतीतस्य च निमित्तत्वस्य प्राप्त्यपेक्षत्वात्, अकर्मान्तरत्वे च ग्रहाग्रविशेषस्य ज्योतिष्टोमप्रयोगवचनेन ग्रहणात्प्रकृतकथम्भावानुग्रहोपपत्तेर्ज्योतिष्टोमस्य चोत्पत्तिशिष्टसामान्तराभावेन बृहद्रथन्तरविरोधिगुणान्तरानवरोधात् बृहद्रथन्तरयोः पूर्वकर्मसंयोगानर्हत्वाभावेन भेदकत्वानुपपत्तेर्दध्ना

जुहोती'त्यादिवच्च प्रकृतकर्मप्रत्यभिज्ञानादकर्मान्तरतेत्यर्थः। बृहद्रथन्तरसामत्वलक्षणो गुणः कर्मान्तरमाक्षिपेदिति पूर्वपक्षप्रतिज्ञार्थसूत्रावयवव्याख्यानार्थमिति भाष्यं व्याचष्टे—**एवमिति।** बृहद्रथन्तरसामशब्दयोरपूर्वक्रतुसंयोगादित्येवमर्थाभ्युपगमेन हेत्वर्थे क्रतुसंयोगादिति सूत्रावयवे पठिते, नन्विति भाष्येण शब्दद्वयस्यापि ज्योतिष्टोमवाचित्वोपपत्तेर्हेत्वसिद्धिमाशङ्क्य नेति ब्रूम इत्यनेन संयोगस्य कृत्स्नभूतत्वादित्येवमर्थेनान्त्यसूत्रावयवेन तन्निरासमुपक्रम्य, तदुपपादनार्थं कथमित्यादिना तत्सन्देहहेतुरुक्तः तं प्रागेव व्याख्यातत्वादुपेक्ष्य, कृत्स्नक्रतुसंयोगोपपादनार्थस्य 'यदि रथन्तरसामे'ति कोऽर्थ इत्यादिभाष्यस्यार्थं व्याचष्टे—**कुत इति।** सामर्थ्यस्यैकार्थ्याधीनत्वाद्विशेषणविशेष्यत्वं च विनैकार्थ्यायोगाद्विशेषणत्वापेक्षाव्यवच्छेद्यत्वशब्देनासाधारण्यं व्याख्यातम्। ज्योतिष्टोमस्य चेति भाष्यावयवोऽन्त्यपादेन व्याख्यातः।

प्रातिलोम्येन श्लोकं व्याख्यातुं ज्योतिष्टोमे केवलबृहद्रथन्तरसामकत्वाभावमात्रेण कथं कर्मान्तरत्वसिद्धिरित्यपेक्षायां, केवलरथन्तरसामकत्वलक्षणात्केवलबृहत्सामकत्वलक्षणाद्वा गुणाद्भेदसिद्धिं वक्तुमाह—**गुणश्चेति।** तस्मात्कर्मान्तरमिति हिशब्दान्वयायाऽध्याहार्यम्। ननु विधेयस्यैव गुणस्य भेदकत्वात् बृहद्रथन्तरसामकत्वयोश्च निमित्तत्वेनाऽविधेयत्वान्न भेदकतेत्याशङ्क्याह—**इह चेति।** यदिशब्दोपबन्धेनेह निमित्तत्वं गम्यमानं बहुव्रीह्यर्थस्य विद्यमानस्य गम्येत। तस्य च केवलबृहद्रथन्तरसामकत्वरूपस्याविद्यमानत्वेन निमित्तत्वायोगाद्विधेयत्वेन युक्ता भेदकतेत्याशयः।

ननु बहुव्रीह्यर्थस्य निमित्तत्वायोगेऽपि रथन्तरस्य, बृहतो वा विद्यमानत्वान्निमित्तत्वायोगेऽपि रथन्तरस्य, बृहतो वा विद्यमानत्वान्निमित्ततोपपत्स्यतइत्याशङ्क्याह—**नेति।** ननु रथन्तरमस्य सामेति विग्रहे, रथन्तरस्य विशेष्यत्वप्रतीतेर्निमित्ततोपपत्स्यतइत्याशङ्क्याह—**न चेति।** विग्रहवाक्यस्यावैदिकत्वेन समासस्थस्यैव विशेषणविशेष्यत्वस्य ग्राह्यत्वात्, तत्र च 'सप्तमीविशेषणे बहुव्रीहावि(पा० सू० अ० पा० सू०)ति विशेषणस्य पूर्वनिपातस्मृतेः पूर्वनिपाताद्रथन्तरस्य विशेष्यता न युक्तेत्याशयः। क्रत्वन्तरेष्वपि च रथन्तरसद्भावान्न रथन्तरं क्रतुना विशेष्टुं शक्यमित्याह—**न च तदिति।** अतो रथन्तरमेवास्य सामेति बहुव्रीह्यर्थत्वात्, तस्य चाप्राप्तत्वान्निमित्तत्वं न सम्भवतीत्युपसंहरति—**तस्मादिति।** अतो निमित्तत्वायोगेन विधेयत्वावगतेः केवलरथन्तरमेवास्य सामेति बहुव्रीह्यर्थत्वात्, तस्य चाप्राप्तत्वान्निमित्तत्वं न सम्भवतीत्युपसंहरति—**तस्मादिति।** अतो निमित्तत्वायोगेन विधेयत्वावगतेः केवलरथन्तरसामकत्वलक्षणस्य गुणस्य भेदकता युक्तेति प्रकृतमुपसंहरति—**अत इति।** निमित्तत्वमसम्भवात्त्याज्यमित्यभिहितम्। निमित्तत्वान्यथानुपपत्त्या केवलरथन्तरसामकक्रत्वन्तरस्य विधेयत्वकल्पनापक्षस्तु केवलरथन्तरसामकक्रत्वन्तरस्य नित्यत्वेन निमित्तत्वायोगात्प्रौढिमात्रेणोक्तः।

ननु कर्मान्तरेऽप्यतिदेशात् गायत्रादिसामान्तरप्राप्तेः केवलरथन्तरसामत्वं न सम्भवतीत्याशङ्क्याह—**शक्यं हीति।** अतिदेशस्योपदेशेन बाधोपपत्तेरित्याशयः। श्लोकान्त्यपादं व्याख्याय सामान्तरव्यावृत्त्या रथन्तरस्य ज्योतिष्टोमविशेषणत्वायोगेऽप्ययोगव्यावृत्त्यां

विशेषणत्वं भविष्यतीत्याशङ्कानिरासार्थत्वेन तृतीयं व्याचष्टे—**न चेति**। रथन्तरस्याविशेषात्सर्वसामकार्यविशेषणत्वप्रतीतेः पृष्ठ्यतिरिक्तेषु च सामकार्येषु तस्यायोगव्यावृत्तेरप्ययोगान्न सर्वव्यापिविशेषणत्वं सम्भवतीत्याशयः। 'महाबलभिदं चेच्छस्त्रमि'त्यादिवत्तर्ह्यविशेषणस्यैव मात्रेण निमित्तत्वं भविष्यतीत्याशङ्कानिरासार्थत्वेन द्वितीयं व्याचष्टे—**नेति**। विशेषणादिगायत्रच्छन्दस इत्यादिवत्तर्ह्यसामर्थ्यमेवास्त्वित्याशङ्कानिरासार्थत्वेनाद्यं व्याचष्टे—**न च सामर्थ्येनेति**। गायत्रच्छन्दःप्रभृतीनां तु मन्त्रगतत्वेन विधावशक्तत्वादगत्या यथा कथं चिद् गतिः कल्प्येत्याशयः। समासाभावावस्तु शङ्कितुमेवाशक्य इत्याह—**दृश्यते चेति**। अतः सिद्धा कर्मान्तरतेत्याह—**एतीति**।

ज्योतिष्टोम एव तर्ह्येकसामत्वं विकल्पेन विधास्यत इति शङ्कते—**अथेति**। विषमशिष्टत्वाद्विकल्पायोगमाह—**न शक्यमिति**। एतदेवोपपादयति—**इदं हीति**। क्रत्वन्तरेऽपि तर्ह्येकसामकत्वं न सम्भवतीत्याशङ्क्याह—**क्रत्वन्तरे त्विति**। अनेन च ननु यथेत्याद्याशङ्का परिहारभाष्यार्थो व्याख्यातः। स्वार्थप्राधान्याविघातादपि केवलरथन्तरसामकक्रत्वन्तरविधिरेव युक्त इत्याह—**एवं चेति**। ननु निमित्तार्थत्वेऽपि बहुव्रीह्यार्थस्यैव निमित्तत्वात्स्वार्थप्राधान्यं न विहन्यतइत्याशङ्क्याह—**अन्यथा हीति**। क्रतोः स्वरूपेण निमित्तत्वायोगादित्याशयः। उक्तेन च प्रकारेण केवलरथन्तरसामकत्वस्यावश्यविधेयत्वे व्यवहितान्वय-हेतुहेतुमल्लिङपक्षयोर्यदि रथन्तरसामेत्यस्य ग्रहाग्रताविध्येकवाक्यत्वाभ्युपगमात् 'चोदना वा गुणानां युगपच्छास्त्रादि'त्यनेन न्यायेनानेकार्थोपादानलक्षणादपि गुणात्कर्मान्तरविधिसिद्धिरित्याह—**यदि चेति**। ऐन्द्रवायवाग्रत्वस्य ग्रहणविशेषणत्वेन यागविशेषणत्वाभावात्, तस्य च पूर्वपक्षेऽप्यतिदेशलभ्यत्वेनाविधेयत्वात्, तद्द्वारपि विधेययागविशेषणत्वानुपपत्तेः। कर्मान्तरस्याप्यैन्द्रवायवाग्रत्वविशिष्टस्य विध्ययोगमाशङ्क्यैन्द्रवायवाग्रत्वविशिष्टगृह्णातिपरप्रत्ययोक्तापूर्वभावनाविशिष्टयागभावनान्तरविध्युपपत्तिसूचनार्था ग्रहाग्रभावना विधानशब्देनोक्ता। क्रत्वर्थोत्पादकस्य वाजिनादेर्गुणस्य तन्निरपेक्षभावनाभेदकत्वाभावेऽपि तदनुत्पादकस्य साक्षाद्भावनयैवान्वयाद्भेदकत्वसूचनायाऽपूर्वभावनाविध्युक्तिः। विधायकस्याच्छब्दानन्तर्यादपि सोमशब्दलक्षितयागविधिरवसीयतइत्याह—**सोम इति**।

नन्वितिकर्त्तव्यतानुपदेशान्न कर्मान्तरविधिर्निर्वहतीत्याशङ्काह—**सोमेति**। व्याख्यातेऽर्थे भाष्यमनुसन्धत्ते—**इदमेवेति**। वाक्येनेति भाष्यावयवं यदिशब्दत्याग-रुच्यध्याहारपक्षयोर्ग्रहाग्रविधेर्यागविध्येकवाक्यत्वाभावादयुक्तमाशङ्क्य, 'वाक्यग्रहणस्य च यदि रथन्तरसामा सोमः स्यात्, सौभरेण स्तुवीते'ति सन्दंशाभिव्यङ्ग्यावान्तरप्रकरणोपलक्षणत्वेनोपपादयितुमाह—**ग्रहाग्रेति**। 'आहे'ति भाष्येण स्याच्छब्दस्य यदिशब्दोपहतशक्तित्वाद्यागविध्यमाशङ्क्य, यदिशब्दत्यागेनानुपघातोक्त्यर्थं'मत्र ब्रूम' इत्यादिभाष्यं महावाक्येऽवान्तरवाक्याप्रामाण्यादयुक्तमाशङ्क्योपपादयति—**यद्यपीति**।

अथ वा यदीत्यथवाशब्दं यदिशब्दत्यागपक्षनिवृत्त्यर्थत्वेन व्याचष्टे—**परित्यागवदिति**। ननु कल्पकाभावात्स्वोत्प्रेक्षामात्रकल्पितो रुच्याध्याहारः प्रसज्येतेत्याशङ्क्याह—**कर्त्तव्यतेति**।

विधिनाऽनिच्छतः प्रवर्त्तयितुमशक्यत्वात्कार्यत्वान्यथानुपपत्त्या रुचिः कल्प्यतइत्याशयः। वैकल्पिकत्वसिद्धिश्च रुच्यध्याहारप्रयोजनमेवकारेण सूचिता।

अथ वा यथेत्यप्यथवाशब्दमध्याहारपक्षनिरासार्थत्वेन व्याचष्टे—**अध्याहारादपीति**। पक्षान्तरमन्यथाभूतं यद्रचयति। तदेवं मत्वेत्यर्थः। कथं पुनरित्याशङ्काभाष्यं दृष्टान्तस्य साध्यविकलत्वोक्त्यर्थत्वेन व्याचष्टे—**परस्त्विति**। यद्युपबन्धात्साक्षान्न शालिभोजनस्य विधेयत्वप्रतीतिर्व्यत्ययाभ्युपगमेऽपि दध्युपसेचनस्य शालिभोजनं प्रति यदिशब्दावगतनिमित्तत्वायोगात्, तदेकवाक्यत्वानुपपत्तेः। स यदि केन वाक्येन विहितत्वोक्तिः। कथमित्याशयः।

उच्यत इति भाष्येण व्यवहितान्वयकल्पनया दध्युपसेचनस्येष्यमाणत्वेनावगतस्य भोज्यव्यञ्जनार्थत्वेनेष्यमाणतया 'षाष्टिकान् पयसा भुञ्जीते'ति व्यञ्जनार्थपयःसाहचर्येणावधारणात् भोजनप्रयुक्तत्वेन तदभावेऽनुष्ठानासिद्धेः कांस्यभोजिन्यायेनोपसेचननियमाच्छालिभोजननियमावगतेः, स यदि केन वाक्येन भोजनविधिसिद्धिरिति परिहृतेन वैखल्वित्यनेन यदिशब्दान्वयेऽपि, इच्छावाचित्वाभावान्नेष्यमाणत्वावगतिः सम्भवतीत्याशङ्क्योच्यतइत्यनेन 'कामप्रवेदनेऽकच्चिदि'तीति कच्चिच्छब्दोपपदवर्जं कामस्येच्छायाः प्रवेदने-प्रज्ञापने गम्यमाने लिङ्विभक्तिस्मरणाल्लिङैवेष्यमाणत्वावगतिरुपपादिता। तत्र कथं व्यत्ययो लिङश्च कामप्रवेदनार्थताऽवगम्यतइत्याशङ्क्याह—**व्यत्ययेनेति**। 'अमगत्यादिष्वि'ति गत्यर्थस्यामो धातोर्भावे क्तप्रत्ययमुत्पाद्याऽनुनासिकस्य क्विप् झलोः क्ङितीति दीर्घत्वादान्तङ्गतमवगतमित्यान्तशब्दस्य ज्ञानवाचित्वाल्लोकप्रसिद्धस्य व्यत्ययकामप्रवेदनार्थत्वज्ञानस्य सिद्धं च तदान्तं चेति विग्रहेणोक्तस्य विवरणम्। कथनमित्यर्थः। एवंजातीयके वाक्ये लोके व्यत्ययकामप्रवेदनार्थत्वप्रतीतेरनिष्पन्नस्य चोपसेचनस्य निमित्तत्वायोगात्, तदिच्छाया निष्पन्नाया यदिशब्देन निमित्तत्वोक्त्यवगतेस्तत्समभिव्याहृताया लिङः कामप्रवेदनार्थत्वस्य न्याय्यत्वादङ्गभूतोपसेचनकर्त्तव्यतया च प्रधानभूतेष्यमाणभोजनाक्षेपाशक्तेर्भोजनेष्यमाणत्वोक्तिवैयर्थ्यप्रसङ्गाद्व्यत्ययस्य न्याय्यत्वावगतेर्व्यत्ययकामप्रवेदनार्थलिङङ्गीकरणं युक्तमित्याशयः।

एवमिति दार्ष्टान्तिकभाष्यं व्याचष्टे—**तत्रेति**। स यदि लौकिकवाक्येष्वेवं विधवाक्यार्थदर्शने सतीति तत्रशब्दार्थः। व्यत्ययाभ्युपगमस्य किं प्रयोजनमित्यपेक्षायां विधिशक्तिप्रतिबन्धकयदिशब्दापनयनं प्रयोजनमाह—**ततश्चेति**। गुणविधायिरथन्तरसामशब्दानपेक्षत्वेऽपि कर्मविधिस्तावत्सम्भवतीति पदद्वयोपन्यासेन सूचितम्।

नन्वेवं सतीति भाष्येण ग्रहाग्रताविधेर्यदिशब्दान्वये सत्यविधायकत्वापत्तेर्ग्रहाग्रता नानुष्ठेया स्यादित्याशङ्क्योच्यतइत्यादिना परिहृतम्। तस्याशयद्वयमाह—**ग्रहानिति**। ऐन्द्रवायवशुक्राग्रत्वयोर्विधेयत्वेनेष्टत्वात्तच्छब्दयोरुपन्यसनीयत्वेऽपि तयोरप्राप्तत्वाद्विधायकाश्रवणेऽपि विधायककल्पनेनावश्यविधेयत्वसूचनायाऽनुपन्यासः। इष्यमाणस्य साध्यत्वावगतेः फलवच्च यागानुष्ठानमात्रेण ग्रहाग्रत्वासिद्धेः, पृथक प्रयत्नसाध्यत्वात्कर्त्तव्यत्वकल्पनेत्याद्या-

शयार्थः । ग्रहाग्रताविशेषमिच्छतो यागोपदेशेन ग्रहाग्रताया यागप्रयुक्तत्वसूचनेन यागाङ्गत्वबोधनात्साङ्गयागविधिनैव ग्रहाग्रताविशेषस्यापि विधिरिति द्वितीयाशयार्थः ।

हेतुहेतुमतोर्लिङिति हेतौ कारणे स्वार्थान्यानुष्ठानापादके तत्प्रयोजको हेतुश्चेति हेतुसंज्ञत्वेन स्मृते प्रयोजके हेतुमति च फले परेण स्वार्थानुष्ठेतयाऽऽपाद्ये प्रयोज्ये लिङ्विभक्तिस्मृतेः स्यादिति हेतौ लिङ् गृह्णीयादिति विधौ गृह्णीयादिति चाहेतुमति स्यादिति विधाविति पक्षान्तरोपन्यासोऽपि पूर्वापरितोषेणैवेत्याह—**विनैवेति** । न केवलं यदिशब्दस्यागाध्याहारभ्यां विनेत्यपिशब्दार्थः । रथन्तरसामेति भाष्यं हेतौ स्यादिति लिङ्पक्षे रथन्तरसामसोमहेतुका ऐन्द्रवायवाग्राग्रहाः कर्त्तव्या इत्येवं विशेषणपरत्वेन व्याख्यातुमाह—**तत्रेति** । यागकर्त्तव्यताऽस्मिन्पक्षे न सिद्धचेदित्याशङ्क्याह—**चेति** ।

हेतुमति गृह्णीयादिति लिङ्पक्षेऽप्येतदेव भाष्यम् । ऐन्द्रवायवाग्रत्वहेतुरथन्तरसामा सोमः कर्त्तव्य इत्येवं व्याख्यास्यन् पक्षं तावदाह—**अथ वेति** । ननु हेतुमति लिङ्पक्षे यदिशब्दस्य व्यवहितान्वयाभावेऽपि ऐन्द्रवायवाग्रत्वस्य विशेषणत्वेन प्रागभिधेयत्वा'दैन्द्रवायवाग्रान् गृह्णीयाद्यदि रथन्तरसामा सोमः स्यादि'ति पदानुपूर्व्या वाक्यार्थव्याख्यापत्तेर्मध्यपतितस्य यदिशब्दस्य पूर्वच्चारितहेतुमदर्थं लिङन्वयाभ्युपगमे न स्यादिति लिङन्वयाभावान्निरुपपदायाश्च लिङो हेत्वर्थत्वानुपपत्तेः सोमयागस्य केन चिच्छब्देन हेतुत्वोक्तिरयुक्तेत्याशङ्क्याह—**अनुक्तमपि चेति** ।

हेतुमता हेतुमात्राक्षेपात्सोम एव हेतुरिति कथमवधारणेत्याशङ्क्य, सन्निधेश्चेत्युक्तं भाष्यं व्याचष्टे—**तत्रापीति** । परप्रकरणस्थस्य क्रत्वन्तरस्यावान्तरप्रकरणाभिव्यञ्जकसन्देशशून्यायां शखायां वाक्यं विना ग्रहाग्रविशेषस्य तदङ्गत्वायोगादङ्गाङ्गित्वलक्षणार्थत्वं प्रयोज्यप्रयोजकत्वाख्यहेतुहेतुमत्वोक्तेर्वक्तुं कार्यते—अन्यार्थमन्यदनुष्ठाप्यतेऽनेनेति व्युत्पन्नेन कारणशब्देन हेतुशब्दो वैयाकरणानुसाराद्व्याख्यातः । फलशब्देन च वैयाकरणानां हेतुमच्छब्दव्याख्या परार्थापाद्यानुष्ठानत्वलक्षणप्रयोज्यत्वविवरणायैव द्रष्टव्या ।

सुखग्रहणायोक्ताश्चतुरः पक्षान्सगृह्णाति—**यदि शब्देति** । ननु किमर्थः पूर्वपक्षेऽतिनिर्बन्ध इत्यपेक्षायामाह—**सर्वं चेति** । तस्मादिति सूत्रार्थोपसंहारभाष्यं स्पष्टत्वादव्याख्याय, बृहद्रथन्तरसामसंयोगस्य ग्रहाग्रत्वलक्षणाङ्गरूपशेषानुष्ठानवेलायामभूतत्वात्-अनिष्पन्नत्वादित्येवं संयोगस्येति सूत्रावयवव्याख्यानार्थमपि चेति भाष्यं व्याचष्टे—**किं चेति** । क्रतोरपि ग्रहणवेलायामनिष्पन्नत्वात्कथं हेतुमल्लिङ्पक्षे निमित्ततेत्याशङ्क्य अनिष्पन्नस्याप्यारब्धत्वेन वर्त्तमानत्वान्निमित्तत्वं भवतीति वैधर्म्यदृष्टान्तेन सूचितम् । श्लोकं व्याचष्टे—**प्रातःसवने हीति** । स्वसत्तयान्यानुष्ठानापादकवाच्ययं कारणशब्दः पक्षत्रयाशयेन मम त्वित्युक्तं चतुर्थपक्षाशयेनाह—**अथ वेति** । क्रतोरप्यनिष्पन्नत्वेनानिमित्तत्वाशङ्का, स चेत्वनेन निरस्ता । यदि जगत्सामाग्रयणाग्रानिति जगत्सामसंयोगस्य ज्योतिष्टोमं प्रत्यनङ्गभूतत्वाद्, तत्साहचर्येण बृहद्रथन्तरसामसंयोगयोरप्यनङ्गत्वात्कर्मान्तराक्षेपकतेत्येवं संयोगस्येति सूत्रावयवव्याख्या-

नार्थम् । 'अपि च निःसन्दिग्धमिति भाष्यं व्याचष्टे—**जगत्सामा चेति** । जगदाख्यस्य साम्नः क्व चिदभावाज्जगत्यामृच्युत्पन्नस्य साम्नो जगत्सञ्ज्ञत्वप्रतीतेः सामशब्दस्य रथन्तरसाम-बृहत्सामेतिवत् तुल्यवन्निर्देशात्पृष्ठसाधनसामवाचित्वावगतेर्विषुवति च 'महादिवाकीर्त्यं पृष्ठं भवतीति 'बिभ्राद्‌बृहत् पिबत्वि'ति जगत्यामुत्पन्नस्य महादिवाकीर्त्यस्य साम्नः पृष्ठसाधनत्वेन विधानात् विषुवत्येवाग्रयणस्याग्रत्वं निविशतइति वक्तुं, दशमे ज्योतिष्टोमस्य जगत्सामत्वं निषेत्स्यति ॥१॥

भा० प्र०—पूर्वपाद में कर्म का भेद प्रतिपादित किया गया है। इस पाद में उन कर्मों का ही व्यतिक्रम प्रदर्शित होगा। इस पाद का प्रधान प्रतिपाद्य विषय कर्मों का भेद कहाँ नहीं होता है? श्रुतियों में ज्योतिष्टोम प्रकरण में कहा है कि "यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् यदि बृहत्कामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान् ।" "सोमलता से साध्य याग में यदि रथन्तर नाम का साम अर्थात् गेय रहता है तो "ऐन्द्रवायव" नाम के ग्रह को आगे कर अन्य ग्रहों का ग्रहण करना चाहिए, यदि 'जगत्' नाम का सोम अर्थात् गेय रहे तो 'आग्रयण' नाम के ग्रह को पहले कर अन्य ग्रहों का ग्रहण करना चाहिये।" सोमलता के जो याग किया जाता है, उसी को इस स्थल में सोम कहा जाता है। 'रथन्तर', 'बृहत्' एवं 'जगत्' यह तीन प्रकार के सोम का नाम है। इनका सोमयाग में माध्यन्दिन सवन में पृष्ठस्तोत्र में विकल्पित भाव में गेय रूप में विधान है। सोमयाग में प्रातःकाल में, मध्यकाल में एवं अपराह्ण समय में एक-एक बार याग कर तीन बार याग करना होता है। इनमें प्रत्येक में अनुष्ठान के विषय में कुछ वैशिष्ट्य भी है। यह जो तीन बार याग किया जाता है, इनमें प्रत्येक को सवन कहा जाता है। प्रत्येक में सोमलता के द्वारा रस निकालकर उससे अग्नि में हवन करना चाहिये। उसी को क्रमशः प्रातःसवन, माध्यन्दिन सवन एवं तृतीय सवन के नाम से अभिहित किया जाता है। इन तीन सवनों को मिलाकर 'सोमयाग' होता है। माध्यन्दिन सवन में सोमविशेष से गीयमान चार सूक्तों को 'पृष्ठस्तोत्र' कहा जाता है।

ऐन्द्रवायव, मैत्रावरुण, आश्विन, शुक्र, मन्थि, आग्रयण, उक्थ्य, ध्रुव इत्यादि ग्रहों का नाम है। इनका प्रातःसवन में ग्रहण किया जाता है। दारुमय पात्रविशेष में सोम का रस गृहीत होता है—उसका नाम ग्रह है। होम के लिए पात्र में गृहीत सोमरस को भी ग्रह ही कहा जाता है। अतः कथित श्रुतिवचन का आशय यह है कि सोमयाग यदि रथन्तर साम से युक्त रहता है = उसमें रथन्तर साम गेय रहता है तो बृहत् एवं जगत् साम न रहता है तो ऐन्द्रवायव नाम का ग्रह प्रथम ग्रहण के योग्य रहता है। इस प्रकार 'बृहद्' अथवा 'जगत्' नाम का साम रहने पर शुक्र अथवा आग्रयण नाम का ग्रह प्रथम ग्राह्य है।

पूर्व कथित वाक्य में रथन्तर आदि साम से युक्त ज्योतिष्टोम से अतिरिक्त अन्य अपूर्व कर्म का विधान किया गया है या इनके द्वारा प्रस्तुत ज्योतिष्टोम में ग्रहाग्रहता रूप

गुण का उपदेश किया गया है—यह सन्देह है। इसमें पूर्वपक्षी का कहना है कि "गुणस्तु कर्मान्तरं प्रयोजयेत्।" रथन्तरादि साम अपूर्व कर्म का ही विधान करता है, क्योंकि "क्रतुसंयोगात्" = समग्र क्रतु के साथ उसका संयोग अर्थात् सम्बन्ध रहता है। श्रुतियों में 'रथन्तर सामा' यह उल्लेख रहने पर 'रथन्तर' नामक साम बहुव्रीहि समास में प्रविष्ट होकर सोम का विशेषण होता है, जो असाधारण होता है, वही विशेषण होता है। अतः 'रथन्तर सामा' इस अंश का 'रथन्तर ही साम जिसका है', इस प्रकार विग्रह कर अवगत होता है कि सोम में एकमात्र 'रथन्तर' अथवा 'वृहत्' ही विकल्पित भाव में साम रहता है। ऐसी स्थिति में इस स्थल में ज्योतिष्टोम में ग्रहाग्रता रूप गुण विहित नहीं हो सकता है। कारण, ज्योतिष्टोम में केवल रथन्तर साम नहीं है, किन्तु उसमें 'गायत्र' साम आदि अन्य साम भी हैं। जिस स्थल में अन्य साम हैं, उसमें रथन्तर साम विशेषण नहीं हो सकता है, क्योंकि वह उसमें असाधारण नहीं है। श्रुतियों में 'रथन्तर सामा' इस प्रकार का निर्देश रहने पर 'रथन्तर' साम को विशेषण न मानने का कोई उपाय नहीं है, क्योंकि "समर्थः पदविधिः" ( पा० सू० २–१–१ ) इस पाणिनि सूत्र से यह अवगत होता है कि सामर्थ्य के बिना समास नहीं होता है, निरपेक्षता रूप सामर्थ्य विशेषण में ही रहता है। विशेषण विशेष्य को अन्य उसके सजातीय से भिन्न कर देता है, इसीलिए वार्तिककार ने कहा है—

समासः सति सामर्थ्ये तच्चापीष्टं विशेषणे।
विशेषणं व्यवच्छेत्तु ज्योतिष्टोमे च नास्ति तत्॥

रथन्तर साम नामक सोम, सोम का विशेषण होने से वह सहस्रक्रतु को व्याप्त कर रहता है, अतः सोम स्वतन्त्र कर्म है यह माने विना अन्य उपाय नहीं है। इस पक्ष में 'यदि' शब्द का अर्थ अविवक्षित होगा अथवा "यदि रोचते" इस प्रकार में रुचि के अध्याहार की कल्पना कर 'यदि' शब्द की सार्थकता की रक्षा हो सकती है। अथवा "यदि शालिं भुञ्जीत तत्र दध्युपसिञ्चेत्" इस लौकिक वाक्य में जैसे "यदि दधि उपसिञ्चेत् तदा शालिं भुञ्जीत" इस प्रकार से व्यत्यास कर यदि शब्द का अन्वय स्वीकार किया जाता है, वैसे ही यहाँ भी "यदि ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् रथन्तरसामा सोमः स्यात्" इस प्रकार व्यतिक्रम कर यदि शब्द का अन्वय किया जा सकता है। "रथन्तर सामा सोमः स्यात्" यह जो अवान्तर वाक्य है, यही प्रकृत में विधायक है, "ऐन्द्रवायवान् ग्रहान् गृह्णीयात्" इस वाक्य में "गृह्णीयात्" इस पद में "कामप्रवेदन" अर्थ में अर्थात् इच्छा अर्थ में लिङ् का प्रयोग माना जायगा। अतः इसका अर्थ होगा, "यदि ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् = ग्रहीतुमिच्छेत्" अर्थात् यदि ऐन्द्रवायव ग्रह को आगेकर अन्य ग्रहों के ग्रहण की इच्छा हो" अथवा इस स्थल में "हेतुहेतुमतोर्लिङ्" इस सूत्र के अनुसार निमित्तनैमित्तिक अर्थ में लिङ् का प्रयोग रहता है, अतः "रथन्तरसामा" इस समस्त शब्द से साम का समग्र क्रतु के साथ सम्बन्ध बोधित होता है, उसकी

रक्षा के लिए इसको कर्मान्तर की ही माननी होगी, पक्षान्तर में गुणविधि स्वीकार करने पर समग्र क्रतु के साथ सम्बन्ध नहीं रहता है, एवं गुणतावादी "यदि" शब्द के द्वारा निमित्त नैमित्तिक भाव मानने पर वह भी सङ्गत नहीं होता है, कारण, सभी स्थलों में निमित्त पूर्वकालवर्ती एवं नैमित्तिक परभावी होता है—यही नियम है, किन्तु इस स्थल में गुणविधि मानने पर उसका अन्यथा रूप हो जायगा, कारण, इस पक्ष में रथन्तर सामको ग्रहाग्रता विशेष का हेतु मानना होगा और ग्रहाग्रता ग्रहण नैमितिक होने पर भी पूर्व-कालवर्ती रथन्तर साम परवर्ती कालीन ही होता है। कारण, कर्मों में पूर्व में ही प्रातः सवनकाल में अग्रताविशिष्ट ग्रहग्रहण करने की विधि है, बाद में माध्यन्दिन सवन में पृष्ठ-स्तोत्र में रथन्तर साम गान के करने का उपदेश है, ग्रहाग्रता की गुणतावादी को रथन्तर साम को ही ग्रह ग्रहाग्रता ग्रहण का निमित्त मानना होगा, किन्तु इस स्थल में "रथन्तर" शब्द बहुव्रीहि समास में प्रविष्ट होकर गुणीभूत हो गया है, अतः उसके साथ "यदि" शब्द का अन्वय नहीं हो सकता है, उसके साथ "यदि" शब्द का अन्वय न होने पर उसकी ग्रहाग्रता का निमित्त भी नहीं कहा जा सकता है, क्योंकि, "यदि" शब्द के द्वारा ही इस स्थल में निमित्तता सूचित होती है, "यदि" शब्द के साथ उसका सम्बन्ध रहने पर वह बहुव्रीहि समास में प्रविष्ट नहीं हो सकता है। क्योंकि, "ऋद्धस्य राजमातङ्गाः" इत्यादि सापेक्षा पदका समास नहीं होता है। अर्थात् ऋद्ध के साथ राज्ञः का पुरुष का समास नहीं होता है। इसीलिए "रथन्तरं सामा" इत्यादि सापेक्ष पद का समास नहीं हो सकता है, किन्तु वह ऐन्द्रवायवाग्रत्व एवं रथन्तररूप गुणविशिष्ट कर्मान्तर का ही उपदेश है।

"गुणः" = रथन्तर साम आदि गुण, "तु" = प्रत्यवस्थान में, "कर्मान्तरं प्रयोज-येत्" = अन्य कर्मों का अर्थात् अपूर्व कर्म का प्रयोग अर्थात् विधान करेगा, "क्रतुसंयोगात्" = क्रतु के अर्थात् यज्ञ के साथ संयोग अर्थात् सम्बन्ध रहने से, "संयोगस्य अशेष-भूतत्वात्" = क्योंकि रथन्तर सामका संयोग समग्र क्रतु को परिव्यास कर स्थित है। यह पूर्वपक्ष है ॥१॥

**एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात्॥२॥ [सि०]**

**शा० भा०—तुशब्दात्पक्षोऽन्यथा भवति। नैतदस्ति—यदुक्तं क्रत्वन्तर-मिति। कथं तर्हि ? ज्योतिष्टोमस्यैव ग्रहाग्रताविशेष इति। कुतः ? प्रकरण-सामर्थ्यात्। नन्वेतदुक्तम्—वाक्यसामर्थ्यात्क्रत्वन्तरस्य रथंतरसाम्नो बृहत्साम्न-श्चेति। परिहृतमेतज्ज्योतिष्टोम एव रथंतरसामा बृहत्सामा चेति[1]। पुनर्दूषित-मनेकसामत्वाज्ज्योतिष्टोमस्य, विशेषणं रथंतरेण बृहता वा न प्रकल्पत इति। तदुच्यते। प्रकल्पते[2] विशेषणम्, बृहद्रथंतरयोर्वैकल्पिकत्वात्। भवति स प्रयोगो,**

१. ब० वेति।        २ ब० प्रकल्पेत।

**यत्र रथंतरं नास्ति। भवति च स प्रयोगो [1]विद्यमानरथंतरसामकः। तदेतद्रथंतरं सत्तयैवासाधारणत्वाद्विशेषकम्[2]।**

**तस्माज्ज्योतिष्टोम एव रथंतरसामा बृहत्सामा चेति[3]।**

**अथ यदुक्तं पूर्वेण निमित्तेन भवितव्यमुत्तरेण नैमित्तिकेनेति। नैतत्। नियोगतो भवति हि भविष्यदपि निमित्तम्। यथा वर्षिष्यतीति कृषिगृहकर्मानुष्ठानम्। अपि च तद्दृष्टम्, इदं च वाचनिकं निमित्तम्। तद्यथावचनं भवितुमर्हति। स्यादिति चेयं लिङ् त्रिष्वपि कालेषु भवति। तस्माद्भविष्यदपि निमित्तम्।**

**यत्तु जगत्सा[4]मेति कर्मान्तरं, तत्सामान्याद्रथंतरसामाऽपि कर्मान्तरमिति।**

**जगत्साम, असंभवात्कर्मान्तरं संभवति। रथंतरसाम्नो बृहत्साम्नश्च ज्योतिष्टोमस्याभिधानम्। तस्मान्न कर्मान्तरमिति ॥२॥ सि० ॥**

**इति प्रथमं रथन्तराधिकरणम् ॥ १ ॥**

त० वा०—पूर्वोक्तैरेव हेतुभिर्ज्योतिष्टोमस्य गुणविधिरयं, न कर्मान्तरम्। एकस्यैव हि तेन लिङ्गेन रथंतरसामत्वेन, बृहत्सामत्वेन च ग्रहाग्रताविधिप्रयोजनार्थमुच्चारणं क्रियते। गुणवाक्यत्वाच्चाकर्मान्तरप्रत्यये सत्येकत्वं विज्ञायते।

अथ वा रथंतरादिविधानाज्ज्योतिष्टोमस्य गुणवाक्यैरेवमात्मकत्वं चोदितमिति, नार्थान्तरत्वं प्रतीयते। ततश्च कर्मैकत्वम्।

यत्तु विशेषणाभावात्सामान्तरसापेक्षविशेषणत्वाद्वा रथंतरसामेति समासो नावकल्पत इति।

तत्र ब्रूमः—

इष्यते पाक्षिकं वस्तु सत्तयैव विशेषणम्।
विग्रहे यद्विशेष्यत्वं तस्य चेह निमित्तता ॥

यदि हि रथंतरं नित्यं ज्योतिष्टोमे, अन्यसहितं वा स्यात्, ततो न व्यवच्छिन्द्यादपि, यतस्त्वरथंतरोऽपि ज्योतिष्टोमप्रयोगोऽस्त्येव। ततस्तद्व्यवच्छेदमुखेनादित विशेषणफलम्। यदि चैवकारं विना विशेषणबुद्धिर्न भवति, तत एवमसौ दर्शयितव्यो यदि रथंतरं सामास्यास्त्येवेति। बहुव्रीहेश्च मत्वर्थवर्तित्वान्मतुपश्चास्तित्वयोगविषयत्वान्नैवकारस्याश्रुतसत्तासम्बन्धकल्पना।

यद्वा यदि रथंतरं सामैवास्य भवतीति। तत्र कोऽर्थ एवशब्दस्य? तद्धि तथंतरं यद्यपि सर्वदा साम, तथाऽपि यदा क्रतौ न भवति, तदा तं प्रति साम-

---

१. ब० यो विद्यमानरथंतरकः। २. ब० विशेषणम्।
३. ब० वेति। ४. ब० जगत्सामाकर्मान्तरं।

कार्यासत्त्वादसामैवेति। सत्तापक्षे रथंतरं सामेति वक्ष्यते। अवश्यं च क्रत्वपेक्षमेवैतत्सामत्वं वक्तव्यम्। रथंतरस्वरूपे सामत्वस्य नित्यं पौनरुक्त्यात्। न च रथंतरस्य सापेक्षत्वं ज्योतिष्टोमे, येन समासो न स्यात्। द्वन्द्वनिर्दिष्टेषु ह्येकस्तोत्रविषयेषु चैतद्भवति। केवलेषु तु भिन्नस्तोत्रविषयसाधनेषु प्रत्येकनिरपेक्षमेव साधनत्वमिति, सामर्थ्यं न विहन्यते।

यद्वा पौनरुक्त्यादेव सामशब्दस्तत्साध्यस्तोत्रलक्षणार्थः सन् रथंतरपर्युपस्थापितं पृष्ठं लक्षयति। अथवा बृहद्रथन्तरयोरवान्तरप्रकरणादवान्तरकार्ययोगाच्च विरोधिनोः स्पर्धमानयोर्यथाऽवस्थितानुवाद[1]सारूप्यात्सामान्तराण्यनपेक्ष्य परस्परावच्छेदेनैव विशेषणत्वसिद्धिः। तेनोपपन्नं रथंतरविशिष्टस्य क्रतोर्निमित्तत्वम्।

अथवाऽस्तु रथंतरं क्रतुविशिष्टं निमित्तमिति। ननु च तदेव न प्रतीयते। उच्यते। सत्यं न प्रतीयते, किं तु यदा समस्तक्रतुसंयोगाभावाद्रथंतरविशिष्टः क्रतुर्न गृहीतः तदा विगृह्यमाणे समासे यो विपरीतो विशेषणविशेष्यभावः प्रतीयते, रथंतरमस्य सामेति स ग्रहीष्यते। षष्ठ्यन्तत्वाच्च क्रतुर्विशेणमेव समासाभिव्यङ्ग्यविशेष्यत्वभावात्तथा विवक्षिष्यते। यद्यपि च क्रत्वन्तरेष्वपि वस्तुस्वरूपेण रथंतरमस्ति, तथाऽप्यत्र तावद्विद्यते, तावन्मात्रेण च विशेषणत्वोपपत्तिः। स्ववाक्ये चासाधारणत्वं विशेषणकारणं, न वस्तुलक्षणं मा भून्नीलमुत्पलं देवदत्तस्य गौरित्येवमादीनां विशेषणत्वोच्छेदः।

तथा हि—

न लोके देवदत्तस्य गोसम्बन्धोऽस्ति केवलम्।
उत्पलस्य च नीलत्वं तस्यैवोच्येत येन तत्॥

यदि च वस्तुत एवासाधारणत्वं भवेत्, नैव शब्देन विशेषणमुपादीयेत। न ह्यत्र विशेषणफलमस्ति अग्निरुष्ण इति। तस्मादवश्यं वाक्यगतमेवासाधारणत्वमाश्रयितव्यम्। अस्ति चात्रापि तत्। ज्योतिष्टोमगतस्यैव रथंतरस्य निमित्तत्वेनेष्टत्वात्। प्रथमतरप्रतीतं च रथंतरं निमित्तत्वेनोत्सृज्य, न निमित्तान्तरकल्पनायां प्रमाणं विद्यते। तस्मादुभयथाप्यदोषान्निमित्तमिति न यदिशब्दपरित्यागादीनामाश्रयणं युक्तम्। न च कामप्रवेदनहेतुमत्प्रतीतिस्तावद्भवति, यावन्निमित्तत्वमेव न प्रतीतम्। तत्सम्भवे च नाप्रतीतग्रहणं युक्तम्। भूतभविष्यद्वर्तमानानां चानियमेन लोके वेदे च निमित्तत्वं दृष्टमिति रथंतरभविष्यत्वमचोद्यम्। अपि च यदेकान्तेनावधारितं, तन्निष्पन्नमेव। ज्योतिष्टोमप्रक्रमे चावधारितमेकान्तेन रथंतरं प्रयोज्येत इति, सर्वैर्वैकल्पिकानां क्रतुप्रक्रमएवावधारणादवश्यमृत्विग्यजमानैरेवमिदं कर्तव्यमित्यवधार्य प्रवर्तितव्यम्। तद्वशेन प्रयोगकौशलाभ्यासादि-

१. क० अस्ति।

सिद्धेः। न च निमित्तं नैमित्तिकस्य रूपसंनिधानेनोपकरोति। कथं तर्हि ? ज्ञायमानत्वेन। तस्मादप्रयुक्तमपि संकल्पितत्वाद्रथंतरं निमित्तम्। यदा त्वेकदेशस्थेनापि तेन विशेषितः क्रतुर्निमित्तं, तदाऽसौ वर्तत एवेत्यविरोधः। न च लिङः कालविशेषसम्बन्धेनोत्पत्तिः, येनान्यतरविषयमेव निमित्तं ब्रूयात्। सर्वथा हि शक्यं दर्शयितुं यदि रथंतरसामा सोमो भूतो, भवति, भविष्यति चेति। तत्रेहार्थवशेनैवं विज्ञायते यदिरथंतरं भविष्यतीति।

यत्तु जगत्साम सामान्यतोदृष्टमुक्तम्। तदयुक्तम्। तस्यैवंजातीयकेऽत्रप्रमाणत्वात्। अथ वा प्रकरणे द्वित्वबहुत्वयुक्तप्रतिपद्विधानादिव जगत्सामत्वासम्भवात्तदिति वैषम्यम्। अपि च तत्रापि नैवापूर्वकर्मोत्पत्तिः। किं तर्हि ? अप्रकृतस्य विषुवतो निमित्तत्वेन ग्रहणम्। तस्मान्निमित्तार्थानि सर्वाणि श्रवणानीति ॥ २ ॥

इति प्रथमं रथन्तराधिकरणम् ॥ १ ॥

न्या० सु०—पूर्वपक्षनिरासद्वारा सिद्धान्तोक्त्यर्थतया तुशब्दव्याख्यार्थे तुशब्दादिभाष्ये प्रकरणग्रहणं प्राग्वद्युक्त्यन्तराणामप्युपलक्षणायेति दर्शयितुमाह—**पूर्वेति**। ननु ज्योतिष्टोमस्य ग्रहाग्रत्वलक्षणगुणविधौ प्रकरणादेव तद्गुणत्वलाभात्, तद्वाची सोमशब्दोऽनर्थकः स्यादित्याशङ्कानिरासार्थमेकस्येत्यादिसूत्रावयवं व्याचष्टे—**एकस्यैव हीति**। भावे लकारव्याख्यानायोच्चारणमित्युक्तम्। सोमः स्यादिति कर्मविधिप्रतीतेर्भेदमाशङ्क्य ग्रहाग्रविशेषलक्षणगुणविधानार्थत्वेनाकर्मविधित्वात्कर्मभेदानिरासार्थमेकत्वमिति सूत्रावयवं व्याचष्टे—**गुणेति**।

नन्वेतदुक्तमित्यादिभाष्येण बृहद्रथन्तरसामशब्दयोरनेकसामकत्वाज्ज्योतिष्टोमेऽनुपपत्त्याशङ्कानिरासार्थत्वेन ज्योतिष्टोमस्य 'बृहद्वा पृष्ठं, रथन्तरं पृष्ठं वा भवतीति गुणवाक्यान्वयात् बृहद्रथन्तरवत्त्वेनाने'कसामत्वेऽपि बृहद्रथन्तरसामव्यपदेशोपपत्तेर्न बृहद्रथन्तरसामत्वलक्षणाद्वा गुणाद्भेद इत्येवमेकत्वमिति सूत्रावयवस्य सूचितं व्याख्यान्तरमाह—**अथ वेति**। बृहद्वा पृष्ठं रथन्तरं वेति वाक्याद् बृहद्रथन्तरयोर्वैकल्पिकत्वात्रगतेरयोगव्यावृत्त्या विशेषणत्वसम्भवसूचनार्थं गुणवाक्यैरिति बहुवचनम्। पुनरिति भाष्यं समासासम्भवानुभाषणार्थत्वेन व्याख्यातुमाह—**यत्त्विति**। विशेषणाभावादिति भावव्युत्पन्नेन विशेषणशब्देन नामेकसामकस्य क्रतोरेकेन साम्ना विशेषणाभावेऽभिहिते ननु सामान्तरव्यावृत्त्या बृहद्रथन्तरयोर्विशेषणत्वासम्भवेऽपि वैकल्पिकत्वात्स्वत्रायोगव्यावृत्त्या विशेषणत्वं भविष्यतीत्याशङ्क्य, अस्य क्रतोर्यत्सामेति सर्वसामकार्यानुवादेन तत्र रथन्तरं भवत्येवेति अयोगव्यावृत्तेरव्यापकत्वैनासम्भवस्य न च रथन्तरसत्तामात्रं विशेषणत्वापत्तेः सापेक्षत्वेनासामर्थ्यात्समासविघातः स्यादिति सामान्तरेत्यनेनोक्तम्। तदुच्यतइत्यादिभाष्योक्तं तावत्परिहारमाह—**तत्रेति**। प्रौढ्या स्वयं परिहारान्तरमाह—**विग्रह इति**। पूर्वार्द्धं व्याचष्टे—**यदि हीति**। पाक्षिकत्वविशेषणफलं नित्यशब्देनोक्तम्। स्वातन्त्र्यलक्षणार्थवस्तुशब्दोक्तान्यनैरपेक्ष्यविशेषणफल-

मन्यसहितशब्देनोक्तम् । स तयैवेत्येवकारेणान्यव्यवच्छेदव्याप्तचोर्व्यावर्त्तितत्वान्नित्यस्य चान्यव्यवच्छेदं विना अन्यसहितस्य च व्याप्तिंविना विशेषणत्वायोगादुभयमुक्तम् । पाक्षिकत्वात्त्वन्यव्यवच्छेदाभावेऽप्ययोगव्यावृत्त्या विशेषणत्वसम्भवे यतस्त्वित्यनेनोक्ते नन्वेवकारं विना विशेषणत्वानभिव्यक्तेर्यत एव कारस्ततोऽन्यस्य व्यावृत्तिरिति न्यायेनैवकारस्यान्यव्यवच्छेदवाचित्वान्नाभावव्यवच्छेदोपपत्तिरित्याशङ्क्य—**यदि चेत्युक्तम्** । विनाप्येवकारं समाससामर्थ्याद्विशेषणत्वाभिव्यक्तिर्यदिशब्देनोक्ता । एवकारापेक्षणेऽप्यत्र सत्ताया विशेषणत्वात्, तदस्यास्तीति वाऽस्त्यर्थस्मृतमत्वर्थवृत्तिबहुव्रीह्युक्तत्वाच्च तत एवैवकारप्रयोगेणाऽसत्त्वव्यावृत्तिर्युक्तेत्याशयः । यद्वेत्यनेन श्रुतविशेष्यान्वितेनाप्येवकारेण रथन्तरासत्त्वव्यावृत्तिसिद्धेर्नाश्रुतसत्तान्वयोऽवश्यकल्प्य इत्युक्ते, कथमन्यान्वितेनैवकारेणान्यासत्त्वव्यावृत्तिसिद्धिरित्याशयेन 'तत्रेति पृष्ठे तद्धीत्यनेन सामरूपतया नित्यत्वेन तद्विषयावधारणानर्थक्यादस्य क्रतोः सामकार्यं करोत्येवेत्यवधारणार्थप्रतीतेरसतश्च कार्यकरणत्वायोगाद्—**असत्त्वव्यावृत्तिसिद्धिरित्युक्तम्** ।

ननु पाक्षिकत्वेऽपि ज्योतिष्टोमगतसर्वसामकार्यव्यापित्वात्केवलस्य विशेषणत्वानुपपत्तेः सामान्तरसापेक्षस्य विशेषणत्वाभ्युपगमापत्तेः समासानुपपत्तिरित्याशङ्क्य, अन्यसहितं च स्यादित्यनेन सूचितं परिहारमाह—**न चेति** । बृहद्रथन्तरे सामनी भवत इत्यादिवत् द्वंद्वनिर्देशे तदभावेऽपिवा गायत्रामहीयवादिवदेकस्तोत्रविषयत्वे सत्यन्यसाहित्यं विना विशेषणत्वायोगात्केवलस्य सापेक्षत्वापत्तिः । 'रथन्तरं पृष्ठं भवती'ति तु सामान्तरनिरपेक्षस्य रथन्तरस्य पृष्ठाख्यस्तोत्रसाधनत्वेन विधानादस्य क्रतोर्यत्सामेत्यनुवादेऽपि रथन्तरसाध्यपृष्ठस्तोत्रमात्रद्वारा क्रतुसम्बन्धित्वप्रतीतेः सर्वसामकार्यव्यापित्वेऽपि विशेषणत्वसम्भवान्न सापेक्षत्वापत्तिरित्याशयः । सामशब्दस्य क्रतुसम्बन्धिरूपवाचित्वेपि रथन्तरशब्दसमभिव्याहारात्पृष्ठमात्रद्वारा क्रत्वन्वयनिमित्तत्वावगतेः पृष्ठसिद्धयै च रथन्तरस्य सामान्तरानपेक्षत्वात्समासाविघातः प्रौढिमात्रेणोक्तः । परमार्थतस्तु सामशब्दं विनापि क्रतुसम्बन्धिनो रथन्तरस्य निमित्तत्वप्रतीत्युपपत्तेः । सामशब्दानर्थक्यप्रसङ्गा 'दुक्थ्यो वैरूपसामा षोडशी वैराजसामे'त्यादिषु 'पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगादि८-१त्यनेन' न्यायेन वैरूपादेः पृष्ठसाधनद्योतनार्थत्वेन साम्नः पृष्ठलक्षणार्थत्वात् दूरापास्ता सामान्तरापेक्षेति ।

यद्वेत्यनेनोक्तम् । सामशब्दस्य च पृष्ठलक्षणार्थत्वे बृहद्रथन्तरयोस्तद्विषयत्वेनेतरेतरव्यावृत्त्यापि विशेषणत्वं सम्भवतीत्याह—**अथ वेति** । पूर्वार्द्धंव्याख्यानमुपसंहरति—**तेनेति** । उत्तरार्द्धं व्याख्यातुमुपक्रमते—**अथ वास्त्विति** । विग्रहे यद्विशेष्यत्वमित्यवयवं न च क्रतुविशिष्टं रथन्तरमिह प्रतीयत इति पूर्वोक्तं दूषणमनुभाषते—**ननु चेति** । परिहारत्वेन श्लोकावयवं व्याचष्टे—**उच्यत इति** । कृत्स्नसंयोगाभावेन रथन्तरस्य विशेषणत्वायोगादवैदिकस्यापि च विग्रहवाक्यस्य वैदिकसमासव्याख्यानार्थत्वेन वेदानुमतत्वात्तद्गतापि विशेष्यताऽगत्याङ्गीक्रियतइत्याशयः । वृत्तिविग्रहयोर्भिन्नार्थत्वायोगाद्रथन्तरं साम यस्याः

साविति विग्रहस्यापि अन्यपदार्थप्राधान्यार्थत्वावगतेर्लोहितोष्णीषादिवद्विशेषणतात्पर्यमात्रमत्राभिप्रेतमिति विवक्षोक्त्या सूचितम् ।

ननु क्रत्वन्तरेष्वपि रथन्तरस्याभावान्न क्रतुना विशेषणं सम्भवतीत्याशङ्क्याह—**यद्यपि चेति** । सर्वाङ्गोपसंहारिणा क्रतुप्रयोगविधिना युगपत्सर्वसामग्रहणाद्विनियोगवाक्येभ्यश्च प्रकरणालोचनं विनाक्रत्वन्वयाप्रतीतेरेकैकसामान्वयानवगमान्नैकेन साम्ना क्रतुर्विशेष्टुं शक्यः । साम्नस्त्वेकैकेन क्रतुना पर्यायेणान्वयादेकेन विशेषणत्वोपपत्तिरनन्तरमेवोपपादयिष्यते । यद्यपि तु विधिना रथन्तरस्य युगपदनेकक्रतुसाधारण्याप्रतीतावपि वास्तवात्साधारण्यादस्यैव रथन्तरं सामेति क्रत्वन्तरव्यावृत्त्या ज्योतिष्टोमस्य रथन्तरविशेषणत्वासम्भवः, तथाप्ययोगव्यावृत्त्या सम्भवतीत्यभ्युपेत्यवादाशयः । परमार्थतस्तु कार्यान्वये विशेषणापेक्षणात्स्ववाक्योपात्तैन्द्रवायवाग्रत्वलक्षणकार्यान्वयिनि च रथंतरे ज्योतिष्टोमस्यासाधारण्योपपत्तेर्ज्योतिष्टोमस्यैव रथन्तरमैन्द्रवायवाग्रत्वे निमित्तमित्यन्यव्यावृत्त्या विशेषणत्वसम्भवं वक्तुमाह—**स्ववाक्ये चेति** ।

देवदत्तस्य गौरानय इत्यादौ वस्तुतो देवदत्तयज्ञदत्तादीनां गोसम्बन्धतुल्यत्वेऽप्यानयनान्विते गवि देवदत्तस्यासाधारण्याद्विशेषणतेत्याशयः । दृष्टान्तमेवोपपादयति—**तथा हीति** । गोसम्बन्धो न देवदत्तस्य केवलः, किं तु यज्ञदत्तादेरपि, येन गौस्तस्यैवोच्येत, न चोत्पलस्य नीलत्वं केवलम्, किं तु रक्ततापि, येन तदेवोत्पलमुच्येतेत्येव योज्यम् । वस्तुतोऽसाधारण्ये च विशेषणमनर्थकं स्यादित्याह—**यदि चेति** । अतो देवदत्तस्य गौरित्यादौ वाक्योपात्तानयनादिकार्यान्वितगवादिविशेष्यविषयमेव देवदत्तादेर्विशेषणस्यासाधारण्यं वाच्यम्, न वास्तवमित्याह—**तस्मादिति** ।

नन्वन्येषामपि सोमयागानां ज्योतिष्टोमविकारत्वाद्रथन्तरसामत्वनिमित्तैन्द्रवायवाग्रत्वप्राप्तेरैन्द्रवायवाग्रत्वनिमित्तभूतरथन्तरविषयमपि ज्योतिष्टोमस्यासाधारण्यं भवतीत्याशङ्क्याह—**अस्ति चेति** । क्रत्वन्तरस्थस्य रथन्तरस्यातिदेशान्निमित्तत्वप्राप्तावप्युपदेशात् ज्योतिष्टोमस्थस्यैव निमित्तत्वेन 'पवमाने वा अत्र रथन्तरं कुर्वन्ती'त्यादौ स्तोत्रान्तरसाधनरथन्तरवति क्रत्वन्तरे रथन्तरनिमित्तैन्द्रवायवाग्रत्वप्राप्तिनिवृत्त्यर्थमिष्टत्वात् ज्योतिष्टोमस्यापि स्ववाक्योपात्तकार्यान्वितरथन्तरविषयमसाधारण्यमस्तीत्यर्थः । शुद्धस्य च निमित्तत्वायोगान्निमित्तत्वप्रतीत्युत्तरकालं तन्निर्वाहार्थं विशेषणान्वयाभ्युपगमात्, ततः प्राग्विशेषणविशेष्यभावानपेक्षणादुपसर्जनत्वेन रथन्तरस्य निमित्तत्वनिषेधानुपपत्तेः क्रतुरथन्तरयोर्मध्ये कस्य निमित्तत्वम्, कस्य निमित्तविशेषणतेत्यपेक्षायां प्रथमप्रतीतत्वाद्रथन्तरस्यैव निमित्तता युक्तेत्याह—**प्रथमतरेति** । 'इष्यते पाक्षिकं वस्त्व'ति श्लोकव्याख्यानमुपसंहरति—**तस्मादिति** । सम्भवति च रथन्तरविशिष्टस्य ज्योतिष्टोमस्य, ज्योतिष्टोमविशिष्टस्य वा रथन्तरस्य निमित्तत्वे यदिशब्दत्यागादयश्चत्वारोऽपि पक्षा न युक्ता इत्या—**हेतौति** । शुद्धायाश्च लिङः कामप्रवेदने, हेतुहेतुमतोर्वा प्रयोगाभावात् यदिशब्दोक्तस्य निमित्तत्वस्यानिष्पन्नक्रियाविषयत्वायोगान्निष्पन्नतदिच्छाविषयत्वाभ्युपगमेन तदुपबद्धाया लिङः

कामप्रवेदनार्थतां निमित्तत्वायोगाद्वा तद्गतेन स्वत्तयाप्यनुष्ठानप्रयोजकत्वेन प्रयोजकत्वसाम्यात्स्वार्थान्यानुष्ठानप्रयोजकत्वलक्षणया हेत्वर्थतां मथ्ययानाग्न्यनुत्पत्तिनिमित्तकरक्षोघ्न्यनुवचनविधिशेषे वा 'रक्षांसि वा एवं तर्ह्यालभन्ते, यर्हि न जायते, यर्हि चिरं जायते'-इत्यग्न्युत्पत्ति प्रतिबन्धकरक्षोपघातार्थत्वे रक्षोघ्नीस्तुत्यर्थे यहर्चुपबद्धस्याग्न्यजन्मनस्तहर्चुपबद्धरक्षः प्राप्तिनिमित्त कनैमित्ति कत्वकीर्त्तनात् यर्हि शब्दसमानार्थस्य यदिशब्दस्य नैमित्तिकवाचित्वमभ्युपेत्य तद्गतेनान्यसत्त याऽस्यानुष्ठानस्य प्रयोज्यवेन प्रयोज्यत्वसाम्यात्परार्थप्रयोज्यस्वानुष्ठानत्वलक्षणया तदुपबद्धाया लिङो हेतुमदर्थतां वक्तुम्, निमित्तत्वप्रतीतेरवश्याभ्युपगन्तव्यात्प्रतीतस्य च निमित्तत्वस्योक्तरीत्या सम्भवित्वेन त्यागायोगान्नाप्रतीतकामप्रवेदनाद्यर्थग्रहणं युक्तमित्याह—**न चेति**। बृहद्रथन्तरयोर्ग्रहणवेलायामनिष्पन्नत्वान्निमित्तत्वायोगस्याथेत्याद्यनुभाषणपूर्वं परिहारभाष्यं व्याचष्टे—**भूतेति**।

लोके भूतस्य पुत्रजन्मादेरुत्सवादौ, वर्त्तमानस्य च क्षेमसुभिक्षत्वस्य वासे, भविष्यतश्च वर्षस्य, गृहकरणे वेदे च पुत्रजन्मादेरेव भूतम्येष्ट्यादौ, वर्त्तमानस्य च दीक्षितत्वस्य दानादिपर्युदासे, भविष्यतश्च दर्शपूर्णमासारम्भस्यारम्भणीयायां निमित्तत्वायोगहेतुत्वेनाशङ्कनीयमित्यर्थः। यदि तु निष्पन्नेनैव निमित्तेन भाव्यमित्याग्रहः ततः सङ्कल्पितत्वेनानुष्ठितस्यापि भोजनस्य स्थासम्मार्जने निमित्तत्वोपपत्तेर्निष्पन्नकार्यकारित्वान्निमित्तत्वोपचारः सम्भवत्येवेत्याह—**अपि चेति**। सूक्तवाकएव याज्येतिवदौपचारिकत्वद्योतनायैवकारः एकान्तावधारितत्वंमेवोपपादयति—**ज्योतिष्टोमेति**। अङ्गभेदेन साङ्गप्रधानप्रयोगप्रक्रमे वैकल्पिकाङ्गानवधारणात् कस्य चित्प्रयोगस्य निरुपितैकरूपस्योपक्रमपूर्वसमाप्त्यसिद्धेरिदं कुर्यामिदं वेति च प्रयोगमध्ये दोलायमानमत्तेः कालविक्षेपात् प्रयोगनैपुण्यासिद्धेः प्रयोग प्राशुभावार्थं च शुष्केष्टिकाले निरूपितैकरूपप्रयोगाभ्यासासिद्धेर्वैकल्पिकाङ्गानिमित्तकेषु नानर्त्विकर्तृकेष्वैन्द्रवायवाग्रत्वादिषु नानर्वित्जां यजमानस्य च सम्प्रतिपत्त्यसिद्धेः प्रयोगस्य कौशलस्याभ्यासस्यादिशब्दोक्तायाश्च सम्प्रतिपत्तेर्वैकल्पिकाङ्गावधारणाधीनसिद्धत्वादेवं विधाङ्गमिदं कर्म कर्त्तव्यमित्यवधारणपूर्वकप्रवृत्तिनियमाज्ज्योतिष्टोमक्रमेणैव रथन्तरं प्रयोक्ष्यतइत्येकान्तेनावधारितमित्यर्थः।

एकान्तावधारणमात्रेण कथन्निष्पन्नकार्यकारितेत्याशङ्क्याह—**न चेति**। एतदेवोपसंहरति—**तस्मादिति**। क्रतोस्तु निमित्तत्वे वर्त्तमानमेव निमित्तं भविष्यतीत्याह—**यदा त्विति**। स्यादितिचेति भाष्यं व्याचष्टे—**चेदिति**। यत्त्वित्यादिसामान्यतो दृष्टानुभाषणपूर्वं परिहारभाष्यं द्वेधा व्याचष्टे—**यत्त्विति**। स्वयं साध्यविकलत्वं दृष्टान्तस्याह—**अपि चेति**। तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। जगत्साम्नोऽप्यपूर्वकर्मत्वाभावात् ज्योतिष्टोमापेक्षया कर्मान्तरं जगत्सामेत्युक्तम्। न विषुवदपेक्षयेति बहुवचनेन सूचितम् ॥२॥

इति प्रथमं रथन्तराधिकरणम्।

भा० प्र०—"रथन्तर सामा" इत्यादि को कर्मान्तरविधि के रूप में जो पूर्वपक्षी ने प्रतिपादन किया है—वह समीचीन नहीं है, वरन् इसको गुणविधि ही मानना उचित होगा। क्योंकि, पूर्वपक्षियों के द्वारा प्रस्तुत सिद्धान्त को मानने पर 'यदि' के अर्थ

का परित्याग करना होगा, अथवा रुचि का अध्याहार कल्पना और व्यत्यस्त भाव में दूरान्वय मानना होगा एवं प्रकरण का परित्याग और अप्रकृत कल्पना भी करनी होगी, किन्तु गुणविधि स्वीकार करने पर इन दोषों का प्रसङ्ग नहीं होगा। ऐसी स्थिति में गुणविधि की कल्पना करना असम्भव है, क्योंकि गुणविधि मानने पर इन दोषों को भी मानना होगा। इस स्थल में गुणविधि स्वीकार करने पर सभी दोषों के साथ कर्मान्तरता को मानना उचित नहीं है। गुणविधि मानने पर रथन्तर साम का विशेषणत्व नहीं रहेगा, यह भी कहना ठीक नहीं है। कारण, इतरव्यावर्तकत्व अर्थात् अन्य से वैशिष्ट्य का निर्देश करना ही विशेषण का फल है। इस स्थल में माध्यन्दिन सवन का पृष्ठस्तोत्र में 'रथन्तर', 'बृहत्' एवं 'जगत्' इन तीन प्रकार का साम विकल्प में विहित है, अतः रथन्तरादि वाक्य में परस्पर की व्यावृत्ति विशेषण से बोधित होता है। जब रथन्तर साम गेय होगा, तब बृहत् एवं जगत् नाम का साम गेय नहीं होगा। इसी प्रकार इस स्थल में नियमविधि मानने पर रथन्तर का अयोग अर्थात् अप्राप्ति की निवृत्ति करना ही विशेषण का प्रयोजन है, इस प्रकार बृहत् और जगत् नाम के सामों की भी व्यावृत्ति अर्थसिद्ध होगी। पाक्षिक अर्थात् वैकल्पिक वस्तु स्वरूपसत् भाव में ही विशेषण होता है, अतः रथन्तर रहित ज्योतिष्टोम का व्यवच्छेद अर्थात् व्यावृत्ति कराना भी विशेषण का प्रयोजन है।

रथन्तर शब्द साम में प्रविष्ट होने से 'यदि' शब्द के उसका अन्वय नहीं हो सकता है, यदि शब्द के साथ अन्वय न होने पर 'यदि' शब्द के द्वारा रथन्तर की हेतुता की सूचना भी असङ्गत होगी। इस प्रकार आपत्ति का जो उत्थापन किया गया है, वह भी अकिञ्चित्कर है, क्योंकि केवल रथन्तर को ऐन्द्रवायव ग्रहाग्रता को हेतु नहीं कहा जाता है, वरन् रथन्तर विशिष्ट क्रतु को ही ग्रहाग्रता निमित्त कहा गया है। 'मलिनः स्नायात्' इस वाक्य में मलिनता विशिष्ट व्यक्ति के पक्ष में स्नान विहित होने पर भी इस स्थल में मलिनता विशेषण होने पर भी स्नान का हेतु होता है, वैसे ही रथन्तर युक्त क्रतु ग्रहाग्रता का निमित्त होने पर भी रथन्तर ही ऐन्द्रवायव ग्रहाग्रता का हेतु होता है।

बाद में होने वाली अनिष्पन्न वस्तु हेतु नहीं हो सकती है, इस प्रकार का कथन भी यहाँ सङ्गत नहीं होता है, क्योंकि इस स्थल में जब अनिष्पन्न बाद में होने वाले रथन्तर की हेतुता वाचनिक अर्थात् श्रुतिवचन से बोधित है, तब लौकिक दृष्टान्त में उसके विरुद्ध कोई आपत्ति नहीं हो सकती है, किन्तु वचन में जैसा उल्लेख है, वैसा ही समझना होगा, इसीलिए स्थानान्तर में पूर्व में रैवत्यधिकरण आदि स्थल में भगवान् भाष्यकार ने कहा है कि "किमिव हि वचनं न कुर्यात् वचनस्यातिभावः" अर्थात् शास्त्रवाक्य किसी विषय का ही विधान नहीं कर सकता है एवं वचन के पक्ष में विधान करने पर गुरुतर विषय क्या है ?

वस्तुतः इस पक्ष में इसका कोई लौकिक दृष्टान्त नहीं है, ऐसी भी बात नहीं है। जैसे भोजन के लिए स्थान का मार्जन किया जाता है, भोजन अनिष्पन्न परवर्ती काल में

होने पर भी वह जैसे पूर्वकालीन स्थान मार्जन का साधन होता है, वैसे ही इस स्थल में रथन्तर ग्रह की अग्रता का साधन होगा। अतः इस स्थल में ग्रहाग्रतारूप गुण का ही विधान किया जाता है, इसके गुणवाक्य होने से इसके द्वारा जब कर्म का भेद प्रतिपादित नहीं हो सकता है, तब प्रकृत ज्योतिष्टोम एवं रथन्तरादि विशिष्ट सोम एक हो कर्म है—यह प्रतीत होता है। इसीलिए भगवान् जैमिनि ने 'एकत्वं गुणवाक्यात्' यह कहा है।

"एकस्य" = एक ज्योतिष्टोम का ही, "तु" = पूर्वपक्ष के निरास के लिए, "लिङ्ग-भेदाद्" = लिङ्ग का अर्थात् रथन्तर सामत्व एवं बृहत्सामत्व रूप विशेषण का भेद-साधन, "प्रयोजनार्थम्" = प्रयोजन के लिए अर्थात् ग्रहाग्रता विधान रूप प्रयोजन के लिए, "उच्यते" = उल्लिखित होता है, "एकत्वं" = वस्तुतः इस स्थल में कर्म का एकत्व ही है, "गुणवाक्यात्" = क्योंकि यह गुणवाक्य होता है और गुणविधि के स्थल में कर्म का भेद नहीं होता है। यह प्रथम रथन्तराधिकरण है ॥२॥

### अथ द्वितीयमवेष्ट्यधिकरणम्

## [२] अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते ॥ ३ ॥ सि०

**शा० भा०—अस्ति राजसूयः 'राजा राजसूयेन स्वाराज्यकामो यजेत' इति। तं प्रकृत्याऽऽमनन्ति अवेष्टिं नामेष्टिम्—'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा' इत्येवमादि। तां प्रकृत्य विधीयते—'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वाऽभिघारयेत्, यदि राजन्य, ऐन्द्रं,[१] यदि वैश्यो, वैश्वदेवम्, इति। तत्र संदिह्यते—किं ब्राह्मणादीनां प्राप्तानां निमित्तार्थेन श्रवणम्, उत ब्राह्मणादीनामयं यागो विधीयते इति।**

**कथं निमित्तार्थता भवेत्? कथं वा यागविधानमिति? यदि राजशब्दो ब्राह्मणादिष्वपि केनचित्प्रकारेण, ततो निमित्तार्थता। अथ क्षत्रिय एव, ततः प्रापकाण्येवंजातीयकानि श्रवणानि। किं तावत्प्राप्तम्? निमित्तार्थतेति। तत एवं[२] तावदुपवर्ण्यते—यौगिको राजशब्द इति। राज्यं यस्य कर्म, स राजा। किं पुना राजकर्म? जनपदपुरपरिरक्षणे ततश्चोद्धरणे राज्यशब्दमार्यावर्त-निवासिनः प्रयुञ्जते। राज्ञः कर्म राज्यमिति चाऽभियुक्ता उपदिशन्ति। तेन मन्यामहे यस्यैतत्कर्म, स राजेति। यथा ये उदमेघं नाम कंचित् पुरुषं नावेदिषुः, तस्य तु पुत्रमौदमेघिरित्येवं विदुः, शक्नयुस्ते यस्तस्य पिता, स उदमेघ इति कल्पयितुम्। उदमेघपुत्रस्यैवं समभिव्याहारो भवतीति। एवं राज्ययोगाद्राजशब्द इति विज्ञायते।**

---

१. ब. ऐन्द्रमिति। २. ब. एतत्तावत्।

ननु जनपदपुरपरिरक्षणवृत्तिमनुपजीवत्यपि क्षत्रिये राजशब्दमान्ध्राः प्रयुञ्जते प्रयोक्तारः[1]। न ब्रूमो न प्रयुञ्जत इति। किं तर्हि ? कर्मविशेषनिमित्तत्वाद्राजशब्दस्य, तद्योगादपि राजशब्दो भवतीत्येतदुपपादयामः। प्रयुञ्जते च तद्युक्ते राजशब्दमक्षत्रियेऽपि। तदस्मिन्नुपपन्ने प्रकरणवशात्, यादिशब्दसमभिव्याहाराच्च राजसूयस्यैव गुणविधानं भविष्यति, न ब्राह्मणस्य, वैश्यस्य च कर्मान्तरं विधायिष्यतीति।

अथ वा, असार्वलौकिकस्य प्रयोगस्य सार्वलौकिकेन प्रयोगेण विरुध्यमानस्याप्रामाण्यं स्यात्। अभ्युपगच्छन्ति हि ते जनपदिनः[2] सार्वभौमं प्रयोगम्।

अपि चाविप्रगीता लौकिका अर्था विप्रगीतेभ्यः प्रत्ययिततरा भवन्ति। तथा, आर्यावर्तनिवासिनां शब्दार्थोपायेष्वभियुक्तानामभिव्याहरतां कर्माणि चानुतिष्ठतामन्त्यजनपदवासिभ्यो म्लेच्छेभ्यः समीचीनतर आचारो भवति। तस्माद्यौगिको राजशब्दः। निमित्तार्थानि श्रवणानि, राजसूयस्य गुणविधिः। न कर्मान्तरमिति।

एवं प्राप्ते ब्रूमः। अवेष्टौ तु खलु क्रतुप्रधानं ब्राह्मणादिश्रवणं ब्राह्मणादीनामवेष्टियागं विधातुं न निमित्तार्थम्। कुतः। अप्राप्तत्वाद्ब्राह्मणवैश्ययोः। कथमप्राप्तिः। क्षत्रियस्य राजसूयविधानात्। राजा राजसूयेन यजेत इति। ननूक्तं— यौगिको राजशब्द इति।

एतदप्ययुक्तम्। यतो जातिवचन इति। ननूभयाभिधाने यदि शब्दसम्बन्धात्, प्रकरणाच्च न कर्मान्तरविधानं न्याय्यमित्युक्तम्।

अत्रोच्यते। नोभयाभिधानमवकल्पते[3]। कुतः ? यदि तावज्जातिशब्दो राजेति, ततस्तत्कर्मत्वाज्जनपदपरिपालने राज्यशब्दो भविष्यति। तेनाऽऽर्यावर्तनिवासिनां प्रयोगो न विरोत्स्यते। अथ यदि राज्यशब्दः परिपालने नित्यसंबद्धो भविष्यति, ततस्तस्य कर्तेति राजशब्दः क्षत्रियजातौ तन्निमित्तो भविष्यति। तत्राऽऽन्ध्राणां प्रयोगो न विरोत्स्यते। तस्मान्न प्रयोगदर्शनादुभावपि राजराज्यशब्दौ जातिपरिपालनाभ्यां नित्यसंबद्धावित्यभ्युपगन्तव्यम्। को नु खलु निर्णयः ? राजजातीयस्य कर्म इत्यतः परिपालनं राज्यशब्देनोच्यते। एवं हि स्मरन्तोऽभियुक्ताः, तस्य कर्म इति ष्यञ्प्रत्ययं विदधति, न तु तस्य कर्तेति। प्रत्ययलोपं वा, प्रातिपदिकप्रत्यापत्तिं वा समामनन्ति। तस्माद्राज्ञः कर्म राज्यं, न राज्यस्य कर्ता राजा।

---

१. ब. एतत्पदं नास्ति। २. ब. जनपदिनः प्रयोक्तारः।

३. ब. प्रकल्पते।

ननु यो यो जनपदपुरपरिरक्षणं करोति, तं तु लोको राजशब्दे नाभिवदति। उच्यते। योगाल्लोक प्रयुङ्क्ते। परिपालने राज्यशब्दप्रसिद्ध इति। स तु परिपालने राज्यशब्दो राजयोगादित्यस्माभिरुक्तम्। तस्माद्राजशब्दः प्रसिद्धेर्मूलम्। तद्योगाद्राज्यशब्दः। तद्योगादपि ब्राह्मणवैश्ययो राजशब्दः प्रयुज्यते। न त्वेवं स्मरन्ति, राज्ययोगाद्राजेति।

यत्तूक्तम्—अनुमानाद्राज्यस्य कर्ता यः, स राजा। यथा औदमेघेः पिता उदमेघ इति। उच्यते। अनुमानात्प्रयोगो बलवान्। राज्यस्य कर्तारं राजेत्यनुमिमीमहे। क्षत्त्रिये तु प्रत्यक्षं प्रयुञ्जानानुपलभामहे। तथा योगमप्यनुमिमीमहे, राज्यस्य कर्ता राजेति। राज्ञः कर्म राज्यमिति तु स्मरन्ति। अनुमिमानाश्च स्मृतिमनुमिमते स्म। स्मरन्तस्तु प्रत्यक्षमुपलभन्ते। तेन तत्र स्मृतिर्बलीयसीति।

आह। यो यो राज्यं करोति, तत्र राजशब्दं प्रयुञ्जते। न यद्राज्ञः कर्म, तद्राज्यमिति। तेन मन्यामहे, राज्ययोगो राजशब्द प्रवृत्तौ निमित्तं, न तु राजयोगो राज्यशब्दप्रवृत्ताविति। न ब्रूमः—प्रयोगाद्वयं राजयोगं राज्यशब्दप्रवृत्तौ निमित्तमवगच्छाम इति। कथं तर्हि? स्मरणात्। प्रयोगाच्च स्मृतिर्बलीयसी प्रयोगाद्धि स्मृतिरनुमीयेत। अपि च राज्ययोगस्य निमित्तता व्यभिचरति। जनपदपरिपालनमकुर्वत्यपि राजेत्यान्ध्रा वदन्तीत्युक्तम्। ननु राजयोगाद्राज्यमित्येतदपि व्यभिचरति। न हि राज्ञः स्पन्दितं निमिषितं च सर्वं राज्य मित्युच्यते। यदि वयं प्रयोगान्निमित्तभावं ब्रूयाम। तत एतमुपालभ्येमहि। स्मृत्या तु वयं निमित्तभावं ब्रूमः। तेन यद्यद्राजजातीयस्य कर्म जात्या विशेष्यते, तद्राज्यमित्यभ्युपगच्छामः।

यतूक्तम्—आन्ध्रा अपि राज्ययोगाद्राजानमभ्युपगच्छन्तीति। परिहृतमेतत्, प्रयोगो दुर्बलः स्मृतेरिति। यदुक्तम्, आर्यावर्तनिवासिनः प्रमाणमितरेभ्य आचारेभ्य इति। तुल्यः शब्दप्रयोग आचारेष्वित्युक्तम्। तस्माज्जातिनिमित्तो राजशब्दः। एवं चेद्यसंयोगात्क्षत्त्रियस्य राजसूयेन, यागविधिरवेष्टेरिति ॥ ३ ॥
क० अवेष्ट्यधिकरणम् ॥ २ ॥

त० वा०—'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यस्य प्रकरणे 'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा' इत्यादिभिर्द्रव्यदेवतासंयोगैरवेष्टिसंज्ञकामिष्टिं विधाय श्रूयते 'यदि ब्राह्मणो यजेत, बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वा, अभिधारयेत्', 'यदि राजन्य ऐन्द्रं', 'यदि वैश्यो वैश्वदेवम्' इति। तत्र पूर्ववदेव संदेहः—किं राजसूयमध्यस्थाया एवावेष्टेर्वर्णविशेषसंबन्धं प्राप्तमेव निमित्तत्वेनोद्दिश्य तत्र नैमित्तिकं विधीयते, उताप्राप्तमेव ब्राह्मणादिसंबद्धं प्रयोगान्तरमुद्दिश्यत इति। तत्सिद्ध्यर्थं चैतद्विचारयितव्यं किं राजसूयेऽधिकारस्त्रयाणामपि

वर्णानाम्, उत क्षत्त्रियस्यैवेति। तत्सिद्ध्यर्थमाधिकारिविशेषणभूतो राजशब्द-स्तथैव विचारणीयः। ततोऽप्येतद्विचारयितव्यं किं क्षत्त्रियत्वनिमित्तो राजशब्द, उत राज्यकरणनिमित्त इति।

ननु च 'एतयाऽन्नाद्यकामं याजयेत्' इति वर्णविशेषेणासंबद्धं पृथग्राजसूयप्रयोग-वचनादेवावेष्टेर्वचनमस्तीति, वर्णत्रयस्यापि प्राप्तस्य निमित्तार्थमेव श्रवणं भवेत्। नैतदेवम्। तदा हि निर्ज्ञातक्षत्त्रियकर्तृकायाः कर्त्रन्तरे वचनान्तरेणाऽविधीय-मानायाः पृथक् प्रयोगकारणाभावाच्च राजसूयमध्यस्थाया एव 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इत्यनेन न्यायेन साधारणं च स्वाराज्यं फलम्, प्रात्यात्मिकं चान्नाद्यं विज्ञायते।

पृथग्वा राजन्येनैव फलार्थिना प्रयुज्यते, न वर्णान्तरसंबन्धः। तद्यथाऽध्यय-नाधानयोर्निर्ज्ञातत्रैवर्णिककर्तृकत्वात्तदधीनसिद्धीनां कर्मणामर्थिमात्रसंबन्धावगमेऽपि सति, अपशूद्रविषयत्वमेवावतिष्ठते। यथा चात्रैव स्वाराज्यकामाविशेषेऽपि राजकर्तृकत्ववशेन भोक्तृविशेषो भविष्यति। तस्माद्राजसूयाधिकारेण, एभिर्वा वचनैः प्राप्तिरिति द्वावेव पक्षौ। किं तावत्प्राप्तम्? पूर्वाधिकरणेनैव निमित्तार्थानि श्रवणानीति। राजसूयाधिकारश्च सह राजशब्देन त्रयाणामपि वर्णानाम्, राज्य-करणं च शब्दप्रवृत्तिनिमित्तमिति। तथा हि—

कर्ता राज्यस्य राजेति सर्वलोकेषु गीयते।
महाविषयतैवं च शास्त्रस्यापि भविष्यति॥

उभयसंभवे तावत्त्रैवर्णिकविषयता युक्ता कल्पयितुम्। एवं हि निमित्त-प्रतीतिः, तत्प्रकरणादीनि च न बाध्यन्ते। राजसूयाधिकारश्रुतिश्चानल्पविषयत्वेन स्वरसात्प्रवर्तमाना न निवर्तिता भविष्यति। तस्माद्राज्यं कुर्वन्तः सर्वे त्रैवर्णिका राजानः। तच्च राज्यं जनपदपरिपालनं नाम सर्वलोकप्रसिद्धम्। ततश्चोद्धरणं राज्येऽपि कण्टकोद्धारणमभिप्रेतम्। **आर्यावर्तनिवासिन इति**—'शास्त्रस्था वा तन्निमित्तत्वात्' इत्यस्य प्रदर्शनार्थम्। **राज्ञः कर्म राज्यमित्येतदभियुक्ता उप-दिशन्तीत्येतद्** ब्रुवता ननु राजशब्दस्यैव प्रकृतिभूतस्य स्वातन्त्र्यमभ्युपगतं भवति। तथा हि—

नैवौदमेघिसंबन्धादुदमेघः प्रसिध्यति।
स्वतन्त्रेणोदमेघेन स एव त्वनुगम्यते॥

उच्यते—

राजा निर्ज्ञात एवेह स्वातन्त्र्येण चिरंतनैः।
तद्योगात्कल्पितं राज्यमस्माकं तु विपर्ययः॥

यथैव गामानयेत्यभिहिते यद्यपि व्यवहर्तृभिः यो गौः, स आनेतव्य इति वचनं कल्पितम्, तथाऽपि पार्श्वावस्थितस्य यस्य गोत्वमप्रसिद्धम्, अनयनं च

प्रसिद्धम्, स छेदनादिभ्य इव यूपमेवं प्रतिपद्यते, य आनेष्यते, स नूनं गौरिति। तथैवात्र यद्यपि मन्वादिभिः पाणिनिप्रभृतिभिश्चैवं स्मृतम्, यो राजा, तेन जनपदादिरक्षणं कर्तव्यम्, यश्च राजा, तस्य कर्म राज्यमिति। तथाऽपि वयं संदिग्धराजकाः प्रसिद्धराज्याश्च सन्त एवं प्रतिपद्यामहे, येनैवं स्मर्तृभिरुक्तम्, तेन नूनं बन्धनसमर्थे द्रव्ये यूपवत्, राज्यकरणसमर्थद्रव्यालम्बन एव राजा तैर्निरूपित इति। तच्च राज्यमविशेषेण चत्वारोऽपि वर्णाः कुर्वाणाः दृश्यन्ते। तस्मात्सर्वे राजानः। तत्र तु न्यायान्तरेण ब्राह्मणादिषु चरितार्थायां राजश्रुतावध्ययनादीनामभावे सति, कामं शूद्रः पर्युदस्येत न त्वितरपर्युदासे हेतुरस्तीति, त्रयाणामप्याधिकारः।

ननु च क्षत्रियसंबन्धेन राज्यं विहितमन्यायेनेतरौ कुर्वाणौ न राजानौ स्याताम्। नैष दोषः। सर्वथा तावद्राज्यकरणात्ताभ्यामपि राजत्वं लब्धम्। तावता च राजसूयचोदनायाः प्रयोजनम्। यौ तु न्यायान्यायौ, तयोः पुरुषधर्मत्वान्नैकोऽपि क्रतुना गृह्यत इत्यविशेषः। **ननु जनपदपुरपरिरक्षणवृत्तिमनुपजीवत्यपीति**—सिद्धान्तबीजोपन्यासः। उक्तं ह्येतद्व्रीहिराज्यादिशब्देषु यथैकदेशेऽपि जातिनिमित्तत्वे लभ्यमाने निमित्तान्तरं न कल्पनीयमिति। परः पुनर्यौगिकग्रहणमत्रोपकारकमिति प्रदर्शयति—**प्रकरणवशाद्यदिशब्दसमभिव्याहाराच्चेति। 'न कर्मान्तरं विधायिष्यते'** इति प्रयोगान्तराभिप्रायेण।

अथ वा यदा यदि शालिं भुञ्जीतेत्यादयो वचनप्रकारा गृह्यन्ते, तदैकेनैव वाक्येन ब्राह्मणसंबन्धो बार्हस्पत्याभिधारणं च न शक्यते कर्तुमिति, मुख्यमेव कर्मान्तरत्वम्। एवं तावदुभयप्रसिद्धिं प्रमाणीकृत्योक्तम्। इदानीं तु राज्यरहिते प्रयोगः प्रमाणमेव न भवतीति प्रस्तूयते सार्वलौकिकेन प्रयोगेणासार्वलौकिकस्य बाधात्। **अपि च विप्रगीता** इति तदेव प्रत्ययिताप्रत्ययितत्वेन पुनरुपन्यस्तम्। न हि सर्वलोकासर्वलोकविदितत्वव्यतिरेकेण विप्रगीताविप्रगीतत्वे विद्येते।

यद्वा पूर्वेण प्रसिद्धेः सदसद्भावमात्रम्, उत्तरेण तु विप्रतिपत्त्यविप्रतिपत्ती। भवति चाज्ञानविपर्ययज्ञानयोर्भेद इत्यपौनरुक्त्यम्। **तथाऽऽर्यावर्तनिवासिनामिति**—शास्त्रस्थबलीयस्त्वं पूर्वोपक्षिप्तं दर्शयति। **समीचीनतर आचार** इति—शब्दप्रयोगोऽभिधीयते। तस्मात्प्राप्तनामेव ब्राह्मादीनां निमित्तार्थं श्रवणम्।

अपि च 'यदि राजन्य ऐन्द्रम्' इत्यसंदिग्धं निमित्तार्थम्, अतश्च तत्सामान्यादितरयोरपि तथात्वमित्येवं प्राप्ते।

ब्रूमः—

क्रतुसंबन्ध एवायं ब्राह्मणादेर्विधीयते।
अप्राप्तत्वान्न राजा हि राज्ययोगात्प्रतीयते॥

क्षत्त्रियवचन एवायं राजशब्दः न यौगिकः। स हि राज्ययोगाद्वा भवेत्, धात्वर्थानुसारेण दीप्तियोगाद्वा। उभयथाऽपि चानुपपन्नः। तद्रहितरूढिशब्ददर्शनात्। एकदेशस्थाऽपि रूढिरवयवप्रसिद्धिं बाधते। न चावयवप्रसिद्धिरभिषिक्ते जनपदपरिपालनव्यापृतेप्यायुक्तके।

ननु चाऽऽयुक्तकस्य परप्रयुक्तकारित्वादृत्विज इव यजमानत्वम्, न राजत्वं भविष्यति। नैवं शक्यम्। पराधीनेष्वपि केषुचित् पृथिवीश्वराभिषिक्तेषु माण्डलिकेष्वपि प्रयोगदर्शनात्। तेन तर्ह्यव्यभिचारात्स एवाभिषेको निमित्तं प्राप्नोति। नैवं भविष्यति। कुतः ?

अभिषेकोऽपि धर्मज्ञैः क्षत्त्रियस्यैव पठ्यते।
सहासौ राजशब्देन तेन नाक्षत्त्रिये मतः॥

ततोऽभिषेकस्य निमित्तत्वं ज्ञायते। यद्यस्य स्वातन्त्र्यं भवेत्। अयं तु क्षत्त्रियजातावेव स्मर्तृभिर्नियतो विधानवेलायामेव लवनादिवद् बर्हिःशब्देन, राजशब्देन संयुज्यते। तेनैव चोभयनिमित्तत्वं समुदायशब्दन्यायेनैतस्यानिष्टम्। यदि हि जात्यभिषेकयोरत्यन्तसमुदितयोरेव प्रयुज्यते, न तु केवलायां जातौ। जात्यन्तरेवाऽभिषेको विधीयते, तत उभयं निमित्तमिति कल्प्येत। स त्वभिषेकात्प्रागेव तत्संस्कार्ये प्रयुक्तः 'राजानमभिषेचयेत्' इति। तस्माद्राजजातावेव प्रज्ञायते। न च भाविसंज्ञाविज्ञानम्, भूतत्वेनैवोपपद्यमानत्वात्। अगत्या हि साऽन्यत्राऽऽश्रीयते। न चैकस्मिन्निमित्ते सिद्धे, निमित्तान्तरं कल्पयितुं शक्यम् विनाऽपि तत्कल्पनेन प्रयोगोपपत्तेः। अभिषेकनिमित्तत्वेऽपि च न्यायानुसारिणां नैवाक्षत्त्रियविषयत्वं सिध्यति' यस्तु धर्मशास्त्रातिक्रमेण क्रियते, न तस्य निमित्तत्वं स्यात्। यथा शूद्रकृतस्याऽऽधानस्य नाऽऽहवनीयादिप्रयोगनिमित्तत्वम्।

अपि च—

नित्याः शब्दार्थसंबन्धा यथावस्थितगामिनः।
नाऽऽश्रयन्त्यध्रुवं हेतुं स्वच्छन्दपरिकल्पितम्।

नित्यस्य हि राजशब्दस्य नित्येनैव निमित्तेन भवितव्यम्, नित्यानित्ययोः संयोगाभावात्। सा च नित्यता वस्त्वपेक्षया वा, विध्यपेक्षया वा निरूप्यते। तत्र न तावदभिषेको वस्तुरूपेणैव जातिवत्केषुचित्समवेतो दृश्यते। तेनावश्यं विधानापेक्षमेव निरूपणमाश्रयणीयम्। न च विधानमक्षत्त्रिये राजशब्दस्यास्तीति जात्यव्यभिचार एवाऽऽपद्यते। ततश्च सैव निमित्तम्। एतेन राज्यनिमित्तत्वं प्रत्युक्तम्। तदपि हि विधानात्प्रभृति, अभिषेकवदेव क्षत्त्रित्वसंबद्धम्। दृष्टश्चानभिषिक्तेऽपि, अपालयति च जनपदं, क्षत्त्रिये राजशब्दप्रयोगः। तद्वत्यपि वाऽन्यजातीयेऽनभिधानं द्रविडानाम्। तस्मादपि न त्रैवर्णिको राजा। तथा च राज्ञो-

ऽपत्यं राजन्य इत्यैकान्तिकक्षत्त्रियजातिवचनस्य राजन्यशब्दस्य राजशब्दप्रकृतित्वमेवान्वाचक्षते । अन्यथा त्रैर्वणिकानां राजत्वात्सर्वेषां त्रैर्वणिकानामपत्येषु राजन्यशब्दप्रयोगः स्यात् । कुतः ?

राजन्यः क्षत्त्रिये रूढो राजानः सर्व एव चेत् ।
अपत्यापत्यवद्योगे वैषम्यं वद कीदृशम् ॥

नन्वेवमप्यनुपपन्न एवायमपत्यप्रत्ययः । तथा हि—

प्रकृतौ तदपत्ये च जातिशब्दस्य तुल्यता ।
तेन राजैव सर्वत्र राजन्योऽप्यभिधीयताम् ॥

यथैव काकस्यापत्यं काकः, एवं राज्ञोऽपत्यं राजेत्येव स्यात् । नैष दोषः । पर्याय एव हि राजशब्दस्य राजन्यशब्दोऽनेन प्रकारेणान्वाख्यायते । स त्वेकजातिविषयत्वे सति तथाऽन्वाख्यातुं युज्यते, नान्यथा ।

ननु 'राज्ञोऽपत्ये जातित ग्रहणम्' इति वचनात्क्षत्त्रियजातिवचनो भविष्यति । नैतदेवम् । इहान्यमजात्यनुपादानाद्राजवन्मनुष्यजातिमात्राधिकारात्तद्वचनत्वं स्यात् । ननु च राजराजन्यशब्दयोस्तत्र तत्र कर्मभेदोपदेशेन स्मृतिविदां, याज्ञिकाांन च भेदेन प्रसिद्धिर्दृष्टा । सत्यं दृष्टा । सा तु ब्राह्मणपरिव्राजकन्यायेन राजन्यशब्दस्याभिषिक्तविशेषगामित्वेन सामर्थ्यलभ्यत्वात् ।

यत्तु प्रसिद्धिद्वयसंभवे राज्यनिमित्तत्वं प्रकरणादिभ्यो विज्ञास्यत इति । तन्निराक्रियते । तथा हि—

नैव तावदुभौ शब्दौ स्वातन्त्र्येण प्रसिध्यतः ।
क्लृप्तायामेकशक्तौ हि द्वितीयो यौगिको वरम् ॥

तदेतद्दर्शयति—यदि तावज्जातिशब्दो राजेति, ततस्तस्य कर्म राज्यमित्यवयवप्रसिद्धिसम्भवान्न तन्निरपेक्षं शक्त्यन्तरकल्पनमुपपद्यते । विनैव तेनाऽऽर्यावर्तनिवासिनां प्रयोगो न विरोत्स्यते । अथ तु प्रथममेव राज्यमिति, प्रतिपालनं रूढिरूपेणाभिधीयते । ततस्तच्छक्त्यनुसारेणैव तत्कर्तरि राजशब्दप्रयोगसिद्धेः शक्त्यन्तरकल्पनमन्तरेणैवद्रविडानां राज्याधिकारयोग्येषु क्षत्त्रियेषु प्रयोगो न विरोत्स्यते । दाक्षिणात्यत्वसामान्येनाऽऽन्ध्राणामिति भाष्यकारेणोक्तम् । तस्मान्न तावदुभावपि रूढिशब्दौ । नापि यौगिकौ । अन्यतररूढित्वे तु राजशब्दस्य तत्कल्पना युक्ता ।

कुतः ?

आचारयोरसम्बन्धे सन्देहे सति निर्णयः ।
सन्निबन्धनया स्मृत्या बलीयस्त्वादवाप्यते ॥

राज्यशब्दाभिधेयं परिपालनादि कर्म क्षत्त्रियस्येति मन्वादयः स्मरन्ति। पाणिनिप्रभृतयोऽपि राज्ञः कर्मेदं राज्यमित्येवं व्युत्पादयन्ति। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इत्यधिकृत्य स्वतन्त्ररूढाद्राजप्रातिपदिकात्प्रत्ययविधिः। तत्र ष्यञ्प्रत्ययं विदधतीत्यत्र वदन्ति। पत्यन्तपुरोहितादिपाठाद्राजशब्दस्य विशेषविहितेन यका भवितव्यम्। तथा च यक्प्रत्ययस्वर इहोपलभ्यते, नाऽऽद्युदात्तत्वम्। तस्माद्राजशब्दाद्राज्यशब्दव्युत्पत्तिर्न तु विपरीतेत्येतावन्मात्रपरमेव भाष्यं द्रष्टव्यम्। राज्यशब्दाद्धि राजनि व्युत्पाद्यमाने, यलोपाम्नानं वा राजशब्दादेशात्मकं वा स्मरणं स्यात्। तस्मादियमेव वचनव्यक्ती राज्ञः कर्म राज्यमिति, न त्वर्थापत्त्या राज्यस्य कर्ता राजेति कल्पनीयम्। देशान्तरे विज्ञातत्वाद्राज्ञः। कल्पितायामपि चार्थापत्तौ मन्वादिस्मृतिवशेन क्षत्त्रियस्यैतत्कर्मेत्यवधारणात्स एव राजा विज्ञायते। सकलश्च राजेतिशब्दो राज्येऽनुप्रविष्ट इति, स यौगिको युक्तो। न तु राजशब्दो राजन्यनुस्यूतः सकल इत्ययौगिकत्वम्। सत्यमेवं राज्यशब्दस्य यौगिकत्वमुपपद्यते। यस्तु तत्कारिणि जात्यन्तरे राजशब्दप्रयोगः स क्षत्त्रियत्वाभावान्न प्राप्नोति। तेन नाऽऽर्यावर्तनिवासिनां प्रयोगः सकलो न विरुध्यते।

तथा, 'न शूद्रराज्ये निवसेदित्यादीनामाप्तप्रयोगाणां बाधः स्यादित्यत अत आह—**योगाल्लोकः प्रयुङ्क्त इति**। प्रथमं तावद्राजयोगाद्राज्यं पुनस्तद्योगाद्ब्राह्मणादिषु राजशब्दोपचार इति। नन्वेवं सति राज्ययोगादपि राजेत्येतदभ्युपगतमेव। नैष दोषः। गौणत्वाभ्युपगमात्, मुख्यत्वाभ्युपगमे ह्यधिकरणं परावर्तेत। गौणत्वं तु मुख्येन बाधितत्वादभ्युपगतमपि सिद्धान्तं न विरुणद्धि। तेन तत्कार्यापन्ने प्रतिनिधिन्यायेन ब्राह्मणादौ राजशब्द इति द्रष्टव्यम्। तथा च दर्शयति—**न त्वेवं स्मरन्ति राज्ययोगाद्राजेति**। तच्चैतदाचारस्य दौर्बल्याद्गौणकल्पनाश्रयणमित्येवमेव भाष्यं नेयम्। यत्त्वौदमेधिशब्दादिवत्प्रकृत्यर्थानुमानं, तद्द्रविडप्रयोगेण प्रत्यक्षेण बाध्यते। अथ राज्यस्य कर्तैवमभिधीयत इति। निमित्तभूतोऽपि कर्मकर्तृसम्बन्धस्तस्य च स्मरणमनुमातव्यम्। राज्ञः कर्म राज्यमिति प्रत्यक्षं स्मरणम्। तस्माद्बलवत्तरम्।

पर आह—**यो यो राज्यं करोतति**। सर्वथाऽन्वयव्यतिरेकाभ्यां वाच्यवाचकसम्बन्धो विज्ञायते। स च राजशब्दस्याव्यभिचारेण राज्यनिमित्ततया च गम्यते, न तु राजकर्मनिमित्तत्वेन, स्मृतेः पुनः शब्दापशब्दविभागमात्रविषयत्वादविषय एवायम्। उभौ हि राजराज्यशब्दौ साधू। तस्मादयुक्तः स्मरणोपन्यास इति। तत्रोच्यते। सत्यं प्रयोग एव, न च स्मृतेः कस्य किंयोगनिमित्तत्वमित्येष व्यापारः तथाऽपि तु साध्वसाधुत्वपरतयैवान्वाख्यानान्निमित्तत्वमवगम्यते। राज्ञः कर्म राज्यमिति हि व्युत्पादने तद्योगनिमित्ते राज्यमित्यर्थादुक्तं भवति। तेन

स्मृतिबलीयस्त्वाद्राजशब्द एव स्वतन्त्र इति। प्रयोगोऽपि च द्रविडेषु व्यभिचारीत्युक्तमेव। मत्पक्षे तु प्रयोगस्यातन्त्रत्वाद्व्यभिचारित्वमदूषणम्। यत्र तावत् प्रयोगः, यत्रास्ति राजकर्मत्वम्। तेन प्रयुक्तस्यान्वाख्यानकरणादप्रयुक्तनिमित्तान्वाख्यानाभावाच्चादोषः।

किं च।

असाधारणभावेन सर्वत्रेष्टं विशेषणम्।
तेन तस्यैव कर्मेति चिन्तितादि न गृह्यते॥

जनपदरक्षणं ह्यसाधारणं राजकर्म। तेन राज्यमित्युच्यते। चिन्तितनिर्मिषितादि तु राज्ञश्चान्येषां चेत्यव्यवच्छेदान्न राज्यशब्दाभिधेयं भवतीति। तेन सार्वलौकिकादपि प्रयोगात् 'शास्त्रस्था वा तन्निमित्तत्वात्' इत्यनेनैव राजशब्दस्य क्षत्त्रियवचनत्वम्। तुल्यश्चान्त्यजनपदवासिनामपि दृष्टार्थत्वाच्छाब्दव्यवहारे प्रमाणाभाव इत्युक्तं 'चोदितं तु प्रतीयेत' इति तस्मात्क्षत्त्रियस्यैव राजसूयोऽस्तीति, ब्राह्मणादीनां प्रापकाणि श्रवणानि।

ततश्च 'एतयाऽन्नाद्यकामम्' इत्येतदपि फलं बहिरेव प्रयोगाद्भविष्यतीति।

कुतः ?

क्रतुमध्यप्रयोगो हि स्वराज्येनैव पूरितः।
साकाङ्क्षस्त्वितरस्तस्मात्तस्यैव फलसङ्गतिः॥

ननु चैतयेति प्रत्यक्षविशेषवचनात्परोक्षसामान्यप्रवृत्तां राजसूयचोदनां बाधित्वा, अन्नाद्यफलतयैव भवितव्यम्। नैतदेवम्। विरोधाभावात्।

तथा हि।

विरोधित्वात्प्रसज्येते विकल्पावृत्तिकल्पने।
बाधस्तेनाभ्युपेतव्यो व्यवस्थायां तु नैव ते॥

न ह्यनेकफलमेकस्य विरुद्धं, प्रयोगान्तरस्य वचनान्तरेणैव कल्पितत्वात् समुच्चयेन ह्यावृत्तिदोषोऽन्यत्राभिधीयते। सा त्वत्राऽऽवृत्तिर्ब्राह्मणादिसम्बन्धाद्राजसूयग्रहणाच्चावश्यंभाविनी। यदि च 'एतयाऽन्नाद्यकामम्' इत्युत्पत्तिवाक्यं भवेत्, ततः पश्चात्प्रवर्तमाना राजसूयचोदना बाध्येत। न। द्वयोरपि ह्याग्नेयादिचोदनोत्पादितेषु कर्मसु प्रवृत्तेषु युगपत्कालत्वेनागृह्यमाणविशेषत्वात्तुल्यबलत्वम्। यथैव हि राजसूयचोदना संनिहितानालोच्य प्रवर्तते, तथैवान्नाद्यकामचोदनाऽपि, न हि तत्रावेष्टिः केनचिदपि शब्देनोपात्ता। न च राजसूयेनेति सामान्यशब्दः पौर्णमासीशब्दवत्। प्रकृतसमुदायविशिष्टसमुदायिवचनत्वात्। अत एव तत्कृतमपि न दौर्बल्यं लभते।

इत्यांस्तु विशेषः। एकेन बहवो गृह्यन्ते, अन्येनाल्पे। न च तावता कश्चिदतिशयोऽस्ति। ननु चैतयेति श्रुत्यैव प्रत्यक्षवचनादस्ति विशेषः। स्याद्विशेषो यद्येतच्छब्दः फलेन सम्बध्यते।

यदि वा 'अथैष ज्योतिः' इत्यादिवत्प्रस्तूयमानं ब्रूयात्। प्रत्ययसंनिकर्षात्तत्रापि यजिशब्दगृहीतैवावेष्टिरन्नाद्येन सम्बध्येत। एतावच्च राजसूययजावप्यस्तीत्यविशेषः। प्रकृतमपि च ब्रुवन्नैतच्छब्द आग्नेयादिवाक्यालोचनादृते नैव ब्रवीतीति। ततश्च राजसूययजिरपि तावता यत्नेन शक्नोति ग्रहीतुमिति तुल्यबलत्वम्।

नन्ववान्तराधिकारस्यास्ति विशेषः। उच्यते। अयमेव विशेषो यदेकत्र बहूनां ग्रहणम्, अपरत्र चाल्पानाम्। ग्रहणवेला तु तुल्यैव। यदि चैकान्तिकमत्राकर्मान्तरत्वं स्यत्तत एवमुच्येत। कर्मान्तरमपि चैतदिति दर्शितम्। ततश्च विषयान्तरत्वादेव स्वराज्यान्नाद्ययोरविरोधः। कर्मान्तरत्वेऽपि च बार्हस्पत्यादिलिङ्गदर्शनात्प्रकृतावेष्टिप्रकृतित्वमेव प्रतिपत्तव्यम्। राजन्यस्यापि तुल्यप्रवृत्तेः फलपदानुषङ्गाच्च ब्राह्मणवैश्यवदेव कर्मान्तरेण, प्रयोगान्तरेण वा सम्बन्धः। एवं च तस्यापि मध्येनिधानवाक्यं तन्त्रप्रयोगे सत्युपपत्स्यते॥ राजसूयमध्यस्थायां तु दक्षिणाभेदात्प्रतीष्टि प्रयोगान्यत्वे मध्येनिधानविधिरवरुध्येत तस्मात्प्रापकाण्येतानि श्रवणानीति सिद्धम्॥ ३॥

इति द्वितीयमवेष्ट्यधिकरणम्॥ २॥

**अथ द्वितीयमवेष्ट्यधिकरणम्।**

न्या० सु०—उदाहरणभाष्यं व्याचष्टे—**राजेति**। सन्देहभाष्यं व्याचष्टे—**तत्रेति**। ब्राह्मणादिकर्तृलक्षणंन गुणेनेह भेदस्य प्रतिपाद्यत्वात् कर्त्तुश्च प्रयोगाङ्गत्वात्तन्मात्रभेदकत्वोपपत्तेर्भाष्ये यागशब्दः प्रयोगलक्षणार्थ इति प्रयोगान्तरोक्त्या सूचितम्। कथमिति भाष्येण सन्देहहेतुं पृष्ट्वा राजसूयवाक्यस्थो राजशब्दः क्षत्रियमात्रे वर्त्तते ब्राह्मणादिष्वपि वेति सन्देहो हेतुत्वेनोक्तस्तस्य साक्षान्मूलसन्देहत्वायोगाद्वर्णत्रयस्य राजसूये अधिकारः क्षत्रियमात्रस्य वेति मूलसन्देहहेतुभूतसन्देहहेतुत्वद्वारा मूलसन्देहहेतुत्वं दर्शयितुमाह—**तत्सिद्ध्यर्थं चेति**। न राज्ञः प्रतिगृह्णीयादराजन्यप्रसूतिन इति इत्यादिवाक्यस्थस्य राजशब्दस्य क्षत्रियवाचित्वाभावाद्राजसूयवाक्यस्थराजशब्दविषयत्वं विचारस्य वक्तुमधिकारीत्युक्तं त्रयाणामपि क्षत्रियस्यैवेति तथैवेत्यनेनातिदिष्टे योग्यत्वाद्वाचक इत्यध्याहारेण पूरणीयं केन चित्प्रकारेणेति यौगिकत्वोक्त्या सूचितम्। सन्देहान्तरं वर्णत्रयक्षत्रियमात्रवाचित्वसन्देहहेतुत्वेन दर्शयितुमाह—**ततोऽपीति**। चतुर्थ्यर्थे तसिः। ननु राजसूये क्षत्रियमात्राधिकारे अप्येतयान्नाद्यकामं याजयेदित्येतद्वाक्यविहितेष्टिप्रयोगान्तरे वर्णविशेषानुपादानात् ब्राह्मणादेर्गुणस्य प्राप्तत्वेनाविधेयत्वाद्भेदकत्वानुपपत्तेः सिद्धान्तासम्भवात्सन्देहो

न युक्त इत्याशङ्कते—**ननु चेति**। योगसिद्ध्यधिकरणन्यायेनैकस्मिन्प्रयोगे फलद्वयसिद्ध्ययोगादन्नाद्यकामावेष्टेः प्रयोगस्य राजसूयान्तर्गतावेष्टेः प्रयोगान्तरात् भेदावगतेः सन्निधौ त्वविभागादित्यत्र कर्मान्तरविधित्वे निराकरिष्यमाणेऽपि प्रयोगान्तरविधिनाऽन्नाद्यकामवाक्यस्याऽस्त्येवेति सूचयितुं पृथक्प्रयोगस्यैव वचनमित्येवकारः प्रत्युक्तः। राजसूयवाक्यस्यापि फलपरत्वाद्वाक्यभेदापत्तेर्वर्णविशेषान्वयायोगमाशङ्क्य, कर्त्तुः प्रयोगाङ्गत्वाद्वाक्यान्तरेण च राजसूयप्रयोगाविधानात् प्रयोगस्य चोत्पत्तिवक्रियाविषयत्वात्फलकर्तृविशिष्टक्रियाविषयप्रयोगविधौ वाक्यभेदानापत्तिसूचनार्थम्—**प्रयोगेत्युक्तम्**। ब्राह्मणादिवाक्यानां प्रयोगान्तराविधायित्वे राजसूयमध्यप्रयुक्ताया एवावेष्टेः संयोगपृथक्त्वात्फलद्वयोपपत्तेस्तस्याश्च विज्ञातक्षत्रियकर्तृकत्वाद् ब्राह्मणादिवाक्यवच्चान्नाद्यकामवाक्ये कर्त्रन्तराश्रयणेन प्रयोगान्तरानाक्षेपकत्वाद्योगसिद्ध्यधिकरणन्यायेन चैतस्मिन्प्रयोगे फलद्वयसिद्ध्ययोगात्प्रयोगान्तराक्षेपेऽपि क्षत्रियस्यैवान्नाद्यकामस्य प्रयोगान्तरोपपत्तेर्वर्णान्तरस्याप्राप्तत्वात् ब्राह्मणोदेर्गुणस्य विधेयत्वाद्भेदकत्वोपपत्तेः सन्देहं समाधत्ते—**नैतदिति**। नन्वन्नाद्यकामशब्देन वर्णान्तरस्याप्युपादानात्कथं न वर्णान्तरसम्बन्ध इत्याशङ्क्य दृष्टान्तद्वयेनोपपादयति **तद्यथेति**। अप्रवृत्तप्रवर्त्तकत्वाद्विधेरस्मिन्सति कुर्यादिति कादाचित्क्याः कर्त्तव्यताया विध्यर्थत्वात्कदाचित्केनैव निमित्तेनान्वयादधिकारिविशेषणस्य च तस्मिन्सत्यधिकारान्निमित्ते अन्तर्गते जातेश्च नित्यत्वेनाधिकारिविशेषणत्वायोगात्कथं राजशब्दात् भोक्तृत्वलक्षणाधिकारिविशेषावगतिरित्याशङ्क्य—**राजेत्युक्तम्**। जातेर्नित्यत्वेनापादनाशक्तेस्तद्वत एवाधिकारात्कर्तृविशेषणभूताया एवार्थादधिकारिविशेषणतापीत्याशयः। यथा राजसूयान्तर्गतेऽवेष्टिप्रयोगे भोक्तृत्वविशेषो भवति तथा बाह्येऽपीत्यत्यन्तसाम्यार्थं दृष्टान्तान्तरम्। अतोऽन्नाद्यकामवाक्येन ब्राह्मणादिप्राप्त्ययोगाद्राजशब्दस्यायौगिकत्वे राजसूयाधिकारेण जातिवाचित्वे वा ब्राह्मणो यजेतेत्यादिवाक्यैर्ब्राह्मणादिप्राप्तिरिति द्वावेव पक्षौ न त्वन्नाद्यकामवाक्यात्प्राप्तिः शङ्कनीयेत्युपसंहरति—**तस्मादिति**। किं तावदित्यादिपूर्वपक्षप्रतिज्ञाभाष्यं तत्सिद्ध्यर्थमित्येतदर्थेन ततःशब्देन निमित्तार्थसिद्ध्यर्थदर्णत्रयप्राप्तिसिद्ध्यर्थवर्णत्रयवृत्तित्वसिद्ध्यर्थता यौगिकत्वस्योक्ता इत्येवं व्याचष्टे—**किं तावदिति**। सहशब्देन राजशब्दस्यापि वर्णत्रयवृत्तित्वमुक्तं राज्येत्यनेन राज्यं यस्येति भाष्यावयवो यौगिकशब्दस्य कुलालनापितादिशब्दवदवयवव्युत्पत्त्यनपेक्षत्वेऽपि क्रियायोगनिमितत्वप्रदर्शनार्थत्वेन व्याख्यातः। भाष्ये वक्ष्यमाणयुक्तीः सुखग्रहणार्थं संक्षेप्तुमाह—**तथा हीति**। क्रियायोगनिमित्तत्वे क्रियाकर्तृत्वयोर्द्वयोरपि शक्तिकल्पनापत्तेर्जातिमात्रे शक्तिकल्पनायाः प्रयोगसम्भवे योगनिमित्तत्वायोगान्न ब्रूमो[1] न प्रयुज्यतइत्यादिभाष्येण प्राग्वक्ष्यमाणेऽपि जातियोगलक्षणनिमित्तद्वयसम्भवेऽपि प्रकरणवशाद्यदिशब्दसमभिव्याहाराच्च योगनिमित्ततैवोचितेति युक्तिश्चशब्देन राजसूयशास्त्रस्य त्रैवर्णिकाधिकारोक्त्यर्थत्वेन महाविषयत्वलाभः सूचित इत्येवमथ वेत्यादिभाष्यं वक्ष्यमाणयुक्तेः पश्चादभ्युच्चयमात्रत्वद्योतनार्थं व्याख्यातम्।

---

१. क्रमोऽन्तः प्रयुजात इ० २ पु० पा०।

उत्तरार्द्धं व्याचष्टे—**उभयेति**। तावच्छब्देनैषैव तावद्युक्तिरिति वदताभ्युच्चयत्वं सूचितम्। निमित्तेत्यनेन भाष्यं वक्ष्यमाणप्रकरणादियुक्तयन्तरसूचनार्थता एवं चेति चकारस्य व्याख्याता। बार्हस्पत्यादेर्मध्यनिधानपूर्वकाभिधारणस्य राजसूयप्रयोगवचनेन ग्रहणं प्रकृतावेष्टिप्रयोगप्रत्यभिज्ञानं चादिशब्देनोक्तम्। यौगिकत्वोक्तेः प्रयोजनमाह—**तस्मादिति**।

ननु राजशब्दस्य जातिवाचित्वाभावे राजयोगनिमित्तराज्यशब्दार्थानवधारणान्न राजशब्दस्य तत्कारणनिमित्तता युक्तेत्याशयेन किं पुनरिति भाष्येणाशङ्क्य, जनपदेत्यनेन परस्वहरणे चौर्यशब्दवत् जनपदस्य च सर्वतो रक्षणे चौरादीनां च जनपदपुरेभ्यो निष्कासने राजशब्दस्य रूढितोक्ता। तद्व्याचष्टे—**तच्चेति**। नामशब्देन रूढित्वं सूचितम्।

यद्वा राजशब्दस्य पालननिमित्तत्वेऽपि अध्वर्य्वादिशब्दवत् रूढित्वानपायात् पूर्वपक्षेऽपि राज्यशब्दस्य राजयोगनिमित्तत्वोपपत्तेः प्रत्यभिज्ञायमानावयवार्थबाधायोगात्पालनस्य राजकर्मवाचिराज्यनामकत्वात्पालनकारिवाचिता राजशब्दस्यावसीयत इति सूचनार्थो नामशब्दः।

भाष्यमपि राजशब्दस्य राज्यकरणनिमित्तत्वायोगेऽपि पालनकरणनिमित्तत्वाद्यौगिकतोपपन्नेत्येवमर्थत्वेन व्याख्येयम्। आर्यावर्त्तेति भाष्यादसार्वत्रिकत्वशङ्कां निवर्त्तयितुम्—**सर्वेत्युक्तम्**। जनपदपुरोपद्रवे कार्योद्धरणं विना तद्रक्षणासिद्धेस्तदुद्धरणस्य रक्षणोक्त्यैव सिद्धत्वाद्रक्षणप्रतिबन्धकारिविषयतोद्धरणस्य राज्येत्यनेनोक्ता। सर्वलोकप्रसिद्धावार्यावर्त्तविशेषणानर्थक्यमाशङ्क्यासार्वत्रिकत्वेऽप्यप्रसिद्धितोऽस्याः प्रसिद्धेर्बलीयस्त्वप्रदर्शनार्थतार्यावर्त्तेत्यनेनोक्ता। पालने राज्यशब्दप्रयोगमात्रेण राजशब्दस्य तत्करणनिमित्तत्वावगतिः कथमित्यपेक्षायां, राज्ञः कर्मेति भाष्येण राजप्रातिपदिकात्कर्मणि प्रत्ययस्मृतिहेतुत्वेन उदमेघप्रातिपदिकाच्चापत्ये प्रत्ययस्मृतिर्दृष्टान्तत्वेनोक्ता। तत्सर्वं विपरीतसाधकत्वेनाक्षिपति—**राज्ञ इति**।

पालनकारिणि राजशब्दस्य रूढ्या प्रवृत्तत्वात् राज्यशब्दानुगमानपेक्षत्वेऽपि विदितराज्यशब्दार्थानां तद्वशेनापि राजशब्दार्थव्युत्पत्तिः सम्भवतीति जातिनिमित्तत्वानिरासायोक्तेति परिहरति—**उच्यतइति**। पालनकरणनिमित्तापेक्षत्वेऽप्यवयवयोगानपेक्षत्वात्स्वान्त्योक्तिः। यद्यप्यवयवयोगमनपेक्ष्य साधुपालनासाधुनिग्रहकारी राजशब्दवाच्यत्वेन मनुपाणिन्यादिभिरवधारितः तद्योगाच्च प्रतिज्ञातसाधुपालनासाधुनिग्रहव्यापारेण तदवश्यं कार्यम्। तस्य च कर्म राज्यशब्दवाच्यमित्यवधारितम्। तथाप्यस्माकं जातिवाची, पालनकारिवाची वा राजशब्द इति सन्देहे राजकर्मवाचित्वेन स्मृतस्य राज्यशब्दस्य पालने प्रयोगात्पालनकारिवाचित्वनिर्णयसिद्धेर्युक्तोऽस्माकं राजशब्दावधारणाधीनराज्यशब्दार्थावधारणाद्विपर्ययो राज्यशब्दार्थावधारणाधीनराजशब्दार्थावधारणात्मक इत्यर्थः।

दृष्टान्तपूर्वं श्लोकं व्याचष्टे—**यथैवेति**। जनपदरक्षणम्। आदिशब्दोक्तं च दुष्टनिग्रहणं मया कार्यमित्यङ्गीकरणाद्यो लब्धराजव्यपदेशस्तेतावश्यं तत्कर्त्तव्यमिति

मन्वादिभिः तस्य कर्म राज्यमिति पाणिनिप्रभृतिभिः स्मृतमिति विवेकः। छेदनादिसंस्कारैर्बन्धनार्हीकृतं द्रव्यमालम्ब्य यथा यूपो निरूप्यते, तथा राज्यशब्दवाच्यप्रजापालनकरणाङ्गीकरणात् तदधिकृतं द्रव्यमालम्ब्य राजेत्यर्थः। नन्वेवमपि क्षत्रियस्य प्रजापालनं परमो धर्म इति। क्षत्रियस्यैव पालनस्मृतेस्तस्यैव राजशब्दवाच्यत्वाद्राज सूयेऽधिकारः स्यादित्याशङ्क्याह—**तच्चेति**। शूद्रस्यापि तर्ह्यधिकारः स्यादित्याशङ्क्याह—**तत्रत्विति**। एतदेवाशङ्कापूर्वमुपपादयति—**ननु चेति**। यूपादिवद्राजत्वस्यालौकिकत्वे सति विहितोपायोपेक्षा स्यात्, तस्य तु प्रजापालनकारित्वरूपस्य प्रत्यक्षत्वात्, तावन्मात्रस्य च क्रतुनापेक्षितत्वाद्विप्रादेरविहितराज्यकरणप्रत्यवायेऽपि अधिकाराविघात इत्याशयः। राज्यरहितेऽपि क्षत्रिये राजशब्दप्रयोगात्तद्विरुद्धं राज्ययोगनिमित्तत्वानुमानम्।

अयुक्तमित्याशङ्कार्थं नन्वितिभाष्यं व्याचष्टे—**नन्विति**। अधार्मिके राजनि साधुरक्षणासाधुनिग्रहाभावेऽप्यैश्वर्यमात्रे राजशब्दप्रयोगाद्रक्षणेन चैश्वर्यमुपलक्ष्यतां, तन्निमित्तकरादानवृत्त्युपजीवनेन वेत्यनियमसूचनार्थम्—**वृत्तिमित्युक्तम्**। ननु रक्षणवृत्त्युपजीविन्यक्षत्रियेऽपि प्रयोगाद्यौगिकावगतेः प्रकर्षसेचनमकुर्वतीष्वप्सु प्रोक्षणीशब्दवद्योग्यत्वमात्रेणानीश्वरे क्षत्रिये प्रयोगसम्भवाज्जातिवाचित्वकल्पना न युक्तेत्याशङ्क्याह—**उक्तं हीति**। प्रकर्षसेचनयोग्यत्वकारणस्य द्रवत्वस्याप्सु स्वाभाविकस्य भावादुदासीनास्वपि प्रोक्षणीशब्दो युक्तः। जनपदपुरैश्वर्ययोग्यतायां तु हेतुभूताया हस्त्यश्वादिसम्पत्तेर्वीर्यातिशयस्य च क्षत्रियेऽपि क्वचिदभावादितरेष्वपि च केषु चिद्भावात् विहितत्वनिमित्तायां तु क्षत्रियस्यैव योग्यतायां यौगिकत्वपक्षेऽप्यश्वप्रतिग्रहेष्टिनिमित्ताश्वदानवदनिषिद्धसम्भवे निषिद्धाधिकारविशेषणायोगाद्विहितस्यैव राज्ये योग्यस्याधिकारविशेषणत्वापत्तेर्ब्राह्मणादिषु प्राप्त्ययोगाद्योग्यत्वनिमित्त राजशब्दप्रयोगानुपपत्तेर्जातिनिमित्तस्यावश्याभ्युपगमनीयत्वात्।

'एकदेशेऽपि यः शब्दो दृष्टो जातिनिबन्धकः।
तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना॥'

इति बर्हिराज्याधिकरणवार्त्तिकोक्तन्यायेन राज्यरहिते क्षत्रिये जातिनिमित्तत्वेनाभ्युपगतस्य राजशब्दस्य राज्ययोगिन्यपि क्षत्रिये जात्यत्यागादक्षत्रियेऽपि च क्षत्रियकार्यापत्त्या प्रयोगोपपत्तेरजहत्स्वार्थवृत्तित्वेन जात्यत्यागसम्भवान्नानेकशक्त्यापादकं निमित्तान्तरं कल्पनीयमित्याशयः।

क्षत्रियस्य प्रजापालनं कार्यमित्यजानानामपि शूद्रादीनां ब्राह्मणादिषु राजशब्दप्रयोगात्कार्यापत्तिहेतुत्वानुपपत्तेरश्वकर्णादिवत् क्व चिज्जातिवाचित्वं, क्व चिद्यौगिकतेति अवश्याभ्युपगमनीयत्वाद्राजसूयवाक्यस्थस्य द्विधापि सम्भवात्सन्देहे सति प्रकरणादिभ्यो यौगिकत्वं निश्चीयतइति परिहारार्थं न ब्रूम इत्यादिभाष्यं व्याचष्टे—**परः पुनरिति**। यदिशब्द समभिहाराच्चेत्यनेन यौगिकत्वस्य युक्तत्वं दर्शयतीति वदता राजशब्दस्य यौगिकत्वनिश्चयाद्राजसूयान्तर्गतस्योवेष्टिप्रयोगस्य ब्राह्मणादौ निमित्ते बार्हस्यत्यादिमध्येनिधानपूर्वकाभिघारणलक्षणविधानमित्यध्याहारेण भाष्यव्याख्या सूचिता।

राजशब्दस्य यौगिकत्वे ब्राह्मणादेर्गुणस्य प्राप्तत्वेनाविधेयत्वादभेदकत्वोक्त्यर्थं 'न ब्राह्मणस्येति भाष्यं ब्राह्मणादेः कर्तृसंख्यावाच्याख्यातसामानाधिकरण्यात्कर्तृत्वावगतेः कर्त्तुश्च कर्मस्वरूपानङ्गत्वेन तद्भेदवत्त्वायोगाद्युक्तमाशङ्क्य द्वेधा व्याचष्टे—**न कर्मान्तरमिति**। व्यवहितान्वयहेतुहेतुमल्लिङ्पक्षयोराख्यातद्वयैकवाक्यत्वावगमादेकेन च वाक्येन ब्राह्मणाभिघारणलक्षणानेकगुणविध्यशक्तेरभिघारणस्य च हविःसंस्कारार्थत्वेन कर्मस्वरूपाङ्गत्वात्, कर्त्तुरपि च ब्राह्मणादेः प्रयोगद्वारा कर्माङ्गत्वोपपत्तेर्विधेयत्वेऽनेकगुणोपादानाएकर्मान्तरापत्तेरविधाने तदनापत्त्युक्तिर्युक्तेति द्वितीयव्याख्याशयः।

हेतौ हेतुमति च लिङिति प्रकारद्वयमभिप्रेत्य बहुवचने यौगिकत्वमात्राभ्युपगमेऽपि क्षत्रियस्य प्रायेण वीर्यातिशयात्प्रजापालनविधानाच्चापालयत्यपि क्षत्रियजातीयत्वेन योग्यत्वाद्राजशब्दप्रयोगबाधाद्यौगिकतैव युक्तेति परिहारान्तरार्थ'मथ वेत्या'दिभाष्यमनेकशक्तिकल्पनापत्तेः पूर्वापरितोषणेत्येवं व्याचष्टे—**एवं तावदिति**। अप्रमाणमेव प्रमाणीकृत्येति च्विप्रत्ययार्थेनापरितोषः सूचितः। अपि चेति भाष्यं यौगिकप्रयोगस्य सार्वलौकिकत्वेन विप्रणीतत्वात्पुनरुक्तमाशङ्क्य प्रामाण्यरूपविशेषसिद्धये प्राक् सार्वलौकिकासार्वलौकिकतोक्ता। इदानीं प्रामाण्यविशेषमभ्युपेत्य विश्वसनीयाविश्वसनीयरूपविशेषसिद्धयै सैवोच्यतइत्येवं तावत्परिहरति—**अपि चेति**। प्रत्ययो विश्वासोऽस्य सञ्जात इति, तदस्य सञ्जातं तारकादिभ्य इतजि (पा-५-२-३६)ति सञ्जातार्थस्मृतेरि तच् प्रत्ययान्तेर्न प्रत्ययितशब्देन विश्वसनीयत्वोक्तेः तृतीयया च निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति कारयितृरूपप्रयोजनवाचिकारणशब्दोपपदकल्पनया प्रयोजनत्वोक्तेर्विश्वसनीयाविश्वसनीयत्वप्रयोजनतोक्ता। शब्दभेदात्पुनरुपन्यस्तत्वोक्त्यनुपपत्तिमाशङ्क्याह—**न हीति**।

यद्वा यौगिकप्रसिद्धिर्म्लेच्छदेशेऽप्यस्ति। जातिप्रसिद्धिस्तु नार्यदेशेऽस्तीति **प्रागुक्तम्**। इदानीं तु म्लेच्छा न यौगिकप्रयोगाप्रामाण्ये विप्रतिपद्यन्ते। आर्यास्तु तस्माद्वत्परातिजानन्तु पितरंराजानमिति क्षत्रिये वत्परातावपि राजशब्दप्रयोगदर्शनाज्जातिप्रयोगप्रामाण्ये विप्रतिपद्यन्ते इति, अन्यथा पौनरुक्त्यं परिहरति—**यद्वेति**। 'तथेति भाष्यं व्याचष्टे—**तथेति**।

ननु यौगिकत्वेऽपि क्षत्रियस्य विहितराज्ययोगनिमित्तसम्भवे स्वाच्छन्द्यानुष्ठित (राज्ययोगनिमित्तत्वायोगात् ब्राह्मणाद्यप्राप्तिरित्याशङ्क्य हेतुब्राह्मणादौ राजशब्दप्रयोगस्य क्षत्रियस्य[1]) राज्ययोगनिमित्तत्वानुपपत्तेर्नोत्तिष्ठतीति सूचनार्थम्। तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। अपि च निःसन्दिग्धं जगत्सामा कर्मान्तरमिति पूर्वाधिकरणपूर्वपक्षभाष्यसूचितं युक्त्यन्तरमाह—**अपि चेति**। कर्मभेदसूचनायावेष्टिशब्देन ब्राह्मणादिवाक्यमुदाहरणत्वेनोक्त्वा ब्राह्मणादिगुणरूपं क्रतुशब्दवाच्यप्रयोगार्थमुच्चार्येत क्षत्रियस्यैवैकस्य राजसूययज्ञसंयोगादिति पूर्वाधिकरणपूर्वपक्षसूत्रस्थगुणशब्दसिद्धान्तसूत्रस्यैकशब्दयोरनुषङ्गेण

---

१. अयं पा० ३ पु० ना०।

सूत्रव्याख्याभाष्यं व्याचष्टे—**एवमिति**। यौगिकत्वाभ्युपगमे कनिन्युविषवृषितक्षिराजिधन्विद्युप्रतिदिव । इति दीप्त्यर्थाद्राजेर्धातोरौणादिके कनिन्प्रत्यये कृते ककारेकारनकारलोपान्नकारान्तशब्दव्युत्पत्तेर्द्धात्वर्थानुसाराद्वरं दीप्तियोगनिमित्तताभ्युपगन्तुं युक्ता । राज्ययोगनिमित्तता तु अवयवार्थानुसाराभावादपूर्वशक्तिकल्पने च सम्बन्धिनावनुक्ता सम्बन्धोक्तयशक्तेर्विशिष्टोक्तावपि विशेषणविशेष्योक्त्यापत्तेरनेकशक्तिकल्पनापत्तिपरिहारार्थं जातावेव शक्तिकल्पनस्य न्याय्यत्वादनाशङ्क्येति सूचयितुं यौगिकत्वं विकल्प्य निरस्यति—**क्षत्रियेति**। स्वातन्त्र्येण पालयितृत्वस्य राजशब्दप्रवृत्तिहेतुत्वे कण्डलेश्वरे राजशब्दो न युज्येतेत्याशङ्कापूर्वमाह—**ननु चेति** । क्षत्रियजातिरहितेऽपि ब्राह्मणादावभिषिक्ते राजशब्दप्रयोगात् बर्हिराज्यादिन्यायात्तुल्यत्वेनाभिषेकाख्यसंस्कारनिमित्तत्वमाशङ्क्ते—**तेन तर्हीति**। राजानमभिषेचतेदिति राजशब्देन राजशब्दवाच्यतया प्रसिद्धस्य क्षत्रियस्यैवाभिषेकविधानाद्विधिवेलायामेव राजशब्दसंयोगाद्राजशब्दार्थस्योद्देश्यत्वेन प्राक् प्रसिद्ध्यपेक्षत्वात् म्लेच्छप्रसिद्धेरप्यादरणीयतया जातिवाचित्वावगतेरभिषेकनिमित्तत्वं न सम्भवतीति परिहरति—**नैवमिति** । राजशब्देनाभिषेकः क्षत्रियस्यैव विधीयते सहैव राजशब्देन । ननु ब्रह्मचर्यादिशब्दात्प्रागेवोपनयनादराजशब्दात्प्राग्येन ब्रह्मचारिशब्दप्रवृत्तौ उपनयनवत् राजशब्दप्रवृत्तावभिषेको निमित्तं स्यादिति कृत्वा सौराजशब्दो नाक्षत्रिये धर्मशास्त्रकाराणामभिमत इत्यर्थः । सत्यप्यभिषेकनिमित्तत्वे वृत्ते तस्मिन्राजशब्दप्रवृत्तेः स्वरूपेण निमित्तत्वायोगात्संस्कारद्वारा निमित्तत्वास्याभ्युपगन्तव्यत्वात्तस्य च विहितक्रियाजन्यत्वादक्षत्रियस्थस्याभिषेकस्य निमित्तत्वाभावोऽपिशब्देन सूचितः ।

श्लोकं व्याचष्टे—**तत इति** । येनैव कारणेन विधिवेलायामेव राजशब्देनाभिषेकः संयुज्यते, तेनैव कारणेनाभिषेकात्प्राक् प्रयोगेण समुदायव्यभिचारादृतुयजनवरणसमुदायनिमित्तर्त्विक्शब्दवत् जात्यभिषेकसमुदायनिमित्तताप्ययुक्तेति तेनैव चेत्यनेन प्रसङ्गादुक्त्वा, यदि हीत्यादिना प्रत्येकव्यभिचाराभावादपि न समुदायवाचितेति व्यतिरेकमुखेन वक्तुं न तु केवलायां जातावित्येवकारार्थेन जातिव्यभिचारं निरस्य अभिषेकव्यभिचारनिरासार्थम्—**जात्यन्तरे वेत्युक्तम्** । जात्यन्तरे यद्यभिषेको विधीयते, राजशब्दश्च न प्रयुज्येतेत्यध्याहारेण योज्यम् । यूपादिवैषम्येन चेत्यनेनोक्ते यथा वेदशब्दस्य ऋग्वेदादौ मन्त्रब्राह्मणसमूहो निमित्तं वेदेन वेदिं समार्ष्टीत्यादौ च क्रतुत्वाद्याकारदर्भमुष्टिबन्धनसंस्कारः तथा राजशब्दस्य क्वचिज्जातिः, क्व चित्संस्कारो निमित्तं भविष्यतीति आशङ्क्य—**चैकस्मिन्नित्युक्तम्**। अभिषेकनिमित्तत्वे अपि चेत्यादिनापिशब्दसूचितोऽर्थोव्याख्यातः । शब्दार्थसम्बन्धनित्यत्वसिद्ध्यर्थं च नित्यस्यैव शब्दप्रवृत्तिनिमित्तस्यापेक्षणादभिषेकस्य च वस्तुतो नित्यत्वाभावेन विधिविहितत्वरूपेणैव नित्यत्वस्याभ्युपगन्तव्यत्वादक्षत्रियस्याविहितत्वरूपेणैव नित्यत्वस्याभ्युपगन्तव्यत्वादक्षत्रियस्याविहितत्वान्निमित्तत्वं न सम्भवतीत्याह—**अपि चेति** । श्लोकं व्याचष्टे—**नित्यस्य हीति** । एवं चाभिषेकस्यापि निमित्तत्वे विहितस्यैव निमित्तत्वात् क्षत्रियजातावेव च विहितत्वाज्जात्यव्यभिचारोपपत्तेर्जातिस्थत्वोपलक्षितस्याभिषेकस्यैव

निमित्तोपलक्षणमापद्यतइत्युक्ते, अस्तु तर्हि क्षत्रियस्थत्वोपलक्षितस्याभिषेकस्यैव निमित्ततेत्याशङ्क्य—**ततश्चेत्युक्तम्**। साक्षान्निमित्तत्वसम्भवे निमित्तत्वोपलक्षणत्वस्यान्याय्यत्वादित्याशयः।

राज्ययोगनिमित्तत्वे अप्येतं न्यायमतिदिशति—**एतेनेति**। नन्वभिषेकस्यादृष्टार्थत्वेन विधिविषयत्वात्तेन रूपेण नित्यस्य क्षत्रियस्थस्य निमित्तत्वसम्भवे वर्णान्तरेण स्वच्छन्दकृतस्यानित्यस्य निमित्तत्वायोगान्नित्यस्य च जात्यव्यभिचाराज्जातेर्निमित्तत्वे सम्भवत्यन्यनिमित्तत्वं न युक्तम्। राज्ये त्वैश्वर्यात्मके लिप्सयैव प्रवृत्तेर्विधिविषयत्वाभावान्नित्यत्वानुपपत्तेरदित्यस्यैवागत्या चोरशब्दप्रवृत्तौ स्तेयस्येव राजशब्दप्रवृत्तौ राज्यस्य निमित्तत्वं भविष्यतीत्याशङ्क्याह—**तदपीति**। ऐश्वर्ये लिप्सातः प्रवृत्तिसम्भवे अपि पालने विधिं विना प्रवृत्त्ययोगात्।

'चाटतस्करदुर्वृत्तमहासाहसिकादिभिः।
पीड्यमानाः प्रजा रक्षेत् कायस्थैश्च विशेषतः॥

इत्यादिविधिदर्शनाद्राज्यस्यापि विधिविषयतास्तीत्याशयः। विधानाधीनत्वलक्षणार्थः प्रभृतिशब्दः। अन्वयव्यतिरेकाभ्यामपि जातिवाचितैवावसीयतइत्याह—**दृष्टश्चेति**। अभिषिक्तेऽन्यजातीयेऽपि प्रयोगमित्यान्ध्रद्रविडादिभिरभ्युपगतत्वेनोक्तत्वादयुक्ता विषयानभिधानोक्तिः। एतदेवोपसंहरति—**तस्मादिति**।

जातिवाचिनश्च राजन्यशब्दस्य राज्ञो अपत्यमिति राजशब्दप्रकृतिकत्वान्यथानुपपत्त्या राजशब्दस्य जातिवाचिताऽवसीयतइत्याह—**तथा चेति**। अन्यथानुपपत्तिं प्रश्नपूर्वमुपपादयति—**कुत इति**। सर्वएव वर्णाश्चेद्राजानस्ततो अपत्यापत्यवद्योगे राजन्यशब्दो अन्वाख्यायते, क्षत्रियएव नियतइतीदृशं वैषम्यं कथं परिह्रियेतेत्यध्याहारेण योज्यम्।

ननु राजशब्दस्य जातिवाचित्वं क्षत्रियापत्यत्वं विना क्षत्रियजातीयत्वायोगाद्राजप्रातिपदिकमात्रेण क्षत्रियापत्यत्वसिद्धेरपत्यवाची यत्प्रत्ययो अनर्थकः स्यात्। यौगिकत्वे तु क्षत्रियोऽयं राज्यकारिणो अपत्यमित्यस्यार्थस्य प्रातिपदिकमात्रेणासिद्धेरर्थवानिति राजशब्दप्रकृतित्वान्वाख्यानस्य विपरीतसाधनत्वमाशङ्कते—**नन्विति**। प्रकृतौ पितर्यपत्ये चैकजातीयत्वेन जातिशब्दस्य तुल्यत्वाद्राजापत्यमिति राजशब्देनाभिधीयताम्। न राजन्यशब्देनेत्यर्थः। दृष्टान्तपूर्वं श्लोकं व्याचष्टे—**यथैवेति**। अन्वाख्यानप्रकारमात्रमिदम् ननु राजन्यप्रातिपदिके परमार्थतः प्रकृतिप्रत्ययविभागो अपत्यवाचितावास्तीति परिहरति—**नैष इति**।

ननु परमार्थतो राजशब्दस्य राजन्यशब्दप्रकृतित्वाभावे कथं जातिवाचित्वकल्पनेत्याशङ्क्याह—**स त्विति**। क्षत्रस्यापत्यं क्षत्रिय इति जातिवाचिक्षत्रियशब्दस्य जातिवाचित्वकल्पना युक्तेत्याशयः। ननु राजश्वसुराद्यदिति राजन्यशब्दान्वाख्यानसूत्रे कात्यायनेन राज्यकार्यपत्यमात्रे प्रसक्तस्य राजन्यशब्दस्य परिसंख्यानेन जातिविषयत्वनियमोक्तेः, क्षत्रियगतराजापत्यत्ववाचित्वावसायाज्जातिवाचित्वाभावेऽपि पङ्कजादिशब्दवज्जातौ रूढि-

आदिशब्दोक्तायाश्च परिसंख्याया यावल्लिङ्गानुमिताः श्रुतयः प्रतिमन्त्रं कल्पयितुमारभ्यन्त-इत्यादिमन्त्राधिकरणवार्त्तिके शुद्धविधिवदप्राप्तविधित्वोक्तेर्न पक्षेऽपि प्राप्तिः सम्भवतीत्यर्थः। स्वरूपतो व्याचष्टे—**सति चेति**।

नन्वाधानस्याग्निहोत्राद्यङ्गत्वे सत्याङ्गानां प्रधानविधिप्रयुक्तत्वात्प्रयाजादिवत्प्रत्यक्षविधि-सद्भावेऽपि कामश्रुतिप्रयुक्तत्वापत्तेः, अनङ्गत्वे वा प्रत्यक्षनिध्यभावेनऽपि कामश्रुतिभिः प्रयुक्त्यशक्तेः सतीष्विति विशेषणानर्थक्यमित्याशङ्क्याऽनङ्गत्वेऽप्यन्यथानुपपत्त्याधानविधि-कल्पनद्वारा प्रयुक्त्युपपत्त्याशयेन परिहारार्थमसतीष्विति भाष्यं व्याचष्टे—**यदि त्विति**। ननु सतीष्वपि ब्राह्मणादिश्रुतिषु शूद्रस्याप्राप्तेः कामश्रुतिभिः प्राप्तिर्युक्तेत्याशङ्कानिरासार्थं सतीति भाष्यं व्याचष्टे—**सतीषु त्विति**।

अत्राहेति द्वितीयपूर्वपक्षभाष्ययाशयपूर्वं व्याचष्टे—**पूर्वोक्तेति**। तन्निरासार्थमुच्यतइति भाष्यं व्याचष्टे—**तत्रेति**। विधेयस्य स्तावकत्वेन शेषभूतेत्यर्थः। नेतीत्याशङ्काभाष्यमेवं-शब्देन सम्भारपरामर्शात्सम्भारविध्येकवाक्यत्वप्रतीतेरयुक्तमाशङ्क्य भिन्नवाक्यत्वेऽपि प्रक-रणप्राप्तसम्भारपरामर्शोपपत्तेर्न तावन्मात्रेणैकवाक्यतावगतिरित्येवमुपपादयन् व्याचष्टे—**परः पुनरिति**। उच्यतइति परिहारभाष्यं व्याचष्टे—**भवेदिति**। गुणार्थमेवेति स्तुतिवाचिना गुणशब्देनापमुपसर्जनं तु विधीयतइति भाष्यस्थो विदधाति स्तुतिलक्षणार्थतया व्याख्यातः। नन्वित्याशङ्काभाष्यं विद्वद्वाक्यस्याधानविधित्वे ब्राह्मणादिश्रुतेश्च वसन्तादिलक्षणगुणार्थत्वे हेत्वनुपन्यासादयुक्तमाशङ्क्य निर्णयहेतुप्रश्नार्थत्वेन व्याचष्टे—**कुतो न्विति**। निर्णयहेतूक्त्यर्थं नेत्याद्याहेत्यन्तं भाष्यं व्याचष्टे—**तदिति**। प्रत्यक्षकल्पनीयत्वलक्षणो विशेषो निर्णयहेतु-रित्याशयः। तस्मात्प्रशस्ततामितिभाष्यं तात्पर्यतो व्याचष्टे—**नैतदिति**। भाष्यं व्याचष्टे—**न चेति**। यदि त्वित्याद्युपरुध्येतेत्यन्तं भाष्यं व्याचष्टे—**यदि त्विति**।

नन्वित्याद्यवकल्प्यतएवेत्यन्तं भाष्यं व्याचष्टे—**लिङ्गा त्विति**। लिङ्गा विहितस्या-धानस्य सम्बन्धि यत्सम्भरणम्, तस्य यो विधि'रथ सम्भारान् सम्भरती'त्यादिसामान्यरूपो, विशेषरूपश्च। तत्प्ररोचनार्थं स्तुतिसहितस्याधानस्य पुनः श्रवणमित्यर्थः। अपि चेति भाष्यं व्याचष्टे—**लिङ्गा चेति**। नन्वित्याशङ्काभाष्यं व्याचष्टे—**नन्विति**। उच्यतइति परिहार-भाष्यं व्याचष्टे—**सिद्धान्तेति**। पदान्तरसम्बन्धात्मकेन वाक्येन ब्राह्मणादिविधानेऽप्याधानस्य श्रुत्या विधानाद् बलीयस्त्वोपपादनार्थं परेति भाष्यं व्याचष्टे—**स्वपदेति**। द्विषच्छब्दः सपत्नशब्दव्याख्यार्थः, शाखान्तरीयपाठप्रदर्शनार्थो वा।

नन्विति भाष्येण विशिष्टविधिगौरवाद्दौर्बल्यमाशङ्कितम्, नैष इत्यनेन विशिष्टविध्यन्यथा-नुपपत्तिकल्पविध्यन्तरैर्विशेषणविधिसिद्धेः श्रौतविधिव्यापारनानात्वाभावात्परिहृत्य द्वितीय-पूर्वपक्षनिरासे तस्मादित्यनेनोपसंहृते, अपि चेति पूर्वपक्षभाष्योक्तं वाक्यभेदं गौरवाशयेन परिहृतमपि ब्राह्मणादिजातेरनुपादेयतया निमित्तत्वेनेष्टत्वात्, कालनिमित्तयोर्द्वयोरुद्देश्यत्वा-पत्तेः प्रत्युद्देश्यवाक्यसमाप्तिलक्षणवाक्यभेदाशयेन, यस्त्वित्यनेनानुभाष्यं यदीत्यनेन चानुपादे-

यत्वाज्जातेर्ब्राह्मणादिश्चेदादधीतेवेत्यर्थान्निमित्तत्वावगमेऽप्यप्रवृत्तप्रवर्त्तनात्मकत्वेनेदानीं कुर्वीतेत्यस्य विध्यर्थस्य कादाचित्कत्वात्कादाचित्केनैव निमित्तेनान्वयावगतेर्नित्यत्वेन जातेर्निमित्तत्वायोगात्कर्तृसंख्यासामानाधिकरण्यात्कर्तृतयैवान्वयावगतेः कर्त्तुश्चानुद्देश्यत्वात् प्रत्युद्देश्यं वाक्यसमाप्तिर्न प्रत्युद्देश्यवाक्यपरिसमाप्तिलक्षणवाक्यभेदापत्तिरित्याशयेन परिहृत्याधिकरणार्थोपसंहारार्थम्—**तस्मादित्युक्तम्** । तत्सर्वं सङ्क्षिप्य व्याचष्टे—**कर्त्रिति** । ब्राह्मणादिजातिनिमित्ततया कर्तृत्वापादनार्थत्वेनाप्राधान्यद्योतनार्थं कर्तृशब्द विशिष्टशब्दो नैकार्थत्वनिरासार्थः । निमित्तभावेऽनुष्ठितस्यापि कर्मणो नैष्फल्यापत्तेस्तस्यापि क्रियोपकारित्वात् भाष्ये गुणत्वोक्त्यर्थविरोधः । निमित्तस्याविधेयत्वेऽप्यवच्छेदकत्वात्फलसंस्कारवद्विधेयविशेषणत्वाविरोधः ।।४।।

इति तृतीयमाधानाधिकरणम् ।

भा० प्र०—वेद में कहा गया हैं कि "वसन्ते ब्राह्मणोग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" (तै० ब्रा० १।१।२) ब्राह्मण वसन्त में अग्न्याध्यान करे, क्षत्रिय ग्रीष्म में एवं वैश्य शरत्काल में । इस स्थल में ब्राह्मण के लिए वसन्त काल को आधान के निमित्त के रूप में अनुवाद या उल्लेख किया गया है या ब्राह्मणादि वर्ण जिसका कर्ता है, उसके लिए आधान-विधान किया गया है—यह संशय है ।

इस संशय में पूर्वपक्षी का कहना है कि पूर्व अधिकरण में ब्राह्मण आदि की प्राप्ति नहीं थी, अब ब्राह्मण आदि वर्णों को निमित्त नहीं कहा जा सकता है । किन्तु इस स्थल में ब्राह्मण आदि अग्न्याधान प्राप्त होने से ब्राह्मण आदि को आधान-सम्बन्धी वसन्त आदि काल को निमित्त मानना होगा यदि यह कहा जाय कि ब्राह्मण आदि वर्णों का आधान कैसे प्राप्त होता है ? इसके समाधान में कहना है कि कामश्रुति के सामर्थ्य अर्थापत्ति के बल से ब्राह्मण आदि का आधान प्राप्त होता है । क्योंकि "अग्निहोत्रं जुहुयात् स्वर्गकामः" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यादि श्रुतियों में जो स्वर्ग आदि का उल्लेख हुआ है उसके लिए अग्निहोत्र, दर्शपूर्णमास आदि कर्म विहित होते हैं और अग्न्याधान के विना वे कर्म उपपन्न नहीं हो सकते हैं, कारण, आहुति का आधार अग्नि यदि न रहे तो अग्नि साध्य क्रिया निष्पन्न नहीं हो सकती हैं, अतः, अर्थापत्ति प्रमाण के द्वारा उन कर्मों में अग्न्याधान की प्राप्ति होती है । इसी प्रकार वेदाध्ययन के विना कोई भी कर्म कैसे किया जा सकता है, इससे भी अवगत होता है कि विद्या के विना भी वे कर्म उपपन्न नहीं हो सकते हैं, वेदाध्ययन भी कामश्रुति के सामर्थ्य से अर्थापत्ति प्रमाण के द्वारा लब्ध होने से वसन्त काल में ब्राह्मण का उपनयन करे, ग्रीष्मकाल में क्षत्रिय का एवं शरत्काल में वैश्य का इस वेदवचन में भी ब्राह्मण आदि के उपनयन सम्बन्धी वसन्त आदि कालों का उल्लेख किया गया है । इसीलिए "वसन्ते ब्राह्मणो अग्नीनादधीत" इत्यादि वाक्यों में ब्राह्मण आदि का निमित्तरूप में ही अनुवाद किया गया है ।

इसके समाधान में सिद्धान्ती का कहना है कि इस स्थल में ब्राह्मण आदि वर्ण वसन्त आदि कालों का निमित्त नहीं है, किन्तु उक्त वेदवाक्य ब्राह्मण आदि वर्ण जिसका कर्ता है ऐसा वसन्त आदि काल से विशिष्ट आधान एवम् उपनयन विहित होता है, कारण, कामश्रुति से शास्त्रीय अग्न्याधान एवं वेदाध्ययन प्राप्त नहीं है क्योंकि, आधान किसी क्रिया का शेष अर्थात् अङ्ग नहीं है, अपितु अग्नि ही सभी कर्मों का अङ्ग है। लौकिक अग्नि में होम करने पर भी क्रिया का समाधान किया जा सकता है एवं स्वयं पुस्तक पढकर भी कर्म के उपयोगी शास्त्र-ज्ञान का लाभ किया जा सकता है, इस प्रकार अन्यथा उपपत्ति होने से यहाँ अर्थापत्ति प्रमाण नहीं हो सकता है।

यदि यह कहा जाय कि आधान जब तीन यज्ञीय अग्नि का साधन है तब आधान के विना किस प्रकार अग्नि की प्राप्ति कर सकते हैं ? ऐसी स्थिति में कहा जा सकता है कि कोई एक व्यक्ति अग्नि का आधानकर अन्य व्यक्तियों को यदि देता है तो उसकी आधान-सिद्ध अग्नि का ही लाभ हो जाता हैं। किन्तु वे यदि उस अग्नि में क्रिया करते हैं तो क्या वे सफल होंगे ? यदि आधान को अर्थापत्ति प्रमाण के बल से प्राप्त करते हैं तो अन्य के द्वारा आहित अग्नि में कर्म करने पर भी वे सफल नहीं हो सकते हैं, ''अग्नीन् आदधीत'' इस वाक्य के 'आदधीत' इस पद में आत्मनेपद में रहने से यह अवगत होता है कि प्रत्येक यागकर्ता यदि स्वतन्त्र रूप में स्वयं आधान करता है तभी वह अग्नि उस कर्म के लिए उपयोगी होगी। कारण, ''स्वरितमितः कर्त्रभिप्राये क्रियाफले'' (पा० सू० १।३।७२) इस पाणिनि के सूत्र के अनुसार 'मित्' धाञ् धातु से आत्मनेपद होने से यही अवगत होता हैं कि आधान का फल प्राप्त करने के लिए अर्थात् अग्नि को अपने कर्म के उपयोगी करने के लिए उसका स्वयं ही आधान करना आवश्यक है, दूसरे को द्वारा लाई गई अग्नि में आधान नहीं किया जा सकता है। फलतः जो आधान करेगा वही अनुष्ठान करने वाले व्यक्ति का फल प्राप्त करेगा अन्य नहीं। अतः कामश्रुति से आधान की प्राप्ति नहीं हो सकती हैं इस प्रकार कर्म के उपयोगी वेद के अध्ययन में प्राप्ति नहीं हो सकतो हैं, ऐसा मानने पर ब्राह्मण, क्षत्रिय और वैश्य के समान शूद्र के लिए वेदाध्ययन की प्राप्ति हो सकती है। इसीलिए, उनके उपनयन का प्रसङ्ग भी हो सकता है। किन्तु ''वसन्ते ब्राह्मणमुपनयीत'' इत्यादि वचनों के अनुसार ब्राह्मण, क्षत्रिय एवं वैश्य का ही उपनयनकाल उपदिष्ट है, शूद्र का उपनयन उपदिष्ट नहीं है, इसीलिए स्वयं पुस्तक को अध्ययन कर कर्म की उपयोगी वेदविद्या का लाभ कर सकता है और शूद्र की भी वेदाध्ययन में प्रसक्ति हो सकती हैं उसकी निवृत्ति के लिए ''ब्राह्मणमुपनयीत'' इत्यादि वाक्य को ब्राह्मणादि विषयक उपनयन का ही विधायक माना गया है, अतः, ''वसन्ते ब्राह्मणः अग्नीन् आदधीत'' एवं ''वसन्ते ब्राह्मणम् उपनयीत'' इत्यदि श्रुतिवाक्यों में ब्राह्मण आदि को निमित्त के रूप में उल्लेख नहीं किया गया हैं, किन्तु ब्राह्मणादि कर्तृक वसन्त आदिकाल विशिष्ट आधान एवं उपनयन का ही विधान करता है।

"आधाने" = आधान के विषय में "वसन्ते ब्राह्मणः अग्नीन् आदधीत" इत्यादि वसन्त वाक्य ही प्रापक हैं, "असर्वशेषत्वात्" = क्योंकि आधान किसी का भी अर्थात् किसी भी यज्ञ का शेष अर्थात् अङ्ग नहीं है ।।४।।

इति तृतीय विशिष्टाधानविधेयत्व अधिकरण ।

**अथ चतुर्थं दाक्षायणयज्ञाधिकरणम्**

## [४] अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥ पू०

**शा० भा०—दर्शपूर्णमासौ [1]प्रकृत्याऽऽमनन्ति—दाक्षायणयज्ञेन यजेत प्रजाकामः, साकंप्रस्थायीयेन[2] यजेत पशुकामः, संक्रमयज्ञेन यजेतान्नाद्यकाम इति। तत्र संदेहः। किं दर्शपूर्णमासयोरेव गुणात्फलमुत कर्मान्तरमेवंजातीयकमिति। किं प्राप्तम्। कर्मान्तरमिति। कुतः। संज्ञोपबन्धात्। यद्यपि प्रकरणाद्यजतिशब्दाच्च स एव पूर्वप्रकृतो याग इति गम्यते। तथाऽपि नासावेवंसंज्ञक इति यागान्तरं विधेयं गम्यते ॥ ५ ॥**

अथ चतुर्थं दाक्षायणयज्ञाधिकरणम्

त० वा०—युक्तं दध्नेन्द्रियकामस्येति गुणात्फलम्। न हि तत्र दध्यादीनां होमसामानाधिकरण्यं, येन संज्ञालक्षणो भेदः स्यात्। दाक्षायणयज्ञादीनां तु यागसामानाधिकरण्यात्पूर्वयागे [3]चाप्रयुक्तत्वादात्मरूपावच्छिन्नयागान्तरप्रतिपादनमविरुद्धम्। न च कश्चिद्दध्यादिभिस्तुल्य एवंसंज्ञो गुणः प्रसिद्धः। तस्माद्भावार्थाधिकरणन्यायेन फले यागविधानाद्यागान्तरम् ।।५।।

**॥ अथ चतुर्थं दाक्षायणयज्ञाधिकरणम् ॥४॥**

न्या० सु०—सन्दिग्धविधेयत्वार्थस्य रथन्तरसामादिशब्दस्य कस्य निमित्तार्थत्वेनाविधेयार्थत्वादभेदकत्वम्, कस्य वा तदयोगेन विधेयार्थत्वात् भेदकतेति चिन्तिते, अधुना दाक्षायणादिशब्दस्य गुणविधि नामधेयत्वसन्देहाद्विधेयाविधेयार्थतया सन्दिग्धस्याविधेयार्थत्वेऽपि, संज्ञातः, अभ्यासात् प्रकरणान्तराद्वा भेदमाशङ्क्य विधेयार्थत्वाद् गुणफलान्वयावगतेरभेदाभिधानात्सङ्गतिसन्देहतद्धेतून्स्पष्टत्वादुपेक्ष्य, दध्नेन्द्रियकामाधिकरणेनैव दाक्षायणादीनामपि गुणानां फलान्वयेनाभेदकत्वसिद्धेः पौनरुक्त्याशङ्कां परिहरन्संज्ञया भेदशङ्कार्थमाद्यसूत्रं व्याचष्टे—**युक्तमिति**। तृतीयान्तत्वाविशेषेऽपि निरूढानिरूढत्वविशेषात्सामानाधिकरण्यवैयधिकरण्यविशेषोपपादनार्थम्—**न चेत्युक्तम्**। कर्मान्तरमित्यनेन चोदनाशब्दश्चोद्यतइति व्युत्पत्त्या कर्मवाचितया व्याख्यातः। साकम्प्रस्थाय्यादीनामयनत्वाभावेऽपि तुल्यन्यायत्वादुदाहरणत्वविरोधः ॥ ५ ॥

---

१. ब. समामनस्ति।　　२. ब. प्रस्थाय्येन।　　३. क० अयुक्तत्वात्।

भा० प्र०—दर्शपूर्णमासप्रकरण में कहा गया है कि "दाक्षायणयज्ञेन यजेत प्रजाकामः", "साकंप्रस्थायीयेन यजेत पशुकामः", "संक्रमयज्ञेन यजेत अन्नाद्यकामः" ( तै० सं० २।५।४–५ ) प्रजा की कामना करने वाला दाक्षायण यज्ञ से यजन करे, पशु की कामना करने वाला सांकप्रस्थीय से यजन करे, अन्नाद्य की कामना करने वाला संक्रम यज्ञ से यजन करे।" इन देववाक्यों में "दाक्षायण यज्ञ", "साकंप्रस्थायीय" एवं "संक्रम यज्ञ" इन नामों से प्रसिद्ध स्वतन्त्र-स्वतन्त्र कर्मों का विधान किया गया है, ये गुणविधि हैं—यह संशय होने पर पूर्वपक्षियों ने कहा है कि "अयनेषु चोदनान्तरम्" दाक्षायणादि वाक्य स्वतन्त्र-स्वतन्त्र चोदना—ये स्वतन्त्र-स्वतन्त्र कर्म की ही विधि है, क्योंकि "संज्ञोपबन्धात्" इस स्थल में संज्ञा का उल्लेख है अर्थात् 'दाक्षायण', 'साकंप्रस्थायीय' एवं 'संक्रम' नाम से कोई गुण लोक में प्रसिद्ध नहीं है। "उद्भिदा यजेत" इत्यादि स्थलों के समान यहाँ भी 'यज्' धातु के साथ उसका सामनाधिकरण्य रहता है।

"अयनेषु" = दाक्षायणादि वाक्य में, "चोदनान्तरम्" = अन्य चोदना अर्थात् स्वतन्त्र कर्म की विधि होती है, "संज्ञोपबन्धात्" = यतः संज्ञा का अर्थात् नाम का उपबन्ध अर्थात् उल्लेख किया गया है ॥५॥

## अगुणा च कर्मचोदना ॥ ६ ॥

**शा० भा०—न चात्र गुण उपरुध्यते[1] कश्चिद्यद्विधानार्था चोदना भवेत्, यदि च न यागान्तरम्, आनर्थक्यमेव। अपि च, यदि गुण उपबध्येत, ततो यागगुणसंबन्धो गम्यत इति, तदनुष्ठानं विधीयेतेति अनुपबध्यमानेयागमात्रं गम्यते इति, तदनुष्ठानं विहितं गम्यते ॥ ६ ॥**

त० वा०—विधिशक्तिः क्रियातो नोत्तारितेत्यभिप्रायः ॥६॥

न्या सु०—न चेति भाष्येणाऽभ्यासेन भेदशङ्कार्थतया एतत्सूत्रं व्याख्याय, अपि चेत्यनेन गुणोपबन्धेऽपि दाक्षायण-संक्रमणलक्षणयोर्गुणयोर्यज्ञविशेषणत्वेन समासपदोपात्तयोः निष्कृष्य विध्ययोगात्, आग्नेयमष्टाकपालं निर्वपेद्रुक्काम इतिवत्फले गुणविशिष्टकर्मवध्यापत्तेः—कर्मान्तरत्वसिद्धिरित्युक्तम्। तत्-सूत्रानारूढत्वादयुक्तमाशङ्क्य, चशब्दसूचिताभ्युपेत्यवादार्थत्वेनोपपादयितुमाह—**विधीति**। गुणाननुबन्धे विधिशक्त्युत्तारणस्याऽनाशङ्क्यत्वात् गुणोपबन्धेऽपीत्यध्याहारेण योज्यम् ॥ ६ ॥

भा० प्र—पूर्वपक्षियों ने यह भी कहा है कि "अगुणा च कर्मचोदना" = दाक्षायण यज्ञ आदि वाक्यों में यदि किसी द्रव्यादि गुणों का उल्लेख रहता तो उस गुण के अनु-

---

१. ब. उपबध्यते।

रोध से इसको गुणविधि कहा जाता, किन्तु ऐसा नहीं है, अतः इसको गुणविधि नहीं कहा जा सकता है। जब यह गुणविधि नहीं है, तब इसको कर्मान्तरविधि न मानने पर सब वचन अनर्थक हो जायेंगे, अतः, यह कर्मान्तरविधि नहीं है ॥६॥

## समाप्तं च फले वाक्यम् ॥ ७ ॥

**शा० भा०—इतश्च कर्मान्तरम्। कथम्? फले समाप्तं वाक्यम्। 'प्रजाकामो यजेत' इति प्रजाकामस्य याग उपायो विधीयते। विधीयते चेत्कर्मान्तरम् ॥७॥ पूर्वपक्षः ॥**

त० वा०—फलस्यानुपादेयत्वान्न 'व्रीहिभिर्यजते' इत्यादिवत्कर्मोद्देशेन विधिः सम्भवतीत्यवश्यं कर्म तत्र विधातव्यम्। ततश्च सिद्धो भेदः ॥७॥

न्या० सु०—अनुपादेयान्वयात्प्रत्यभिज्ञायाश्च संज्ञान्तरान्वयेन, गुणान्तरान्वयेन वा तिरोधानात् प्रकरणान्तरेण भेदशङ्कार्थतयैतत्सूत्रं व्याचष्टे—**फलस्येति** ॥ ७ ॥

भा० प्र०—दाक्षायणादिवाक्य गुणविधि नहीं है वरन् कर्मान्तरविधि है, इसे कर्मान्तरविधि मानने का अन्य कारण भी है "समाप्तं च फले वाक्यम्"। "दर्शपूर्णमासाभ्यां यजेत स्वर्गकामः" इत्यादि वाक्यों में स्वर्गादिरूप फलों के लिए उपायस्वरूप दर्शपूर्णमास आदि यागों का विधान है, वैसे ही इस स्थल में भी प्रजा आदि फल के उपायस्वरूप दाक्षायण आदि याग "दाक्षायणयज्ञेन यजेत प्रजाकामः" इत्यादि वचनों से विहित हैं। इस स्थान में श्रुत प्रजा आदि फलों के उपायस्वरूप अन्य कोई भी याग विहित नहीं है, अतः दाक्षायण आदि को ही प्रजा आदि फलों के उपायस्वरूप याग अर्थात् कर्मान्तर = स्वतन्त्रकर्म के रूप में विहित है—यह मानना होगा।

"च" क्योंकि, "वाक्यम्" = यह श्रुतिवचन, "फले समाप्तम्" = फल में समाप्त होता है अर्थात् फलसम्बन्ध का ज्ञापन कर निराकाङ्क्ष हो जाता है, अतः, यह कर्मान्तर विधि है। यह पूर्वपक्ष है ॥७॥

## विकारो वा प्रकरणात् ॥ ८ ॥ सि०

**शा० भा०—दर्शपूर्णमासयोरेव[1] विकार एवंजातीयकः स्याद्दाक्षायणयज्ञादिः। एवं प्रकरणैमनुगृहीतं भवति[2] ॥ ८ ॥ सिद्धान्तः ॥**

त० वा०—सत्यपि फलं प्रति विधाने 'संनिधौ' त्वविभागात्' इत्यनेनाकर्मान्तरता। दध्यादिवच्च गुणफलसम्बन्धप्रत्ययात्प्रकृतयागबुद्धेः[3]।

---

१. ब. रेववा। २. ब. भविष्यति। ३. क० गुणरूप।

यत्तु गुणो न प्रसिद्ध इति। नैष दोषः। उक्थ्यादिवत्प्रकरणलभ्यत्वात्। एवंविधा च वाक्यान्तरेण गुणरूपविधानादस्ति प्रसिद्धिः। दध्यादिवदेवात्रापि वैयधिकरण्येनैव सम्बन्धः।

किं च—

अवस्थान्तररूपत्वाद्दध्यादेरविलक्षणाः।
प्रत्यासत्तेः प्रतीयन्ते सामानाधिकरण्यवत् ॥

तस्माद्दर्शपूर्णमासयोरेवावस्थान्तररूपाद्विकारात्फलम्, न कर्मान्तरात्। एव च प्रकरणविच्छेदो नात्यन्तं कृतो भविष्यति। यद्यपि फलवतः कथंभावेनाग्रहणादेतद्विषयेऽस्त्येव प्रकरणबाधः तथाऽप्याश्रयत्वेन सम्बन्धादुत्तराणि च वाक्यानि प्रत्यनुषङ्गसिद्धेरनुग्रह इत्युच्यते ॥८॥

न्या० सु०—प्रयोगान्यथात्वलक्षणो गुणानयनादिवाक्येषु[1] विधीयते, न कर्मान्तरमिति विकारशब्देन सिद्धान्ते प्रतिज्ञाते, दाक्षायण-संक्रमणरूपयोर्गुणयोर्निष्कृष्य विध्ययोगात्, तत्तद्विशिष्टकर्मविध्यापत्तेः, कर्मान्तरत्वापरिहारमाशङ्क्य, कर्मविध्यभ्युपगमेऽपि विधिश्रुतेः स्वरूपतात्पर्यभावेनाऽभेदकत्वाच्छुरुत्यविरोधेन सन्निधानेनाऽभेदावगत्यभिधानार्थतया प्रकरणादिति सूत्रावयवं व्याख्यातुमाह—**सत्यपीति**। विधिश्रुतेः स्वरूपतात्पर्याभावेनाविरोधमेवोपपादयति—**दध्यादिवच्चेति**।

दध्यादिवत्कर्मव्यतिरिक्तस्य दाक्षायणादिसंज्ञाकस्य गुणस्याऽप्रसिद्धत्वादविधेयत्वाशङ्कानिरासार्थतयैतमेव सूत्रावयवं न चेतिवार्तिकावयवोक्तशङ्कानुभाषणपूर्वकं व्याचष्टे—**यत्त्विति**। यथोकथ्यादेर्गुणस्यालौकिकस्यापि प्राकरणिकवाक्यान्तरालोचनात्सोमयागाभ्यासविशेषरूपतया प्रसिद्धो फले विध्युपपत्तिः तथा 'पौर्णमास्यौ यजेत्, द्वे अमावास्ये, सह कुम्भीभिरभिक्रामन्, इत्यादिप्राकरणिकवाक्यान्तरालोचनेनावृत्ति-सहप्रस्थानादिरूपतया दाक्षायणसाकम्प्रस्थाय्यादिगुणप्रसिद्धेः फले विध्युपपत्तिरित्यर्थः। एतदेव विवृणोति—**एवमिति**। वाक्यान्तराच्च साकम्प्रस्थाय्यादिशब्दस्य गुणवाचित्वप्रसिद्धो दध्यादिवद्यागप्रयोगं परिच्छिन्दता सहप्रस्थानादिना फलं भावयेदिति वैय्यधिकरण्येन धात्वार्थान्वयात्फलान्वयोपपत्तिरित्याह—**दध्यादिवच्चेति**।

नन्वेवमपि दाक्षायणादेः समासाद्यज्ञसामानाधिकरण्यावगतेर्दध्यादिवैलक्षण्यं भवि प्रतीत्याशङ्क्याह—**किं चेति**। येऽपि दाक्षायणादयः सामानाधिकरण्येनैव प्रतीयन्ते, तेऽपि दाक्षायणादिना गुणेन यागप्रयोगं परिच्छिन्दता फलं भावयेदिति वैय्यधिकरण्येन धात्वर्थाऽन्वयाद्दध्यादेरविलक्षणा इत्यप्यर्थसूचनार्थः किंचशब्दः। कथं सामानाधिकरण्येन प्रतीयमानानां दध्याद्यवैलक्षण्यमित्याशङ्क्य, यज्ञावस्थाविशेषरूपत्वलक्षणयज्ञप्रत्यासत्ति-

---

१. गुणायानादिवाक्येष्विति २ पु० पा०।

निमित्तौपचारिकता दाक्षायणेन यजेतेति सामानाधिकरण्यप्रतीतेः उक्तसिद्धान्तमुपसंहरति—**तस्मादिति**। 'एवं हीति भाष्योक्तं प्रकरणादि'ति सूत्रावयवव्याख्यातुमनुसन्धत्ते—**एवं चेति**। ननु गुणस्य फलवत्त्वे कथंभावेनाग्रहात्प्रकरणानुग्रहोक्तिरयुक्तेत्याशङ्क्याह—**यद्यपीति** ॥ ८ ॥

भा० प्र०—इस पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है कि "विकारो वा प्रकरणात्" प्रकरण के अनुसार 'दाक्षायण' आदि दर्शपूर्णमास का ही विकार अर्थात् अवस्थान्तर है, क्योंकि, दर्शपूर्णमास के ही प्रकरण में अर्थात् सन्निधान में उक्त वचन पढ़े गये हैं। इनको कर्मान्तर मानने पर प्रकरण का विच्छेदरूप दोष होगा। प्रकरणवश ही दर्शपूर्णमास के साथ उपभेद प्रत्यभिज्ञा है, अतः, यह कर्मान्तर नहीं है। इस स्थल में "प्रजा" आदि फलों का उल्लेख है, वह भी "दध्ना इन्द्रियकामस्य जुहुयात्" इत्यादि वाक्यों से विहित दधिरूपगुण जैसे इन्द्रियरूप फल का साधान होता है, वैसे ही प्रजा आदि फलों का भी कारण होगा।

यदि यह कहा जाय कि दाक्षायण आदि गुण प्रसिद्ध नहीं है ? इसके समाधान में कहा जा सकता है कि अन्य वाक्य में इसका गुण के रूप में किया गया है, अतः, दाक्षायण आदि के गुणत्व की लौकिक प्रसिद्धि न होने पर भी उक्त प्रकरण में वैदिक प्रसिद्धि है, और "दध्ना इन्द्रियकामस्य" इत्यादि स्थल में जैसे दधि और धात्वर्थ का सामानाधिकरण्यरूप से अन्वय नहीं होता है, अपितु वैयधिकरण्य अर्थात् व्यधिकरण भाव से ही अन्वय होता है, इस स्थल में भी वैसा ही होगा।

"विकारः" = विकार अर्थात् दर्शपूर्णमास का ही अवस्थान्तर, "वा" = पूर्वपक्ष की निवृत्ति का सूचक है, "प्रकरणात्" = प्रकरण के अनुसार ॥८॥

## लिङ्गदर्शनाच्च ॥ ९ ॥

**शा० भा०—लिङ्गमप्येतमर्थं दर्शयति त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत। यदि दाक्षायणयाजी स्यात्। अथो अपि पञ्चदशैव वर्षाणि यजेत। अत्र ह्येव सा संपत् संपद्यते। द्वे हि पौर्णमास्यौ यजेत, द्वे अमावास्ये। अत्र ह्येव खलु सा संपद्भवति, इति। यदि दाक्षायणयज्ञो दर्शपूर्णमासावेव, एवं तर्हि[1] त्रिंशत्संपदा प्रयोजनम्। ततस्तस्य त्रिंशत्संपदनुग्रहो[2] युज्यते। तस्मादपि न कर्मान्तरम् ॥ ९ ॥ सिद्धान्ते हेतुः ॥**

त० वा०–त्रिंशत्संपत्पूरणम्[3], पौर्णमास्यमावास्यासंकर्तिनं वा भेदं बोधयति। न हि दार्शपूर्णमासिकस्त्रिंशद्वर्षपक्षः कर्मान्तरेण पूरयितुं शक्यते। न च नियमस्याति-

---

१. ब. तस्य।  २. ब. संपत्यनुग्रहो।  ३. क० त्रिंशत्पूरणं।

देशः। येन कर्मान्तरस्येवैतत्पञ्चदशवर्षपक्षविधानं स्यात्। न च दाक्षायणयाजित्वेन[1] निमित्तेन दर्शपूर्णमासयोरेव पञ्चदशवर्षपक्ष उपजायते। सम्बन्धाभावात्। द्वे हि पौर्णमास्यौ, द्वे अमावास्ये इति चास्यानुपपत्तिः ॥९॥

न्या० सु०—किमत्राभेदलिङ्गमित्यपेक्षायां पञ्चदशवर्षसंख्यया त्रिंशद्वर्षसंख्यात्मक-सम्पत्पूरणं 'द्वे पौर्णमास्यौ यजेत, द्वे अमावास्ये' इति पौर्णमास्यमावास्याकीर्त्तनं चेति लिङ्गद्वयमाह—**सम्पदिति**। सम्पत्पूरणस्य लिङ्गत्वमुपपादयति—**न हीति**।

ननु कर्मान्तरत्वेऽप्यतिदेशप्राप्तत्रिंशद्वर्षसंख्यास्थाने पञ्चदशवर्षसंख्याविधानात्तत्सम्पत्क-रणोक्तिरुपपत्स्यतइत्यशङ्क्याह—**न चेति**। यावज्जीवपक्षवत्त्रिंशद्वर्षपक्षस्याप्यावश्यकत्वाक्षेप-नियमरूपत्वात्,तस्य च कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वादि-८-१ त्यष्टमाधिकरणेऽतिदेशनिषेधान्न कर्मान्तरे सम्पत्पूरणोपपत्तिरित्याशयः।

ननु कर्मान्तरे सम्पत्पूरणानुपपत्तावपि दाक्षायणाख्यकर्मान्तरयाजित्वेन निमित्तेन दर्शपूर्णमासयोरेव पञ्चदशवर्षत्वविधानात्त्रिंशत्पूरणोक्तिरुपपत्स्यतइत्याशङ्क्याह—**न चेति**। कर्मान्तरत्वे दाक्षायणयाजित्वस्य दर्शपूर्णमाससम्बन्धाभावेनाऽऽवर्त्तमानयोर्दर्शपूर्णमासयोः पञ्चदशभिस्त्रिंशत्सम्पत्त्ययोगात्'पञ्चदशैव वर्षाणि दर्शपूर्णमासाभ्यां यजेते'ति वाक्यार्थो न युज्येतेत्यर्थः। पौर्णमास्यमावास्यासङ्कीर्त्तस्य लिङ्गत्वमुपपादयति—**द्वे हीति** ॥ ९ ॥

भा० प्र०—दाक्षायण आदि कर्मान्तर नहीं है, इस प्रसङ्ग में अन्य हेतु का प्रदर्शन किया जा रहा है "लिङ्गदर्शनात्"। श्रुति में कहा गया है "त्रिंशतं वर्षाणि दर्शपूर्ण-मासाभ्यां यजेत"। यदि दाक्षायणयाजी स्यात्। अथो अपि पञ्चदशैव वर्षाणि यजेत। अत्र ह्येव सा सम्पद्यते। ये हि पौर्णमास्यौ यजेत द्वे अमावास्ये" तीस वर्षों तक दर्शपूर्ण-मास यज्ञ करे, यदि दाक्षायण यज्ञ करते हैं तो पन्द्रह वर्षों तक यज्ञ करें, इसी से दर्शपूर्णमास सम्पन्न होगा। दो बार पौर्णमासी याग एवं दो बार अमावास्या याग करें।" इस श्रुति में तीस वर्ष दर्शपूर्णमास याग करें—यह कहा गया है और पन्द्रह वर्षों तक दाक्षायण यज्ञ के करने का उपदेश दिया गया है, किन्तु उसको दो बार करना होगा। फलस्वरूप दाक्षायण यज्ञ भी पन्द्रह वर्षों तक करके इसका दो बार अनुष्ठान करने पर तीस वर्षों तक अनुष्ठान हुआ। दाक्षायण यक्ष एवं दर्शपूर्णमास यदि अभिन्न है तभी दाक्षा-यण यज्ञ का दो बार अनुष्ठान से दर्शपूर्णमास का तीस वर्षों के अनुष्ठान से इसकी पूर्ति सम्भव होती है, अन्यथा नहीं। क्योंकि एक के द्वारा दूसरे की पूर्ति नहीं हो सकती है। "द्वे हि पौर्णमास्यौ द्वे हि अमावास्ये" इस श्रुतिवचन के अनुसार दो पौर्णमासी एवं दो अमावास्या के यागों की चर्चा की गई है—वह भी सङ्गत नहीं होगा—यदि उनकी अभिन्नता मानी जाय, अतः दाक्षायण यज्ञ एवं पौर्णमास याग अभिन्न है।

"लिङ्गदर्शनात्" = यतः लिङ्ग अर्थात् श्रुतिवाक्य से विज्ञापित ज्ञापक हेतु दृष्ट होता है, "च" = एवम् ॥९॥

---

१. क० दाक्षिणायन।

## गुणात्संज्ञोपबन्धः ॥ १० ॥

**शा० भा०—यदुक्तं संज्ञोपबन्धात्कर्मान्तरमिति। यदि दाक्षायणशब्दो न केनचिदपि प्रकारेण दर्शपूर्णमासवचनः शक्यते कल्पयितुं, तत उच्येत कर्मान्तरमिति। शक्नोति त्वावृत्तिगुणसंबन्धाद्वदितुम्। अयनमित्यावृत्तिरुच्यते। दक्षस्य इमे दाक्षाः, तेषामयनं दाक्षायणम्। कः पुनर्दक्षः? उत्साही। तथा साकंप्रस्थायीयेऽपि, सहप्रस्थानं गुणसंबन्धः। एवं सर्वत्र। शक्यते चेद्दर्शपूर्णमासयोर्गुणसंबन्धो वदितुम्, किमिति स एव यागः प्रतीयमानोऽन्य इत्युच्यते, किमिति वा प्रकरणं बाध्यते ॥ १० ॥**

तं० वा०—उत्पत्तिसंयोगे, पूर्वासम्बन्धे च संज्ञा भेत्त्री भवति। न चेयमुत्पत्तिसंयुक्ता 'अथैव ज्योतिः' इत्यादेरिव प्रक्रमाभावात्। सम्भवति च पूर्वकर्माश्रितगुणवाचित्वेनैवेति न भिनत्ति। दाक्षायणयज्ञे हि वाक्यान्तरवशादवयवप्रसिद्धेश्चाभ्यस्तत्वमभिधीयते। तेन च प्रकरणाद्दर्शपूर्णमाश्रितेनैव फलं साध्यते। दक्ष इति चोत्साही शीघ्रकारी यजमानः। तदीया ऋत्विजो दाक्षाः। तेषामयनं—प्रयोगो यज्ञाश्रितत्वाद्दाक्षायण इत्युच्यते। साकंप्रस्थायीयेऽपि सांनाय्यमनवदाय कुम्भीभ्यामेव साकं प्रस्थीयत इत्येवमभिधीयते। तस्मान्न प्रत्यभिज्ञानबाधः ॥१०॥

न्या० सु०—यः सञ्ज्ञोपबन्धो भेदहेतुत्वेनोक्तः, सगुणवाचित्वेन कर्मसञ्ज्ञात्वाभावान्न कर्मभेदक इतिसूत्रेणोक्ते 'पयसा प्रवर्ग्ये चरन्ति, पयसा दाक्षायणयज्ञे इत्यादौ कर्मनामप्रवर्ग्यादिसाहचर्याद्दाक्षायणस्यापि कर्मनामत्वमाशङ्क्य, अन्यत्र कर्मसञ्ज्ञात्वे व्युत्पत्तिसंयोगाभावान्न भेदकतास्तीत्याह—**उत्पत्तीति**। कथमुत्पत्तिः संयोगावगतिरित्याशङ्क्य, पूर्वकर्मानन्वयो ज्ञापकत्वेनोक्तः। प्रस्तूयमानवाच्यथैषशब्दप्रकारस्य प्रक्रमस्य पूर्वानन्वयहेतोरभावात्पयसादाक्षायणयज्ञ इत्यादिसंज्ञा कोत्पत्तियुक्तेत्यर्थः। गुणवाचिनोऽपि दाक्षायणादिशब्दस्य पशुसोमादिशब्दवत् लक्षणया क्व चित्कर्मसञ्ज्ञात्वाविरोधः।

दाक्षायणयज्ञेन यजेतेत्यादौ तु दाक्षायणादिशब्दो गुणवाचित्वेन सञ्ज्ञात्वाभावादेव न भिनत्तीति सूत्रार्थमनुसन्धत्ते—**सम्भवति चेति**। एतदेवोपपादयति—**दाक्षायणेति**। 'द्वे हि पौर्णमास्यौ यजेते'ति वाक्यान्तरादावृत्तिवाच्ययनशब्दयोगाच्च दाक्षायणशब्दस्याभ्यासवाचित्वप्रतीतेः, तस्य च यज्ञाश्रितत्वादौपचारिकयज्ञशब्दसामानाधिकरण्योपपत्तेर्न सञ्ज्ञात्वं कल्पनीयमित्याशयः। दक्षस्येति भाष्योक्तामवयवप्रसिद्धिं विवृणोति—**दक्ष इति चेति**। ऋत्विक्कर्तृका प्रयोगावृत्तिरयनशब्दवाच्या, नर्त्विजामेवावृत्तिरितिसूचनार्थः प्रयोगशब्दः। तथेति भाष्योक्तां साकम्प्रस्थाय्यशब्दस्य गुणवाचितां विवृणोति—**साकम्प्रस्थाय्येऽपीति**। साकम्प्रस्थाय्यसञ्ज्ञके प्रयोगे सायम्प्रातर्दोहकुम्भीभ्यां सह प्रस्थानात्सहप्रस्थानलक्षणगुणयोगात् साकम्प्रस्थाय्यशब्देनाऽसौ प्रयोगोऽभिधीयतइत्यर्थः। शक्यते चेदिति भाष्योक्तं गुणादिति सूत्रावयवतात्पर्यं विवृणोति—**तस्मादिति** ॥ १० ॥

---

१. ब. साकंप्रस्थाय्येन।

भा० प्र०—पूर्वपक्षियों ने कहा है कि "दाक्षायण" शब्द किसी भी तरह दर्शपूर्णमास का वाचक नहीं हो सकता है, अतः इसको संज्ञाविशेष ही मानना होगा और संज्ञा के कारण ही यह कर्मान्तर है। इसके समाधान में यह कहना है कि "गुणात् संज्ञोपबन्धः" आवृत्तिरूप गुण का सम्बन्ध होने से उसका "दाक्षायण" यह नाम हुआ है, कारण, दक्ष अर्थात् निपुण यजमान-सम्बद्ध ऋत्विक् आदि को 'दाक्ष' कहा जाता है और दाक्ष का अयन आवृत्ति, इसप्रकार 'दाक्षायण' शब्द निष्पन्न होता है, "साकंप्रस्थायीय" शब्द भी इसी प्रकार निष्पन्न हुआ है। 'साकं' = सह प्रस्थान जिसमें है, इसप्रकार की व्युत्पत्ति के अनुसार सह प्रस्थानरूप गुण के सम्बन्ध में यह अभिधान होता है। दर्शपूर्णमासीय अमावास्या याग में दोहन शेष कर दो-दो कुम्भी = कलस ले जाते हैं। इस प्रकार दो-दो कलसों का सहगमन होने से उस गुण के अनुसार इस प्रकार किया गया है।

"गुणात्" = गुण के अनुसार, "यज्ञोपबन्धः" = संज्ञा का उल्लेख ॥१०॥

## समाप्तिरविशिष्टा ॥ ११ ॥

**शा० भा०—यदुक्तं फले वाक्यं समाप्तं प्रजाकामादेर्यागानुष्ठानं विधीयत इति। नैवम्। अविशिष्टा फले समाप्तिः। यान्यन्यानि मुक्तसंशयानि गुणे फलस्य विधायकानि वाक्यानि, गुणस्य फलवचनानि[1] पर्यवसितानि। यथा 'दध्नेन्द्रियकामस्य जुहुयात्' इत्येवमादीनि। तैरेतदविशिष्टम्। अत्रापि हि गुणात्फलमुच्यते। कथम्? नैतदेवं संबध्यते[2]—प्रजाकामस्य यज्ञमनुतिष्ठेदिति। कथं तर्हि? प्रजाकामस्य आवृत्तियज्ञमनुतिष्ठेदिति। आवृत्तियज्ञ इति यज्ञावृत्तिसंबन्धोऽनुष्ठातव्यो निर्दिश्यते, न यज्ञः। तस्मात्प्रकृतयोर्दर्शपूर्णमासयोर्गुणात्फलमुच्यते, न यागान्तरं विधीयत इति। एवं साकंप्रस्थायीये[3], संक्रमयज्ञे च द्रष्टव्यमिति ॥ ११ ॥ आ० नि० ॥ इति चतुर्थं दाक्षायणयज्ञाधिकरणम् ॥ ५ ॥**

त० वा०—यद्यपि कर्मोद्देशेन न फलं विधीयते, तथाऽपि कर्मफलसम्बन्धाभावादकर्मान्तरता। यथैव हि कर्मणः फलमिति भावार्थाधिकरणे साधितं तथैव 'अतुल्यत्वात्तु वाक्ययोः' इत्यत्र गुणफलसम्बन्धपर्यवसायित्वमप्युक्तमिति सन्देहे सति पदान्तरानुग्रहार्थे गुणादेव फलं न कर्मण इति सिद्धम् ॥११॥

( इति चतुर्थं दाक्षायणयज्ञाधिकरणम् ॥४॥ )

न्या० सु०—फले वाक्यस्य पर्यवसानाख्या समाप्तिर्यानुपादेयफलान्वयेन कर्मणो विधेयत्वाद्भेदसिद्धयर्थमुक्ता, सा गुणफलान्वयविधानेऽप्यविशिष्टत्वेन कर्मविध्यनापादकत्वान्न भेदं साधयतीति सूत्रतात्पर्यमाह—**यद्यपीति**। अविशिष्टत्वं विवृणोति—**यथैव हीति**।

---

१. ब. फलवचने। २. ब. अभिसंबध्यते। ३. ब. साकंप्रस्थाय्ये।

नन्वविशेषे सति कथं गुणस्यैव विधिः, न कर्मण इति निश्चीयते। अत आह—**इति सन्देह इति।**

प्रयोजनं पूर्वपक्षे सौर्येष्टयादिवद्दर्शपूर्णमासप्रयोगाद् बहिर्दाक्षायणयज्ञप्रयोगः इति चतुर्थं दाक्षायनयज्ञाधिकरणम्। सिद्धान्ते दर्शपूर्णमासयोरेवावृत्त्या प्रयोगः ॥ ११ ॥

भा० प्र०—पूर्वपक्षी ने यह कहा था कि फल का सम्बन्धबोध कराकर वाक्य समाप्त अर्थात् निराकाङ्क्ष होने से यह कर्मान्तरविधि है—यह भी ऐकान्तिक नहीं है। क्योंकि, गुणफलविधि के स्थल में भी गुण का और फल का सम्बन्ध विज्ञापित कर वाक्य निराकाङ्क्ष हो जाता है, ऐसी स्थिति में स्वतन्त्र कर्म की विधि इसको नहीं माना जा सकता है, प्रकृत स्थल में भी यही है।

''समाप्तिः = फलसम्बन्ध का बोध कर जो वाक्य की समाप्ति है, वह ''अविशिष्टा'' = कर्मान्तरविधि एवं गुणविधि में अवशिष्ट है अर्थात् एक ही प्रकार है ॥११॥

यह चतुर्थ दाक्षायणयज्ञाधिकरण है।

## [५] संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥ पू०

**शा० भा०—अनारभ्याधीयते किंचित्—'वायव्यं श्वेतमालभेत भूतिकामः, सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः। दर्शपूर्णमासयोरप्यामनन्ति, ईषामालभेत, चतुरो मुष्टीन्निर्वपति', इति। तत्रायमर्थः सांशयिकः—किं दार्शपूर्णमासिके आलम्भे आलम्भो गुणविधिः, दार्शपूर्णमासिके च निर्वापे निर्वापो गुणविधिः, उत न प्रकृतिमपेक्षते, इतरश्चेतरश्चेति। यदा न प्रकृतिमपेक्षते, तदाऽपि किं यावदुक्ते, उत यजिमती एते कर्मणी इति। किं तावत्प्राप्तम्? प्राकृतयोरालम्भनिर्वापयोर्गुणविधी इति। कुतः? अकर्मशब्दत्वात्। नात्र कर्मणो विधायकः शब्दोऽस्ति। नन्वालभेत निर्वपेदिति च। नैतौ विधातारौ। अविदितस्यार्थस्य वक्ता विधायको भवति। न चैतयोरविदितोऽर्थः। आलम्भः कर्तव्यः, निर्वापः कर्तव्य इति। तस्मादनुवदितारौ। किमर्थमनुवदतः। आलम्भने श्वेतं विधातुम्, निर्वापे च चरुम्। तस्मान्नाऽऽलम्भान्तरं निर्वापान्तरं च। प्राकृतयोरेव गुणविधी इति ॥ १२ ॥ पूर्वपक्षः ॥**

त० वा०—न कस्यचिदपि कर्मणः प्रकरणे श्रूयते 'श्वेतमालभेत' 'चरुं निर्वपेत्' इति। तत्र संदेहः—किमनारभ्यवादानां प्रकृत्यर्थत्वात्प्राकृतयोरेवाऽऽलम्भनिर्वापयोः श्वेतचरू गुणौ विधीयेते, किं वा कर्मान्तरे यावच्छ्रुते, उत यजिमती वेति। तत्रानारभ्याधीतत्वोपन्यासः संशयबीजापौनरुक्त्यप्रथमपक्षपरिग्रहतन्निराकरणार्थः। कथम्? यदि तावदालम्भनिर्वापौ प्रकृत्य श्रूयेयातां ततः प्रकृतप्रत्ययानुवृत्तिरेव

प्रसज्येतेति, कर्मान्तराशङ्का न स्यात्। अनारभ्यवादे तु सति श्वेतादिगुणस्योपादेयत्वात्कदाचिद्दूरस्थानुवादेन गुणो विधीयते, कदाचिद्वा विपरिवृत्त्यभावात्कर्मान्तरमिति जायते संदेहः।

तथा 'द्रव्यसंयोगाच्चोदना पशुसोमयोः' इत्यनेन गतप्रायमिवात्र यजिमत्कर्मविधानं लक्ष्यते। तत्तु प्रकृतयागाभावादनुवादशङ्कायामसत्यां श्वेतादेश्च गुणस्यौत्पत्तिकद्रव्यसंयुक्तेऽपि कर्मणि विधानोपपत्तेः कथं स्यादिति पुनरुपन्यस्यते। पूर्वपक्षश्चान्ययोरालम्भनिर्वापयोरप्रकरणादवश्यं प्रकृतावेव ग्रहीतव्यावित्येवं प्रवर्तते। तन्निराकरणमपि च प्रकरणाभावादसाधारणोपलक्षणाभावाच्च न प्राकृतयोर्लौकिकव्यावृत्तरूपयोः प्रतीतिरस्तीत्येवं भविष्यति। गुणविधिविषयत्वाच्चाऽऽलम्भनिर्वापौ गुणविधिशब्देनोक्तौ।

किं तावत्प्राप्तम्? यथैवायनेषु गुणसंबन्धपरे वाक्ये कर्मविधिशब्दाभावादकर्मान्तरत्वं, तथेहापि भविष्यतीति, चशब्देनान्वादिश्यते। क्व चासौ गुणविधिरिति विषयावधारणार्थमप्रकरणग्रहम्।

अथ वा यद्यप्येतावता पूर्ववैलक्षण्येनाप्रकरणे श्रूयते, तथाऽपि कर्मणो विधिशब्दानवरोधाद् गुणार्थैव पुनः श्रुतिरिति। दर्शपूर्णमासयोः शकटेषा, सा श्वेतीकृत्याऽऽलब्धव्या, निर्वापश्च चरौ कर्तव्यः, चरुपरिमितो वा भूतिब्रह्मवर्चसकामयोश्च सर्वेभ्यो दर्शपूर्णमासावित्यैवं प्राप्तयोरनुवादः। तथा वायव्यमिति सर्ववनस्पतीनां वायुदेवतात्वात्कथंचिदीषाया एवानुवादः। सौर्यमिति चाऽऽग्नेयस्यैव तेजोदेवत्यसामान्यादनुवादः। तस्माद् गुणो विधीयत इति ॥१२॥

**॥ अथ पञ्चमं द्रव्यदेवतायुक्तानां यागान्तरताधिकरणम् ॥ ५ ॥**

न्या० सु०—विषयविवेकार्थं प्रकरणशब्दव्याख्यानार्थमनारभ्येति भाष्यं किं चिदनारभ्येत्यन्वयं दर्शयन् व्याचष्टे—**न कस्य चिदपीति।**

इह संस्कारश्चेति च शब्देन विकारो वेति पूर्वाधिकरणसिद्धान्तसूत्रस्थवाशब्दोक्ताकर्मान्तरत्वानुकर्षणात् 'यावदुक्तं चे'ति वाशब्देन तन्निवृत्त्या कर्मान्तरत्वाभिधानात् भेदाभेदविचारो यावदुक्तं यजतिस्त्वितिसूत्रावयवाभ्यां च यावच्छ्रुतयजिमत्त्वविचार इति, यावदुक्तसूत्रेणाद्यविचारे सिद्धान्तस्य, द्वितीये च पूर्वपक्षस्यावृत्त्याभिधानाद्विचारद्वयं कृतम्। तत्राद्यवत् द्वितीयविचारेऽपि देवतापदवत्फलपदमनपेक्ष्यापि सिद्धान्तस्य वक्तुं शक्यत्वादकर्मान्तरत्वोपपत्तितयोक्तसंस्कारत्वनिरासार्थं प्रधानकर्मत्वसूचना। यजतिसूत्रे फलग्रहणे न कर्मान्तरत्वसिद्ध्यर्थं यागत्वसिद्ध्यर्थं वेति सूचयितुं पदद्वयमात्रोदाहरणम्। किं दार्शपौर्णमासिके यदा न प्रकृतिमिति भाष्याभ्यां विचारद्वयं क्रमेणोक्तमपि, आद्यविचारेऽनुवादायोगात्कर्मणो विधेयत्वेन भेदोक्तेर्लक्षणसङ्गतावपि द्रव्यदेवतासंयोगलक्षणस्य गुणस्य

पूर्वकर्मसंयोगानर्हत्वाभावेनाभेदकत्वाद् गुणप्रकरणासङ्गतेर्द्वितीयविचारे द्रव्यदेवतासंयोगलक्षणस्य गुणस्य यागरूपे कर्मण्यनिवेशेन तद्भिन्नयागरूपबोधकत्वाद् गुणप्रकरणसङ्गत्युपपत्तेस्तच्छेषतया, आद्यस्य सङ्गतिसूचनायैकहेलया विचारद्वयमाह—**तत्रेति**। यदा कर्मान्तरे तदा किं यावच्छ्रुते निर्वापालम्भनमात्ररूपे, यागरूपे वेत्यर्थः। शब्दवाच्यत्वं विना यागस्यान्वयासिद्धेः, यजेरपि कल्पनीयत्वसूचनार्थं यजिवाच्यत्वविवक्षया—**यजिमती इत्युक्तम्**।

अनारभ्याधीतत्वोक्तेः प्रयोजनचतुष्टयमाह **तत्रेति** प्रश्नपूर्वं संशयबीजार्थत्वं तावद्विवृणोति—कथमिति। दार्शपौर्णमासिकावालम्भनिर्वापौ प्रकृत्येमावालम्भनिर्वापौ श्रूयेयातामित्याद्यावृत्त्या योज्यम्। अनारभ्याधीतत्वेन पूर्वपक्षवचनव्यक्तययोगात्सन्देहानुपपत्तिमाशङ्क्य'यदाहवनीये जुह्वतीत्यादिवद् दूरस्थयोरप्यालम्भनिर्वापयोर्वैदिकत्वसाम्येन बुद्धिस्थतयाऽनुवादसम्भवात्पूर्वपक्षवचनव्यक्त्युपपादनाय—**अनारभ्यवादे त्वित्युक्तम्**। अपौनरुक्त्यार्थत्वं विवरीतुं केन पौनरुक्त्याशङ्केत्यपेक्षायां तावदाह—**तथेति**। अग्नीषोमीयवाक्येऽप्येतदधिकरणसिद्धयजिवाच्यकर्मवाचित्वाङ्गीकरणेन पशुसोमाधिकरणे विध्यनुवादविचारात्पौनरुक्त्यनुपपत्तावप्युभयत्र सिद्धान्ते यागविध्यभिधानात् आपातमात्रात्पौनरुक्त्यभ्रान्तिरितिसूचनार्थः प्रायशब्दः।

तदेव विवृणोति—**तत्त्विति**। गतप्रायत्वप्रतिभाने सति यद्यजिमत्कर्मविधानत्वं पुनरुपन्यस्यते, तदनारभ्याधीतत्वेन प्रकृतयागाभावात्प्रकृतयागानुवादाशङ्कायामसत्यां पशुसोमाधिकरणपूर्वपक्षस्यात्राभावात्कथं गतप्रायं स्यादिति मत्वेत्युक्ते तदीयसिद्धान्तेनैव तर्हि यजिमत्कर्मविधानत्वसिद्धेरपरिहार्या गतप्रायतेत्याशङ्क्य—**श्वेतादेश्चेत्युक्तम्**। औत्पत्तिकहृदयादिद्रव्यसंयुक्ते कर्मणि पश्वाख्याद्रव्यान्तरविध्यनुपपत्तिस्तत्र सिद्धान्तहेतुः गुणस्य तु द्रव्ययुक्तेऽपि कर्मणि विध्युपपत्तिरिति सिद्धान्तहेतुरपि नास्तीत्याशयः। प्रथमपक्षपरिग्रहार्थत्वं विवृणोति—**पूर्वपक्षश्चेति**। प्रथमपक्षनिरासार्थत्वं विवृणोति—**तन्निराकरणमपि चेति**। आलम्भनिर्वापशब्दयोर्गुणविधिसामाधिकरण्यायोगमाशङ्क्यालम्भनिर्वापविषयलक्षणार्थावालम्भनिर्वापशब्दाविति व्याख्यातुमाह—**गुणेति**। दार्शपौर्णमासिकयोरालम्भनिर्वापयोः श्वेतचर्वोर्गुणयोर्विधी इत्युक्ते, निर्वापालम्भयोर्लोकवेदसाधारण्यात्कथं विशेषावधारणेत्याशङ्क्य, वैदिकस्य गुणविधेर्विषयापेक्षायां वैदिकत्वसामान्येन बुद्धिस्थत्वाद्वैदिकयोरेवालम्भनिर्वापयोर्विषयत्वावगतेः 'प्रकृतौ वा द्विरुक्तत्वादि३-५'त्यनेन न्यायेन प्राकृतालम्भनिर्वापविषयतैवावधार्यतइति सूचनार्थं वैदिकेन गुणविधिनैक्यं वैदिकयोर्निर्वापालम्भयोरुपचरितमित्याशयः। आलम्भविषयो, निर्वापविषयश्च यो गुणविधिः, स दार्शपौर्णमासिकालम्भनिर्वापविषय इति भाष्यार्थोऽनेनोक्तः। किं तावदित्यादिभाष्येणाकर्मान्तरोक्त्यर्थतया एतत्सूत्रं व्याख्यातम्। तत्कथमकर्मान्तरत्वे योज्यमित्यपेक्षायां, चशब्देन विकारो वेति वाशब्दोक्तो कर्मान्तरत्वातिदेशादालम्भो निर्वापश्चाकर्मान्तरं विधिशब्दस्य गुणसञ्चरितत्वेन कर्मविषयत्वाभावादित्येवं योजयितुमाह—**किं तावदिति**। अनन्तरसङ्गतिरप्यपवादतयाऽनेन सूचिता। निर्वापालम्भयोश्च संस्कारत्वेन प्रसिद्धत्वात्कर्मान्तरत्वे चान्यत्र विनियुक्त-

संस्कार्याप्रतीतेः संस्कारत्वायोगादकर्मान्तरतावसीयतइति हेत्वन्तरोक्त्यर्थः संस्कारशब्दो। प्रकरणे तु तद्धर्मस्ततो विशेषादि३-४ति तृतीयाधिकरणे 'सुवर्णं हिरण्यं धार्यमि'त्येतत्तुल्यतया आलम्भनिर्वापयोरपि संस्कारत्वनिषेधेनासिद्धत्वं मत्वा न व्याख्यातः। निर्वापालम्भोपलक्षणार्थताद्वारा[1] संस्कारशब्दस्य तदुदाहरणेनैव व्याख्या सूचिता। क्व वाक्ये श्रूयमाणोऽसौ निर्वापालम्भात्मकः संस्कारो गुणविधिरित्यधिकरणविषयभूतालम्भनिर्वापविशेषापेक्षायां तदवधारणार्थत्वेनाप्रकरणशब्दं व्याचष्टे—**क्व चेति**।

यद्वा अनारभ्याधीतत्वेनायनवैलक्षण्यात्कथं निर्वापालम्भश्रुत्योर्गुणार्थतेत्याशङ्कानिरासार्थो प्रकरणशब्द इत्यन्यथा व्याचष्टे—**अथ वेति**। यद्यप्यप्रकरणे श्रूयतइत्येतावता कारणेनाऽऽलम्भो निर्वापश्चायनवैलक्षण्येन युक्तः तथापि निर्वापालम्भाख्येन कर्मणा विधायकस्य गुणसञ्चरितत्वेनानवरोवाद् गुणार्थैवालम्भनिर्वापश्रुतिरित्यर्थः। यथा सिद्धशकटेष्वालम्भे प्राप्ते कथं श्वैत्यानुष्ठानमित्याशङ्क्य, सिद्धाया अपीषायाश्चूर्णादिना श्वेतीकरणं शक्यमित्याह—**दर्शेति**।

व्रीहिनिर्वापे कथमोदनाख्यस्य चरोर्निवेश इत्याशङ्क्य, स्थालीवचनं चरुशब्दमङ्गीकृत्य मुख्यत्वाच्छ्रुतिवृत्तप्रातिपदिकाभ्युपगमेन द्वितीया सप्तम्यर्थे कल्प्या। पञ्चशरावमोदनं निर्वपेदित्यादौ वा शरावादिशब्दस्य तत्परिमिते प्रयोगदर्शनाच्चचरुशब्दस्यापि तत्परिमितलक्षणार्थत्वोपपत्तेर्यथा चरुपरिमिता व्रीहयो भवन्ति तथा चत्वारो मुष्टयः कार्या इत्यर्थाभ्युपगमाच्चोत्पत्तिशिष्टचतुर्मुष्टिपरिमाणाविरोधोपपत्तेः परिमितलक्षणार्थतया चरुश्रुत्यर्थस्यापि वाक्यार्थान्वयेनात्यन्ताबाधात्सप्तम्यर्थकल्पनायां तु द्वितीयार्थात्यन्तबाधापत्तेः प्रातिपदिकमेव लक्षणया व्याख्येयमिति द्वेधा परिहरति—**निर्वापश्चेति**। प्राप्ते कर्मण्यनेकार्थविधौ वाक्यभेदापत्तेः फले देवतापदानन्वयमाशङ्क्याह—**भूतीति**। ओषधिवनस्पतयोऽन्नं, प्राणभृतोऽन्नादमिति प्राणभृतां च वनस्पतीन् प्रति भोक्तृत्वे श्रुते भोक्तृत्वरूपदेवतात्वावगमात्प्राणाख्यस्य वायोर्देवतात्वमुपचर्य, वनस्पतीनां वायुदेवत्यत्वात्तत्प्रभवत्वेनेषाया वायुदेवत्यत्वानुवाद इत्यर्थः। वायुगुणस्पर्शवत्त्वाद्वा वनस्पतीनां वायुदेवत्यताभिप्रेत्य पूर्वपक्षमुपसंहरति—**तस्मादिति** ॥ १२ ॥

भा० प्र०—वेद में "वायव्यं श्वेतमालभेत भूतिकामः" (तै० सं० २।१।१) "सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः" ये दो वाक्य पठित हैं, यह "अनारभ्यश्रुत" अर्थात् किसी भी कर्म के प्रकरण में पठित नहीं है, किन्तु दर्शपूर्णमास के मध्य में उपदिष्ट है "ईषामालभेत", "चतुरो मुष्टीन् निर्वपति" ईषा का आलम्भन करे, चार मुट्ठी हव्य द्रव्य का निर्वाप करता है। अर्थात् ईषा का स्पर्श और चार मुट्ठी तण्डुल आदि का ग्रहण विहित है। (दर्शपूर्णमास यज्ञ में एक शकट = गाडी आवश्यक है, मन्त्रपाठपूर्वक चक्रारोहण आदि कतिपय कर्मों के सम्पादन की विधि है, लाङ्गल के दीर्घ दण्ड के समान उस शकट का

---

१. उपलक्षणार्थत्वात् संस्कारशब्दस्येति २ पु० पा०।

एक बड़ा-सा काष्ठ से बनाया गया दण्ड रहता है, उसी का नाम ईषा है अर्थात् लाङ्गल के दीर्घ दण्ड को ही ईषा कहते हैं।

वायव्य वाक्य से आलम्भन का अनुवाद कर इस ईषा के तत्व गुण का विधान किया गया है एवं सौर्य्य वाक्य के द्वारा इस मुष्टिनिर्वाप का अनुवाद कर उसके गुण के रूप में चरु का विधान किया गया है या उसके द्वारा स्वतन्त्र कर्म का विधान किया गया है ? यदि इसके द्वारा स्वतन्त्र कर्म का विधान होता है—यह माना जाय तो वह ईषालम्भन से स्वतन्त्र आलम्भनात्मक एवं मुष्टिनिर्वाप से स्वतन्त्र निर्वापात्मक कर्म, या वह आलम्भ और निर्वापयुक्त यागात्मक कर्म है—यही संशय है।

इसमें प्रथम पूर्वपक्षी का कहना है कि "संस्कारश्च" "वायव्यं श्वेतमालभेत" एवं "सौर्यं चरुं निर्वपेत्" इन दो वाक्यों में दर्शपूर्णमास का आलम्भ एवं निर्वाप ये दोनों ही संस्कारों का अनुवाद किया है अर्थात् दो वाक्यों में संस्कार का अनुवाद कर गुण का विधान किया गया है। कारण, "अकर्मशब्दात्" इस स्थल में अपूर्व कर्म का विधायक कोई भी शब्द नहीं है, कारण, प्राप्त का अर्थात् विदित विषय की विधि नहीं होती है, किन्तु अप्राप्त की ही विधि होती है। यह जो ईषालम्भन एवं चरु का = थाली या पाक-पात्र का निर्वाप है, वह "ईषामालभेत" इत्यादि वचनान्तर से प्राप्त होने में वायव्य और सौर्य वाक्य में जो आलम्भ एवं निर्वाप कहा गया है—वह अनुवाद मात्र है। इसीलिए, इस स्थल में ईषा का श्वेतत्व गुणविहित होता है। और श्वेत काठरूप जो ईषा वह वायु से स्पृष्ट होने से उसको 'वायव्य' = वायुसम्बन्धीय कहना असङ्गत नहीं है। इसी प्रकार इस स्थल में निर्वाप के उद्देश में चरु द्रव्यरूप गुण विहित होता है। चरु शब्द यहाँ लक्षणा के द्वारा थाली अर्थात् पाकपात्रविशेष का वाचक है और "सौर्यम् चरुम्" इत्यादि वाक्य में चरु शब्द में सप्तमी विभक्ति के अर्थ में द्वितीया होती है। अतः "चरुं निर्वपेत्" अर्थात् "चरौ निर्वपेत्" थाली में चार मुट्ठी तण्डुल का निर्वाप = ग्रहण करे। सूर्य के समान प्रभा होने से इसको "सौर्यं" कहा गया है। यदि कहा जाय कि वायव्य वाक्य को एवं सौर्यवाक्य को गुणविधि माना जाय तो उससे जो फल की श्रुति है वह सङ्गत नहीं होगी, ऐसी स्थिति में सभी कामनाओं के उद्देश्य में दर्शपूर्णमास यज्ञ किया जाय यह श्रुति में उपदिष्ट होता है। भूति और ब्रह्मवर्चसरूप फल उसी सर्वकामनाओं में एक होने से इस स्थल में फल का सम्बन्ध नवीनरूपक बोधित नहीं होता है अपितु वह भी पूर्वसिद्ध फल का अनुवाद मात्र है। इसीलिए यह गुणविधि है।

"प्रकरणे" = अनारभ्यश्रुतवायव्य आदि वाक्य में "संस्कारश्च" = (संस्कारः एव) संस्कार ही अर्थात् दर्शपूर्णमासीय संस्कार का ही अनुवाद है। किन्तु नवीन कोई याग विहित नहीं है, "अकर्मशब्दत्वात्" = यतः कर्मशब्द = कर्म का अर्थात् याग का शब्द अर्थात् विधि नहीं है ॥ १२ ॥ यह पूर्वपक्ष है।

## यावदुक्तं वा कर्मणः श्रुतिफलत्वात् ॥ १३ ॥

**शा० भा०—न चैतदस्ति प्राकृतयोर्गुणविधौ इति। किं तर्हि? आलम्भान्तरं विधीयते निर्वापान्तरं च इति। यद्यालम्भनिर्वापौ विधीयेते, ततो न प्राकृतौ तौ विहितौ। यदि न विधीयेते, ततः प्राकृतौ लक्ष्येते। या वालम्भनिर्वापौ कर्तव्याविति। ततस्तौ लक्षयित्वा श्वेतो[1] विधातव्यो भवति, चरुश्च। तौ च भूतिकामस्य, ब्रह्मवर्चसकामस्य चेति द्वावप्यर्थौ विधेयौ स्यातां, तत्र वाक्यं भिद्येत।**

**अथवा योऽसौ विधायकः शब्दः, स लक्षयितव्योपयुक्त इति विधायकाभावादेकोऽप्यर्थो न शक्यते विधातुम्। अथ स एव लक्षयिष्यति, तेनैव च विधायिष्यते गुण इति। न मिथो विधानलक्षणसम्बन्धोऽवकल्पते। अथ धात्वर्थोऽनुवादः। प्रत्ययो विधातुमिष्यत इत्युच्यते, य आलम्भः, स एतद्गुणः[2] कर्तव्य इति। तथाऽपि न प्राकृतो लक्ष्येत। लौकिकोऽपि ह्यालम्भोऽस्ति। प्रत्ययार्थेऽनूद्यमाने प्राकृतोऽनूद्येतेति। स हि कर्तव्यो निर्ज्ञातः, न लौकिकः। अतो न प्राकृतानुवादो घटत इति, यावदुक्तमालम्भमात्रं चापूर्वं कर्तव्यम्। कर्मणः श्रुतिमूलत्वात्। श्रुतिमूलं हि कर्मेत्युक्तम्—चोदनालक्षणोऽर्थो धर्म इति। तस्मात्कर्मान्तरे ॥१३॥ पूर्वपक्षः ॥**

त० वा०— यदि ह्यालम्भनिर्वापौ विधेयत्वं न मृष्यतः।
ततो गुणविधित्वं स्याद्विधेयौ त्वत्र तौ मतौ ॥

वायव्यपदं पूर्ववदेवापेक्ष्य फलपदपरिग्रहेण तावत्प्रत्यवस्थीयते। यदि ह्यालम्भनिर्वापावनूद्य श्वेतचरू विधीयेते, ततः फलपदमनर्थकमेव स्यात्। सर्वं कामप्राप्तानुवादेऽपि पाक्षिकत्वान्नित्यवद् ग्रहणं विरुध्येत्। विशेषणत्वे वाक्यभेदः स्यात्।

अथ गुणफलसंबन्धो विधीयते, तथाऽप्यालम्भादेः प्रकृतस्याऽऽश्रयस्याभावाद्वाक्यैनैव तत्संबन्धकरणे वाक्यं भिद्येत। गुणविशिष्टालम्भविधाने तु न कश्चिद्दोषः। तेनोच्यते **कर्मणः श्रुतिमूलत्वादिति**। कर्मात्र विधेयत्वेन श्रुतिमूलम्, न गुणः। स ह्यचोदनालक्षण एव स्यात्।

अथ वा यावदुक्तमेव स्यान्न यजिमत्। कुतः? कर्मणः श्रुतिमूलत्वात्। न ह्यचोदितो यज्यर्थोऽध्यवसातुं शक्यते। न च तेन विनेह किंचिन्न सिध्यति। आलम्भनिर्वापयोरेव फलवत्त्वेन प्राधान्योपपत्तेः। न हि यदेकत्र गुणभूतं दृष्टम्, तेनान्यत्र प्राधान्यं वाचनिकमपि न प्रतिपत्तव्यमिति, किंचित्प्रमाणम्। यथावचनं

---

१. श्वेतोगुणो। २. ब. एवंगुणकः।

हि गुणप्रधानभावौ, न स्वाभाविकौ। वायव्यादिशब्दश्चात्र सर्वत्र द्रव्याणां यथा-कथंचिद्देवतासंबन्धोपपत्तेरनुवादः।

अथवा यत्केनाचिद्वाय्वादिभ्यः संकल्पितम्, तदालम्भादिभिर्योज्यमानमभ्युदय-कारि भवति। विशिष्टविधानाच्च न तत्परिग्रहेप्यतिभारः।

अथवा वायुसूर्याविवोद्दिश्य स्पृष्टम्, निरुप्तं वेत्येतावतैवेप्सितावाप्तिर्भविष्यति। न चावश्यं याग एव देवतोद्देष्टव्या। यत्र यत्र हि चोद्यते, तत्र तत्रोद्दिश्यमाना न विरुध्यते। तस्माद्यत्किंचिच्छ्वेतं वायूद्देशेन स्प्रष्टव्यमिति यावदुक्तचोदनानु-सारात्। गुणविधिपक्षे फलपदसंबन्धे वाक्यभेदमभिधायेदानीं तत्परित्यागमभ्यु-पेत्यादि ब्रवीति।

अथवा योऽसौ विधायकः शब्द इत्यादि, तस्याभिप्रायो—यदिदमनारभ्यवा-दानां प्रकृत्यर्थत्वमभिधास्यते, नैतद्वाचनिकम्, कथं तर्हि? द्वाराऽन्यथानुपपत्तिकारि-तम्। न चाऽऽलम्भनिर्वापावन्यत्रानुपपन्नौ। लोकेऽपि विद्यमानत्वादिति। तत्र यदि तावल्लौकिकव्यावृत्त्यर्थं विहितत्वेन विशेष्येते[1] ततोऽन्यविशेषणाभावाल्लिङ्गैव विशेष्टव्यौ, य आलम्भः कर्तव्यतया चोदित इति। तावता चोपक्षीणशक्तौ विधायके गुणविधानं नोपपद्यते। न ह्यसौ विधातुम्, लक्षयितुं च सकृदुच्चरितः समर्थः। केवलधात्वर्थानुवादे च लोकेऽपि गुणविधित्वप्रसङ्गः। तत्र च निष्फलत्वा-दानर्थक्यम्, न चैतावन्मात्रेणैव विनैव प्रकरणादिभिर्वैदिकालम्भनिर्वापग्रहणमुप-पद्यते। तस्मात्प्राकृतप्रामाणाभावादपूर्वयोर्विधानमिति ॥१३॥

न्या० सु०—यावदुक्तशब्देन प्रकृत्यनपेक्षोक्तेः प्राकृतालम्भनिर्वापविषयगुणविधित्व-निरासार्थतया 'न चेति भाष्येण सूत्रपूर्वार्द्धं व्याख्याय' उत्तरार्द्धव्याख्यार्थं यदीत्यादि-चरुश्चेत्यन्तं भाष्यं तात्पर्यतो व्याचष्टे—**यदि हीति**। यद्यालम्भनिर्वापाविति यदि शब्दं हेत्वर्थेऽभ्युपेत्य यस्मादालम्भनिर्वापौ विधीयेते, न तु प्रकृतौ तौ विहिताविति भाष्यावयवेन 'कर्मणः श्रुतिमूलत्वादि'ति सूत्रावयवं व्याख्याय, गुणसञ्चरितत्वाद्विध्योः कर्मविषयता न युक्तेत्याशङ्क्योत्सर्गतः समानपदोपादानेनालम्भनिर्वापयोर्विधेयत्वागमाद्यदि तौ प्रत्यभिज्ञा-नाद्विधेयत्वं न सहेते, ततो यावालम्भनिर्वापौ कर्त्तव्यावित्येवं प्राकृतौ लक्ष्येते, ततश्च तौ लक्षयित्वा श्वेतश्चरुश्च गुणो विधातव्यो भवति। प्रत्यभिज्ञानाभावात्त्वत्र तौ विधेयावेवेत्य-ध्याहारेण यदि न विधीयेत इत्यादिभाष्यं व्याख्येयमित्याशयः।

प्राप्ते कर्मणि गुणफलरूपानेकार्थविधौ वाक्यभेदापत्तेरपि गुणविधिता न युक्तेत्यभि-धानार्थं 'तौ चेत्यादिभिद्येते'त्यन्तं भाष्यमुत्तरसूत्रस्थफलशब्दसूचितार्थप्रतिपादकं व्याख्यातु-माह—**वायव्येति**। तेन विनापि वाक्यभेदोपपत्तिरुपेक्षाहेतुः। कर्मान्तरत्वे तु वाक्यभेदो नास्तीति व्यतिरेकमाह—**गुणेति**।

---

१. क० विशेष्यत।

अथ वेत्यादिभाष्यं वैदिकत्वसाम्येन बुद्धिस्थत्वस्य वैदिकालम्भनिर्वापानुवादहेतुतया पूर्वपक्षिणेष्टत्वेन विधायकस्य तल्लक्षणार्थतयानिष्टत्वादापाद्योक्तयर्थमिति सूचयितुमुपेक्ष्य, तावद्वचाख्यातेऽर्थे सूत्रोत्तरार्द्धं योजयति—**तेनेति**। 'यावदुक्तमिति भाष्येणैतदेव सूत्रमावृत्त्योत्तरविचारपूर्वपक्षे योजितम्। तदनुसन्धत्ते—**अथ वेति**। ननु फलान्वयेनेह प्रधानकर्मणो-विधेयत्वावसायान्निर्वापालम्भयोश्च संस्कारत्वप्रसिद्धेः प्राधान्यायोगात्प्राधान्यसिद्धचर्थं तत्-योग्यं यज्यर्थाध्यवसानं भविष्यतीत्याशङ्क्याह—**न चेति**। अनेन चोत्तरसूत्रस्थस्य फल-शब्दस्य संस्कारनिरासार्थतापि सूचिता।

ननु प्राधान्यस्य यज्यर्थाकल्पकत्वेऽपि वायव्यादिशब्दोक्तस्य देवतान्वयस्य यागं विनानुपपत्तेः तत्कल्पकत्वं भविष्यतीत्याशङ्क्याह—**वायव्यादीति**। आलम्भस्य स्पर्शा-वायव्यविषयत्वात्सर्वेषामालभ्यद्रव्याणां स्पर्शगुणकवायुदेवत्यत्वे सवितुः प्रसवे निर्वपामीति च मन्त्रलिङ्गात्सर्वेषां निर्वापद्रव्याणां सवित्राख्यसूर्यदेवत्यता वक्तुं शक्येत्याशयः।

एवं त्वग्नीषोमीयं पशुमालभेतेत्यादावपि वायव्यत्वापत्तेः 'सारस्वतं चरुं निर्वपेदित्यादौ च सौर्यत्वाग्नीषोमीयत्वाद्यनुवादायोगेनाव्यापकत्वादशक्तेरपरितोषात्केन चिद्यजमानेन वायवे सङ्कल्पितस्य श्वेतस्यालम्भः, सूर्याय च सङ्कल्पितस्य चरोर्निर्वापः फलार्थं विधीयतइत्य-न्यथा परिहरति—**अथ चेति**। 'आग्नेयमुपाकरोतीत्यादीनामपि यजिवाच्यकर्मवाचितात्रैव व्युत्पाद्येति सूचनायालम्भादिभिरिति बहुवचनम्।

ननु देवतान्वयस्यापि श्वैत्यादिवद्विधेयत्वपरिग्रहेऽतिगौरवं स्यादित्याशङ्क्याह—**विशिष्टेति**। परकीयस्य द्रव्यस्य क्रतौ विनियुक्तस्याऽन्यार्थे कर्मणि विनियोगानौचित्येना-ऽत्राप्यपरितोषाद्वाय्वाद्युपदेशेन श्वेतादेर्भूत्वाद्यर्थमालम्भादिकार्यमिति पूर्वपक्षिणोऽभिमतं परिहारमाह—**अथ वेति**। ननु यागं विना तद्विनोक्तं देवतात्वं न सिद्धयेदित्याशङ्क्याह—**न चावश्यमिति**। यागं विना देवतात्वानुपपत्तेरेतदधिकरणव्युत्पाद्यत्वादुद्देश्यत्वमात्रेण देवतात्वमत्रत्यः पूर्वपक्षी मन्त्रतइत्याशयः। एतदेवोपसंहरति—**तस्मादिति**। यजमानान्तर-सङ्कल्पितव्यावृत्त्यर्थम्—**यत्किञ्चिदित्युक्तम्**। इति वाक्यार्थः यावदुक्तनोदनानुसारादवसीयत-इत्यध्याहारेणेतिकरणो योज्यः।

उपेक्षितं भाष्यं पूर्वपक्षभाष्यसङ्गतिपूर्वं व्याख्यातुमवतारयति—**गुणेति**। फलपदत्यागा-भ्युपगमाद् गुणफलरूपानेकार्थान्वयविधिलक्षणवाक्याभेदाभावेऽपि सकृदुच्चरितस्य विधाय-कस्य विध्यनुवादवैरूप्यलक्षणवाक्यभेदापत्तिरपिशब्देन सूचिता। नन्वनारभ्यवादानां प्रकृत्यर्थत्वस्य तृतीये वक्ष्यमाणत्वाद्विहितत्वोपलक्षणं विनापि प्रकृत्यर्थत्वसिद्धेर्विधायकस्यो-पलक्षणोपक्षणित्वादविधायकत्वोक्तिरयुक्तेत्याशङ्क्याह— **तस्येति**। यदि तु य आलम्भः कार्यः, स श्वेतविशिष्टः कार्य इत्युपलक्षणार्थत्वं विधानार्थत्वं चेष्यते, ततो वैरूप्यं स्यादि-त्यभिधायऽर्थमथेति भाष्यं व्याचष्टे—**न हीति**। 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुःकपालान्निर्वपेदि'त्यत्र प्रतिगृह्णीयादित्यस्य विहितदानलक्षणार्थत्वम्, निर्वपेदि-

त्यस्य च यागविद्धचर्थत्वं भेदोपादानाद्युक्तमिति वैलक्षण्यसूचनार्थं मिथःशब्दव्याख्यानार्थम्—**सकृदित्युक्तम्**। अथ धात्वर्थ इति भाष्येण धात्वर्थमात्रानुवादेऽपि वैदिकत्वसामान्येन बुद्धिस्थत्वाद्विहितविषयत्वावगमे सत्यनारभ्यवादत्वात्प्रकृत्यर्थत्वसिद्धिरित्याशङ्क्य, तथेत्यनेन 'यदाहवनीये जुह्वती'त्यत्र होमस्य द्रव्यदेवतासाध्यत्वाद्देवतान्वयस्य चालौकिकत्वेन विध्येकगम्यत्वाद् द्रव्यदेवतयोश्चेहानुपदेशात्प्रकृतिविशेषानवगतेश्चातिदेशतोऽप्यलाभादरूपत्वेन विधातुमशक्यत्वादनुवाद्यत्वावगतेरदृष्टार्थत्वेनाचालौकिकत्वाद् दूरस्थवैदिकहोमानुवादो युक्तः। आलम्भस्य तु लोकवेदसाधारण्यात्, लौकिकेऽपि च भोजनादौ वैदिकप्राङ्मुखत्वादिनियमदर्शनात्सामान्यश्रुत्या वाऽऽलम्भमात्रस्य बुद्धिस्थस्यावैदिकत्वमात्रेण व्यावृत्त्यनुपपत्तेर्वैदिकविषयत्वानवगमान्न तद्वशेन प्रकृत्यर्थत्वसिद्धिरिति परिवृतम्। तद्व्याचष्टे—**केवलेति**। आनर्थक्यपरिहारार्थं लौकिकव्यावृत्तिर्भविष्यतीत्याशङ्कानिरासार्थत्वे प्रत्ययार्थ इति भाष्यं प्रत्ययार्थानुवादपक्षे एव प्राकृतालम्भानुवादो लभ्यते, नान्यथेत्येवं साधारणत्वेन व्याख्यातुमाह—**न चेति**। अत इत्युपसंहारभाष्यं व्याचष्टे—**तस्मादिति**॥ १३ ॥

भा० प्र०—पूर्वोक्त मत के समाधान में वादी ने दोषारोपण किया है कि गुणविधि मानने पर वायव्यवाक्य में एक सौर्य वाक्य में जो फल कहा गया है, वह नित्य अर्थात् नियत फल के समान उपदिष्ट होता है उसका पाक्षिक अनुवाद एवं आनर्थक्य हो जायगा। जिस कर्म के साथ जिस फल का सम्बन्ध बोधित होता है, वह उस कर्म का नियत फल होता है, इसलिए यहाँ भूति और ब्रह्मवर्चस नित्या या नियत फल है, सार्वकामिक कर्म जिस फल के लिए जब अनुष्ठित होता है, उस समय उसके प्रयोग से वही फल होता है, अन्य फल नहीं होता है, अतः अन्य फलों की उस समय अप्राप्ति होगी। अन्य फलों की सर्वथा अप्राप्ति हो ऐसी बात नहीं है, क्योंकि, प्रत्येक के उद्देश्य से स्वतन्त्र स्वतन्त्र कर्म का अनुष्ठान करने पर उस फल की उत्पत्ति होती है। इसलिए, उन फलों के पक्ष में विकल्प की प्राप्ति होगी, फल उद्देश्यभूत होने से अनुवाद होगा, इसीलिए उसका पाक्षिक अनुवाद होगा, अनुवाद का प्रयोजन न होने से आनर्थक्य अर्थात् निष्प्रयोजनता होगी। इसलिए इस स्थल में दोनों वाक्यों में गुण फल विशिष्ट आलम्भात्मक एवं निर्वापात्मक स्वतन्त्र कर्म ही होता है।

"यावदुक्तं" = जिस प्रकार कहा गया है, उस प्रकार का कर्म विहित होता है—यह मानना होगा। "वा" = निरासार्थक है। "कर्मणः श्रुतिमूलत्वात्" यतः कर्म श्रुतिमूलक अर्थात् एकमात्र शास्त्र से गम्य है॥ १३ ॥ यह द्वितीय पूर्वपक्ष है।

## यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥१४॥ सि०॥

**शा० भा०—यदुक्तं न प्राकृतयोर्गुणविधी इति। एतद् गृह्णीमः। यत्तूक्तम्—आलम्भमात्रं विधीयते, निर्वापमात्रमिति। एतदपजानीमहे। यजिमती एते**

**कर्मणी इति। कुतः ? द्रव्यफलभोक्तृसंयोगात्। द्रव्यदेवतासंयोगात्। द्रव्यदेवता-संयोगोऽत्र विधीयते, भूतिकामस्य ब्रह्मवर्चसकामस्य च। कथम् ? न ह्रीद-मेवोच्यते श्वेतमालभेतेति। यदि ह्येतावदेवोच्येत, ततः श्वेतालम्भसम्बन्धो-ऽवगम्यते। इह हि श्वेतं वायव्यमालभेतेत्युच्यते। तेन श्वेतवायव्यसम्बन्धो विधीयते। यथा पटं वयेति पटवयनसम्बन्धो[1] विधेयोऽवगम्यते। पटं दीर्घं वयेति[2] पटस्य दीर्घता विधीयते। दीर्घशब्दप्रयोगात्। एवमिहापि सौर्यवायव्य-शब्दप्रयोगाद् द्रव्यदेवताभिसम्बन्धो विधेय इति गम्यते। इतरथा देवताशब्दः प्रमादसमाम्नात[3] इति गम्येत।**

**नन्वत्रापि श्वेतं वायव्यं कुर्यात्, तं चाऽऽलभेत इत्यर्थद्वयविधानाद्भिद्येतैव वाक्यम्। नेति ब्रूमः। न ह्यालभेतेत्यस्यायमतिभारो, यद् द्रव्यदेवतासम्बन्धेन[4] पुरुषप्रयत्नं ब्रूयात्। तं चाऽऽलभेतेत्यर्थाविशिष्टम्[5]। श्रुत्यैव हि पुरुषप्रयत्नो विशिष्टो गम्यते। वाक्येन च द्रव्यदेवताश्रय[6] इति। नात्र द्वाभ्यां वाक्याभ्यां प्रयोजनम्। यथा रक्तमश्वं योजयेति यदा गुणविधिपरं भवति वाक्यम्, तदा द्वाभ्यां वाक्याभ्यां प्रयोजनं गुणद्वयविधाने। अथ शोणमानयेत्युच्येत, तत्र गुणविधिपरेऽपि वाक्ये पर्यवसित एव गुणद्वयविधानम्। श्रुत्यैव विशिष्टगुण-द्रव्यस्य[7] प्रतीतत्वान्न भवत्येकस्य वाक्यस्यातिभारः। एवमीहापीति। सम्बन्धश्च बहुभिः पदैर्विशिष्ट एक एवोच्यत इत्येकार्थत्वम्। विभज्यमानानि चात्र पदानि साकाङ्क्षाणीत्युपपन्नमेकवाक्यत्वम्। न च यागमन्तरेण देवतायै द्रव्यं संकल्पित-मित्येष सम्बन्धोऽवकल्पते। तस्माद्यजिमती एते कर्मणी इति ॥४॥ सिद्धान्तः ॥**

त० वा०—यथा फलपदं प्रेक्ष्य गुणपक्षो निराकृतः।
देवतापदमालोक्य तथैवाऽऽलम्भमात्रता ॥

विधिस्तावदुत्तरोत्तरपदानुरोधेन द्रव्यदेवतापदसम्बन्धसंक्रान्तः। स चान्य-थानुपपत्तेराक्षिप्तयजिक्रियः सन्विधीयते। न ह्येनमन्या क्रिया सम्पादयितुं समर्था यदि देवतोद्देशेनापरित्यजन्नेव द्रव्यमालभेत। न तद्वायव्यं कृतं स्यात्। न च प्रसिद्धवायुदेवत्यमेव स्प्रष्टव्यमित्यवगम्येत। अनुष्ठानसम्पाद्यत्वाद्देवतात्वस्य। तेनावश्यं वायुमुद्दिश्य श्वेतगुणकं द्रव्यं दातव्यम्। अतश्च यजिविधानमेतदिति निश्चीयते। तथा च लक्षणं करिष्यति 'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्' इति। ततश्चाऽऽलम्भनिर्वापौ चोदकप्राप्तावेवानुवदिष्येते। तत्रा-ऽऽलम्भविशिष्टत्वादिति गौरवोपन्यासः फल्गुरेव कथञ्चिदभ्युपेत्यवादेनोपन्यस्त इति, नातीवाऽऽदर्तव्यः ॥ १४ ॥

---

१. ब. पटवान। २. ब. वयेदिति। ३. ब. प्रमादसमाम्नाय। ४. ब. सम्बद्धं। ५. ब. वा। ६. ब. स इति। ७. ब. गणस्य द्रव्यस्य।

न्या० सु०—यावदुक्तसूत्रस्याद्यपक्षनिरासार्थत्वात्, तत्रैव प्राप्ते कर्माणि गुणफलान्वयविधौ वाक्यभेदसूचनार्थे संस्कारत्वनिरासूचनार्थे च फलपदे फलसंयोगाच्चेति प्रयोक्तव्ये द्रव्यदेवतयोर्यागकर्मणि सति सम्बन्धोपपत्तेः, फलस्य च कर्मान्तरे प्रधानभूते सति सम्बन्धोपपत्तेर्यागोऽयमपूर्वः प्रधानभूतो विधीयते। न तु प्रकृते कर्मणि संस्कारके गुणविधिरित्यर्थत्रयस्य लघुना सूत्रेणोक्तिसम्भवे सूत्रगौरवस्यानाश्रयणीयत्वादिह सूत्रे फलपदं प्रयुक्तं फलसंयोगमात्रेण वाक्यभेदानापत्तेर्द्रव्यफलसंयोगस्य वाक्यभेदहेतुत्वसूचनार्थं मध्ये फलपदप्रयोगः सूक्तादेर्देवतासंयोगेऽपि यागाकल्पनात् द्रव्यस्यैव देवतासंयोगो यागकल्पको, नान्यस्येति सूचनार्थं फलशब्दव्यवहितस्यापि द्रव्यशब्दस्य भोक्तृशब्दान्वयो विवक्षितः। देवतायाश्च भोक्तृत्वाभावेऽपि स्तुतिभोक्तृलक्षणस्य देवतात्वस्य यागकल्पकत्वात्तद्व्यावृत्त्या त्यज्यमानहविरुद्देश्यत्वात्मकहविर्भोक्तृलक्षणस्य देवतात्वस्य यागकल्पकत्वसूचनार्थं भोक्तृशब्दः। अत्र भाष्यकृता द्रव्येति भाष्येण द्रव्यभोक्तृसंयोगं व्याख्याय, फलसंयोगव्याख्यार्थम्—**भूतीत्युक्तम्**। ततस्तौ चेति भाष्येणानागतावेक्षणेन प्रागेव व्याख्यातत्वात्पुनरुक्तमाशङ्क्य, दृष्टान्ततया व्याचष्टे—**यथेति**। समानपदोपात्तालम्भत्यागेन पदान्तरोपात्तद्रव्यदेवतान्वयविधानं न युक्तमित्याशयेन 'कथमिति भाष्येण पृष्ट्वा' यदि हीत्यादिना प्रमादसमाम्नाय इति गम्येतेऽन्तेन द्रव्यदेवतान्वयविधिरुपपादितः। तत् तात्पर्यतो व्याचष्टे—**विधिस्तावदिति**। 'नन्विति भाष्येण द्रव्यस्य देवतान्वयविधावपि धात्वर्थान्वियस्यापि प्रतीतस्य त्यागायोगाद्विधेयत्वावश्यम्भावेन वाक्यभेदमाशङ्क्य, न द्रव्यस्य देवतया धात्वर्थेन चान्वयो विधेयो, येन वाक्यभेदः स्यात्, किं तु भावनैव द्रव्यदेवताभ्यां धात्वर्थेन च विशिष्टा विधेया। तस्याश्च श्रुत्या धात्वर्थविशिष्टत्वावगतेः पदान्तरसमभिव्याहाराद् द्रव्यदेवतासम्बन्धविषयत्वावगतेरनेककारकान्वयसहत्वाच्च सम्बन्धश्चेति सम्बन्धशक्ताया भावनाया वैशिष्ट्ये विनानुष्ठेयत्वायोगात्तद्विशिष्टाया एव बहुपदप्रतिपाद्यत्वेनैकपदमात्रेण नैराकाङ्क्ष्यायोगात् वाक्यभेदानापत्तिरित्यभिधानार्थं नेतीत्याद्युपपन्नमेकवाक्यत्वमित्यन्तं भाष्यमुपेक्ष्य, एतेषामिति सूत्रावयवव्याख्यानार्थं न चेति भाष्यं व्याचष्टे—**स चेति**। त्यागं विनाप्युद्देशमात्रेण देवतान्वयोपपत्तेर्नान्यथानुपपत्त्या यागकल्पनेत्याशङ्कां नावश्यमिति पूर्वपक्षवार्त्तिकोक्तां परिहरति—**न हीति**। ब्राह्मणोद्देशेन पक्वेऽप्यन्ने तदुद्देशेन त्यागं विना ब्राह्मणसम्बन्धाप्रसिद्धेरव्याप्रियमाणेऽपि च तुभ्यमिदं न ममेति तदुद्देशेन त्यागे कृते तत्सम्बन्धप्रसिद्धेरन्वयव्यतिरेकाभ्यामुद्देशत्यागलक्षणैव क्रिया सम्बन्धापादिकाऽवसीयत इत्याशयः। एतदेव विवृणोति—**यदीति**।

यदपि केन चिद्यजमाने वाय्वाद्युद्देशेन त्यक्तस्यालम्भानुष्ठानं शङ्कितम्, तदप्यालम्भादेः फलान्वयेन प्रधानकर्मत्वावसायात्तदन्वयिनो वायव्यादिपदस्योपादेयार्थत्वावगतेर्देवतान्वयस्यानुष्ठानापाद्यत्वावगमादयुक्तमित्याह—**न चेति**। एतदेवोपसंहरति—**तेनेति**। **तस्मादिति**। सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**अतश्चेति**।

कथं देवतात्वस्यानुष्ठानं सम्पाद्यते इत्यपेक्षायामाह—**तथा चेति**। द्रव्यविषया त्यागक्रिया, देवताविषया चोद्देशक्रिया। तयोः समुदायद्वन्द्वैकवद्भावानिर्दिष्टं यजतिचोदनानुष्ठापयति देवतोद्देशद्रव्यत्यागसमुदाये तस्या लोके कृतार्थत्वप्रसिद्धेरिति चतुर्थाध्यायसूत्रार्थस्य टुप्टीकायां स्वयं वक्ष्यमाणत्वाद्देवतात्वस्य यूपादिवत्प्रागसिद्धेस्त्यज्यमानं द्रव्यं प्रत्युद्देशेनाग्न्यादिदेवतां कृत्वा द्रव्यं त्यजेदिति देवतोद्देशपूर्वकं द्रव्यत्यागात्मकयागप्रयोगस्वरूपकथनार्थेनानेन सूत्रेणानुष्ठानापाद्यता देवतात्वस्योक्तेत्याशयः।

लक्षणार्थत्वस्य बृहन्मध्यमटीकयोर्टुप्टीकायां च निषेधात्प्रयोगलक्षणाभिप्रायस्तत्रत्यभाष्ये लक्षणशब्द इति सूचनार्थम्—**लक्षणं करिष्यतीत्युक्तम्**। विधिशब्दादरोऽप्यनुष्ठानापाद्यत्वहेतुक एव, अन्यथा पर्यायेणाप्यग्न्याद्युद्देशेन द्रव्यस्याग्न्यादिदेवत्त्वसिद्धेः, तावन्मात्रस्य चाग्नेयादिशास्त्रार्थत्वात्तदादरो निष्प्रमाणकः स्यात्। ननु द्रव्यदेवताविशिष्टयागविध्यभ्युपगमेऽपि श्रुतस्यालम्भादेरप्राप्तत्वेनानुवादायोगात् तस्यापि विधेयत्वावगतेर्धातुसम्बन्धाधिकारविहितप्रत्ययाभावाच्च क्रियाद्वयान्वयाप्रतीतेरनेकार्थविधिलक्षणो वाक्यभेदः स्यादित्याशङ्क्याह—**ततश्चेति**। कथं तर्हि भाष्यकृता पुरुषप्रयत्नस्यालम्भविशिष्टतायाः समानपदोपादानलक्षणया श्रुत्यावगतेर्वाक्याच्च द्रव्यदेवताविषयत्वावगतेर्वाक्यभेदं विनापि क्रियाद्वयविध्युपपत्तिरुक्तेत्याशङ्क्याह—**तत्रेति**। सकृदुच्चरितस्य विधायकस्यानेकार्थविधिशक्त्यभ्युपगमादावृत्तिलक्षणवाक्यभेदपरिहारेऽप्येकस्यानेकार्थे तात्पर्यात् गौरवेण लक्षणवाक्यभेदोऽपरिहार्य इति सूचनार्थो गौरवशब्दः ॥१४॥

भा० प्र०—सिद्धान्ती का कथन है कि "दर्शपूर्णमास" का आलभ्य एवं निर्वाप नहीं कही गई है, किन्तु, इसी कारण से इस स्थल में स्वतन्त्र आलभ्य एवं निर्वाप विहित होता है—यह नहीं कहा जा सकता है, क्योंकि, आलभ्य और निर्वाप स्वयं याग नहीं है। इस स्थल में याग का रूप द्रव्य और देवता की स्पष्ट प्रतीति हो रही है। तद्धित प्रत्ययान्त "वायव्य" एवं "सौर्य" इन दोनों की प्रकृति से देवता और प्रत्यय अंश से द्रव्य की प्राप्ति होती है, द्रव्य और देवता का उल्लेख रहने पर अर्थापत्ति के बल से याग कल्पित होता है, क्योंकि' यही याग का स्वरूप है। अतः, 'यज्' धातु का प्रयोग न होने पर भी कोई क्षति नहीं है।

"पटं वय" यह कहने पर केवल वयन की ही कर्तव्यता अवगत होती है, पट और वयन का सम्बन्ध विधेय होता है, इस स्थल में केवल "श्वेतमालभेत" एवं "चरुं निर्वपेत्" यह उल्लेख रहता है, किन्तु, "दीर्घं पटं वय" यह कहने पर जैसे दोर्घ शब्द का प्रयोग रहने पट की दीर्घता ही विहित होती है, वैसे ही इस स्थल में भी "वायव्यम्" एवं "सौर्य्यम्" इन दो पदों का उल्लेख रहने से द्रव्य और देवता का सम्बन्ध विहित होता है अर्थात् स्वतन्त्र याग विहित होता है। आलभ्य और निर्वाप के बिना इस स्थल में याग के विषय का विधान किया जाता है—यह सम्भव नहीं है अतः, उसका

अर्थापत्ति के द्वारा लाभ होता है। अर्थापत्ति से लभ्य उस आलभ्य और निर्वाप का अनुवाद कर उससे युक्त स्वतन्त्र याग का विधान किया जाता है, यथोक्त ऐश्वर्य एवं ब्रह्मवर्चस् ही उसका फल है।

"यजतिः" = याग अर्थात् स्वतन्त्र याग होगा, "तु" = यह पूर्वपक्ष का निरास करने के लिए है, "द्रव्यफलभोक्तृसंयोगात्" = क्योंकि, द्रव्य, फल एवं भोक्ता अर्थात् सम्बन्ध "एतेषां प्रधानकर्मसम्बन्धात्" = क्योंकि, प्रधान कर्म के साथ ही द्रव्य फल और देवता का सम्बन्ध रहता है ॥ यह सिद्धान्त पक्ष है ॥१४॥

## लिङ्गदर्शनाच्च ॥१५॥

**शा० भा०—लिङ्गं खल्वप्येतमर्थं दर्शयति। सोमारौद्रं चरुं निर्वपेत इति प्रकृत्य, 'परिश्रिते याजयेत्' इति परिश्रयणविधिः। एतस्य वाक्ये यजतिशब्देन संकीर्तनमवकल्पते[1], यदि यजिमती एते कर्मणी। अथ प्रकृतौ गुणविधानम्, यावदुक्तं वा, यजतिशब्देनानुवादो[2] नावकल्पेत। तस्मादवगच्छामो[3] यजिमतो इति ॥१५॥ सिद्धान्ते हेतुः ॥**

**इति पञ्चमं द्रव्यदेवतासंयोगे यागविधायकत्वाधिकरणम् ॥५॥**

त० वा०—'सोमारौद्रमि'त्युक्ते विनाऽपि यजतिशब्देन परिश्रयणविधिपरे वाक्ये यजतिनाऽनूद्यमाने यजतिमत्कर्मविधायित्वमेवमादीनामित्यवगम्यते। अग्नीषोमीयेऽपि चानेनैव यजिमत्त्वसिद्धिः। पूर्वं चैतावदेव विचारितम्, किं प्रकृतानुवादित्वमुत विधायकत्वमिति। सिद्धे तु विधायकत्वे किमात्मकं तत्कर्मेत्येतदधिकरणाधीनमेवैतदित्यपौनरुक्त्यम् ॥ १५ ॥

इति पञ्चममं द्रव्यदेवतासंयोगे यागविधायिकत्वाधिकरणम् ॥ ५ ॥

न्या० सु०—लिङ्गत्वमुपपादयति—**सौमारौद्रमिति**। यजतिशब्देन विनाप्युक्ते गुणविधिपरे वाक्ये यजतिनानुवादः सौमारौद्रवाक्ये यागविध्यभावे न युज्यतइत्याशयः। ननु पशुसोमाधिकरणव्युत्पादितयजिवाच्यकर्मविधावप्यग्नीषोमीयवाक्यन्यायेनेहापि यजिवाच्यकर्मविधायित्वसिद्धेः पुनरुक्तमेतदधिकरणमित्याशङ्क्याह—**अग्नीषोमीयेऽपि चेति** ॥१५॥

भा० प्र०—पूर्वोक्त निर्वापादि याग हैं, इसका अन्य भी कारण है, "सोमारौद्रं चरुं निर्वपेत्" इस वाक्य में निर्वाप का विधान किया गया है, क्योंकि उसी के प्रकरण में श्रुति कहती है कि "परिश्रिते याजयेत्" इस स्थल में इस पद में यज् धातु के द्वारा

---

१. ब. संकीर्तनमनुवादोऽवकल्पते। २. ब. नानुवादोऽवकल्पेत।

३. ब. तस्मादप्यवगच्छामो। क. विशिष्टत्वातिगौरवो।

निर्वाप का निर्देश होने से उससे युक्त याग का ही विधान किया गया है—इसको व्यक्त किया गया है।

इस प्रसङ्ग में वार्तिककार ने कहा है कि नियम के अनुसार अग्निषोमीय विधि का भी यागत्व सिद्ध होता है। किन्तु ऐसी स्थिति में पशुसोमापूर्वताधिकरण का (द्वितीय अध्याय द्वितीय पाद छठे अधिकरण १७ से २० सूत्रों में) जो विषय है उसके साथ पुनरुक्त होगी—ऐसी बात नहीं है। क्योंकि, ''अग्निषोमीयं पशुमालभेत' इस वाक्य की विधायकता प्रतिपादित है और इस स्थल में स्वरूप का विचार है। आलम्भ्य अर्थात् वध्य पशु का द्रव्य और अग्नीषोम देवता है यह इस अधिकरण के विचार के द्वारा निर्णीत होता है।

''लिङ्गदर्शनात् च'' = लिङ्ग अर्थात् ज्ञापक वाक्य देखा जाता है, अतः, इसको याग कहना होगा।

यह पञ्चम द्रव्यदेवतासंयोग में यागविधायकत्व अधिकरण है ॥ १५ ॥

**अथ षष्ठं देवतासंयोगाभावे यागाविधायकत्वाधिकरणम्।**

## [६] विशये प्रायदर्शनात् ॥१६॥ सि०।

**शा० भा०—किमिहोदाहरणम्? न तावत्सूत्रेणैव परिगृहीतम्। यथा, अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते इति। नापि च साध्यं प्रतिज्ञातम्। यथा अयनेषु चोदनान्तरम्। केवलं विशये—संशये प्रायदर्शनं हेतुरिति निर्दिश्यते। कस्यायं हेतुरिति, न विजानीमः। प्रकृतं[1] यजिमदेतत्कर्मेति तदपि न सम्बध्यमानमिव पश्यामः। तदेतदगमकं सूत्रमेव[2] तावदनर्थकम्। अथ काऽत्र प्रतिज्ञा? कश्च संदेह इति वक्तव्यम्? वृत्तिकारवचनात्प्रतिज्ञाम्, संशयं चावगच्छामः। अत्र भगवानाचार्य इदमुदाहृत्य वत्समालभेत वत्सनिकान्ता हि पशव इति। इमं संशयमुपन्यस्यति स्म—किं यजिमदभिधान एष आलभतिः, उताऽऽलम्भमात्रवचन इति। उपपद्यते चैतदुदाहरणम्, संशयश्च। तत्र च पूर्वपक्षं प्रतिजानीते—स्म यजिमदभिधान इति। इदं तु प्रत्युदाहरणसूत्रं पूर्वस्याधिकरणस्य। नात्र पूर्वपक्षेणाऽतीव प्रयोजनम्। तथाऽपि पुरुषाणामुच्चावच[3] बुद्धिविशेषानालोच्य भवति मन्दानां सामान्यतो दृष्टेनाप्याशङ्का। साऽपि निवर्तनीया। न हि मन्दविषेण वृश्चिकेनापि दष्टो म्रियेत न जातुचित्कदाऽपि तत्र चिकित्सा नाऽऽदरेण कर्तव्या भवेत्। अतस्तां निवर्तयितुं पूर्वपक्षमुपन्यस्यति स्म। आलभतिरस्माभिः प्राणिसंयुक्तो यजिमदभिधानो दृष्टः। अयमप्यालभतिः प्राणिसंयुक्त एव। तेनायमपि यजिमद्वचन एवेति भवति कस्यचिदाशङ्का।**

---

१. ब. यदमि प्रकृतं। २. ब. सूत्रमेतावत्खल्वत्र। ३. ब. उच्चावचान्।

**अथवा यजिमदभिधानो दृष्ट आलभतिः प्राणिसंयुक्तः, तस्यायमनुवादो वत्सविधानार्थः। तथा च फलं न कल्पयितव्यं भविष्यतीति। एवं प्राप्ते।**

**ब्रूमः—अस्मिन्संशये आलम्भमात्रं संस्कारः। कुतः? प्रायदर्शनात्। अत्रा[1]-न्यान्यपि संस्कारकर्माणि प्रायभूतानीत्युच्यन्ते। तत्रैतदपि श्रूयते। प्रायादपि चार्थनिश्चयो भवति। यथा, अग्रचप्राये लिखितोग्रच इति गम्यते। ननु लिङ्गं प्रायदर्शनेन सिध्यति, तथा वर्णयितव्यन्। कथं च प्रायदर्शनं हेतुः। न्यायतः प्राप्तौ सत्याम्। कः पुनर्न्यायः। देवतासंबन्धाभावान्न यागवचनः। दृष्टार्थत्वाच्च वत्स आलभ्यमानो गां प्रस्नावयिष्यतीति[2]। तस्मादेवं न्यायप्राप्ते प्रायदर्शनं द्योतकं भवति। तस्मादालम्भमात्रं संस्कारः॥ १६॥**

त० वा०—सूत्रेष्वेव हि सत्सर्वं यद् वृत्तौ यच्च वार्तिके।
सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितम्॥

इति ये वदन्ति, तान्प्रत्युच्यते। न किंचित्साधनमप्रदर्शितविषयं स्वार्थं साधयति। सूत्रकारेण चेह हेतुमात्रमुपात्तम्। न चार्थप्रकरणादिभिरप्युदाहरणप्रतिज्ञा-संशय-हेतूनामन्यतममुपलभ्यते। तस्मादगमके सूत्रे सति अवश्यं दोषप्रतिसमाधानार्थं वृत्तिकारादिभिर्यतितव्यम्। सत्येव सम्भवेऽध्याहारादिवर्जनमुक्तम्। सर्वथा शिष्यप्रज्ञासंस्कारे सूत्रकारोदीनां प्रवर्तमानानां येनैव तदनुगुणं यत्कृतम्, तदेव ग्रहीतव्यम्, नासद्ग्रहः कर्तव्यः। इदं[3] सूत्रकारेण नोपात्तम्, इदं वृत्तिकारेणै-तत्प्रदर्शनार्थमेतद्वर्णयन्ति।

तदिह भगवानुपवर्षः किलाग्निहोत्रे धेनुदोहाधिकारे श्रुतमिदं वाक्यमुदाहृतवान् 'वत्समालभेत' इति। तत्र च पूर्ववदेव त्रेधा संशयमुपन्यस्तवान्। किं प्राकृत एवाऽऽलम्भे वत्सो विधीयते, तथाऽऽलम्भमात्रम्[4], अथवा यजतिमदेतत्कर्मेति। तत्र विशेषणाभावात्प्राकृतप्रत्ययो नास्तीति पूर्वाधिकरणसिद्धमेवेति नोपन्यस्तम्।

तेनैवानुक्रमेण यजिमदभिधानबुद्धौ प्रसक्तायामपवादोऽयं क्रियते। तत्र भोक्तृ-संयोगप्रत्युदाहरणत्वाद्गतप्रायोऽपि पूर्वपक्षः श्रोतृबुद्धिवैचित्र्यात्क्रियते। यो नाम तार्किकवासनया सामान्यतोदृष्टेन वेदार्थमुन्निनीयेत्, तस्य तन्निवृत्तिरप्रदर्शिताशङ्का न शक्या कर्तुमिति प्रदर्श्यते। तत्र केषाचित्पूर्वाधिकरण एवाऽऽलभतिर्यजतिपर्याय-त्वेन प्रसिद्धः, अन्येषां यज्यनुमापकत्वेन, तदुभयमत्रापि तथैव मन्यन्ते। तत्रापूर्व-यागविधानम्, प्राप्ते वा वत्सविधानमिति पूर्वपक्षे द्वैतम्।

सिद्धान्तस्तु द्रव्यदेवतासम्बन्धान्यथानुपपत्त्या पूर्वमस्माभिर्यजिः कल्पितो, नादृष्टपूर्वशक्त्यालभत्यभिधानेन, व्यभिचार्यनुमानाभासेन वा। न चेहासावस्तीति

१. ब. यत्रन्यानि। २. प्रस्तावयिष्यतीति।
३. क० पदं। ४. क० उभयं।

यावदुक्तता । तथा च दोहनादिसंस्कारकर्मप्रायदर्शनमुपपद्यते । दृष्टार्थत्वं च गोप्रस्नवनहेतुत्वात् ॥१६॥

न्या० सु०—अपरिपूर्णार्थस्यापि सूत्रस्य पटुव्याख्यानात्परिपूर्णार्थत्वोपपत्तेरगमकत्वाशङ्का न युक्तेत्याशङ्क्य, सूत्रार्थस्य वृत्तिकारादिभिर्व्याख्येयत्वात् सूत्रानुक्तोऽर्थो वृत्तिकारादिभिर्व्याख्यातोऽप्यग्राह्य इति ये वदन्ति, तान्प्रत्यस्य सूत्रस्यागमकतापत्तिरुच्यतइत्याह—**सूत्रेष्वेव हीति** । वृत्तिवार्त्तिकयोर्यत्सर्वमुच्यते, तत्सर्वं सूत्रारूढं चेत् ततो ग्राह्यम्, नान्यथेति श्लोकार्थः । किमुक्यतइत्यपेक्षायामाह—**न किं चिदिति** । विषयशब्देनोदाहरणसाध्ययोर्द्वयोरपि परिग्रहान्न विजानीम इत्यन्तं भाष्यमनेन व्याख्यातम् । पूर्वाधिकरणस्थसंस्कारशब्दानुषङ्गेण वत्सालम्भस्योदाहरणत्वज्ञानम्, यावदुक्तशब्दानुषङ्गेण च साध्यज्ञानं भविष्यतीत्याशङ्क्य, वत्सालम्भस्याग्निहोत्रप्रकरणाधीतत्वेनाऽनारभ्याधीतसंस्कारविषयेण संस्कारशब्देनोपादानायोगाद्यजिमत्त्वसाध्यव्यवहितस्य च यावदुक्तत्वसाध्यस्यानुषङ्गायोगात्तत्परिहारार्थं प्रकृतमिति भाष्यमुपलक्षणार्थत्वेन व्याचष्टे—**न चेति** । तदेतदित्यगमकत्वोपसंहारभाष्यमगमकत्वोपन्यासस्य वृत्तिकाराद्युक्तार्थाग्राह्यत्वशङ्कानिवृत्त्यर्थत्वविवरणार्थं सूत्रानुक्तमपि प्रतिज्ञाद्यवश्यं वृत्तिकारादिभिर्वाच्यमित्यभिधानार्थेनैतावदिति भाष्येण सह व्याचष्टे—**तस्मादिति** ।

श्रुतार्थापत्त्या प्रतिज्ञाऽप्यध्याहारस्य सूत्रकाराभिप्रेतताऽवसीयतइत्याशयः । नन्वध्याहारादिभिः सूत्रव्याख्या (जिज्ञासा सूत्रारम्भभास्य[1])शास्त्रादौ निषिद्धेत्याशङ्क्याह—**सत्येव चेति** । ननु सामान्यतः किं चित्प्रतिज्ञाद्यध्याहार्यमित्यर्थापत्त्यावगमे सूत्रकाराभिप्रेतस्य तद्विशेषस्य निर्द्धारयितुमशक्यत्वादुत्सूत्रत्वं स्यादित्याशङ्कानिरासार्थं वृत्तिकारेति भाष्यं व्याचष्टे—**सर्वथेति** । युक्तिगम्येऽर्थे पुरुषविशेषस्यानादरणीयत्वाद्युक्तियुक्तं यद्वृत्तिकारादिभिरुक्तम्, तत्सूत्रकारानुपात्तत्वान्न ग्राह्यमित्यसदाग्रहो न कार्य इत्याशयः । एवमेव वार्त्तिककाराद्युक्तमपि वृत्तिकारानुपात्तत्वमात्रेणाग्राह्यं न भवतीत्यनिदेशार्थमिदम्—**वृत्तिकारेणेत्युक्तम्** । सूत्रकारानुक्तस्याप्यर्थस्य वृत्तिकाराद्युक्तस्य ग्राह्यत्वप्रदर्शनायैतत्भाष्यमित्यस्माभिर्यदुक्तम्, तत्पूर्वे अपि व्याख्यातारो वर्णयन्ति, न त्वस्माभिः स्वोत्प्रेक्षामात्रेणोक्तमित्याह—**एतत्प्रदर्शनार्थमिति** । वर्णयतीत्येकवचनपाठे अपि एतत्प्रदर्शनार्थं भाष्यकृत्सूत्रस्यागमकत्वं वृत्तिकारव्याख्यानं च वर्णयतीत्यूपसंहारार्थत्वेन व्याख्येयम् ।

वृत्तिकारोक्तोदाहरणसन्देहप्रदर्शनार्थमत्रेति भाष्यं व्याचष्टे—**तदिति** । न केवलं वृत्तिकारवचनादिमावुदाहरणसन्देहौ ज्ञायेते, किं तु 'पूषासीति वत्समुपासृजती'ति वत्सालम्भे पूषशब्दवन्मन्त्रविधानाद्यागकल्पकदेवतासंयोससन्देहवाचिविषयशब्दपर्यालोचनयापीत्यभिधानार्थेनोपपद्यते चेति भाष्येणोक्तस्य युक्तियुक्तत्वस्य सूचनार्थः किलशब्दः ।

---

१. अयं पा० २ पु० ना० ।

ननु वृत्तिकारेण त्रेधा सन्देहस्योपन्यस्तत्वे कस्मात् भाष्यकृता अग्नीषोमीयवत्सविधिपक्षः सन्देहकाले नोपन्यस्त इत्याशङ्क्यातितुच्छत्वमनुपन्यासकारणमाह—**तत्रेति**। लिङः प्राकृताग्नीषोमीयपश्वालम्भविशेषणत्वाभ्युपगमे विधायकाभावापत्तेरित्याशयः। नन्वेवं सति यागकल्पकदेवतासंयोगाभावेन यजिमदभिधानपक्षोऽपि तुच्छत्वान्नोपन्यसनीय इत्याशङ्क्याह—**तेनैव त्विति**। सूक्तवाकन्यायेन 'पूषासी'ति मन्त्रस्य श्रुत्या करणत्वेन विनियुक्तस्य देवताकल्पनद्वारा यागकल्पकत्वबुद्धिर्भविष्यतीति, तेनैकद्रव्यदेवतासंयोगप्रक्रमेणेति प्रकारवाचिना प्रक्रमशब्देनोक्तम्। तत्र चेति भाष्येण वृत्तिकारोक्तं पूर्वपक्षमुपन्यस्य, समीपधारणवाचिनोपासृजतिना तदाक्षिप्तालम्भलक्षणहेत्वभावात्सन्निहितवाच्यसिशब्दसमानाधिकरण्याच्च पूषशब्दस्य पुष्टियोगेन वत्सवाचित्वप्रतीतेर्देवताकल्पकत्वाभावाद्धेत्वभावमाशङ्क्येदं त्वित्यनेन देवतासंयोगप्रत्युदाहरणार्थत्वात्सूत्रस्य न पूर्वपक्षोपपादने यतितव्यमित्युक्ते पूर्वपक्षोपन्यासस्तर्ह्यनर्थक इत्याशङ्क्य तथापीत्यादिनोपन्यस्यति स्मेत्यन्तेन मन्दाशङ्कानिवृत्त्यर्थतोपन्यासस्योक्ता। तत्सर्वं व्याचष्टे—**तत्रेति**। निरासमात्रं तर्हि कार्यं नोपन्यास इत्याशङ्कानिरासार्थत्वेनातस्तामिति भाष्यावयवं व्याचष्टे—**यो नामेति**। सामान्यतो दृष्टोक्त्यर्थमालभतिरितिभाष्यम्। अग्नीषोमीयं पशुमालभेतेत्यादिवाक्यस्थस्याप्यालभतेर्यजिवाच्यकर्मवाचित्वाभावात्साध्यविकलदृष्टान्तत्वापत्तेरयुक्तमाशङ्क्य द्वेधा समाधत्ते—**तत्रेति**। धातूनामनेकार्थत्वात्स्त्रीसंयुक्तस्य गमेर्मैथुनवाचित्ववत्स्पर्शवाचिनोऽप्यालभतेः प्राणिसंयुक्तस्य यागवाचित्वकल्पना न विरुद्धेति।

यथाश्रुतभाष्यसमर्थनार्थं केचिदाहुः स्त्रियं गच्छेदित्यत्र मैथुनप्रत्यायकहेत्वन्तराभावाद् गमेरेव तद्वाचित्वकल्पनं युक्तम्, यागप्रतीतेस्तु द्रव्यदेवतान्वयानुपपत्त्यैव सम्भवान्, तदन्वयसिद्धयै च तद्वाचिनो यजेरप्यन्यथानुपपत्त्यैव कल्पनोपपत्तेः, लोके चालभतेर्यागे प्रयोगादर्शनाद्भाष्यस्य चाभिदधातेवचेश्च लक्षणया ज्ञानवाचित्वोपपत्तेर्नालभतेर्यागवाचित्वकल्पना युक्तेति स्वमतम्। आलभतेः पूर्वाधिकरणे यागानुमापकत्वानभिधानात्प्राणिसंयुक्तो यत्रालभतिः तत्र यागानुमानमिति व्याप्तेर्यज्यनुमानानुमानत्वेनेत्यनुमानशब्दावृत्त्या व्याख्येयम्। तथैवेत्यालभतिना यागानुमानातिदेशाद्यागानुमानहेतुः पूषासीति मन्त्रवर्णकल्पदेवतान्वयः सूचितः।

कीदृगनेन सामान्यतोदृष्टेन पूर्वपक्षः कृत इत्यपेक्षायामाह—**तत्रेति**। उपपदाक्रान्तशक्तित्वेन विधायकस्य कर्मविधायित्वायोगाद्धातोरनुवादार्थत्वावगतेः। कुतोऽनुवाद्यप्राप्तिरित्यपेक्षायां प्राणिसंयुक्तत्वेनाग्नीषोमीयालभतेर्दूरस्थस्यापि बुद्धिस्थत्वात् तस्य च देवतान्वयद्वारा यजिवाच्यकर्मज्ञापकत्वदर्शनाद्वत्समालभेतेत्यालभतिरग्नीषोमीयवाक्यविहितस्य यजिवाच्यकर्मणोऽनुवादो वत्सविध्यर्थ इति पूर्वपक्षान्तरोक्त्यर्थमथ वेति भाष्यं व्याचष्टे—**प्राप्ते वेति**। द्विविधं पूर्वपक्षमुपसंहरति—**इतीति**।

पूषासीति मन्त्रो वत्सालम्भे विनियुज्यते न चेति सन्देहात् पूषशब्दो देवतावाची न वेति सन्देहाच्च वत्सालम्भे देवतासंयोगसन्देहो योग्यत्वाद्व्यवहितानुषक्तयावदुक्तत्वरूपसाध्य-

सिद्धयै विषयशब्देन हेतुतयोक्त इत्येवं सूत्रव्याख्यां सूचयन् सिद्धान्तमाह—**सिद्धान्तस्त्विति**। नालभतिना यागाभिधानमभिप्रेत्य पूर्वाधिकरणे यागः कल्पित इत्युक्ते, कस्मादित्यपेक्षायां यागाभिधाने तस्य लोके शक्त्यदर्शनादिति हेतुगर्भं विशेषणं सामान्यतोदृष्टस्याभासत्वे, अध्वर्युमालभेतेत्यादौ व्यभिचारो हेतुगर्भं विशेषणं देवतासम्बन्धाभावादिति भाष्येण विषयशब्दस्य मृदूक्त्या देवतान्वयाभावोक्त्यर्थता सूचितेति—**न चेत्यनेनोक्तम्**। आलम्भमात्रसंस्कार इति भाष्यसंस्कारशब्देन संस्कारश्चाप्रकरणइति संस्कारशब्दस्योदाहरणोक्तयेऽनुषङ्गः सूचित—**इतीहशब्देनोक्तम्**। आलम्भमात्रशब्देन च यावदुक्तं वेति यावदुक्तशब्दस्य प्रतिज्ञोक्तयेऽनुषङ्गः सूचित इति—**यावदुक्तमित्यनेनोक्तम्**। प्रायदर्शनस्य लिङ्गमात्रत्वं भाष्योक्तं विवृणोति—**तथा चेति**। अभिप्रायशब्दस्याभीष्टत्वे प्रयोगात्प्रायशब्दस्य दृष्टप्रयोजनवाचित्वमङ्गीकृत्य प्रायदर्शनशब्दस्य दृष्टार्थत्वलक्षणहेतूक्त्यर्थत्वं दृष्टार्थत्वाच्चेति भाष्योक्तं विवृणोति—**दृष्टार्थत्वं चेति**। यथा चोपपत्स्यतइत्यनुषङ्गेण योज्यम् ॥ १६ ॥

भा० प्र०—अग्निहोत्र का गोदोहन के अधिकार में ''वत्समालभेत'' (तै० सं०२।१।४) ''वत्स का आलम्भन करे'' यह श्रुतिवाक्य मिलता है। इसके द्वारा केवल वत्स का स्पर्श विहित होता है या स्वतन्त्र याग का ही विधान होता है—यह संशय होता है। इसमें पूर्वपक्षी का कहना है कि प्राणी से संयुक्त आलम्भन याग ही होने से यह भी याग ही है। ''अग्नीषोमीयं पशुमालभेत'' ''वायव्यं श्वेतमालभेत'' इत्यादि वाक्यों से विहित आलम्भन ही इसका निदर्शन है। अतः, ''वत्समालभेत'' इस वाक्य से विहित आलम्भन भी याग ही होगा—यह अनुमित होता है। अनुमान का स्वरूप निम्नलिखित है—

विवादास्पदीभूत वत्सालम्भ याग है (प्रतिज्ञा) क्योंकि यह प्राणी द्रव्यविषयक आलम्भन है, (हेतु) जैसे वायव्य पशु का आलम्भन (उदाहरण) इसके समाधान में सिद्धान्तियों का कथन है कि यागादि का निरूपण अनुमानगम्य नहीं है। किन्तु यह एकमात्र ''शास्त्रगम्य'' है यह उस अनुमान का व्यभिचारी हेतु है। अग्निषोमीय वाक्य या वायव्य वाक्य में यागविधि 'आलभति' पद की शक्ति के द्वारा निर्णीत नहीं होता हैं, अपितु श्रुत द्रव्य और देवता के सम्बन्ध के विना उपपन्न नहीं होता है, अतः श्रुतार्थापत्ति से उसका निरूपण होता है। 'वत्समालभेत' इसमें किसी देवता का उल्लेख न होने से, देवता का सम्बन्ध न होने से याग कल्पित नहीं हो सकता है। अतः वचन में जैसा सम्बन्ध है वैसा ही अर्थ विधेय होगा अर्थात् वत्स का आलम्भन ही अर्थात् स्पर्श ही विधेय होगा। यह स्पर्श संस्कार कर्म है। क्योंकि, यह गोदोहन आदि संस्कार कर्मों के प्राधान्य के साथ ही पठित है। धेनु का दूध प्रस्रवण दृष्ट प्रयोजन है। कारण, दुग्ध के दोहन के समय में वत्स के समीप में रहने पर ही गाय अधिक दुग्ध का प्रस्रवण करती है। वत्स के आलम्भन को यागत्व प्रतिपादन करने के लिए पूर्वपक्षियों ने जो अनुमान किया है, उसके विरोधी अनुमान का प्रयोग इस प्रकार किया जा सकता है। यथा :—

"वत्सम् आलभेत" इस वाक्य से विहित वत्सालम्भ, अग्निहोत्र संस्कार है, (प्रतिज्ञा) क्योंकि, यह संस्कार कर्मों के प्राधान्य के मध्य में पठित है, (हेतु) जैसे इस प्रकरण का अन्य कर्मसमुदाय, (उदाहरण) यह अनुमान सूत्र के "प्रायदर्शनात्" इस हेतु भाग से सूचित होता है ।

"विशये" = संशय में अर्थात् यागविधि क्या संस्कार विधि है—इस संशय में, अर्थात् जैसा निर्देश है, उतना संस्कार ही विधेय है, "प्रायदर्शनात्" = प्रायदर्शन के अनुसार अर्थात् दोहन आदि संस्कार के आधिक्य का उल्लेख होने से ॥१६॥

## अर्थवादोपपत्तेश्च ॥ १७ ॥

**शा० भा०—अर्थवादश्च भवति 'वत्सनिकान्ता हि पशव' इति । यस्माद्वत्स प्रियाः पशवः । तस्माद्वत्स आलब्धव्य इति । यदि गां प्रस्ना वयितुमालभ्यते, तत्रैतद्वचनमवकल्पते । अथ संज्ञपयितुम्, तत्रैवंजातीयकं वचनं नोपपद्येत । तस्मादप्यालम्भमात्रं संस्कार इति सिद्धम् ॥१७॥**

**इति षष्ठं वत्सालम्भादीनां संस्कारताधिकरणम् ॥ ६ ॥**

त० वा०—'वत्सनिकान्ता' हि इति प्रस्नावनार्थं च वत्सोपचारस्पर्शनविधौ हेतुवन्निगदोऽर्थवाद उपपद्यते । मारणार्थत्वे त्वालभ्यमाने वत्सप्रियत्वं पशूनामुच्यमानसम्बद्धमेव स्यात् । यस्मादसौ मातुः प्रियो वत्सः, तस्मात्संज्ञपनार्थमालब्धव्य इत्यसम्बद्धमेव स्यात् । इतरत्र पुनर्वत्सप्रिया माता पुत्रे चाटुकारणात्, तेन वा कृतचाटुना संयुज्यमाना स्नेहात्प्रस्नविष्यतीत्युपपद्यते । तस्मादपि प्रयोजनवत्संस्कारभूतालम्भमात्रविधानमेतदिति सिद्धम् ॥१७॥

**( इति देवतासंयोगाभावे यागाविधायकत्वाधिकरणम् ॥६॥ )**

न्या० सु०—अर्थवादश्चेत्याद्यन्वयतः सूत्रव्याख्यार्थं भाष्यं व्याचष्टे—**वत्सेति** । व्यतिरेकतो व्याख्यार्थमथेति भाष्यं व्याचष्टे—**मारणार्थं त्विति** । कथं वत्सालम्भस्य गोप्रस्नवनार्थतेत्याशङ्क्याह—**इतरत्र पुनरिति** । चाटुकरणात्प्राक् गोर्वत्सस्नेहानुत्पत्तौ चाटुकरणे प्रवृत्त्ययोगादुत्पत्तौ वा चाटुकरणस्य स्नेहोत्पादकत्वायोगात्पूर्वापरितोषेण पक्षान्तरोक्तिः स्नेहातिशयोत्पादकत्वोपपत्तेस्तु पूर्वोऽपि पक्षो युक्त एव साध्यहेतुयोजनार्थं तस्मादपीति भाष्यं व्याचष्टे—**तस्मादपीति** ॥ १७ ॥

॥ इति षष्ठं वत्सालम्भाधिकरणम् ॥

भा० प्र०—वत्स का आलम्भन केवल स्पर्श है, इसकी सिद्धि के लिए अन्य हेतु का प्रदर्शन किया जा रहा है "अर्थवादोपपत्तेः च" । इस विधि के प्रसङ्ग में "वत्स-निकाम्भा हि पशवः" अर्थात् पशु वत्स के प्रति अतिशय स्नेह युक्त रहता है—इस प्रकार एक

---

१. क. प्रस्तावयितुं ।

अर्थवाद वाक्य है। इस स्थल में वत्स का आलम्बन अर्थात् केवल स्पर्श ही यदि विहित होता तो अर्थवाद सङ्गत होता। क्योंकि, पशु को वत्स अतिशय प्रिय हैं, अतः वत्स के स्पर्श से वह भी दृष्ट होगी और प्रसन्न होने से अधिक दुग्ध देगी, यही अर्थ दुग्ध के दोहन के प्रसङ्ग में सङ्गत होता है, यदि इस स्थल में याग का विधान करने पर वत्स का वध करना होगा और वत्स का वध करने पर धेनु कैसे सन्तुष्ट हो सकती है ? सन्तुष्ट न होने पर प्रचुर दूध देने का प्रश्न ही नहीं उठता है। क्योंकि, पशु को वत्स अतिशय प्रिय होता है, अतः, उसके वत्स का बन्धन करने पर प्रचुर दूध का देना सम्भव नहीं हो सकता है, अतः, इस स्थल में केवल आलम्भन अर्थात् स्पर्श ही विधेय है, यह पूर्व के अधिकरण में वायव्य वाक्य का प्रत्युदाहरण है।

"अर्थवादोपपत्तेः च" = अर्थवाद की उपपत्ति अर्थात् समीचीनता होने से यह वत्स का स्पर्शरूप संस्कार कर्म है।

यह छठा देवता के संयोग के अभाव में यागविधायकत्व अधिकरण है अर्थात् वत्सालम्भ प्रभृति का संस्कारताधिकरण ॥१७॥

## [७] संयुक्तस्त्वर्थशब्देन तदर्थः श्रुतिसंयोगात् ॥१८॥ सि०

**शा० भा०—अस्ति अग्निः। तत्र 'नैवारश्चरुर्भवति', इत्युक्त्वा यदेनं चरुमुपदधाति इति समामनन्ति। तत्र संदिह्यते—किं चरुर्यागार्थो यागं कृत्वाऽवशिष्ट उपधातव्यः, उतोपधानार्थ एवेति। यागार्थ इति ब्रूमः। चरोर्हि प्रसिद्धं कार्यं यागो, नोपधानम्। उच्यते। यद्यपि यागार्थता चरोः प्रसिद्धा, तथाऽपि देवतावचनसंबन्धाभावाद्यजतिशब्दा[1]संबद्धाच्च न यागार्थतेति गम्यते। तदुच्यते। तस्यैव वाक्यशेषे श्रूयते, 'बृहस्पतेर्वा एतदन्नम्, यन्नीवारा' इति। तेन देवतावचनेन संनिहितेनैकवाक्यता भविष्यतीति, बृहस्पतिदेवताक उपधातव्य इति। तस्माद्यागार्थश्चरुरित्येवं प्राप्तम्। एवं प्राप्ते।**

**ब्रूमः—संयुक्त[2]स्त्वर्थशब्देन-कार्यशब्देनोपदधातीति, तदर्थ एव स्यादुपधानार्थः। उपदधातिना चास्य प्रत्यक्षमेकवाक्यत्वम्। परोक्षं देवतावचनेनानुमेयम्। 'चरुमुपदधाति' इति हि प्रत्यक्षं वाक्यम्। बार्हस्पत्यमुपदधाति इत्यानुमानिकम्। तस्मात्कृत्स्नश्चरुरुपधातव्यः। ततश्च[3] किंचिदिज्यायां विनियुज्येत। तदन्यत्र श्रुतम्, अन्यत्र कृतं भवेत्।**

**यत्तु बार्हस्पत्या नीवारा इति। अर्थवादः स इति। यत्तू[4]क्तं प्रसिद्धा चरोर्यागार्थतेति। प्रसिद्धिवाक्येन बाध्यते। तस्मादुपधानार्थ इति सिद्धम् ॥१८॥**

**॥इति सप्तमं नैवारचरोराधानार्थताऽधिकरणम् ॥ ७ ॥**

---

१. ब. शब्दसंबंधाभावाच्च। २. ब. संयुक्तश्चरुस्त्वर्थ।

३. ब. चेत्किंचित्। ४. ब. यच्चोक्तं।

त० वा०—पूर्वमालम्भस्य प्रत्युदाहरणम्, इदं तु चरुद्वारेण निर्वापस्य। देवताशङ्का चात्राभ्यन्तरेऽधिकेत्यारम्भः। तत्रौत्पत्तिकमेव चरुपुरोडाशादीनां यागाङ्गत्त्वम्। सर्वथा चैतस्याऽऽत्मीयत्वपरित्यागः कर्तव्यः। 'चरुमुपदधाति' इति च द्वितीयानिर्देशादुपधानं प्रतिपत्तिः। न चान्यत्रामुपयुक्तस्य प्रतिपत्तिर्युक्तेत्याकाङ्क्षिते योग्यत्वाद्यागोपयोगित्वमेव विज्ञायते। वाक्यशेषे च बृहस्पतिः श्रूयमाणो यदि विध्युद्देशेन न सम्बध्यते, आनर्थक्यमेव स्यात्। तस्मादाग्नेयप्रकृतिकं बार्हस्पत्यचरुयागं निर्वर्त्य, शेषकार्यान्तराण्यकृत्वोपधातव्यश्चरुरित्येवं प्राप्तम्। एवं प्राप्ते।

ब्रूमः—

चर्वादीनां स्वभावेन नैदमर्थ्यमवस्थितम्।
यथाप्रमाणमेवैषां विनियोगऽवगम्यते॥

'नैवारश्चरुर्भवति' इति ह्युत्पन्नमात्रस्यैव प्रयोजनापेक्षायां सत्यां यागाङ्गभूताग्निधारणार्थं स्थलनिर्वृत्तिशेषत्वेन प्रत्यक्षविधानं दृश्यते 'यदेनं चरुमुपदधाति' इति। तथा निराकाङ्क्षस्य च चरोः श्रुतेनापि कार्यान्तरेण सम्बन्धो न स्यात्किमुत, अश्रुतेनैव यागेन। न चेयं प्रतिपत्तिरिति प्रथमं प्रयोजनवत्त्वानवगमात्। अर्थकर्मण्यपि चोपधानं प्रति प्राधान्यमस्ति, तेनासंस्कृतस्थलं न निर्वर्तयतीति द्वितीयानिर्देशाविरोधः।

त्रेधा च देवतायोगश्चरोरस्याऽऽनुमानिकः।
नीवारस्यार्थवादस्थतद्धितादिविवर्जनात्॥

नीवारसंबद्धः सन् बृहस्पतिश्चरावनुमातव्यः। तथा वाक्यशेषस्थो विध्युद्देशमनाकाङ्क्षितदेबतासंबन्धं नेतव्यः। तद्धितचतुर्थीमन्त्रवर्णादिभिश्च विना कथमपि देवतात्वं कल्पनीयम्। यागाद्यनुमानक्लेशश्च स्थित एव। तस्मादुपधानार्थत्वमेव युक्तमिति।

येषां च 'बार्हस्पत्यो भवति' इति चरु[1]समानाधिकरणेन तद्धितेन वाक्यशेषे देवताश्रयणम्, तेषामपि प्रथममुपधानार्थत्वे विध्युद्देशात्सिद्धे, अनाकाङ्क्षितत्वाद्देवता विधातुमशक्येति वर्तमानापदेशानुरोधेन यादृशं वयमस्य बर्हिस्पत्यत्वं वर्तमानं पश्यामः। तादृशमवैतत्प्रशंसार्थं कीर्तितमित्यवगमाद्य एव शाखान्तरीयस्य वचनस्य 'बृहस्पतेर्वा एतदन्नम्' इत्येतस्यार्थः, स एव 'र्बाहस्पत्यो भवति' इत्यस्यापि तैत्तिरीयवचनस्य निश्चीयते, तस्मादेषोऽपि न यजिमद्वचन इति यावदुक्तत्वसिद्धिः॥१८॥

**( इति सप्तमं चरोरुपधानार्थताधिकरणम्॥७॥ )**

---

१. क० सामानाधिकरण्येन।

## अथ सप्तमं नैवारचरोराधानार्थताधिकरणम् ॥ ७ ॥

न्या० सु०—आर्थवादिकस्य देवतान्वयस्य विध्युद्देशानाकाङ्क्षितत्वेनाग्रहणात्पूर्ववदिहापि यागकल्पकदेवतान्वयाभावेन यावदुक्तत्वसिद्धेरनारभ्यमिदमधिकरणमित्याशङ्क्याह—**पूर्वमिति**। निर्वापस्येहाश्रुतत्वात्तत्प्रत्युदाहरणता न युक्तेत्याशङ्क्य, चरोर्यागार्थत्वेऽतिदेशप्राप्तस्य निर्वापस्यापि चरुद्वारा यागार्थत्वापत्तेश्चरोर्यागार्थत्वनिरासे निर्वापस्यापि यागार्थता निरस्ता भवतीत्युक्ते यजत्यधिकरणे द्रव्यदेवतासंयोगयुक्तवाक्यमात्रस्योदाहरणत्वादन्यथाग्नेयं सवनीयमुपाकरोतीत्यादौ यागविध्यसिद्धेर्निर्वापालम्भयोरनुदाहरणत्वात्तत्प्रत्युदाहरणानुपपत्तेरपरितोषादधिकाशङ्कारम्भहेतुतयोक्ता। नन्वर्थवादोक्ताया अपि देवताया विध्युद्देशेनानाकाङ्क्षितत्वाद्ग्रहणानुपपत्तेरयुक्ता देवताशङ्केत्याशङ्क्य—देवताकाङ्क्षासिद्ध्यर्थं चरोर्यागार्थत्वमुपपादयति—**तत्रेति**।

चर्वादेर्हविः शब्दवाच्यत्वप्रसिद्धेर्जुहोतेश्चार्चिशुचिहुसृपिच्छदिच्छृदिभ्य इसिरितीसि प्रत्यये कृते हविःशब्दव्युत्पत्तेः। सौर्यं चरुमित्यादौ च यागार्थत्वदर्शनाद्धविःशब्दसामान्यतोदृष्टाभ्यां यागार्थतावसीयतइत्याशयः। यजिश्रुतिदेवतान्वयनैरपेक्ष्यसूचनायौत्पत्तिकशब्देन स्वाभाविकतोक्ता। चरो हीति पूर्वपक्षभाष्यं चानेन व्याख्यातम्। यथेष्टविनियोगार्थत्वे च चरोः स्वतस्तत्र प्रवृत्तिसिद्धेर्विध्यानर्थक्यप्रसङ्गाद्यथेष्टविनियोज्यत्वलक्षणस्वत्वत्यागस्यावश्यकत्वावगतेस्तस्य च देवतोद्देशपूर्वकद्रव्यत्यागात्मकयागैकदेशत्वाच्चरुकैमर्थ्याकाङ्क्षायामेकदेशेन बुद्धिस्थीकृतस्य यागस्य प्रयोजनत्वप्रतीतिः शीघ्रं भवतीत्येतदाशयं वा चरो हीति भाष्यमिति सूचयितुमाह—**सर्वथा चेति**। चरोरुपधानार्थत्वावगत्या नैराकाङ्क्ष्याद्यागार्थत्वकल्पना न युक्तेत्याशङ्कानिरासार्थं चैतद्भाष्यं नोपधानं कार्यं, किं तु प्रतिपत्तिस्तस्याश्चान्यत्रोपयोगं विनानुपपत्तेरुपधानान्वयस्य कैमर्थ्याकाङ्क्षानुकूलत्वात्प्रसिद्धेर्यागार्थत्वकल्पनोचित्येवं व्याख्येयमिति सूचयितुमाह—**चरुमिति**। यागार्थत्वसम्भावनायामपि वचनशब्दोक्ते विध्युद्देशे देवतासम्बन्धाभावाद्यज्यश्रवणाच्च यागार्थत्वनिश्चयानुपपत्तेर्देवतानाकाङ्क्षत्वादर्थवादस्य च विध्युद्देशानाकाङ्क्षितदेवतासमर्पणाशक्तेर्न यागार्थता युक्तेत्युच्यतइति भाष्येणाशङ्क्य, तदुच्यतइत्यनेनानर्थक्यपरिहारायानाकाङ्क्षितापि देवता विध्युद्देशेन—**नान्वीयतइत्युक्तम्**। तद्व्याचष्टे—**वाक्यशेषे चेति**। विधिपर्यवसानायैकदेवत्यत्वौषधद्रव्यत्वसामान्ये चाग्नेयविध्यन्तान्वयं दर्शयन् पूर्वपक्षमुपसंहरति—**तस्मादिति**।

उपधानस्यापि द्वितीयया शेषकार्यत्वावगतेरेककार्यत्वादौपदेशिकशेषकार्यबाधकता युक्तेति सूचनायान्तरशब्दः। चरुस्वाभाव्यास्ववाक्यएव यागार्थत्वावगतेः प्रयोजनाकाङ्क्षत्वाद्वाक्यान्तरश्रुतोपधानार्थत्वेन यागार्थत्वनिरासो न युक्त इत्याशङ्कां निरस्यन् सिद्धान्तमाह—**एवमिति**। भोजनार्थेन्तरूष्मपक्वोदने चरुशब्दवाच्ये लोके हविःशब्दाप्रयोगाद्यागार्थव्यभिचाराच्च शब्दसामान्यतोदृष्टाभ्यां यागार्थत्वानवगतेः प्रयोजनाकाङ्क्षत्वाद्वाक्यान्तरश्रुतोपधानार्थता युक्तेत्याशयः। श्लोकतात्पर्यं व्याचष्टे—**नैवार इति**। विध्यानर्थक्यपरिहाराय स्वत्वनिवृत्त्यावश्यकत्वावगमेऽपि यागावगतिर्नास्तीति सूचनार्थम्—**यागेनेत्युक्तम्**। या च

प्रतिपत्तित्वाद्यागोपकल्पनोक्ता । साप्ययुक्तेत्याह—**न चेति** । प्रतिपत्तिरिति यदुक्तं तत्र चेतीतिकरणार्थः । स्थलार्थस्यापि चोपधानकर्मणः स्थलनिर्वर्त्तकचरुद्वारा स्थलनिर्वर्त्तकत्वेनोपधानं प्रति चरोः प्राधान्यात्तद्द्वितीयोपपत्तेर्न द्वितीयया प्रतिपत्तित्वावगतिरित्याह-**अर्थकर्मण्यपि चेति** ।

श्रुतिसंयोगव्याख्यानार्थमुपदधातिनेत्यादिभाष्येणोपधानान्वयश्चरोः प्रत्यक्षो, देवतान्वयस्तु आनुमानिक इत्युक्तम् । तद्व्याचष्टे—**त्रेधा चेति** । श्लोकं व्याचष्टे—**नीवारेति** । अन्नशब्दोक्तस्यादनीयत्वस्यापक्वेषु नीवारेषु प्रयोगाच्चरुभूतेषु देवतान्वयानुमानं 'विष्णुं यजतीत्या'दौ द्वितीययापि देवतात्वकल्पनादादिशब्दः प्रयुक्तः । कृदन्तान्नशब्दयोगात्कर्तृवाचिन्या षष्ठ्या भोक्तृत्वावगतिर्देवतात्वकल्पनाहेतुः । तस्मादित्युपसंहारभाष्यं व्याचष्टे—**तस्मादिति** । श्रुत्या समस्तस्य चरोरुपधानयोगादित्येवं श्रुतिसंयोगव्याख्यानार्थं ततश्चेत्युत्तरभाष्यावतारणार्थं कृत्स्नशब्दव्याख्यानायैवकारं 'यत्त्विति भाष्यं बार्हस्पत्या नीवारा इत्येवंविध्यर्थवादाश्रवणादयुक्तमाशङ्क्य तैत्तिरीयशाखास्थस्य बार्हस्पत्यो भवतीत्येतद्वैखलु वै साक्षादन्नं य' एष चरुरिति पूर्वनिर्दिष्टचरुसमानाधिकरणबार्हस्पत्यशब्दतो वाक्यस्य बृहस्पतेर्वा एतदन्नं यन्नीवारा इति शाखान्तरीयवाक्यतुल्यार्थत्वसूचनायानेन प्रकारेणोपलक्षणायैतत् भाष्यमिति सूचयितुमाह—**येषां त्विति** । वाक्यशेषे देवताकीर्त्तनानर्थक्यपरिहारायानाकाङ्क्षितापि देवता विध्युद्देशेन ग्रहीष्यतइत्याशङ्क्य प्रशंसार्थत्वेनार्थवत्त्वोक्त्यर्थम्—**यादृशमित्युक्तम्** । बृहच्छब्दस्य बृहतिधात्वर्थानुसारेण ब्रह्मशब्दवदवाचित्वात्पतिशब्दस्य पालयितृवाचित्वात् ब्राह्मणानां च ।

तपस्तपत्वासृजद् ब्रह्मा ब्राह्मणान् वेदगुप्तयइति ।

वेदपालयितृत्वस्मरणात् बृहस्पतिशब्दस्य ब्राह्मणवाचित्वप्रतीतेर्मुन्यन्नं ब्राह्मणस्योक्तमिति च ब्राह्मणश्राद्धे वानप्रस्थाख्यमुन्यदनीयारण्यनीवारप्राशस्त्यस्मृतेर्ब्राह्मणसम्बन्धित्वरूपं बार्हस्पत्यत्वं कीर्त्तितमित्याशयः । यच्चेति भाष्यं चार्वादीनामिति वार्त्तिकेन व्याख्यतत्वादुपेक्ष्य, तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ॥ १८ ॥

इति सप्तमं चरोरुपधानार्थताधिकरणम् ॥

भा० प्र०—श्रुति में महाग्नि चयन के प्रकरण में "नैवारश्चरुर्भवति" (तै० ब्रा० १।३।७) अर्थात् नीवार धान्य का चरु होता है, इस वाक्य के बाद "चरुम् उपदधाति" अर्थात् चरु का उपधान करे, यह वाक्य पठित है, इसमें संशय होता है कि यह यागविधि हैं या उपधान विधि है अर्थात् विशेष रूप में स्थापन की विधि है ?

इस प्रसङ्ग में पूर्वपक्षी का कहना है कि इसके द्वारा याग का विधान किया गया है, क्योंकि, चरु से साध्य कर्म याग ही होता है, उपधान चरु का कार्य नहीं है । इस स्थल में नीवार से निष्पाद्य चरु रूप द्रव्य रहता है एवं "बृहस्पतेर्वा एतदन्नं यन्नीवाराः" (तै० ब्रा० १।३।७) अर्थात् यह नीवार अर्थात् धान्यविशेष बृहस्पति का ही अन्न हैं, इस

वाक्यशेष के वृहस्पति नामक देवता भी प्राप्त होने से—यह याग विधि है। "चरुमुपदधाति" इस वाक्य में चरु का उपाधान उपदिष्ट है—यह प्रतिपत्ति कर्म है। इसीलिए द्रव्य एवं देवता की प्राप्ति रहने से यह स्वतन्त्र याग की विधि है। अतः चरु से यागकर बचे हुए चरु को उपधान कर रखना होगा। यह उपधान अर्थात् विशेष रूप से स्थापन उपयुक्त संस्कार रूप प्रतिपत्ति कर्म है।

इसके समाधान में सिद्धान्ती का कहना हैं कि "चरुमुपदधाति" इस वाक्य से अवगत होता है कि उपदधाति पद से लभ्य उपधान के साथ ही चरु का अत्यन्त नैकट्य रहने से एकवाक्यता रहती है, अतः उपधान के साथ चरु का सम्बन्ध प्रत्यक्ष है। किन्तु वृहस्पति के साथ चरु का सम्बन्ध प्रत्यक्ष है। किन्तु वृहस्पति के साथ चरु का सम्बन्ध अनुमेय है, क्योंकि, चरु वार्हस्पत्य अर्थात् वृहस्पति देवता के लिए है, यह प्रत्यक्ष रूप में विज्ञापित नहीं है, यदि तद्धित प्रत्यय चतुर्थी विभक्ति से अथवा मन्त्र के अक्षरों से देवता की विधि होती, तब वह श्रुति से बोधित होने से प्रत्यक्ष बोधित होता है, किन्तु, इस स्थल में इनमें न चतुर्थी विभक्ति या मन्त्र से ही बोधित है, अतः, "वृहस्पतेर्वै" इत्यादि वचन से चरु के देवता के सम्बन्ध का अनुमान करना होगा, अतः, "वार्हस्पत्या भवति" यह अर्थवाद वाक्य है। इसलिए, प्रत्यक्षसिद्ध उपधान के साथ अन्वित होकर चरु निराकाङ्क्ष होने से अनुमेय वृहस्पति के साथ उसका अन्वय ही नहीं होगा, ऐसा न होने से देवता न रहने के लिए याग भी नहीं हो सकता है। इसलिए "अर्थशब्देन संयुक्तः तदर्थः" कार्यवाचक 'उपधाति' इस पद के साथ सम्बन्धयुक्त जो चरु वह तदर्थ अर्थात् उपधान करने के लिए ही विहित होता है। इसलिए, वह याग के लिए विहित नहीं होता है, कारण, "श्रुतिसंयोगात्" इस प्रकार का अर्थ मानने पर "उपदधति" इस पद का शक्यार्थ अव्याहत रहता है, अन्यथा विना कारण के ही शक्यार्थ का बाध स्वीकार करना पड़ेगा। इसलिए, सभी चरु का ही उपधान करना होगा, न्यायामालाकार पूज्यपाद माधवाचार्य ने कहा है कि इस स्थल में अन्योन्याश्रय दोष होने से यागविधि नहीं हो सकती है। इसलिए, चरु उपधान के लिए होने से इस स्थल में केवल उपधान ही विहित होता हैं।

"अर्थशब्देन संयुक्तः" = अर्थशब्द अर्थात् कार्यवाचक 'उपदधाति' इस शब्द के साथ संयुक्त चरु, 'तु' = प्रत्युदाहरणार्थक है, "तदर्थः" = तदर्थ = उसी के लिए अर्थात् उपधान के लिए ही हैं याग के लिए नहीं है, "श्रुतिसंयोगात्" = क्योंकि उसमें श्रौत अर्थ अर्थात् वाक्यार्थ लब्ध होता है।

यह सप्तम चरु का उपधानता अधिकरण है ॥ १८ ॥

## [ ८ ] पात्नीवते तु पूर्वत्वादवच्छेदः ॥ १९ ॥ सि०

**शा० भा०—त्वाष्ट्रं पात्नीवतं विधायेदमुच्यते 'यत्पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति। तत्र संदेहः—किं त्वाष्ट्रस्य पर्यग्निकृतस्यैष उत्सर्गो विधीयते,**

उत तस्माद्यागान्तरमिति। यदि 'पर्यग्निकृतमुत्सृजन्ती'ति पदद्वयं परस्परेण सम्बद्धम्। ततस्त्वाष्ट्रस्योत्सर्गः। अथ पात्नीवतशब्द उत्सृजतिना संबध्येत, ततो यागान्तरम्। किं तावत्प्राप्तम्? यागान्तरमिति। कुतः[1]? पूर्वस्त्वाष्ट्रः पात्नीवतश्च। उभयविशेषणविशिष्टः कथं पात्नीवतशब्देनानूद्येत। अपि च त्वाष्ट्रस्योत्सर्गे विधीयमाने पर्यग्निकृतमिति विशेषणं नावकल्पेत। अतो ब्रूमः। पर्यग्निकृतस्य पात्नीवतता विधीयते। स एव याग इति। एवं प्राप्ते।

ब्रूमः—न कर्मान्तरम्। पूर्वस्यैवोत्सृजतिशब्देनावच्छेदो विधीयते। किमेवं भविष्यति। यजिमत्ता तावत्कल्पयितव्या न भविष्यति। उत्सृजतिशब्दश्च श्रुत्योत्सर्गं विदधद्वाक्येन न बाधितो भविष्यति। कर्मान्तरपक्षे वाक्येन पात्नीवततायां विधीयमानायामर्थात्प्राप्त उत्सर्गो धातुनाऽनूद्येत।

अपि च पर्यग्निकृतस्य पात्नीवतता पूर्वस्य विदितैव। सा विधातुं न शक्यते। तस्मात्पूर्वस्य कर्मणोऽवच्छेदः। यत्तूक्तं त्वाष्ट्रस्योत्सर्गे विधीयमाने पर्यग्निकृतमिति विशेषणं तावन्नावकल्पेतेति। नैष दोषः। अतन्त्रमेवात्र पत्नीवतशब्दः, नासौ विशेस्यते। अत एव त्वाष्ट्रः पात्नीवत उभयविशेषण-विशिष्टः केवलेन पात्नीवतशब्देन लक्षणयाऽनूद्येतेति न[2] दोषः। तस्मादवच्छेद इति सिद्धम् ॥१९॥

इत्यष्टमं त्वाष्ट्रपात्नीवतस्याधिकरणम् ॥८॥

त० वा०—एतेनैवाधिकारेणोत्सृजतिरपि यजिमदभिधानो न वेति विचार्यते। 'त्वाष्ट्रं पात्नीवतमालभते' इत्येवं यागं विधाय पुनराम्नायते 'पर्यग्निकृतं पात्नीवतमुत्सृन्ति' इति। तत्र गुणविधिः उत कर्मान्तरमिति वचनव्यक्तिद्वयप्रतिभानेन संदेहे सति, वायव्यश्वेतालम्भवदेव विधिशक्तेर्द्रव्यदेवतासंबन्धविषयत्वेन कर्मान्तरत्वम्।

किं च—न च त्वष्टुरभावेन प्रत्यभिज्ञायतेऽत्र सः।
पर्यग्निकृतयोगाच्च वाक्यभेदः प्रसज्यते ॥

यदि ह्यत्रापि पूर्ववदेवोभे विशेषणे श्रूयेयातां, ततस्तदेव कर्मेति विज्ञायेत। न त्वत्र महेन्द्रस्यैवेन्द्रप्रगाथे कश्चिदपि प्रत्यभिज्ञानलेशोऽस्तीति, देवतान्तरसंयोगादपि वाजिनयागवद्भिद्यते। पात्नीवतोद्देशेन चोत्सृज्यमानार्थे विधीयमाने पर्यग्निकरणावस्थाविशेषणाद्वाक्यं भिद्येत। व्यवहितकल्पनया चोत्सृजतिः संबध्येत। प्राप्त एव च तस्योत्पत्तिवाक्येनोत्सर्ग इति, व्यर्था पुनःश्रुतिर्भवेत्। न च पर्यग्निकरणविधानेनाऽत्रार्थः, तस्यातिदेशेनैव प्राप्तत्वात्। न च केवलपात्नीवतताविधिर्वैकल्पिकः शक्य आश्रयितुम्, उत्पत्तिवाक्यशिष्टत्वविरोधात्। न च

---

१. ब. कुतः। अपूर्वत्वात्।　　२. ब. अतो न दोषः।

प्राकृतक्लृप्तोपकारकेवलपर्यग्निकरणपुनःश्रुत्या गृहमेधीयवदपूर्वता शक्या दर्शयितुम्, सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशात् । न च पर्यग्निकरणशब्दस्तदन्ताया अङ्गरीतेर्वाचकः, येन तन्मात्रग्रहणाश्रयणादुत्तरकर्मावच्छेदो विज्ञायते । न चासौ कालस्य वक्ता, येन पर्यग्निकरणकाल एवोत्सृजतीति कल्प्येत । न च लक्षणाश्रयणहेतुरस्ति । श्रुत्याऽपि वाक्यसमवायोपपत्तेः । सर्वाङ्गेषु चोदकप्राप्तेषु वचनान्तरेणानिषिद्धेषु पर्यग्निकरणवेलायां समस्तेष्वनुष्ठीयमानेषु सत्सु नैव ज्ञायते किं क्रियतामिति । सर्वकरणे काललोपात्तत्कालकरणे चाङ्गान्तरलोपात् ।

एतेनावस्थाविधिः प्रत्युक्तः । चोदकेनैव तावत्, पर्यग्निकरणावस्थ उत्सृज्यत इति प्रापितम् । अथोत्तरावस्थापरिसंख्योच्यते । तत्र त्रिदोषत्वमुक्तमेव । तस्मान्न पूर्वकर्मणि किंचिद्विधेयमस्य वाक्यस्येति कर्मान्तरमेव द्रव्यदेवतासंयुक्तं देवतागुणसामान्येन च पूर्वप्रकृतिकम्, अग्नीषोमीयप्रकृतिकमेव वा विधीयत इति प्राप्ते ।

अभिधीयते सिद्धान्तः—

प्रकृतप्रत्यभिज्ञानान्न यागोऽन्योऽवगम्यते ।
पर्यग्निकरणात्तस्मिन्नङ्गरीतिर्विधीयते ॥

पात्नीवतशब्दस्तावन्मनोतायामिवाग्निशब्दः सत्यप्युभयविशिष्टत्वे शक्नोति प्रकृतं यागं वक्तुं, 'पर्यग्निकृतमुत्सृजति' इति प्रकरणात्तस्यैव गुणविधिर्विज्ञायते । ननु च सर्वे गुणविधिप्रकारा निराकृताः । सत्यम् । शेषा । निराकृताः पर्यग्निकरणान्ताङ्गरीतिपक्षस्तु न निराक्रियते । यद्यप्येष शब्द इडान्तादिवत्तदन्तत्वं न ब्रवीति तथाऽपि गमयितुं शक्नोति । न हि निर्वृत्तपर्यग्निकरणता पूर्वाङ्गेष्वकृतेषु संभवति । तस्मात्तदुपादानादेवानुक्ताऽपि तदन्तताऽवगम्यते । कथंभावापेक्षी च त्वाष्ट्रप्रयोगवचनः प्रकृतौ दृष्टसामर्थ्यपर्यग्निकरणान्ताङ्गकलापस्यातिक्रमकारणाभावान्न प्रकृतिस्थानि सर्वाण्यङ्गान्यपेक्षते । ततश्चैतावन्त्येवास्याङ्गानीत्यवधारणात्स्वरूपप्राप्तिमात्रस्य च चोदकेनापि सिद्धेरुत्तराङ्गावच्छेदार्थमेवेदं वाक्यमिति फलेन व्यपदिश्यते ।

तेनोच्यते पूर्वत्वादवच्छेद इति । एवं च सति यागान्तरापूर्वान्तरानुमानादिक्लेशो न भवतीति । न च परपदसंबन्धविधानविप्रकर्षः । पर्यग्निकरणान्तविशिष्टे तूत्सर्गे विधीयमाने, यद्यप्युत्सर्गस्वरूपं प्राप्तमेव, तथाऽपि तदुद्देशेनाङ्गकलापविधानादनत्यन्तविप्रकर्षात्स एव विधेयत्वेनोक्तः । त्वत्पक्षे तु 'दध्नेन्द्रियकामस्य' इत्यादिष्विव धातोरत्यन्तपारार्थ्यं स्यात् । तस्मादप्यकर्मान्तरत्वम् । प्रकरणादेव च पर्यग्निकरणान्ताङ्गग्रहणसिद्धेः पात्नीवतग्रहणं नित्यानुवादत्वादतन्त्रमिति विशिष्टानुवादैकदेश[1]व्यपदेशोपालम्भपरिहारः । तस्माद् गुणविधिरिति सिद्धम् ॥१९॥

**( इत्यष्टमं पात्नीवताधिकरणम् ॥८॥ )**

---

१. क० एकदेशेव्यपदेशो ।

**अथाष्टमं पात्नीवताधिकरणम् ॥ ८ ॥**

न्या० सु०—वाक्यशेषस्थस्य देवतान्वयस्य विधेयत्वाभावाद्यागकल्पकत्वे निरस्ते 'पर्यग्निकृतं पात्नीवतमि'त्यत्र विध्युद्देशस्थत्वाद्विधेयत्वमाशङ्क्य, विध्युद्देशस्थस्यापि प्रत्यभिज्ञानेनाविधेयत्वापादकतेहोच्यतइत्यनन्तरसङ्गतिं पात्नीवद्देवतासंयोगलक्षणो गुणस्त्वाष्ट्रपत्नीवद्देवत्यपशुयागाद्भेदको, न वेति गुणनिमित्तभेदाभेदविचाराच्च गुणप्रकरणसङ्गतिं स्पष्टत्वादनुक्त्वा, तदवान्तरसङ्गतिमाह—**एतेनैवेति**। यत्रोत्सृजतिऽस्तत्र यागानुमानमिति व्याप्त्यदर्शनेनोत्सृजतेरालभतिवत् यागानुमापकत्वलक्षणयजिमद्वाचित्वशङ्कायोगादुत्सृजतिशब्दस्तत्परविधायकप्रत्ययलक्षणार्थः। एवं गृह्णातिचिनोतिशब्दावपि[1]। त्वाष्ट्रमित्युदाहरणभाष्यं व्याचष्टे—**पात्नीवतमिति**। तत्रेति सन्देहभाष्य देवतोद्देशपूर्वकद्रव्यत्यागात्मकस्य यागाख्यस्योत्सर्गस्य त्वाष्ट्रवाक्यादेव प्राप्तेर्विधेयत्वाद्देवतोद्देशनिरपेक्षद्रव्यत्यागात्मकस्य तूत्सर्गस्य नवमोपान्त्ये पर्यग्निकृतानारण्यानुत्सृजन्तीत्युदाहृत्य किमनेनेशानाय परस्वत आलभते, वसन्ताय कपिञ्जलानालभतइत्यादेर्वाक्यस्य विहितस्यारण्यालम्भस्य कैमर्थ्याकाङ्क्षायां यदेनं चरुमुपदधातीतिवत्प्रयोजनत्वेन देवतोद्देशनिरपेक्षो द्रव्योत्सर्गो विधीयते, किं वेशानायेति, चतुर्थ्युक्तदेवतासंयोगेन विहितं यागमुत्सृजतिनानूद्य पर्यग्निकरणान्ताङ्गरीतिविधानात् कर्मशेषः प्रतिषिध्यतइति सन्दिग्धे, 'पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवदि९-४-५१ति सूत्रेण द्रव्योत्सर्गविधि पूर्वपक्षयित्वा, शेषप्रतिषेधो वाऽर्थाभावादिपडान्तवदि९-८-५२त्यनेन देवतोद्देशनैरपेक्ष्ये देवतासंयोगरूपार्थाभावापत्त्या निषेत्स्यमानत्वात्सिद्धान्तवचनव्यक्त्यनुपपत्तेरयुक्तमाशङ्क्य, यदुत्सृजन्ति तत् पर्यग्निकृतमित्युत्सर्गस्य पर्यग्निकृतशब्दोक्तपर्यग्निकरणान्ताङ्गरीतिलक्षणगुणविशिष्टत्वरूपेण विधिर्विवक्षितो न स्वरूपेणेत्येवं व्याख्यासूचनपूर्वकं 'पूर्वं इति भाष्योक्तस्य पात्नीवतानुवादसम्भवस्य पूर्वपक्षहेतोः पात्नीवतशब्दार्थस्य विधेयत्वेन विहितेऽनवतारात् तदवतारार्थं स्वयं पूर्वपक्षहेतुमाह—**तत्रेति**। पर्यग्निकरणान्ताङ्गरीतिविधिर्गुणशब्देन सूचितः। तद्विवक्षितत्वोपपादनार्थं वचनव्यक्तिद्वय प्रतिभानस्य सन्देहहेतुत्वं भाष्योक्तं दर्शितम्। नवमोपान्त्यन्यायेन ह्यत्राङ्गरीतिविधेः सिद्धत्वात्पौनरुक्त्यमाशङ्क्य, तत्रारण्यशब्दार्थस्य प्राप्तत्वाद्विधेयत्वाशङ्कानुपपत्तेः पर्यऽग्निकृतानुत्सृजन्तीत्येवान्वये पर्यग्निकृतानुवादेनोत्सर्गविधिरुत्सर्गानुवादेन वा पर्यग्निकृतविधिरिति चिन्तयिष्यतेऽइह तु किं पात्नीवतमुत्सृजतीत्यन्वयाद्वायव्यन्यायेन यागविधिः पर्यग्निकृतमुत्सृजन्तीत्यन्वयात् पर्यग्निकरणान्ताङ्गरीतिविधिरित्यपौनरुक्त्यसूचनार्थं वचनव्यक्तिद्वयप्रतिभानस्य सन्देहहेतुत्वोक्तिर्युक्ता। उत्सर्गविधौ तु 'पर्यग्निकृतमुत्सृजन्ती'त्यन्वये त्वाष्ट्रवाक्यात्प्राप्तस्योत्सर्गस्य विधेयत्वायोगात् उत्सर्गान्तरविधानात्, सिद्धान्तेऽपि कर्मान्तरत्वापत्तेर्वचनव्यक्तिद्वयप्रतिभानस्य सन्देहहेतुता न युक्तेत्याशयः। पात्नीवतशब्दस्योत्सृजतिपराख्यातान्वयेऽपि प्रत्यभिज्ञायमानार्थत्वेनाविधेयार्थत्वाद्यागकल्पनानुपपत्तेः किं यागान्तरत्वे कारणमित्येवं कुत इति प्रश्नं व्यचष्टे—

---

१. शब्दाव्यभिचारित्वमित्युदाहरणभाष्यं व्याचष्ट इ० २ पु० पा०।

**किं चेति** । पूर्वइत्युत्तरभाष्यं व्याचष्टे—**न चेति** । न ह्यत्र स त्वाष्ट्रवाक्यविहितः पत्नीवान् प्रत्यभिज्ञायतइति हिशब्दार्थे चशब्दः । अपि चेति भाष्यं व्याचष्टे—**पर्यग्निकृतेति** । त्वष्ट्रस्योत्सर्गविधिं वदता पात्नीवतशब्देन त्वाष्ट्रमुद्दिश्योत्सर्गविधिर्वाच्यः । तस्य च पर्यग्निकृतत्वविशेषणे विशिष्टानुवादलक्षणो वाक्यभेदः स्यादित्याशयः ।

ननु पत्नी विद्यतेऽस्येत्यन्यपदार्थे मतुबन्तपत्नीवच्छब्दप्रवृत्तेः कोऽन्यपदार्थ इत्यपेक्षायां पूर्ववाक्ये श्रुतस्य त्वष्टुः पात्नीवन्तं गृह्णातीत्यत्राग्नेरिव स्ववाक्याश्रुतस्याप्यन्यपदार्थावसायात्प्रत्यभिज्ञोपपत्स्यतइत्याशङ्कानिरासं सूचयन् श्लोकपूर्वार्द्धं व्याचष्टे—**यदि हीति** । 'पात्नीवतं गृह्णातीत्यत्राग्नीपत्नीवन्निति मन्त्रवर्णादग्नेरन्यपदार्थत्वावगतिर्युक्ता । इह तु कर्मान्तरस्थस्य त्वष्टुः कर्मान्तरेऽन्वयप्रमाणाभावात् अश्विशब्दवच्चान्यपदार्थवृत्तेरपि पत्नीवच्छब्दस्य तदलाभे स्वातन्त्र्याभ्युपगमोपपत्तेः शुद्धः पत्नीवान्देवता, न तु पत्नीवान्त्वष्टा येन प्रत्यभिज्ञा स्यादिति इन्द्रमहेन्द्रदृष्टान्तेन सूचितम् । प्रत्यभिज्ञानेऽपीन्द्रमहेन्द्रवद्देवतान्तरयोगादित्यपिशब्दार्थः ।

उत्तरार्द्धं व्याचष्टे—**पात्नीवतेति** । नन्वतन्त्रत्वात्पात्नीवतशब्दस्य न विशिष्टानुवादापत्तिरित्याशङ्क्याह—**व्यवहितेति** । किं च स्वार्थं वेहोत्सर्गो विधीयते, पर्यग्निकृतशब्दार्थविध्यर्थं वा तत्राद्ये पक्षे देवतोद्देशपूर्वकद्रव्यत्यागरूपस्योत्सर्गस्य त्वाष्ट्रवाक्यादेव प्राप्तेः पुनःश्रुत्यानर्थक्यमाह—**प्राप्तएव चेति** । द्वितीयपक्षे तु लोहितोष्णीषादिवत् पर्यग्निकृतशब्दस्य विशेषणपरत्वावगतेस्तस्याप्यतिदेशेन प्राप्तत्वाद्विध्यानर्थक्यमित्याह—**न चेति** ।

ननु 'पात्नीवतमुत्सृजन्तीत्यप्यन्वये पूर्वस्मिन्यागे त्वष्ट्रा पत्नीवता सह वैकल्पिकः शुद्धः पत्नीवान् विधास्यतइत्याशङ्क्याह'—**न चेति** । एतच्चासम्बद्धपदव्यवायापत्तेस्तत्र त्रिदोषत्वमुक्तमेवेत्यतः पश्चाद्वाक्यमपि न च प्राकृतक्लृप्तोपकारेत्याद्युक्तमेवेत्यन्तं वार्त्तिकं नवमोपान्त्यभाष्यवक्ष्यमाणार्थकथनायेति सूचनार्थम्—**प्रागुक्तम्** । ननु यथाज्यभागपुनःश्रुतिर्गृहमेधीयस्यापूर्वत्वज्ञापनार्थेति दशमे वक्ष्यति । तथेह केवलपर्यग्निकरणपुनःश्रुतिः पात्नीवतपशुयागस्यापूर्वत्वज्ञापनार्था भविष्यतीत्याशङ्क्याह—**न चेति** । पर्यग्निकरणस्याप्राकृतं चेत्क्लृप्तोपकारत्वायोगात्प्राकृतत्वे वा प्राप्तत्वेन विधेयत्वायोगात्प्राकृतत्वे वा प्राप्तत्वेन विधेयत्वायोगात्कथमपूर्वज्ञापकतेत्याशङ्क्य—**प्राकृतेत्युक्तम्** । स्वरूपेण प्राप्तस्यापि पात्नीवतयाङ्गत्वेन विधानान्नैराकाङ्क्ष्यद्योतकत्वेनापूर्वज्ञापकता युक्तेत्याशयः । पर्यग्निकरणस्य पशुशेषत्वेन निर्देशात्प्रसिद्धिं च विना विशेषणत्वायोगात्प्रसिद्धत्वेनाविधेयत्वादङ्गत्वासिद्धेर्नैराकाङ्क्ष्यद्योतनान्नापूर्वज्ञापकतेति[1] परिहाराशयः ।

ननु पर्यग्निकरणान्ताङ्गकलापविध्यर्थनिर्वृत्तपर्यग्निकरणत्वोक्त्यर्थत्वेन पर्यग्निकृतशब्दस्योपसर्जनत्वस्याविवक्षितत्वाद्विधेयत्वोपपत्तिरित्याशङ्क्याह—**न चेति** । पर्यग्निकरणनिर्वृत्त्युक्ता-

---

१. प्रसिद्धत्वेऽपि अविषणत्वादिति २ पु० पा० ।

वपि अङ्गान्तरनिर्वृत्त्यप्रतीतेर्न पर्यग्निकरणान्तताऽवसीयतइत्यर्थः । ननु पर्यग्निकरणान्ताङ्गरीत्यनभिधानेऽपि क्तप्रत्ययस्य निष्ठासञ्ज्ञत्वेन भूतकालवाचित्वात् पर्यग्निकरणानन्तरकालोत्सर्गप्रतीतेरुत्सर्गोत्तरकालीनपदार्थानिषेधेऽप्युत्सर्गपर्यग्निकरणमध्यवर्त्तिपदार्थनिषेधावगमात्पर्यग्निकरणोत्तरकालाङ्गभूतकर्मावच्छेदो विज्ञास्यतइत्याशङ्क्याह—**न चासाविति** । पदार्थान्तरव्यवधानेऽपि भूतकालत्वोपपत्तेरानन्तर्यं नावसीयतइत्याशयः । पर्यग्निकरणकालोक्त्यानन्तर्यं सूचितम् ।

ननु भूतकालत्वमात्रस्यादिदेशतः प्राप्तेर्विध्यानर्थक्यपरिहारार्थं तान् पर्यग्निकृतानुत्सृजन्ति ब्रह्मसाम्न्यालभतइत्यत्रानन्तर्यलक्षणा यथा सङ्कर्षकाण्डे सं० का० १३-१-५ वक्ष्यते, तथेहाप्यानन्तर्यलक्षणा भविष्यतीत्याशङ्क्याह—**न चेति** । प्राजापत्यपशुष्वेकादशे कर्मशेषप्रतिषेधं पूर्वपक्षेऽपि ब्रह्मसाम्न्यालभतइति पर्यग्निकरणोत्तरकालीनानां संस्काराणां कालान्तरेऽनुष्ठेयत्वश्रुतेः सर्वथा प्रतिषेधायोगेन पर्यग्निकरणोत्तरकालीनत्वमात्रनिषेधस्य वक्ष्यमाणत्वात्, तत्सिद्ध्यर्थमानन्तर्यलक्षणा युक्ता । इह तु कर्मान्तरविधानेऽतिदेशप्राप्तपर्यग्निकरणानुवादत्वेनापि पर्यग्निकृतशब्दस्य वाक्येऽन्वयोपपत्तेर्नानन्तर्यलक्षणा युक्तेत्याशयः सर्वाङ्गानां च पर्यग्निकरणानन्तर्यसम्पादनाशक्तेरानन्तर्यलक्षणार्थाविरोधः स्यादित्याह—**सर्वाङ्गेषु चेति** ।

ननु पर्यग्निकृतावस्थस्योत्सर्गविध्यावर्थादानन्तर्यावगतिर्भविष्यतीत्याशङ्क्याह—**एतेनेति** । नावस्थापि श्रुत्योच्यते इत्याशयः । पर्यग्निकरणावस्थायाश्च स्वरूपेण प्राप्तत्वादुत्तरावस्थापरिसंख्यार्थत्वे त्रिदोषत्वापत्तेर्विधेयत्वं न सम्भवतीत्याह—**चोदकेनैव तावदिति** । पूर्वपक्षमुपसंहरति—**तस्मादिति** । विधिसमासचर्थामितिकर्त्तव्यतापेक्षायां पत्नीवतालक्षणगुणसामान्येन त्वाष्ट्रप्रकृतिकत्वेऽभिहिते पूर्वपक्षत्वादनास्थयाग्नीषोमीयप्रकृतिकत्वे अप्यविरोध इत्युक्तम् ।

सिद्धान्तमाह—**इतीति** । न कर्मान्तरमिति भाष्यावयवः पूर्वार्द्धेन व्याख्यातः । पूर्वस्यैवेत्युत्तरार्द्धेन प्रकृतस्य त्वाष्ट्रत्वपात्नीवतत्वलक्षणविशेषणद्वयविशिष्टत्वात्प्रत्यभिज्ञानं न सम्भवतीत्याशङ्क्याह—**पात्नीवतेति** । द्वन्द्वनिर्देशेऽप्येकदेशेन समुदायलक्षणयाऽनुवादत्वात्प्रकृतोक्तिर्युक्ता । त्वाष्ट्रं पात्नीवतमिति च भेदेन निर्देशाद्विशेषत इति मनोतादृष्टान्तेन सूचितम् । पर्यग्निकरणान्ताङ्गगणस्य विधेयत्वसिद्ध्यर्थं सामान्यतस्तावद् गुणस्य विधेयत्वमाह—**पर्यग्निकृतमिति** । शङ्कापूर्वं पर्यग्निकरणान्ताङ्गगणस्य विधेयत्वमुपपादयितुमारभते—**ननु चेति** । या तु तदन्तवाचिशब्दाभावादविधेयतोक्ता । तां परिहरति—**यद्यपीति** । नाज्यभागवत् पर्यग्निकरणमनुष्ठेयतया विधीयते, येन तन्मात्रग्रहणं स्यात् । किं तु निष्पन्नपर्यग्निकरणत्वं पशोर्यागान्वयितया विधीयते । तस्य च यथाप्राप्तस्योपादानात्पूर्वाङ्गेष्वप्रकृतेषु पर्यग्निकरणानुपपत्तेस्तदन्ततावसीयतइत्याशयः ।

नन्वेवमप्युत्तरेषामप्यङ्गानामतिदेशात्प्राप्तेः पर्यग्निकरणान्तत्वासिद्धिरित्याशङ्क्य गृहमेधीयन्यायेनापूर्वत्वावसायात्तदन्ततत्वसिद्धिमाह—**कथम्भावेति** । पर्यग्निकरणान्तस्याङ्गगणस्य प्रकृतावितरेतरनिरपेक्षोत्पत्तिस्वात्प्रयोगवाक्यात्साहित्यावगमेऽपि प्रत्येकं क्रतूपकारसाधनत्वशक्त्यवगतेस्त्वाष्ट्रपशुयागे प्रत्यक्षवाक्येनाङ्गतया विधानात्तदुपकारसाधनत्वेनावगत-

स्यातिक्रमकारणाभावात्प्राकृताङ्गान्तरानपेक्षत्वादपूर्वत्वावगतेर्नातिदेशोऽस्तीत्याशयः । अतिदेशभावेऽपि सादृश्येन बुद्धिस्थतया धर्मदानोन्मुखत्वात्प्रकृतित्वव्यपदेशाविरोधः । नन्वस्य वाक्यस्य पर्यग्निकरणान्ताङ्गरीतिविधायित्वे निवृत्त्यर्थोऽवच्छेदशब्दो न युज्येतेत्याशङ्क्य, फलेनोत्तराङ्गनिवृत्त्यर्थत्वोक्तिमुपपादयति—**ततश्चेति** । 'पात्नीव'तमुत्सृजन्तीतिसन्निहितान्वयत्यागेन पर्यग्निकृतमुत्सृजन्तीति व्यवहितान्वयाभ्युपगमे को गुणो भविष्यतीति किमिति भाष्येण गुणोक्त्यर्थं यजिमत्ता तावदिति भाष्यमुपलक्षणार्थत्वेन व्याचष्टे—**एवं चेति** । आदिशब्देनाश्रुताङ्गातिदेशकल्पनोक्ता । गुणान्तरोक्त्यर्थमुत्सृजति शब्दश्चेति भाष्यं सिद्धान्तेऽपि पर्यग्निकरणान्तत्वविशिष्टरूपेणोत्सर्गविध्युपगमेन वाक्यार्थविध्यविशेषायुक्तमाशङ्क्यापि चेति वक्ष्यमाणभाष्यालोचनया पूर्वपक्षे पर्यग्निकृतं पात्नीवतमिति पदद्वयान्वयापादनाशयेन व्याचष्टे—**न चेति** । ननु देवतोद्देशपूर्वकद्रव्यत्यागाख्यस्योत्सर्गस्य त्वाष्ट्रवाक्येनैव प्राप्तेरुत्सर्गविध्युक्तिरयुक्तेत्याशङ्क्याधःराग्निहोत्राधिकरणोक्तेन मार्गेण गुणविधावपि धात्वर्थावच्छिन्नभावनाविधिं मत्वोत्सर्गविध्युक्तिरित्याशयेन परिहरति—**पर्यग्निकरणान्तेति** । शङ्कानिरासार्थस्तुशब्दः अनत्यन्तविप्रकर्षादित्यनेनोत्सर्गसम्बन्धित्वेनाङ्गगणविधानादुत्सर्गस्य विधेयतोक्तिरित्युक्तम् । तदुपपादनार्थम्—**तदुद्देशेनेत्युक्तम्** । कर्मान्तरेतिभाष्यं सिद्धान्तेऽप्युत्सर्गानुवादाविशेषादयुक्तमाशङ्क्योत्सर्गसम्बन्धित्वेतापि पूर्वपक्षेऽर्थान्तरविध्यभावाशयेन व्याचष्टे—**त्वत्पक्षे त्विति** । तद्गुणास्तु विधीयेरन्नि१-४-९त्यनेन च न्यायेन देवतातद्धितेनैव देवतोद्देशपूर्वं द्रव्यत्यागरूपोत्सर्गविधिसिद्धेः पर्यग्निकृतशब्दार्थाविधौ च तद्वृत्त्यानर्थक्यापत्तेः पर्यग्निकृतं पात्नीवतं कुर्वन्तीति पूर्वपक्षे पर्यग्निकरणविशिष्टपात्नीवतविधिमापद्य, अपि चेति भाष्येण त्वाष्ट्रस्य पात्नीवततायास्त्वाष्ट्रवाक्यात्प्राप्तेः पर्यग्निकरणविशिष्टतायाश्चातिदेशात्प्राप्तेर्दूषणमुक्तम् । तदापादनाशयस्य न च परपदेति वार्त्तिकेन व्याख्यातत्वाद्, दूषणाशयस्य च प्रकृत्यभिज्ञानादित्यनेन व्याख्याततत्वादव्याख्याय, तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्मादपीति** । कल्पनाक्लेशपरपदान्वयविधिविप्रकर्षधात्वर्थात्यन्तपरार्थ्याभावप्रकृतप्रत्यभिज्ञालक्षणहेतुचतुष्टयपरामर्शार्थत्वं तस्माच्छब्दस्य सूचयितुमपिशब्दः । अपि चेति पूर्वपक्षभाष्योक्तं दोषं यत्त्विति भाष्येणानुभाष्य नैष दोष इत्यनेन परिहृत्यात एवेत्यनेन पात्नीवच्छब्देन त्वाष्ट्रपात्नीवतानुवादायोगदोषः पूर्वः त्वाष्ट्रः पात्नीवतश्चेति भाष्योक्तः परिहृतः । तद्वतामेकहेलया व्याचष्टे—**प्रकरणादेव चेति** । पर्यग्निकरणावस्थाविशिष्टपात्नीव्रतानुवादलक्षणस्य पात्नीवतत्वरूपेण चैकेनांशेन त्वाष्ट्रपात्नीवतव्यपदेशलक्षणस्य चोपालम्भस्य परिहार इति समासार्थः । तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ॥ १९ ॥

इत्यष्टमं पात्नीवताधिकरणम् ॥

भा० प्र०—वेद में कहा गया है कि ''त्वाष्ट्रं पात्नीवतमालभेत'' 'त्वष्टृ' देवता एवं 'पत्नीवत्' देवता के उद्देश्य से पशु का आलम्भन करे । इसी प्रकरण में श्रुति में कहा गया है 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति'' (तै० सं० ६।६।६) ''पर्यग्निकृत पात्नीवत =

पात्नीवत् देवता सम्बन्धीय पशु का उत्सर्ग करे'' इसके द्वारा उत्सर्ग विशिष्ट याग का विधान है या यह गुणविधि है—यह संशय होता है। इस प्रसङ्ग में पूर्वपक्षी का कहना है कि यह उत्सर्ग विशिष्ट याग की विधि है, क्योंकि, इस स्थल में ''पर्यग्निकृत्'' यह पद पूर्वप्राप्त का अनुवाद है। इसलिए पर्यग्निकरण आदि सभी गुणों का किया जाता हैं, और यह अतिदेश विधि के द्वारा ही प्राप्त है। ''त्वाष्ट्रं पत्नीवतम्'' यहाँ पर दो देवताओं का उल्लेख है किन्तु ''पर्यग्निकृतम्'' इत्यादि वाक्य में एक देवता का ही निर्देश है और उसी के साथ ''पर्यग्निकृतम्'' इस पद का सम्बन्ध है। अतः, इसको पूर्वयाग की गुणविधि मानने पर इस स्थल में जो एक देवता का उल्लेख है, उसकी उपपत्ति नहीं होती है एवं 'पर्यग्निकृतम्' इस पद की भी अनर्थकता हो जाती है। गुणविधि मानने पर 'उपसृजन्ति' इसके साथ ''पर्यग्निकृतम्'' इसका सम्बन्ध मानना होगा, और ऐसा मानने पर व्यवहितान्वा = दूरान्वय दोष की आपत्ति होती है। क्योंकि, अन्यवहिता ''पर्यग्निकृतम्'' इस अंश के द्वारा द्रव्य एवं ''पात्नीवतम्'' इस अंश से देवता का सम्बन्ध बोधित होता है—यह कहने पर इस स्थल में 'उत्सृजन्ति' पद के द्वारा उत्सर्ग से युक्त याग की विधि कल्पित होती है।

इस प्रकार पूर्वपक्षी के कथन के समाधान में सिद्धान्ती का कहना है कि ''पात्नीवते तु अवच्छेदः'' ''पात्नीवता'' वाक्य में परवर्ती क्रियाओं की निवृत्ति होगी, क्योंकि, ''पूर्वपूर्वत्वात्'' एक ही प्रकरण में उक्त होने से एवं ''पात्नीवत'' शब्द के द्वारा पूर्व विहित पशु की ही प्रत्यभिज्ञा होने से इस स्थल में पूर्वविहित याग की प्रत्यभिज्ञा है—यह अन्य याग नहीं है। 'पात्नीवतम्' इस शब्द के द्वारा एक देवता का उल्लेख रहने पर भी वह त्वष्टृ देवता का भी उपलक्षण है। अतः ''पर्यग्निकृतम्'' यह पद ''उत्सृजन्ति'' इस पद के साथ अन्वित होता है, अतः पूर्वोक्त दोष नहीं है। क्योंकि 'पत्नीवत्' एवं त्वष्टृ दोनों देवताओं का यहाँ अनुवाद है, इसलिए केवल उत्सर्ग रूप संस्कार ही यहाँ विहित है। उत्सर्ग के द्वारा पूर्व निर्दिष्ट कर्म=आलम्भन का ही अवच्छेद अर्थात् सीमा अवधारित होती है अर्थात् विशेष वचन के द्वारा पशु का मारण आदि परवर्ती कर्मों की निवृत्ति होती है, अतः, इस स्थल में पशु को पर्यग्निकृत = अग्नियुक्त काष्ठ खण्ड के द्वारा परिवेष्टनरूप संस्कार विशेष के द्वारा संस्कृत कर उत्सर्ग=परित्याग ही करना चाहिए।

''पात्नीवते'' = पात्नीवतवाक्य में अर्थात् त्वाष्ट्रं पात्नीवतम् इत्यादि वाक्य में, ''तु'' = प्रत्युदाहरण में ''अवच्छेदः'' = इयत्ता = सीमा का निर्देश अर्थात् अकृत कर्म की ही इयत्ता का निर्देश अथवा ''अवच्छेदः'' = अर्थ निवृत्ति अर्थात् विशसन = वध आदि परवर्ती कर्म की निवृत्ति, ''पूर्वत्वात्'' = पूर्व कर्म की प्रत्यभिज्ञा होने से ॥ १९ ॥

यह आठवाँ पात्नीवताधिकरण है ॥

अथ नवममंश्वदाभ्यग्रहाधिकरणम्

**[९] अद्रव्यत्वात्केवले कर्मशेषः स्यात् ॥२०॥ सि० ।**

शा० भा०—न कस्यचिदपि प्रकरणे श्रूयते । 'एष वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा सोमाय यजते' इति । तथा 'परा वा एतस्याऽऽयुः प्राण एति योऽशुं गृह्णाति' इति । तत्र संदेहः—किं यागान्तरमेतद् ग्रहणकम्, उत ज्योतिष्टोमयागे ग्रह[१]विधिरिति । किं प्राप्तम् ? यागान्तरमिति । कुतः ? अपूर्वनामधेयसंयोगात् । न प्राकृतावेतन्नामधेयको यागोऽस्ति, न ग्रहः कश्चिद्योऽभ्यस्येत । तस्माद्यागान्तरम् । ननु द्रव्यदेवतं न श्रूयते ? मा भूद् द्रव्यदेवतं, साक्षादेव यजतिशब्दो विद्यते । तस्मात्कर्मान्तरमदाभ्यसंज्ञकमंशुसंज्ञकं यागं करोतीत्येवं प्राप्तम् । एवं प्राप्ते ।

ब्रूमः—अद्रव्यदेवताके केवले नामधेये श्रूयमाणे ब्रूमो ज्योतिष्टोम एव ग्रहाभ्यासविशेषविधानमिति । कुतः ? एतत्तावद् ग्रहस्य नामधेयं, न यागस्य । ग्रहणेन साक्षात्संबन्धात् । व्यवहितत्वाद्यागस्य । अंशुरिति च मुक्तसंशयमेव ग्रहनामधेयम् । न च ग्रहभेदे यागभेदो भवति । न च द्रव्यदेवतं श्रूयते । यतो गृह्णातिर्यजि[३]मद्वचनो भवेत् ।

यदप्युक्तम्—साक्षादत्र यजतिशब्दो विधायक इति । नैवं शक्यं कर्मान्तरं विधातुम् । विहितयागवचनो हि सः, विशेषाभावात् । तस्माद्यजतिना ज्योतिष्टोम एवोच्यते । अंश्वदाभ्यशब्दा[४]भ्यामप्यपरौ ग्रहाभ्यासौ विधीयेते इति सिद्धम् ॥ २० ॥

इति नवममदाभ्यादीनां ग्रहनामताधिकरणम् ॥ ९ ॥

त० वा०—अनारभ्याधीतयोरंश्वदान्यग्रहयोरालम्भादिवत् त्रेधा सन्देह तद्वदेव च पक्षद्वयं निराकृत्य, यजिमती चोदनेति प्रतिज्ञायते ।

किं च—

प्रकृतादपि भेत्तृत्वं नामधेये व्यवस्थितम् ।
किमुताप्रकृतेभ्योऽत्र यत्र नैवास्त्यभेदधीः ।

न ह्येतन्नामधेयं प्रकृतौ कस्याचित्प्रसिद्धं, यस्य पुनःश्रुतिसामर्थ्याद् द्विरन्यासः क्रियते । तस्माद् गृह्णातिचोदनासामान्येन ज्योतिष्टोमप्रकृतिरेकाहोऽयं चोद्यत इति मन्यामहे । न च वत्सालम्भतुल्यत्वम् । एकत्र यजतेः प्रत्यक्षत्वात् अन्यत्र चाव्यभिचारिण्या संज्ञयाऽन्यत्वे कल्पिते, गृह्णातिना समस्तज्योतिष्टोमधर्मप्राप्तेर्द्रव्यदेवतासम्बन्धसिद्धिः । अतो यागान्तरत्वमिति प्राप्ते ।

---

१. ब. इति । २. ब. ग्रहणविधि ।
३. ब. यजतिवचनो । ४. ब. शब्दाभ्यामपरौ ।

अभिधीयते—

ग्रहणं नामधेयं च केवलं यत्र गम्यते।
वत्सालम्भादपि न्यूनं तदद्रव्यतयेष्यते॥

देवता तावद् दूरभ्रष्टैव गृह्यमाणं द्रव्यं, तदपि न केनचिदुपात्तम्। न हि जात्या गुणेन च विना द्रव्यमुपलक्षयितुं शक्यम्। न च यागेऽनवधारिते ज्योतिष्टोमवद्भावोऽस्ति, येन सोमग्रहणमेतदिति विज्ञायते। न च गृह्णातिर्ज्योतिष्टोमं न व्यभिचरति, उपादानमात्रवचनत्वात्। न चैते यागनामनी, येन तं भिन्द्याताम्। ग्रहणसामानाधिकरण्याद्धि तन्नामत्वमनयोः। इष्यत एवास्माभिरत्र ग्रहणभेदः। न च तावता यागान्तरत्वं भवति। द्रव्यदेवतासंयोगेऽपि चैवं जातीयकानां यजिमत्त्वं निराकृतम्, 'अचोदकाश्च संस्काराः' इति। अत्र पुनस्तदपि न विद्यते।

योऽप्यदाभ्यवाक्ये यजतिः, सोऽपि रेवतीवारवन्तीयपूर्वपक्षन्यायेन संक्रान्तविधिशक्तिना प्रत्ययेन विधीयते। तस्माद्यागमनूद्य ग्रहणविधानमेवैतत्। अंशोः कथं यागसम्बन्ध इति चेत्? गृह्णातिसामान्योपस्थितेन ज्योतिष्टोमेनेति केचित्। अस्त्येव त्वनयोस्तैत्तिरीयाणां ज्योतिष्टोमप्रकरणे पुनः श्रवणम्। तदन्यत्र प्रयोजनत्वात्कर्मविनियोगं करिष्यति। यथा साप्तदश्यस्यानारभ्यवादेन सामिधेनीसम्बन्धितयोत्पत्तेः प्राकरणिकैश्च वचनैर्विनियोगादर्थवत्त्वमेवमिहापि द्रष्टव्यम्। तेन 'संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात्' इत्ययमेव पक्षः॥२०॥

**इति नवममंश्वदाभ्यग्रहयोर्ज्योतिष्टोमाङ्गताधिकरणम्॥ ९॥**

**॥ अथ नवममंश्वदाभ्यादीनां ग्रहनामताधिकरणम्॥ ९॥**

**न्या० सु०**—न कस्य चिदपीत्यनारभ्याधीतत्वोक्तेः सन्देहत्रैविध्यसूचनार्थत्वं वक्तुमाह—**अनारभ्येति**। उतेति सिद्धान्तवचनव्यक्तिभाष्यशेषेण ग्रहविधिरित्येतावता वर्त्तमानेन यावदुक्तत्वपूर्वपक्षान्तरोक्तिरित्याशयः। आलभत्यादिवद् गृह्णातिरपि यजिमदभिधानो न वेति प्रासङ्गिकत्वेन सङ्गतिदृष्टान्तेन सूचिता। पूर्वस्मिन् ज्योतिष्टोमाख्ये क्रतावंश्वदाभ्यनामधेयसंयोगादिति हेतुः। पारिशेष्याद्यागविधिसिद्धो सकृतावेतन्नामकस्य, ग्रहस्य वा कस्य चिदभावाद्यागाभ्यासात्मकस्य, ग्रहाभ्यासस्य वा गुणस्य विधिर्न सम्भवतीति प्रकृतौ गुणविधिनिरासार्थो। नैतन्नामधेयकः कश्चित् ग्रहोऽस्तीत्येतावद्भाष्यपदावृत्त्या च यावदुक्तनिरासार्थं इत्येवं तावत्पूर्वपक्षभाष्यं व्याख्यातुमाह—**तद्वदेव चेति**। निराकरणमालोच्येत्यध्याहारेण पक्षद्वयनिराकरणस्य यागान्तरशब्दोक्तयागविधिप्रतिज्ञायां हेतुत्वं सूचितम्। उक्थ्यादिवच्चांश्वदाभ्यशब्दयोर्यागनामत्वे, ग्रहनामत्वे वा सति, प्रकृतौ यागाभ्यासलक्षणस्य, ग्रहाभ्यासलक्षणस्य वा गुणस्य विधिः स्यात् वत्सादिवद्वाऽश्वदाभ्यनामकग्रहप्रसिद्धौ सत्यां यावदुक्तांश्वदाभ्यग्रहणमात्रविधिः स्यात् तदुभयाभावात्पारिशेष्याद्यागविधित्वावगतेर्यागान्तरमेवांश्वदाभ्यसंज्ञकं विधीयतइत्याशयः। अपूर्वेण

नामधेयेन संयोगादिति नञ्समासपूर्वकोत्तरपदसमासाङ्गीकरणेन वा संज्ञालक्षणयागान्तरत्व-पूर्वपक्षहेतूक्त्यर्थतयेदं भाष्यं व्याख्येयमित्याह—**किं चेति**।

अंशुवाक्ये यज्यश्रुतेरदाभ्यवाक्येऽपि व्यवहितयज्यन्वयायोगेन यजिसामानाधिकरण्या-नुपपत्तेर्यागनामत्वायोगादुपचयहेतुत्वसूचनार्थः किं च शब्दः। अस्मिन्पक्षे गृह्णात्यन्वयेन ग्रहणनामत्वाद्यागनामत्वायोगाशङ्कानिरासार्थत्वेन न ग्रहः कश्चिदेतन्नामकोऽस्तीति व्याख्ये-यम्। ग्रहणस्य संस्कारत्वेन संज्ञानर्हत्वाद्व्यवधानेऽप्यदाभ्यसंज्ञकयागं करोतीत्यन्वयप्रतीतेरं-शुवाक्येऽपि अंशुसंज्ञकं कर्म करोतीत्युक्ते, किं तदित्यपेक्षायां गृह्णातिचोदनासामान्यात् गृह्णातेश्च यागीयद्रव्यप्रकल्पनार्थत्वावगतेरव्यक्तचोदनाचोदितत्वाच्च ज्योतिष्टोमधर्मप्राप्ते-र्द्रव्यदेवतालाभाद्यागरूपत्वप्रतीतेर्यागत्वावसायात् करोत्यर्थोक्तये च प्रयोज्यस्य प्रत्ययस्या-नुग्रहायातिदेशप्राप्तज्योतिष्टोमिकग्रहणानुवादभूतप्रकृतिविशेषद्योतनार्थं गृह्णातिप्रयोगोपपत्तेः संज्ञया यागान्तरत्वावगतिरित्याशयः। किमित्यादि तस्माद्यागान्तरमित्यन्तं पूर्वपक्षभाष्य-न्तात्पर्यतो व्याख्याय, न प्रकृतावित्यवयवं स्वरूपतो व्याचष्टे—**न हीति**। विध्यन्तर्भावा-द्यागान्तरविध्यपर्यवसानमाशङ्क्याह—**तस्मादिति**। न त्विति भाष्येण द्रव्यदेवतान्वया-श्रुतेर्यच्छब्दोपबन्धेन च यागविधिप्रतिबन्धात्सोमदेवत्ययागाङ्गत्वेन यावदुक्तादाभ्याख्य-द्रव्यग्रहणमात्रविधिमंशुवाक्ये च यज्यश्रुतेः स्वतन्त्रांश्वाख्यद्रव्यग्रहणमात्रविधिमाशङ्क्य माभूदित्यनेन यच्छब्दोपबन्धेऽपि प्रत्यभिज्ञानाभावेनानुवादायोगाद्विधित्वप्रतीतेर्निरस्तं तदंशु-वाक्यं व्यापकत्वादयुक्तमाशङ्क्य गृह्णातिचोदनोपस्थापितज्योतिष्टोमधर्मातिदेशप्राप्तद्रव्य-देवतान्वयकल्प्ययागप्राप्तिलक्षणोभयसाधारणहेत्वध्याहारेण पूरयन् व्याचष्टे—**न चेति**। वत्सालम्भतुल्यत्वशङ्कोक्त्या द्रव्यश्रवणेऽपि देवतान्वयमात्रे श्रुतिसूचनात् द्रव्यदेवतामिति द्वन्द्वैकवद्भावस्येतरेतरयोगात् श्रुत्युक्त्यर्थत्वं व्याख्यातम्। तस्मादिति यागान्तरत्वपूर्वपक्षोप-संहारभाष्यं व्याचष्टे—**अतोऽपीति**।

सूत्रं व्याचक्षाणः सिद्धान्तमाह—**इतीति**। ग्रहणस्यापि श्रुतत्वाद्भाष्ये नामधेयमात्र-विषयतया केवलशब्दव्याख्या न युक्तेत्याशङ्क्य नामधेयशब्दस्य ग्रहणोपलक्षणार्थत्वं सूच-यितुम्—**ग्रहणमित्युक्तम्**। द्रव्यदेवताभावनिमित्तस्य कैवल्यस्याद्रव्यत्वोक्त्यैव सिद्धे केवल-शब्दानर्थक्यमाशङ्क्य यावदुक्तत्वस्यापि निरासं केवलशब्दप्रयोजनं सूचयितुम्—**वत्सेत्युक्तम्**। वत्सालम्भएव तावद्देवताराहित्येन यागाभावाद्वायव्यश्वेतालम्भादेर्न्यूनम्। अंश्वादाभ्यग्रहणं तु द्रव्यस्याप्यभावेन द्रव्यविशिष्टविध्ययोगाद्वत्सालम्भादपि न्यूनमिष्यतइत्यर्थः। ततश्च पूर्वपक्ष-द्वयस्याप्ययोगाज्ज्योतिष्टोमाख्यस्य कर्मणोऽभ्यासात्मकोऽवयवोऽत्र विधीयते इत्यर्थादुक्तम्।

अद्रव्येति भाष्यादुदाहरणपरिग्रहार्थकेवलशब्दापेक्षितकैवल्यनिमित्तोक्त्यर्थो द्रव्यत्वा-दिति सूत्रावयव इति भ्रान्तिनिवृत्तये कर्मशेषः स्यादिति सूत्रावयवोक्ताभ्यासाख्यकर्मावय-वत्वप्रतिज्ञाया हेतूक्त्यर्थं वक्तुम्—**अद्रव्यतयेत्युक्तम्**। भाष्ये देवतोक्तेरसौत्रत्वमाशङ्क्य देवताकत्वस्याभिप्रेतस्यापि स्पष्टत्वात्सूत्रेऽनुक्तिः। अंश्वदाभ्यशब्दयोस्तु द्रव्यवाचित्वशङ्का-निरासायाऽद्रव्यतोक्तेति सूचयितुमाह—**देवता तावदिति**। सोमायेत्यस्यानुवाद्ययागाविशेष-

णत्वायोगात्पश्चाच्छ्रुतत्वाच्च सोमाय गृहीत्वेत्यन्वयाप्रतीतेर्यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहेति मन्त्रवर्णप्राप्तदेवतानुवादोपपत्तेश्च देवताविधित्वायोगाद् दूरभ्रष्टतोक्ता । अदाभ्यशब्देनावयवव्युत्पत्त्या हिंसाख्यदम्भानर्हद्रव्यस्यांशुशब्देन च निर्यासस्योपादानोपपत्तेरनुपात्तत्वोक्तिरयुक्तेत्याशङ्क्य—**न हीत्युक्तम्** । एवमप्यदाभ्यशब्दवाच्यद्रव्यविशेषाप्रतीतेर्निर्यासस्य च प्रकृतिद्रव्यविशेषाप्रतीतेर्न वत्सालम्भवद्यावदुक्तद्रव्यविशिष्टग्रहणविधिः सम्भवतीत्याशयः ।

ननु ज्योतिष्टोमधर्मातिदेशाद् द्रव्यदेवतालाभो भविष्यतीत्याशङ्क्याह—**न चेति** ।

ननु यागत्वानवधारणेऽ'ऐन्द्रवायवं गृह्णाती'त्यादावनिर्दिष्टद्रव्यविशेषस्य गृह्णातेर्यागीयसोमप्रकल्पनार्थत्वदर्शनेनास्यापि तादर्थ्यानुमानात्प्रकृतिभूतज्योतिष्टोमोपस्थापकत्वोपपत्तेस्तदीयद्रव्यदेवतालाभो भविष्यतीत्याशङ्क्याह—**न च गृह्णातिरिति** । व्यभिचाराच्चानुमानं न सम्भवतीत्याशयः । केवलनामधेयश्रवणेऽपि तस्मादेव यागभेदावगतेः कुतो ज्योतिष्टोमेऽभ्यासविधिरिति पृष्ट्वा यागनामत्वाभावाद्यागभेदकत्वनिरासार्थमेतावदिति भाष्यं व्याचष्टे—**न चैत इति** । 'ऐन्द्रवायवं गृह्णाती'त्यादिवत् ग्रहणेनादाभ्यमंशुं च कुर्यादिति शास्त्रार्थावधारणात् वैय्यधिकरण्यान्वयेऽपि ऐकाधिकरण्यं विनान्वयायोगात्सर्वत्र राज्ञः पुरुष इत्यादावपि राजसम्बन्धी पुरुष इत्यदिसामानाधिकरण्यान्वयमभिप्रेत्य ग्रहणकरणकवदाभ्यमंशुमिति च सामानाधिकरण्यं मत्वा ग्रहणसामानाधिकरण्योक्तिः गृह्यमाणग्रहद्रव्यनाम्नोऽपि ग्रहणनिमित्तत्वोक्तये ग्रहणनामधेयत्वोक्तिः ग्रहणभेदस्तर्हि सञ्ज्ञातः स्यादित्याशङ्क्याह—**इष्यत एव चेति** ।

अंशुशब्दस्य यज्यन्वयाशङ्कायोगात् ग्रहनामत्वस्य मुक्तसंशयत्वं स्पष्टत्वादव्याख्याय ग्रहणसंस्कार्यत्वान्यथानुपपत्त्या ग्रहस्य यागार्थत्वावगतेर्ग्रहभेदाद्यागभेदो भविष्यतीत्याशङ्कानिरासार्थं न चेति भाष्यं व्याचष्टे—**न चेति** । 'तद्भेदात्कर्मणोऽभ्यास' इत्यनेन न्यायेन यागाभ्यासमात्राद्ग्रहभेदोपपत्तिरित्याशयः । न च द्रव्येतिभाष्यम् । ऐन्द्रवायवं गृह्णातीत्यादौ द्रव्यदेवताश्रवणेऽपि यजिमत्त्वस्य निरस्तत्वादनर्थकमाशङ्क्यातिशयोक्त्यर्थत्वेन व्याचष्टे—**द्रव्येति** । यदपीत्यादिभाष्यं व्याचष्टे—**योऽपीति** । गृहीत्वा शब्दार्थे संक्रान्ता विधौ शक्तिः प्रत्ययस्येति समासार्थः । तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ।

अंशुवाक्ये यज्यश्रुतेः अंश्वादाभ्यशब्दाभ्यामपीति द्विवचनायोगं शङ्कते—**अंशोरिति** । परमतेन तावत्परिहरति—**गृह्णातीति** । गृह्णातेर्लोकवेदसाधारण्येन ज्योतिष्टोमोपस्थापकत्वायोगात्स्वमतेनान्यथा परिहरति—**अस्त्येव त्विति** । अदाभ्यवाक्येऽपि यजिनाऽनुवादे यागमात्रानुवादापत्तेः सोमेन तु विशेषणे विशिष्टानुवाददोषापत्तेः प्रकरणेनैव ज्योतिष्टोमान्वयं वक्तुम् अनयोरिति द्विवचनम् । एवं सत्यनारभ्य विधिरनर्थकः स्यादित्याशङ्क्याह—**तेनेति** । कः पुनः पक्षत्रयमध्येऽत्र सिद्धान्तवचनं[1] इत्यपेक्षायामाह—**तेनेति** ॥२०॥

इति अदाभ्यादीनां ग्रहनामताधिकरणम् ।

---

१. वचनेति २ पु० पा० ।

भा० प्र०—वेद में "एष वै हविषा हविर्यजते योऽदाभ्यां गृहीत्वा सोमाय यजते" एवं "परा वा एतस्यायुः प्राण एति योऽशुं गृह्णाति" (तै० सं० ३।३।४) ये दो अनाम्या-धीत अर्थात् जिसका किसी भी कर्म के प्रकरण में पाठ नहीं है ऐसे वाक्य हैं। इस स्थल में "अदाभ्यां गृहीत्वा" एवम् "अंशु गृह्णाति" इन दो भागों में 'अदाभ्य' एवम् 'अंशु' का ग्रहण कहा गया है, यह यागान्तर है या ज्योतिष्टोम याग ग्रह का विधान अर्थात् यह गुण विधि है—यह संशय होता हैं। इस संशय में पूर्वपक्षियों का कहना है कि 'अदाभ्य ग्रहण' एवम् 'अंशुग्रहण' कहा गया है यह यागान्तर है, क्योंकि, प्रकृत में "अदाभ्य" एवम् "अंशु" इन दो पदों का उल्लेख मिलता है। 'अदाभ्य' और 'अंशु' ये दोनों लोक-प्रसिद्ध कोई गुण नहीं हैं, ये "अथैष ज्योति" इत्यादि वचनों के 'ज्योतिः' आदि शब्दों के समान नामधेय है। ये नामधेय हैं, अतः, अन्य किसी रूप में इसका अन्वय सम्भव न होने से इसको योग ही मानना होगा। यदि यह कहा जाय कि द्रव्य और देवता का उल्लेख न होने से इसको याग कैसे माना जा सकता है? इसके समाधान में कहा गया है कि "अदाभ्यां गृहीत्वा यजेत" इस वचन में "यजेत" इस पद के द्वारा प्रत्यक्ष रूप से जब याग कहा गया है, तब इसे याग न मानने का कोई कारण नहीं है, अतः इसके यागत्व की रक्षा करने के लिए इसके प्रकृतिभूत ज्योतिष्टोम, उसी के द्रव्य एवं देवता की प्राप्ति होती, विकृति में प्रकृति के धर्म का ही अतिदेश होने से एवं यह ज्योतिष्टोम की विकृति होने से इसमें उसके द्रव्य और देवता का ग्रहण असङ्गत नहीं है, इसलिए यह यागान्तर विधि है।

इसके समाधान में सिद्धान्ती का कहना है कि "अदाभ्य" एवम् "अंशु" ये दो शब्द नामधेय है, इसलिए इसके द्वारा यागान्तर की विधि है—यह नहीं माना जा सकता है, क्योंकि, इस स्थल में याग का रूप द्रव्य एवं देवता की प्राप्ति नहीं होती है और ग्रह धातु के साथ ही इसका साक्षात् अन्वय होता है। प्रथम वाक्य में 'यज्' धातु है, किन्तु उसके साथ अदाभ्य का दूर से अन्वय होता है। द्रव्य देवतात्मक रूप न रहने पर केवल 'यज्' धातु से रूपहीन याग की विधि भी नहीं हो सकती है। 'यज्' धातु के द्वारा याग सामान्य ही उक्त होता हैं और सामान्य अनुष्ठान के अयोग्य है। इसलिए 'यज्' धातुका उल्लेख रहने पर भी यह याग नहीं है। 'अदाभ्य' एवं 'अंशु' यह याग का नाम भी नहीं हो सकता है, क्योंकि यह ग्रह का नाम है, कारण, 'ग्रह' धातु के साथ इसका साक्षात् सम्बन्ध है। इसलिए, इस स्थल में जो ग्रहण का विषय कहा गया है, वह ग्रहण की ही विधि है, यह ग्रहण ज्योतिष्टोमगत सोमरस का संस्कार रूप गुण है और 'अदाभ्य' एवं 'अंशु' ये भी ग्रहण के साथ समभिव्याहृत होने से विशेष-विशेष ग्रह का ही = यज्ञपात्र का ही नाम अवगत करना चाहिए। इसीलिए 'अंशु' एवं 'अदाभ्य' ये दो शब्द ज्योतिष्टोम का अङ्गीभूत ग्रहविशेष होने से इस स्थल में उनके ग्रहण रूप गुणविधि होती है।

"अद्रव्यत्वात्" = द्रव्य एवं द्रव्योपलक्षित देवता की अप्राप्ति होने से, "तु" = अधि-करण का व्यवच्छेदार्थक है, "केवले" = केवल "ग्रह" धातुविषय में, "कर्मशेषः

स्यात्'' = कर्मशेष अर्थात् प्रधान याग का ज्योतिष्टोम का शेष अर्थात् अङ्गविधि = गुण-विधि है ॥२०॥

यह नवम अंशु और अदाभ्य नामक दो ग्रहों का ज्योतिष्टोमताधिकरण है ॥

## अथ दशमं चयनाधिकरणम्

## [१०] अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥२१॥ पू०

**शा० भा०—अस्त्यग्निः 'य एवं विद्वानग्निं चिनुते' इति। एवं विधाय श्रूयते—'अथातोऽग्निमग्निष्टोमेनैवानुयजति, तमुक्थेन, तमतिरात्रेण, तं षोडशिना' इत्येवमादि। तत्र संदेहः—किमयमग्निशब्दो यागवचनो ज्योतिष्टोमादिभ्यः कर्मान्तरं चिनुत इत्याख्यातेन विधीयते, उत द्रव्यवचनो ज्योतिष्टोमादिषु गुणविधानमिति। किं प्राप्तम्? यागवचन इति। कुतः? लिङ्गदर्शनात्। लिङ्गं हि दृश्यते। 'अग्नेः स्तोत्रम्, अग्नेः शस्त्रम्' इति। तथा, 'षडुपषदोऽग्नेश्चित्यस्य भवन्ति' इति। यस्य स्तोत्रशस्त्रमुपसदश्च, तस्याग्निशब्दो वाचक इति गम्यते। यागस्यैतत्सर्वम्। तस्माद्यागवचन इति।**

**ननु लिङ्गमसाधकं, प्राप्तिरुच्यतामिति। अत्रोच्यते। 'अथातोऽग्निमग्निष्टोमेनैवानुयजति' इति यागमभिनिर्वर्तयतीत्युच्यते। तमग्निमिति विशिनष्टि। तस्मादग्निसंज्ञक इति गम्यते। अनुशब्दोऽप्युपसर्गो यजतेर्विशेषक एवमुपपद्यते। यद्यग्निर्यागः। तस्मात्क्रतुशब्दः प्रतीयेत् ॥२१॥ पूर्वपक्षः ॥**

त० वा०—'अग्निं चिनुते' इत्यत्रापि त्रेधैव संदेहः, किमपूर्वयागविधिः उत चयनमात्रविधानम्। उत प्रकृतिविकृतिषु गुणविधानमिति। तत्राश्वदाभ्यवत्प्रकरणे पुनरतंकीर्तनात्, संस्कारमात्रस्य च केवलस्य प्रयोजनासंभवात्, संज्ञयैव क्रत्वन्तरं कल्प्यते। तथा च फलश्रवणम्, 'ऋध्नोत्येव' इति। न च गुणात्फलामीति शक्यं वक्तुम्, प्रकृताश्रयानुपपत्तेः।

तथा चैकान्तिकसोमयागचिह्नान्युपसदादीन्युभयत्र संबद्धानि श्रूयन्ते। तथेमानि वचनानि 'अथातोऽग्निमग्निष्टोमेनैवानुयजति' इति। तत्र 'अग्निं यजति' इति 'समिधो यजति' इतिवत् 'तत्प्रख्यं चान्यशास्त्रम्' इत्येवं सिद्धनामधेयविशिष्टयागविधानं विज्ञायते। तस्यैव चाग्निष्टोमादिसंस्थत्वं विशेषणम्। द्विरात्रादयश्च कालविशेषा विकल्प्यन्ते।

अथवा संस्थाविधिपरे वाक्ये यजत्यनुवाद एवमवकल्पते, यद्युत्पत्तिवाक्ये चिनोतिर्यजतिमद्ववचनः तस्मादुत्तरकालदृष्टेन यजतिसामानाधिकरण्येनाऽऽदावेवाग्निशब्दः क्रतुनामधेयमिति निश्चीयते। अनुशब्दश्च 'य एतेनानिष्ट्वे'त्यनेन प्राप्तं ज्योतिष्टोमात्पश्चाद्भावमनुवदति।

यद्वाऽग्निमग्निष्टोमादिसंस्थैर्यागैरनुयजतीत्युक्ते यद्यग्निर्याग, एवमसावनुयष्टुं शक्यते। सर्वत्र हि तुल्यरूपाणां तुल्यधर्मणां विभागे पौर्वापर्यं भवति। तद्यथा देवदत्तमनुगच्छतीति। यदि देवदत्तोऽपि गच्छत्येवमनुगमनमवकल्पते, तथाऽनुयजनमपि। तस्माच्छ्रुतानुमितेतिकर्तव्यतावत्क्रतुविधानमेतदिति।

पश्चिमे तु व्याख्यानेऽग्निष्टोमा दिभ्यः पश्चात्क्रियमाणोऽयं तदङ्गमेव भवतीति फलश्रुतिरर्थवादः स्यात्। पूर्वत्र तु स्वतन्त्रत्वात् 'फलमात्रेयो निर्देशात्' इति फलविधित्वात्पुरुषार्थमिति विशेषः॥ २१॥

अथ दशममग्निचयनाधिकरणम्॥ १०॥

न्या० सु०—अस्यापि प्रासङ्गिकत्वेन प्रकृतयजिमद्वचनावचनत्वचिन्ता। सङ्गतिमपिशब्देन सूचयितुं सन्देहत्रैविध्यमुदाहरणविवेकपूर्वकमाह—**अग्निमिति**। यजिमत्त्वसंस्कारकर्मनिरासार्थो मात्रशब्दः। चिनोतिवाक्येन प्रकृतिविकृत्यङ्गत्वाविधानेऽपि अनेन वाक्येनाग्निसंस्कारत्वेन चयने विहिते संस्कृतस्याग्नेः कैमर्थ्यापेक्षायामुत्तरवाक्यैः प्रकृतिविकृत्यर्थत्वे विहिते संस्कारविधिपर्यालोचनमभिप्रेत्य—**प्रकृतीत्युक्तम्**। तदर्थमेव भाष्यकृता पूर्वपक्षोपपादनार्थं चोत्तरवाक्यान्युदाहृतानि। कर्मान्तरं चिनुतइत्याख्यातेन विधीयतइत्येतावता चावृत्तेन भाष्येण यावदुक्तपक्षोक्तेस्त्रैविध्यस्य भाष्यारूढत्वम्। किमिति पूर्वपक्षभाष्यं गुणविधि-यावदुक्तत्वाख्यपक्षद्वयप्रतियोगित्वेन व्याचष्टे—**तत्रेति**। अंशवदाभ्यवैषम्योक्त्याधिकाशङ्का दर्शिता।

चयनस्य स्वभावतः संस्कारमात्रत्वप्रसिद्धेः संस्कारे च फलश्रुतेरर्थवादस्य वक्ष्यमाणत्वाच्छ्रुतस्यापि फलस्यान्वयानुपपत्तेर्निष्प्रयोजनत्वप्रसङ्गात्कैवल्यं यावदुक्तत्वं न युक्तमित्यर्थः। अतः परिशेषाच्चिनोतेर्यजिमद्वचनतेति क्रतुशब्देनोक्तम्, तथापि कथं कर्मान्तरतेत्यपेक्षायाम्—**सञ्ज्ञैवेत्युक्तम्**। पूर्वाधिकरणपूर्वपक्षवदिहाप्यपूर्वनामधेयसंयोगो भेदहेतुरभिप्रेत इति सूचनार्थं एवकारः। अग्निसञ्ज्ञकं कर्म करोतीति इष्टकाभिरग्निं चिनुतइति वाक्यान्तरविहितवचनानुवादिप्रत्ययानुग्रहार्थं चिनोतिधातुपरेण प्रत्ययेन विहिते, किन्तदित्यपेक्षितेऽग्निमनुयजतीत्युत्तरवाक्ये यजिसामानाधिकरण्यात् यागरूपता वसीयतइत्याशयः। गुणविधित्वनिरासेन यजिमद्वचनत्वोपपादनार्थं स्वयं तावल्लिङ्गदर्शनमाह—**तथा चेति**। ननु गुणविधित्वेऽपि चयनसंस्कृताग्निलक्षणस्य फलश्रुतिर्युक्तेत्याशङ्क्याह—**न चेति**। भाष्योक्तं लिङ्गदर्शनं व्याचष्टे—**तथा चेति**। नन्विति भाष्येणाग्निशब्दस्य यागनामत्वे प्रापकं पृष्ठ्वाऽथातोऽग्निमग्निष्टोमेनैवानुयजति तमुक्थ्यैर्न, तं षोडशिना तमतिरात्रेण, तं त्रिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं षड्रात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण, तमेकादशरात्रेणेति, वाक्यस्य प्रापकत्वोक्त्यर्थमत्रेति भाष्यं व्याचष्टे—**तथेति**। अस्य प्रापकत्वोपपादनार्थं यागमिति भाष्यं द्वेधा व्याचष्टे—**तत्रेति**। अथैत्यादिना एकादशरात्रेत्यन्तेनैकेन वाक्येन विनियोक्तृभूतलक्षणतृतीयायुक्तयजतिशब्दा-

नुषङ्गेण वैकल्पिकाग्निष्टोमादिसंस्था द्विरात्रादिकालविशिष्टत्वविधावग्नियागं करोतीति सामानाधिकरण्या'द्यदाहवनीये जुह्वती'ति तत्प्रख्यान्यशास्त्राच्चाग्निशब्दस्य गुणविधित्वानुपपत्तेर्यागनामत्वावसायात्। अग्निसञ्ज्ञकं यागं करोतीति चिनोतिवाक्यार्थोऽवगम्यत इत्याद्यव्याख्याने भाष्यार्थः। वाक्यान्तरेणैव नामादिविशिष्टयागाविधौ चयनवाक्यानर्थक्यापत्तेर्वाक्य, प्रवृत्तिवेलायां चाग्निश्चितार्थस्यापि चयनवाक्यस्या'थैष ज्योति'रित्यादिवदन्यतोऽर्थनिश्चयसम्भवे विधायकत्वोपपत्तेराद्यव्याख्यानेऽपरितोषात्, द्वितीयव्याख्यानेऽर्थे इत्यादिषु संस्थार्थत्वविधिपरेषु भिन्नेषु वाक्येषु अग्नियागं करोतीति अग्निशब्दसमानाधिकरणयज्यनुवादान्यथानुपपत्त्याग्निसञ्ज्ञक[1]यागविधायित्वं चिनोतिवाक्यस्यावसीयतइति भाष्यार्थः। एकस्मिन् गुणपरे वाक्येऽनेकार्थविध्ययोगात्संस्थादिविधिपरे वाक्यभेद इति एकवचनसामान्याभिप्रायं तस्मादित्युपपाद्योक्त्यर्थं भाष्यं व्याचष्टे—**तस्मादिति**।

अनुशब्दादप्यग्निशब्दस्य यागवाचितावगम्यतइत्युक्त्यर्थमनुशब्दोऽपीति भाष्यमपि द्वेधा व्याचष्टे—**अनुशब्दश्चेति**। संस्थादिविधिपरे अनुशब्दोक्तस्य पश्चाद्भावस्य विध्ययोगेनानुवाद्यत्वावगतेरयागत्वे च पश्चाद्भावाप्राप्तावनुवादायोगाद्यागताऽग्नेर्ज्ञायतइत्याद्यव्याख्याने भाष्यार्थः।

द्वितीये त्वग्निष्टोमादिसंस्थैरेकाहैर्द्विरात्रादिभिश्चाहीनैरग्नेः पश्चात्करिष्यमाणैरग्निरनुयष्टव्य इति अग्नेर्यागप्रागभावविधानस्य तुल्यरूपत्वगमकत्वाद्यागत्वावगतिरिति। अस्मिंश्च व्याख्याने चिनोतिवाक्यविहितस्य यागस्योत्तरवाक्यैः संस्थाद्यर्थत्वविध्युपगमादग्निष्टोमसंस्थायाश्च निष्फलत्वेन शेषित्वायोगादग्निष्टोमशब्दस्य तत्स्थयागवाचित्वात्सर्वार्थतासिद्धचै चानुशब्दस्य सर्वत्रानुषङ्गसिद्धान्तवत्सूचयितुम्—**यागैरित्युक्तम्**। द्रव्यदेवतादीतिकर्त्तव्यतानाम्नानाद्यागविध्यनिर्वाहाशङ्कां निरस्यस्तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। एतच्छब्देन चिनोतिवाक्यं परामृष्टम्।

ननु चिनोतिवाक्येन यागविधौ उत्तरवाक्यानां संस्थाद्यर्थत्वविधिपरत्वाभ्युपगमात्पौर्वापर्यविधायित्वानुपपत्तेर्द्वितीयव्याख्या न युक्तेत्याशङ्क्याग्नेर्ज्योतिष्टोमाद्यङ्गत्वप्रसिद्धिनिर्वाहार्थत्वं द्वितीयव्याख्यायाः विधित इति सूचयितुमाह—**पश्चिमेत्विति**। शङ्कानिरासार्थस्तुशब्दः अग्निष्टोमाद्यर्थं क्रियमाणत्वेनाग्नेरग्निष्टोमाद्यङ्गत्वेऽभिहिते तदर्थं क्रियमाणतैव कथमित्यपेक्षितेऽग्नेः कैमर्थ्यापेक्षायामग्निष्टोमादिनाग्नेरनुयष्टव्यत्वं विधितो। देवदत्तो यज्ञदत्तेनानुगन्तव्य इति विधितो यज्ञदत्तस्य पश्चाद् गमनप्रतीतिवत्फलवतोऽग्निष्टोमादेः पश्चाद्भावितया प्रतीतस्यातिक्रमकारणाभावात्तदर्थतैवोचितेति सूचयितुम्—**पश्चादित्युक्तम्**। पूर्वव्याख्याने तु पौर्वापर्यस्याविधेयत्वात्। तद्वशेन ज्योतिष्टोमाङ्गत्वाप्रतीतेः स्वतन्त्रतेत्याशयः॥ २१॥

---

१. संज्ञया वाक्येषु विधायित्वमिति २ पु० पा०।

भा० प्र०—वेद में कहा गया है कि "य एवं विद्वानग्निं चिनुते" (तै० सं० ५।६।३) जो इस प्रकार अवगत होकर अग्निचयन करता है, इस प्रकार अग्निचयन का विधान कर पुनः कहा गया है कि "अथातोऽग्निष्टोमेनैवानुयजति तमुक्थेन तमतिमात्रेण तं षोडशिना" इत्यादि। इस स्थल में "अग्निं चिनुते" इस वाक्य का अग्नि शब्द यागविशेष का नाम कहकर उसके द्वारा क्या यागन्तर का विधान किया गया है, यह द्रव्यविशेष का वाचक होने से उसका संस्कार रूप गुण ज्योतिष्टोम विहित होता है—यह संशय होता है।

इसमें पूर्वपक्षियों ने कहा "अग्निस्तु क्रतुशब्दः प्रतीयते" शब्द को याग का ही नाम मानकर ग्रहण करना होगा। अतः, इस स्थल में "अग्निं चिनुते" इस वचन से यागान्तर का विधान किया गया है। यह याग का नाम है, इसका कारण व्यक्त करते हुए कहा गया है "लिङ्गदर्शनात्", "अग्नेः स्तोत्रम्"., "अग्नेः शस्त्रम्" अर्थात् "अग्नि का स्तोत्र, अग्नि का शस्त्र" (मन्त्रविशेष) इस प्रकार ज्ञापक होने से अवगत होता है कि यह याग का ही नाम है, क्योंकि, अग्नि यागविशेष न होने पर उसका स्तोत्र या शस्त्र नहीं हो सकता है, कारण, एकमात्र याग में ही स्तोत्र एवं शस्त्र के सम्बन्ध से हो सकता है, क्योंकि याग में ही वह पाठ्य है। इस प्रकार अन्य लिङ्ग भी है जिससे यह अवगत होता है कि अग्नि शब्द याग का ही नाम है। अतएव "अग्निं चिनुते" इसके द्वारा अग्नि नामक याग का ही विधान किया गया है।

"अग्निः" = अग्नि अग्निष्टोमेन अनुयजति इस वाक्य का अग्नि शब्द, "तु" = प्रत्यवस्थान में, "क्रतुशब्दः प्रतीयते" = क्रतु शब्द अर्थात् याग का नाम होने से प्रतीत होता हैं, "लिङ्गदर्शनात्" = क्योंकि इस प्रकार लिङ्ग अर्थात् वेदवचन से विज्ञापित हेतु दृष्ट होता है ॥ २१ ॥ यह पूर्वपक्ष है।

## द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥२२॥ सि०

**शा० भा०—द्रव्यं वा अग्निशब्देनोच्येत। कतमद् द्रव्यम्? यदेतज्ज्वलनः। अत्र ह्येष प्रसिद्धः। चिनुते इत्येषा हि चोदना चयनार्था न यजत्यर्थं शक्नोति वदितुम्। चयनेनैनं संस्कुरुते—चितौ स्थापयतीति। अनुशब्दश्च पश्चादर्थो[1] भविष्यति। चयने निर्वृत्ते[2] पश्चादग्निष्टोमेन यागेन यजतीति ॥२२॥**

त० वा०—अत्यन्तरूढिशब्दत्वाद्वाक्यभेदादिभिर्विना।
ज्वलनं न परित्यज्य क्रतुरग्निः प्रतीयते॥

न ह्यग्निशब्द उद्भिदादिवद्यौगिकः। नापि वाक्यभेद-तत्प्रख्य-तद्व्यपदेशैर्युक्तः, येन कर्मनामधेयत्वं विज्ञायते। यत्तु तत्प्रख्यमस्तीत्युक्तं भवत्तेद्यदि क्रत्वङ्गत्वेना-

१. ब. पश्चादर्थे। २. ब. अभिनिर्वृत्ते।

ग्निर्विधीयते, स तु प्राप्तक्रत्वङ्गभाव एव चयनसंस्कारतया श्रूयते। न च ताद्रूप्येण कुतश्चित्प्राप्त इति, तत्प्रख्यान्यशास्त्रान्तराभावः। तस्माद् द्रव्यमेवाग्निरिति। कतमद् द्रव्यमिति—चयनसामाधिकरण्यविरोधाभिप्रायेण प्रश्नः।

सिद्धान्तवादी तु 'व्रीहीनवहन्ति' इतिवद्वैयधिकरण्येनैव संस्कार्यसंस्कारसंबन्धोपपत्तेरविरोधं मत्वाऽऽह—**यदेतज्ज्वलन इति**। तस्मादग्निशब्दस्य प्रसिद्धार्थग्राहित्वाच्चिनोतेश्च यागाभिधानाशक्तेर्द्रव्यदेवताभावाच्चाग्निं चयनेन संस्करोतीत्येतावानेव चोदनार्थोऽवधार्यते। तदा च द्वितीया समर्थिता भवति कर्मनामधेयत्वे त्वग्निहोत्रवत्क्लेशः स्यात्। अनुयजतीति शब्दः कथमिति चेत्? उच्यते—

एकाहाहीनसत्राणि यजिस्तावद् ग्रहीष्यति।
अनुशब्दश्चिते तेषामनुष्ठानं वदिष्यति॥

यदि ह्ययमग्निशब्दः समानाधिकरणः स्यात्, ततो दुःखं नीयेत। यदि वैषा कर्मणि द्वितीया स्यात्। अयं तु व्यधिकरणः, कर्मप्रवचनीययुक्ते द्वितीया। अत्रायमर्थो—अग्निचयनमन्वग्निष्टोमादिभिर्यष्टव्यमिति। अग्निशब्दश्च सामान्यवचनोऽपि सन्नत्र प्रकरणवशाच्चयनसंस्कृते वह्नौ प्रवर्तते। चयनसंस्कारोत्तरकालं यष्टव्यमित्यर्थः। तेन क्रत्वङ्गभावोपनयनार्थत्वेनैवैतानि वचनानि। चोदकेनैव प्राप्तानां विकृतिषु पुनःश्रुतिः किमर्थेति चेत्? दशमे वक्ष्यते 'ग्रहणं सामानविधानं स्यात्' इति। न चावश्यं तुल्यजातीययोरेव पौर्वापर्यं भवति। अतुल्यजातीययोरपि पौर्वापर्यं भवति। यथा पाकमनुभुङ्क्त इत्यविरोधोपपत्तेः। यत्तु देवदत्तो यज्ञदत्तमनुगच्छतीत्येतत्तुल्यकर्मत्वं गम्यत इति। युक्तं तत्र कर्तृमात्रोपादाने सति क्रियान्तरानुपादानात्। इह पुनरग्निसंस्कारोपात्तं चयनकर्मैव विद्यत इत्यसमानम्॥ २२॥

न्या० सु०—द्रव्यं वेत्यादि प्रसिद्धइत्यन्तभाष्यं तात्पर्यतस्तावद्व्याचष्टे—**अत्यन्तेति**। श्लोकं व्याचष्टे—**न हीति**। पूर्वपक्षोक्तं तत्प्रख्यात्वमनुभाषणपूर्वं परिहरति—**यत्त्विति**। यदि यदाहवनीये जुह्वतीतिवच्छुद्धोऽग्निः क्रत्वङ्गत्वेनाथेत्यादिवाक्यैर्विधीयते। ततस्तत्प्रख्यत्वं भवेत्, स त्वाहवनीयवाक्याच्छुद्धः प्राप्तकत्वङ्गभावएव चिनोतिवाक्यात् चयनसंस्कार्यतया श्रुतोऽथेत्यादिवाक्यैस्तादृगेव क्रत्वङ्गत्वेन विधीयते। ताद्रूप्येण चान्यतोऽप्राप्तेर्न तत्प्रख्यतेत्यर्थः। श्लोकार्थमुपसंहरति—**तस्मादिति**। एतदेव भाष्यमवयवशो व्याचिख्यासुः कतमदिति प्रश्नभाष्यमग्निशब्दार्थस्य सर्वलोकप्रसिद्धेरयुक्तमाशङ्क्योपपादयति—**कतमदिति**। यागनामत्वेऽग्निशब्दस्ये'ष्टकाभिरग्निं चिनुत'इति वाक्यान्तरेण तदङ्गतया चयनविधेरङ्गाङ्गिनोरभेदोपचारेणाग्निचयनं करोतीति सामानाधिकरण्यमपि सम्भविष्यतीत्याशयः।

यदित्युत्तरभाष्याशयमाह—**सिद्धान्तेति**। चोदनाया इति सूत्रावयवव्याख्यानार्थं चिनुतइति भाष्यमुपपादयति—**तस्मादिति**। 'वायव्यं श्वेतमालभेते'त्यादेर्यागाभिधाना-

शक्तावपि यागचोदनाभ्युपगमात्तद्वैषम्यार्थम्—**द्रव्येत्युक्तम्**। उपपत्त्यन्तरमाह—**तथा चेति**। या त्वनुयजतिशब्दादग्नेर्यागतोक्ता। तत्परिहारार्थमनुशब्दमनुशब्दश्चेति भाष्यमाशङ्कानुभाषणपूर्वं व्याचष्टे—**अन्विति**। नानुयजतिशब्देनाग्नेरग्निष्टोमादिभिरनुयष्टव्यतोच्यते, किं त्वग्निष्टोमादिशब्दसामानाधिकरण्यादेकाहग्राही, द्विरात्रादिशब्दसामानाधिकरण्याच्चाहीनग्राही यजिः सत्रवाचिशब्दाभावदग्निष्टोमादिसंस्थासद्भावमात्रेण च सत्रग्रहणेऽहीनानामपि तथैव ग्रहणसिद्धेर्द्विरात्रादिवाक्यानर्थक्यापत्तेः मन्त्रग्राहित्वं कथमिति न विद्मः। चयनसंस्कृतस्याग्नेरेकाहाद्यङ्गत्वोक्तयेऽनुशब्दः इत्युत्तरार्द्धार्थः। श्लोकार्थमुपपादयितुमाह—**यदि हीति**। यदाग्निष्टोमादिभिर्यागैः कुर्यात्तदग्निमन्विति व्यधिकरणत्वेनाग्निशब्दस्य यजिसामानाधिकरण्याभावान्न दुःखेन यागवाचित्वकल्पना युक्तेत्युक्तम्। सामानाधिकरण्याभावेऽपि द्वितीयोक्तानुयजनकर्मत्वान्यथानुपपत्त्याग्नेर्यागत्वं कल्पयिष्यतइत्याशङ्क्य—**यदि चेत्युक्तम्**। अग्निचयनस्याग्निष्टोमादिकाललक्षणोक्त्यर्थत्वेनानुशब्दस्यानुर्लक्षण४-१-८४इति कर्मप्रवचनीयसञ्ज्ञत्वात्कर्मप्रवचनीययुक्ते द्वितीये२-३-८ति स्मृतेस्तद्योगनिमित्तत्वान्नेयं द्वितीया कर्मणीत्यर्थः। लक्षणार्थतानुशब्दस्य तत्रेत्यनेनोक्ता। चिनोत्यश्रुतेरग्निचयनमन्वित्यर्थालाभमाशङ्क्याग्निशब्दश्चेत्युक्तम्। श्लोकार्थमुपसंहरति—**तेन क्रत्वङ्गभावेति**।

तृतीयेत्थम्भूतलक्षणेऽग्निष्टोमेनैवानुयजतीत्यग्निष्टोमाख्यप्रकृत्यङ्गत्वे विहितेऽतिदेशेनैवोक्थ्यादिषु प्राप्तेः 'तमुक्थ्येनेत्यादेस्तुत्यर्थानुवादत्वेनैकवाक्यत्वावगमाद् बहुवचनानुपपत्तिमाशङ्कते—**चोदकेनैवेति**। दशमे 'य एवं विद्वानग्निं चिनुत'इति वाक्यविहितमग्निम्, 'उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्या' इति वाक्यविहितानतिग्राह्यानुदाहृत्याग्न्यतिग्राह्यं विकृतावतिदिश्यते न वेति सान्दिग्धे 'अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृतिः स्यादि'१०-८-२३ति सूत्रेणाग्नेस्तमुक्थ्येनेत्यादिनातिग्राह्याणां च यदुक्थ्येऽतिगृह्णीयादित्यादिना कासुचिद्विकृतिषूपदेशादातदेशाप्रवृत्तिं पूर्वपक्षयित्वा निर्देशस्यापर्यायप्रवृत्तेः सर्वाङ्गे तुल्यत्वादग्न्यतिग्राह्यस्यापि ग्रहणमिति'ग्रहणं वा तुल्यत्वादि१०-८-२५त्यनेन सिद्धान्तिते विकृतौ तर्ह्युपदेशः किमर्थ इत्याशङ्क्यातिदेशागृहीतस्यापि कासु चिद्विकृतिषूपदेशेन ग्रहणे गुणकामप्रवृत्त्यर्थं समानविधानत्वं प्रयोजनमिति ग्रहणे समानविधानं स्यादि१०-८-२७त्यनेन वक्ष्यमाणत्वेनाप्रतीयमानस्तुत्यर्थत्वकल्पनायोगाद्वचनानीति बहुवचनोपपत्तिरिति परिहरति—**दशम इति**।

कर्मण्यपि द्वितीयायां तत्क्रियात्वजात्यपेक्षयानुशब्दस्य यजिविशेषणत्वोपपत्तेरवान्तरजातितुल्यत्वानावश्यकत्वान्नानुयजनकर्मत्वमात्रेणाग्नेर्यागरूपत्वावगतिरित्याह—**न चेति**। पूर्वपक्षोक्तदृष्टान्तानुभाषणपूर्वं वैषम्यमाह—**द्वत्त्विति**। किं चिदकुर्वतो देवदत्तस्य यज्ञदत्तकर्मकर्तृकानुगमनकर्मत्वायोगात् द्वितीयोक्तकर्मत्वान्यथानुपपत्त्या कर्तृत्वमात्रोपादाने सति क्रियान्तरानुपादानात्तुल्यक्रियाकल्पनं युक्तम्। चयनसंस्कृताग्निवाचिना त्वग्निशब्देन चयनाख्यक्रियान्तरोपादानान्न तुल्यक्रियाकल्पना युक्तेत्यर्थः॥ २२॥

भा० प्र०—इस पूर्वपक्ष के उत्तर में सिद्धान्तियों का कहना है कि "द्रव्यं वा स्यात्" इस स्थल में अग्नि शब्द रूढ़ि के कारण उष्णस्पर्शविशिष्ट द्रव्यविशेष का अर्थात् लोकप्रसिद्ध अग्नि का ही वाचक है; कारण, "चोदनायास्तदर्थत्वात्" इस स्थल में "चिनुते" यह जो चोदना है अर्थात् विधि है, यह चयन के लिए अर्थात् इसके द्वारा चयन विहित होता है किन्तु यह याग का वाचक नहीं है। क्योंकि, अग्नि का चयन करें इसका अर्थ चयन के द्वारा अग्नि का संस्कार करें, चिति के मध्य में अग्नि का स्थापन करे अर्थात् विशेष आकारविशिष्ट अग्नि के स्थापन का स्थान चिता के मध्य में अग्नि का स्थापन करे। इस वाक्य से विहित चयन निष्पन्न होने पर अग्निष्टोम याग करें।

यह "अग्निम् अग्निष्टोमेन अनुयजति" इस वाक्य से अवगत होता है। क्योंकि, "अनुयजति" इस स्थल का "अनु" शब्द कर्मप्रवचनीय है। उसी का याग में "अग्निम्" इस स्थल में द्वितीया होती है। इसलिए इस वाक्य का अर्थ इसप्रकार होता है— "अग्निम् अग्निष्टोमेन यजति" अर्थात् अग्निचयन के बाद अग्निष्टोम करें॥

"द्रव्यम्"=द्रव्य अर्थात् अग्नि शब्द उष्णस्पर्शविशिष्ट द्रव्य, "वा" = पूर्वपक्ष के निवारण के लिए है, "स्यात्" = होगा, "चोदनायाः तदर्थत्वात्=क्योंकि, चोदना अर्थात् विधि से विधेयचयन की तदर्थता अर्थात् अग्नि का संस्काररूप प्रयोजन रहता है॥ २२॥

॥ सिद्धान्त॥

**तत्संयोगात्क्रतुस्तदाख्यः स्यात्तेन धर्मविधानानि ॥२३॥**

**शा० भा०—यत्तु लिङ्गदर्शनमुक्तं—यागवचनोऽग्निशब्द इति। तत् तेष्वेव लिङ्गसंयुक्तेषु वचनेषु, न सर्वत्र। तेषु चित्याग्निसंयोगात् यागे लक्षणशब्दः। तेन क्रतुवचनानि तद्धर्म[1]विधानानीत्यदोषः ॥२३॥ सिद्धान्तः॥**

**इति दशमं चयनाधिकरणम् ॥१०॥**

त० वा०—'अग्नेः स्तोत्रम्' इत्यादिष्वगत्याऽऽश्रयणम्[1]। ज्वलनेन सम्बद्धं स्थलं लक्ष्यते। नापि तद्वान्क्रतुः। न चैकत्र लक्षणाश्रयणमिति, सर्वत्रैव साऽऽश्रयितव्येति। तस्मात्सत्यां गतौ द्रव्यवचनत्वमेव युक्तम्।

**वृत्त्यन्तरस्यानुवादनिरासौ**

यस्त्वत्रैवाधिकरणे भाष्यकारान्तरेणाग्नेः फलवदफलत्व-प्राकृतवैकृतत्वनित्यानित्यत्वोत्तरवेदिविकाराविकारत्वविचारः कृतः। स उदाहरणान्तरेष्वधिकरणान्तरसिद्ध इहाऽसम्बद्धोऽपि स्मरणमात्रदर्पेणोपन्यस्तइत्युपेक्षितव्यः। तस्मान्नैवंजातीयको गुणो भेदक इति सिद्धम्॥ २३॥

(इति दशमं चयनाधिकरणम्॥ १०॥)

---

१. ब. न द्रव्यवचनानीत्यदोषः। १. क० श्रवणम्।

न्या० सु०—'अग्नेः स्तोत्रमि'त्यादावग्निशब्दवाच्यचयनसंस्कृतज्वलनाख्यद्रव्यसंयोगाल्लक्षणयाऽन्याख्यः क्रतुः स्यात्, तेन कारणेनाग्नेस्तोत्रादिधर्मविधानान्युपपद्यन्तइत्येवं पूर्वपक्षोक्तलिङ्गपरिहारार्थत्वेन सूत्रव्याख्यानार्थं यत्वित्यादिभाष्यं तात्पर्यतो व्याचष्टे—**अग्नेरिति**। अग्निसंयोगाद्यागलक्षणायां यागमात्रप्रसक्तिमाशङ्क्य चित्यविशेषणं तद्भाष्ये कृतम्। तद्व्याचष्टे—**ज्वलनेनेति**। व्याख्येयभाष्यानुसारादग्निशब्दश्चेति पूर्वसूत्रस्थवार्त्तिकालोचनया च ज्वलनसामान्येन स्थापनसंस्कृतविशेषो लक्ष्यतइत्यर्थः। 'वेतसशाखयावकाभिश्चाग्निं विकर्षती'त्यादौ त्वग्निस्थापनात्प्राक् प्रयोगादग्निशब्दस्य स्थललक्षणार्थत्वमुक्तम्। तत्तेष्वेवेत्येवकारार्थमाह—**न चेति**।

भाष्यकारान्तरकृतानि तु चिन्तान्तराणि कस्मान्नानेन भाष्यकृता दर्शितानीत्याशङ्क्याह—**यस्त्विति**। फलवदफलवन्नित्यानित्यत्व[1]विचारणामग्न्याद्युदाहरणेषु पर्णमय्यधिकरणसिद्धो प्राकृतवैकृतत्वविचारश्चास्मिन्नेवोदाहरणेऽग्न्यतिग्राह्याधिकरणसिद्धनित्यानित्यत्वविचारस्तु[2] गोदोहनोदाहरणे उत्तरवेदिविकाराविकारकाम्यो गुणो नित्यमर्थं करोतीति व्युत्पादनान्नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषादि३-६-१०ति तृतीयाधिकरणसिद्धः सङ्कर्षे द्वितीयेऽध्याये मध्यमायामुपसद्यग्निश्चीयते प्रकृत्युपकृतत्वादि१४-२-४८त्यत्राधिकरणे मध्यमायामुपसद्यग्निचयनं सिद्धयेत्। किं चितावौत्तरवेदिका धर्माः कार्या न वेति सन्दिह्याग्न्युत्तरवेद्योः समुच्चयात् भिन्नकार्यत्वावगमेनाग्नेरुत्तरवेदिकार्यापत्त्यभावावगतेरौत्तरवेदिकधर्मानतिदेशं पूर्वपक्षयित्वा, 'सोत्तरवेदिस्तु क्रतुं चित्वा नोत्तरवेद्या अग्निश्चीयत' इति वचनालोचनया समुच्चयावगमेऽपि चयननिष्पादितस्थलस्याग्निं चिनुतइति द्वितीयोक्ताग्निसंस्कारार्थत्वेऽस्य योग्यतयाग्निधारणात्मकसंस्कारार्थत्वावगमेनोत्तरवेद्यामग्निं निदधातीत्यग्निधारणाख्योत्तरवेदिकार्यापत्त्यवगमात् कार्यैक्येऽपि च 'वेद्यौर्हवीष्यांसादयती'ति वेदिबर्हिषोरिव स्थलोत्तरवेद्योरपि पाक्षिकप्राप्तचभावेन नियमविध्यभावादन्योन्यनैरपेक्ष्यानवगतेः समुच्चयाविरोधादुत्तरवेदिकार्यापत्त्या स्थलाख्यस्याग्नेस्तद्धर्मातिदेशे सिद्धान्तयितुम् उत्तरवेद्या समुच्चीयमानेऽपि चयने उत्तरवेदिकार्यापन्ने उत्तरवेदिधर्मा भवेयुरिति वदता तत्रत्यभाष्यकृतौत्तरवैदिकधर्मग्राहित्वलक्षणस्य तद्विकारत्वलक्षणस्य तद्विकारत्वस्यातद्विकारत्वपूर्वपक्षनिरासपूर्वमुपपादयिष्यमाणत्वात्, सिद्धवच्च समुच्चयोक्त्या बाधरूपतद्विकारत्वनिरासेन बाधरूपस्यातद्विकारत्वस्य तत्र वक्ष्यमाणत्वात्तदधिकरणसिद्धः। न केवलं गतार्थत्वादुपेक्ष्यम्, किं त्वप्रसङ्गत्वादपीति इहेत्यनेनोक्तम्। कस्मात्तर्हि तेन कृत इत्यपेक्षायामुपसंहारार्थम्—**स्मरणेत्युक्तम्**। प्रासङ्गिकमधिकरणद्वयं समाप्य, प्रकरणार्थमुपसंहरति—**तस्मादिति**। पूर्वत्र सम्भवाद्ध्यादिर्न भेदक इत्यर्थः ॥२३॥

इति दशमं चयनाधिकरणम् ॥११॥

---

१. नित्यानित्यत्वेति २ पु० ना०।

२. प्रकृत्युपसंबन्धात् अप्राकृते यथा समाम्ननि तत् प्राकृतवैकृतैर्व्याख्यातमिति समग्रं सूत्रम्।

भा० प्र०—लिङ्ग दृष्ट होने से अग्नि शब्द का याग वाचक है—यह जो आपत्ति दी है, वह ठीक नहीं है, क्योंकि, "अग्नेः स्तोत्रम्" "अग्नेः शस्त्रम्" इत्यादि स्थलों में अग्नि शब्द लक्षणा के बल से अग्निविशिष्ट याग का वाचक है, और एक स्थल में अग्नि शब्द में लक्षणा कर यथार्थता का ग्रहण करने से सर्वत्र वैसा ही होगा—यह बात नहीं है। अतः "य एवं विद्वान् अग्निं चिनुते" इस वाक्य में अग्नि शब्द को याग का नाम नहीं कहा जा सकता है।

"तत्संयोगात्" = उसके साथ अर्थात् चिताग्निको=चयनाग्नि के साथ संयोग अर्थात् सम्बन्ध होने से "क्रतुः"=ज्योतिष्टोमादिक्रतु "तदाख्यः स्यात्"=उस अग्नि के नाम के द्वारा उक्त होता है, "तेन धर्मविधानानि" इसलिए "अग्निः स्तोत्रम्" "अग्निः शस्त्रम्" इत्यादि वाक्य में धर्म का विधान अर्थात् स्तोत्र आदि का विधान होता है॥ २३॥

॥ यह दशवाँ चयनाग्निसंस्कारत्व अधिकरण॥

## अथैकादशं प्रकरणान्तराधिकरणम्

## [११] प्रकरणान्तरे प्रयोजनान्यत्वम् ॥२४॥ सि०

**शा० भा०—कुण्डपायिनामयने श्रूयते—'मासमग्निहोत्रं जुह्वोति,[1] मासं दर्शपूर्णमासाभ्यां यजन्ते इत्येवमादि। यत्र संदिह्यते—किं नियतेऽग्निहोत्रे, नियतयोश्च दर्शपूर्णमासयोर्मासो विधीयते कालः, अथ किं नियताग्निहोत्रात्, नयताभ्यां च दर्शपूर्णमासाभ्यां कर्मान्तरविधानमिति। किं तावत्प्राप्तम्? नियतेषु कालविधिरिति। कुतः? कालविधिसरूप एष शब्दो मासमिति। कथं कालविधिसरूपता? यदग्निहोत्रं जुहोतीति[2] विदितम्, मासमित्यविदितम्। एवं चाग्निहोत्रशब्दो दर्शपूर्णमासशब्दश्च नार्थान्तरवृत्तौ भविष्यतः। तस्मात्कालविधिः।**

**ननु कुण्डपायिनामयनप्रकरणं बाध्येतैवम्। कामं बाध्यताम्। वाक्यं हि बलवत्तरम्। एवं प्राप्ते।**

**ब्रूमः। प्रकरणान्तरे श्रूयमाणं वाक्यं यस्य प्रकरणे, तस्य वाचकं भवितुमर्हति। ननु प्रत्यक्षोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च गुणविधिः[3]। नेत्युच्यते। कथम्?**

**'उपसद्भिश्चरित्वे'ति ह्युक्त्वेदमभिधीयते। न चोपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्च सन्ति। तस्मादशक्यस्तत्र मासविधिः। अथोच्येत—उपसदोऽपि विधीयन्त इति। तथा गुणविधानार्थेऽस्मिन्वाक्येऽनेकगुणविधानाद्वाक्यं भिद्येत।**

---

१. ब. जुह्वति। २. ब. जुह्वतीति। ३. ब. कालविधिः।

**अस्मिन्पक्षे[1] पुनरतन्त्रमग्निहोत्रशब्दो न कर्म विशेक्ष्यति। तेन वाक्यभेदो न भविष्यति। तस्मात्कर्मान्तरमिति सिद्धम् ॥२४॥**

**इत्यनेकादशं प्रकरणान्तराधिकरणम् ॥११॥**

**अथैकादशं प्रकरणान्तराधिकरणम्**

**( तत्र भाष्यमतम् )**

त० वा०—गतं गुणलक्षणभेदप्रसक्तानुप्रसक्तम्। कीदृशो गुणः पूर्वत्रासंभवन् भिनत्ति, कीदृशो वा तत्रैव सम्भवतीति। इदानीं पर्यवसितेषु पञ्चसु भेदकारणेषु, प्रकरणान्तरलक्षणो भेदः प्रस्तूयते। तत्र तावत्।

अग्निहोत्रादिशब्देन पूर्वं कर्माऽवबोधितम्।
न विप्रकर्षमात्रेण भेदरूपं[2] प्रपद्यते ॥

यथैव वलभ्यां, पाटलिपुत्रे वाऽग्निहोत्रादिशब्द उच्चार्यमाणो नार्थान्तरं प्रतिपादयति, एवं प्रकरणान्तरं तस्यार्थाभिधानशक्तिमभिव्यनक्ति। तद्विशेषिताश्च यजतिजुहोत्यादयोऽपि नार्थान्तरे वर्तन्ते। नार्थान्तरेण विना किंचिदनर्थकं भवति। न च प्राप्तविधानं तेषु न सम्भवति। यावज्जीवादिविधिभिः सह तुल्यबलत्वेन विकल्पोपपत्तेः। यो वै तेषां काम्यप्रयोगः। तस्यानवगतकालविशेषत्वान्मासपरिमाणविधानमित्यदोषः। प्रकरणस्य च वाक्यं बाधकमिष्टमेव।

अथ वा दीक्षितत्वनिमित्तेन प्रतिषिद्धानामपि मासपरिमितः प्रतिप्रसवः। स तु प्रयोगमध्य एव क्रियते।

अथ वा तान्येवाग्निहोत्रादीनि अत्र पर्युपस्थाप्य सोमयागसहितानि सत्त्रप्रयोगवचनेन फले विधीयन्ते। न हि कवलभोजी देवदत्तोऽन्यैः सह पङ्क्त्यां भुञ्जानोऽन्यत्वं प्रतिपद्यते। न च फलान्तरसम्बन्धः कर्मान्तरत्वेन विना न घटत इत्युक्तमेवेष्ट्यधिकरणे। न चावश्यमङ्गैरेव क्रत्वन्तरं गन्तव्यम्। प्रधानमपि हि अपरिपूर्णे करणांशे स्वशब्देन विधीयमानं न विरुध्यते। तस्मादेवमपि तान्येवाग्निहोत्रादीनीति प्राप्ते।

उच्यते।

उपसद्भ्यः परं ह्येतदग्निहोत्रं विधीयते।
न च नैयमिकस्यैताः सन्तीस्येतेन भिन्नता ॥

यदि हि मासः शुद्धो विधीयेत, ततः पूर्वकर्मानुवादे बुद्धिर्भवेदपि। न त्वेतदस्ति। उपसदुत्तरकालत्वेन श्रवणाद्विद्यमानाभिरुपसद्भिः शक्यः कालो लक्ष-

---

१. ब. अस्मत्पक्षेत्वतंत्र। २. क० भेदमात्रं।

यितुम् । न च नैयमिके ताः स्वार्थाः, परार्थाः वा विद्यन्ते । यदि तु ताः, तदुत्तर-कालत्वं, मासश्च विधीयेरन्, एवं सति अनेकार्थविधानाद्वाक्यभेदः स्यात् । एत-स्मादेव हेतोर्दीक्षितदानहोमपाकप्रतिषेधेन प्रतिषिद्धस्य प्रतिप्रसवरूपेण वा, सत्रैकदेशत्वेन वाऽयं विधिः प्रत्युक्तः । तत्रापि ह्युपसदुत्तरकालत्वं मासश्चेत्यनेकार्थ-त्वमेव । कर्मान्तरविधाने त्वनेकार्थत्वमदोषः । तस्मात्कर्मान्तरमिति भाष्यकारः ।

### उक्तस्य भाष्यमतस्य समीक्षा

इदं त्विह वक्तव्यम् । यदि वाक्यभेदप्रसङ्गात्कर्मान्तरत्वम्, एवं तर्हि स एव भेदहेतुः प्राप्नोति, न प्रकरणान्तरम् । अथवा गुणादेवानेकात्मकत्वेन पूर्वत्रा-सम्भवाद्भेद इति, प्रकरणान्तरानवकाशः । तथा हि—

यद्यपि प्रकृते तस्मिन्नग्निहोत्रे भवेदिदम् ।
तथाऽप्यसम्भवात्तस्मिन् ब्रूयात्कर्मान्तरे गुणः ॥

किं च—

अग्निहोत्रस्य चैतेन भेदः क्लेशेन सम्भवेत् ।
उत्तरेषां तु नैव स्यादुपसत्संगतेर्विना ॥

'मासं दर्शपूर्णमासाभ्यां यजन्ते' इत्यादिषु हि केवलमाससम्बन्धविधानान्न वाक्यभेदः प्राप्नोतीति अकर्मान्तरत्वप्रसङ्गः ।

तत्रैतत्स्यात् । इहाप्युपसद्भिश्चरित्वेत्यनुषङ्गादग्निहोत्रतुल्यत्वमिति । तद-युक्तम् । कुतः ?

विना यत्रानुषङ्गेण भवेच्छ्रुतिरनर्थिका ।
तत्रैव ह्यकृतार्थानामनुषङ्गो न चेह सः ।

तत्रानुषङ्गो युक्तो, यत्र तेन विना न किंचिदुक्तं भवति । यथाऽत्रैव 'मासं वैश्वदेवेन' इत्यादिषु यावद्यजत इति नानुषज्यते, तावन्न किंचिदुक्तमित्यवश्य-मनुषक्तव्यम् । इह पुनर्दर्शपूर्णमासादिवाक्यानि तावत्स्वपदैरेव निराकाङ्क्षी-भूतानि । 'उपसद्भिश्चरित्वा' इत्ययमपि पूर्वत्रैव चरितार्थत्वान्न किंचिदपेक्षते । तत्र न कश्चिदपि हेतुरस्ति, येनानुषज्येत् ।

यस्तु वाक्यभेदप्रसक्त्यर्थमेवानुषङ्गमिच्छेत्, कुर्यादपि सः । तत्र तु पुनः पुन-श्चरित्वेत्यस्य विधानाद्यावदनुषङ्गमुपसदामनुष्ठानं प्राप्नोति । अनिष्टं चैतत्, वेदाभ्यनुज्ञानाभावात् । अथाग्निहोत्रस्यैवं पुरस्तात्कृताभिः सर्वानुषङ्गार्थसम्पा-दनमित्युच्येत, तथा सति शब्दोच्चारणमप्येवमेवावस्थितमग्निहोत्रादीनां पाठ-क्रमानुरोधेनोपकरिष्यतीति, नार्थोऽनुषङ्गेण । तस्मान्नैतद् व्याख्यानमुपपद्यत इति, एवं वर्णनीयम् ।

## वार्तिकमतेन प्रकरणान्तराधिकरणम्

उपादेयो गुणो यत्र भवेत्प्रकरणान्तरे ।
तत्राकर्मान्तरं युक्तमुद्देश्ये त्वन्यकर्मता ॥

इह तावन्नैव प्रकरणान्तरसद्भावाद्भेदोऽवगम्यते । किं तर्हि पूर्वप्रकरणविच्छेदात् । अविपरिवर्तमाने हि पूर्वकर्मणि, केनापि प्रकारेणोत्तरस्य भेदः प्रतीयते । न तु प्रकरणान्तरं सदपि किंचिदुपकरोति । तथा च 'फलं चाकर्मसंनिधौ, इत्यत्र वक्ष्यामः ।

सर्वत्र च विच्छिन्नप्रकरणस्य कर्मणः संबन्धि द्विप्रकारं श्रूयते उपादेयम्, अनुपादेयं च । तत्र यदुपादेयम् । यथाऽऽहवनीयप्रतिपदादि तत्प्रदेशान्तरस्थोद्देशेनापि शक्यं विधातुम् । यत्त्वनुपादेयं देशकालनिमित्तफलसंस्कार्यात्मकं, तस्य प्रदेशान्तरावस्थितस्य कर्म प्रति विध्यशक्तेरेषा वचनव्यक्तिर्भवति, तत्रैव कर्म कर्तव्यमिति । परोद्देशेन च कर्म विधीयमानं यद्यन्येन तद्रूपमेव वाक्येनोपस्थाप्यते, ततस्तदेवेत्यकर्मान्तरबुद्धिर्भवति । अथ त्वीषदपि तिरोधानान्नोपतिष्ठेत, ततः परं विधीयमानत्वेनैव विहितादन्यत्वबुद्धिः स्थिता न शक्याऽपनेतुमिति, कर्मान्तरत्वं भवति ।

एवं हि स विधायकस्तत्रोपदिशति अविधेयं पदार्थं प्रति मयैतत्कर्म विधीयते । तच्च स्वरूपेणानुत्पन्नं न शक्यं तत्र विधातुमिति, बलादुत्पाद्यते । तद्यदि कश्चिदेवंविधं शक्नोत्युत्पादयितुं, तत उत्पादयतु, यावदहमप्यत्र विधिं करोमि । अथ नोत्पादयति ततो मयैवोत्पादिते मा कश्चित्पश्चादागत्य ममापराधं मंस्तेति । तेनैवमाच्छोषिते यदि कश्चित्तथाविधमुपनयति, ततोऽसावपि तदेव देशादौ विधत्ते । अथ नोपनयति, ततः स एवोत्पादयत्यपीति निरूप्यते ।

तदिह मासस्तावद् दूरस्थहोमानुवादेन न शक्यते विधातुम् । न हि कश्चिद्धोमाद्यनुरोधेनाद्यैव मासं संपादयितुं समर्थः, तेनात्यन्तं स्वतन्त्रमनुपादेयं मासमेव प्रतिहोमादिषु विधीयमानेषु दूरस्थैरुत्पत्तिविधिभिरुत्पादनशक्तावलुप्यमानायामिदानीमेवोत्पत्तिः क्रियते । न चोत्पन्नस्य पुनरुत्पत्तिः संभवतीत्यपूर्वविधानं विज्ञायते ।

ननु चाग्निहोत्रादिपदेनोत्पत्तिसहचारिणा तत्कर्मोत्पत्तावपनीयमानायां माससंबन्धमात्रव्यापृतोऽयं विधिरुत्पादकत्वाद्विहन्येत ।

संनिधानोपनीतं चेत्कर्म नोत्पद्यते पुनः ।
नामधेयोपनीतं तत्तत्र नोत्पद्यतेतराम् ॥

यत्र वाक्यान्तरगतमपि संनिधानमात्रादेव प्रत्यभिज्ञायमानं न भिद्यते, तत्र स्ववाक्यगतेन नाम्नोपनीयमानं न प्रत्यभिज्ञास्यत इति कुत एतत् ?

उच्यते—

यथाभिलषितं यत्र दुर्बलेनापि हेतुना ।
कर्मोपस्थाप्यते तत्र तदेवेत्यवसीयते ॥

संनिधानेन हि यादृगेव देशादिवाक्येषु कर्मावगम्यते, तादृगेवोपतिष्ठत इति न भिद्यते । नामधेयं पुनरादितस्तावदाख्यातपरतन्त्रत्वान्नैव भेदाभेदयोर्व्याप्रियते । तस्मिंश्चाऽऽख्यातप्रवृत्तिप्रतीक्षिणि अवस्थिते 'मासं जुहोति' 'मासं यजते' इति जुहोतियजतिपदमात्रसंगतावालोच्यमानायाम्, अन्यस्य जुहोत्यादेः स्ववाक्य-स्वप्रकरणेषु अविपरिवर्तमानत्वादप्रत्यभिज्ञानम् ।

किं च—

नाम्ना धात्वर्थमात्रं च संनिधाप्येत शक्तितः ।
भावना त्वनुपस्थानाद्भिद्यमानाऽवधार्यते ॥

सामानाधिकरण्येन हि सर्वनामधेयानि धात्वर्थानां नामधेयत्वेनावस्थितानि, न भावनायाः । तेन भावनान्यत्वानन्यत्वपरीक्षावेलायां सत्यपि धात्वर्थैकत्वे भावना तावदनन्यप्रमाणत्वादाख्यातप्रत्ययान्तरेणानुपनीयमाना न कथंचित्प्रत्य-भिज्ञायत इत्युपपन्नं प्रयोजनान्यत्वम् ।

अथवा—

धात्वर्थोऽपि यथाऽऽख्यातेऽसत्त्वभूतः प्रतीयते ।
सत्त्वाभिधायिना नाम्ना तादृङ्नैवोपनीयते ॥

असत्त्वभूतो हि धात्वर्थोऽत्र जुहोतिना विधेरुपनीयते । न च तादृशस्यैव द्रव्यभूतलिङ्गसंख्यायोग्यार्थाभिधायिभिरग्निहोत्रादिपदैरभिधीयमानत्वमित्यप्रत्य - भिज्ञानात्सोऽपि भिद्यते । यत्र तु प्रकरणान्तरेऽपि तथाभूतो नोपादास्यते, भावना वा तावदनुरक्तात्मना न विवक्ष्यते, तत्र तदेव कर्मैकेन वचनेन पर्युपस्थाप्य, अपरेण फले विधीयत इत्यवगमात्काममकर्मान्तरं भवतु । तद्यथा 'अतिरात्रश्चतु-विंशः' प्रायणीयमहः, चत्वारोऽभिप्लवाः षडहाः, पृष्ठ्यः षडहः, इत्यादिषु । यथा वा वरुणप्रघासेषु 'अवभृथं यन्ति' इति । यदा तु प्रकरणान्तरगतफलादिसंबद्धं विधित्वमुत्पत्तिमपि संस्पृश्य यावद्बलीयस्योत्पत्तिविधिविपरिवृत्त्या विप्रकर्षाद-निवार्यमाणं भिनत्तीति निश्चीयते, तदैवमादिष्वपि भेद एवेत्यवगम्यते ।

परमार्थेन तु—

भिद्यते भावनामात्रं धात्वर्थो नायजिश्रुतेः ।
नाम्ना हि तदुपादानमासनोपायिचोदिते ॥

नामविलक्षणधातुश्रवणे हि तदर्थभेदो भवति । सत्रे तु यज्यश्रवणान्नाममात्रोपनीतप्रकृतयागप्रत्यभिज्ञानात्तद्भावनामात्रभेदः । तस्मात्साधूक्तं प्रकरणान्तरे प्रयोजनान्यत्वमिति । भाष्यकार **उपसद्भिश्चरित्वेति** तल्लक्षितकालमेवानुपादेयरूपं भेदहेतुत्वेन दर्शयतीति द्रष्टव्यम् । **अथोच्येत—उपसदोऽपि विधीयन्त** इत्यादि चाभ्यासाधिकरणवदभ्युपेत्यवादेन समर्थयितव्यम् ॥ २४ ॥

( इत्येकादशं प्रकरणान्तराधिकरणम् ॥ ११ ॥ )

**अथैकादशं प्रकरणान्तराधिकरणम् ॥ ११ ॥**

न्या० सु०—प्रकरणान्तरविचारस्यानन्तरासङ्गतिमाशङ्क्याह—**गतिमिति** । प्रासङ्गिकचिन्तावदपवादचिन्तापि प्रकृताव्यवधायिकेति सूचयितुमपवादः प्रसक्तत्वेनोपचरितः । गुणचिन्तयापि प्रकरणान्तरचिन्तायाः सङ्गत्यभावमाशङ्क्य भेदकान्तरस्यावाच्यत्वात्पारिशेषिकी सङ्गतिः पञ्चस्वित्यनेनोक्ता ।

पूर्वपक्षमाह—**तत्र तावदिति** । दर्शपूर्णमासवैश्वदेववरुणप्रघाससाकमेधसुनासीरीयाण्यादिशब्देन गृहीतानि । श्लोकार्थमुपपादयति—**यथैवेति** । भाष्ये कालविध्युक्तेः प्रयोजनमाह—**न चेति** । ननु नित्येऽग्निहोत्रे, दर्शपूर्णमासयोश्च जीवनस्य निमित्ततयाप्यन्वये तावत्कालमनुष्ठेयत्वावगतेर्जीवनावधिकालावरोधान्मासविधिर्न भवतीत्याशङ्क्याह—**न चेति** ।

अप्रकरणाधीतस्यापि मासस्य साक्षात्कर्मान्वयविधेः प्रकरणाधीतेन कालेन तुल्यबलत्वाविरोधमभ्युपगम्यातुल्यकल्पत्वेनातुल्यबलत्वाशङ्कानिरासायातुल्यकल्पजरावधित्रिंशद्वर्षपरिमितकालान्तरपरामर्शादिशब्दः जीर्णस्यापि सहायोपादानेनाऽनुष्ठातुं शक्तस्य जीवनावधिकालोः असहायस्य जरावधिः, प्रविव्रजिषोः त्रिंशद्वर्षपरिमित इति जीवनादिकालानां व्यवस्थितविकल्पवदत्यन्तविरक्तस्य शीघ्रं प्रविव्रजिषोर्मासोऽपि वा व्यवस्थितविषयतया विधातुं शक्य इत्याशयः । काम्यप्रयोगस्य वा सायं प्रातःकालत्वावगमेऽपि सायं प्रातर्मासं जुहुयादित्यन्वयोपपत्तेर्विरोधिकालान्तरानवगमान्मासविधिर्भविष्यतीत्यन्यथा परिहरति—**यो वेति** ।

नन्विति भाष्येण मासविधेर्नित्याग्निहोत्रादिविषयत्वे प्रकरणबाधदोषाण्याशङ्क्य काममित्यनेन, परिहृतम् । तद्व्याचष्टे—**प्रकरणस्य चेति** । प्रकरणानुग्रहार्थं 'दीक्षितो न ददाति, न जुहोति, न पचतीत्यग्निहोत्रादीनां पर्युदस्तानां प्रतिप्रसवोऽयमि'ति पक्षान्तरमाह—**अथ वेति** । दीक्षितस्य दानहोमपाकप्रतिषेधेऽविशेषात्सर्वपाकदानहोमप्रतिषेधः स्यादिति दशमाधिकरणे अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यादिति सिद्धान्तसूत्रेण पर्युदासत्वस्य वक्ष्यमाणत्वात्प्रतिषेधोक्तिः पर्युदासलक्षणार्था । एवमपि प्रकरणानुग्रहः कथमित्याशङ्क्याह—**स त्विति** । कौण्डपायिनप्रयोगमध्ये प्रतिप्रसवकरणात्प्रकरणपाठो युक्त इत्याशयः ।

अस्मिन्पक्षे प्रकरणपाठोपपत्तावपि तद्व्यापाराभावात्प्रकरणाननुग्रहेणापरितोषात्सिद्धान्ते चाग्निहोत्रादिसंज्ञानां षण्मासपरिमितानां षण्णां षण्मासपरिमितसोमयागसहितानां सम्वत्सरपरिमितमत्र प्रयोगवचनेन फलविधिसूचनार्थं स्वमतमाह—**अथ वेति**। न चान्यसाहित्यमात्रेणान्यत्वापत्तिरित्याह—**न हीति**। नन्ववगतफलस्याग्निहोत्रादेर्नैराकाङ्क्षयात्फलान्तरान्वयानुपपत्तेः फलान्तरान्वयादेवान्यतापत्स्यतइत्याशङ्क्याह—**न चेति**। ननु कर्मणस्त्वप्रवृत्तित्वादित्यत्र करणस्य क्रत्वन्तरगमनविधिनिषेधान्न पूर्वस्याग्निहोत्रादेः कौण्डपायिनान्तःपातो युक्त इत्याशङ्क्याह—**न चेति**। अतिदेशः क्रत्वन्तरान्वयासम्भवेऽप्युपदेशतोऽन्वयाविरोधः स्वशब्दगिरोक्तः। पूर्वपक्षमुपसंहरति—**तस्मादिति**।

यथाभाष्यं सिद्धान्तं दूषयितुमुपन्यस्यतीति पूर्वत्रासम्भव्युपसल्लक्षणगुणरूपेण हेतुना भिन्नतेत्यर्थः। श्लोकं व्याचष्टे—**यदि हीति**। स्वार्थोपसदभावेऽपि पश्वङ्गपरिधिप्रहरणस्य हारियोजनकाललक्षकत्ववत् परार्थानामप्युपसदामग्निहोत्रादिकाललक्षणकृतोपपत्तिमाशङ्क्य—**परार्था वेत्युक्तम्**। हारियोजनस्य ज्योतिष्टोमावयवत्वात्परिधिप्रहरणस्य पशुद्वारा ज्योतिष्टोमाङ्गत्वात्—**एकप्रयोगवचनग्रहणाद्युक्तम्**। काललक्षकत्वम्, न त्विहैव प्रयोगवचनग्रहणमस्तीत्याशयः। एकप्रयोगवचनग्रहणाभावेऽपि दर्शपूर्णमासयोः सोमकाललक्षणकत्ववदुपपत्त्याशङ्कानिराससूचनार्थो वाशब्दकृतः। दर्शपूर्णमासस्य सोमाधिकरणप्रतिपत्त्या काललक्षणा युक्ता, उपसदां तु क्रत्वन्तरमध्यपातित्वाक्रत्वन्तरप्रगोगमध्ये च क्रत्वन्तरमध्यपातित्वाक्रत्वन्तरप्रयोगमध्ये च क्रत्वन्तरनिषेधादग्निहोत्राद्यधिकारप्रतिपत्त्यर्थत्वेन काललक्षणार्थत्वानुपपत्तेः क्रमप्रतिपत्त्यर्था लक्षणा वाच्या।

न च भिन्नप्रयोगवचनगृहीतानां क्रमोऽस्तीत्याशयः। ता इत्यनेनाग्निहोत्राद्यङ्गत्वेनोपसद्विधिरभिप्रेतः। प्रति प्रसवेऽग्निहोत्राद्यङ्गत्वाद्विधेः सत्रैकदेशत्वे चोपसदुत्तरकालत्वस्यापि सोमयागवत्प्राप्तेरविधानान्न वाक्यभेदोऽस्तीत्याशङ्क्याह—**तस्मादेवेति**। अङ्गत्वाविधानेऽप्युपसदुत्तरकालत्वस्य प्रतिप्रसवेऽवश्यविधेयत्वान्निर्ज्ञातसायमादिकालत्वेन च सत्रत्वोपाधिककालाग्रहणात्सत्रैकदेशत्वेऽपि विधेयत्वावगतेर्वाक्यभेदोऽपरिहार्य इत्याशयः। कर्मान्तरत्वेऽपि तर्हि नामातिदेशतो निर्ज्ञातकालत्वात्तस्य च प्रयोगवचनाद् बलीयसश्चोदकादपि बलीयस्त्वेन सत्रप्रयोगवचनेनोपसदुत्तरकालत्वाग्रहणादनेकार्थविधिः स्यादित्याशङ्क्याह—**कर्मान्तरेति**। उपसंहरति—**तस्मादिति**।

दूषयितुम्—**आरभते इदं त्विति**। वाक्यभेदाख्यप्रसिद्धभेदकान्तरापत्तिदोषेऽभिहिते, वाक्यभेदोक्त्या 'चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येते'त्यनेन गुणस्यानेकात्मकत्वनिमित्तपूर्वत्रासम्भवलक्षभेदकत्वहेतूक्तेर्न भेदकान्तरापत्तिरित्याशङ्क्य—**अथ वेत्युक्तम्**। प्रकरणान्तरानवकाशमुपपादयति—**तथा हीति**। दर्शपूर्णमासाद्युदाहरणव्यापकत्वादपि न वाक्यभेदो भेदहेतुरित्याह—**किं चेति**। सत्रैकदेशत्वेनाग्निहोत्रादिविधावुपसदुत्तरकालसोमरूपयागसत्रैकदेशसाहचर्येणाग्निहोत्रादेरपि सत्रैकदेशस्य तदुत्तरकालत्वप्राप्तेरग्निहोत्रेऽपि वाक्यभेदस्य शक्यपरिहारत्वं शक्त्या सूचितम्। श्लोकं व्याचष्टे—**मासमिति**।

न चोपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्चेति भाष्यपर्यालोचनमात्रेणानुषङ्गमाशङ्कते—**तत्रेति**। निरस्यति—**तदिति**। श्लोकं व्याचष्टे—**मासमिति**। न चोपसदोऽग्निहोत्रस्य दर्शपूर्णमासयोश्चेति भाष्यपर्यालोचनमात्रेणानुषङ्गमाशङ्कते—**तत्रेति**। श्लोकं व्याचष्टे—**तत्रेति**। अनुषङ्गवादिनमुपहसति—**यस्त्विति**। उपहासाङ्गं प्रति वेदाननुज्ञातोपसदावृत्त्यनौचित्यत्वादनिष्टापत्तिमाह—**तत्र त्विति**। क्त्वाप्रत्ययस्य पूर्वकालमात्रवाचित्वादग्निहोत्रात्प्राक् कृतानामुपसदां दर्शपूर्णमासादिपूर्वकालत्वोपपत्तेर्नानुषङ्गेण वृत्त्यापत्तिरिति शङ्कते—**तथेति**। सर्वत्रानुषङ्गस्य यत्प्रयोजनम्, सर्वेभ्यः प्रागनुष्ठानं तत्संपादनमित्यर्थः। शब्दोच्चारणमपि तदर्थुपसद्वत्सकृदेव स्थितम्। सदनुषङ्गलभ्यं सर्वेषामग्निहोत्रादीनामुपसदुत्तरकालत्वबोधलक्षणमुपकारं करिष्यतीत्यनुषङ्गानर्थक्यमिति परिहरति—**तथा सतीति**। कथमित्यपेक्षायां पाठक्रमानुरोधेनेतरेषामग्निहोत्रोत्तरकालतोक्ता। यथाभाष्यं सिद्धान्तव्याख्यादूषणमुपसंहरति—**तस्मादिति**।

स्वमतेन सिद्धान्तमुपक्रमते—**इतीति**। श्लोकं व्याख्यास्यन्प्रकरणान्तरोक्तिं तावत्प्रकृतबुद्धिविच्छेदाशयत्वेन व्याख्यातुमाह—**इह तावदिति**। अनुपादेयान्वये कर्मणो विधेयताभेदहेतुत्वस्यासिद्धावस्थत्वात्केनापीत्यनवक्लृप्तिः अतिरात्रइत्यादौ त्रिपरिवृत्तिसद्भावे प्रकरणान्तरस्य धात्वर्थभेदकत्वाभावात्प्रकरणान्तरं सदप्यनुपयोगीत्यर्थः। प्रकरणान्तरोक्तेश्च प्रकृतबुद्धिविच्छेदाशयोत्तरसूत्रे स्पष्टयिष्यतइत्याह—**तथा चेति**। श्लोकं व्याख्यातुमुपक्रमते—**सर्वत्र चेति**। व्याचष्टे—**तत्रेति**। प्रदेशान्तरस्थे कर्मणि प्राप्तिबुद्ध्यभावादुपादेयस्यापि गुणस्याशक्यविधित्वाशङ्कोद्देशोक्त्या निरस्ता। स्वभावतः प्राप्तिबुद्ध्यभावेऽपि एकोद्देशेनेतरोपादानं विनान्वयायोगादुपपदश्रुतौ च कर्मानुवादाकाङ्क्षणात् 'यत् जुह्वति[1] तदाहवनीय'इत्युद्देशात्प्राप्तिबुद्धिः सम्भवतीत्याशयः। यस्मिन्देशे काले वा कर्म चिकीर्ष्यते, तस्मिन्देशाद्यनुपादेयपञ्चकस्यापादयितुमशक्यत्वाद्देशाद्यन्वये तदुद्देशेनैव कर्मविधेयमित्युक्तं। तथाप्यन्यार्थेन विधेयत्वात्समादिविधिवन्न कर्मभेदापत्तिरित्याशङ्क्य—**परोद्देशेन चेत्याद्युक्तम्**। समादावपि विधिसामर्थ्यात्कर्मान्तरे बुद्धिर्भवन्ती बलीयस्या विपरिवृत्त्या वार्यते। तदभावे विशिष्टविध्युपपत्तेर्न भेदबुद्धिर्बाधितुं युक्तेत्याशयः।

एतदेवरूपकोक्त्या विवृणोति—**एवं हीति**। सामान्यन्यायमुक्त्वा प्रकृते योजयति—**तदिहेति**। ननु सन्निधेर्यद्वृत्तयोगलक्षणस्य चोद्देशस्य प्राप्तिबुद्धिहेतोरभावेऽपि नामधेयात्प्राप्तिबुद्धिर्भविष्यतीत्याशङ्कते—**ननु चेति**। ननु नाम्ना पूर्वकर्मणि बुद्धिस्थीकृतेऽपि नामैक्यस्यानैकान्तिकत्वेन तदेवेदमिति तत्त्वप्रत्यभिज्ञाभावान्नोत्पत्तिः प्रतिबद्धुं शक्येत्याशङ्क्याह—**ततश्चेति**। बुद्धिस्थत्वेऽपि प्रत्यभिज्ञानानाभ्युपगमे सन्निधानेऽप्यप्रत्यभिज्ञापत्तेर्बुद्धिस्थत्वमात्रेण प्रत्यभिज्ञाया वक्तव्यत्वात् नामापि प्रत्यभिज्ञाहेतुत्वादुत्पत्तिं प्रतिबध्नातीत्याशयः। यतश्च नाम्नो अप्युपनयनशक्तिरस्तीति, ततश्चेत्यनेन परामृष्टान्तरार्थं विवृणोति—**यत्रेति**।

---

१ जुहुयादिति २ पु० पा०।

सन्निधेस्तावद्दौर्बल्येऽप्यविलक्षणकर्मोपस्थापकत्वात्प्रत्यभिज्ञाहेतुतायुक्तेति परिहर्तुमारभते—**उच्यतइति**। श्लोकं व्याचष्टे—**सन्निधाने हीति**। नाम्नस्तु पूर्वकर्मोपस्थापकत्वस्य पूर्वकर्मवाचित्वनिमित्तकत्वादाख्यातस्य च पूर्वकर्मविषयत्वं विना नाम्नः पूर्वकर्मवाचित्वानवधारणात्पूर्वकर्मोपस्थापकत्वानुपपत्तेर्नोत्पत्तिप्रतिबन्धकत्वं सम्भवतीति परिहरति—**नामधेयं पुनरिति**। अभ्युपेत्याप्युपस्थापकत्वं भावनावाचित्वाभावात्तदुपस्थापकत्वं न सम्भवतीत्याह—**किं चेति**। श्लोकं व्याचष्टे—**सामानाधिकरण्येन हीति**। वाक्यार्थत्वात् प्रधानभूता भावना—**प्रयोजनशब्देनोक्तेति सूचनायेतीत्युक्तम्**। परमार्थतस्तु वैलक्षण्याद्धात्वर्थो अपि नोपस्थाप्यतइत्याह—**अथ वेति**।

नन्वाख्यातोक्तरूपानुपस्थापने अपि नित्याग्निहोत्रविधिस्थनामोक्तस्य सत्त्वरूपस्योपस्थापनं भविष्यतीत्याशङ्क्यां विधिविषयीकृतस्य रूपस्योपस्थापनीयत्वात् भावार्थाधिकरणन्यायेन च धात्वर्थस्य धातुना विधिविषयीकरणान्न नाम्नोपस्थापनं सम्भवतीत्येवं निरस्यन् श्लोकं व्याचष्टे—**असत्त्वेति**। द्रव्यशब्देन सत्त्वशब्दं निष्पन्नरूपवाचितया व्याख्याय, तदुपपादनार्थम्—**लिङ्गेत्युक्तम्**। लिङ्गसंख्यवाचिन्याः सुपः प्रातिपदिकपरत्वस्मृतेस्तस्य च प्रातिपदिकार्थः सत्तेति सत्त्ववाचित्वस्मृतेर्लिङ्गसंख्यान्वयार्हत्वेन प्रातिपदिकत्वात्सत्त्ववाचितेत्याशयः।

नन्वसत्वभूतस्य धात्वर्थस्य धातुना विधिविषयीकृतस्य नाम्नानुपस्थापनाद्भेदे अप्यभ्युपगम्यमाने 'अति रात्रश्चतुर्विंश' इत्यादावाख्याताश्रुतेरसत्त्वभूतधात्वर्थानुपादानात् सत्त्वभूतस्यैव धात्वर्थस्यातिरात्रः कार्यश्चतुर्विंशः कार्य इत्यादिविधिपदाध्याहारेण नाम्ना विधिविषयीकृतस्य प्रकरणान्तरे अपि नाम्नोपस्थापनसम्भवादकर्मान्तरत्वापत्तेः प्रकरणान्तरोक्तिरनर्थिका स्यादित्याशङ्क्याभ्युपगमेन तावत्परिहरति—**यत्र त्विति**। 'अवभृथं यन्तीत्यादावाख्यातश्रुतावसत्त्वभूताया भावनाया विधिविषयीकृताया नाम्नानुपस्थापनात्प्रकरणान्तरेण भेदसिद्ध्यर्थत्वात्प्रकरणान्तरोक्त्यर्थवत्त्वशङ्कानिरासार्थम्—**भावना वेत्युक्तम्**। शुद्धाया भावनाया विधिविषयत्वायोगात्तदनुरञ्जकस्य च यागाख्यधात्वर्थस्य 'वारुणेनैककपालेनावभृथं यन्ती'ति वारुणशब्दोक्तद्रव्यदेवतान्वयप्रकल्पितेन यजिना भावनानुरूपेणोक्तावपि प्रकरणान्तरे यज्यभावेनासत्त्वभूतधात्वर्थानुरक्तात्मना भावनानुक्तेर्धात्वर्थाधीननिरूपणत्वाच्च भावनायास्तद्भेदं विना भेदो न युक्त इत्याशयः। पूर्वकर्मोपस्थापनसम्भवेऽनुपादेयान्वयसहकृतस्यापि प्रकरणान्तरस्य भेदकत्वं नास्तीत्येकेनेत्यनेनोक्तम्। असत्त्वभूतधात्वर्थानुपादाने तावदुदाहरणमाह—**तद्यथेति**। गवामयने 'प्रायणीयसञ्ज्ञमतिरात्रसंस्थं प्रथममहश्चतुर्विंशसञ्ज्ञं च द्वितीयं' पृष्ठाभिप्लवसञ्ज्ञाश्च षडहा विहिताः। प्रकरणान्तरे अतिरात्रइत्यादिवचनेनोपस्थाप्य 'यं कामयन्ते तमेतेनाप्नुवन्तीत्यादिवचनान्तरेण फले विधीयन्तइत्यर्थः।

एकस्य शब्दस्य पूर्वकर्मोपस्थापने अन्यत्र च विधौ व्यापारायोगादेकेनोपस्थाप्य—**अपरेण विधीयतइत्युक्तम्**। असत्वभूतधात्वर्थानुरक्तात्मना भावनानुरक्तावुदाहरणमाह—**यथा चेति**।

'वारुण्या निष्कासने तुषैश्चावभृथं यन्ती'ति वरुणप्रघासप्रकरणस्थेनावभृथशब्देन सौमिकमवभृथाख्यं कर्मोपस्थाप्य निष्कासाख्यऽङ्गसंस्कार्ये फलोक्त्युपलक्षिते यन्तीत्यवभृथानुष्ठानार्थप्राप्तगमनानुवादिप्रत्ययानुग्रहार्थधातुपरेण विधीयतइत्यर्थः। तृतीयया तु निष्कासस्य साधनत्वोक्तावपि, निष्कासस्य वारुण्यामिक्षायागोपयुक्तद्रव्यशेषत्वात् तुषाणां चाग्नेययागाङ्गद्रव्यशेषत्वात् चित्सोमलिप्तं तेनावभृथं यन्तीतिवत्प्रयाजशेषेण हवींष्यभिघारयतीतिवच्च प्रतिपाद्यत्वरूपसंस्कार्यत्वाविरोधः। प्रकरणान्तरोक्त्यर्थत्वाय भेदपक्षमाह—**यदा त्विति**। संस्कार्योपलक्षणायादिशब्दः। नाम्ना पूर्वकर्मोपस्थानादुत्पत्तिप्रतिबन्धमाशङ्क्यो—**त्पत्तीत्युक्तम्**। विधिविपरिवृत्तिरेवोत्पत्तिं प्रतिबध्नाति, न स्वरूपविपरिवृत्तिः। स्वरूपप्राप्तावपि दध्यादिवत् विधेयत्वोपपत्तिरित्याशयः। नाम्नोत्पत्तिविधिसहचरितेनोत्पत्तिविधिविपरिवृत्तिमाशङ्क्य, साक्षाद्विधिविपरिवृत्तिः प्रतिषेधिका, नान्यद्वारेति सूचयितुम्—**बलीयस्येत्युक्तम्**। यावद्विधित्वमनिवार्यमाणं तावत्सर्वं भिनत्ति। न त्वसत्त्वभूतधात्वर्थावच्छिन्नभावनामेव केवलमिति यावच्छब्दार्थः।

भाव्यनिष्ठत्वाद्भावनाया धात्वर्थभेदं विनापि प्रत्यभिज्ञानाभावे भाव्यभेदाद्भेदोपपत्तेर्धात्वर्थप्रत्यभिज्ञामात्रेणोभयाभेदायोगाद्दध्यादिवच्च विधेयत्वानपेक्षयागादिस्वरूपाप्राप्तेर्विधिविषयत्वविपरिवृत्तिनिरपेक्षस्वरूपविषयपरिवृत्त्ययोगान्नाम्ना विधिविषयभूतधात्वर्थविपरिवृत्तेरेव कृतत्वेनोभयभेदस्याप्ययोगात्पक्षद्वयापरितोषेण भावनामात्रभेदं, धात्वर्थभेदं च स्वमतेनाह—**परमार्थतस्त्विति**। आसनमुपवेशनमुपायश्चोपगमनं तौ वाच्यतया विद्येते ययोर्धात्वोस्तत्परप्रत्ययचादिते कर्मणि तस्यैव पूर्वविहितस्य धात्वर्थस्य नाम्नोपादानाद्धात्वर्थे विभिद्यतइत्युक्तेऽग्निहोत्रादिवन्नाम्नानुपस्थापनमाशङ्क्य तद्वैषम्याय धात्वर्थश्रुत्युक्तिः।

श्लोकं व्याचष्टे—**नामेति**। विधिपदानपेक्षस्यापि नाम्नो विधिविषयभूतधात्वर्थोपस्थापनोपपत्तिसूचनार्थो मात्रशब्दः। प्रकरणान्तरस्थस्यापि यागस्य प्राग्विधिविषयीकृतत्वं विवक्षित्वा प्राकृतत्वोक्तिः। सत्रशब्दस्योपलक्षणार्थत्वादवभृथाख्ययागाभेदेऽपि च भावनाभेदात्तथावभृथः साम्यादि७-३-ति सप्तमाधिकरणे वक्ष्यमाणसौमिकावभृथभावनाधर्मातिदेशाविरोधात्करणत्वेन वावभृथस्यातिदेशायोगेऽपि स्वशब्देनोपदिष्टस्य स्वधर्मसन्निधापकत्वात्काम्यगुणाश्रयभूताग्निहोत्रादिवदतिदेशनिमित्तमभिप्रेत्यावभृथनाम्नोऽतिदेशकत्वोक्त्युपपत्तेर-रवभृथेऽप्ययमेव प्रकारः। अतो नाम्नोपस्थापनाद्धात्वर्थाभेदेऽपि भावनाभेदस्य प्रकरणान्तरहेतुकत्वात्प्रकरणान्तरोक्तिरर्थवतीत्याह—**तस्मादिति**। भाष्यमपि गमयति—**भाष्येति**। नन्वनुपादेयान्वयसहकृतस्यासन्निधेर्भेदहेतुत्वेऽथोच्येतेत्यादिभाष्येण वाक्यभेदहेतुत्वोक्तिरयुक्ता स्यादित्याशङ्क्याह—**अथेति**। न च 'यत्सभित्सम्बन्धेन क्रियतइत्यभ्यासाधिकरणभाष्यं समिदादिपदस्य देवतानभिधायित्वाद् गुणहेतुकभेदाभावेऽप्यभ्युपेत्यवादत्वेन यथा समर्थितम्। तथेदमपि समर्थनीयमित्यर्थः ॥२४॥

इत्येकादशं प्रकरणान्तराधिकरणम्।

भा० प्र०—गुण के कारण कर्म का भेद होता है, इस नियम के अनुसार उदाहरण और प्रत्युदाहरण का विश्लेषण कर द्वितीय अध्याय के द्वितीय पाद के नवम अधिकरण में अर्थात् २३वें सूत्र में "गुणश्चापूर्वसंयोगे वाक्ययोः समत्वात्" (२।२।२३) इस सूत्र से यहाँ तक पर्यालोचना की गई है। प्रकृत में प्रकरण भेद से जिन कर्मों का भेद होता है—वही दिखाया गया है। "कुण्डपायिनामयन" नामक सत्र का=यज्ञविशेष के प्रकरण में श्रुति में कहा गया है "मासम् अग्निहोत्रं जुहोति", "मासं दर्शपूर्णमासाभ्यां यजेत" इत्यादि। इन स्थलों में क्या गुणविधि है या कर्मान्तर का उपदेश है—यही संशय है। इस पूर्वपक्षी का कहना है कि इन वचनों से नियत अर्थात् नित्य अग्निहोत्र आदि कर्म में मासादिरूप काल का ही विधान किया गया है, अतः यह गुणविधि है। कारण, "अग्नि-होत्रं जुहोति" इत्यादि वाक्य में जो अग्निहोत्र आदि कर्मों का ही विधान किया गया है—यह पूर्व में स्थापित किया गया है, प्रकृत में इस वाक्य में वही नित्य अग्निहोत्र आदि कर्म में अप्राप्त मासादि कालरूप गुणविहित होता है।

इसके उत्तर में सिद्धान्ती का कहना है कि "प्रकरणान्तरे प्रयोजनान्यत्वम्"—जो वाक्य प्रकरणान्तर में निबद्ध जिस प्रकरण में पढ़ा जाता है, वही वाचक होगा। "मासमग्निहोत्रम्" इत्यादि वाक्य अयन प्रकरण में पठित होने से अन्य कर्म का ही विधायक है। वाक्यभेदरूप दोष की सम्भावना से इसको गुणविधि नहीं कहा जा सकता है। क्योंकि, इस स्थल में "उपसद्भिश्चरित्वा अग्निहोत्रं जुहोति" इस प्रकार का वचन रहने से केवल सामरूपगुण का ही विधान नहीं हो सकता है, अपि तु साम एवम् उपसत्=होमविशेष इन दो गुणों का विधान होगा, कारण, अग्निहोत्र या दर्शपूर्णमास में उपसत् गुण की प्राप्ति नहीं है, एवम् अन्य वचन के द्वारा विहित कर्म में एक साथ अनेक गुण का विधान वाक्यभेद के बिना सम्भव नहीं है। इसलिए, यह गुणविधि नहीं हो सकती है। इस प्रसङ्ग में यदि कहा जाय कि गुणविधि न होने पर भी इसको स्वतन्त्र कर्म माना जायगा, किन्तु इसको स्वतन्त्र कर्म मानने में क्या प्रमाण है? अन्य प्रकरण होना ही इसके कर्मभेद होने में कारण है। क्योंकि, यह अग्निहोत्र आदिक प्रकरण नहीं है, वरन् अयन का=यज्ञविशेष का ही प्रकरण है, क्योंकि, जहाँ अयन के सम्बन्ध में आलोचना है, उसी स्थल में कहा गया है। प्रकरणान्तर का अर्थ पूर्व कर्म का असन्निधान है। पूर्व कर्म के समीप में कुछ कहे जाने पर उसके सन्निवेश में पूर्व कर्म की ही प्रत्यभिज्ञा रहती है। ऐसी स्थिति में गुणविधि का प्रसङ्ग होता है। किन्तु, इस स्थल में "मासम् अग्निहोत्रं जुहोति" इत्यादि वाक्य पूर्वोक्त अर्थात् "अग्निहोत्रं जुहोति" इत्यादि वचन में कथित अग्निहोत्रादि कर्म के सन्निधान में नहीं कहा गया है, अतः, सन्निधि न रहने से पूर्व कर्म की प्रत्यभिज्ञा नहीं हो सकती है और ऐसा न होने पर पूर्व कर्म के साथ अभि-न्नता का बोध भी नहीं हो सकता है। ऐसी स्थिति में प्राप्त कर्म में गुणविधि भी नहीं हो सकती हैं, इसलिए इस स्थल में प्रकरणान्तरत्व के कारण कर्मभेद होता है। इस

अधिकरण का यह प्रयोजन है कि पूर्वपक्षी के मत के अनुसार अग्निहोत्र में यावत् जीव आदि काल के साथ मास आदि काल का विकल्प एवं "कुण्डपायिनामयन" आयन नामक कर्म में अग्निहोत्र का अनुष्ठान नहीं करना होगा। किन्तु सिद्धान्ती के मत में विकल्प भी नहीं है और "कुण्डपायिनामयन" नामक कर्म में अग्निहोत्र का अनुष्ठान भी करना होगा।

प्रकरणान्तरे=पूर्वकर्म के असन्निधान में अर्थात् पूर्वोक्त कर्म की समीपता न होने से, "प्रयोजनान्यत्वम्" = प्रयोजन का अर्थात् धात्वर्थ का अर्थात् कर्म का अन्यत्व अर्थात् भेद होगा।

यह ग्यारहवाँ प्रकरणान्तराधिकरण है ॥ २४ ॥

## [१२] फलं चाकर्मसंनिधौ ॥२५॥ सि०

**शा० भा०—अनारभ्य किञ्चिच्छ्रूयते—'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः, अग्नीषोमीयमेकादशकपालं निर्वपेद् ब्रह्मवर्चसकामः, ऐन्द्राग्नमेकादशकपालं निर्वपेत्प्रजाकाम' इति। अत्र संदिह्यते—किं प्राकृतेष्वाग्नेयादिषु फलं विधीयते, उत प्राकृतेभ्यः कर्मान्तराण्येतानि। किं प्राप्तम्? प्राकृतेषु फलविधिरिति। कुतः? विदिता आग्नेयादयः प्रत्यभिज्ञायन्ते। तस्मात्तेषामनुवादः फलसम्बन्धार्थ इति। एवं प्राप्ते।**

**ब्रूमः—फलं च भेदकमकर्मसंनिधौ श्रूयमाणम्। कथम्? अनुवादे सति न शक्येत फलं विधातुम्, विधायकस्याभावात्। न ह्यविधीयमानो ह्युपायो[1] रुचो भवतीति गम्यते। अपि च रुक्कामेऽत्र विधीयमाने कामस्यानित्यत्वादाग्नेयादीनां नित्यत्वात्संबन्धो नावकल्पेत। एवं सर्वत्र। तस्मात्कर्मान्तराणि ॥ २५ ॥**

**इति द्वादशं फलसंस्कार्ययोः कर्मभेदकत्वाधिकरणम् ॥ १२ ॥**

एवं षडपि भेदहेतवः पर्यवसिताः। संप्रति प्रकरणान्तरस्यैव प्रकारान्तरप्रदर्शनं क्रियते। यो नाम प्रकरणान्तरकृतमेव कालसंबन्धकृतं वा भेदं मन्यते नासंनिधानामुपादेयवस्तुसंबन्धमात्रकृतम्, तं प्रति विस्पष्टीकरणार्थं 'फलं चाकर्मसंनिधौ' इत्यारभ्यते। [2]**तत्त्वमेतत्सप्तमं भेदाधिकरणम्।** तत्र देशनिमित्तयोरनुपादेयत्वं सुज्ञानमिति, पूर्वाधिकरणे सिद्धत्वादिहानुदाहरणम्। पूर्वत्रैव त्वेवमादि दर्शयितव्यम्। तद्यथा—'सत्रायाऽऽगूर्य विश्वजिता यजेत' 'साम्युत्थाने विश्वजित्' इत्यादीनि निमित्ते। देशेऽपि 'दक्षिणेन तीरेण सरस्वत्या आग्नेयेनाष्टाकपालेन'

---

१. ब. अभ्युपायो। २. क. तत्त्वेतत्।

'शम्यापरासमीयात्' इत्यादीनि । यद्यप्यत्रातिरात्रादिवदेव यज्यश्रवणम्, तथाऽपि प्राग्यज्यनुमानात्तद्धितान्तपदयुक्तवाक्यापरिसमाप्तेर्वाक्यान्तरस्यानपेक्षणात्कर्मान्तरत्वम् ।

फलसंस्कार्ययोस्तु तुल्यहेतुत्वादिह विचारः । तत्र फलमुदाहृतमेव । संस्कार्यमप्युदाहर्तव्यं 'त्रैधातवीया[1] दीक्षणीया' इति । यजमानसंस्कारार्थत्वेनोपादानात् । **अनारभ्य किंचिदिति**—प्रकरणान्तरावरोधाभावज्ञापनार्थम् । तत्र यागोद्देशेनाऽऽहवनीयादिवत्फलं विधेयम् । शक्यं हि तत्पुरुषेण दर्शपूर्णमासस्थेनापि कामयितुमिति मत्वाऽऽह—**प्राकृतेषु फलविधिरिति ।** सिद्धान्तवादी तु स्वर्गकामाधिकरणसिद्धं 'प्रत्यर्थं चाभिसंयोगात्' इति फलोद्देश्यत्वं मत्वा वदति **न शक्यते फलं विधातुमिति ।** विधीयमानं क्रियाङ्गत्वादफलमेव प्राप्नोति । क्रियाऽपि वा विधीयमाना तादर्थ्यं प्रतिपद्यमाना निष्फलैव स्यात् । न चोभयोरुद्दिश्यमानयोः उपादीयमानयोर्वा सम्बन्धोऽस्तीत्येकान्तेन फलमुद्दिश्य कर्म विधातव्यम् । ततश्च पूर्ववदेव सिद्धो भेदः ।

एतेन संस्कार्यमपि व्याचक्षीत ।

किं च—न चानित्यस्य कामस्य नित्यैरग्न्यादिकर्मभिः ।
कथंचिदपि सम्बन्धः साध्यसाधनरूपतः ॥

तस्मात्कर्मान्तराणीति सिद्धम् ॥ २५ ॥

### अथ द्वादशमाग्नेयादिकाम्येष्ट्यधिकरणम् ॥१२॥

न्या० सु०—ननु 'तदिह षड्विधः कर्मभेदो वर्त्तिष्यते' इति भाष्ये षण्णामेव भेदहेतुत्वप्रतिज्ञानात्तेषां च पर्यवसितत्वात्किमर्थमेतत्सूत्रमित्याशङ्क्याह—**एवमिति ।** सर्वभेदहेतुसमाप्तावपि प्रकरणान्तरस्यैवानुपादेयान्वयसहकृतासन्निधिलक्षणप्रकारविशेषोक्त्यर्थमेतत्सूत्रमित्यर्थः । अन्तरशब्दस्य भेदवाचित्वाद्भेदशब्दस्य च विशेषवाचित्वात्प्रकारान्तरशब्देन प्रकारविशेषोक्तिः । एतदेव विवृणोति—**सत्रेति ।** कालान्वयवाक्योदाहरणानभिव्यक्तावपि कालस्य कथं चित्कर्मानुरोधेनापादनाशक्तेरनुपादेयतया निःशङ्कत्वान्निमित्तस्य तु साम्युत्थानादेरापादयितुमपि शक्यत्वात्, देशस्यापि सरस्वतीदक्षिणतीरादेरुत्तरतः सरस्वतीप्रवाहनयनापादनशक्तेः, फलसंस्कार्ययोस्तूपादेयत्वाशङ्कया वार्त्तिकएव वक्ष्यमाणत्वात्कालान्वयवाक्योदाहरणभ्रान्तिः फलं च भेदकमिति भाष्यात् कारणान्तरव्युत्पादनाशङ्कां निराकर्त्तुमाह—**न त्विति ।** प्रकरणान्तरस्यानुपादेयान्वयानपेक्षस्य 'द्वाशाहीनस्यैतया'दौ भेदकत्वादर्शनात्कथं भेदकतेत्याशङ्कानिरासार्थत्वेन प्रकरणान्तरस्य भेदकत्वे फलाद्यनुपादेयमपि सहकारि, न तन्निरपेक्षं प्रकरणान्तरं भेदकमित्युक्ते, कथं तस्य सहकारितेत्यपेक्षायामहीनादि-

---

१. क. त्रैधातव्या ।

वत्सन्निधिहेतुभूतस्योद्देश्यत्वादेव कथं शब्दोपबन्धस्यानुपादेयान्वये कर्मणोऽसत्त्वादित्यकर्मसन्निधिशब्देनोक्तमित्येवं सूत्रव्याख्यानार्थं तद्भाष्यमित्याशयः एवं चासन्निधेरेव भेदहेतुत्वावधारणान्नाम्ना धात्वर्थोपस्थापनेऽप्यनुपादेयान्वये भावनोपस्थापनहेतोः कस्य चिदभावाद्भावनाभेदं सूचयितुं तदुदाहरणस्यानारभ्याधीतस्याभावात्प्रकरणान्तरशब्देनासन्निधिलक्षणयोच्यतइति गम्यते ।

नन्वनुपादेयमात्रान्वयकृतभेदोक्त्यर्थत्वेऽस्य सूत्रस्य फलवद्देशनिमित्तयोरप्युपादेयतोदाहरणपूर्वं कस्मान्नोपपादितेत्याशङ्क्याह—**तत्रेति** । दक्षिणात्वस्य स्वभावसिद्धदेशविशेषोपलक्षणार्थत्वादापाद्यस्य चोपलक्षणत्वायोगाद्देशविशेषोपलक्षणार्थत्वादापाद्यस्य चोपलक्षणत्वायोगाद्देशस्योपादेयत्वाशङ्कानुपपत्तेः । प्राक् सिद्धिं च विना निमित्तत्वायोगान्निमित्तस्यापि कर्मतन्त्रापाद्यत्वलक्षणोपादेयत्वशङ्कानुपपत्तेर्नेह देशनिमित्त उदाहृत इत्यर्थः । पूर्वसूत्रार्थस्पष्टीकरणार्थत्वेऽस्य सूत्रस्याधिकरणभेदायोगात्पूर्वाधिकरणेऽनुपादेयान्वयस्य भेदकत्वे व्युत्पादिते, फलादेरुपादेयत्वात्पूर्वाधिकरणविषयत्वं नास्त्यनुपादेयत्वाद्वास्तीति पूर्वाधिकरणविषयविवेकायैतत्सूत्रामिति व्याख्यान्तरं भाष्यानुसारार्थं सूचयितुमधिकरणशब्दः । पूर्वाधिकरणे तर्हि कस्माद्देशादिवाक्यं नोदाहृतमित्याशङ्क्य कालवाक्योदाहरणस्योपलक्षणार्थत्वाद्व्याख्यातृभिर्दर्शनीयमित्याह—**पूर्वत्रैव त्विति** । दर्शयति—**तद्यथेति** । एकेन सङ्कल्पितसत्रानारम्भस्य निमित्ततोच्यते, परेणाप्यारब्धसमाप्तेरिति दर्शनायोदाहरणद्वयम् । सामिशब्दोऽर्द्धवाची । शम्याया दूरे प्रक्षेपो यस्मिन्देशे स शम्यापरासः । न चाग्नेयवाक्येऽतिरात्रादिवाक्यवद्यज्यश्रुतेरसत्वभूतधात्वर्थानुपादानादाग्नेयशब्देन प्रकृतिभूतदार्शपौर्णमासिकाग्नेययागोपस्थापनोपपत्तेर्भावनाभेदेऽपि धात्वर्थभेदो नास्तीत्याशङ्कां निराकर्त्तुम् । आग्नेयशब्दस्य नामधेयत्वाभावात्तत्प्रकृतयागोपस्थापकत्वं सम्भवतीति परिहारसम्भवेऽपि प्रौढ्या नामधेयत्वेऽप्यनुपस्थापकत्वं वक्तुं यजि विना वाक्यासमाप्तेरसमाप्तस्य च वाक्यान्तरानन्वयात् वाक्यान्तरस्थयज्यपेक्षानुपपत्तेरवश्यकल्प्येन यजिना [1]नामार्थविलक्षणसत्त्वभूतधात्वर्थप्रतीतेर्नोपस्थापनं भवतीति परिहारमाशङ्कापूर्वमाह—**यद्यपि चेति** । धात्वर्थाविच्छिन्नभावनाभेदोक्त्यर्थं कर्मान्तरशब्दः ।

संस्कार्यत्वाधिकरणे विचार्यमित्यपेक्षायामाह—**फलेति** । प्राधान्यलक्षणस्योपादेयत्वशङ्कानिरासहेतोर्द्वयोस्तुल्यबलत्वात्फलोदाहरणेन संस्कार्योदाहरणमप्युपलक्षितमित्याशयः । किं तर्हि तयोरुदाहरणमित्यपेक्षायामाह—**तत्रेति** । त्रैधातव्यवाक्ये संस्कार्यवाचिशब्दाभावात्कथं संस्कार्योदाहरणतेत्याशङ्क्या—**यजमानेति** । दीक्षणीयाकार्यं यजमानसंस्कारलक्षणार्थेन दीक्षणीयाशब्देन विशेषणभूतसंस्कार्ययजमानलक्षणेऽत्यत्रसीयतइत्याशयः । प्रकरणान्तरशब्दव्याख्यार्थत्वेनाकर्मसन्निधिशब्दव्याख्यानार्थतयानारभ्येतिभाष्यं व्याचष्टे—**अनारभ्येति** । किं प्राप्तमिति पूर्वपक्षभाष्याशयमाह—**तत्रेति** । उपनयनादिवच्चाकर्मकाल-

---

१. नामार्थेलक्षणेति २ पु० पा० ।

स्यापि संस्कारस्योपपत्तेः स्वतन्त्रविहिततयापि त्रैधातव्यया ज्योतिष्टोमादियजमान[1]: संस्कर्त्तु शक्य इति अनेनोपलक्षिते स्वारसिकप्रवृत्तिसम्भवेऽपि अप्रवर्त्तमानं प्रत्यृतौ भार्यामुपेयादित्यादिनियमविधिदर्शनाद्याग्नेयं कुर्यातद्वक्काम इति च विधायकस्य फलविषयत्वव्याख्योपपत्तेर्विधायकोपपत्तेर्विधायकसद्भावस्य वक्तुं शक्यत्वान्न शक्यतइति सिद्धान्तभाष्यमयुक्तमाशङ्क्योपपादयति—**सिद्धान्तेति**। असाधकं तु तादर्थ्यादि६-१-२ति षष्ठाद्यसिद्धान्तसूत्रेण विध्यन्यथानुपपत्त्या कामनोपबन्धाच्च स्वर्गादेः साध्यत्वप्रतीतेस्तादर्थ्येन कर्मविधावुक्ते, प्रत्यर्थं चाभिसंयोगात्कर्मतो ह्यभिसम्बन्धस्तस्मात्कर्मोपदेशः स्यादि'त्यनेनार्थ्यमानं स्वर्गादि प्रतीत्य लक्षणीकृत्योद्दिश्य तदाभिमुख्येन तत्तन्त्रतया कर्मणः समीहितस्वर्गाद्यन्वयावगतेरिति वदता फलस्योद्दश्यत्वादपि तादर्थ्येन कर्मविधिरिति वक्ष्यमाणत्वान्न कर्मतन्त्ररूपोपादेयत्वेन विधिः सम्भवतीत्याशयः।

ननूद्देश्ययोरपि देशकालयोर्विधेयत्वदर्शनान्नोद्देश्यत्वमात्रेण विधेयता निराकर्त्तुं शक्येत्याशङ्क्याह—**विधीयमानं हीति**। देशकालयोः सिद्धवत्काररूपोद्देश्यत्वेऽपि स्वारसिकप्रवृत्तिविषयत्वापादकप्रयोजनाकाररूपेणोद्देश्यत्वाभावात्स्वरूपतश्च सिद्धवत्कृत्य निर्देशेऽपि कर्माङ्गत्वेनाप्राप्तत्वाद्विधेयत्वोपपत्तिः। फलस्य तु प्रयोजनाकाररूपेणोद्देश्यत्वात् न विधेयत्वोपपत्तिरित्याशयः। विधायकस्य च फलविषयत्वाभ्युपगमे कर्मविषयत्वायोगात्तस्य निष्फलत्वं स्यादित्यभिधानार्थं न हीति भाष्यं व्याचष्टे—**क्रियापि चेति**। द्वयं तर्हि विधीयतामित्याशङ्क्याह—**न चेति**। 'यस्य पिता पितामहः सोमं न पिबेदित्युद्दिश्यमानयोरिव विधीयमानयोरप्यन्योन्यानाकाङ्क्षत्वेनान्वयापत्तेरवश्यमेकोद्देशेनेतरस्मिन् विधेः फलस्योक्तेन न्यायेनोद्देश्यत्वावधारणात्कर्मणो विधेयताऽवसीयतइत्याशयः। फलोद्देशेन कर्मविध्युक्तेः प्रकृतोपयोगमाह—**ततश्चेति**।

ननु फलस्योद्देश्यतायाः स्वर्गकामाधिकरणसूत्रोक्तत्वाद्भेदहेतुत्वसम्भवेऽपि संस्कार्यस्योद्देश्यतायाः क्व चिदनुक्तत्वान्न सम्भवतीत्याशङ्क्य, तथापि फलवत्संस्कारकर्मप्रतिप्राधान्याभ्युपगमाद्विधेयत्वेऽप्राधान्यापत्तेरुद्देश्यत्वावगमाद्भेदहेतुत्वमतिदिशति—**एतेनेति**। फलस्य चानुपादेयत्वाभ्युपगमे नित्यप्रयोगव्यतिरिक्ते फलकामनातन्त्रप्रयोगकल्पनानुपपत्तेर्नित्यएव प्रयोगे फलकामनाप्रसङ्गात्कामयेदिति वा श्रुतेः कर्माङ्गत्वेन कामनाविध्ययोगान्नित्यानित्यसंयोगविरोधः स्यादित्यभिधानार्थमपि चेति भाष्यं व्याचष्टे—**किं चेति**। प्रथमार्थे तसिः। तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**।। २५ ।। इति द्वादशं सन्निधौफलादेः कर्मभेदापाकत्वाभावाधिकरणम् ।।

।। इति द्वादशं फलसंस्कार्ययोः कर्मभेदकावाधिकरणम् ।।

भा० प्र०—"आग्नेयमष्टाकपालं निर्वपेद् त्रृक् कामः" तेज की कामना करने वाला आग्नेय अष्टाकपाल का निर्वाप करे यह श्रुति में कहा गया है। इस प्रकार के कथित

१. ज्योतिष्टोमादिरिति २ पु० ना० स्वयमेव यजमान इति पा०।

वाक्य प्रकृतभूत कर्म का अर्थात् दर्शपूर्णमास का आग्नेयादि याग में फल का विधेयक है अथवा उस प्रकार के प्राकृत कर्म की अपेक्षा स्वतन्त्र कर्म का ही विधान करते हैं— यह संशय होता है। इस प्रसङ्ग में पूर्वपक्षी का कहना है कि आग्नेयादि कर्म पूर्व से ही प्राप्त होने से उसमें फल का ही विधान करता है, मास कालविशेष होने से अनुपादेय है, अतः वह विधेय नहीं हो सकता। इसलिए, पूर्व अधिकरण में मास का विधान असम्भव होने से गुणविधि नहीं हो सकती है, किन्तु फल उपादेय हो सकता है अर्थात् निष्पाद्य हो सकता है तो उसी का विधान उचित है।

इस प्रकार का पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "फलं च अकर्म-सन्निधौ" मास आदि काल के समान फल भी उपादेय नहीं हो सकता है यह कह कर उसका विधान नहीं किया जा सकता है, कारण, फल के साधन याग आदि विधेय होने से वे जिस प्रकार स्वयं फल नहीं हैं, फल को विधेय मानने पर वे भी उसी प्रकार अफल हो जायेंगे और पुरुष की कामना के उत्पादन के लिए जो शास्त्र में फल का विधान रहेगा वह भी नहीं हो सकता है। क्योंकि, सुन्दरता के बोध में स्वभावतः पुरुष की आकाङ्क्षा होने से कामना के उत्पादन के लिए भी फल विधेय नहीं है। इसीलिए अन्य कर्म की सन्निधि नहीं है और जब फल का उल्लेख है, तब फल के अनुसार आग्नेयादि कर्मान्तिर भी होंगे, अन्यथा फलश्रुति अनर्थक हो जायगी। इस स्थल में कर्म के साथ फल का सम्बन्ध अर्थापत्तिप्रमाण के अनुसार बोधित होता है और आग्नेयादि कर्म का ही विधान करता है। इसलिए "आग्नेयमष्टाकपालं निर्वपेद् ऋक्कामः" यह अन्य कर्म का विधायक वाक्य है। "अग्नीषोमीयमेकादशकपालं निर्वपेद् ब्रह्मवर्चस्कामः" "ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः" इत्यादि अन्य वाक्य के सम्बन्ध में भी यही नियम समझना चाहिए।

इस प्रसङ्ग में वार्तिककार का कहना है कि फल एवं संस्कार्य्य दोनों का ही विचार इस अधिकरण में किया गया है। उनमें फल का उदाहरण भाष्यकार ने स्वयं लिखा है और संस्कार्य के उदाहरणस्वरूप "त्रैधातरीयाः दीक्षणीयाः" इत्यादि वाक्य ग्राह्य है। इस स्थल में इस वाक्य में जो संस्कार्य का उल्लेख है वह भी उदाहृत फल के समान कर्मान्तिर भेद का साधन है।

"फलं च" = फल भी कर्म का भेदक होता है, "अकर्मसन्निधौ" = कर्म की सन्निधि न रहने पर॥ २५॥

यह बारहवाँ फल एवं संस्कार्य का कर्मभेदाधिकरण है॥ १२॥

**अथ त्रयोदशं सन्निधौफलादेः कर्मभेदकत्वाभावाधिकरणम्॥**

**[१३] संनिधौ त्वविभागात्फलार्थेन पुनः श्रुतिः॥ २६॥ सि०**

**शा० भा०—अस्त्यवेष्टिः—'आग्नेयोऽष्टाकपालः पुरोडाशो भवति', इत्येवमादिः। तां प्रकृत्योच्यते, 'एतयाऽन्नाद्यकामं[1] याजयेत्' इति। तत्र संदेहः—**

---

१. ब. एतयैवान्नाद्यकामं।

**किं कर्मान्तरमवेष्टेः, उतावेष्टिरेवेति। किं प्राप्तम्? कर्मान्तरमिति। उक्तेन न्यायेन। एवं प्राप्ते।**

**ब्रूमः—संनिधौ फलार्थेन पुनः श्रुतिरवेष्टेरेव, न कर्मान्तरमिति। कुतः। अविभागात्। एतयेत्येष शब्दो न शक्नोत्यवेष्ट्या[1] विभक्तं यागमन्यं वक्तुम्। संनिहितस्य प्रतिनिर्देशक एष शब्द। तस्मादवेष्टिरेवान्नाद्यकामस्य विधीयत इति। किं प्रयोजनम्। यद्यवेष्टिराग्नेयादीनि हवींषि। अथ कर्मान्तरमन्यहविष्को याग इति॥ २६॥**

**इति त्रयोदशं सन्निधौ फलादेः कर्मभेदकत्वाभावाधिकरणम्॥ १३॥**

त० वा०—सर्वेषामेवासंनिध्यंशप्रत्युदाहरणार्थमिदमारभ्यते। फलग्रहणं प्रदर्शनमात्रम्। सर्वाणि तु देशादीन्यप्युपाहर्तव्यानीति। 'समे दर्शपूर्णमासाभ्यां यजेत्', 'पौर्णमास्यां पौर्णमास्या यजेत', 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत', 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', 'शेषात्स्विष्टकृतं यजति' इति। सर्वत्र पूर्वाधिकरणेन देशादीनि प्रति विधीयमानत्वात्कर्मान्तरत्वं प्राप्तम्।

आह च।

विहितस्य विधिर्नास्तीत्यनुवादः प्रसज्यते।
अनूद्यमानमुद्देश्यं न चात्रोद्देशसम्भवः॥

अनूद्यमानानि त्वेकान्तेनोद्देष्टव्यानि कर्माणि। न चोद्देश्यानामुद्देश्यैः सम्बन्धोऽवकल्पते। देशाद्युद्देशेन तु विधीयमानानां कर्मणां स्वरूपानुवादकल्पनं युगपद्विध्यनुवाददोषादयुक्तम्। तस्मात्कर्मान्तराणीति प्राप्ते।

विधीयते—भिन्ने हि विधिसामर्थ्ये उत्पत्तिविनियोगयोः।
तत्र सत्यां गतावेकमसत्यां तद् द्वयं भवेत्॥

अगत्या हि तेनैवोत्पत्तिः। तेनैव च विनियोगः क्रियते। सत्यां तु गतौ विनियोजकस्योत्पत्तिविध्यर्थापत्त्यनुवादात्, अन्येनैवोत्पादितानां च विपरिवर्तमानानां विनियोगसामर्थ्यमात्रमेव ज्ञायते।

न चाप्युद्दिश्यमानत्वमनुवादत्वकारणम्।
नोपादानं विधेयत्वे प्राप्त्यप्राप्तिवशे हि ते॥

यद्यपि देशादीन्यनुपादेयस्वभावत्वादुद्दिश्यन्ते, यथाऽप्यप्राप्तत्वात्तेषामेव ज्ञायते विधेयत्वम्। उपादीयमानस्य च कर्मणस्तादृशस्यैवाऽन्येन पर्युपस्थापनादनुवादत्वम्। असंनिधाने त्वपर्युपस्थापनाद्विधिर्नोपादानमात्रादित्यविरोधः। तस्मादभेदः। विपरिवृत्तिरेव चेहाविभागशब्देनोक्ता। विशेषेण त्ववेष्टावेतच्छब्दप्रत्ययादिति।

---

१. ब. अवेष्टिविभक्तं।

### केषाञ्चिन्मतस्यानुवादनिरासौ

प्रयोजने तु चोदयन्ति। कर्मान्तरेऽपि किलैतच्छब्दकृतात्सादृश्यप्रत्यया-दाग्नेयादीन्येव हवींषीति, कथमन्यहविष्को याग इति। तत्त्वचोद्यम्। ज्योति-रादिवदेतच्छब्दस्य प्रस्तूयमानमुख्यार्थोपपत्तौ सत्यां सादृश्यलक्षणानुपपत्तेः। तस्मात्सुष्ठूक्तं कर्मान्तरेऽन्यहविष्को याग इति। एवमुक्तानि सापवादानि षट् भेदकारणानि।

### वृत्तिमतस्योपन्यासनिरासौ

वृत्त्यन्तरे तु चत्वार्येव भेदकारणानि शब्दान्तरसंज्ञागुणफलान्युदाहृतानि। पुनःश्रुति-संख्ययोः शब्दान्तरे एवान्तर्भावात्प्रकरणान्तरस्य च फलाद्यनुग्रहमात्रार्थ-त्वात्। तत्त्वयुक्तमिव दृश्यते। न हि पञ्चकृत्वोऽभ्यस्तो यजतिशब्दान्तरत्वं प्रतिपद्यते। नाप्येकशेषेण तन्त्रोच्चारिताः सप्तदश प्राजापत्यशब्दाः सम्भवन्ति, शब्दैकत्वप्रत्यभिज्ञानात्। तथा चोक्तम् 'आदित्यवद्यौगपद्यम्' इति 'संख्याभावात्' इति च। वक्ष्यति चैवंजातीयकानामेकत्वम्। 'अपि वाऽव्यतिरेकाद्रूपशब्दा-विभागाद्वा' इति। तस्मादैकशब्द्ये सत्येव कारणान्तराद्भेदमपश्यतः शब्दान्तर-कल्पनं तत्रभवतो भाष्यान्तरकृतः। प्रकरणान्तरत्वाच्च विना फलादीनां भेदकत्वमुक्तमपि न दृष्टं 'संनिधौ त्वविभागात्' 'तत्संनिधेर्गुणार्थेन पुनःश्रुतिः' इत्यादौ। तेन प्रत्यभिज्ञाननिमित्तत्वात्फलाद्यनुगृहीतं प्रकरणान्तरमेव भेदकारणं भवेदप्युपेक्षितम्। फलं च प्रकरणान्तरान्तर्भूतत्वेन न निरीक्षितम्।

यदपि 'एकं वा संयोगरूपचोदनाख्याविशेषात्' इत्येकत्वे हेतुविपर्ययचतुष्टय-मस्य ज्ञापकमित्युक्तम्। तदपि प्रस्तुतेऽधिकरणेऽन्येषामसम्भवादिति नाऽऽलोचितम्। तस्माद्यथोक्ताः षडेव भेदहेतवः। तत्रापि तु सिद्धान्ते संज्ञाशब्दान्तरयोः गुण-संख्ययोश्च भेदो वक्तव्यः सन्नोक्त इत्यभिधीयते।

स्वरूपानभिधानत्वात्संज्ञा शब्दान्तरात्पृथक्।
व्यासज्ज्यसमवायाच्च संख्या भिन्ना गुणान्तरात्॥

संज्ञा हि द्रव्यरूपापन्नामपि क्रियामभिदधाना विच्छेदमात्राद्भिनत्ति। संख्याऽपि युगपदनेकोत्पद्यमानसमवेता पूर्वासम्भवाद् गुणान्तराद्भिद्यत इति॥२६॥

**(इति–त्रयोदशं संनिधौ फलादेः कर्मभेदकत्वाभावाधिकरणम्॥१३॥)**

न्या० सु०—अनुपादेयान्वयमात्रस्यासन्निधिसहकृतस्य भेदकत्वे फलमात्रं प्रत्युदाह-रणानुपपत्तिमाशङ्क्याह—**सर्वेषामेवेति**। 'स्विष्टकृतं यजती'ति विहितस्विष्टकृद्यागसन्निधौ 'शेषादि'ति वाक्यान्तरे शेषसंस्कारार्थत्वेन स्विष्टकृद्यागविधानात्संस्कार्योदाहरणत्वम्। भाष्यालोचनयैतच्छब्दएव फलवाक्ये विपरिवृत्तिहेतुरिति कस्य चिच्छङ्कां निवर्त्तयितुं भाष्योदाहृतफलसद्भावेऽपि उदाहरणान्तरम्। न्यायशास्त्रे पूर्वपक्षाशङ्कां विना प्रत्युदाह-

रणानर्थक्यापत्तेस्तत्प्रदर्शनार्थं किं प्राप्तमिति भाष्यं व्याचष्टे—**सर्वत्रेति**। स्वरूपतः प्राप्तस्यान्यसम्बन्धित्वेन विध्युपपत्तेर्न विधीयमानत्वमात्रेण कर्मान्तरापत्तिरित्याशङ्क्य वृद्धवाक्येनोपपादयति—**आह चेति**। पूर्वस्मात्कर्मणोऽस्याभेदाभ्युपगमे विहितविध्ययोगादनुवादापत्तेरनुवादस्य च यच्छब्दोपबन्धलक्षणोद्देश्यव्यङ्ग्यत्वादनूद्यमानस्योद्देश्यत्वापत्तेर्देशाद्युद्देशे च कर्मोद्देशासम्भवात् भेद इत्यर्थः। उत्तरार्द्धं व्याचष्टे—**अनूद्यमानानि हीति**। ननूद्देशान्वयित्वेन विधानेऽपि स्वरूपानुवादे कर्मान्तरत्वं भविष्यतीत्याशङ्क्याह—**देशादीति**। पूर्वपक्षमुपसंहरति—**तस्मादिति**।

उत्पत्तिविनियोगविधिव्यापारभेदादुत्पत्त्यनुवादविनियोगविध्योर्यौगपद्यदोषं परिहरन् सिद्धान्तमाह—**इतीति**। उत्तरार्द्धं व्याचष्टे—**अगत्या हीति**। ननु देशादीनामुद्देश्यत्वावगतेः कर्मणस्तानि प्रत्युपादेयत्वेन विधेयत्वाद्भेदापत्तिरित्याशङ्क्याह—**न चापीति**। विध्यनुवादशब्दौ त्वप्रत्ययान्तत्वात्कर्मव्युत्पत्त्या वा विधेयानुवाद्यवाचिनौ। श्लोकं व्याचष्टे—**यद्यपीति**। सिद्धान्तमुपसंहरति—**तस्मादिति**। भाष्यादविभागशब्दस्य सन्निहितप्रतिनिर्देशविषयत्वमाभासमानं निराकर्त्तुं स्वयं व्याख्या करोति—**विपरिवृत्तिरेव चेति**। भाष्यकृद्व्याख्या त्ववेष्टौ विशेषोक्त्यर्थेति दर्शयितुमाह—**विशेषेण त्विति**।

एतच्छब्दस्याग्निहोत्रशब्दवत् धर्मलक्षणार्थत्वेनातिदेशिकत्वात्कर्मान्तरे विश्वजिदादिवदव्यक्तचोदितत्वान्सोमहविष्कत्वं पूर्वपक्षप्रयोजनमाक्षिपति—**प्रयोजनं त्विति**। समाधत्ते—**तत्त्विति**। वृत्त्यन्तरोक्तं भेदकारणचतुष्टयमुपन्यासपूर्वं दूषयितुं भाष्योक्तं षड्विधत्वं तावदुपसंहरति—**एवमिति**। उपन्यस्यति—**वृत्त्यन्तरे त्विति**। फलाद्यनुग्रहमात्रार्थत्वात् इत्यादिशब्ददर्शनात्फलशब्दोऽनुपादेयमात्रविषयो विज्ञायते। आन्यभाव्यं तु कालशब्दव्यवायादित्युच्चारणभेदे शब्दभेदस्मृतेः सरूपाणामेकशेष इति स्मृत्यालोचनया शेषशब्दभेदावगतेरेकस्मिंश्च शब्दे शतकृत्वोऽप्युच्चरितेऽत्यर्थं भेदाप्रतीतेरभ्यासस्य भेदकत्वायोगात्संख्यायाश्चार्थगतायाः कर्मण्येकस्मिन्नसम्भवाद्भेदकत्वे गुणान्तर्भावापत्तेः शब्दगताया एकशेषस्मृत्यवगताया भेदकत्वस्य वाच्यत्वात्, तस्याश्च शब्दभेदकत्वात् द्वयोः शब्दान्तर्भावात्प्रकरणान्तरत्वाभावेऽपि 'चाग्नेयमष्टाकपालं निर्वपेद्रुक्काम' इत्यादावनुपादेयान्वयस्य विधेयत्वापादकत्वाद्भेदकत्वावगतेस्तत्प्रतिबन्धकप्रत्यभिज्ञापनयनमात्रे प्रकरणान्तरस्य व्यापारादित्यर्थः। शाखान्तराधिकरणसिद्धान्तसूत्रे च भेदचतुष्टयपरामर्शादिति हेत्वन्तरं चशब्देन सूचितं दूषयति—**तत्त्विति**। 'आन्यभाव्यमिति' कात्यायनस्मृतिं दूषयितुं सत्त्वान्तरे च यौगपद्यादितिशब्दाधिकरणपूर्वपक्षहेतोरनैरकान्तिकत्वोक्त्यर्थसूत्रं पठति—**तथा चेति**। यथादित्यस्य नानादेशेषु युगपदुपलम्भेऽपि न भेदः, तथा शब्दस्यापीति सूत्रार्थः। एकशेषस्मृत्यालोचनात् भेदावगतिं दूषयितुं तत्रत्यं सिद्धान्तसूत्रं पठति—**संख्येति**। अष्टौ गोशब्दा इति संख्याव्यवहाराभावादेक एव नित्यः शब्द इति सूत्रार्थः। तच्च प्रत्यभिज्ञाने च सत्युपाधिभेदा[1]द्भेदाभावं वक्तुं षष्ठाधिकरणसिद्धान्तसूत्रैकदेशं पठति—**वक्ष्यति चेति**।

१. भेदादिति ३ पु० ना०।

विहितद्रव्यापचारे द्रव्यान्तरेण कृतस्य यागस्य व्यतिरेकादष्टाकपालद्रव्यकत्वाग्निदेवत्यस्व-रूपाविभागाग्नेयशब्द[1]विभागाभ्यां प्रत्यभिज्ञानात् गोत्ववदेककर्म्यमिति वन्दन्सूत्रकृत्प्रत्य-भिज्ञायमानानामभेदं वक्ष्यतीत्येवंजातीयकशब्देनोक्तम् । संख्याभ्यासयोः शब्दान्तरान्तर्भाव-दूषणमुपहासपूर्वकमुपसंहरति—**तस्मादिति** । प्रकरणान्तरस्य भेदकत्वाभावमुपहासपूर्वं दूषयितुमाह—**प्रकरणान्तरत्वाच्चेति** । अनुपादेयान्वयादुपादेयत्वावगमेऽप्यप्राप्तविषयत्वाद्विधेः प्रकरणान्तरशब्दोक्तं प्रकृतबुद्धिविच्छेदं विना विधेयत्वापादकत्वान्मुख्यं भेदकारणमित्या-शयः । किमर्थं तर्ह्यनुपादेयान्वयापेक्षेत्याशङ्क्याह—**तेनेति** । येन कारणेन प्रकरणान्तर-शब्दोक्तेन प्रत्यभिज्ञानं विना भेदो न भवति, तेन कारणेन भेदस्याप्रत्यभिज्ञानहेतुकत्वा-त्प्रत्यभिज्ञापादकानुपादेयत्वद्योतकशब्दोपबन्धवारणायानुपादेयापेक्षेत्याशयः । यच्चैकं चेति सूत्रे फलान्वयगुणशब्दान्तरसंख्याभेदप्रमाणाभावचतुष्टयमेकत्वहेतुत्वेनोच्यमानं फलादिचतुष्टयं भेदकमित्यस्यार्थस्य ज्ञापकमिति । वृत्त्यन्तरकृतोक्तं तु शाखान्तराधिकरणेऽभ्याससंख्या-प्रकरणान्तराभावानामसम्भवान्न तु फलादिचतुष्टयस्य भेदकहेतुत्वादित्युपहासपूर्वमाह—**यदपीति** । एकत्वहेतुभूतं च तद्विपरीतचतुष्टयं चेति विग्रहः । वृत्त्यन्तरदूषणमुपसंहरति—**तस्मादिति** । फलस्य भेदहेतुत्वनिरासार्थम्—**यथोक्ता इत्युक्तम्** । चतुष्टयनिरायैवकारः ।

ननु भाष्यसिद्धान्तेऽपि सञ्ज्ञाया वाच्यधात्वर्थभेदद्वारा भावनाभेदकत्वेन शब्दान्तरा-न्तर्भावात्संख्यायाश्च कर्मभेदं विना विध्यसम्भवाद्भेदकत्वेन गुणान्तर्भावाच्चत्वार एव भेद-हेतवः स्युरित्याशङ्क्य, भेदाभिधानं प्रतिजानीते—**तत्रापि त्विति** । सञ्ज्ञायाः शब्दान्त-रात्संख्यायाश्च गुणात् भेदो विधीयतइत्युक्ते अध्यायोपक्रमे तयोः स्वावसरे भेदं वक्ष्याम इत्युक्तत्वात्सञ्ज्ञाधिकरणयोरेवानयोर्भेदो वाच्य इत्याशङ्क्य, तत्र वाच्यस्याप्यवसरालाभेना-नुक्तत्वादिदानीमवसरलाभादभिधानमिति वक्तव्यःसन्नित्थनेनोक्तम् अभिधत्ते—**स्वरूपेति** । शब्दान्तरस्यानुरञ्जकधात्वर्थभेदेन भावानां भेदकत्वाद्यागादिशब्दाच्च सिद्धरूपतयोक्तस्य धात्वर्थस्य भावनानुरञ्जकत्वाप्रतीतेः स्वेन पूर्वापरीभावरूपेणानुरञ्जकत्वावगमात्सञ्ज्ञायाश्च पूर्वापरीभावरूपानभिधायित्वात् धात्वर्थैक्ये चानेकसञ्ज्ञानर्थक्यापत्तेर्धात्वर्थभेदागमकत्वेऽपि देवतोद्देशद्रव्यत्यागादिधात्वर्थान्तरविलक्षणरूपानभिधायित्वाद्यजत्यादेस्तु विलक्षणरूपे संबन्ध-ग्रहणात्तद्वाचित्वोपपत्तेः । सञ्ज्ञायाः शब्दान्तराद्भेदः विधेयरूपभेदे शब्दान्तरादिव्यापारा-दुत्पत्तिज्ञापनेन भेदकत्वावगतेः संख्यायाश्च व्यासज्यकर्मणि समवायादेकसंख्येऽपि कर्मणि (विध्यन्तरोत्पादितकर्मान्तरोपजनापेक्षया समवायोपपत्तेर्गुणवत्पूर्वोत्पन्नकर्मसंयोगासम्भवेना-पूर्वकर्मोत्पत्तिज्ञापकतया भेदकत्वायोगाद् गुणाद्भेद इत्यर्थः । श्लोकं व्याचष्टे—**सञ्ज्ञा हीति** । एकसंख्ये अपि कर्मणि[2]) कर्मान्तरापेक्षया संख्यान्तरसमवायसम्भवे कथं भेदकतेत्या-शङ्क्य प्रमाणान्तरेणोत्पत्तिविषयत्वेनावगतस्य विधेरनेकविषयत्वमात्रं संख्ययावगम्यतइति परिहारसूचनार्थम्—**युगपदित्युक्तम्** । पूर्वस्मित्कर्मण्यसम्भवो यस्य, तत्पूर्वासम्भवं वाजिना-

---

१. अविभागाग्नेयशब्देति ३ पु० ना० ।

२. अयं पा० ३ पु० ना० ।

दिन्यायाभावे अपि अङ्गत्वाविशेषात्संख्याया अप्यङ्गापरपर्यायगुणत्वापह्नवायोगात्कथं गुणाद्भेद इत्याशङ्कानिरासायाऽन्तरशब्दः ॥ २६ ॥

इति त्रयोदशं सन्निधौ फलादेः कर्मभेदकत्वाभावाधिकरणम् ॥

भा० प्र०—वाजसूय यज्ञ का अङ्गभूत अवेष्टि नाम का एक यज्ञ है—यह अवेष्टि अधिकरण में अर्थात् २।३।२ अधिकरण के तृतीय सूत्र में कहा गया है। उस अवेष्टि यज्ञ के प्रकरण में "एतया अन्नाद्यकामं याजयेत्" = अन्नाद्यकामी इसके द्वारा यज्ञ करे, यह वाक्य पठित है। इसमें संशय होता है कि यह विभिन्न कर्म की विधि है या इसके द्वारा अवेष्टि नामक यज्ञ का ही विषय कहा गया है? पूर्वपक्षी का कहना है कि इस वाक्य में "अन्नाद्यकामं" पद के द्वारा फल का उल्लेख होने से अवेष्टि के समीप में श्रुत होने पर पूर्व अधिकरण में उक्त युक्ति के अनुसार इससे अन्य कर्म का ही विधान किया गया है। अन्यथा फल की विधि नहीं हो सकती है, ऐसी स्थिति में वाक्य ही निरर्थक हो जायगा।

इस प्रसङ्ग में सिद्धान्ती का कहना है कि "सन्निधौ तु फलार्थेन पुनःश्रुतिः" यह अवेष्टि के समीप में पठित होने से अवेष्टि नामक इष्टि की ही पुनःश्रुति उल्लेख है, उनके कारण अभ्यास = पुनः उल्लेख के कारण जो कर्मभेद की आशङ्का है—वह ठीक नहीं है। ऐसे स्थलों में भी इन वचनों से पूर्व विहित कर्मों के साथ देश, काल और निमित्त आदि का सम्बन्ध विहित है।

"सन्निधौ" = विहित कर्म के सन्निधान में "तु" = प्रत्युदाहरणार्थक, "पुनः श्रुतिः" = पुनः उल्लेख अर्थात् उसी कर्म का पुनः निर्देश, "फलार्थेन" = फल के लिए अर्थात् फल, निमित्त, संस्कार आदि के साथ कर्म का सम्बन्ध बोध कराने के लिए "अविभागात्" = अभेद प्रतीति होती है ॥ २६ ॥

यह तेरहवाँ सन्निधान में फल आदि के कर्मभेदकत्वाधिकरण है ॥ १३ ॥

## अथ चतुर्दशमाग्नेयपुनश्श्रुतेस्तुत्यर्थत्वाधिकरणम्

## [१४] आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत ॥ २७ ॥ पू०

**शा० भा०—दर्शपूर्णमासयोः—'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विधाय पुनरुच्यते—'आग्नेयोऽष्टाकपाकोऽमावास्यायां भवति' इति। तत्र संदेहः—किममावास्यायां द्विराग्नेयेन यष्टव्यम्, उत सकृदिति। किं प्राप्तम्? आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयते, एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्, इति ॥ २७ ॥ पूर्व० ॥**

त० वा०—'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति श्रूयते। किं य एवासावुभयत्राप्यच्युतः तस्यैवैषा पुनः श्रुति केनापि प्रयोजनेन, अथ कर्मान्तर-

मिति संदेहः। तत्र 'संनिधौ त्वविभागात्' इति सत्यप्यनुपादेयाममावास्यां प्रत्यु-पादाने तदेव कर्मेति सिद्धान्ते प्राप्ते।

अभिधीयते—पुनः श्रुतिरनन्यार्था भेदिकेत्यवधारिता।
तादृशी चेयमित्येव द्विराग्नेयः प्रयुज्यताम्॥

प्रयोगद्वित्वद्वारेण च कर्मद्वित्वप्रतिज्ञानमेवैतद् द्रष्टव्यमिति॥ २७॥

**आग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणम्॥ १४॥**

न्या० सु०—उदाहरणं विवेक्तुमाह—**आग्नेयइति**। तत्र सन्देहभाष्यं सकृदनुष्ठान-चिन्तायास्तत्रावृत्तिचिन्तासारूप्याल्लक्षणासङ्गतेरयुक्तमाशङ्कय भेदाभेदफलोक्तिद्वारा भेदा-शयत्वेन व्याचष्टे—**किमिति**। अच्युतवाक्येनैककर्मासम्भवो पौर्णमास्यमावास्याकाललक्षण-गुणद्वययोगादाग्नेयद्वयविध्यवतेः, एकस्य कालद्वयानन्वयात्कालद्वयविशिष्टस्य वा, अमावा-स्यावाक्ये पुनःश्रुतत्वायोगाद्योऽमावास्याकालक आग्नेय उभयत्र सोमयागात्प्रागूर्ध्वं वाच्युतता न सान्नाय्यवत्कदाचित् च्युत इत्येवं प्रतियोग्युपलक्षणार्थो वार्त्तिकावयवो व्याख्येयः। प्रयो-जनासम्भवेऽपि कर्मान्तरत्वानुपपत्तिसूचनायानवक्लृप्तिः। फलार्थेनेत्यस्माद्विधेरनुपादेयत्व-सम्भवएव सन्निधेः प्रत्युदाहणत्वशङ्कानिरासार्थत्वेन पूर्वपक्षसूत्रं व्याचष्टे—**इतीति**। अभ्या-सोक्तिं व्याख्यातुम्—**द्विरित्युक्तम्**। अभ्यासोक्त्यावृत्तिविध्यर्थताऽस्य वाक्यस्योक्तेति शङ्कां निवर्त्तयितुमाह—**प्रयोगेति**। पूर्वपक्षप्रयोजनमभ्यास इत्याशयः।

अविभागात्तु कर्मणो द्विरुक्तेन विधीयतइति सिद्धान्तसूत्रमवतारयति—**तत्रेति**। कर्मै-क्यस्य सिद्धान्तत्वेऽपि वाक्यद्वयस्य विधायकत्वोक्तेप्रौढिमात्रत्वसूचनार्थः पक्षान्तरशब्दः॥२७॥

भा० प्र०—दर्शपूर्णमास प्रकरण में "आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यायां पौर्णमास्याञ्चाच्युतो भवति" इस वाक्य से आग्नेय याग का विधान किया गया है। इसी प्रकरण में पुनः "आग्नेयोऽष्टाकपालोऽमावास्यायां भवति" अर्थात् अमावास्या में आग्नेय अष्टाकपाल होगा—यह विधि है। इस स्थल में यह वचन रहने से अमावास्या में क्या दो आग्नेय याग होगा या एक बार करना होगा—यह संशय होता है।

पूर्वपक्षी का कहना है कि धात्वर्थ का अभ्यास अर्थात् आवृत्ति या पुनः उल्लेख होने से यहाँ यागान्तर की विधि होती है, यह जो नियम पूर्व में द्वितीय अध्याय के द्वितीय अधिकरण के द्वितीय सूत्र में सिद्धान्तित है। तदनुसार इस स्थल में भी कर्मभेद होगा, अर्थात्, दर्शयाग में दो बार आग्नेय याग का करना होगा।

"आग्नेयः" = आग्नेय याग, "तु" = प्रत्यवस्थानर्थक, अर्थात् उसी का पुनः उल्लेख किया गया है। उक्त कर्म के फल के सम्बन्ध का बोधन करना इसका प्रयोजन नहीं है। यदि यह कहा जाय कि इसमें अवेष्टि का पुनः उल्लेख है यह कर्मान्तर नहीं है—इसमें क्या प्रमाण है? ऐसी आशङ्का में कहा गया है "अविभागात्" क्योंकि प्रकृत कर्म के साथ इसका अविभाग अर्थात् अभेद प्रतीति रहती है। इस वाक्य में नी "एतया" यह

पद है इसी के द्वारा पूर्व कर्म के साथ इस कर्म के अभेद का बोधन होता है, क्योंकि यह सर्वनाम पद है और सर्वनाम शब्द सन्निकृष्ट का ही वाचक होता है। यदि यह कहा जाय कि इसका पुनः उल्लेख क्यों किया गया है? "फलार्थेन पुनःश्रुतिः" फल के साथ कर्म का सम्बन्ध अवगत कराने के लिए पुनः उल्लेख किया गया है। 'अन्नाद्य' ही अवेष्टि यज्ञ का फल है—यह पूर्व से प्राप्त नहीं था, वही इस वाक्य के द्वारा बोधित होता है।

अधिकरण का यह प्रयोजन है कि पूर्वपक्षी के मत के अनुसार यह यागान्तर होने पर भी सोम आदि इसकी हविः होगी और सिद्धान्ती के मत ने "आग्नेयाष्टाकपालं पुरोडाशः भवति" इत्यादि अवेष्टि के विधायक वचन के अनुसार आग्नेयादि इसकी हविः होगी। पूर्व अधिकरण के प्रत्युदाहरण के रूप में यह अधिकरण प्रवृत्त होता है।

दर्शपूर्णमास प्रकरण में "समे यजेत" अर्थात् समान देश में याग करे "पौर्णमास्यां यजेत" पौर्णमासी में याग करे, "यावज्जीवं दर्शपूर्णमासभ्यां यजेत" जीवन पर्यन्त दर्शपूर्णमास याग करे इत्यादि वचन में जो देश, काल एवं निमित्त का "उक्तहेतुत्वात्" = क्योंकि इसका हेतु उक्त है, अतः, "अभ्यासे" = अभ्यासरूप अर्थात् कर्म की आवृत्ति के रूप में, "प्रतीयते" = प्रतीत होगा ॥ २७ ॥ पूर्वपक्ष है।

## अविभागात्तु कर्मणो द्विरुक्तेन विधीयते ॥ २८ ॥

**शा० भा०—नैतदस्ति[1], पुनरभ्यसितव्य आग्नेय इति। कुतः? नाभ्यासस्य वाचकः शब्दोऽस्तीति। नन्वाग्नेयः पुनरुच्चरितः परं कर्म विधास्यति। नेति ब्रूमः। शब्दः पुनरुच्चारितो न पुनरर्थः कर्तव्य इति शक्नोति वदितुम्। योऽस्य प्रथममुच्चारितस्यार्थः, शतकृत्वोऽप्युच्चरितस्य स एवार्थो भविष्यति[2], नान्यः।**

**ननु विहितमेव पुनरविशिष्टं विदधदनर्थको भवति। भवतु काममनर्थकत्वम्, न त्वन्यं शक्नोति वदितुम्। भवेदुपपन्नमनर्थकत्वम्, न त्वर्थान्तरवचनता। तस्मान्न द्विरभ्यस्येतेति ॥ २८ ॥**

त० वा०—तत्र पक्षान्तरमाह—**'अविभागात्तु कर्मणो द्विरुक्तेन विधीयत' इति।** युक्तं समिदादिषु प्रत्यक्षयागपुनःश्रुतेर्भेदकत्वम्, इह तु द्रव्यदेवतासंबन्धादसावनुमातव्यः। तच्च द्रव्यदेवतमभिन्नमुपलभ्यमानं पूर्वसम्बन्धानुभववशादेकान्तेन तमेव यागं बोधयति। द्रव्यदेवतमप्यन्यदिति चेत्? न। अविभागप्रत्ययोपलम्भात्। यदि तु व्यक्तिकृतो भेद आश्रीयते, स प्रयोगान्तरे तस्याप्याग्नेयस्याविशिष्टः। तस्माद्वैकल्पिकेन वचनद्वयेनामावास्यायामाग्नेयविधानम्।

---

१. ब. नाग्नेयः पुनरभ्यसितव्यः।　　२. ब. भवितुमर्हति।

अथवा युगपत्प्रवृत्तेः 'यथा स्यात्सत्त्वदर्शनम्' इत्यनेन न्यायेन तदेव कर्म, एकेन, इतरेण च प्रतिपाद्यते। न च गम्यते विशेषः कतरेण प्रतिपाद्यते, कतरत्पौनरुक्त्यादनर्थकमिति। कामं भवत्वानर्थक्यं, तदेव हि युक्त्याऽन्विष्यमाणमिहोपपन्नतरं भवेत्, नार्थान्तरवचनत्वं, शब्दार्थानित्यत्वप्रसङ्गात्। तस्मात्सकृदेव प्रयोग इति। सर्वं त्विदमभ्यासाधिकरणे निराकृतमपि सत्-उत्तरसूत्रदर्पेण विश्रब्धमभिधीयते। न तु परमार्थेनाऽऽनर्थक्याभ्युपगमं वेदः क्षमते ॥ २८ ॥

न्या० सु०—अभ्यासाधिकरणन्यायवैषम्योक्त्यर्थत्वेन तुशब्दव्याख्यानार्थं पूर्वं कर्मणो विभागादिति हेत्वर्थं व्याचष्टे—**युक्तमिति**। द्रव्यदेवतान्यत्वशङ्कानिरासार्थत्वेनाप्यविभागोक्तिं व्याचष्टे—**द्रव्येति**।

ननु कर्मणः क्षणिकत्वेनाविभागशब्दोक्तायाः प्रत्यभिज्ञायाः सामान्यविषयत्वान्नाभेदबोधकत्वोपपत्तिरित्याशङ्क्याह—**यदि चेति**। स्वरूपभेदस्य प्रयोगान्तरे अच्युतवाक्यविहितस्याप्याग्नेयस्याविशेषाद्विधेयरूपभेदो अत्र विवक्षितः। स च प्रत्यभिज्ञया निरस्त इत्याशयः। नन्विति भाष्येण पुनःश्रुत्या कर्मभेदमाशङ्क्य तन्निरासार्थत्वेन द्विर्वचनेनैकमेव कर्म विधीयतइत्येवं भावनिष्ठाभ्युपगमेन द्विरुक्तेनेति सूत्रावयवव्याख्यानार्थं नेतीति भाष्यं द्वेधा व्याचष्टे—**तस्मादिति**। विकल्पस्याष्टदोषत्वेनापरितोषादथ वेति समुच्चयं वक्तुमेकेन वाक्येन विहिते वाक्यान्तरानर्थक्यमाशङ्क्य—**युगपदित्युक्तम्**। क्रमेण वाक्यद्वयप्रवृत्तौ पूर्वेण विहिते परानर्थक्यं स्यात्, नित्यत्वात्तु द्वयोर्युगपत्प्रवृत्तेर्नान्यतरानर्थक्यमित्याशयः। युगपत्प्रवृत्तावन्यतरानर्थक्याभावोऽपि चोत्पत्तिसंयोगाद्यथा स्यात्सत्वदर्शनं तथा भावविभागेस्यादि६-२ति षष्ठाधिकरणसूत्रावयववक्ष्यमाणेन दृष्टान्तेनोपपादितः। 'ऋद्धिकामाः सत्रमासीरन्नि'ति कमिपदस्थेन बहुवचनेन ऋद्धिकामबहुत्वोक्तेः प्रत्येकम्। ऋद्धिकामत्वावगमात्प्रत्येकमधिकारमुक्त्वाख्यातस्थेन बहुवचनेन कर्तृबहुत्वोक्तेः प्रत्येकं कर्तृत्वावगमादपि प्रत्येकमधिकार इत्युत्पत्तावनिर्ज्ञातकर्तृसंख्ये कर्मणि कर्तृबहुत्वसंयोगादित्यवयवेनोक्ते प्रत्येककर्तृत्वे कर्त्रन्तरानर्थक्यमाशङ्क्य, यथा सत्त्वस्य द्रव्यगवादेर्युगपद बहुभिर्दर्शनम्, नान्यतरानर्थक्यापादकं, तथा भावस्य कर्मणो विभागेपृथक्कर्त्रन्वयेऽपि न कर्त्रन्तरानर्थक्यमिति वक्ष्यते, युगपत्प्रवृत्तिमात्रेणानर्थक्यपरिहारः कथमित्यपेक्षायामाह—**न चेति**। हेतौ चशब्दः। ननु विहितमेवेत्यादिभ्याष्येणानर्थक्यमाशङ्क्याभ्युपगमेनोत्तरं दत्तम्। तदुपपादयति—**काममिति**। प्रत्यभिज्ञानमानावृत्त्यार्थान्तरत्वं वाच्यम्। तदा च शब्दार्थयोरनित्यत्वापत्तिरित्याशयः। तस्मादिति फलतः सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। वाक्यद्वयेनैककर्मविध्युक्त्यानथाभ्युपगमयोरभ्यासाधिकरणविरोधमाशङ्क्याह—**सर्वं त्विति**। आनर्थक्यापत्तेरेव वाक्यद्वयेनैकधर्मविधेर्निराकार्यत्वान्न पृथगुक्तिः ॥२८॥

भा० प्र०—इस प्रसङ्ग में एकदेशी सिद्धान्ती का कहना है कि इस स्थल में कर्म का अभ्यास नहीं हो सकता है क्योंकि, अभ्यास का बोधक कोई भी शब्द नहीं है, यहाँ पूर्व में विहित कर्म का ही उल्लेख होने से उसके द्वारा कर्मान्तरता का प्रतिपादन नहीं है,

यदि ऐसा होता तो दशबार 'ग' शब्द का उच्चारण करने पर दश गकार परस्पर में पृथक् वर्ण हो जायेंगे। किन्तु ऐसा नहीं होता है, इस स्थल में भी कर्मभेद नहीं होगा। वरन् इन दो वचनों से विकल्प रूप में एक ही कर्म का विधान किया गया है। अर्थात् एक बार प्रथम विधायक, द्वितीय वचन अनुवाद, दूसरी बार द्वितीय विधायक और प्रथम अनुवाद होगा अथवा दो वचन एक साथ एक कर्म के प्रतिपादन में प्रवृत्त नहीं होता है। इसलिए, इसका कोई विशेषत्व ज्ञात न होने से इसका पूर्व और पश्चात् का भाव अवगत नहीं होने से कोई भी पुनरुक्त नहीं होता है।

"अविभागात्" = अभेद प्रतीति होने से, "तु" = पूर्वपक्ष की व्यावृत्ति का सूचक है, "कर्मणः द्विरुक्तेः" = क्योंकि एक ही कर्म की दो बार कथन होने से "न विधीयते" = द्वारा अन्य कर्म का विधान नहीं होता है ॥ २८ ॥

## अन्यार्था वा पुनःश्रुतिः ॥ २९ ॥ सि०

**शा० भा०—अथवा नानर्थिका पुनःश्रुति। अर्थवादार्था[1] भविष्यतीति। उच्यते। किमर्थवादेन प्रयोजनम्, यदा पूर्वेणैव वाक्येन सार्थवादकेन विहित आग्नेयः कमन्यमर्थं विधातुं स्तुतिः प्रयुज्येत। स्तुतिमात्रं[2] यन्न कस्यचिद्विधानार्थम्, तदनर्थकमित्युक्तम्, आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामि१-२-१ति। स्तुतश्चास्तुतश्च[3] तावानेव सोऽर्थः। यथा स्तुता वाऽस्तुता[4] वा देवता अङ्गभावं साधयति, एवमेतदिति।**

**तदुच्यते—अन्यार्था वा पुनःश्रुति। नाऽऽग्नेयं विधातुम्। ऐन्द्राग्नविधानार्था। आग्नेयोऽष्टाकपालोऽमावास्यायां भवत्येव। न केवलेनाग्निना स साधुर्भवति, किन्त्विन्द्रसहितोऽग्निः समीचीनतरः[5]। तस्मादैन्द्राग्नः कर्तव्य इति ॥२९॥ सिद्धान्तः।**

**इति चतुर्दशमाग्नेयद्विरुक्तेः स्तुत्यर्थताधिकरणम् ॥ १४ ॥**

**इति श्रीशबरस्वामिनः कृतौ धर्ममीमांसाभाष्ये द्वितीयस्याध्यायस्य तृतीयः पादः ॥**

---

त० वा०—सर्वथा पुनःश्रुतिप्रयोजनेष्वत्रान्विष्यमाणेषु गुणस्याश्रवणात्, परिसंख्यायाश्च त्रिदोषत्वादर्थवादार्थत्वेऽभ्युपगते, कस्यार्थवाद इति विविच्याऽसंकीर्तनान्नूनमाग्नेयस्यैवेति मत्वा वदति—**सार्थवादकेन** विहिते किं प्रदेशान्तरस्थेनैक-

---

१. ब. अर्थवादो। २. क. श्रुतिमात्रं। ३. क. श्रुतश्चाश्रुतश्च।
४. क. श्रुताअश्रुताच। ५. क. समीचीनः।

वाक्यतामनागच्छताऽर्थवादेनेति । विधिशेषत्वं ह्यर्थवादानामवस्थितम् । परिचोदना तु पूर्वपक्षाभिप्रायेण कृता । तत्र **यथा स्तुता वा, अस्तुता वा सैव देवतेत्य**विवरणान्न विज्ञायते किं विषयमिति ।

तत्त्वे[1]तदतिक्रान्तालोचनेन महेन्द्राधिकरणे 'गुणश्चानर्थकः स्यात्' इत्यत्र सूत्रेऽभिहितं परामृष्टमिति दृश्यते । यथैव हि महत्त्वं देवतानन्तर्गतमिति पक्षे, केवलस्यैवेन्द्रस्य साधनत्वाद्विध्युद्देशेऽर्थवादेऽवस्थितमनर्थकं प्राप्नोति । यथैवेदं स्वतन्त्रस्तुतिमात्रमिति मन्यते ।

तत्रोच्यते—

प्रशस्तशब्दैरवधारितेन वाक्यान्तरात्केवलदैवतेन[2] ।
कर्तुं सहेन्द्रेण पुनः प्रशंसां पुनःश्रुतिः सम्यगिहाऽऽश्रितेयम् ॥ २९ ॥

**इति–आग्नेयपुनःश्रुतेः स्तुत्यर्थताधिकरणम् ॥ १४ ॥**

इति श्रीभट्टकुमारिलविरचिते धर्ममीमांसाभाष्यव्याख्याने
तन्त्रवार्तिके द्वितीयाध्यायस्य तृतीयः पादः ॥

———

न्या० सु०——अन्यशब्दस्यार्थवदाशयत्वोक्त्यर्थभाष्योपपादनपूर्वमुच्यतइत्यशङ्काभाष्यम् आग्नेयविधिशेषत्वस्यानुक्तत्वादयुक्तमाशङ्क्योपपादनपूर्वं व्याचष्टे—**सर्वथेति** । वाशब्दव्याख्यानार्थं वेतिभाष्यव्याख्यार्थः । सर्वथाशब्दः स्वरसेनाग्नेयविधिशेषत्वप्रतीतेर्भ्रम इत्याशयः । नन्वर्थवादत्वमात्रोक्त्या प्रयोजनवत्त्वसिद्धेरर्थवादकैमर्थ्याविशेषोक्त्यर्था परिचोदना न युक्तेत्याशङ्क्याह—**परिचोदना त्विति** । नार्थवादकैमर्थ्यविशेषोक्त्यर्थेयं परिचोदना, किं त्वर्थवादार्थत्वस्याप्ययोगात्कर्मान्तरविध्यर्थतैवाऽभ्युपगन्तव्येत्यापादनार्थेत्यर्थः । स्वतन्त्रस्तुत्यानर्थक्ये दृष्टान्तोक्त्यर्थं यथेति भाष्यमज्ञायमानविषयत्वेनाक्षिपति—**तत्रेति** । विषयोक्त्या समाधत्ते—**तत्त्वेति** । अर्थवादेस्तुत्यर्थत्वेन स्थितं सदनर्थकमित्युक्ते अर्थवादत्वेनैवार्थवत्त्वं भविष्यतीत्याशङ्क्य—**विध्युद्देशइत्युक्तम्** । समासे विध्युद्देशेऽर्थवादान्वयोपपत्तेर्विध्युद्देशमध्येऽर्थवादोऽनर्थक इत्याशयः ।

ऐन्द्राग्न एकादशकपालोऽमावास्यायां भवतीति ऐन्द्राग्नस्तुत्यर्थाऽऽग्नेयपुनः श्रुतिरित्येवं सूत्रेण परिहारोक्त्यर्थं तदुच्यतइति भाष्यं व्याचष्टे—**तत्रेति** । येयमिह सिद्धान्ते प्रशंसां कर्तुं पुनःश्रुतिराश्रिता, सा सम्यगिति, क्रियाविशेषणत्वान्नपुंसकलिङ्गेन सम्यक्शब्देनोक्ते, कथमित्युपेक्षिते—**सहेत्युक्तम्** । पुनःशब्दस्याऽऽग्नेयपरामर्शार्थत्वादिन्द्रसहितेनाग्निनाग्नेयस्येति प्रतीतेरैन्द्राग्नस्येत्यर्थः । यदाग्नेय इति वाक्यान्तरेणाऽऽग्नेयस्य केवलदेवतात्वावधारणा-

१. क० तत्वेत । २. क० देवतेन ।

त्कथन्तेनैन्द्राग्नप्रशंसेत्यपेक्षायाम्—**प्रशस्तेस्युक्तम्**। प्राशस्त्यवाचिभिरङ्गिरसो वा इति उत्तमः स्वर्गं लोकमायन्नित्याद्यर्थवादशब्दैः सहितवाक्यान्तरावधारितत्वेनाग्नेयस्य प्रशस्तत्वावगमादाग्नेय एव तावदग्निदेवत्यत्वात्प्रशस्तः। ऐन्द्राग्नस्त्विन्द्रसहिताग्निदेवत्यत्वात्ततः अपि प्रशस्त इत्याग्नेयोक्तेरैन्द्राग्नप्रशंसार्थतोपपन्नेत्याशयः ॥२९॥

इति चतुर्दशमाग्नेयपुनःश्रुतेस्स्तुत्यर्थताधिकरणम् ॥

**इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरकृतायां तन्त्रवार्त्तिकटीकायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां द्वितीयाध्यायस्य तृतीयः पादः।**

---

भा० प्र०—इस पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि यहां अन्य प्रयोजन के लिए एक ही कर्म का पुनः उल्लेख किया गया है। इस स्थल में अभेद प्रत्यभिज्ञा से कर्म का एकत्व सिद्ध होता है, अतः, द्वितीय वाक्य को अनुवाद कहा जाता है। यह अनुवाद विधेय जो "ऐन्द्राग्न" याग है उसका प्रशंसार्थक है। आग्नेय याग कर ऐन्द्राग्न याग को नहीं कर सकता है, अतः, "आग्नेयोऽष्टाकपालः अमावस्यायां भवति" इसके द्वारा कहा गया है कि केवल अग्नि के द्वारा याग समीचीन नहीं होता है, अपितु इन्द्र एवम् अग्नि इन दोनों के द्वारा ही सुन्दर होता है। अभेद प्रत्यभिज्ञा होने से प्रयाजादि के साथ इसकी तुलना नहीं होती है, अतः उसके अनुसार कर्मान्तर भी नहीं हो सकता है।

"वा" = पूर्वपक्ष के निवारण के लिए है, 'पुनःश्रुतिः' = पुनः उल्लेख, 'अन्यार्थी' = अन्य प्रयोजन के लिए है ॥ २९ ॥

**यह चौदहवाँ आग्नेय की पुनःश्रुति की श्रुत्यर्थता अधिकरण है।**

**॥ मीमांसादर्शन के तन्त्रवार्तिक के द्वितीय अध्याय का तृतीयपाद सम्पूर्ण हुआ ॥**

---

# अथ द्वितीयाध्यायस्य चतुर्थः पादः ।

## अथ प्रथमं यावज्जीवाधिकरणम् ।

### [१] यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥१॥ पू०

शा० भा०—बह्वृचब्राह्मणे श्रूयते—'यावज्जीवमग्निहोत्रं जुहोति' इति । 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति च । अत्र[1] संदेहः—किं कर्मधर्मोऽभ्यासो यावज्जीविकता, उत कर्तृधर्मो नियमश्चोद्यते यावज्जीविकतेति । कथं कर्मधर्मोऽभ्यासः ? कथं वा कर्तृधर्मो नियम इति ? यदि जुहोतिरनुवादः, यावज्जीवमिति विधिः ततः कर्मधर्मोऽभ्यासः । यदि विपरीतम्, ततः कर्तृधर्मो नियम इति । किं तावत्प्राप्तम्[2] ।

कर्मधर्मोऽभ्यासः । कुतः ? प्रकरणात् । यदीयं वचनव्यक्तिः, [3]जुहोतियजतिशब्दावनुवादौ, यावज्जीवमिति च विधिः ततः प्रकरणमनुगृह्यते । तस्मादभ्यासः । [4]एवं कृत्वा सत्रसंस्तवो युक्तो भविष्यति । जरामर्यं वा एतत्सत्रं यदग्निहोत्रं, दर्शपूर्णमासौ च इति दीर्घकालसामान्यात् । तस्मादभ्यासः ॥ १ ॥ क० पूर्वपक्षः ॥

त० वा–बह्वृचब्राह्मणे, अध्वर्युब्राह्मणे वा श्रूयत इति नातीवाभिनिवेष्टव्यम् ।

#### भाष्योक्तविचारस्यासंगत्ये केषाञ्चित् समाधानम्, तन्निरासश्च

ननु कर्तृधर्मः कर्मधर्म इति शेषलक्षणविषयत्वादिह न संबध्यते । केचिदाहुः । पर्यवसिते लक्षणार्थे तदीयोऽपि विचारः प्रत्यासत्तेः क्रियमाणो न विरुध्यत इति । तत्त्वयुक्तम् । शाखान्तरे कर्मभेदविचारस्याद्याप्यपर्यवसानात् । अत एवं संबन्धनीयम् । यथैव भेदकारणानि कर्मस्वरूपभेदे व्याप्रियन्ते, तथैव प्रयोगभेदेऽपि । तदिह यावज्जीवगुणसंयुक्तानामग्निहोत्रादीनां किं प्रयोगा भिद्यन्त, उतैक एवायं प्रयोगः काम्यः, स एव यावज्जीवकालपरिमित इति । तत्र यदि यावज्जीवकालः कर्मधर्मत्वेन विधीयते, ततः सायंप्रातर्वाक्यवशेन तत्कालसमापनमग्निहोत्रं न शक्नोति तावन्तं कालं पूरयितुमिति, अत्यर्थाज्ज्योतिष्टोमवदभ्यस्तरूपमेव प्रयोगं प्रतिपत्स्यते । यदि पुनर्जीवनं निमित्तत्वेनोद्दिश्य कर्म विधीयते, ततो यावत्कर्तृभाविनि नियते निमित्ते विना कामसंबन्धेन चोद्यमानमकरणे दोषप्रसक्तेरवश्यं पुरुषेण जीवता

---

१. ब. तत्र ।  २. ब. किं प्राप्तम् ।

३. ब. यजतिशब्दोऽनुवादो ।  ४. ब. एवं च ।

व्यपवर्गसिद्धान्तोक्तेरपि पौनरुक्त्यमाशङ्क्य पूर्वसूत्रस्थभाष्यालोचनया विकृतिविषयतोक्ता प्रकृतिन्यायेनैव विकृतीनामपि व्यपवर्गसिद्धान्तत्वोपपत्तिसिद्धेर्मन्दफलत्वेनापरितोषात्स्वयमन्यथासूत्रं व्याचष्टे—**अथ वेति**। उपसंहारार्थत्वे सूत्रस्यानतिरिक्तार्थत्वात्फलगुत्वापत्तेरत्राप्यरितोषान्नियमपक्षे कालवाचियावज्जीवशब्दानुपपत्तिमाशङ्क्य, नियमवाचितया यावज्जीवशब्दव्याख्यार्थत्वेन व्याचष्टे—**अथ वेति**। उक्तेन न्यायेन कर्तृधर्मनियमे सिद्धे इति कालशास्त्रतयाभासमानमपि यावज्जीवपदं वस्तुतो निमित्तशास्त्रमेव स्यादित्यर्थः।

श्रुतिसंयोगोक्त्यैव कालवाचित्वनिरासेन निमित्तवाचित्वसिद्धेरत्राप्यपरितोषात् स्वमतेन निरूढपश्वादिषु नैयमिकत्वोक्त्यर्थत्वेन व्याचष्टे—**अथ वेति**। षट्सु षट्सु मासेषु पशुना यजेत, चतुर्षु मासेषु चातुर्मास्यैर्यजेतेत्यादिशब्देनोक्तम्। कालशास्त्रत्वेनाभासमानस्य वीप्सायोगमात्रेण कथं निमित्तशास्त्रताऽवसीयतइत्याशङ्क्याह—**न तावदिति**। काम्यस्य वा ज्योतिष्टोमप्रयोगस्य वसन्तकाल उपदिश्येत 'एष वा अनृणोयः पुत्री यज्वा ब्रह्मचर्यवासीत्य'नृणवाक्याद्वावगतस्य नैयमिकस्य तत्र काम्यस्य तावद्यावदिच्छयावृत्तौ कालस्याप्यङ्गत्वेन हेतुना वीप्सां विनापि प्रतिप्रधानावृत्तिन्यायादावर्त्यमानतया स्थितत्वाद्वीप्सानर्थक्यापत्ते'र्वसन्ते वसन्त'इत्येवं वीप्सायुक्तत्वेन कालो न शक्यो वक्तुं, नैयमिकस्य च ज्योतिष्टोमप्रयोगस्योपदिश्यते ततश्चौलोपनयनादिवत् सकृत्प्रयोगमात्रेण नैयमिकविध्यर्थसिद्धेर्निष्फलावृत्त्ययोगात्तद्वाचिका वीप्सानर्थिका स्यात् इत्यर्थः।

ननु नैयमिकस्यापि प्रयोगस्य कालोपदेशे द्वित्रादिषु वसन्तेषु प्रयोगविध्यर्था वीप्सा भविष्यतीत्याशङ्क्यानवस्थितशास्त्रार्थापत्त्या निरस्यति—**न चेति**। अतः सर्ववसन्तव्याप्त्यर्थत्वाद्वीप्साया, निमित्तत्वं च विना व्याप्तेरप्राप्तत्वनानुवादायोगादेकस्मिंश्च प्रयोगे अनेकवसन्तसाहित्यसम्पादनाशक्तेर्विध्ययोगान्निमित्तशास्त्रतावसीयतइत्याह — **तस्मादिति**। नन्वधिकरणवाचिन्या सप्तम्या कालस्याङ्गत्वावगतेर्निमित्तता न युक्तेत्याशङ्क्याह—**सप्तम्यपि चेति**। अत्रार्थे सूत्रं योजयति—**तेनेति**। ज्योतिष्टोमन्यायं पश्वादिष्वतिदिशति—**एतेनेति**॥ ७॥

इति प्रथमं यावज्जीवाधिकरणम्।

भा० प्र०—इस सूत्र में पूर्वोक्त विषय का उपसंहार किया गया हैं। यावत् जीवन काल कर्ता का ही विषय होने से वही अग्निहोत्र का निमित्त होता है। अग्निहोत्र का उसके निमित्त होने से जब तक जीवन रहेगा, तब तक अग्निहोत्र का अनुष्ठान करना होगा। क्योंकि, "सति निमित्ते नैमित्तिकस्य त्यागायोगात्"—निमित्त के रहने पर नैमित्तिक कार्य का अर्थात् निमित्त के रहने से जो करणीय है, उसका परित्याग नहीं किया जा सकता है, फलतः, वह नित्य कर्म ही होगा, क्योंकि, नित्य कर्म जिस तरह यावत् जीवन कर्तव्य होता है, वैसे ही सम्पूर्ण जीवन में अनुष्ठेय होगा।

"तु" = अतएव, "कर्त्तुः धर्मनियमात्" = कर्ता के अर्थात् अनुष्ठान करने वाले पुरुष के धर्म का नियम कहे जाने से, "कालशास्त्रं निमित्तं स्यात्" = कालबोधक शास्त्र निमित्त होगा ॥ ७ ॥

॥ यह प्रथम यावज्जीव अधिकरण है ॥

### अथ द्वितीयं शाखान्तराधिकरणम्

## [२] नामरूपधर्मविशेषपुनरु[१]क्तिनिन्दा[२]ऽशक्तिसमाप्ति-वचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदः स्यात् ॥ ८ ॥ पू०

शा० भा०—इह शाखान्तराण्युदाहरणं—काठकं, कालापकं, पैप्पलादक-मित्येवमादीनि । तत्र संदेहः—किमेकस्यां शाखायां यत्कर्माऽग्निहोत्रादि श्रूयते, तच्छाखान्तरे पुनः श्रूयमाणं भिद्येत । तस्मात्, उत न भिद्येत । भिद्येतेति पश्यामः । कुतः ? नामभेदात् । एकं[३] काठकं नाम, अन्यत्कालापकं नाम । एवं[४] नामभेदाद्भेदः । ननु ग्रन्थनामैतत्[५] । सत्यम् । कर्मणामपीति ब्रूमः । कर्म-भिरप्येवमादीनां सामानाधिकरण्यमेकविभक्तित्वं चेति ।

रूपभेदाच्च । एकस्यां शाखायामग्नीषोमीयमेकादशकपालमामनन्ति, एकस्यां द्वादशकपालम् । एवं भिन्नरूपं कथमिव न कर्मान्तरं भविष्यति ।

धर्मविशेषाच्च । कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाच-रन्ति, अपरे शाखिनो नाऽऽचरन्ति । तथा, अग्निमधीयानाः केचिदुपाध्यायस्योद-कुम्भानाहरन्ति, अपरे न । अश्वमेधमधीयानाः केचिदश्वस्य घासमाहरन्ति, अपरे न । परेऽन्यं धर्ममाचरन्ति । अश्वघासादेरेकेषामुपकारमाकाङ्क्षत्यश्व-मेधादिः, एकेषां नाऽऽकाङ्क्षति । स एवैकः[६] कथं नाऽऽकाङ्क्षेत, कथं वाऽन्यदा-काङ्क्षितुमर्हति । अतो[७] गम्यतेऽन्यदिति ।

पुनरुक्तिप्रसङ्गाच्च । यदि सर्वशाखाप्रत्ययमेकं कर्म, एकस्यां शाखायां विहितस्य कर्मणः शाखान्तरे वचनं पुनरुक्तमनर्थकं स्यात् । न तु भेदपक्ष एष[८] दोषोऽस्ति । तस्मादपि । कर्मभेदः ।

निन्दावचनाच्च ।

प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् ।
दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम् ॥

---

१. ब. पुनरुक्त । २. ब. निन्दाऽशक्ति । ३. ब. एवं ।
४. ब. अतो । ५. ब. शाखांतराणांनामेदं । ६. ब. चैकः ।
७. ब. अतोऽवश्यं । ८. ब. एवंदोषोप्यस्ति ।

इति केचिच्छाखिनोऽनुदितहोमं निन्दन्ति। अपरे पुनरुदितहोमं निन्दति। 'यथाऽतिथये प्रद्रुतायान्नमाहरेयुस्तादृक् तद्, यद्युदिते जुह्वति', इति। सर्वशाखाप्रत्यये विरुद्धं, न तु कर्मभेदे। तस्मादपि भेद इति।

अशक्तेश्च। न शक्नुयुः खल्वपि सर्वशाखाप्रत्ययमुपसंहर्तुम्। तत्रानारभ्योऽर्थो विधीयत इति प्रतिज्ञातं भवेत्। शक्यं तु कर्मभेदे। अतः कर्मभेद इति।

समाप्तिवचनाच्च। असमाप्तेऽपि समाप्तेर्वचनं भवति। केचिदाहुः, अत्रास्माकमग्निः परिसमाप्यत[1] इति। अपरेऽन्यपरिसमाप्तिं व्यपदिशन्ति। तदेककर्मत्वे नोपपद्यते। न हि तदेव तत्र परिसमाप्येत, अन्यत्र न। भेदे तु युक्तम्। तस्माद्भेद इति।

प्रायश्चित्तविधानाच्च। केचिदनुदितहोमव्यतिक्रमे प्रायश्चित्तमामनन्ति, केचिदुदितहोमव्यतिक्रमे, व्यृद्धे च प्रायश्चित्तम्। न च कर्मैकत्व उभयथा व्यृद्धिः सम्भवति। कर्मभेदे तु यदनुदिते होमकर्म, तदुदिते व्यृद्धमितरदप्यनुदिते। तस्मादपि भेदः।

अन्यार्थदर्शनाच्च। इदं श्रूयते—यदि पुरा दिदीक्षाणाः स्युर्यदि वैषां गृहपतिः। गृहपतेर्वाऽनुसत्रिण इति, त एनमेव बृहत्सामानं क्रतुमुपेयुः, उपेतं ह्येषां रथन्तरम्। अथ यद्यदिदीक्षाणा इतीष्टवतामनिष्टपूर्वाणां च द्वादशाहे दर्शनमुपपद्यते यदि कर्मभेदः। एककर्मत्वे नावकल्पते।

कथम्? ताण्ड्यके श्रूयते 'एष वाव प्रथमो यज्ञो यज्ञानां, यज्ज्योतिष्टोमो। य एतेनानिष्ट्वाऽथान्येन यजेत, गर्तपत्यमेव तज्जायेत, प्र वा मीयते', इति। तत्सर्वत्र स्यात्। तत्रादिदीक्षाणां द्वादशाहे दर्शनं नोपपद्यते। तस्मादपि कर्मभेदः। अथापरं लिङ्गदर्शनम्। यत्पक्षसंमितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात् कनीयसीं प्रजां[2] कनीयसः पशून्, कनीयोऽन्नाद्यं पापीयान् स्यात्। अथ यदि वेदिसंमित्या[3] मिनोतीति पक्षसंमाने प्रतिषिद्धे वेदिसंमानस्य दर्शनं भवति। तत्तु[4] कर्मभेद उपपद्यते। पाक्षिकस्य वेदिसंमानस्य दर्शनमेककर्मत्वे नोपपद्यते। कथम्? एके हि समामनन्ति। 'रथाक्षमात्राणि यूपान्तरालानि भवन्ति' इति। तत्सर्वत्र स्यात्। तत्र च[5] नो पक्षसंमानं नो वेदिसंमानं स्यात्। वेदिसंमानदर्शनं नोपपद्यते। तस्मादपि कर्मभेदः। अपरं च लिङ्गदर्शनम्। केषाञ्चिज्ज्योतिष्टोमे श्रूयते। द्वे संस्तुतानां विराजमतिरिच्येते इति। परेषां तिस्रः संस्तुतानां विराजमतिरिच्यन्ते इति। एककर्मत्वे विरोधः। नानाकर्मत्वे कस्मिंश्चिज्ज्योतिष्टोमे द्वे, कस्मिंश्चित्तिस्रः। तस्मात्कर्मभेद[6] इति।

---

१. ब. परिसमाप्तः। २. ब. प्रजां। ३ ब. अथ वेदिसंमितां।
४. ब. तच्च। ५. ब. तत्रचेदक्षसम्मानं न। ६. ब. तस्मादपि।

अपि च सारस्वते श्रूयते । 'ये पुरोडाशिनः अत उपवसन्ति । ये सांनायिनः ते वत्सान्वारयन्ति[1] । सांनायिन-इष्टप्रथमयज्ञाः पुरोडाशिनो विपरीताः । उभयेषां सारस्वते दर्शनमवकल्पते कर्मभेदे । एककर्मत्वे सर्वेषां ज्योतिष्टोमपूर्वत्वं स्यात् । तत्र दर्शनं नोपपद्यते ।

अपि च श्रूयते । 'उपहव्योऽनिरुक्तोऽग्निष्टोमो यज्ञः, रथन्तरसामा, अश्वः श्यावो दक्षिणा । परेषां श्रूयते । उपहव्योऽनिरुक्त उक्थ्यो यज्ञो बृहत्सामा, अश्वः श्वेतो रुक्मललाटो दक्षिणा इति । कर्मैकत्वे रथंतरवचनं बृहद्वचनं चानर्थकम् । शाखाद्वयप्रत्ययत्वात् । बृहत्सामा, रथन्तरसामा वा स्यात् । स चायं प्रकृतित एवंलक्षणकः प्राप्तः । नानाकर्मत्वे त्वन्यो बृहत्सामा, अन्यो रथन्तरसामेति युक्तं भवति । तस्माच्छाखान्तरे कर्मभेदो भवितुमर्हति ॥८॥ पूर्वपक्षः ॥

त० वा०—उक्तभेदकारणषट्कव्यतिरिक्तकारणनिराकरणार्थमिदमारभ्यते । तत्रैव कानिचित्केचनचित्प्रकारान्तरेणाऽऽशङ्क्य प्रतिसिध्यन्ते । तत्तु प्रत्युदाहरणं प्रविविञ्चन्तो[2] योजयिष्यामः ।

**अत्र शंका तत्र केषाञ्चित् समाधानम्, तन्निरासेन स्वमतञ्च**

कथं पुनरत्र वेदान्तराणि नोदाह्रियन्ते । केचिदाहुः । शाखान्तरशब्देन तान्यप्युदाहृतानीति । न त्वेतद्युक्तम् । कुतः ?

शाखान्तरे यथा कर्म कृत्स्नरूपं प्रतीयते ।
किञ्चिद्गुणसमाम्नानान्नैवं वेदान्तरेषु तत् ॥

अत्र हि कर्म निराकाङ्क्षमाम्नायते, तत्र तत्भेदप्रतिपत्तिक्षमं भवति । यथा सर्वास्वध्वर्युशाखासु दर्शपूर्णमासज्योतिष्टोमादीनि समस्तद्रव्यदेवतादियुक्तत्वादन्योन्यनिरपेक्षाणि विधीयन्त इति, भेदाशङ्कां सहन्ते । न त्वेवं वेदान्तरेऽपि । तत्र हि द्रव्यदेवतारहितं कर्ममात्रं प्रस्तुत्य, स्तोत्रशस्त्रयाज्यानुवाक्यादिमात्रं विधीयते । न च तावताऽस्य नैराकाङ्क्ष्यं भवति । दृष्टार्थानामेव द्रव्यदेवतातत्संस्काराणामभावात् । यत्तु तत्र द्रव्यदेवतायुक्तमाम्नायते, तस्याऽऽध्वर्यवे गुणमात्रविधानात्साकाङ्क्षत्वम् । तथा च वक्ष्यति 'भूयस्त्वेनोभयश्रुति' इति । तस्माच्छाखान्तराण्येवोदहरणम् । तत्र च नामभेदास्तावत्कारणं दृश्यते । तद्यथा—काठकेऽग्निहोत्रं तैत्तिरीयेऽग्निहोत्र इदं पठ्यते' इत्यादि । तथा रूपभेद एकादशकपालत्वादि । वैश्वानरद्वादशाष्टत्वादिवदामिक्षावाजिनवच्च न द्वादशत्वैकादशत्वयोरितरेतरसंक्रान्तिरुपपद्यत इति गुण एव भेत्ता । कारीर्यग्न्यश्वमेधेष्वपि भूमिभोजनोदकुम्भाश्वघासा गुणा एव सन्त इतिकर्तव्यतास्थानीयत्वेन बाह्येतरत्वा-

---

१. ब. धारयन्ति ।        २. क० प्रतिषेधयन्तः ।

त्पूर्वस्माद्भेदेनोपात्ताः। '**परेऽन्यं धर्ममाचरन्तीति** विरोधिगुणान्तरप्रदर्शनार्थम्। **अश्वघासादेरिति**—पञ्चम्यन्तं मध्ये पठितमुभाभ्यां सह सम्बध्यते। पूर्वेण तावदश्वघासादेरन्यमुत्तरेणाप्यश्वघासदेर्निष्पन्नमुपकारमाकाङ्क्षत्यश्वमेधादिरिति। पुनरुक्तत्वेन पुनः श्रुतिर्भेदिकोक्ता।

निन्दायामप्युदितानुदितकालसंयोगभेदाद् गुण एव भेदकः। उदितहोमवादिनो ह्यनुदितहोमं निन्दन्त्यनृतवादित्वेन। 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति ह्यनुदिते सूर्येऽभिधीयमानमनृतं जायते। तस्मादुदितहोमः कर्तव्य इति। इतरे पुनराहुः, यः पूजां पूज्याय प्रथममेव गृहीत्वोत्तिष्ठते, स साधुः। यस्त्वतिक्रान्तं व्याहृत्य पूजयति, नासौ सम्यक्पूजकः। तस्मादनुदितहोम एव कर्तव्य इति। तत्रैकत्वे विप्रतिषिद्धधर्मसमवायप्रसङ्गः। नानात्वे तु न कश्चिद्विरोधः। अशक्तिद्वारेणापि गुण एवोपन्यस्तः शाखान्तरीयाणां गुणानामेककर्मण्युपसंहाराशक्तेरपूर्वसंयोगः।

समाप्तिभेदोऽपि गुण एव। निन्दया गतार्थोऽपि सन्प्रायश्चित्तभेदः पुनरुपन्यस्यते। कदाचिदत्र वैकल्पिकत्वपरिहारं ब्रूयात्—तत्त्वभ्युपेत्योच्यते। वैकल्पिकेषु ह्युभयथाऽप्यवैगुण्यं भवति। अत्र च प्रायश्चित्तविधानादुभयत्रापि वैगुण्यं दृश्यते। न च तत्कर्मैकत्वे घटते। तस्मादपि भेदः। **परिहारसूत्रवसेन पञ्चान्यार्थदर्शनान्युच्यन्ते**। यदि पुरा दीक्षितवन्तः ततो बृहत्सामानमतिरात्रमुपेयुः। पूर्वदीक्षायां रथन्तरस्य प्रयुक्तत्वात्। अथ न दीक्षितवन्तः ततो रथन्तरसामानमेवोपेयुरिति। द्वादशाहेऽनिष्टप्रथमयज्ञत्वं कर्मभेदे भवति। ताण्डकवचनेन ज्योतिष्टोमान्तरस्य प्राथम्यनियमे सति, एतच्छाखागतस्यानियमात्। एकत्वे तु सर्वशाखास्थज्योतिष्टोमप्राथम्यनियमाददीक्षितानां दर्शनं न स्यात्।

तथा यूपैकादशिन्यां पक्षवेदिसंमानयोरर्थप्राप्तयोरेकं निन्दित्वेतरपरिग्रहो वचनान्तरप्राप्त्यसत्त्वं द्योतयति। वचनान्तरे हि किमेकस्य निन्दया, किं वेतरस्य स्फुटविधाने सति स्तुत्या। तस्मान्नूनं शाखान्तरीयो रथाक्षमात्रान्तरालविधिरेषां नास्ति। ततश्च कर्मभेद इति।

द्वे स्तोत्रीये विराजं[2] दशकमतिरिच्येते इति, तिस्रोऽतिरिच्यन्त इति च ज्योतिष्टोमातिरात्रैकत्वे सति उपपन्नम्। भेदे तु यथाविधि भवतीत्यविरोधः। पुरोडाशिसांनाय्यिदर्शनं दीक्षितादीक्षितसंदर्शनेनैव गतम्। परिहारप्रकारान्तरत्वादुदाहृतम्।

---

१. क० अपरे। २. क० वैराजं।

किं च—

पृष्ठद्वयविकल्पः स्याच्छाखान्तरविधानतः ।
स च प्रकृतितः प्राप्तः कर्मैकत्वे वृथा भवेत् ॥

उपहव्यभेदे तु नियमार्थायां पुनः श्रुतावर्थवत्ता । तस्मादपि कर्मभेदः ॥ ८ ॥

**॥ अथ द्वितीयं शाखान्तराधिकरणम् ॥ २ ॥**

न्या० सु०—षड्विधस्यापि कर्मभेदस्योक्तत्वादनर्थकमेतदधिकरणमित्याशङ्क्य शाखान्तराख्यकारणान्तरनिरासार्थत्वं तावत्परमतेनाह—**उक्तेति** । प्रतियोगिज्ञानापेक्षत्वादिदं कर्म शाखान्तरीयकर्मभिन्नमिति बुद्धेः शाखान्तरान्यभेदकत्वशङ्कानुपपत्तेः कारणान्तरनिरासार्थत्वायोगेनापरितोषात् स्वमतेनोक्तषट्कमध्ये एव संज्ञागुणाभ्यासाशङ्कानिरासार्थमाह—**तत्रैव चेति** । रूपादेः षट्कबाह्यत्वात्कथं तन्मध्यताशङ्केत्याशङ्क्य केनचिदपूर्वसंयोगादिप्रकारेण षट्कान्यतमरूपत्वाशङ्कोक्ता । कथं निन्दादेः षट्कान्यतमप्रकारत्वमित्याशङ्क्याह—**तदिति** । सिद्धान्ते प्रतिषेधार्थं निन्दादेर्गुणप्रकारत्वमुदितानुदितकालसंनोगभेदादित्यत्र शाखान्तरीयाणां गुणानामित्यादौ च पूर्वपक्षवार्त्तिके योजयिष्याम इत्यर्थः ।

ननु पूर्वत्रासम्भवेन गुणस्य भेदकत्वादुदितानुदितकालस्य चोत्पत्तिशिष्टत्वाभावेनामिक्षादिवत् पूर्वसंयोगासम्भवहेतुत्वायोगाच्छाखान्तरीयस्य च कर्मणोऽनवगतत्वेनाप्रत्यभिज्ञानाच्छाखान्तरीयस्य गुणस्य शाखान्तरीये कर्मणि विध्यसम्भवेन भेदकत्वस्याशङ्कनीयत्वाच्छाखान्तरीयगुणानां चैकशाखास्थे कर्मण्युपसंहाराशक्तेः शाखान्तरीयकर्मानवगमस्यैव हेतुत्वाच्छाखान्तरीयत्वसहकृतस्यैव गुणस्य भेदकत्वेनाशङ्कनीयत्वावगतेः पुनःश्रुतेश्च सिद्धान्ते शाखान्तरीयत्वेनैवाभेदकत्वाभिधानाच्छाखान्तरीयाणां यथोदाहरणत्वम्, तथा वेदान्तरीयस्यापि कर्मणः शाखान्तरीयाध्यायिभिरनवगमाविशेषाद्वेदान्तराणामप्युदाहरणीयत्वावगतेः शाखान्तराणीति भाष्यमयुक्तमित्याशङ्कते—**कथं पुनरिति** ।

केषां चिदुपलक्षणत्वेन समर्थनं दूषयितुमुपन्यस्यति—**केचिदिति** । त्रयी विना सर्वाङ्गोपेतकर्मानवगतेर्वेदत्रयस्याप्यध्येयत्वाच्छाखान्तरीयन्यायासम्भवेन दूषयति—**न त्विति** । श्लोकं व्याचष्टे—**यत्र हीति** । औद्गात्रे वा वेदे यत्कर्म द्रव्यदेवतासंयुक्तमाम्नायते तत्र कथमित्यपेक्षायामाह—**यत्त्विति** । अनेकवेदाधीतस्य कर्मणा यत्र द्रव्यदेवाम्नानं तत्रैवोत्पत्तिः, वेदान्तरे गुणमात्रविध्यर्थश्रुतिरित्येतदेव तृतीयाधिकरणसूत्रेण द्रढयति—**तथा चेति** । तस्माद्युक्तमेव भाष्यमित्याह—**तस्मादिति** ।

नामविशेषदर्शनाद्रूपविशेषदर्शनादित्यादिप्रत्येकं दर्शनशब्दान्वयेन सूत्रव्याख्यां दृश्यतेशब्देन सूचयन्नाम्ना भेदोक्तिं व्याचष्टे—**तत्रेति** । नामरूपयोर्विशेषोक्त्यन्वयो भेदोक्त्या

सूचितः । नामभेदो यद्भेदकारणम्, तत्तावदिह दृश्यतइत्यर्थः । नन्विति भाष्येण काठकादिनाम्नोऽवध्यस्मरणेनानादित्वावधारणाद्वैशम्पायनान्तेवासिपुरुषवाचिकठशब्दप्रकृतिकत्वे चादिमत्त्वापत्तेश्चरणाख्यब्राह्मणावान्तरजातिवाचिकठशब्दप्रकृतिकत्वावगमात्तस्माच्च परतस्तेन प्रोक्तमिति विहितस्याण्प्रत्ययस्य कठशब्दपरतया विध्यभावेन कठचरकाल्लुगिति स्मृतेर्लुगभावात्स्वार्थिककप्रत्ययान्तत्वेन काठकमिति रूपावगतेर्ग्रन्थस्यैव प्रवाच्यतयैतन्नामकत्वावसायात्कर्मनामत्वायोगमाशङ्क्य सत्यमित्यनेन तस्येदमित्यस्मिन्नर्थे गोत्रचरणाद् वुञिति चरणवाचिनः कठशब्दाद् वुञ्प्रत्ययोत्पादनेन तदादेशाक्रान्तत्वात्काठकशब्दव्युत्पत्त्यवगतेस्तस्य च धर्मसमाम्नाययोरिष्यतइति स्मृत्या कठसम्बन्धिसमाम्नायविषयत्ववत्तत्सम्बन्धिधर्मविषयत्वस्याप्यवगत्यविशेषाद्विभक्त्यैक्यहेतुकसामानाधिकरण्याविशेषाच्च धर्मरूपकर्मनामताप्युपपादितेत्येवं व्याख्यातुमाह—**तद्यथेति** ।

रूपाद्भेदोक्तिं व्याचष्टे—**तथेति** । आमिक्षावाजिनदृष्टान्तेनोपपादितेन गुणत्वेन रूपभेदस्य भेत्तृत्वे कपालसंख्याया यागगुणत्वाभावादभेदकत्वमाशङ्क्य गुणस्य तु विधानार्थ इत्यत्र कपालाश्रिताया अपि संख्याया यागं प्रत्यङ्गत्वरूपगुणतोक्ता, आद्यदृष्टान्तेन स्मारिता धर्मविशेषस्यापि गुणत्वमुपपादयितुमाह—**कारीरीति** । कारीर्याद्यध्ययनकालेऽनुष्ठीयमानस्य भूमिभोजनादेः कैमर्थ्याकाङ्क्षायां फलवतः कारीर्यादिर्वाक्याध्ययनद्वारा सन्निहितस्य प्रकरणानाम्नातेतिकर्त्तव्यताग्राहित्वायोगेऽप्यध्ययनस्य दृष्टार्थतेतिकर्त्तव्यताग्राहित्वायोगान्सन्निधानाख्येन स्थानेन कारीर्यादीतिकर्त्तव्यतावगतेर्गुणत्वेऽपि कर्माङ्गभूतज्ञानद्वारत्वेन विप्रकृष्टतरत्वाद्भेदेनोपादानमित्यर्थः । साक्षादितिकर्त्तव्यतात्वनिरासार्थः स्थानीयशब्दः । अश्वघासादिग्रहणस्योदाहरणार्थत्वेन धर्मान्तरस्यापि ग्रहणसिद्धेर्विशेषानभिधानाच्चान्यधर्मोक्तेरुदाहरणान्तरार्थत्वायोगादानर्थक्यमाशङ्क्याह—**पर इति** । अश्वघासादेरिति तन्त्रेणान्ययोगनिमित्तापादानपञ्चमीत्वेन व्याचष्टे—**अश्वेति** । पुनरुक्तत्वमभ्यासत्वेन व्याचष्टे—**पुनरुक्तत्वेनेति** । निन्दाया गुणत्वं तावदुपपादयति—**निन्दायामपीति** ।

पूर्वपक्षे निन्दाया निषेधमात्रपर्यवसानाभ्युपगमान्निन्दासंयोगेनोदितानुदितकालयोर्निषेध्ययोर्गुणयोर्भेदादित्येवं योज्यम् । अनुदितहोमनिन्दां व्याचष्टे—**उदितेति** । निन्दाया निन्द्यनिषेधापेक्षत्वादुदित एवेत्यवधारणाभ्युपगमेनानुदितहोमो न कार्य इत्यस्मिन्नर्थे तस्मादिति योज्यम् । उदितहोमनिन्दां व्याचष्टे—**इतरे पुनरिति** । प्रद्रुतायान्नदानोक्तेर्निन्दात्वाभिव्यक्त्यर्थं यः पूजामित्युक्तम् । प्रद्रुतशब्दव्याख्यानार्थातिक्रान्तोक्तिः अतिक्रान्तायान्नदानाशक्तिमाशङ्क्य—**व्याहृत्यैहीत्युक्त्वेत्युक्तम्** । तस्मादित्युदितहोमो न कार्य इत्येवं योज्यम् । निन्दाया निन्द्यन्तरविधिशेषत्वात्तद्वादशैकादशकपालत्ववद्विकल्पेनाविरोधमाशङ्क्य वैकल्पिकत्वे सत्युभयथाप्यवैगुण्यान्निन्दानुपपत्तेर्विरोधपरिहारायोगोक्त्यर्थं सर्वेति भाष्यं व्याचष्टे—

**तत्रेति**। अशक्तेर्गुणत्वमुपपादयति—**अशक्तीति**। समीप्तिभेदस्याप्येकस्मिन्कर्मणि निवेशासम्भवेन भेदकत्वात् समाप्तिवचनस्यापि गुणतेत्याह—**समाप्तीति**। अस्माकं योऽग्निः, सोऽन्वारोहेषु समाप्यते, अन्येषामन्यत्रेति समाप्तभेदाः समाप्त्युक्त्या भेदकत्वेन विवक्षितभेदशब्देन सूचितम्। क्व चिच्छाखायामुदितकालातिक्रम इति प्रायश्चित्तनिमित्तम्। क्व चिदनुदितकालातिक्रम इति प्रायश्चित्तनिमित्तभेदस्यापि निन्दावन्निषेधगमकत्वेनैव भेदकत्वात्पृथगुपन्यासानर्थक्यमाशङ्क्याह—**निन्दयेति**। प्रायश्चित्तनिमित्तो भेदः प्रायश्चित्तभेद इति मध्यमपदलोपी समासः। वृद्धिशब्दव्याख्यानार्थं वैगुण्योक्तिः।

एकेनैवोदाहरणेनान्यार्थदर्शनव्याख्यासिद्धेरुदाहरणपञ्चकानर्थक्यमाशङ्क्य परिहरति—**परिहारेति**। यदीत्यन्यार्थदर्शनं व्याचष्टे—**यदीति**। इष्टवतामिति भाष्यादिष्टप्रथमयज्ञतानिष्टप्रथमयज्ञता च द्वयमपि लिङ्गमिति भ्रान्तिनिरासायानिष्टप्रथमयज्ञत्वस्यैवलिङ्गत्वमाह—**द्वादशाह इति**। ताण्डकइत्यादिभाष्यं व्याचष्टे—**ताण्डकेति**। ज्योतिष्टोमस्य प्राथम्यनियमे सति यज्ञान्तरेभ्यः पश्चात्प्रयोगे प्राथम्याभावान्नैष्फल्यापत्तेः, यज्ञान्तराणां च प्रथमप्रयोगेऽप्यवैगुण्यापत्तेरन्येन यजेतेति चान्यशब्दसमभिव्याहृतस्य यजेर्यज्ञान्तरवाचित्वात्, तत्परेण प्रत्ययेन ज्योतिष्टोमस्य प्राथम्यविधावत्यन्तश्रुतिबाधापत्तेः सोमयागान्तराणां ज्योतिष्टोमपश्चाद्भावरूपधर्मविध्यर्थत्वेनास्य वाक्यस्य वार्त्तिककृतैव पञ्चमे व्याख्यास्यमानत्वाद्यजुर्वेदोत्पन्नत्वेन च ज्योतिष्टोमस्य सामवैदिकताण्डुकशाखागतत्वाभावात् सारस्वतसूत्रे च ज्योतिष्टोमपूर्वत्वात् सर्वकर्मणामिति भाष्यदर्शनादेकस्यापि ज्योतिष्टोमस्य प्राथम्यनियमे सति पक्षद्वयेऽप्यदीक्षितदर्शनानुपपत्तिसम्भवात् तत्सिद्ध्यै लिङ्गपरिहारसूत्रे सर्वशेषत्वोक्त्यानर्थक्यापत्तेर्द्वादशाहस्य ज्योतिष्टोमपश्चाद्भावलक्षणार्थं ज्योतिष्टोमान्तरस्य प्राथम्यनियमे सति इत्युक्तिमङ्गीकृत्य प्रकृतशाखगताद् द्वादशाहादन्यताण्डकशाखागतं द्वादशाहस्य ज्योतिष्टोमपश्चाद्भावानियमात्प्रतिशाखं द्वादशाहाख्यकर्मभेदे सत्यनिष्टप्रथमयज्ञत्वं द्वादशाहकर्तृविशेषणं युक्तं भवतीति व्याख्येयम्।

ननु सामवेदे ज्योतिष्टोमोत्पत्त्यभावाद्यजुर्वेदोत्पन्नज्योतिष्टोमप्राथम्यप्रतीतेः कर्मभेदे चाविशेषात् सर्वज्योतिष्टोमप्राथम्यापत्तेरेकं च द्वादशाहादियज्ञं प्रति सर्वज्योष्टोमप्राथम्यायोगात् सर्वशाखोत्पन्नानां द्वादशाहादियज्ञानां ज्योतिष्टोमः प्रथम इत्यर्थावगतिद्वारा सर्वशाखागतानां द्वादशाहानां ज्योतिष्टोमपश्चाद्भावावगतेरुदाहृतवाक्ययुक्तशाखागतस्यापि द्वादशाहस्य ज्योतिष्टोमपश्चाद्भावनियमात्कर्मभेदेऽप्यनिष्टप्रथमयज्ञदर्शनानुपपत्तिरित्याशङ्कानिराससूचनार्थोत्तरशब्दः। यज्ञान्तरधर्मभूतपश्चाद्भावावच्छेदकत्वेन ज्योतिष्टोमस्य परार्थतयोपादानात्पारार्थ्ये चैक इष्यतइत्यनेन न्यायेनैकस्यैव ज्योतिष्टोमस्य प्राथम्यावसायानैतद्वशेन सर्वशाखास्थानां द्वादशाहानां ज्योतिष्टोमपश्चाद्भावावगतिरित्याशयः। सर्वशाखासु कर्मैक्ये तु सर्वशाखास्थं द्वादशाहं प्रति ज्योतिष्टोमप्राथम्यनियमात्तद्द्वारा सर्वशाखास्थस्य द्वादशा-

हस्य ज्योतिष्टोमपश्चाद्भावनियमावगतेरदीक्षितदर्शनं द्वादशाहे न स्यादित्याह—**एकत्वे त्विति**। ज्योतिष्टोमः प्रथमो यस्मात्स ज्योतिष्टोमप्रथमः तस्य भावो ज्योतिष्टोमप्राथम्यमिति बहुव्रीह्यभ्युपगमेन वा सर्वशाखास्थस्य द्वादशाहस्य ज्योतिष्टोमप्राथम्यनियमादित्येवं योज्यम्।

तथा चेति द्वितीयान्यार्थदर्शनभाष्यं व्याचष्टे—**तथेति**। अर्द्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदीति। वेद्यग्रे विहितस्य यूपमानस्यातिदेशेन यूपैकादेशिनीं प्राप्तस्य वेदिदेशातिक्रमायोगाद्वेदिमानस्य वेद्याधारस्य श्येनादिपक्ष्याकारस्थलावयवभूतपक्षद्वयसम्मानस्य चार्थप्राप्तत्वेनानुवादोपपत्तेः प्रत्यक्षविधिविरोधे अर्थवादकल्प्यविध्ययोगात्पक्षसम्मानं निन्दित्वा वेदिसम्मानपरिग्रहः शाखान्तरीयस्य विरोधिनो वचनान्तरस्य तच्छाखीये कर्मण्यप्राप्तिं द्योतयतीत्यर्थः। एतदेवोपपादयति—**वचनान्तरे हीति**। चतुर्विंशतिप्रक्रमवेद्यग्रदेशे रथाक्षमात्रान्तरालानाम् एकादशानाम् यूपानां मातुमशक्यत्वाद्व्यासमात्राणि पक्षपुच्छानि भवन्तीति च पक्षयोर्व्यासमात्रत्वविधानात्पक्षसम्मानपक्षो सुतरामशक्तेर्विरोध इत्याशयः। तस्मादपीत्युपसंहारभाष्यं व्याचष्टे—**ततश्चेति**।

अपरं चेति तृतीयान्यार्थदर्शनात् भाष्यं व्याचष्टे—**द्वे इति**। स्तोत्रीयावाचिसंस्तुतशब्दपरनिर्द्धारणषष्ठीयोगाद् द्वित्रिसंख्ययोः स्तोत्रियाविषयत्वोक्तिः। दशकाख्यत्वेन विराट्शब्दं व्याख्यातुं दशकशब्दः। अतिरेकोक्त्याऽतिरात्रसंस्थज्योतिष्टोमविषयत्वप्रदर्शनायाऽतिरात्रशब्दः।

अपि चेति चतुर्थान्यार्थदर्शनभाष्यं नासोमयाजी सन्नयतीत्यसोमयाजिनः सान्नाय्यनिषेधो नैन्द्राग्नस्य पुरोडाशस्य तत्स्थाने विधानादनिष्टप्रथमयज्ञानां पुरोडाशित्वेन विवक्षितानां दीक्षितादीक्षितदर्शनेनैव गतत्वादयुक्तमाशङ्क्य समाधत्ते—**पुरोडाशीति**। पञ्चमान्यार्थदर्शनभाष्यं व्याचष्टे—**किं चेति**। नानाकर्मत्वेति भाष्यं व्याचष्टे—**उपहव्येति**। तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे—**तस्मादपीति** ॥ ८ ॥

भा० प्र०—एक वेद की काठक, कालापक, पैप्पलाद, माध्यन्दिन, तैत्तिरीय आदि अनेक शाखाए हैं। उन सभी शाखाओं में प्रत्येक का अग्निहोत्र, दर्शपूर्णमास आदि यज्ञ उपदिष्ट हुए हैं। इनमें संशय हो सकता है कि शाखागत भेद होने से प्रत्येक शाखा में उपदिष्ट अग्निहोत्र आदि कर्म भिन्न हैं या अभिन्न है।

इस प्रसङ्ग में पूर्वपक्षी का कहना है कि विभिन्न शाखाओं में एक ही नाम के सभी कर्म परस्पर भिन्न ही होंगे, क्योंकि, भिन्न होने के नामभेद, रूपभेद आदि अनेक कारण विद्यमान हैं, वे क्या यथाक्रम में कहे गये हैं।

अग्निहोत्र आदि कर्मविशेष का धर्म विशेष निर्दिष्ट कर शिष्टों के सम्प्रदाय क्रम के अनुसार इसका उल्लेख करना सुना जाता है—यह काठक अग्निहोत्र कहा गया है, यह

तैत्तिरीय अग्निहोत्र कहा गया है इत्यादि। इस रूप में प्रत्येक शाखा के नाम के अनुसार वहाँ के कर्मों का स्वरूप भी काठक, कालापक आदि विभिन्न नाम कहकर नामभेद के कारण कर्म का भेद होगा।

भिन्न शाखा में एक ही कर्म का भिन्न रूप-द्रव्यादि उपदिष्ट होने से रूपभेद के कारण भी कर्म का भेद होगा। जैसे एक शाखा में अग्निषोमीय को एकादश कपाल कहकर विधि है, और अन्य शाखा में उसका द्वादश कपालत्व उपदिष्ट होता है। अतः एक ही कर्म में एकादशकपालत्व एवं द्वादशकपालत्व आदि विरूप दो धर्मों का एक साथ समावेश नहीं हो सकता है, अतः, शाखा के भेद से कर्म का भेद ही होना उचित है। विभिन्न शाखाओं के भेद से कर्म का भेद ही होना उचित है। विभिन्न शाखाओं के ग्रहण के समय विशेष आचरण अनुशीलित होने से उन शाखाओं का कर्म अन्य शाखाओं के कर्म से विभिन्न है। जैसे तैत्तिरीय शाखियों का कारीरी वाक्य अर्थात् कारीरी नामक यज्ञ विषयक वेदभाग के अध्ययन के समय भूमि में भोजन किया जाता है, किन्तु अन्य शाखाओं के उसी अंश के अध्ययन के समय अध्ययन करने वालों को वैसा नहीं करना पड़ता है। इसी प्रकार अग्निग्रन्थ अर्थात् अग्नितत्त्व प्रतिपादक वेद का अंश विशेष के अध्ययन के समय किसी-किसी शाखा वालों को गुरु के जल कलश का संग्रह करना पड़ता है, किन्तु अन्य शाखा वालों को वैसा नहीं करना पड़ता है। इसी प्रकार अश्वमेध ग्रन्थ के अध्ययन के समय कतिपय शाखा वालों को अश्व के लिए घास को लाना पड़ता है, किन्तु अन्य शाखा वालों को वैसा नहीं करना पड़ता है। इसी रूप में प्रत्येक शाखा के कारीरी आदि कर्मों के धर्मगत और आचारगत वैशिष्टय हैं। अतः शाखा के भेद से कर्म का भेद होता है।

यदि यह कहा जाय कि इस प्रकार शाखा का भेद होने पर भी कर्मों का भेद किस प्रकार सिद्ध होता है? शाखा के भेद में जो यह धर्म विशेष है—वह परित्याज्य नहीं है, कारण, बाद में कारीरी, अश्वमेध आदि कर्मों का अनुष्ठान करने में वे सभी धर्म विशेषों के नियामक उन शाखाओं के व्यक्ति इस प्रकार के नियमों का पालन करते हुए वेद का अध्ययन करते हैं तभी बाद में वे उन यज्ञों का अनुष्ठान कर सकते हैं और तभी वे अनुष्ठान पूर्ण होंगे, अन्यथा नहीं। अन्य शाखाओं के व्यक्ति अपने से भिन्न शाखाओं के नियमों का आचरण नहीं करेंगे क्योंकि, उनके लिए यह नियम ही नहीं है। अतः शाखा के भेद से कर्म का भेद न मानने पर किसी शाखा वाले का कर्म धर्म विशेष सापेक्ष और किसी का नहीं यह सङ्गत नहीं हो सकेगा।

दूसरा कारण यह है कि पुनरुक्ति के भय से भी शाखा के भेद से कर्म का भेद मानना उचित है। क्योंकि, यदि एक ही कर्म विभिन्न शाखाओं में उपदिष्ट होगा तो एक को ही

विधि अन्य सभी को अनुवाद मानना पड़ेगा । ऐसी स्थिति में किस शाखा का वाक्य विधि है और किस शाखा का वाक्य अनुवाद है—यह भी निश्चित नहीं हो सकता है अर्थात् अनिश्चित ही रह जायगा । एक वाक्य को विधायक मानने से ही जब इष्ट की सिद्धि हो जाती है, तब अन्य शाखाओं में अन्य वाक्यों को पुनरुक्ति मात्र मानना होगा । इस प्रकार दोष के परिहार के लिए शाखा-भेद से कर्म का भेद मानना ही उचित है, ऐसा न मानने पर वेद वाक्यों की अनर्थकता होने लगेगी ।

निन्दावचन के आधार पर भी शाखा के भेद से कर्मों का भेद मानना उचित है, क्योंकि, किसी शाखा में अनूदित होम की अर्थात् सूर्योदय से पूर्व में किये गये अग्निहोत्र की निन्दा की गई और किसी शाखा में सूर्य के उदय के बाद किये गये होम की निन्दा की गई है । यदि विभिन्न शाखाओं के अग्निहोत्र को अभिन्न माना जायगा तो एक ही कर्म की एक शाखा में प्रशंसा एवम् अन्य शाखा में निन्दा नहीं मानी जा सकती है । अतः, निन्दावचन के कारण भी शाखाभेद से कर्मभेद मानना होगा ।

अशक्ति अर्थात् अनुष्ठान सम्पादन की असमर्थता होती है, अतः, शाखा-भेद से कर्म का भेद होता है । क्योंकि सभी शाखाओं का अध्ययन कर उन शाखाओं में जो अनुष्ठान का वैशिष्ट्य कहा गया है, उन सभी का समाहार कर अनुष्ठान करना अल्प आयु वाले मनुष्य के लिए असम्भव है, अतः, पृथक् शाखा के कर्मों को भिन्न मानने पर भिन्न शाखाओं के गुणों के उपसंहार करने की आवश्यकता नहीं होती है ।

समाप्ति वचन के कारण भी शाखा के भेद से कर्मों का भेद मानना आवश्यक है । क्योंकि, कोई कहता है कि यहाँ हमारी अग्नि की समाप्ति कही गई है और अन्य व्यक्ति के लिए अन्यत्र अग्नि की समाप्ति का निर्देश किया गया है । शाखा के भेद से कर्म का भेद न मानने पर यह सङ्गत नहीं हो सकता है, क्योंकि, अभिन्न कर्म विभिन्न स्थानों में समाप्त नहीं हो सकता है, अतः, एक ही कर्म की विभिन्न स्थानों में समाप्ति के निर्देश के कारण शाखाओं के भेद से कर्मों का भेद मानना उचित है ।

प्रायश्चित्त का विधान होने के कारण भी शाखा के भेद से कर्मों का भेद मानना उचित है, क्योंकि किसी-किसी शाखा में अनूदित कर्म का व्यतिक्रम होने पर प्रायश्चित्त का विधान किया गया है और किसी शाखा में उदित होम के व्यतिक्रम होने पर प्रायश्चित्त का विधान किया गया है, अतः, यह स्पष्ट है कि उदित होम करने पर भी और अनुदित होम करने पर भी प्रायश्चित्त करना होगा । ऐसी स्थिति में प्रायश्चित्त का भेद दो भागों में विभक्त करना होगा, कारण, किसी भी पक्ष का अवलम्बन करने पर प्रायश्चित्त से छुटकारा नहीं है । फलतः, होमविषयक श्रुति ही अप्रामाणिक हो जायगी ।

इसलिए एक ही कर्म के अनुष्ठान वैगुण्य के कारण इस प्रकार का प्रायश्चित्त का विधान उचित नहीं होने से शाखा के भेद से कर्म का भेद अवश्य ही मानना होगा।

इसी प्रकार "यदि पुरा दिदीक्षाणाः" इत्यादि वाक्य में दीक्षित एवं अदीक्षित— "ये प्रथमे सोमयाजी"=जो प्रथम सोम याग करता है एवं जो प्रथम सोमयाग नहीं करता है, इस प्रकार के दोनों व्यक्तियों को ही "द्वादशाहे" अर्थात् सत्र नामके यज्ञ विशेष में अधिकार कहा गया है। शाखा भेद से कर्म का भेद मानने पर ही यह उपपन्न हो सकता है, क्योंकि, ताण्ड्य शाखा में द्वादशाह नाम के यज्ञ के पूर्व में ज्योतिष्टोम याग की कर्तव्यता का उपदेश दिया गया है। वह ज्योतिष्टोम उसी शाखा के अध्ययन करने वाले के लिए कर्तव्य है। एक स्वतन्त्र कर्म होने अन्य शाखावालों के द्वारा वह यज्ञ न करने पर भी द्वादशाह याग का सम्पादन वह कर सकता है। क्योंकि, उसके लिए उस शाखा में विहित वह स्वतन्त्र ज्योतिष्टोमादि याग अवश्य कर्तव्य नहीं है। किन्तु शाखा के भेद होने पर भी कर्म को अभिन्न मानने पर यह सङ्गत नहीं है कि अनिष्ट प्रथम यज्ञ व्यक्ति भी द्वादशाह यज्ञ का अधिकारी है। इस प्रकार अन्यार्थ दर्शन होने से हीं शाखा-भेद से कर्म-भेद मानना आवश्यक हैं। परिहार सूत्र के अनुसार भाष्यकार ने अन्यार्थ दर्शन का पाँच उदाहरण दिया है। जिसका विश्लेषण शाबरभाष्य के अनुवाद के अनुसार प्रस्तुत किया जा रहा है।

इस सूत्र की व्याख्या आचार्य युधिष्ठिर मीमांसक ने इस प्रकार की है—

इस सूत्र में शाखान्तर (कर्म) उदाहरण है—काठक, कालापक, पैप्पलादक इत्यादि। इनमें सन्देह होता है—क्या एक शाखा में जो अग्निहोत्रादि कर्म सुना जाता है, वही शाखान्तर में पुनः श्रूयमाण उससे भिन्न होता है, अथवा भिन्न नहीं होता है? भिन्न होता है, ऐसा हम देखते हैं। किस हेतु से?

(१) नामभेद से—एक कर्म काठक है, और दूसरा कापालक। इस प्रकार नामभेद से (कर्मों में) भेद होता है। (आक्षेप) ये ( = काठक, कालापक) तो ग्रन्थों के नाम हैं (न कि कर्मों के)। (समाधान) सत्य है। कर्मों के नाम भी हैं, ऐसा हम कहते हैं। कर्मों के साथ भी इन काठक कालपक आदि का सामानाधिकरण्य और एक विभक्तित्व देखा जाता है ( = काठकमग्निहोत्रम्, कालापकमग्निहोत्रम्।)

(२) रूपभेद से भी—एक शाखा में अग्निषोम देवतावाला पुरोडाश एकादशकपाल में संस्कृत पढ़ा जाना है, दूसरी में द्वादशकपालों में संस्कृत। इस प्रकार भिन्नरूप क्यों नहीं कर्मान्तर होगा?

(३) धर्मविशेष से भी—कारीरी (इष्टि) के वाक्यों का अध्ययन करते हुए तैत्तिरीय शाखा के छात्र भूमि पर भोजन करते हैं, दूसरी शाखावाले ऐसा आचरण नहीं करते। तथा अग्नि ( = अग्निचयन) का अध्ययन करते हुए कुछ शाखावाले उपाध्याय के जल-घटों का आहरण करते हैं ( = उपाध्याय के लिए घड़ों में पानी भर के लाते हैं) दूसरे ऐसा आचरण नहीं करते। अश्वमेध का अध्ययन करते हुए कुछ लोग अश्व के घास को लाते हैं, दूसरे नहीं लाते। दूसरे लोग अन्य धर्म का आचरण करते हैं। किन्हीं का अश्वमेधादि (कर्म का अध्ययन) अश्वघास से उपकार की आकांक्षा करता है, अन्यों की आकांक्षा नहीं करता है। वह एक ही होवे, तो (अश्वघासादि की) कैसे आकांक्षा न करे?

अथवा कैसे अन्य की आकांक्षा करे? इससे जाना जाता है कि (शाखाभेद से) कर्म-भेद होता है।

**विवरण**—ग्रन्थनामैतत्। सत्यम्, कर्मणामपीति ब्रूमः—कठ से ते प्रोक्तम् (अष्टा० (४।३।१०१) प्रकरण में कलापिवैशम्पायन्तेवासिभ्यश्च (अष्टा० ४।३।१०४) से णिनि प्रत्यय होता है। कठ से णिनि का कठचरकाल्लुक् (अष्टा० ४।३।१०७) से लुक् हो जाता है। यद्यपि यह प्रत्यय प्रोक्तार्थ में होता है, प्रोक्तप्रत्ययान्त से तदधीते तद्वेद (अष्टा० ४।२।५९) से अण् होकर प्रोक्ताल्लुक् (अष्टा० ४।३।६३) से लुक् प्राप्त होता है। पुनरपि छन्दोब्राह्मणानि च तद्विषयाणि (अष्टा० ४।२।६६) नियम से प्रोक्तप्रत्ययान्त ही तद-ध्येतृवेदितृविषयक हो जाते हैं। इसलिए छन्दोब्राह्मण वाचक शब्दों से न अध्येतृवेदितृ विषयक प्रत्यय होता है, और ना ही प्रोक्ताल्लुक् (अष्टा० ४।२।६३) से लुक् होता है। इसलिए कठेन प्रोक्तमधीयते विदर्वा कठाः विग्रह होता है।

कलापिन् शब्द से कलापिनोऽण् (अष्टा० ४।३।१०८) से अण् प्रत्यय होता है—कलपिनो प्रोक्तमधीयते विदुर्वा कालापाः। इस प्रकार 'कठाः' 'कलापाः' चरणवाची शब्द उपपन्न होते हैं। तत्पश्चात् तस्येदम् (अष्टा० ४।३।१२०) प्रकरण में गोत्रचरणाद् वुञ् (अष्टा० ४।३।१२६) सूत्रस्थ चरणाद्धर्माम्नाययोः वार्तिक से धर्म और आम्नाय अर्थ में वुञ् प्रत्यय होकर काठक आम्नायः, काठको धर्मः, कापालक आम्नायः, कापालको प्रयोग उत्पन्न होते हैं। आम्नाय अर्थवाला काठक कापालक ग्रन्थवाचक होता है और धर्म अर्थवाला तदविहित कर्मों का वाचक। भाष्यकार ने शाखावाचक अर्थ को मुख्य मानकर काठकमग्निहोत्रम्, कापालकमग्निहोत्रम् में कर्म के साथ सामानाधिकरण्य दर्शाकर कर्म-वाचक स्वीकार किया है। वस्तुतः धर्म शब्द के व्यापक अर्थवाला होने से तत्तच्छाखा-विहित कर्म तत्तच्छाखाध्येताओं के लिए धर्मरूप ही है। इसी प्रकार पैप्पलादकम् में पिप्पलादेन प्रोक्तमधीयते पैप्पलादाः, तेन प्रोक्तम् (अष्टा० ४।३।१०१) से अण् और चर-णाद् धर्माम्नाययोः (वा० ४।३।१२६) नियम से वुञ् प्रत्यय होकर बनता है।

मीमांसाकौस्तुभकार खण्डदेव ने इसी प्रकरण में कठ शब्द से प्रोक्तार्थ में पूर्ववत् णिनि और उसका लुक् करके तदधीते तद्वेद (अष्टा० ४।२।५९) से पुनः अण् और प्रोक्ताल्लुक् (अष्टा० ४।२।६४) से लुक् कहा है वह अशुद्ध है। प्रोक्त प्रत्यय जहाँ केवल प्रोक्तार्थ में, और अध्येतृवेदितृ विषयक होते हैं, उनमें अर्थों का अन्तर होने से तदधीते तद्वेद प्रकरणस्थ प्रत्ययों की उत्पत्ति और अनुत्पत्ति में भी अन्तर होता है। जैसे पाणिनिना प्रोक्तम्—पाणिनीयमष्टकम् स्वतन्त्र प्रयोग, और पाणिनीयमष्टकमधीयते विदुर्वा पाणिनीयाः में अध्येतृवेदितृ विषयक प्रत्यय, और उसका प्रोक्ताल्लुक से पाणिनीयाः स्वतन्त्र प्रयोग उत्पन्न होते हैं। तद्वत् कठेन प्रोक्तम् = कठः आम्नायः, और कठमाम्नायमधीयते कठाः ऐसे स्वतन्त्र प्रयोग नहीं होते हैं। इन्हीं स्वतन्त्र प्रयोगों की निवृत्ति के लिए पाणिनि ने छन्दोब्राह्मणानि च तद्विषयाणि (अष्टा० ४।२।६६) का प्रवचन किया है। इस सूत्र की व्याख्या में काशिकाकार ने स्पष्ट लिखा है—अनन्यभावो विषयार्थः। तेन स्वातन्त्र्यमुपाध्यन्तरप्रयोगो वाक्यं च निवर्तते। अर्थात् तद्विषयता का विधान अनन्यभाव (=एकत्व) विषय के लिए है। इससे प्रोक्त, और अध्येतृवेदितृविषयक प्रत्ययों का स्वतन्त्रता से होना प्रोक्तम् और अधीते वेद वा उपाध्यन्तर (=अर्थान्तर) का प्रयोग और भिन्नवाक्यत्व निवृत्त होता है।

प्रतीत होता है—खण्डदेव की इस भूल का कारण सिद्धान्तकौमुदीकार का अध्येतृवेदितृ प्रत्ययं विना न प्रयोज्यानि (छन्दोब्राह्मणानि सूत्रव्याख्यायाम्) वाक्य रहा हो। हरदत्त तथा भट्टोजिदीक्षित प्रभृति ने प्रोक्तप्रत्ययान्त छन्दोब्राह्मण शब्दों से तदधीते तद्वेद अर्थ में प्रत्यय उत्पन्न करके लुक् माना है। इस प्रक्रिया में कलापिनः में प्रोक्तप्रत्ययान्त कलापिन् के नकार का अवान्तर पद संज्ञा मानकर लोप न होवे, इसके लिए नागेश भट्ट ने प्रोक्तप्रत्ययान्त कलापिन् के नकार का अवान्तर पद संज्ञा मानकर लोप न होवे इसके लिए नागेशभट्ट ने प्रोक्तप्रत्ययान्त कलापिन् से सुबुत्पत्ति से पूर्व ही अध्येतृवेदितृ प्रत्यय का विधान माना है (द्र० लघुशब्देन्दुशेखर)। यह सब सूत्रकार और भाष्यकार के मत से विरुद्ध है। यदि सूत्रकार को यह प्रक्रिया अभिमत होती, तो तद्विषयाणि के स्थान पर नित्यम् छोटे शब्द का प्रयोग करते हैं। जैसे वत्रेर्मम् नित्यम् (अष्टा० ४।४।२०) में किया है। तद्विषयाणि ऐसा गुरुनिर्देश का प्रयोजन यही है कि प्रोक्तप्रत्ययान्त छन्दोब्राह्मण वाचक ही तद्विषयक = अध्येतृवेदितृविषयक होवे। भाष्यकार ने प्रोक्ताधिकार में तद्विषयता के विधान का जो पक्ष उपस्थित किया है, उससे भी यही ध्वनित होता है कि वे प्रोक्तप्रत्ययान्त को ही अध्येतृवेदितृविषयक मानते हैं। अनार्षग्रन्थों के माध्यम से आर्षग्रन्थ पढ़ने पर उनके तात्पर्य का प्रायः यथावत् ज्ञान नहीं होता है। इसीलिए आर्षग्रन्थों के परम उद्धारक स्वामी दयानन्द ने ठीक ही लिखा है—'जितना बोध इन

(अष्टाध्ययीमहाभाष्य) के पढ़ने से तीन वर्षों[1] में होता है, उतना बोध कुग्रन्थ अर्थात् सारस्वत चन्द्रिका, कौमुदी, मनोरमा आदि के पढ़ने से पचास वर्षों में भी नहीं हो सकता है, (द्र० सत्यार्थप्रकाश, समु० ३)। इसीलिए आप्तपुरुषों ने भी कहा है—काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्, अर्थात् कणादप्रोक्त वैशेषिकदर्शन और पाणिनीयप्रोक्त व्याकरण समस्त शास्त्रों का उपकारक है। इनको यथावत् जाने विना अन्य शास्त्र समझ में नहीं आते, पदे पदे स्खलन होता है।

अग्नीषोमीयमेकादशकपालम्—तैत्ति० सं० २।५।२ का वचन है—ताभ्यामेतमग्नीषोमीयमेकादशकपालं पौर्णमासे प्रायच्छत्। इसी अग्नीषोमीय पुरोडाश को माध्यन्दिनी द्वादशकपालवाला मानते हैं (प्रयोग उपलब्ध)।

कारीरीवाक्यान्यधीयानाः—कारीरी इष्टि का विधान वृष्टिकामना के लिए है—कारीर्या वृष्टिकामो यजेत (द्र० मै० सं० २।४।८)। तैत्तिरीया भूमौ भोजनमाचरन्ति यह नियम, और अग्निमधीयानाः............उद्कुम्भान् आहरन्ति, अश्वमेधमधीयानाः............ घासमाहरन्ति ये तीनों नियम हमें उपलब्ध नहीं हुये।

**व्याख्या** (४)—पुनरुक्ति के प्रसंग (=प्राप्ति) से भी—यदि सर्वशाखाओं में जाना गया एक कर्म होवे, तो एक शाखा में विहित कर्म का शाखान्तर में वचन पुनरुक्त अनर्थक होवे। भेदपक्ष में तो यह दोष नहीं है। इसलिए भी कर्मभेद है।

(५) निन्दावचन से भी—प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम्। दिवाकीर्त्यमदिवाकीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषाम्—(=सबेरे सबेरे वे झूठ बोलते हैं, जो सूर्योदय से पूर्व अग्निहोत्र करते हैं। दिन में कीर्तन-योग्य सूर्यो ज्योतिः को रात्रि में कीर्तन करते हुए, इनकी तब = सूर्योदय से पूर्व सूर्यज्योति नहीं होती है, इस प्रकार कुछ शाखावाले अनुदितहोम की निन्दा करते हैं। दूसरी शाखावाले पुनः उदितहोम की निन्दा करते हैं—यथाऽतिथये प्रद्रुतायान्नमाहरेयुस्तादृक् तद् यदि उदिते जुह्वति इति (=जैसे इस घर पर आकर लौट गये अतिथि के लिए अन्न का आहरण करें, वैसा वह कर्म है जो उदित होने पर होम करते हैं)। सर्वशाखा में एकरूप से जाने गये कर्म में विरोध होता है कर्मभेद मानने पर विरोध नहीं होता है। इसलिए भी कर्मभेद है।

---

१. हमारे विद्यालय में अष्टाध्यायी-सूत्र पाठ के माध्यम से महाभाष्यान्त पाणिनीय व्याकरण का ५ वर्षों का अध्ययन-अध्यापन लगभग ५० वर्षों से हो रहा है। इसी प्रकार माध्वमतानुयायी आत्मकूर (आन्ध्र) निवासी श्री पं० पद्मनाभ राव जी के विद्यालय में भी है।

**विवरण**—यथातिथये प्रद्रुताय—इसका अभिप्राय यह है कि पूज्य के लिए पूजा को ग्रहण करके पहले ही उपस्थित रहना साधु होता है (भट्ट कुमारिल)। सम्भवतः इसी दृष्टि से प्राचीनकाल में गृह्लियाँ ब्रह्मचारी आदि के भिक्षाकाल से पूर्व ही भिक्षा लेकर द्वार पर खड़ी रहती थीं।

**व्याख्या**—(६) अशक्ति से भी—सब शाखाओं में जाने गये कर्म का उपसंहार करने में निश्चय ही कर्ता समर्थ नहीं होंगे। ऐसी अवस्था में जो आरम्भ करने योग्य नहीं हैं, ऐसे अर्थ का विधान किया जाता है, यह स्वीकार करना होगा। कर्मभेद मानने पर कर्म करना शक्य है। इससे भी कर्मभेद है।

(७) **समाप्तिवचन (के भेद) से भी**—कर्म के असमाप्त होने पर भी समाप्ति का कथन होता है। किसी शाखा वाले कहते हैं—यहाँ हमारा अग्निकर्म (=अग्निचयन) परिसमाप्त होता है। दूसरी शाखा वाले अन्य परिसमाप्ति को कहते हैं। यह (=समाप्तिभेद) एक-कर्मत्व में उपपन्न नहीं होता है। वह कर्म वहाँ (=जहाँ कहा गया है) भी समाप्त होवे, और अन्यत्र भी यह नहीं हो सकता है। कर्मभेद में तो (समाप्तिभेद) युक्त है। इसलिए कर्मभेद है।

(८) **प्रायश्चित्त का विधान करने से भी**—कुछ लोग अनुदित होम के व्यतिक्रम में (=समय पर न होने पर) प्रायश्चित्त का कथन करते हैं कुछ लोग उदित होम के व्यतिक्रम में। और कर्म के व्यृद्धि (=यथाविहित न होना = असम्पूर्णता) होने पर प्रायश्चित्त होता है। कर्म के एक होने पर दोनों प्रकार व्यृद्धि सम्भव नहीं है। कर्मभेद होने पर तो जो अनुदित में होमकर्म है, वह उदय होने पर व्यृद्धि होता है, और अन्य (=उदितहोम) अनुदित में। इसलिए भी कर्मभेद है।

**विवरण**—न च कर्मैकत्वे उभयथा व्यृद्धिः सम्भवति—इसका भाव यह है कि सभी शाखाओं में एक कर्म मानने पर अग्निहोत्र के उदित और अनुदित दोनों काल विहित होते हैं। अतः अनुदित के उदित होने पर, वा उदित के अनुदितकाल में होने पर व्यृद्धि सम्भव है।

**व्याख्या**—(९) **अन्यार्थ के दर्शन से भी**—यह सुना जाता है—यदि पुरा दिदीक्षाणाः स्युः, यदि वा एषां गृहपतिः, गृहपतेर्वाऽनुसत्रिण इति, त एनमेव बृहत्सामानं क्रतुमुपेयुः, उपेतं ह्येषां रथन्तरम्। अथ यदि अदिदीक्षाणाः (=यदि सत्र करने वाले पहले दीक्षित हो चुके हों, अथवा यदि गृहपति, अथवा गृहपति के अनुयायी सभी दीक्षित हो चुके हों, तो इस बृहत्सामा क्रतु को करें, क्योंकि इनका रथन्तरसामा क्रतु किया हुआ होता है। और यदि अदीक्षित होवें)। यह जिन्होंने पहले सोमक्रतु कर लिया है, अथवा जो अनिष्ट-पूर्व हैं, उन दोनों का द्वादशाह सत्र में दर्शन तभी उपपन्न होता है, यदि कर्मभेद होवे। यह एककर्मत्वपक्ष में उपपन्न नहीं होता है। कैसे? ताण्ड्य (=ताण्ड्य ब्राह्मण) में सुना

जाता है—एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽथाऽन्येन यजेत, गर्त्तपत्यमेव तज्जायेत, प्र वा प्रतीयते (= यही यज्ञों में प्रथम यज्ञ है जो ज्योतिष्टोम है, जो इसके विना यजन किये अन्य से यजन करता है, वह गड्ढे में गिरता है अथवा मर जाता है। यह (नियम) सर्वत्र होवे (अर्थात् ज्योतिष्टोम से प्रथम यजन करना सर्वत्र प्राप्त होवे)। इस अवस्था में अदीक्षितों का द्वादशाह में दर्शन उपपन्न न होवे। इससे भी कर्मभेद है।

**विवरण**—ताण्ड्यके श्रूयते—प्राचीन ऋषि नामों में तण्ड और ताण्ड्य दो नाम मिलते हैं। तण्ड द्र०—गर्गादिगण ४।१।१०५; तथा ताण्ड्य—वैशम्पायनान्तेवासियों में अन्यतम, द्र० काशिका ४।३।१०५, ताण्ड्य तण्ड का अपत्य है (द्र० गणपाठ ४।१।१०५) तण्ड से प्रोक्त ब्राह्मण का अध्ययन करने वाले अष्टा० ४।३।१०५ से णिनि प्रत्यय होने से ताण्डिनः कहाते हैं। इसी प्रकार ताण्ड्य से अष्टा० ४।३।१०५ से णिनि होकर 'आपत्यस्य च तद्धितेऽनाति' (अष्टा० ६।४।१५१) से 'य' का लोप होकर ताण्डिनः ही प्रयोग निष्पन्न होता है। तथा दोनों से धर्माम्नाय से में ताण्डक (अष्टा० ४।३।१२६) समान शब्द उपपन्न होता है। इसी प्रकार तण्ड और ताण्ड्य से औत्सर्गिक अण् प्रत्यय (अष्टा० (४।३।१०१) करने पर दोनों का ताण्डाः समानरूप निष्पन्न होता है। इसी कारण पुराण तण्डप्रोक्त ब्राह्मण का ताण्ड्यप्रोक्त ब्राह्मण से भेद करने के लिए लाट्या० श्रौत० ७।१०।१७ में तथा पुराणताण्डम् में पुराण विशेषण उपपन्न होता है। दोनों के भेद को स्पष्ट करने के लिए ताण्ड्यप्रोक्त ब्राह्मण का निर्देश ऋषि नाम ताण्ड्य से ताण्ड्यब्राह्मण के रूप में अथवा उससे संज्ञा में (अष्टा० ५।३।७५) से कन् प्रत्यय करके ताण्ड्यक शब्द के रूप में व्यवहार होता है।

**व्याख्या**—और दूसरा लिङ्गदर्शन होता है—यत्पक्षसम्मितां मिनुयात् कनीयांसं यज्ञक्रतुमुपेयात् कनीयसीं प्रजां कनीयसः पशून् कनीयोऽन्नाद्यं पापीयान् स्यात्, अथ यदि वेदिसम्मितया मिनोति (= यदि यूपैकादशिनी को पक्षसम्मित = पक्षबराबर में मान स्थापित करे तो छोटे क्रतु को प्राप्त होवे छोटी प्रजा को छोटे पशुओं को छोटे अन्नाद्य को, पापी होवे और यदि वेदिसम्मित पश्वैकादशिनी का मान करे) में पक्ष सम्मान के प्रतिषेध में वेदिसम्मान का दर्शन होता है। वह कर्मभेद पक्ष में ही उपपन्न होता है। पाक्षिक वेदिसम्मान का दर्शन एक कर्म होने पर उपपन्न नहीं होता है। कैसे ? कुछ शाखा वाले पढ़ते हैं—रथाक्षमात्राणि यूपान्तरालानि भवन्ति (= रथ के अक्ष = धुरा मात्र अन्तराल = दूरी वाले यूप होते हैं)। यह विधि सर्वत्र होवे। उस अवस्था में न पक्षसम्मान होवे, न वेदिसम्मान होवे। इस प्रकार वेदिसम्मान का दर्शन उपपन्न नहीं होता है। इससे भी कर्मभेद है।

**विवरण**—अथापरं लिङ्गदर्शनम्—सूत्र में अन्यार्थदर्शनात् इतना ही कहा है। उसकी उपपत्ति पूर्व उदाहरण से हो जाती है। फिर इस का तथा आगे उद्ध्रियमाण लिङ्गदर्शनों

का भाष्य में निर्देश समाधानसूत्रों की दृष्टि से किया है। अग्निचयन (सुपर्णयाग वा श्येन-याग) सम्बन्धी कर्मविशेष में पश्वैकादशिनी=ग्यारह पशु विहित हैं। उनके लिए एकादश-यूप गाड़े जाते हैं। सुपर्णयाग का अग्निस्थण्डिल पंख फैलाये श्येन के समान होता है। उत्तर-दक्षिण पंखभाग, मध्य में आत्मस्थानीय भाग, पूर्व में चञ्चुस्थान और पश्चिम में पुच्छ स्थान होता है। आहवनीय की पूर्वरेखा के मध्य में एक यूप गाड़ा जाता है और पांच-पांच यूप दोनों ओर गाड़े जाते हैं। इन यूपों को कितने स्थान में गाड़े इसके लिए प्रथम पक्ष है—उत्तर-दक्षिण पंखों का फैलाव जितने स्थान में उतनी बराबर दूरी रखकर गाड़ें। यह पक्षसम्म.न (=पक्ष बराबर=दक्षिण और उत्तर प्रत्येक ओर चार हाथ और २२ अंगुल परिमाण) से यूपों का मान है। दूसरा पक्ष है—वेदि का जितना पूर्व दिशा में स्थान है, उसमें बराबर दूरी रखकर यूपों को गाड़ें। चयन में वेदि का परिमाण इस क्रतु में ४० पद=कदम=साढ़े सात पुरुष=सवा छब्बीस हाथ होता है। तीसरा पक्ष है—रथ से अक्षपरिमाण (१०४ अंगुल=चार हाथ ८ अंगुल) मध्य दूरी छोड़कर गाड़ना चाहिए। पक्षसम्माने प्रतिषिद्धे-पक्ष=पंख बराबर सम्मान की निन्दा से उसका प्रतिषेध और वेदिसम्मान की स्तुति से उसकी विधि जानी जाती है। तत्तु कर्मभेदे उपपद्यते—एक विधि का प्रतिषेध और एक विधि का विधान कर्मभेद मानने पर सम्भव होता है। तत्र च न पक्षसम्मानम्—रथाक्षमात्र यूपों का अन्तराल होने पर न पक्षसम्मान हो सकता है, न वेदिसम्मान। पक्षसम्मित पक्ष में दक्षिणपक्ष-४ हाथ २२ अंगुल, उत्तरपक्ष=४ हाथ २२ अंगुल, दोनों के मध्य का भाग २ पुरुष=७ हाथ, सब मिलाकर १६ हाथ २० अंगुल स्थान होता है। वेदिसम्मित में वेदी का परिमाण २६ हाथ ६ अंगुल कह चुके हैं। ११ यूपों के मध्य के १० अन्तराल=१० रथाक्षप्रमाण=१०४० अंगुल बराबर ४३ हाथ ८ अंगुल होता है। इसके साथ ११ यूपों की मोटाई न्यून से न्यून एक वितस्ति=१२ अंगुल होने पर ५ हाथ १२ अंगुल होगी। अतः ११ यूप अन्तरालसहित ४८ हाथ २० अंगुल लम्बे स्थान में स्थित होंगे। इस प्रकार रक्षाक्षप्रमाण अन्तराल मानने पर न पक्ष-सम्मित यूपनिखनन उपपन्न होता है, और ना ही वेदिसम्मित।

कात्यायन श्रौत ८।८।६-७-८। में रथाक्षअन्तराल, वेदिसम्मित और पक्षसम्मित तीनों पक्ष स्वीकार किये हैं।

**व्याख्या**—और भी लिङ्गदर्शन होता है—किन्हीं शाखियों के यहाँ ज्योतिष्टोम में सुना जाता है—संस्तुत स्तोत्रीय ऋचाओं में विराट् (=१० संख्या) से दो अतिरिक्त रहती हैं। अन्यों के मत में संस्तुत स्तोतों में विराट् संख्या से तीन अतिरिक्त रहती हैं। यदि दोनों एककर्म होवे तो विरोध होता है। नानाकर्म होने पर किसी ज्योतिष्टोम में दो, और किसी में तीन का विराट् संख्या से अतिरेक उपपन्न होता है। इसलिए (शाखान्तरस्थों में) कर्म का भेद है।

**विवरण**—ज्योतिष्टोमे श्रूयते—ज्योतिष्टोम की ७ संस्थाएँ हैं—अग्निष्टोम, उक्थ्य, षोडशी, अतिरात्र, अत्यग्निष्टोम, वाजपेय और आप्तोर्याम। इनमें स्तोत्रों के न्यूनाधिक होने से स्तोत्रीय ऋचाओं की संख्या में भी भेद होता है। आगे उद्धृत वचन अतिरात्र संस्था का है (द्र० सूत्र० २।४।२६)। संस्तुतानाम् = स्तुति की गई। यह ऋचा का निर्देशक है।

एक साम एक स्तोत्र होता है। एक साम तृचे क्रियते (=एक साम तीन ऋचाओं के समुदाय पर गाया जाता है), इसलिये त्रिवृत् (=त्रिगुणित) स्तोत्र में स्तोत्रीय ऋचाओं की संख्या ३ × ३ = ९ होती हैं, पञ्चदश स्तोत्र में पन्द्रह गुणित होती हैं, सप्तदश स्तोत्र में १७ गुणित। इसी प्रकार सर्वत्र जानें। इस संख्या का उपयोग अगले सिद्धान्तसूत्र २६ में होगा।

विराजमतिरिच्येते·······अतिरिच्यन्ते—विराट् नाम पूर्ण संख्या १० का वाचक है—विराट् विराजनात् पूर्णाक्षरा (निरुक्त ७।१३)। १० संख्या को पूर्ण संख्या इसलिए मानते हैं कि इसके आगे १०-१२-१३ आदि में दाईं ओर पुनः १।२।३ रखे जाते हैं, इसलिये विराजमतिरिच्येते·······रिच्यन्ते का भाव है—विराट् (=१० संख्या) से बचती है। एक ज्योतिष्टोम =किसी भी संस्था) में जितने स्तोत्र हैं, उनकी ऋचाओं की संख्या में विराट् (=१० संख्या से भाग देने पर भागफल की संख्या विराटों की होती है। शेष जो बचता है, उसका यहाँ संकेत है।

**व्याख्या**—और भी, सारस्वत सत्र में सुना जाता है—जो पुरोडाशी (=पुरोडाश से दर्श करने वाले) हैं वे चुपचाप बैठते हैं, और जो सान्नायी (=दूध दधि से दर्श करने वाले) हैं, वे वत्सों को (गायों से) हटाते हैं। सान्नायी इष्टप्रथमयज्ञ (=जिन्होंने पहले सोमयाग किया है) होते हैं। और पुरोडाशी इससे विपरीत (=जिन्होंने बिना सोमयाग किये दर्शपूर्णमास का आरम्भ किया है) होते हैं। दोनों (=पुरोडाश से और सान्नाय्य से दर्श करने वालों) का सारस्वत सत्र में दर्शन कर्मभेद में उपपन्न होता है। एककर्म होने पर सभी (=पुरोडाशियों और सान्नायियों) का ज्योतिष्टोम पूर्वत्व होवे। उस अवस्था में (भेद) दर्शन उपपन्न नहीं होता है।

**विवरण**—सारस्वते श्रूयते—सारस्वत नाम का सत्ररूप सोमयाग है। सत्र का सामान्य सोमयाग से जो भेद है, उसका निर्देश प्रथम भाग के पृष्ठ ९४ टि० २ में दर्शाया है। जिसने सोमयाग पहले किया है, उन्हीं का सत्र में अधिकार होता है। ऐसा मानकर दोष दिया है कि सारस्वतसत्र में पुरोडाशियों और सान्नायियों का दर्शन उपपन्न नहीं होता है। क्योंकि जो सोमयाग करके दर्शपूर्णमास करते हैं, उन्हें दर्श में सान्नाय्य हवि (=दधि दूध मिश्रित हवि) देनी होती है और जो दर्शपूर्णमास पहले करते हैं, उन्हें दर्श में पुरोडाश हवि देनी होती है (विशेष सिद्धान्तसूत्र में देखें)।

**व्याख्या**—और भी सुना जाता है—उपहव्य अनिरुक्त, अग्निष्टोम यज्ञ, रथन्तर-सामवाला और काला अश्व दक्षिणावाला होता है। अन्यों का सुना जाता है—उपहव्य अनिरुक्त, उक्थयज्ञ, बृहत्सामवाला और श्वेत अश्व जिसके ललाट पर रुक्म सुवर्ण बँधा हैं। दक्षिणावाला होता है। कर्म के एकत्व में रथन्तरसाम का वचन और बृहत्साम का वचन अनर्थक है। दोनों शाखाओं में ज्ञात होने बृहत्सामा रथन्तरसामा वा स्यात् (=बृहत्सामवाला अथवा रथन्तरसामवाला होवे)। और यह (उक्थसंस्थाक यज्ञ में) प्रकृति (=अग्निष्टोम) से ही इस लक्षणवाला (=पक्ष में बृहत्सामवाला वा रथन्तरसामवाला) प्राप्त ही है। नानाकर्मत्व होने पर बृहत्सामवाला और रथन्तरसामवाला भिन्न होता है, इससे (उभयनिर्देश) युक्त है। इसलिए शाखान्तर में कर्मभेद होना चाहिए।

**विवरण**—उपहव्योऽनिरुक्तः—उपहव्यसंज्ञक एकाहरूप सोमयाग है। इसकी अग्निष्टोम संस्था का वर्णन ताण्ड्य ब्रा० १८।१ में मिलता है। अनिरुक्तः—इसका अभिप्राय है कि देवता का नाम परोक्षरूप से बोला जाये। द्र० उपहव्ये देवतानामधेयानि परोक्षं ब्रूयुः स्वस्थानासु (लाट्या० श्रौत० ८।९।१)। अग्निष्टोमो यज्ञः—अग्निष्टोम संस्थावाला (= जिस सोमयाग की आग्नेय स्तोम से संस्था = समाप्ति होवे)।

रथन्तरसामा—ताण्ड्य ब्रा० १८।१।१८ में अग्निष्टोमसंस्था में बृहत्साम कहा है—बृहत्सामा भवति। अश्वः श्यावो दक्षिणा (ताण्ड्य ब्रा० १८।१।२०)। उक्थो यज्ञ—उक्थसंस्थावाला सोमयाग। बृहत्सामा—बृहत्सामवाला। अश्वः श्वेतो।

रुक्मललाटो दक्षिणा—रुक्मललाटः = जिसके ललाट पर हिरण्य का पत्रा बाँधा हुआ होवे। बृहत्सामा रथन्तरसामा वा स्यात् = इसका तात्पर्य है कि अग्निष्टोम में माध्यन्दिन-सवन में पृष्ठस्तोत्र कहे हैं, उनमें बृहत्साम अथवा रथन्तरसाम होवे। बृहत् और रथन्तर-साम के लिए प्रकृतिगान और ऊहगान द्रष्टव्य हैं॥ ८॥

## एकं वा संयोगरूपचोदनाख्याविशेषात् ॥९॥ सि०

**शा० भा०—न चैतदस्ति, यदुक्तं शाखान्तरेषु कर्मभेद इति। सर्व-शाखाप्रत्ययम्, सर्वब्राह्मणप्रत्ययं चैकं कर्म, अर्थसंयोगस्याविशेषात्। तदेव प्रयो-जनमुद्दिश्य तदेव विधीयमानं प्रत्यभिजानीमः। रूपमप्यस्य तदेव द्रव्यदेवतम्। पुरुषप्रयत्नश्च तादृश एव चोद्यते। नामधेयं चाविशिष्टम्। तेन तदेव कर्म सर्व-शाखास्विति प्रत्ययः ॥९॥ सिद्धान्तः।**

त० वा०—

सर्वत्र प्रत्यभिज्ञानात्संज्ञारूपगुणादिभिः।
एककर्मत्वविज्ञानं न शाखास्वपगच्छति॥

**सर्वब्राह्मणप्रत्ययमिति**—एकस्यामपि शाखायां ब्राह्मणानेकत्वेऽपि तदेकं कर्मेत्यभिप्रायः। तद्यथोद्गातृणां पञ्चविंशषड्विंशब्राह्मणयोर्ज्योतिष्टोमद्वादशाहौ। संयोग इति प्राधान्यात्फलसंयोगग्रहणम्। रूपमिति—प्रत्यासत्तेर्द्रव्यदेवतम्। चोदनेति—सर्वधात्वर्थभावनाविषयो विधिः। ज्योतिष्टोमादि नामधेयं च सर्वशाखास्वविशिष्टं दृश्यते। तस्मादियतः प्रत्यभिज्ञानकारणकलापादभेदसिद्धिः। न चान्यः कश्चिद्भेदहेतुरस्ति। प्रकरणान्तरवच्छाखान्तरेषु परस्परासंनिधानमिति चेत्? न। तेनैवेतराग्रहणात्। येन हि प्रदेशान्तरे किंचित्कर्म गृहीतं भवति, स एव तत्सदृशमन्यत्रोपलभमानः[1] शक्नोति ततोऽन्यदेतदित्यध्यवसातुम्। एकशाखाविषये च सर्वशाखाध्ययनादेवं भवति। शाखान्तरे पुनरन्यशाखागतज्योतिष्टोमाद्यनवबोधादपूर्ववदुच्यमानेषु न भेदबुद्धिर्जायते।

यस्तर्हि द्वे शाखे पठति, तस्य प्रकरणान्तरन्यायेन भवितव्यमेकशाखागतेषु च ब्राह्मणान्तरेषु। नैष दोषः। शाखान्तराध्ययनं तावदेकस्य पुंसो नैवेष्यते। किं कारणम्?

स्वाध्यायग्रहणेनैका शाखा हि परिगृह्यते।
एकार्थानां विकल्पश्च कर्मैकत्वे भविष्यति॥

यथैवाऽऽकृतिः प्रतिव्यक्ति समवैति, तथैव स्वाध्यायत्वमेकैकस्यां शाखायाम्। अतश्च 'स्वाध्यायोऽध्येतव्य' इति कर्मावबोधनं प्रत्युपादीयमानत्वाद्विवक्षितैकसंख्यैका शाखाऽध्येतव्या। नन्वेवं वेदान्तरस्याप्यध्ययनं न प्रसज्यते। न। वचनान्तरेण प्रतिप्रसवात् 'अनया त्रय्या विद्यया' इति। तथा 'वेदानधीत्य वेदौ वा' इति मानवम्। साकाङ्क्षत्वाच्च वेदान्तराणामतुल्यकार्यत्वकारितः समुच्चयोऽवगम्यते। शाखान्तरेषु त्वन्योन्यनिरपेक्षस्वतन्त्रज्योतिष्टोमादिरूपप्रतीतेस्तुल्यार्थत्वनिमित्तो विकल्पः। साकाङ्क्षत्वादेव चैकशाखागतब्राह्मणान्तरसमुच्चयाश्रयणम्।

नन्वेककर्मत्वाद्विकल्पो विकल्पाच्चैककर्मत्वमितीतरेतराश्रयत्वं भवेत्। न। प्रत्यभिज्ञानमात्रेणैकत्वे विज्ञाते संख्यावशेन विकल्पसिद्धेः। अतश्च यो नामातिमेधावित्वादेकवेदगतानि शाखान्तराण्यप्यधीते, स समृद्धः सन् व्रीहियवैरपि मिश्रैर्यजेत्। तस्मादेकं कर्मेति॥ ९॥

न्या० सु०—सूत्रं व्याचष्टे—**सर्वत्रेति**। रूपशब्दोक्तद्रव्यदेवतव्यतिरिक्ताङ्गाशयो गुणशब्दः। संयोगचोदनयोर्ग्रहणायादिशब्दः। शाखास्थानां ब्राह्मणानामेव विधायकत्वात् सर्वशाखाभ्यो ज्ञानं यस्य कर्मणस्तदेकमित्युक्ते सर्वेभ्यो ब्राह्मणभागेभ्यो ज्ञानं यस्य तदेक-

---

१. लक्ष्यमानः।

मित्युक्तिः पुनरुक्तेत्याशङ्क्याह—**सर्वेति**। अत्रोदाहरणमाह—**तद्यथेति**। गुणमुख्यव्यति-क्रमाधिकरणे ज्योतिष्टोमस्य याजुर्वेदिकतयाः स्वयमेव वक्ष्यमाणत्वादौद्गात्रे ज्योतिष्टोमा-नुत्पत्तेस्तदङ्गभूतस्तोत्राद्याशया ज्योतिष्टोमोक्तिः। अर्थसंयोगस्येति भाष्यं व्याचष्टे—**संयोग इति**। संशब्दस्य समीहितवाचित्वात्फलस्यैव च समीहितत्वात् समीहितेन योग इत्य-वयवार्थसंयोगात्फलान्वयवाची संयोगशब्द इत्याशयः। रूपमपीति भाष्यं व्याचष्टे—**रूपमिति**। पुरुषेति भाष्यं व्याचष्टे—**चोदनेति**। नामधेयं चेति भाष्यं व्याचष्टे—**ज्योतिष्टोमादिति**। तेनेति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। शाखान्तरस्य भेदकत्वं शङ्कितुमापातनिकां तावत्करोति—**न चेति**। व्याचष्टे[1]—**प्रमाणान्तरवदिति**। असन्निधानेनैव कारणेन शाखान्तराध्यायिभाष्यं शाखान्तरीयस्य कर्मणोऽनवगतेः प्रति-योग्यनवगमे च भेदाप्रतीतेर्न शास्त्रान्तरलक्षणमसन्निधानं भेदहेतुरिति परिहरति—**नेति**। एतदेव विवृणोति—**येन हीति**। स्मृतिहेतुसंस्कारोद्बोधसिद्धचर्था सदृशोक्तिः।

ननु शाखाद्वयाध्यायिनः प्रतियोगिकर्मग्रहणसम्भवाच्छाखान्तरे प्रकरणान्तरन्यायो भविष्यतीत्याशङ्कते—**यस्तर्हीति**। पञ्चविंशादिषु चैकशाखाङ्गतेषु ब्राह्मणान्तरेष्वेकशाखा-ध्यायिनोऽपि प्रकरणान्तरन्यायो भविष्यतीत्याशङ्कान्तरमाह—**एकेति**। आद्यां शङ्कां निरसितुमुपक्रमते—**नैव इति**। एतदेव प्रश्नपूर्वमुपपादयति—**किमिति**। स्वाध्यायोक्तेर्वेद-वाचित्वात् समस्तस्वशाखासमूहस्य च वेदत्वात्कथं स्वाध्यायशब्देनैकशाखाग्रहणमित्याशङ्कां निरस्यन् पूर्वार्द्धं व्याचष्टे—**यथैवेति**। एकशाखाध्यायिनि वेदवित्शब्दप्रयोगान्न शाखा-समूहस्य वेदतेत्याशयः। संस्कारकर्माध्ययनपक्षे स्वाध्यायस्य संस्कार्यत्वेनानुपादेयत्वे अपि स्वशब्देनात्मीयवाचिना पितृपितामहादिपरम्परागताया एव शाखायाः कर्मव्युत्पत्त्याध्याय-शब्दोक्तायाः अध्येतव्यत्वोक्तेरेकशाखाग्रहणसूचनार्थश्चशब्दः।

वेदान्तरस्यापि तर्ह्यनध्ययनापत्तेस्त्रिवेदीबोध्यज्योतिष्टोमादिकर्मासिद्धिः स्यादित्या-शङ्कते—**नन्विति**। स्वाध्यायाध्ययनविधिनैकवेदाध्ययनविधानाद्वेदान्तरानध्ययनप्रसक्तावपि वचनान्तरेण प्रतिप्रसवाद्वेदान्तराध्ययनसिद्धिरिति परिहरति—**नेति**। स्मृत्यापि प्रतिप्रसव-माह—**तथेति**। वेदान्तरवैषम्यप्रदर्शनपूर्वमुत्तरार्द्धं व्याचष्टे—**साकाङ्क्षत्वाच्चेति**। द्विती-यामपि शङ्कामनेनैव न्यायेन—**परिहरति साकाङ्क्षात्वादेवेति**। ननु शाखान्तरानध्ययने प्रतियोगिकर्माग्रहणाद्भेदबुद्धिवत्प्रत्यभिज्ञानस्यापि तदेवेदमिति प्रतियोगिग्रहणसापेक्षत्वेनानु-पपत्तेर्विकल्पादेवैककर्माभ्युपगमप्रसङ्गादन्योन्याश्रयः स्यादित्याशङ्कते—**नन्विति**। विधेय-रूपभेदे शब्दान्तरादिप्रमाणव्यापारात्तस्य चोत्पत्तिविध्यधीनत्वादुत्पत्तिबोधनेनोत्पन्नोत्पत्त्य-योगाच्छब्दान्तरादीनां भेदकत्वावगतेः शाखान्तरे चोत्पन्नोत्पत्तावप्यध्येत्रन्तरे प्रत्यर्थवत्त्वो-पपत्तेरुत्पत्तिबोधने अपि भेदकत्वायोगाच्छाखान्तरीयत्वनिमित्तवैलक्षण्यप्रतीतिमात्रेण भेदो वाच्यः। स च प्रतियोगिग्रहणापेक्षत्वाच्छाखान्तराग्रहणे तावन्न शक्यो ग्रहीतुमध्येत्रन्तरा-

---

१. शङ्कतेइति २ पु० पा०।

ग्रहणे अपि फलाद्यविशेषेण प्रत्यभिज्ञानाद्वस्त्रादिवैलक्षण्येन च देवदत्तवैलक्षण्यवच्छाखा-वैलक्षण्यमात्रेण कर्मवैलक्षण्यायोगादभेद एवावसीयते न भेद इत्याशयेन परिहरति—**नेति**। विकल्पावगतिं विनाप्यध्येत्रन्तराच्छाखान्तरीयकर्मग्रहणे सति फलाद्यविषयनिमित्तप्रत्यभि-ज्ञानमात्रेण कर्मैक्यज्ञानाद्विकल्पसिद्धेरन्योन्याश्रयपरिहारमुक्त्वैकशाखाध्ययनात् स्वाध्याय-विध्यर्थसम्पत्तावप्यनेकशाखाध्ययननिषेधादनेकशाखाध्यायिनो विहितविध्ययोगाद्विधिभेदेन कर्मभेदबुद्धेर्विधिश्रुतिविरोधात् सन्निधिलक्षणप्रत्यभिज्ञाबाधमाशङ्क्य स्वाध्यायगतयैकत्व-संख्यया अनेकशाखाध्ययननिषेधसूचनार्थम्—**संख्यावशेनेत्युक्तम्**। स्वशब्देन च स्वीयशाखा-नियमाच्छाखान्तराध्ययननिवृत्तिरिति दृष्टान्तद्वारा सूचयितुमाह—**अथेति**। शाखान्तरस्य भेदकत्वशङ्कानिरासमुपसंहरति—**तस्मादिति** ॥ ९ ॥

भा० प्र०—इस पूर्वपक्ष के उत्तर में सिद्धान्ती का कहना है कि "एकं वा" सभी शाखाओं का प्रत्यय एवं सभी ब्राह्मणों का प्रत्यय एक ही कर्म का उपदेश करता है, शाखाभेद के कारण भेद नहीं हो सकता है, क्योंकि, "संयोगरूपचोदनाख्याविशेषात्" एक ही फल के लिए एक ही कर्म का शाखाओं में विधान होता है, सभी स्थलों में कर्म का द्रव्य, देवता और नाम अभिन्न है एवं सर्वत्र एक ही प्रकार के पुरुष प्रयत्न से कर्म की निष्पत्ति होती है अथवा सर्वत्र एकही प्रकार की विधि है—तब इन सभी कारणों के रहने से विभिन्न शाखाओं में कहे जाने पर भी वे अभिन्न ही रहेंगे—यह मानना ही होगा, क्योंकि 'यह वही कर्म है' इस प्रकार की अभेद प्रत्यभिज्ञा रहती है, अतः, वह एकही रूप, वह एकही फल, वह एकही चोदना = पुरुष प्रयत्न एवं वह एक ही नाम रहने से शाखाभेद होने पर भी कार्य का भेद नहीं होगा। इसीलिये वार्तिककार ने कहा है—

सर्वत्र प्रत्यभिज्ञानात् संज्ञारूपगुणादिभिः।
एककर्मत्वविज्ञानं न शाखास्वपगच्छति॥

नाम रूप एवं गुण के कारण जब अभेद प्रत्यभिज्ञा रहती है, तब भिन्न-भिन्न शाखाओं में भी कर्म के एकत्व की प्रतीति होगी—यह अन्यथा नहीं हो सकती है। इसी-लिए सभी शाखाओं का प्रत्यय एवं सर्वब्राह्मण प्रत्ययकर्म एक ही है। सर्वशाखाप्रत्यय का अर्थ सर्वशाखाप्रमाण होता है। एक ही शाखा का ब्राह्मण भिन्न-भिन्न होने पर एवम् एकही कर्म का पृथक् रूप से उल्लेख रहने पर भी कर्म का भेद नहीं हो सकता है, इसलिये भगवान् भाष्यकार ने कहा है सर्वशाखाप्रत्यय कह कर भी सर्वशाखाब्राह्मण-प्रत्यय कहा है।

वस्तुतः भाष्यकार के द्वारा कथित 'सर्वशाखाप्रत्यय' और सर्वब्राह्मणप्रत्यय का अर्थ यह है कि सर्वशाखाप्रमाण क्योंकि वेदान्त में सर्ववेदान्तप्रत्ययाधिकरणे (वै० सू० ३।३।१) इस सूत्र में वाचस्पति मिश्र ने भामती में लिखा है कि सर्ववेदान्तप्रत्यय = सर्ववेदान्त-

प्रमाण अतः प्रकृत में सर्वशाखाप्रत्यय और सर्वब्राह्मणप्रत्यय का अर्थ सर्वशाखाप्रमाण और सर्वब्राह्मणप्रमाण होता है।

"एकम्" = एक अर्थात् एकही कर्म, 'वा" = पूर्वपक्ष के निरास के लिए है, "संयोगरूपचोदनाख्याविशेषात्" = संयोग अर्थात् फलसम्बन्ध, रूप अर्थात् द्रव्य और देवता चोदना अर्थात् पुरुषप्रत्यय अथवा विधि एवम् आख्या = नाम का विशेष अर्थात् भेद नहीं हैं ॥ ९ ॥

यह सिद्धान्त पक्ष है।

## न नाम्ना स्यादचोदनाभिधानत्वात् ॥१०॥

**शा० भा०—यदुक्तं नामभेद इति। परिहृतं तद्ग्रन्थना[1]मत इति। अथ यदुक्तम्, कर्मणोऽपि नामसामानाधिकरण्यदर्शनादिति। नैष दोषः। ग्रन्थसंयोगात्कर्म काठकादि, न कर्मसंयोगाद् ग्रन्थः काठकः। कथं गम्यते ? यत्कर्म काठकादिसंयुक्तम्, तत्काठकादि[2]शब्देनोच्यते। किमतोऽपि[3] यद्ग्रन्थसंयोगात्काठकं कालापकं कर्मोच्यते। एकत्वेऽपि काठकग्रन्थसंयोगात्काठकम्, कालापकग्रन्थसंयोगात्तु कालापकं भविष्यति ॥ पूर्वपक्षनिरासः ॥**

त० वा०—यद्यपि तावत्काठकादिकं नामधेयं स्यात्, तथाऽप्युत्पत्तिसंयोगाभावान्नैव भिन्द्यात्। इदं तु नैव कर्मनामधेयम्। 'अन्यायो ह्यनेकार्थत्वमि'त्यनेन न्यायेन ग्रन्थनामत्वे सति कर्मणि लक्षणयैव प्रयोगोपपत्तेः।

कथं पुनरवगम्यते[4] ग्रन्थनामैतत्कर्मण्युपचर्यते न पुनर्विपर्यय इति।

तदुच्यते—

शाखाया ह्येकया योगाद् बहुकर्मावबोधनम्।
युज्यते कर्मनानात्वान्नैकशाखोपलक्षणम् ॥

काठकादिशब्दो हि परस्परासम्बद्धेषु बहुषु कर्मसु प्रयुज्यते। स यदि कर्मनाम स्यात्, कर्मान्तरे न प्रयुज्येत। न हि तत्र लक्षणोपपद्यते, सम्बन्धाभावात्। सर्वाभिधानं तु व्यक्तिवद् दुरुपपादम्। तस्माच्छाखयैव कर्माणि लक्ष्यन्ते, न कर्मभिः शाखा। ततश्च संज्ञया कामं शाखा एव भिद्यन्ताम्, न कर्माणि, सम्बन्धाभावात्। तस्मात्तान्येवाग्निहोत्रादीनि सम्बन्धिभेदादन्यथाऽन्यथा च व्यपदिश्यन्ते ॥ १० ॥

---

१. ब. ग्रन्थनाम तदिति। २. ब. काठकादिना।
३. ब. किमतो यत्। ४. क० यथाग्रन्थ।

न्या० सु०—काठकादिनाम्नः कर्माभिधानत्वेऽप्युत्पत्तिचोदनागतत्वाभावान्न **नाम्ना** कर्मभेदः स्यादिति स्वयमभ्युपेत्योक्त्याशयहेत्वर्थसूचनापूर्वं चोद्यतइति व्युत्पत्त्या कर्मवाचिचोदनाशब्दाभ्युपगमेन भाष्योक्तं हेत्वर्थं व्याचष्टे—**यद्यपि तावदिति**। इदं त्वित्यनेन परिहृतमिति भाष्ये व्याख्याते अथेति भाष्येण कर्मभिरपीति पूर्वपक्षभाष्योक्तमर्थमनुभाष्य नैष इति परिहारभाष्यं व्याख्यातुम्—**अन्याय्यो हीत्युक्तम्**। कथमिति प्रश्नभाष्यं व्याचष्टे—**कथं पुनरिति**। यद्यदिति परिहारभाष्यं व्याचष्टे—**तदिति**। श्लोकं व्याचष्टे—**काठकादीति**। ज्योतिरादिवल्लाक्षणिक्यपि कर्मसंज्ञा कर्म भेत्स्यतीत्याशयेन किमत इति पृष्ट्वा पञ्चम्यर्थे यदित्यव्ययमङ्गीकृत्य यस्मात्काठकग्रन्थसंयोगात्काठककर्मैक्येऽपि काठकादिभिन्नग्रन्थसंयोगात्कर्म कानकादिभिन्नसंज्ञं भविष्यतीति परिहारार्थं यद् ग्रन्थसंयोगावित्यादिभाष्यं व्याचष्टे—**ततश्चेति**। एतदेवोपपादयति—**तस्मादिति** ॥ १० ॥

भा० प्र०—सिद्धान्त पक्ष का प्रदर्शन कर पूर्वपक्षी के द्वारा प्रदर्शित आपत्तियों का निराकरण किया जा रहा है। पूर्वपक्षी ने कहा था कि शाखाभेद से एक ही कर्म का काठक, कालापक, आदि नामगत भेद होने से सभी कर्म अभिन्न नहीं हैं। अपितु विभिन्न हैं—यह उनका कहना ठीक नहीं है, क्योंकि, काठक, कालापक, ये कर्म के नाम नहीं हैं, अपितु ग्रन्थ के नाम के अनुसार उन ग्रन्थों के कर्मों का उल्लेख मात्र है। अतः, "अचोदनाभिधानत्वात्" अर्थात् कर्म विधायक वाक्य से बोधित नाम नहीं है। क्योंकि, कर्मोत्पत्ति वाक्य में जो संज्ञाभेद रहता है, उसी के अनुसार कर्म का भेद बोधित होता है।

"न" = नहीं, "नाम्ना" = नाम के कारण, "स्यात्" = होगा अर्थात् कर्म का भेद होगा, "अचोदनाभिधानत्वात्" = क्योंकि चोदनामें अर्थात् कर्मोत्पत्ति वाक्य में अभिधान अर्थात् उसके काठक आदि नाम का अभिधान अर्थात् उल्लेख नहीं है ॥ १० ॥

## सर्वेषां चैककर्म्यं स्यात् ॥११॥

**शा० भा०—यदि शब्दभेदाद्भेदो भवेत्, शब्दैक्यात्तर्हि कर्मैक्यं भवेत्। तत्र काठकशब्दाभिधानादैक्यं[1] भवेत्। अग्निहोत्रस्य, दर्शपूर्णमासयोः ज्योतिष्टोमस्य च तच्छब्दत्वात्। न चैतदेवम्। तस्मादप्यभेदः ॥११॥**

त० वा०—प्रायेण हेतुविपर्यये कार्यविपर्ययो दृश्यत इति काठकादिसंज्ञैकत्वादेकशाखाधीताग्निहोत्रादेरेकत्वप्रसङ्गः। साध्यव्यभिचारित्वादियमर्थापत्तिसमा नाम जातिः पूर्वपक्षहेतोरसिद्धत्वोपालम्भप्रदर्शनार्थमेवाभिहिता। सर्वत्र च दुष्टे पूर्वपक्षे जातीनामुत्तरत्वं[2] केषांचिदिष्टम् ॥ ११ ॥

---

१. ब. शब्दादैक्यं। २. क० उत्तरत्वमिष्टम्।

न्या० सु०—नामभेदाच्च कर्मभेदेऽभ्युपगम्यमाने सर्वेषामेकशाखाधीतानामग्निहोत्र-दर्शपूर्णमासादीनां काठकादिनामैक्यादैककर्म्यं स्यादिति नाम्ना कर्मभेदेऽनिष्टापत्त्युक्त्यर्थ-मेतत्सूत्रं चातुर्मास्यादिनामैक्ये अपि वैश्वदेववरुणप्रघासादिकर्मभेददर्शनादयुक्तमाशङ्क्योपपा-दयति—**प्रायेणेति**। करोतेर्ज्ञानाख्यक्रियाविशेषलक्षणार्थत्वमभिप्रेत्य साध्यवाची कार्यशब्दः।

नन्वेवमपि सञ्ज्ञैक्यस्य साध्यकर्मैक्ये व्यभिचारान्न हेतुत्वं सम्भवतीत्याशङ्क्याह—**साध्येति**। सत्यं साध्यव्यभिचारेण सम्यग्घेतुत्वायोगान्नेदं सम्यगुत्तरम्। किं तु जात्युत्तर-मित्यर्थः। साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिप्रसङ्ग-प्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा-ख्यानां चतुर्विंशतिजातीनां मध्ये केयमित्यपेक्षायाम्? नामभेदात्कर्मभेदेऽभिहितेऽर्थान्नामैक्ये कर्मैक्यापत्तेरर्थापत्तितः प्रातिपक्षसिद्धेरर्थापत्तिसम इति लक्षणयोगात्—**अर्थापत्तीत्युक्तम्**। जातेरुत्तराभासत्वादुपन्यासानर्थक्यमाशङ्क्य कर्मनामभेदस्य पूर्वपक्षहेतोः काठकादेः कर्मनामत्वेऽग्निहोत्रदर्शपूर्णमासादीनामेकशाखास्थानां काठकादिनामैक्येनैक्यापत्तेर्न कर्म-नामता युक्तेत्यसिद्धत्वलक्षणस्य दोषस्याचोदनाभिधानत्वादित्यनेन दर्शितस्याप्यनिष्टाग्निहोत्र-दर्शपूर्णमासाद्यैक्यापादनद्वारा प्रकर्षेण दर्शनायाभिहितेत्युक्तम्। असिद्धत्वलक्षणदोषाविव-क्षायामपि यादृशो यक्षः। तादृशो बलिरित्यनेन न्यायेन दुष्टपूर्वपक्षे दुष्टमप्युत्तरम्। यथा मदीयमुत्तरं दुष्टम्, तथा त्वदीयः पूर्वपक्षोऽपि दुष्ट इत्येवं पूर्वपक्षस्य दुष्टत्वद्योतनात्सम्य-गुत्तरं भवतीत्याशयेन परिहारान्तरमाह—**सर्वत्र चेति**। सन्तं दोषमनुक्त्वान्यमसन्तं यो हि जल्पति तस्य द्वे निग्रहस्थाने वाच्यानुक्तीतरोक्तिजे इति बृहट्टीकायां दुष्टेऽपि पूर्वपक्षे सम्यगेवोत्तरं वाच्यमित्युक्तत्वान्न्यायभाष्येऽपि छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्जनम्, परवाक्ये च पर्यनुयोग इत्यनेन स्वयमप्रयोगाय परप्रयुक्तस्य च छलादिव्युत्पादनं न तु प्रयोगायेत्युक्तत्वाद् दुष्टेऽपि पूर्वपक्षे जातेर्नोत्तरता युक्तेत्याशङ्क्य परमतत्वसूचनार्थं केषां चिदिष्टमित्युक्तम् ॥ ११ ॥

भा० प्र०—शब्द का भेद रहने पर यदि कर्म का भेद माना जाय तो इस प्रसङ्ग में यह कहना है कि "सर्वेषां चैककर्म्यं स्यात्" = शब्द की एकता के कारण अभेद भी रहेगा। अतः, अग्निहोत्र, दर्श पूर्णमास, ज्योतिष्टोम आदि अत्यन्त विभिन्न कर्म भी अभिन्न हो जायेंगे, क्योंकि, सभी का काठक, कालापक इत्यादि रूप में एक ही नाम से उल्लेख मिलता है, किन्तु ऐसा नहीं होता है, अतः काठक आदि नामभेद भी कर्मभेद का हेतु नहीं है।

वार्तिककार ने कहा है—इस सूत्र के द्वारा पूर्वपक्षी की आपत्ति का परिहार नहीं है, किन्तु यह जात्युत्तर अर्थात् अर्थापत्तिसमा नामक जाति है। कतिपय व्यक्तियों का कहना है कि पूर्वपक्ष के दुष्ट रहने पर जात्युत्तर अर्थात् असदुत्तर देना उचित है ॥११॥

**कृतकं चाभिधानम् ॥१२॥**

**शा० भा०—इदानींतनं चैत[1]दभिधानं भवेत् । अस्य न पूर्वमासीत् । यतः प्रभृति कठस्य प्रकृष्टं वचनम्, ततः प्रभृति प्रवृत्तम् । पूर्वं नाऽऽसीद्भेदः । इदानीं भेद इति विरुद्धम् ॥२॥ युक्तिः ॥**

त० वा०—कृत्रिमं काठकाद्युक्तमाख्याप्रवचनादिति ।
न वाऽनादीति भिद्यन्ते कर्माण्यादिमता सता ॥

यद्यपि काठकादेर्जातेर्नित्यत्वान्नित्यैवाऽऽख्या, तथाऽपि प्रवचननिमित्तेयं स्मर्यते, न च कर्माणि प्रोच्यन्ते । शब्दविषयत्वात्प्रवचनस्य । तस्मादपि न संज्ञया कर्मभेद इति ॥ १२ ॥

न्या० सु०—यथाभाष्यं तावत्सूत्रं व्याचष्टे—**कृत्रिममिति ।** कठस्य वैशम्पायनान्तेवासित्वात्कलापिवैशम्पायनान्तेवासिभ्यश्चेति तेन प्रोक्तमित्यस्मिन्नर्थे पाणिनिप्रत्ययस्मृतेस्तस्य कठचरकाल्लुगिति लुक्स्मृतेः 'छन्दोब्राह्मणानि च तद्विषयाणीति च तदधीते तद्वेदेत्येतदर्थविहितप्रत्ययविषयत्वनियमस्मृतेस्तस्यापि च प्रोक्ताल्लुगिति लुक्स्मृतेः कठेन प्रोक्तं योऽधीते, स कठ इति स्थिते तस्येदमित्यस्मिन्नर्थे काठकशब्दव्युत्पत्त्यवगमादाख्येति वेदाधिकरणसूत्रे काठकाद्यभिधाने पुरुषविशेषप्रवचनकृतमित्युक्तम् । ततश्चादिमता सताभिधानेनानादीनि कर्माणि न भिद्यन्तइत्यर्थः ।

ननु यथा ब्राह्मणादिशब्दो मनुष्यावान्तरवर्णाख्यजातिवाचो, तथा कठादिशब्दो ब्राह्मणावान्तरचरणाख्यजातिवाची । तद्वाचिन एव च कठशब्दाठ्ञ्प्रत्यय इतिस्मृतेस्तज्जातीयानां च वैशम्पायनप्राग्भाविनां तदन्तेवासिपुरुषविशेषप्रोक्ताध्येतृत्वायोगाऽप्रवक्तृविषयस्यापि कठशब्दस्य चरणविशेषवाचित्वावगतेः शाखाचरणविशेषयोगाच्च प्रवाच्यवक्तृसम्बन्धस्यानादित्वात्प्रवचनकृतापीयमाख्या नित्यैवेति भाष्यकृत्व्याख्यानस्यायुक्तत्वमाशङ्क्य, स्वयं प्रवचनकृतत्वाऽकाठकाद्यभिधानस्याकर्मणश्चाप्रवाच्यत्वान्न कर्मविषयत्वं सम्भवतीति व्याख्यान्तरमाह—**यद्यपीति ।** नाम्नो भेदकत्वायोगमुपसंहरति—**तस्मादपीति ।** कठप्रोक्ताध्येतृसम्बन्धनिमित्तत्वात्प्रवचननिमित्तत्वेऽपि पूर्वोक्तन्यायात्कर्मविषयत्वासम्भवसूचनार्थोऽपिशब्दः ॥ १२ ॥

भा० प्र०—यदि काठक आदि संज्ञा को कर्मभेद का हेतु माना जाय तो नाम कृत्रिम हो जायगा । क्योंकि, काठक इत्यादि आख्या प्रवचन के कारण है—इसका प्रतिपादन प्रथम अध्याय के प्रथमपाद में किया गया है । इसलिए जब से कठ आदि व्यक्ति का प्रवचन=प्रकृष्ट अध्ययन और अध्यापन प्रवृत्त होता है, उसके बाद से ही काठक आदि

---

१. ब. चाभिधानं ।

संज्ञा की प्रवृत्ति होती है, इससे पूर्व यह संज्ञा नहीं थी। ऐसी स्थिति में प्रवचन के पूर्व काठक आदि संज्ञा न होने से कर्म का भेद नहीं था, किन्तु इस समय भेद हो गया है— इस प्रकार विरुद्ध बातें कहनी पड़ेगी। वेदान्त-दर्शन के 'सर्ववेदान्तप्रत्ययाधिकरणे' (३।३।१) सूत्र की टीका में कल्पतरुकार ने कहा है—"नित्यानित्यसंयोगविरोधात् च संज्ञानां न विद्याभेदकत्वम्" अर्थात् काठक आदि संज्ञाभेद और शाखाभेद होने से विद्याभेद, मीमांसा-दर्शन के अनुसार कर्मभेद मानने पर नित्यानित्य-संयोग विरोध रूप दोष होगा। कारण, वेद अनादि अपौरुषेय होने से नित्य हैं और काठक आदि संज्ञा संज्ञा के अधीन होने से अनित्य हैं। अतः काठक आदि संज्ञा से उनका भेद मानने पर एक ही विद्या अथवा कर्म एक साथ ही नित्य एवं अनित्य हो जायगा, जो उचित नहीं है।

"कृतकम्"= कृत्रिम, "च" = और भी, "अभिधानम्" = अभिधान अर्थात् संज्ञा, "भवेत्"=होगी ॥१२॥

**एकत्वेऽपि परम् ॥१३॥**

**शा० भा०—एककर्मत्वेऽपि रूपभेदो भवति, वचनात्। न च वाचनिके रूपभेदेऽसत्यामपि भेदबुद्धौ कर्मणो भेदोऽध्यवसीयेत[1] ॥१३॥**

**विद्यायां धर्मशास्त्रम् ॥१४॥**

**शा० भा०-अथ यो धर्मविशेष उक्तो विद्याग्रहणार्थः, स न कर्मण उपकारकः। कथं गम्यते? श्रुत्यादीनामभावात्, विद्यासंयोगाच्च न कर्मप्रयुक्त इति ॥१४॥ पूर्वपक्षनिरासः ॥**

त० वा०—न च कपालसंख्याभेदाद्भेदः। तत्सम्बन्धिद्वारभेदानभ्युपगमात्। तस्मादेकस्मिन्नेव कर्मणि साधनविकल्पो भविष्यति।

ननु चोत्पत्तिवाक्यशिष्टत्वाद्विकल्पो नास्तीत्युक्तम्। नैष दोषः। उभयोरुत्पत्तिवाक्यशिष्टत्वाविशेषेण तुल्यबलत्वात्। कथं पुनरेकवाक्योत्पादितस्यैकत्वं विज्ञायत इति। तस्योत्तरसूत्रे परिहारं वक्ष्यामः॥ १३ ॥ १४ ॥

न्या० सु०—रूपभेदाख्यं यत्परं कर्मभेदकारणमुक्तम्, तत्कर्मैक्येऽपि विकल्पेनानेकाङ्गनिवेशोपपत्तेर्युक्तमित्यभिधानार्थं सूत्रं व्याख्यातुमाह—**न चेति**। व्रीहियवादिसम्बन्धिद्वारस्य कर्मभेदस्यानभ्युपगमादित्यर्थः। कर्मैक्ये कथं कपालसंख्याभेदनिवेशोपपत्तिरित्याशङ्क्याह—**तस्मादिति**। ननूत्पत्तिशिष्टगुणावरुद्धे कर्मणि तद्विरोधिगुणान्तरविध्ययोगाद्विकल्पासम्भवस्योत्पत्तिवाक्यविज्ञातमिति चित्राधिकरणवार्त्तिकेऽभिहितत्वान्नेह विकल्पः सम्भवतीत्याशङ्कते—**ननु चेति**। गुणान्तरस्याप्युत्पत्तिशिष्टत्वाविशेषात्केन गुणेनावरुद्धे कर्मणि को

१. ब. भेदोऽनुमीयते।

गुणोऽशक्यविधिरिति ज्ञातुमशक्यत्वादगृह्यमाणविशेषत्वेनोभयोस्तुल्यबलवत्वाद्विकल्पो युक्त इति परिहरति—**नैष इति ।** तर्ह्युत्पन्नोत्पत्त्ययोगात्कर्मभेदः स्यादिति शङ्कते—**कथं पुनरिति ।** अद्विर्वचनं वेत्यत्र सूत्रे चोद्यस्याध्येतृभेदादेकस्मिन्नपि कर्मणि स्वाध्येतॄन् प्रत्यप्रवृत्त-प्रवर्त्तकत्वान्नोत्पत्तिविधिभेदेऽपि कर्मभेदापत्तिरेषेत्येवं परिहारं वक्ष्याम इत्याह—**तस्येति ।** अनेकवाक्योत्पादितत्वोक्तचपौनरुक्त्यानुभाषणार्थस्याग्नेयवदिति सूत्रस्य बुद्धिस्थत्वात्तद-पेक्षयोत्तरत्वं धर्मविशेषस्य भेदकनिरासार्थम् ॥ १३ ॥

न्या० सु०—सूत्रं यद्धर्मशास्त्रं भेदकत्वेनोक्तम्, तत्कर्माङ्गत्वावेदकश्रुत्यादिप्रमाणा-भावान्न कर्मविषयम्, किं तु—

तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः ॥
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥

इत्यादिविद्यासंयोगाद्विद्याविषयमित्यभिधानार्थम् । यथाभाष्यं स्पष्टत्वान्न व्याख्या-तम् ॥ १४ ॥

भा० प्र०—एक शाखा में अग्नीषोमीय को एकादशकपाल एवम् अन्य शाखा में द्वादशकपाल कहने रूप भेद अर्थात् कपाल की संख्या के भेद होने से भेद होगा—यह भी ठीक नहीं है, कारण, इस स्थल में कर्म का एकत्व होने पर भी विशेष वचन होने से वैसा रूपभेद हो सकता है ।

आशय यह है कि इस स्थल में द्रव्य का विकल्प होता है, किन्तु उसके कारण कर्म का भेद नहीं हो सकता है । कारण दृढतर प्रत्यभिज्ञा के द्वारा ही शाखाभेद होने पर भी कर्म का एकत्व ही रहेगा ।

"एकत्वे अपि" = कर्मक एकत्व रहने पर भी, "परम्"=परवर्ती अर्थात् रूप का भेद हो सकता है ॥१३॥

भा० प्र०—शाखा भेद से विशेष विशेष कर्म के प्रतिपादक ग्रन्थों के ग्रहण के समय भूमि में भोजन आदि आचारों का पार्थक्य रहने से शाखा के भेद से कर्म का भेद होगा—यह पूर्वपक्षी ने शङ्का की थी, उसी का उत्तर दिया जा रहा है ।

भूमि में भोजन आदि नियम अध्ययन का अङ्ग है, कर्म का अङ्ग नहीं है, इसलिए इनके कारण कर्म का भेद नहीं हो सकता है । यह भेद यदि कर्म प्रयुक्त होता तो उत्तर-वर्ती काल में करिष्यमाण कर्म यदि इन सभी कर्मों का नियामक होता तो—यह कहा जा सकता था । किन्तु ब्रह्मचारी का कर्तव्य होने से ये धर्म कहे गये है, कुल के आचार के अनु-सार इनमें कोई एक धर्म की स्थिति रहती है । अतः, यह कर्मभेद का प्रयोजक नहीं है ।

"धर्मशास्त्रम्" = धर्म का अर्थात् भूमि पर भोजन जलकुम्भ का लाना, अश्व के घास का संग्रह आदि धर्मों का=आचरणों का शास्त्र, "विद्यायाम्"=विद्या के=अर्थात् वेदाध्ययन के ये सब अङ्ग हैं ॥१४॥

**आग्नेयवत्पुनर्वचनम् ॥१५॥**

**शा० भा०—अथ यदुक्तं यथाऽमावास्यायामाग्नेयस्य पुनरुक्तदोषान्मध्यमः पक्षो निरस्त, एवमयमपि। तस्मादेव दोषात्कर्मैकत्वपक्षो निरसितव्य इति। एतत्परिहर्तव्यमित्याभाषान्तं सूत्रम् ॥१५॥ आशङ्का।**

त० वा०—अनुभाषणसूत्रमेतत्। अथवा पुनरुक्तत्वपरिहारार्थमेवैतत्। पुनः श्रुतेरर्थवादगुणार्थत्वेनान्यार्थत्वात् ॥ १५ ॥

न्या० सु०—यथाग्नेयस्य पुनर्वचनमाग्नेयसूक्तहेतुत्वादित्याग्नेयाधिकरणपूर्वपक्षसूत्रे भेदकमुक्तम्, तथा प्रतिशाखमग्निहोत्रादिपुनर्वचनं भेदकमित्येवं यथाभाष्यं तावत् सूत्रव्याचष्टे—**अनुभाषणेति**। यत्पुनर्वचनं भेदकत्वेनोक्तम्। तत्—अन्यार्था वा पुनःश्रुतिरित्याग्नेयाधिकरणसिद्धान्तसूत्रे यथाग्नेयस्य पुनर्वचनमन्यार्थत्वान्न भेदकमित्ययं पौनरुक्तयस्य भेदकत्वनिरासार्थत्वे स्वयं व्याचष्टे—**अथ वेति**। यथासम्भवमर्थवादार्थत्वेन गुणार्थत्वेन वा पुनः श्रुतेरन्यार्थत्वान्न भेदकतेत्याशयः ॥ १५ ॥

भा० प्र०—भाष्यकार के मत में पूर्वपक्षी की उक्ति का पुनः उल्लेख माना गया है और वार्तिककार के मत में इसको पुनरुक्ति के परिहार के रूप में भी इसकी व्याख्या की है, वार्तिककार ने इस सूत्र की व्याख्या इस प्रकार की है—

विभिन्न शाखाओं में एक ही कर्म का उपदेश रहने पर पुनरुक्ति होती है, उसी का परिहार कहा गया है। इस अध्याय के तृतीय पाद के आग्नेयाधिकरण में (१४ अधिकरण, २८ और २९ सूत्र में) जो परिहार कहा गया है यहाँ भी वैसा ही परिहार समझना चाहिए। आग्नेय वाक्य दो प्रकार का रहने पर भी जैसे विकल्प से दोनों का ही विधायकत्व स्वीकार नहीं किया जाता है, किन्तु एक की ही विधि मानी जाती है, वैसे ही विभिन्न शाखाओं में एक ही कर्म की विधि रहने पर भी विकल्प से सभी का विधायकत्व नहीं माना जाता है, किन्तु एक कर्म की विधि और अन्य को अन्य फल के लिए अर्थात् गुण विशेष के विधान के लिये अथवा विज्ञापन के लिये पठित मानकर अनुवाद माना जाता है।

"पुनर्वचनम्" = पुनरुक्ति, "आग्नेयवत्" = आग्नेय वाक्य के समान अर्थात् अनुवादमात्र है ॥ १५ ॥

**अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥१६॥**

**शा० भा०—नैव खल्वेतद् द्विर्वचनम्। स एवायमर्थः पुनः श्रावितोऽग्निहोत्रादिर्बहुकृत्वो बहुभिस्तु पुरुषैः। न चैकोऽर्थो बहुभिरुच्यमानः पुनरुक्तो भवति।**

**यदि भवेत्, एकस्मिन्नेव वेदे बहुभिरुच्यमाने भवेत् । तस्मान्न बहुकर्मसमवायोऽयम् । एकमेवेदं कर्मेति ॥१६॥ आ० नि० ॥**

त० वा०—द्वितीयव्याख्याने परिहारान्तरनिवृत्त्यर्थो वाशब्दः । तत्रान्यार्था पुनःश्रुतिर्भवति, यत्र तावन्मात्रमेव श्रूयते । यत्र चैकवाक्यगतं विधेयान्तरं विद्यते । न त्विह तदेकमपि । समस्तेतिकर्तव्यतोपेतप्रधानपुनःश्रुतिश्रवणात् । एतमेव श्रुतिसंयोगाविशेषं मन्यते । न चैषा पुनःश्रुतिः । कुतः ?

एकशाखानिबद्धानां ज्ञायते हि पुनः श्रुतिः ।
कठादिचरणानां तु प्रतिशाखं सकृच्छ्रुतिः ॥

पूर्वोक्तेन शाखाध्ययनविकल्पेन येन काठकमग्निहोत्रं श्रुतम्, नासौ कदाचित्तैत्तिरीयकं शृणोति । शृण्वन्नपि वा स्वशाखयैव प्रतिपन्नत्वात्तैत्तिरीयकप्रतिपत्त्यर्थमेवैतादिति कल्पयित्वा, न पुनःश्रुतिं मन्यते । एवमितरोऽपीतरदिति सर्व एवैकश्रुतिसंयोगविशेषादग्निहोत्रादि प्रतिपद्यन्ते । न च तत्र पौर्वापर्यमस्ति, येन ज्ञायेतानया शाखया प्रथमं विहिते शाखान्तरीये पुनःश्रुतिर्भूत्वा भेत्स्यतीति ।

आह च—शाखानां युगपद् वृत्तेर्न पुनःश्रुतिकल्पना ।

न हि तत्रैकशाखावत्क्रमेणाध्ययनं स्थितम् ॥

तस्माद्यथैकशाखाकर्म देशान्तरपुरुषान्तरादिषु पुनः श्रूयमाणमपि प्रतिपाद्यभेदान्न पुनरुक्तं भवत्येवं शाखान्तरेष्विति ।

ननु चैकयाऽपि शाखया समस्तपुरुषप्रतिपादने सति, अनर्थकमेव शाखान्तरम् । नानर्थकम् । न हि कश्चिद् द्वे शाखे अधीते । न च पुरुषान्तरगतं तत्प्रतिपादनेनार्थवदन्यान्प्रत्यनर्थकं भवति । यस्तु तेऽपि किल शाखिनस्तामेवाधीत्य प्रतिपत्स्यन्त इत्यभिप्रायः, स नित्यत्वाद्वेदस्य तदध्ययनाध्यापनसम्बन्धानादित्वादनुपपन्नः । किं च ।

सम्प्रदायागतां मुक्त्वा स्वां समाख्यानिबन्धनीम् ।
शाखां शाखान्तरं युक्तं नाध्येतुं सदृशे श्रमे ॥

तस्मात्परकीयशाखाध्ययनेऽप्यस्त्येव पुरुषाणां श्रम इति यथावस्थितशाखाध्ययनमेव । न च वेदः पुनरुक्तादिदोषद्वारं पर्यनुयोगमर्हति ॥ १६ ॥

न्या० सु०—आग्नेयवदित्यस्य पौनरुक्त्यपरिहारार्थत्वव्याख्याने तेनैव पूर्वपक्षनिवृत्तेः, तन्निवृत्त्यर्थं वाशब्दानर्थक्यमाशङ्क्यन्यार्थत्वलक्षणपूर्वपरिहारनिवृत्त्यर्थमाह—**द्वितीयेति ।** पूर्वपरिहारनिवृत्तावर्थवादार्थं गुणार्थं वेदं द्विर्वचनं न भवति समस्तेतिकर्त्तव्यतोपेतप्रधानश्रवणलक्षणस्य श्रुतिसंयोगस्य सर्वशाखास्वविशेषादित्येवं सूत्रं योजयितुमाह—**तत्रेति ।** अच्युतवाक्ये पौर्णमास्यतिरेकश्रुतेरप्राप्तार्थत्वेनैकान्तिकविधित्वप्रतीतेरमावास्यामात्रश्रुतेरेव

प्राप्तार्थत्वसम्भवेन गृह्यमाणविशेषत्वादर्थवादत्वं यथाङ्गीकृतम्, तथेह यद्येकस्यां शाखायां समस्तेतिकर्त्तव्यतोपेतप्रधानश्रुतिरस्यां प्रधानमात्रश्रुतिः स्यात्, ततो नेतिकर्त्तव्यताकप्रधान-श्रुतेर्गृह्यमाणविशेषत्वादर्थवादत्वं स्याद्यदि च शाखान्तरविहितं किं चिदङ्गमेकस्यां शाखायां प्रधानवाक्यगतं विधेयं स्यात्ततो दध्ना जुहोतीतिवत् गुणार्थत्वं स्यादित्याशयः। अत्रैवार्थे श्रुतीतिसूत्रावयवं योजयति—**एतमेवेति** भाष्यकृद्व्याख्याते प्रतिशाखं भिन्नानामध्येतॄणां श्रुतिसंयोगस्यापूर्वत्वेनाविशेषान्न कं चिदध्येतारं प्रति द्विर्वचनमित्येवं सूत्रं योजयितुमाह—**न चेति**। प्रश्नपूर्वं हेत्वर्थं व्याख्यातुमाह—**कुत इति**। श्लोकं व्याचष्टे—**पूर्वोक्तेनेति**। इतरस्तैत्तिरीयोऽपीतरत्काठकमग्निहोत्रमादरान्न शृणोति। शृण्वन्नपि च कठप्रतिपत्त्यर्थ-मेवैतदिति कल्पयित्वा पुनःश्रुतिन मन्यतइत्यर्थः। यच्च शाखान्तरस्य भेदकत्वनिरासायैकं वेति सूत्रे प्रतियोगिभूतशाखान्तरीयाग्निहोत्राग्रहणात्प्रतियोगिग्रहणासापेक्षभेदग्रहणं न सम्भवतीत्युक्तम्। तत्रापि प्रतियोगिग्रहणशून्यत्वेन श्रुतिसंयोगस्य सर्वशाखास्वविशेषा-दित्येवं हेतुप्रयोजनं सूचयितुमाह—**इतीति**। अभ्युपेत्याप्यनेकशाखाध्ययनं पौर्वापर्या-भावात्पुनः श्रुतत्वं नास्तीत्याह—**न चेति**। अनेन च श्रुतिसंयोगस्य पौर्वापर्यरूपविशेषा-भावादिति हेत्वर्थः सूचितः।

अत्रैवार्थे वृद्धसम्मतिमाह—**आह चेति**। यथाभाष्यं सूत्रार्थमुपसंहरति—**तस्मादिति**।

नन्वेकेन पुंसा नेकशाखाध्ययनेऽपि शाखानां च पौर्वापर्याभावेऽप्येककर्मविषयत्वे सत्येकयैव शाखया सर्वपुंसां प्रतिपत्तिसिद्धेः शाखान्तरानर्थक्यं स्यादित्याशङ्कते—**ननु चेति**। प्रतिचरणं व्यवस्थितत्वाच्छाखानां स्वशाखात्यागेन परशाखाध्ययनानुपपत्तेः स्वशाखाध्ययनपूर्वं मेधावितया शाखान्तराध्ययने सत्यानर्थक्यं वाच्यम्। तच्च स्वाध्याय-इत्येकवचनेनानेकशाखाध्ययननिषेधादयुक्तमित्याशयेन परिहरति—**नेति**।

नन्वनधीतस्यापि शाखान्तरस्यानध्येतारं प्रत्यप्रतिपादकत्वादानर्थक्यं स्यादित्या-शङ्क्याह—**न चेति**। यत्पुरुषप्रतिपत्त्यर्था या शाखा, तस्यास्तं प्रत्यप्रतिपादकत्वे सत्यानर्थक्यं स्यान्नान्यथेत्याशयः। स्वाध्यायगतेनैकवचनेनैकशाखाध्ययननियमेऽपि शाखाविशेषानियमा-त्प्रतिचरणं व्यवस्थायाः प्रमाणाभावेनाऽनुपपत्तेः सर्वपुंसानेकयैव शाखया प्रतीपत्तिरित्या-रित्याशङ्क्यत्राशयमुद्भावनपूर्वकं निरस्यति—**यस्त्विति**। तुच्छत्वद्योतनार्थः किलशब्दः तेऽपीति तच्छब्दोऽन्यात्प्रतीत्यनन्तरनिर्दिष्टान्यपरामर्शी यद्यन्येषामपि शाखिनां पुरुषान्तर-गतशाखाध्ययनादेव प्रतिपत्तिसिद्धेः शाखान्तराणि किमर्थं प्रवृत्तानीत्याशयः, ततो नित्यत्वेन वेदस्यापर्यनुयोज्यत्वादयुक्तः। अथ शाखान्तराध्ययनमनर्थकमित्याशयः। तथापि तच्छब्द-निर्दिष्टकाठकादिशाखाध्ययनाध्यापनाभ्यां कठादिचरणानां कर्तृकर्मसम्बन्धलक्षणस्याचार-स्यानादित्वेन भ्रान्तिमूलत्वायोगात्कठचरणैः काठकशाखाध्येतव्येत्यादिश्रुतिकल्पनां प्रति-चरणं व्यवस्थावगतेरयुक्त इत्यर्थः।

'येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात्सतां मार्गं तेनागच्छन् न रिष्यती॥'

स्मृत्यालोचनया काठकादिसमाख्यालोचनया, स्वाध्याय इति स्वशब्दालोचनया च पितृपितामहादिपरम्परात्मकसम्प्रदायागतशाखात्यागेन शाखान्तराध्ययनं न युक्तमित्याह—**किं चेति**। स्वेनात्मना कठादिना समाख्या काठकशाखेयमित्यादिका निबन्धनमध्ययनव्यवस्थापिका यस्या इत्यर्थाश्रयणेन स्वसमाख्याशब्देन काठकादिसमाख्योक्ता। स्वशब्दवती समाख्येत्यर्थाश्रयणे त्वधीयतइति कर्मव्युत्पत्त्या शाखावाच्यध्यायशब्दाभ्युपगमेन स्वश्रासावध्यायश्चेति विग्रहाश्रयणात्स्वाध्यायविधित एव प्रतिचरणं शाखाव्ययस्थासिद्धिः एवं सत्यपि शाखान्तराध्ययनस्याल्पायाससाध्यत्वे सत्यनुकल्पाश्रयणेन शाखान्तरमधीयेत न त्वेतदप्यस्तीति तुल्यश्रमोक्त्या सूचितम्। सदृशः श्रम इति व्याचक्षाणः सूत्रार्थमुपसंहरति—**तस्मादिति**। यस्य वेदस्य शाखानां प्रतिचरणं व्यवस्थया यथावस्थितमध्ययनं स तथोक्तः। श्रुतिसंयोगाविशेषोपपादनायैकस्य पुंसो अनेकशाखाध्ययननिरासार्थं वाक्यासमवायादिति सूत्रं विस्मृतत्वान्न भाष्यकृता व्याख्यातमित्याह—**तत्रेति**। कथं तर्हि व्याख्येयमित्यपेक्षायामाह—**तदिति** ॥ १६ ॥

भा० प्र०—वार्तिककार ने अपने मत से पूर्व सूत्र की व्याख्या कर जिस रूप में जिस किसी प्रकार से परिहार किया है, इस सूत्र में उसका निवारण कर यथोचित परिहार कहा गया है। यदि एक ही शाखा में एक ही कर्म की विधि रहे तो पुनः उल्लेख होता है और आग्नेय विधि के समान वही पुनरुक्ति श्रुति को अन्यार्थ कहा जाता है, किन्तु भिन्न-भिन्न शाखा में जब एक ही साङ्गोपाङ्ग अर्थात् अङ्ग और उपाङ्ग के साथ कर्म की विधि देखी जाती है तो ऐसी विधि को अन्यार्थ नहीं कहा जा सकता है, किन्तु उन शाखाओं के अनुसार यह एक बार की ही उक्ति रहती है।

वार्तिककार ने इसकी व्याख्या करते हुए लिखा है कि जैसे एक ही शाखा का कर्म देशान्तर में अन्य पुरुष के द्वारा पठित होने पर भी पुनरुक्ति नहीं होती है, उसी प्रकार भिन्न-भिन्न शाखा में एक ही कर्म उपदिष्ट होने पर भी पुनः उल्लेख नहीं होता है, कारण, कोई भी शाखाओं का अध्ययन नहीं करता है, क्योंकि, एक शाखा ही उसके लिये ग्राह्य है। जब जो व्यक्ति अपनी शाखा का अध्ययन करता है तब उसके लिए शाखान्तर का वाक्य अज्ञात रहने से अपनी शाखा का वाक्य अप्राप्त होने से अपूर्व विधि ही रहती है। यदि कोई मेधावी व्यक्ति एक से अधिक शाखाओं का भी ग्रहण करता है तब भी अन्य शाखा के अध्ययन काल में वह अपनी शाखा में उपदिष्ट कर्म का ही उल्लेख देखकर समझता है कि यह इस शाखा के अध्ययन करने वालों के लिये विधि स्वरूप है। अतएव विभिन्न व्यक्ति के पास जैसे एक ही शाखा का एक कर्म अनुवाद नहीं होता है, उसी प्रकार विभिन्न शाखा वालों के लिये भी एक ही कर्म पुनः उल्लिखित नहीं हो सकता है। दूसरी बात यह है कि आगे और पीछे का भाव रहने पर परवर्ती को पुनरुक्ति कहा जा सकता है, किन्तु अनादि अपौरुषेय वेद की सभी शाखाएँ उस शाखा के अध्ययन करने वालों के लिये एक साथ विधि और निषेध करने से अग्र

और पश्चात् भाव न रहने से किसी की भी पुनरुक्ति नहीं होती है, इसीलिये वार्तिककार ने कहा है—

"शाखानां युगपद्वृत्तेर्न पुनःश्रुतिकल्पना" अतः शाखाभेद होने पर भी एक ही कर्म है।

"अद्विर्वचनम्" = दो बार अर्थात् एक से अधिक बार उल्लेख नहीं होता है, "वा" = निश्चयार्थक है, अथवा अन्य परिहार के निवारण के लिए, "श्रुतिसंयोगविशेषात्" = यतः श्रुतिसंयोग अर्थात् समस्त इतिकर्तव्यताओं से युक्त प्रधान कर्म का पुनः उल्लेख रहता है ॥ १६ ॥

## वाक्यासमवायात् ॥१७॥

त० वा०—अत्रान्तरे भाष्यकारस्य सूत्रं भ्रष्टम् 'वाक्यासमवायात्' इति। तदेवं व्याख्येयम्। नैकस्मिन्पुरुषे शाखान्तरवाक्यं समवैति ॥ १७ ॥

भा० प्र०—एक एक वेद एक वृक्ष के समान है। अनेक वेद शाखा इस वेदवृक्ष की शाखा के समान एवं अङ्गोपाङ्गयुक्त कर्मकलाप फल, पुष्प और पत्र के समान है। एक शाखा का फल, पुष्प आदि जैसे अन्य शाखा के सन्निहित नहीं है, इसी प्रकार वेद की एक-एक शाखा का दर्शपूर्णमास, अग्निहोत्र आदि कर्म फल अपने-अपने सम्पूर्ण गुण-विशेष के साथ अन्य शाखा का सन्निधान नहीं है। इसलिये भिन्न-भिन्न शाखा का एक ही कर्म की विधि रहने पर भी उसका पुनः उल्लेख नहीं कहा जा सकता है, इसीलिये वार्तिककार ने कहा है—

एकस्य वेदवृक्षस्य किञ्चित् कर्मफलाश्रयात्।
एवं शाखाः प्रसिध्यन्ति बहुशाखैकवृक्षवत् ॥

वेद एक वृक्ष है, वेद की शाखाएँ, उस वृक्ष की शाखा के रूप में है; कर्म-कलाप उसका फल है इस कर्म रूप फल की अभिन्नता अर्थात् एक जातीयता होने से अनेक शाखाविशिष्ट एक वृक्ष के समान विभिन्न शाखाओं से समन्वित वेद का एकत्व सिद्ध होता है, अन्यथा शाखा के भेद से वेद ही हो जाता। शाखाभेद में कहीं-कहीं इतिकर्त्तव्यता का भेद रहता है।

"अर्थासन्निधेः च" = अर्थ का अर्थात् प्रतिपाद्यविषय का असन्निधान होने से भी शाखाभेद रहने पर भी विधिवाक्य की पुनरुक्ति नहीं होती है ॥ १७ ॥

## अर्थासंनिधेश्च ॥१८॥

**शा० भा०—अर्थासंनिधेश्च शाखाशब्द उपपन्नो भविष्यति। शाखा इव हीमाः शाखाः। तद्यथा वृक्षस्य शाखाः, एवमिहापि वृक्षस्थानीयस्य वेदस्य**

**शाखाः । किं शाखासारूप्यम् ? यथा नानावस्थानम् । न चैकैकस्यां कृत्स्नं पुष्पं फलं संनिहितम् । एवमिहापि, नैकैकस्यां कृत्स्नं गुणकाण्डं संनिहितमित्यर्थासंनिधेः शाखाशब्दोपपत्तिः । तस्मादप्येकं कर्मेति ॥१८॥**

त० वा०—एकस्य वेदवृक्षस्य किञ्चित्कर्मफलाश्रयात् ।
एवं शाखाः प्रसिध्यन्ति बहुशाखैकवृक्षवत् ॥

यदि प्रतिशाखं कर्मभेदः स्यात् । तत एकमूलाभावादादित एवाऽऽरभ्य भिद्यमानत्वात्समस्तकर्माख्यपुष्पफलान्तरत्वाद् वृक्षान्तरवद्वेदान्तराण्येवोच्येरन् । न शाखान्तराणि । एककर्ममूलविधिस्कन्धरूपत्वे सतीतिकर्तव्यतायाः क्वचित्किंचिदधिकमित्यालोच्य सारूप्यादुपपन्नः शाखान्तरभेदव्यपदेशः ।

अथवा पौनरुक्त्यपरिहारार्थमेव सूत्रम् । तत्र नाम पुनरुक्ता भवति, यत्र पूर्वोक्तोऽर्थस्तस्यैव पुंससन्निहितो भवति । न त्विह शाखान्तरगतस्य सन्निधानमित्यपुनरुक्तता ॥ १८ ॥

न्या० सु०—निन्दादेर्गुणप्रकारत्वात्तत्परिहारार्थत्वेनैकत्वे अपि परमित्यनेन सामान्यतः परिहारसिद्धेरन्यार्थदर्शनानां च प्राप्त्यपेक्षत्वात्तेष्वपरिहृतेष्वपि पूर्वपक्षे दोषोपन्यासावसरसम्भवाद्वाक्यासमवायादित्यनेन च काठकादिसमाख्याबलेन प्रतिचरणं शाखाध्ययनव्यवस्थायामुक्तायां शाखासमाख्याया बुद्धिस्थत्वात्तद्बलेन पूर्वपक्षनिरासायैतत्सूत्रं कर्मणो अनुग्राहकतयाऽर्थ्यमानस्याङ्गकाण्डस्य समस्तस्यैकैकस्यां शाखायामविधानादनिक्षेपादभावादैककर्म्येण शाखासादृश्याच्छाखासमाख्योपपत्तेर्न कर्मभेद इत्येवं यथाभाष्यं व्याख्यातुमाह—**एकस्येति** । धर्मशब्दस्याङ्गवाचित्वात्फलोक्त्या च पुष्पाणामप्युपलक्षणादेवंशब्देन च कर्मैक्यपरामर्शात्कर्मैक्ये सत्येकस्यैककर्ममूलत्वं विधिस्कन्धरूपस्य वेदाख्यवृक्षस्य कतिपयाङ्गाख्यपुष्पफलान्वयात्काठकाद्याः शाखाः शाखाव्यपदेश्याः प्रसिद्ध्यन्तीत्यर्थः । कथं वेदस्य वृक्षत्वोपचारः शाखानां च शाखात्वोपचार इत्याशङ्क्य—**बह्वित्युक्तम्** । यथैकस्य वृक्षस्यैकमूलः सर्वशाखाधारभूतः स्कन्धस्तथैकस्यैव कर्माख्यमूलोत्पत्तिविध्याख्यस्कन्धरूपत्वाद् वृक्षत्वोपचारः । यथा वृक्षस्य पुष्पफलानि नैकैकस्यां वृक्षशाखायां समस्तानि सन्ति, तथा वेदशाखायामप्येकैकस्यामृग्वेदादिप्रतिपाद्यहौत्रादिसमस्ताङ्गाख्यपुष्पफलासत्त्वाच्छाखात्वोपचार इत्याशयः । व्यतिरेकतो अन्वयतश्च श्लोकार्थमुपपादयति—**यदीति** । प्रधानभूतमग्निहोत्रादिकर्म प्रथमं विधेयत्वेन प्रतीतेर्मूलत्वेनोपचरितं कर्माख्यमूलान्तरत्वेनाङ्गाख्यपुष्पफलार्थान्तरत्वेन च समस्तस्य मूलपुष्पफलस्यान्यत्वादादित एवारभ्य भिद्यमानाः शाखाः वेदान्तराण्येवोच्येरन्नित्यन्वयः । सौत्रस्य संशब्दस्य सामस्त्यर्थत्वं समस्तशब्देन सूचितम् । अङ्गानां पश्चात्प्रतीतेः पुष्पफलत्वोपचारः वृक्षमूलाश्रितस्य शास्त्रोपक्रमस्य स्कन्धत्वाप्रसिद्धेः प्रधानाश्रितत्वादितिकर्त्तव्यताविध्युपक्रमत्वाच्च प्रधानविधेः स्कन्धत्वेनोपचारः एकमग्निहोत्रादिमलमधिष्ठानविषयभूतस्य प्रधानकर्मोत्पत्तिविधेः स सर्वशाखास्थाङ्गविध्यधिष्ठा-

नत्वास्कन्धरूपो यस्य वेदस्य तत्त्वे सतीति कर्मधारयगर्भबहुव्रीहिसमासार्थः । यथा क्व चिद् वृक्षस्य शाखायां पुष्पं क्व चित्फलमधिकम्, तथा क्व चिद्वेदशाखायामितिकर्त्तव्यतायाः । किं चिदधिकमित्येककर्माख्यमूलसम्बन्ध्यङ्गाख्यविलक्षणपुष्पफलयोगित्वरूपधर्मसामान्येन वेदशाखानां वृक्षशाखासादृश्याच्छाखान्तररूपो वेदान्तरव्यपदेशाद्भेदेन व्यपदेशो वेदस्यैककर्ममूलविधिस्कन्धरूपत्वे सत्युपपन्न इत्यर्थः । शाखान्तराध्यायिनः शाखन्तरीयार्थप्रत्यभिज्ञानाच्चाद्विर्वचनमित्येवमेतदपि सूत्रं पौनरुक्त्यपरिहारार्थत्वेन स्वयं व्याचष्टे—**अथ वेति ॥ १८ ॥**

भा० प्रा०—वार्तिककार की दृष्टि में इस सूत्र से पूर्व "वाक्यसमवायात्" सूत्र था । जो भाष्य में नष्ट हो गया है, इसीलिए, भाष्यकार ने इसकी व्याख्या नहीं की है । वार्तिककार ने इसकी व्याख्या इस प्रकार की है—वाक्य का समवाय न होने से अर्थात् एक ही व्यक्ति के अन्य शाखा का वाक्य समवेत अर्थात् ज्ञात या गृहीत न होने से शाखा भेद होने पर एक ही कर्म का उल्लेख रहने पर उसकी पुनरुक्ति नहीं होती है, कारण, एक व्यक्ति एक से अधिक शाखा का ग्रहण नहीं करता है, क्योंकि, अपनी शाखा के ग्रहण में ही अध्ययन विधि का तात्पर्य है, एक शाखा का ग्रहण ही केवल अपनी शाखा का ग्रहण ही "स्वाध्यायोऽध्येतव्यः" इस विधि के अनुसार स्वाध्याय विधि का अर्थ है—इस विषय को इस अधिकरण के नवम सूत्र में वार्तिककार ने युक्तिपूर्वक व्याख्या की है, किन्तु इसका यह अर्थ नहीं है कि अन्य शाखा के अध्ययन का निषेध हैं । इतना सत्य है कि अपनी शाखा का अध्ययन ही अवश्य कर्तव्य है और बाद में अन्य शाखा का अध्ययन किया जाता है ।

युधिष्ठिर मीमांसक ने इसकी व्याख्या करते हुए कहा है "स्वाध्यायोऽध्येतव्यः" में स्वशब्द के प्रयोग से प्रतिव्यक्ति को स्वशाखा का अध्ययन प्राप्त होता हैं, इस अवस्था में शाखान्तर पठित कर्मविधायक वाक्यों का समवाय = (एकीभाव) एक पुरुष के प्रति प्राप्त ही नहीं होता है । इस कारण पुनः वचन नहीं है, ऐसा जानना चाहिए ॥ ॥१८॥

**न चैकं प्रति शिष्यते ॥१९॥**

**शा० भा०—न च यत्काठकेऽग्निहोत्रम्, तत्काठकमेवैकं पुरुषं प्रति विधीयते । तैत्तिरीयस्यापि तद्विहितमेव । पुरुषविशेषवचनाभावात् । यच्चाग्निहोत्रस्य किंचिदङ्गं विधीयते, सर्वावस्थस्य तदग्निहोत्रस्य । यच्च काठकस्याग्निहोत्रस्य, तच्च तैत्तिरीयकस्येति । विशेषवचनाभावात् । तस्मात्सर्वशाखाभिरेकं समाम्नं कर्मोच्यत इति ॥१९॥**

त० वा०—अभ्युपेत्यवादोऽयम् । सत्यपि कर्मभेदे ये तावद्वाक्यसंयुक्ताः शेषाः, ते अग्निहोत्रादिमात्रोद्देशेन विधीयमानाः सर्वार्थत्वेन ज्ञायन्त इत्यवश्यो-

पादातव्या इति, नैव शाखामात्रपरितोषव्यवस्था लभ्यते । न च सूत्रकाराणामपि कश्चित्स्वशाखोपसंहारमात्रेणावस्थितो, येन प्रतिशाखं कर्मव्यवस्था समर्थ्येत । प्रधानान्यपि प्राधान्येन यजमाननियमं प्रति, अप्रभवन्तीभिः समाख्याभिरर्थिमात्र[१]-मुद्दिश्य विधीयमानानि सर्वशाखागतान्येकैकं पुरुषमुपतिष्ठन्ते । तत्रैकफलत्वा[२]-दसमुच्चये येन केनचित्साध्यमाने फलेऽन्येषां वैयर्थ्यप्रसङ्गः । अथ तेषां विकल्पे-नार्थवत्त्वम्, तद्वरं शाखान्तराणामेव व्यवस्थितप्रतिपद्यमानानामकुलतरं परि-कल्पितमित्यपुनरुक्तता ॥ १९ ॥

न्या० सु०—नन्विहाधिकरणे स्वशाखाविहिताङ्गमात्रोपसंहारः पूर्वपक्षप्रयोजनं सर्व-शाखाविहिताङ्गोपसंहारश्च सिद्धान्तप्रयोजनम् । तत्र चेत्कर्मभेदे अपि सर्वशाखाविहित-मग्निहोत्रादि प्रत्यङ्गानि विधीयन्ते ततः पूर्वपक्षप्रयोजनाभावादनारभ्यमिदमधिकरणं स्यादि-त्याशङ्क्याह—**अभ्युपेत्येति** । यथा दर्व्यादेरपि होमसाधनत्वस्य हेत्वधिकरणपूर्वपक्षप्रयोज-नस्य, यदि च हेतुरवतिष्ठेतेत्यनेन निरासेऽप्यन्नकरणे असमर्थशूर्पव्यावृत्तेः पूर्वपक्षप्रयोज-नत्वसम्भवादधिकरणारम्भोपपत्तिस्तु चोदिते[३] जुहोतीत्यादिवाक्यसंयुक्तानामुदितकालादी-नामङ्गानां सर्वाग्निहोत्राद्यर्थत्वे अपि प्राकरणिकानामङ्गानां प्रतिशाखमग्निहोत्रादिभेदे अन्यप्रकरणस्थानामङ्गानामन्येनाग्रहणाद्व्यवस्थायाः पूर्वपक्षमयोजनत्वसम्भवादधिकरणारम्भो-पपत्तिरित्यभ्युपेत्यवादोक्त्या सूचितम् । कीदृशोऽभ्युपेत्यवाद इत्यपेक्षायामाह—**सत्यपीति** । वाक्यसंयुक्तानामङ्गानां सर्वार्थत्वेऽपि प्राकरणिकानां व्यवस्थापूर्वपक्षप्रयोजनं भविष्यतीति सूचनार्थस्तावच्छब्दः । स्वशाखामात्रेण परितोषात्काठकेऽग्निहोत्रे तच्छाखाविहितमेवाङ्गम्, नान्यशाखाविहितामिति व्यवस्था लभ्यतइत्येतदेव द्रढयितुं 'प्रातरूपोदयं व्युषित'उदिते वेत्यादौ शाखान्तरविहितैरूपोदेयादिभिः स्वशाखाविहितस्योदितत्वादेर्विकल्पाभिधानादाश्व-लायनादीनां सूत्रकाराणां मध्ये न कश्चित्स्वशाखाविहिताङ्गोपसंहारमात्रेण-—**अवस्थित-इत्युक्तम्** । अनेन चैकमग्निहोत्रादि प्रत्यङ्गं न शिष्यतइत्येवं सूत्रव्याख्यार्थं 'यच्चाग्निहोत्रस्ये'ति भाष्यं पाश्चात्यमपि प्रधानानामपि प्रतिचरणव्यवस्थया गुणत्वाच्च वेदेन व्यवस्था स्यादिति लोहितोष्णीषाधिकरणवक्ष्यमाणन्यायनिरस्तत्वेन पूर्वपक्षिणोऽप्यनिष्टत्वात्, तत्रैकफलत्वा-दित्यादिवार्त्तिकवक्ष्यमाणन्यायेन पौनरुक्त्यपरिहारार्थं तन्निरासः, न तु पूर्वपक्षस्य निष्प्र-योजनत्वोक्त्यर्थ इति सूचयितुम् । प्राग्व्याख्यातं नैकं कठादिकमेव पुरुषं प्रत्यग्निहोत्रादि-प्रधानं शिष्यते, येन भिन्नविषयत्वात्समुच्चयः स्यात्, द्विकल्पस्तु कर्मणां भवतु, शाखानां वेति जिज्ञासायां शाखानां व्यवस्थितपुरुषविषयतया विकल्पे सम्भवत्यव्यवस्थितकर्मविकल्पा-श्रयणस्यायुक्तत्वाच्छाखानामेव विकल्पावगतेरद्विर्वचनमित्येवं सूत्रव्याख्यानार्थं न चेत्याद्यं भाष्यमिदानीं व्याख्यातुमाह—**प्रधानान्यपीति** । स्वर्गकामादिशब्दैरर्थिमात्रमुद्दिश्य विधीय-

१. क० अर्थमात्र । २. क० असतिसमुच्चये ।
३. तथोदितइति २ पु० पा० ।

मानत्वात्कर्मभेदपक्षे च भिन्नविषयत्वाच्छाखानां विकल्पानापत्तेस्तस्याष्टदोषत्वपरिहारार्थं प्रतिचरणं शाखाव्यवस्थाकल्पस्यायुक्तत्वात्, सर्वशाखास्थानि प्रधानानि सर्वान् पुरुषान्प्रति प्रकाशन्तइत्युक्ते, काठकादिसमाख्याभिर्व्यवस्थामाशङ्क्य यजमानानां प्राधान्यात् समाख्यानां च प्रधाननियमं प्रत्यसामर्थ्यात् समाख्यायोगेऽपि न व्यवतिष्ठन्तइति समाख्याभिर्युक्तान्यपीति पदद्वयाध्याहारसहितेनोक्तं ननु पूर्वपक्ष्यनिष्टाख्यायाः प्रतिचरणं कर्मव्यवस्थायाः किमर्थो निरास इत्याशङ्क्याह—**तत्रेति**। प्रतिचरणमग्निहोत्रादिव्यवस्थानभ्युपगमे निरपेक्षसाधनत्वेन समुच्चयायोगादेकेनैवाग्निहोत्रादिना सर्वपुंसां फलसिद्धेः शाखान्तरीयाग्निहोत्राद्यानर्थक्यापत्तेर्विकल्पेनार्थवत्त्वं वाच्यम्। तच्च विकल्पेनार्थवत्त्वं कर्मैक्याभ्युपगमेन शाखानामेव व्यवस्थितेः कठादिचरणैः प्रतिपद्यमानत्वेनाऽष्टदोषत्वनिमित्ताकुलत्वानापादकत्वाच्च कल्पितं वरं ततश्चापौनरुक्त्यमित्येव पौनरुक्त्यपरिहारसूचनार्थम्, प्रतिचरणं कर्मव्यवस्था निरास इत्याशयः ॥ १९ ॥

भा० प्र०—रूपभेद अर्थात् द्रव्यभेद के कारण कर्म का भेद होता है, इस प्रदत्त आपत्ति का परिहार इस सूत्र से किया जा रहा है "न च एकं प्रति शिष्यते" विभिन्न शाखाओं में एक ही कर्म कहे जाने पर भी कहीं किस गुण का उल्लेख नहीं रहता है, कहीं भिन्न प्रकार के गुण का उपदेश है। केवल एक पुरुष अर्थात् उस शाखा से व्यक्ति के लिये उपदिष्ट होता है—ऐसी बात नहीं है, किन्तु, सभी के प्रति ही उसका विधान किया जाता है। अतः, अन्य शाखा में जिस गुण का उल्लेख किया है, वह यदि अपनी शाखा में कथित कर्म के विरुद्ध नहीं हो तो अपनी शाखा के कर्म से ही गुणों का उपसंहार = समाहार अर्थात् समुच्चय कर अनुष्ठान किया जाता है। यदि वे विरुद्ध होता है, तब विकल्प होगा, इसलिये, शाखाभेद होने पर कर्म का भेद नहीं होता है।

"च" और, "एकं प्रति" = केवल एक के लिये, "न शिष्यते" = उपदिष्ट नहीं होता है ॥ १९ ॥

## समाप्तिवच्च संप्रेक्षा ॥२०॥

**शा० भा०—अत्रास्माकमग्निः परिसमाप्यत[1] इत्युत्प्रेक्षितारो भवन्ति। अन्वारोहेषु मैत्रायणीयानामग्निः परिसमाप्यते। अस्माकं तेषु न परिसमाप्यत इति। यद्यन्यदेव मैत्रायणीयानाम्, अन्यच्च तेषम्, कथं ते ब्रूयुरेष्वस्माकं[2] न परिसमाप्यत इति। एकत्वमुपपन्नं[3], तेषामपि हि ते सन्ति ॥२०॥ युक्तिः ॥**

त० वा०—असमाप्तिवदिति वा छेदः। कर्मभेदपक्षे हि यावदेव येषां समाम्नानम्, तावदेव तेषां समाप्यत इति न ब्रूयुरत्रास्माकं न समाप्यत इति। अन्वारोहो नाम स्थलारोहणमन्त्राः। तेषु मैत्रायणीयानां समाप्यते, नास्माकमित्यभिधानादध्येतॄणामपि कर्मैकत्वं प्रसिद्धमित्यवसीयते ॥२०॥

---

१. ब. समाप्तः। २. ब. अत्रास्माकं। ३. ब. एकत्वेतूपपन्नं।

न्या० सु०—यदा च भिन्नमपि कर्म सर्वान्प्रति विधीयते, तदा योऽस्माकमग्निः, सोऽत्र समाप्यतइति कर्मभेदापेक्षसमाप्तिव्यपदेशायोगाद्योऽग्निः सोऽस्माकमत्र समाप्यतइत्यध्येतृविशेषापेक्षः समाप्तिव्यपदेशो वाच्यः। भिन्नकर्मविषयत्वे समाप्त्यसमाप्त्योरध्येतृविशेषापेक्षानर्थक्यापत्तेरस्मानपेक्ष्याग्नेः समाप्तिर्जातेत्येवंरूपापेक्षाबुद्धिरध्येतृविशेषसंमताध्येतृविशेषापेक्षा कर्मैक्यं द्योतयतीत्यभिधानार्थमेतत् सूत्रम्। समाप्तेरापेक्षिकत्वस्य सिद्धान्तलिङ्गत्वोक्त्यर्थत्वेनात्रेति भाष्येण व्याख्यायासमाप्तेरापेक्षिकत्वस्य सिद्धान्तलिङ्गत्वोक्त्यर्थत्वेनान्वारोहे त्वित्यादिनापेक्षिकत्वोक्त्यार्थं सौत्रसंशब्दव्याख्यानायासमाप्तेर्मैत्रायणीयापेक्षत्वाभावोक्तिपूर्वं व्याख्यातम्। ततसूत्राननुगुणमाशङ्क्याकारप्रश्लेषेण पाठान्तरमाह—**असमाप्तिवदिति**। शिष्यते समाप्तिवदिति सूत्रसंहितायामकारप्रश्लेषेणापि विच्छेदसम्भवः। छेदोक्त्या सूचितः। सूत्रार्थमुपपादयति—**कर्मेति**। अन्वारोहशब्दव्याख्यापूर्वं सङ्क्षेपतो भाष्यं व्याचष्टे—**अन्वारोहनामेति** ॥ २० ॥

भा० प्र०—"यहाँ हमारी अग्नि समाप्त हुई" इस प्रकार समाप्ति का वचन होने से शाखा के भेद से कर्म का भेद होगा—यह ठीक नहीं है। कारण, "मैत्रायणीय" समूह के अन्वारोह में = मन्त्रविशेष में अग्नि समाप्त होती है, किन्तु, हमारी अग्नि यहाँ समाप्त नहीं होती है। इस प्रकार के वचन भी होने से कर्म का अभेद ही बोधित होता है, क्योंकि, कर्म के भिन्न होने पर यह कथन सङ्गत नहीं होगा, कारण, एक ही कर्म को लक्ष्य कर ही लोक में कहा जाता है कि इसकी इच्छा यहाँ शेष होती है, किन्तु मेरा यह कर्म यहाँ समाप्त नहीं होता है। इस स्थल में भी इसी प्रकार है। "मैत्रायणीय के अन्वारोह मन्त्र में ही अग्नि समाप्त होती है, किन्तु हमारी वैसी इच्छा नहीं होती है—इस प्रकार की उक्ति में महाग्निचयन कर्म का भेद न समझकर अभेद ही बोधित होता है।

वार्तिककार ने कहा है कि इस सूत्र में अकार को आदि में देकर "असमाप्तिवत् च सम्प्रेक्षा" इस प्रकार प्रयोग कर पाठ करना उचित है। अर्थात् सूत्रों को संहिता के रूप में एक साथ संलग्न कर निबद्ध होने से "समाप्तिवत्" इस अंश को "असमाप्तिवत्" इस प्रकार ग्रहण करना चाहिये। पूर्ववर्ती सूत्र के शेष में एकार रहने पर इस सूत्र के 'अ' कार का लोप होता है। इस पक्ष में भी व्याख्या पूर्ववत् है।

"समाप्तिवत् च" = समाप्ति के समान भी, "सम्प्रेक्षा" = उत्प्रेक्षा अर्थात् कल्पना की जाती है; वस्तुतः पक्ष में समाप्त नहीं होती है ॥ २० ॥

## एकत्वेऽपि पराणि निन्दाशक्तिसमाप्तिवचनानि ॥२१॥

**शा० भा०—न हि निन्दा निन्द्यं निन्दितुं प्रयुज्यते। किं तर्हि ? निन्दितादितर[1]त्प्रशंसितुम्। तत्र न निन्दितस्य प्रतिषेधो गम्यते, किं त्वितरस्य विधिः। तत्रैकस्मिन्नग्निहोत्रे द्वौ कालौ विहितौ विकल्प्येते। अतो न कश्चिद्विरोधः।**

---

१. ब. अन्यत्।

**तथा, असमर्थानामेकस्मिन्नपि वेदे विहितं कृत्स्नमङ्गजातमुपसंहर्तुं शक्तिरस्तीति तेनैककर्मत्वेऽपि न विरुद्धमिति। तथैकस्मिन्नपि कर्मणि किंचिद्वस्तु समाप्तमिति कृत्वा समाप्तिशब्दः प्रयुज्यते। यथाऽऽध्वर्यवे समाप्ते ज्योतिष्टोमस्य, समाप्तो ज्योतिष्टोम इति भवति ॥२१॥ पूर्वपक्षनिरासः ॥**

त० वा०—अन्योन्यनिन्दयेतरेतरविधाने तुल्यार्थयोरुदितानुदितत्वयोः कर्मणि विकल्पो भविष्यति। त्वत्पक्षेऽपि चासौ कर्मणोः फलं प्रत्यविशिष्टः। तथा शक्त्यशक्ती सर्वपुरुषाणामव्यवस्थिते। सर्वशाखास्वधिकविधावेकशाखायां च स्तोकान्तरत्वादविशिष्टे।

**वाक्यसंयुक्तानां साङ्कर्यम्, प्राकरणिकानां व्यवस्थेभिवदतां केषां मतस्योपन्यासनिरासौ**

केचिच्चात्र लाभवार्थिन एवं वर्णयन्ति। य एव किल वाक्यसंयुक्ताः शाखान्तरविधयः। त एव संकीर्यन्ते। ये तु प्राकरणिकाः तेषां व्यवस्थैवेति। कुतः?

एककर्मगताः पुंसां विकल्पन्ते विधायकाः।
तत्समीपसमाम्नातं ग्राह्यं प्रकरणस्य च॥

शाखान्तरेषु विकल्पमानेषु यथैव प्रधानं विधीयतेऽर्थिनः तदीयः कथंभावः तामेव व्याप्नोति, न शाखान्तराणि। अतश्चान्यगता गुणाः कथंभावेन नापेक्षिताः प्रयोगवचनेनानुपसंहृता नाङ्गं भवन्तीति नानुष्ठेयाः। ततश्च वाक्यसंयुक्तानामल्पत्वाद्विधीयमानानामस्त्युपसंहरणशक्तिरिति।

न त्वेतद्युक्तमिव। तथा हि—

शाखान्तरगतस्यापि यदङ्गं कर्मणः स्थितम्।
तस्यान्यत्रापि तादर्थ्यं प्राप्तं केन निवार्यते॥

प्रतिवेदमपि च प्रकरणं पुरुषस्य धर्मानुपदिशति। न च तद्वेदान्तरस्थं प्रत्यप्रमाणम्। तथा शाखान्तरेऽपि द्रष्टव्यम्। कर्मधर्माश्चैते विज्ञायन्ते। तच्च कर्म शाखान्तरेष्वपि तदेवेत्यङ्गत्वाविशेषः। यद्यपि प्रकरणरूपमन्यत् तथाऽपि शाखान्तरस्थेनानेनैतेऽपि धर्मा गृहीता इत्यवधारणान्न स्वप्रकरणगृहीतेभ्यो विशिष्यन्ते, सर्वास्वपि च शाखास्वधिकविधयो न कथंचिच्छाखया परिमिता भवन्तीत्यल्प एवाऽऽयास इति नाशक्तिः। समाप्तिश्चाधीतापेक्षयोपपन्नत्वान्न भेदं कल्पयति॥२१॥

न्या० सु०—यानि पुनर्वचनात्पराणि निन्दाऽशक्तिसमाप्तिवचनानि कर्मभेदकारणान्युक्तानि। तान्येकत्वेऽप्यविरुद्धानीत्यभिधानार्थमेतत्सूत्रं व्याख्यातुं न होति निन्दापरिहारभाष्यं तावद्व्याचष्टे—**अन्योन्येति**। ननूदितानुदितवाक्ययोर्भिन्नविषयत्वेनाविकल्पिकतयाष्टदोषत्वपरिहाराय व्यवस्थानपेक्षत्वात्प्रतिचरणं व्यवस्थाकल्पनानुपपत्तेः सर्वपुरुषान्प्रति

प्रामाण्याविशेषादुदितानुहितत्वयोरव्यवस्थितविकल्पापत्तेरपरिहार्याऽष्टदोषतेत्याशङ्क्याह — **त्वत्पक्षे चेति** । कर्मभेदपक्षे तद्वाक्यानामपि भिन्नविषयत्वेनावैकल्पिकत्वात् प्रतिचरणं प्रामाण्यकल्पनानुपपत्तेः कर्मणामव्यवस्थितविकल्पाविशेषादुभयोस्तुल्योदोषः, नैकं प्रत्युद्भावनीय इत्याशयः ।

तथेत्यशक्तिपरिहारभाष्यं व्याचष्टे—**तथेति** । एकशाखाविहितेष्वप्यङ्गेष्वन्धादीनामशक्तेः साधनसम्पन्नानां च सर्वशाखाविहितेष्वपि शक्तेः परशाखाविहितानां च कल्पसूत्रादिभ्यो ज्ञानसम्भवादित्याशयः । ननु सर्वशाखास्थाङ्गोपसंहारो बहुतरायाससाध्यत्वादशक्य इत्याशङ्क्याह—**सर्वेति** । बहूनामङ्गानां सर्वशाखास्वभिन्नत्वात्कतिपयान्यत्वेऽपि न बह्वायासापत्तिरित्याशयः । शाखान्तरेऽधिकाङ्गविधावप्येकशाखायाः सकाशात् सर्वशाखास्वङ्गानामन्तरस्य स्तोकत्वाच्छक्त्यशक्त्योरविशेष इत्यर्थः ।

प्रकरणविनियोज्यानामङ्गानां प्रतिप्रकरणं व्यवस्थितत्वेन तत्तच्छाखाध्यायिभिरेवानुष्ठेयत्वाद्वाक्यविनियोज्यानामेव सर्वशाखानुष्ठेयत्वावगतेः स्तोकान्तरत्वं कैश्चिदुक्तम् । तद् दूषयितुमुपन्यस्यति—**केचिदिति** । विध्युक्तिर्विधेयलक्षणार्था प्रधानस्य सर्वशाखास्वभिन्नत्वात्कथंभावरूपस्य प्रकरणस्याप्यभेदावगतेः कथं प्राकरणिकानामप्यङ्गानां व्यवस्थेत्याशयेन प्रश्नपूर्वं व्यवस्थामुपपादयति—**कुत इति** । कर्मस्वरूपाभेदेऽपि फलसाधनत्वेन विधीयमानस्यैव कथम्भावोत्पत्तेः कर्मैक्येऽपि च तद्विधीनां प्रतिशाखं भेदादेकविषयत्वाच्च विकल्प्यमानानां प्रतिचरणं व्यवस्थितप्रामाण्यावगतेर्विधेयत्वप्रयुक्तत्वेन कथंभावस्यापि भेदात्पञ्चावत्तादिवच्चानुष्ठातृव्यवस्थया व्यवस्थिताङ्गग्राहकत्वोपपत्तेः प्रतिचरण प्राकरणिकाङ्गव्यवस्था युक्तेत्युत्तराशयः । श्लोकं व्याचष्टे—**शाखान्तरेष्विति** । प्राकरणिकाङ्गव्यवस्थोक्तेः प्रकृतोपयोगमाह—**ततश्चेति** । दूषयति—**तत्त्विति** । कर्मधर्मत्वेनाङ्गानामविशेषात्सर्वपुरुषानुष्ठेयकर्मार्थत्वप्राप्तेः पञ्चावत्तादिवत्पुरुषविशेषानुष्ठेयकर्मार्थत्वावेदकश्रुत्यभावेन शाखान्तरानुष्ठेयकर्मार्थत्वानिवारणाद्भिन्नानामपि च प्रकरणानामेककर्मणि विनियोजकत्वेन व्यवस्थापकत्वायोगात्प्राकरणिकानामप्यङ्गानां सङ्कर एव युक्त इत्याशयः ।

नन्वनेकेषां प्रकरणानामेककर्माङ्गविनियोजकत्वेनैकार्थ्याद्विकल्पापत्तेर्व्यवस्थापेक्षायां विधायकवत्तच्छाखाध्यायिनामेव प्रतिमाण्यावगतेर्व्यवस्थापकत्वं भविष्यतीत्याशङ्कानिरासपूर्वं श्लोकं व्याचष्टे—**प्रतिवेदमपि चेति** । विधायकत्वप्रकरणानामप्रवृत्तप्रवर्त्तनस्वभावेनैकमपि पुरुषं प्रत्यनेकेषामन्योन्यानपेक्षत्वेनानुवादत्वपरिहारसम्भवात्प्रामाण्योपपत्तेर्व्यवस्थापकत्वायोगं दृष्टान्तेन द्रढयितुं यथा प्रतिवेदं भिन्नं प्रकरणं यद्यपि कर्मधर्मान् पुरुषस्योपदिशति, तथापि वेदान्तराध्यायिनं पुरुषं प्रत्यप्रमाणं न भवतीत्युक्तं श्लोकव्याख्यार्थम्—**कर्मेत्युक्तम्** । फलवत्वकर्मविधिसन्निधावफलकर्मविधिपाठस्य प्रकरणत्वात्प्रतिशाखं च विधिभेदेन सन्निधिभेदात्प्रकरणभेदे सति कथमविशेष इत्याशङ्क्य—**यद्यपीत्युक्तम्** । कथं तर्ह्यशक्तिः परिहर्त्तव्येत्याशङ्क्याह—**सर्वास्वपि चेति** । तथैकस्मिन्नपीति समाप्तिपरिहारभाष्यं व्याचष्टे—**समाप्तिश्चेति** ॥ २१ ॥

भा० प्र०—उदित होम और अनुदित होम दोनों की निन्दा के कारण भी कार्म का भेद नहीं हो सकता है, क्योंकि, शास्त्रीय निन्दा का निन्दा में तात्पर्य नहीं है। इसीलिए, भगवान् भाष्यकार ने कहा है "न हि निन्दा निन्द्यं निन्दितुं प्रयुज्यते। किं तर्हि। निन्दितादिवत् प्रशंसितुम्। तत्र न निन्दितस्य प्रतिषेधो गम्यते। किन्तु इतरस्य विधिः"। अर्थात् निन्दनीय विषय की निन्दा करने के लिए शास्त्र में निन्दावचन नहीं कहा जाता है। तब किस लिए कहा जाता है ? निन्दितातिरिक्त = अनिन्दित विधेय विषय की प्रशंसा के लिए निन्दावचन कहा जाता है"। ऐसे स्थल में निन्दित विषय का निषेध अवगत नहीं होता है, किन्तु, निन्दितातिरिक्त की विधि ही विज्ञापित होती है, अतः, इस स्थल में निन्दा में तात्पर्य न होने से अग्निहोत्र होम में उदित एवम् अनुदित दोनों काल ही विकल्पित रूप में विहित होता है; जिस स्थल में अनुदित की निन्दा है वहाँ उदित की प्रशंसा में ही तात्पर्य है, क्योंकि उदित होम ही वहाँ विहित है और जहाँ उदित की निन्दा हैं वहाँ अनुदित की प्रशंसा ही प्रतिपाद्य है।

अशक्ति के विषय में जो कहा गया है, वहाँ कर्म का भेद नहीं है, कारण, जो असमर्थ है, वह अपनी शाखा में विहित सभी कर्म अवैगुण्य के रूप में अनुष्ठान नहीं कर सकता है। जो व्यक्ति समर्थ रहता है, वह अन्य शाखा के संवाद में सभी अङ्गों का समाहार कर ही अनुष्ठान करता है, अतः, किसकी कितनी शक्ति है, जब उसका अवधारण नहीं है, अतः अशक्ति के कारण जो कर्म भेद होगा—यह कहना ठीक नहीं है, क्योंकि, एक व्यक्ति का अशक्ति रहने पर भी अन्य पाँच लोगों की शक्ति रह सकती है।

इसी प्रकार समाप्ति वचन के सम्बन्ध में भी किसी कर्म में एक विशेष अंश समाप्त होने पर लोक में जैसे कहा जाता है—"यह कर्म शेष हुआ", जैसे ज्योतिष्टोम का अध्वर्भव = अध्वर्यु से सम्पाद्य कर्म समाप्त होने पर ही "ज्योतिष्टोम समाप्त हुआ" इस प्रकार कहा जाता है—प्रकृत में भी ऐसा ही है, अतः, समाप्तिवचन कर्म भेद का हेतु नहीं है। कर्म को अभिन्न न मानने पर इस प्रकार की उक्ति भी सङ्गत नहीं होगी, क्योंकि, भिन्न-भिन्न कर्म के सम्बन्ध में कोई भी ऐसा नहीं कहता है कि "हमलोगों का यह कर्म यहाँ समाप्त हुआ और अन्य का अन्य स्थल में"।

"पराणि निन्दाशक्ति समाप्तिवचनानि" = अवशिष्ट निन्दा अशक्ति एवं समाप्ति का उल्लेख, "एकत्वे अपि" = कर्म का एकत्व = अभेद पक्ष में भी सङ्गत होता है ॥ २१ ॥

## प्रायश्चित्तं निमित्तेन ॥२२॥

**शा० भा०—यदुक्तम्—उदितहोमस्यापि प्रायश्चिताम्नानाद्[1] व्यृद्धता गम्यते, अनुदितहोमस्यापि। तदेकत्वे विरुध्यते। अविरुद्धं नानात्व इति। तत्परिहर्तव्यम्। आभाषान्तं सूत्रम् ॥२२॥ आशङ्का ॥**

१. क० प्रायश्चित्तान्ता नावृद्धता।

त० वा०—अनुभाषणसूत्रं सामान्यपरिहारसूत्रं वा ॥२२॥

न्या० सु०—उदितानुदितकालातिक्रमात्मकेन भिन्नेन निमित्तेन प्रायश्चित्तं विधीयमानं भेदकत्वेन यदुक्तमित्यनुभाषणार्थत्वेन तावद्यथाभाष्यं सूत्रं व्याचष्टे—**अनुभाषणेति।** उदितानुदितकालयोर्द्वयोरप्यतिक्रमे प्रायश्चित्तं विधीयमानं यद्भेदकत्वेनोक्तम्। तत्केन चिन्निमित्तेन कर्मैक्येऽप्युपपत्तेर्न भेदकमित्येवं सामान्यपरिहारार्थत्वेन स्वयं व्याचष्टे—**सामान्येनेति** ॥ २२ ॥

भा० प्र०—शाखा भेद से उदित होम का समय अतिक्रान्त होने पर भी प्रायश्चित्त विधि है और अनुदित होम का कालातिपात होने पर भी प्रायश्चित्त का उपदेश किया है। शाखा भेद से कर्म अभिन्न होने पर—यह सङ्गत नहीं होगा, किन्तु कर्म के भिन्न होने पर ही समीचीन होगा—इस प्रकार की जो आपत्ति है, उसका भी परिहार कहा जा रहा है। इस सूत्र में पूर्वपक्ष का निर्देश किया गया है।

"निमित्तेन" = निमित्त के कारण अर्थात् कालातिक्रमण रूप निमित्त के कारण, "प्रायश्चित्तम्" = प्रायश्चित कैसे होता है ॥ २२ ॥

## प्रक्रमाद्वा नियोगेन ॥२३॥

**शा० भा०—वाशब्दः पक्षं व्यावर्तयति। नैष दोषः। उदिते होष्यामीति प्रक्रान्ते, अन्यथा क्रियमाणे भवति दोषः। तत्र प्रायश्चित्तस्य विषयो भविष्यतीति, कर्मैकत्वेऽपि न दोषः ॥२३॥ आशङ्कानिरासः ॥**

त० वा०—वैकल्पिकानामादित एवाङ्गीकरणादाश्रितक्रमातिक्रमे प्रायश्चित्तविधिरुपपत्स्यते ॥२३॥

न्या० सु०—सङ्कल्पापरपर्यायप्रक्रमवशेन वैकल्पिकानामप्यङ्गानां यदेव सङ्कल्पितम्, तदेवानुष्ठेयमिति नियमात्, तदतिक्रमे कर्मैक्येऽपि प्रायश्चित्तमविरुद्धमित्येवमनुभाषितभेदहेतुपरिहारार्थं सामान्यपरिहारोक्तिजनितविशेषसन्देहव्यावृत्त्या विशेषपरिहारार्थं चैतत्सूत्रं प्रधानवशवर्त्तित्वेनाङ्गानां प्रधानसङ्कल्पेनैवानुष्ठानसिद्धेरङ्गानामसङ्कल्पनीयत्वादयुक्तमाशङ्क्योपपादयन् व्याचष्टे—**वैकल्पिकानामिति।** नैयमिकाङ्गासङ्कल्पनेऽपि वैकल्पिकाङ्गासङ्कल्पने प्रयोगमध्ये किमिदं कुर्यामिदं वेति दोलायमानमतेः कालविक्षेपापत्तेः कर्मोपक्रमकालएव वैकल्पिकानामाङ्गानामिदमेव करिष्यामीत्येवमङ्गीकरणीयत्वादङ्गीकृतसङ्कल्पस्याङ्गस्यातिक्रमे प्रायश्चित्तविधिर्युक्त इत्यर्थः ॥ २३ ॥

भा० प्र०—उदित होम एवं अनुदित होम दोनों ही स्थलों में जो काल के अतिक्रमण के कारण प्रायश्चित्त कहा है—वह आरम्भ के अनुसार व्यवस्थित होता है। जो व्यक्ति अनुदित होम का सङ्कल्प कर आरम्भ करता है, उसके पक्ष में उदित होम जन्य प्रायश्चित्त विहित होता है—यदि वह सूर्योदय के बाद होम करता है तो उसको यथा कथित

प्रायश्चित्त करना पड़ेगा, उदित होम के सम्बन्ध में भी यही नियम है, इसका यह कारण है कि उदित होम एवम् अनुदित होम वैकल्पिक अर्थात् इच्छाधीन होने पर भी जो क्रम अवलम्बन किया जाता है, पूर्व पुरुष जिस क्रम का अवलम्बन कर होम कर आए हैं, हमको भी उसी क्रम का अवलम्बन करना पड़ेगा अर्थात् उसी का अनुसरण करना होगा। उसका व्यतिक्रम करने पर हमको प्रायश्चित्त करना पड़ेगा। उदित होमानुसारी एवम् अनुदित होमानुसारी दोनों ही पक्षों में यह व्यतिक्रम समान दोषावह है। किन्तु इसके द्वारा मूल कर्म का कोई भी पार्थक्य नहीं होता है, अतः, प्रायश्चित्तवचन कर्मभेद का साधक नहीं है।

"प्रक्रमात्" = प्रक्रम अर्थात् प्रथम प्रयोग या आरम्भ के अनुसार, "वा" = पक्ष के परिवर्तन के लिए, "नियोगेन" = नियोग के कारण अर्थात् नियम का अनुसरण किया गया है, अतः, उसका व्यतिक्रम होने पर प्रायश्चित्त करना होगा ॥ २३ ॥

**समाप्तिः पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ॥२४॥**

**शा० भा०—पूर्ववति समाप्तिवचनं भवति। यत्प्रारब्धम्, तत्परिसमाप्यते। तत्रास्माकं परिसमाप्तोऽग्निरिति, योऽस्माभिर्ज्ञायते, परिसमाप्यते। प्रारब्धश्चेत्यभिप्रायः ॥२४॥**

त० वा०—एकत्वेऽपि समाप्तिर्लिङ्गत्वेनोक्ता। 'समाप्तिवच्च संप्रेक्षा' इति समाप्तिवचनं नानात्वेऽपि। तत्र न्यायानुसारित्वादेकत्वस्यैव[1] साधिका। तद्वचनस्येयमुपपत्तिः पूर्ववत्त्वादिति, आरम्भापेक्षत्वात्।

अथवा शब्दप्रयोगस्य प्रसिद्धिपूर्वकत्वाद्यादृशीं वयं समाप्तिं पश्यामः तादृश्यामयं प्रयुक्त इति निश्चिनुमः। स च वस्तुन्यसमाप्तेऽपि तच्छाखाविज्ञेयपदार्थसमाप्तौ प्रयुक्त इति दृश्यते। तस्मादविरोधः ॥२४॥

न्या० सु०—समाप्तेर्भिन्नस्थानत्वरूपेणाऽभेदहेतुत्वस्य पूर्वपक्षितस्यैकत्वेऽपि पराणीत्यनेन दूषितत्वादापेक्षिकत्वरूपेण त्वेकत्वहेतुत्वस्य समाप्तिवच्चेत्यनेन सिद्धान्तितत्वादनर्थकमेतत्सूत्रमित्याशङ्क्याह—**एकत्वेऽपीति**। यथैकत्वेऽग्निसमाप्तिर्लिङ्गत्वेनोक्ता, न तदीयकतिपयपदार्थसमाप्तिः तथाभेदेऽप्यग्निसमाप्तेरेव लिङ्गत्वेनोक्तत्वात्स्वशाखाधीताग्न्यङ्गभूतपदार्थापेक्षसमाप्त्यभ्युपगमेन दूषणोक्तिरयुक्तेत्याशङ्क्य, समाप्तिवचनस्य न्यायानुसारेण व्याख्येयत्वात्, न्यायेन चैकत्वावधारणात्तस्यैव समाप्तिः। साधिका, न भेदस्येत्येतदभिधानायेदं सूत्रमित्याशयः।

नन्वग्निशब्दस्याग्न्यङ्गभूतपदार्थवाचित्वाभावात्कथं कर्मैक्येऽग्निसमाप्तिवचनोपपत्तिरित्याशङ्क्य, पूर्ववत्त्वादित्यवयवेनोपपत्तिरुक्तेत्याह—**तद्वचनस्य चेति**। एतमेव चावयवं

१. क० प्रत्ययानुसारित्वात्।

यथाभाष्यं तावत्पूर्वशब्दस्यारम्भवाचित्वाभ्युपगमेन व्याचष्टे—**आरम्भेति**। समाप्तेरारम्भापेक्षत्वान्मैत्रायणीयैश्चान्वारोहान्तग्यङ्गपदार्थकलापमात्रस्याध्येतुमारब्धत्वात्तल्लक्षणार्थोऽग्निशब्दोऽवसीयतइत्याशयः।

स्वयमन्यथा व्याचष्टे—**कथं वेति**। भाष्यकृता तु प्रक्रमाद्वेति सूत्रेणारम्भवशाद्वैकल्पिकाङ्गनियमेऽभिहिते बुद्धिस्थत्वात्समाप्तेरारम्भापेक्षत्वात्समाप्तिसमभिव्याहृतस्याग्निशब्दस्य यावदारब्धपदार्थकलापलक्षणार्थत्वोक्तेरभ्रष्टावसरत्वसिद्धयर्थं पूर्वशब्दस्यारम्भवाचित्वं व्याख्यातम्। पूर्वपक्ष्युक्तविरोधपरिहारसमर्थनार्थत्वं सूत्रस्य च सूचयन्नुपसंहरति—**तस्मादिति**॥ २४॥

भा० प्र०—समाप्तिवचन के कारण शाखाभेद से कर्म का भेद होता है, इस प्रकार की आपत्ति का परिहार "समाप्तिवच्च सम्प्रेक्षा" इस सूत्र के द्वारा किये जाने पर भी पूर्वपक्षी यह कह सकते हैं कि समाप्तिवचन जब कर्म के भेद का साधन है और सम्प्रेक्षा कर्म के अभेद का लिङ्ग है तब अभेद कैसे सिद्ध हो सकता है ? इसके उत्तर में सिद्धान्ती का कहना है कि जिस पक्ष में युक्ति हो वही ग्राह्य हैं। अभेदप्रत्यभिज्ञा आदि युक्ति के द्वारा जब शाखा का भेद होने पर भी कर्म का अभेद ही सिद्ध होता है तब यहाँ हम लोगों की अग्नि समाप्त होती है—इस प्रकार सम्प्रेक्षा = उत्प्रेक्षा स्थल में समाप्ति अभेद का ही लिङ्ग है।

"समाप्तिः" = समाप्ति अर्थात् समापन की उक्ति, "यथाज्ञाते" = यथादृष्ट अर्थात् जैसा देखा जाय वैसा ही विषय में, "प्रतीयते" = प्रतीत होता है, "पूर्ववत्त्वात्" = यतः आरम्भसापेक्ष अथवा यतः शब्द का प्रयोग प्रसिद्धिपूर्वक अथवा "पूर्ववत्त्वात्" = अर्थ अभेद प्रत्यभिज्ञा होने से ॥ २४॥

## लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना, तस्माद् द्वादशाहस्याऽऽहारव्यपदेशः स्यात् ॥२५॥

**शा० भा०—यदुक्तम्-यदि पुरा दिदीक्षाणा इति द्वादशाहे, इष्टप्रथमयज्ञानाम्, अनिष्टप्रथमयज्ञानां च दर्शनं कर्मभेदे उपपद्यते, न सर्वशाखाप्रत्ययैककर्मणीति। नैष दोषः। यदि दिदीक्षाणा द्वादशाहेन, अदिदीक्षाणा द्वादशाहेनेत्येवं तत्। न हि सामवेदे ज्योतिष्टोमस्य विधानम्। किमतोऽपि ? यत्र विहितस्तत्रानूद्यते। तेन कर्मभेदेऽपि सर्वज्योतिष्टोमानामेष धर्मः प्राथम्यं नाम। अतो नानाकर्मपक्षेऽप्यवश्यं द्वादशाहस्याऽऽहारव्यपदेशः कल्पनीयः। तस्माददोषः ॥२५॥**

त० वा०—अदीक्षितदर्शनं द्वादशाहे तवाप्यनुपपन्नम्। ताण्डके सर्वशाखागतज्योतिष्टोमानुवादेन प्राथम्यविधानात्। न हि तत्रापरस्यापि ज्योतिष्टोमस्यो-

त्पत्तिरस्ति । यस्य नियमः स्यात् । अत आध्यवर्यवाणामेव नियमे, उभयपक्षे समे च दोषे सति उभाभ्यामेषोऽर्थो वर्णनीयः, यदि द्वादशाहेन पुरा दिदीक्षाणा अदिदीक्षाणा वेति । तस्मादविशिष्टमेतत् ॥२५॥

न्या० सु०—यददीक्षितदर्शनं भेदलिङ्गमुक्तम् । तद्भेदपक्षेऽप्ययुक्तत्वान्न पक्षविशेषसाधकमित्येवमाद्यसूत्रावयवं व्याचष्टे—**अदीक्षितेति** । सर्वेत्यनेन ज्योतिष्टोमपश्चाद्भावस्य सर्वशाखास्थद्वादशाहशेषत्वमुक्तमुपपादयितुं प्राथम्यस्य सर्वज्योतिष्टोमधर्मत्वं भाष्यकृतोक्तं विवृणोति—**ताण्डकइति** । न होति सूत्रावयवव्याख्यानार्थं न हीति भाष्यं व्याचष्टे—**न हीति** । सामवेदे ज्योतिष्टोमस्योत्पत्त्यभ्युपगमे यजुर्वेदोत्पन्नाज्ज्योतिष्टोमाद्भेदः स्यात् । न चासाविष्ट इति सूचनाय—**अपरेस्येत्युक्तम्** । तस्मादिति सूत्रावयवव्याख्यानार्थमत इति भाष्यं व्याचष्टे—**तत्रेति** । सामवेदे ज्योतिष्टोमोत्पत्त्यभावादध्वर्युवेदोत्पन्नानां ज्योतिष्टोमानां भेदे सत्यविशेषात्सर्वेषामेव प्राथम्यनियमे सत्येकं द्वादशाहं प्रति सर्वज्योतिष्टोमानां प्राथम्यायोगात् । तद्द्वारा सर्वेषां द्वादशाहानां ज्योतिष्टोमपश्चाद्भावनियमापत्तेः पक्षद्वयेऽपि दोषसाम्यात्, तत्परिहारार्थं 'यदि पुरा द्वादशाहेन दिदीक्षाणा' यदि पुरा द्वादशाहेनादिदीक्षाणा इति चाध्याहारेण द्वादशाहस्य पक्षद्वयेऽप्युभयथा व्यपदेशः स्यादित्यर्थोऽनेन दर्शितः । तस्मादिति सूत्रार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ॥ २५ ॥

भा० प्र०—पूर्वपक्षी ने कहा है शाखान्तर में अर्थात् ताण्ड्य शाखा में ज्योतिष्टोम का प्रथमत्व विहित होता है—प्रथम में ज्योतिष्टोम न कर अन्य यज्ञ नहीं किया जायगा । किन्तु शाखान्तर में "यदि पुरादिदीक्षाणाः" इत्यादि वाक्य में अनिष्ट प्रथम यज्ञ व्यक्ति का अर्थात् जो प्रथम कर्तव्य ज्योतिष्टोम नहीं करता है उसके पक्ष में भी द्वादशाह नामक यज्ञ विहित होता है, इसलिए शाखान्तर में ज्योतिष्टोम के पूर्व में द्वादशाह और यज्ञ का निषेध और शाखान्तर में ज्योतिष्टोम के प्रथम में ही द्वादशाह का विधान होने से द्वादशाह रूप कर्म सभी शाखाओं में अभिन्न नहीं है, किन्तु, विभिन्न है । इसके उत्तर में सिद्धान्ती का कहना है कि पूर्वपक्षी का यह युक्ति युक्तियुक्त होता यदि जिस शाखा के ज्योतिष्टोम का प्रथमत्व विहित होता है, उसमें ही ज्योतिष्टोम की विधि रहती । सामवेद के ताण्ड्य शाखा में ज्योतिष्टोम का प्राथम्य विहित होता है, किन्तु सामवेद में ज्योतिष्टोम की विधि नहीं है, इसलिए, सूत्र में कहा गया है "न हि तत्र कर्मचोदना" अतः, ज्योतिष्टोम का प्रथमत्व उस शाखावालों के पक्ष में विहित है—यह नहीं कहा जा सकता है । ज्योतिष्टोम की प्रथमस्थ विधि को निरर्थक नहीं कहा जा सकता है । अतः, वह सभी शाखास्थ ज्योतिष्टोम का ही शेष अर्थात् अङ्ग होगा । इसी लिए सूत्र में कहा गया है "सर्वशेषत्वात्", ज्योतिष्टोम का प्राथम्य सभी शाखा की ही विधि हो तो जहाँ अनिष्ट प्रथम यज्ञ व्यक्ति के पक्ष में भी द्वादशाह सत्र की कर्तव्यता उपदिष्ट होती है, वहाँ भी ज्योतिष्टोम का प्रथमत्व रहेगा । किन्तु एक ही व्यक्ति

प्रथम में ज्योतिष्टोम न कर द्वादशाह का अनुष्ठान करता है और प्रथम में ज्योतिष्टोम का समापन कर द्वादशाह का अनुष्ठान करेगा, इस प्रकार विधि के विरुद्ध होने से द्वादशाह का प्रयोग भेद स्वीकार करना होगा अर्थात् विकल्प मानना होगा—प्रथम में ज्योतिष्टोम का अनुष्ठान करके भी द्वादशाह का अनुष्ठान किया जाता है या प्रथम में ज्योतिष्टोम का अनुष्ठान करके भी द्वादशाह किया जाता है—इस प्रकार विकल्प ही स्वीकार करना होगा। यही सूत्र में "तस्मात् द्वादशाहस्य आहारव्यपदेशः स्यात्" इस अंश में कहा गया है। विकल्प मानने पर प्राथम्य विधान शाखा भेद में द्वादशाह नामक कर्म का भेद रहने पर भी उपपन्न होता है एवं कर्म का भेद न रहने पर उपपन्न होता है। अतः, प्राथम्य रूप लिङ्ग पूर्वपक्ष और सिद्धान्त दोनों मतों में ही समान है। इसी लिए सूत्र में कहा गया है "लिङ्गमविशिष्टम्" प्राथम्य रूप लिङ्ग जब साधारण है, तब उसके द्वारा कर्म का भेद सिद्ध होगा—यह नहीं कहा जा सकता है।

"लिङ्गम्" = प्रथमत्व रूप लिङ्ग, "अविशिष्टम्" = अविशिष्ट अर्थात् पूर्वपक्ष एवं उत्तरपक्ष दोनों स्थलों में ही एक रूप है, "सर्वशेषत्वात्" = यतः ज्योतिष्टोम का प्रथमत्व सर्वशेष अर्थात् सभी कर्मों का अङ्ग है, "तत्र" = उस स्थल में अर्थात् जहाँ ज्योतिष्टोम का प्रथमत्व विहित होता है, "कर्मचोदना" = कर्म की = ज्योतिष्टोम की विधि, "न हि"=नहीं है, "तस्मात्" = इस कारण से, "द्वादशाहस्य"=द्वादशाह नाम के यज्ञ की, "आहाख्यपदेशः स्यात्"=प्रयोग भेद होगा ॥२५॥

**द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद् व्यवतिष्ठेत तस्मान्नित्यानुवादः स्यात् ॥२६॥**

**शा० भा०–द्रव्ये चाग्नावचोदितत्वादेकादशिन्याः सम्मानपरिमाणं प्रति नैषा व्यवस्था स्यात्। नैवाग्नावेकादशिनी चोद्यते। कुतः पक्षसंमानम्, वेदिसंमानं वा स्यात्। द्वयमप्येतत्परार्थं कीर्त्यते, पश्वेकादशिनीविधानार्थम्। [1]यदि पक्षसंमिता स्यादयं[2] दोषः स्यात्। वेदिसंमाने न दोषो भवेत्। क एतत्[3] संकटमध्यवसातुमर्हति[4]। एकस्मिन्यूप एकादश पशवो नियोक्तव्या इति। वाचस्तोमादिषु तु यूपैकादशिन्यामस्य नित्यानुवादत्वाद्रथाक्षमात्राण्येव यूपान्तरालानि भविष्यन्ति। नित्यानुवादत्वाच्चासत्यपि पक्षसंमाने, वेदिसंमाने वैकादशिनीविधानार्थं वचनमुपपद्यत एवेति न दोषः ॥२६॥**

त० वा०—अथ यदुक्तमेकादशिन्यां पक्षवेदिसंमानदर्शनं न स्यादिति। तत्र ब्रूमः।

---

१. ब० यत्। २. स्यादेषदोषः। ३. ब० एनं। ४. ब० अध्यवमानं।

अन्यथाऽपि तु नैवास्ति पक्षवेद्यादिमानता।
एकादशिन्यभावेन स्तूयते[1] त्वेकयूपता॥

एकयूप एकादश पशव इत्यस्य विधेः शेषोऽयं 'यत्पक्षसंमितामित्या'दि। एकादशिन्यां हि सत्यामन्यतरसमानाश्रयणात्क्लेशो भवेत्। तस्मादेकयूप एव वरमिति। पक्षसंमानं तावदत्यन्ताप्राप्तमेवेति नित्यानुवादः। वेदिसंमानोपदेशोऽपि प्रशंसारूपेणैकयूपप्रशस्ततरत्वज्ञापनार्थः। रथाक्षमात्रान्तरालता च यत्रैकादशिनी विहिता, तत्र भविष्यतीत्यविरोधः। इह तु वेदिसंमानस्य प्रशंसया विधेयत्व-प्रतीतेरशक्यमन्यस्तुत्यर्थत्वं कल्पयितुम्। अतः पक्षसंमानस्याप्राप्तस्यैव वेदि-संमानस्तुत्यर्थो नित्यानुवाद इति समर्थयितव्यम्। प्राकरणिकत्वाच्चास्यैवाग्नौ बलीयस्त्वमिति अनारभ्याधीतो रथाक्षमात्रान्तरालविधिस्तद्विनिर्मुक्ता विकृति-र्गमिष्यति।

सूत्रमप्येवं नेयम्। यदि हि द्रव्ये वेदिसंमानं न चोद्येत ततोऽर्थानाम्—पक्षसंमानादिविधीनामव्यवस्था स्यात्। सा च रथान्तरालत्वेन बाध्येत, न त्वेव-मस्तीत्यविरोधः॥२६॥

न्या० सु०—अग्न्याख्ये द्रव्ये यूपैकादशिन्या अचोदितत्वात्सम्मानानपेक्षत्वेन सम्मान-विधीनां मध्ये न कस्य चित्सम्भव. स्यात्, यदि ह्यग्नौ यूपैकादशिन्या निर्देशः स्यात्, ततः कश्चित्सम्मानविधिः सम्भवेत्, तस्मान्ना'न्तरिक्षे न दिवीतिव'त्सम्माननिषेधो नित्यानुवादः स्यात्, नित्यानुवादत्वादेव च वाचस्तोमादौ यूपैकादशिनीसद्भावेऽपि पक्षवेदीसम्मानयोर-प्राप्तेस्तत्र रथाक्षमात्रान्तरालविधिर्न विरुध्यतइत्येवं यथाभाष्यं तावत्सूत्रम् अनुभाषणपूर्वं व्याख्यातुमाह—**अथेति**। भेदपक्षेऽप्यग्नौ यूपैकादशिन्यभावात्पक्षमानं वेदिमानम्, आदि-शब्दोक्ता रथाक्षमात्रान्तरालता च नास्तीत्युक्ते पश्वेकादशिनीविधानादेवाविहितापि यूपैका-दशिनी प्रतिप्रधानावृत्तिन्यायात् भविष्यतीत्याशङ्क्य—**श्रूयतइत्युक्तम्**। यूपैक्यश्रुत्या न्यायप्राप्तैकादशिनीबाधादभाव इत्याशयः। नित्यानुवादप्रयोजनोक्त्यर्थं द्वयमपीति भाष्यं सम्माननिषेधानुवादस्य पश्वेकादशिनीविधानशेषत्वायोगादयुक्तमाशङ्क्य यूपैक्यविधायि-वाक्योपलक्षणार्थत्वं पश्वेकादशिनीविधानोक्तेः सूचयन्व्याचष्टे—**एकेति**।

यूपैक्यविधिस्तुत्यर्थत्वोपपादनार्थं यदित्यादिभाष्यं पक्षसम्माने तावत्स्पष्ट एवोक्तो दोषः। वेदिसम्माने तु स्पष्टदोषाभावेऽपि यूपान्तरालानां न्यूनातिरेकनिवृत्तयेऽतिनैपुण्य-सम्पादनाय क्लेशलक्षणस्य दोषस्याऽपरिहार्यत्वेन यूपैकादशिन्या दुष्टत्वाद्यूपैक्यमेव प्रशस्त-मित्येवमर्थत्वेन व्याचष्टे—**एकादशिन्यां हीति**।

नन्वग्नौ यूपैकादशिन्यभावात्कस्य चित्सम्मानस्याभावेऽपि वाचस्तोमादौ यूपैका-दशिनीसद्भावे सम्मानत्रयसमावेशः। कर्मैक्ये विरुध्येतेत्याशङ्कानिरासार्थं वाचस्तोमादिषु

१. क० श्रूयते।

त्विति भाष्यं पक्षसम्मानस्य निन्दया वर्ज्यत्वावगमादनेकयूपत्वेऽप्यप्राप्तैर्निन्दोन्नीतस्य च तन्निषेधस्य नित्यानुवादत्वेन पक्षसम्माने विध्यभावाद्वेदिसम्मानोक्तेश्च 'जर्त्तिलयवाग्वा वा जुहुयाद् गवीधुकयवाग्वा वा जुहुयान्न ग्राम्यान् पशून् हिनस्ति नारण्यानि' त्यादिवद्विधेयान्यप्रशंसारूपत्वेन विधेयरूपैक्यप्रशस्ततरत्वज्ञापनार्थत्वाद्वेदिसम्मान-निन्दार्थत्वावगतेर्निन्दोन्नीतस्य तन्निषेधस्यापि नित्यानुवादत्वावगतेर्वेदिसम्मानस्यापि विध्य-भावद्यूपैकादशिन्यां सत्यां रथाक्षमात्रान्तरालत्वस्यैव निवेशादविरोध इत्येवं व्याचष्टे—**पक्षेति**। पक्षवेदिसम्मानयोरभावे तत्र कीर्त्तनं निरावलम्बनं स्यादित्याशङ्क्यासतोरपि जर्त्तिलादिवदन्यस्तुत्यर्थं कीर्त्तनं युक्तमित्यभिधानार्थं नित्यानुवादाच्चेति भाष्यं स्पष्टत्वान्न व्याख्यातम्। वेदिसम्मानोक्तेः स्तुत्यर्थत्वं दूषयति—**इह त्विति**। जर्त्तिलादावनाहुतिर्वै जर्त्तिलाश्च गवीधुकाश्चेत्यादिनिन्दाश्रुतिवद्वेदिसम्माननिन्दाश्रुत्यभावात् सम्मानविध्यन्यथा-नुपपत्त्या च शाखान्तरे यूपैकादशिनीविधानस्यापि कल्पयितुं शक्यत्वाद्यूपैकादशिनीपक्षे वेदिसम्मानविध्युपपत्तेर्नान्यस्तुत्यर्थत्वकल्पना युक्तेत्याशयः।

कथं तर्हि नित्यानुवादता सूत्रकृतोक्तेत्याशङ्क्याह—**अत इति**। नन्वेवमपि वेदि-सम्मानरथाक्षमात्रान्तरालयोः कर्मैक्ये विरोधः स्यादित्याशङ्क्याह—**प्राकरणिकत्वाच्चेति**। ज्योतिष्टोमेऽग्न्यभावेऽपि पश्वेकादशिन्यविधानाद्यूपैकादशिन्यप्राप्तेर्यासु विकृतिष्वग्न्यभावेऽपि पश्वेकादशिनी विहिता, तद्विषयत्वं रथाक्षमात्रान्तरालविधेर्विकृत्युक्त्योक्तं विशिष्टमपि सूत्रं व्यवधारणकल्पनया गमयितव्यमित्याह—**सूत्रमपीति**। स चेत्यनेन निश्चितरूपाति-देशनाद्विधानाद्रथाक्षमात्रान्तरालत्वमेव व्यवतिष्ठेतेत्येवं निर्देशादित्यवयवो व्याख्यातः ॥२६॥

भा० प्र०—शाखा भेद के अनुसार कर्म का भेद न होने पर लिङ्ग का विरोध होगा—यह पूर्वपक्षी कह सकते हैं, क्योंकि, शाखा विशेष में महाग्निचयन प्रकरण में एकादश यूप के प्रत्येक के मध्य में जो पक्ष परिमाण = श्येनाकार में स्थापित अग्नि के पक्ष के समान परिमाण विशिष्ट व्यवधान स्थान उसकी निन्दाकर वैदिक परिमाण स्थान का व्यवधान रहेगा—यह कहा गया है। अन्य शाखाविशेष में यूपों के मध्य में रथाक्ष परिमाण अन्तराल का विधान किया गया है। इस प्रकार इसके मध्य में विरोध प्राप्त होता है, किन्तु शाखाभेद के अनुसार कर्म भेद मानने पर विरोध नहीं होता है। किन्तु, पूर्वपक्षी का यह कथन समीचीन नहीं है। क्योंकि महाग्निचयन में एकादश यूप न कहने से वहाँ मध्य में अन्तराल का प्रश्न ही नहीं उठता है क्योंकि, वहाँ एक ही यूप है उसका वेदि परिमाण ही होगा। तब जिस स्थल में अर्थात् वाचः स्तोत्र में एकादश यूप का विधान है, वहाँ उसका प्रसङ्ग होगा—उसी स्थल में रथाक्ष परिमाण व्यवधान विहित होगा। यदि कहा जाय कि पक्षसम्मित परिमाण की जो निन्दा की गई है, उसकी समी-चीनता किस प्रकार से होती है ? इसके उत्तर में यह कहा जा सकता है कि वह नित्य अनुवाद है और यूप का वेदि परिमाणता की प्रशंसा करने के लिए ही इस प्रकार अनुवाद किया गया है। प्रशंसापूर्वक वेदिपरिमाण विधि इसको भी वेदिपरिमाण करने का

प्रयोजन नहीं है, किन्तु, पश्वेकादशिनीते = एकादश पशु युक्त धर्म विशेष में जो एकादश यूप आवश्यक नहीं है, किन्तु एक ही यूप कर्तव्य है, इस प्रकार यूप की एकता का विधान है, उसी की प्रशंसा का बोध किया गया है, यूप की वेदिपरिमाणता पक्षपरिमाणता की अपेक्षा अति प्रशस्त होने पर भी यूप का जो एकत्व विहित है, वह उसकी अपेक्षा अप्रशस्त है—इस प्रकार प्रशंसा ही इस स्थल में विवक्षित है। मीमांसाकौस्तुभ में इसी रूप में भाष्य का अभिप्राय व्यक्त किया गया है।

"द्रव्य" = अग्नि चयन में "अचोदित्वात्" = वेदि परिभाषा यदि चोदित अर्थात् विहित न होता तो, "विधीनाम् अव्यवस्था स्यात्" = पक्ष परिमाण आदि विधि अर्थात् विधेयों की अव्यवस्था=परस्पर विरोध हो सकता था, "निर्देशात्" = किन्तु निर्देश अर्थात् स्थल विशेष में उल्लेख होने से "व्यवतिष्ठेत"=व्यवस्थायुक्त होता है, "तस्मात्"=अतएव, "नित्यानुवादः स्यात्"=पक्ष परिमाण नित्यानुवाद अर्थात् सार्वकालिक अनुवाद होगा।

अथवा मीमांसाकौस्तुभ ग्रन्थ में इस प्रकार कहा गया है—"द्रव्ये च" अग्नि प्रकरण में, "अचोदितत्वात्"=अन्तराल का विधान न होने से, "विधीनाम् अव्यवस्था"=रथाक्षमात्र अन्तराल होगा इत्यादि विधियों का इस प्रकरण में व्यवस्थिति अर्थात् सन्निवेश या प्राप्ति नहीं होगी, "निर्देशात् व्यवतिष्ठेत"=किन्तु वेदिपरिमाण का ही निर्देश होने से वही इस प्रकरण में अर्थात् अग्नि-प्रकरण में यूप के परिमाण के निरूपण के विषय में व्यवस्थित होगा, "तस्मात् नित्यानुवादः स्यात्"=अतएव पक्ष सम्मान की जो निन्दा उसका नित्य अनुवाद होगा ॥२६॥

## विहितप्रतिषेधात्पक्षेऽतिरेकः स्यात् ॥२७॥

**शा० भा०—अतिरात्रे गृह्णाति षोडशिनम्, इति विहितः षोडशी नातिरात्रे गृह्णाति षोडशिनम्, इति प्रतिषिद्धः। तत्र पक्षे द्वयोः स्तोत्रीययोरतिरेकः, पक्षे तिसृणाम्। तस्माददोषः। कथं पुनरयं द्वयोस्तिसृणां वाऽतिरेकः? त्रिवृद्बहिष्पवमानं तत्तावन्नवकम्। पञ्चदशान्याज्यानि, तानि तावच्चत्वारि, तेन सा षष्टिः। पञ्चदशो माध्यंदिनः पवमानः। तया पञ्चदशसंख्यया सह पूर्वया च नवसंख्यया चतुरशीतिः। सप्तदशानि पृष्ठानि चत्वारि, सप्तदश आर्भवः पवमानः, पञ्चसप्तदशकानि तानीति पञ्चाशीतिः पूर्वया चतुरशीत्या सहैकोनसप्ततिशतम्। एकविंशं यज्ञायज्ञियम्, तयैकविंशत्या सह, तस्य नवतिशतं स्तोत्रीया इति ब्राह्मणवादः। अग्निष्टोममात्रमभिप्रेत्योच्यते, सा विराट् संपूर्णा। विराडिति दशकाख्या। त्रय एकविंशका उक्थ्यपर्यायाः, सा त्रिषष्टिः। एकविंशः षोडशी। तयैकविंशत्या सह चतुरशीतिः। पञ्चदशका रात्रिपर्यायास्त्रयः। तत्रैकैकपर्यायश्चतुःस्तोत्रः। तदशीतिशतं संपूर्णा विराट्। त्रिवृद्रथंतरं पञ्चसाम, तन्नवकम्। ततश्चतुरशीतेरेकं नवकमागच्छति। तथा तिस्रः संस्तुतानां विराजमतिरिच्यन्ते।**

**यदा षोडशी न गृह्यते, तदा एकविंशत्या विना द्वे संस्तुतानां विराजमतिरिच्यते। एवमेककर्मत्वेऽपि लिङ्गमुपपद्यते ॥२७॥**

त० वा०—वैकल्पिके षोडशिन्यगृह्यमाणे द्वयोरतिरेकः। क्रियमाणे त्वेकविंशतिप्रचयादृग्द्वयादेकातिरेकेण तिस्रो भवन्ति। तस्मादविरोधः ॥२७॥

न्या० सु०—षोडशिग्रहणस्य विहितत्वात्, प्रतिषेधाच्च। ग्रहणपक्षे द्वयोः, ग्रहणपक्षे तिसृणामतिरेकः स्यादित्येवं तृतीयलिङ्गपरिहारसूत्रं व्याचष्टे—**वैकल्पिक इति** ॥ २७ ॥

भा० प्र०—पूर्वपक्षी ने यह कहा है एक ही कर्म में किसी शाखा में अतिरिक्त स्तोत्रीया होंगे, इस प्रकार का विरोध भी कर्मभेद के लिए दूसरा लिङ्ग होगा। यह कथन भी समीचीन नहीं है। कारण, अतिरात्र नामक यज्ञ में षोडशि नामक ग्रह के ग्रहण की विधि एवं निषेध दोनों होने से विकल्प होता है। यदि ग्रह का ग्रहण किया जाय, तब तीन स्तोत्रीया अतिरिक्त होगा और यदि ग्रह का ग्रहण नहीं किया जाय तो दो अतिरिक्त होगा। इस प्रकार विकल्प के अनुसार व्यवस्था होने से यह अतिरेक लिङ्ग के द्वारा भी कर्मभेद सिद्ध नहीं होता है।

"विहितप्रतिषेधात्"=विधि एवं प्रतिषेध रहने से, "पक्षे" =पाक्षिक रूप में अर्थात् विकल्प रूप में, "अतिरेकः स्यात्"=अतिरिक्त होगा ॥२७॥

## सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥२८॥

**शा० भा०—यदुक्तम्, पुरोडाशिनाम्, साम्नाय्यिनां च सारस्वते दर्शनं भवतीति। ज्योतिष्टोमपूर्वकत्वात्सर्वकर्मणां विप्रतिषिद्धमेतदिति[1]। तेन यदा सांनाय्यिन इति कल्प्यते ॥२८॥ पूर्वपक्षनिरासः ॥**

त० वा०—सारस्वते हि द्वादशाहन्यायेनैवोभयोः पक्षयोर्ज्योतिष्टोमपूर्वकत्वादवश्यमेवं वक्तव्यम्। यदा पुरोडाशिनः पौर्णमासीपक्षे तदोपवसन्ति, यदा सांनाय्यिनोऽमावास्यापक्षे तदा वत्सानपाकुर्वन्तीति। भवति हि कालभेदादपि कर्तृभेदोपचारस्तस्मादप्यदोषः ॥२८॥

न्या० सु०—सर्वसोमयागानां ज्योतिष्टोमपश्चाद्भावनियमेन सारस्वते द्वादशाहवत्पक्षद्वयेऽप्यनिष्टप्रथमयज्ञत्वनिमित्तपुरोडशित्वदर्शनविप्रतिषेधाद्यदा पुरोडाशिन इति कालभेदनिमित्तपुरोडाशित्वं स्यादित्येवं चतुर्थलिङ्गपरिहारसूत्रं व्याचष्टे—**सारस्वतेऽपीति।** मित्रावरुणयोरयने सारस्वतसत्रविशेषे यथामावास्यायामतिरात्रः स्यात्तथा दीक्षेरंस्तेऽमावास्यायामतिरात्रं संस्थाप्य तदहरेव वत्सानपाकुर्यास्तं पक्षमामावास्येन व्रजित्वा पौर्णमास्यां गामुपेयुः, पौर्णमासेनोत्तरं व्रजित्वामावास्यायामायुषमुपेयुरेवमावर्त्तयन्तो व्रजेयुरित्यनेन वाक्येन प्रतिमासमेकस्मिन्पक्षेऽमावास्याख्यकर्मविधानात्पक्षान्तरेण पौर्णमावास्याख्यकर्म-

---

1. ब० तदिति यदासान्नाय्यिन, पुरोडाशिन इति कल्प्यते।

विधानात्पुरोडाशिशब्दः पौर्णमासाख्यकर्मोपयोगिपक्षोपलक्षणार्थः। सान्नायिशब्दश्चामावास्याख्यकर्मयोगिपक्षोपलक्षणार्थ इत्येवमवश्यं पक्षद्वयेऽपि वक्तव्यमित्यर्थः। ननुकालभेदविवक्षायां पुराडाशिनः, सान्नायिन इति कर्तृभेदव्यपदेशो न युज्येतेत्याशङ्क्याह—**भवति हीति**। उपचारात्कर्तृव्यपदेश इत्याशयः। सूत्रार्थमुपसंहरति—**तस्मादपीति** ॥२८॥

भा० प्र०—पूर्वपक्षी ने कहा है कि सारस्वत सत्र में = यज्ञविशेष में "ये पुरोडाशिनस्ते उपवसन्ति ये सान्नायिनस्ते वत्सान् वारयन्ति" = "जो पुरोडाशी अर्थात् सोमयाग = ज्योतिष्टोम यज्ञ प्रथम नहीं करते हैं वे उपवास करें और सान्नायी = सोमयाग अर्थात् ज्योतिष्टोम यज्ञ प्रथम में करते हैं, वे वत्स का वारण करें" इस प्रकार एक ही सारस्वत-सत्र में दो परस्पर विरुद्ध विषयों का दर्शन=समावेश कर्म भेद के विना नहीं हो सकता है, किन्तु, यह सङ्गत नहीं है। क्योंकि, "ये पुरोडाशिनः" इत्यादि वाक्य में "यदा" इस पद का अध्याहार करना होगा।

आशय यह है कि "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः" इत्यादि श्रुति से जाना जाता है कि सोमयाजी के पक्ष में ज्योतिष्टोम प्रथम में अनुष्ठेय है। यह सारस्वत सत्र सोमयाग विशेष है। अतः जो व्यक्ति ज्योतिष्टोम यज्ञ नहीं करता है, उनका इसमें अधिकार ही नहीं हो सकता हैं, ऐसी स्थिति में श्रुतिका "ये पुरोडाशिनः" इत्यादि उक्ति किस प्रकार सङ्गत होती है। कारण, "ये पुरोडाशिनः" इत्यादि श्रुति में वह व्यक्ति ज्योतिष्टोम नहीं करते हैं और सारस्वत सत्र का अनुष्ठान करते हैं उसी का उल्लेख किया जाता है। शाखा भेद से यदि कर्म भिन्न होता है तो किसी-किसी शाखा वाले के पक्ष में उस शाखा में विहित स्वतन्त्र ज्योतिष्टोम किसी सामयाग के पूर्व में प्रथमतः अवश्य कर्तव्य होता है और किसी-किसी शाखा वाले के लिए अपनी शाखा में विहित स्वतन्त्र ज्योतिष्टोम आदि न करने पर भी चलता है, उस पक्ष में "ये पुरोडाशिनः" इत्यादि उल्लेख सङ्गत होता है।

इसके समाधान में सिद्धान्ती का कहना है कि "ये पुरोडाशिनः" इत्यादि श्रुति-वाक्य का अर्थ "यदा पुरोडाडिनः" अर्थात् जब पुरोडाशी होगा या जब सान्नायी होगा"। इस स्थल में "पुरोडाशी" यह शब्द पौर्णमासी नामक कर्म के उपयोगी काल का ज्ञापक एवं 'सन्नायी' शब्द अमावस्या नाम के कर्म का उपयोगी काल का ज्ञापन है। कारण, यह जो सारस्वत सत्र है, इसके प्रसङ्ग में "यथा अमावस्यायाम् अतिरात्रः स्यात् तथा दीक्षेरन्" इत्यादि वाक्य में श्रुति में जो कहा गया है, उसका तात्पर्य यह है कि सारस्वतसत्र का दूसरा "मित्रावरुणयोरयन" है। वर्ष से अधिक काल में अनुष्ठेय जो सोमयाग विशेष है, उसको अयन कहा जाता है। इस सारस्वतसत्र के अनुष्ठान में प्रतिमास अमावस्या एवं पौर्णमासी नाम में एक एक बार कर्म का सम्पादन कर्तव्य कोटि में आता है। पौर्णमासीका कर्म पुरोडाश से साध्य है। यह पुरोडाश से साध्य पौर्णमासो जब कर्तव्य होता है तब उपवास करना पड़ता है—यही "यदा पुरोडशिनः" इस आकार में

परिवर्तित वचन का अर्थ है और इसमें अनिष्ट प्रथम यज्ञ (जो ज्योतिष्टोम यज्ञ नहीं करता है वैसा) व्यक्ति का प्रसङ्ग नहीं है, अतः किसी प्रकार का विरोध नहीं है।

"सारस्वते" = सारस्वत सत्र नाम के यज्ञ में, "विप्रतिषेधात्" = विप्रतिषेध अर्थात् विरोध होने से "यदा इतिस्यात् = 'यदा' इस प्रकार होगा अर्थात् 'यदा' इस पद का अध्याहार करना होगा ॥ २८ ॥

अतः पूर्वपक्षी की आशङ्का निर्मूल है।

**उपहव्येऽप्रतिप्रसवः ॥२९॥**

**शा० भा०—अथ यदुक्तम्, उपहव्ये बृहद्रथन्तरविधानं प्रकृतिप्राप्तमेव। एककर्मत्वे प्रतिप्रसवतयाऽप्यसंभवाद्विधीयमानमनर्थकं स्यादिति। तत्परिहर्तव्यम्। आभाषान्तं सूत्रम् ॥२९॥ आशङ्का ॥**

त० वा०—अनुभाषणं सामान्यपरिहारो वा ॥२९॥

न्या० सु०—उपहव्यस्य भेदे सत्यतिदेशप्राप्तबृहद्रथन्तरविकल्पनिवृत्तिः प्रतिप्रसवाख्या पुनःश्रुतिप्रयोजनं स्यात्। ऐक्ये तु शाखाद्वयप्रत्ययत्वात्पुनःश्रुतावपि विकल्पापत्तेर्न तन्निवृत्याख्यः प्रतिप्रसवः प्रयोजनमिति पुनःश्रुत्यानर्थक्यं स्यादित्येवमनुभाषणार्थत्वेन यथाभाष्यं तावत्सूत्रं व्याचष्टे—**अनुभाषणेति**। उपहव्ये बृहद्रथन्तरपुनःश्रुतेर्न प्रतिप्रसवोऽस्माकं प्रयोजनत्वेनेष्टो, येन तदसम्भवादानर्थक्यं स्यात्किं त्वन्यत्किंचिदित्येवं सामान्यपरिहारार्थत्वेन स्वयं व्याचष्टे—**सामान्येति** ॥ २९ ॥

भा० प्र०—शाखा के भेद से कर्म का भेद होना है, इसका प्रतिपादन करने के लिए पूर्वपक्षी ने पुनः कहा है कि शाखाविशेष में 'उपहव्य' नाम के यज्ञ में "उपहव्योऽनिरुक्तो" अग्निष्टोमो यज्ञः रथन्तरसामा, अश्वः श्यावो दक्षिणा" इस वाक्य में 'रथन्तर' नाम के साम का उल्लेख है। अन्य शाखायें "उपहव्योऽनिरुक्तः उक्थ्या यज्ञो बृहत्सामा अश्वः श्वेतो रुक्मललाटो दक्षिणा" इस वचन में 'बृहत्' नाम के साम का निर्देश है, यदि यह एक ही कर्म है, तब रथन्तर बृहत्सामे का विकल्प होगा। किन्तु इस यज्ञ के प्रकृतिभूत यज्ञ से ही रथन्तर एवं बृहत् नाम के दोनों सामों का पूर्व से ही विकल्प से प्राप्ति होने से ये दोनों वचन निरर्थक हो जायेंगे। किन्तु शाखाभेद से कर्म का भेद मानने पर इन दोनों वचनों से प्रकृति से विकल्प प्राप्त दोनों सामों का प्रतिप्रसव किया गया है अर्थात् व्यवस्था करके दिखाया गया है—उन शाखाओं में वचनविहित बृहत् अथवा रथन्तर ही ग्रहणीय होता है—यह नियम है। अतः, इस प्रकार अन्यार्थ दर्शन भी शाखाभेद में कर्म भेद का लिङ्ग है। पूर्व पक्षी की इस प्रकार की आपत्ति भी ठीक नहीं है, कारण, "उपहव्योऽप्रतिप्रसवः" = इस स्थल में जो बृहत् और रथन्तर साम का पुनः उल्लेख = प्रतिप्रसव उसका प्रयोजन नहीं है। किन्तु उसका अन्य ही प्रयोजन है। इस प्रयोजन को अग्रिम सूत्र में कहा गया है, अतः शाखाभेद में कर्म के अभिन्न होने पर भी कोई दोष नहीं है।

भाष्यकार के मत में इस सूत्र में पूर्वपक्षी के मत का पुनः कथन मात्र है—यही माना गया है, किन्तु वार्तिककार ने इसका परिहार परक अर्थ मानकर व्याख्या की है।

"उपहव्ये" = उपहव्य नाम के यज्ञ में, "अप्रतिप्रसवः = प्रतिप्रसव अर्थात् विशेष विधान नहीं है ॥ २९ ॥

**गुणार्था वा पुनःश्रुतिः ॥३०॥**

**शा० भा०—यदा रथन्तरसामा तदा, अश्वः श्वेतो दक्षिणा, यदा बृहत्सामा तदा रुक्मललाट इति ॥३०॥ आशङ्कानिरासः ॥**

त० वा०—संस्थाव्यवस्थार्था वा बृहद्रथन्तरयोः पुनःश्रुतिर्भविष्यति ॥३०॥

न्या० सु०—यदेति भाष्यात् दक्षिणाव्यवस्थालक्षणगुणविध्यर्था निमित्तत्वेन बृहद्रथन्तरपुनः श्रुतिरिति सूत्रार्थः । प्रतिभाति । स च संस्थाश्रुत्यानर्थक्यापत्तेरयुक्त इति मत्वोपलक्षणार्थत्वम्भाष्यस्य सूचयन्सूत्रं व्याचष्टे—**संस्थेति** । संस्थासामदक्षिणाविशिष्टयागविधावरुणैकहानीन्यायात्पार्ष्णिकपरस्परनियमावगमे सति सामश्रुतेः प्राप्तार्थत्वान्निमित्तपरत्वं प्रतीयमानमविशेषादुभयव्यवस्थार्थं प्रतीयतइत्याशयः—**चशब्दार्थे वाशब्दः** ॥ ३० ॥

भा० प्र०—पूर्वपक्षी के द्वारा दोनों वचनों के अनार्थक्य आशङ्का भी निर्मूल है, कारण, उक्त दोनों वचनों से दक्षिणा आदि विशेष गुण की व्यवस्था की गई है, अतः, वह अनर्थक नहीं है, उसमें यही कहा गया है कि उपहव्य नाम का यज्ञ रथन्तर साम से युक्त होने पर श्वेत अश्व दक्षिणा होगी और बृहत् साम से युक्त होने पर रुक्मललाट अश्व दक्षिणा होगी। वार्तिककार ने कहा है कि संस्था व्यवस्था के लिए ही इस स्थल में पुनः उल्लेख किया गया है।

"पुनः श्रुतिः" = बृहत् और रथन्तर साम के पुनः उल्लेख "गुणार्था" = गुणविशेष के विधान के लिए है, "वा"—यह पूर्वपक्ष का व्यावर्तक है अथवा निश्चयार्थक है ॥३०॥

**प्रत्ययं चापि दर्शयति ॥३१॥**

**शा० भा०—यदा न सर्वशाखाप्रत्ययमेकं कर्मेति, कथमेकस्यां शाखायां समाम्नायते, अन्यस्यां गुणो विधीयते। यथा मैत्रायणीयानां समिदादयः प्रयाजा न[1] समाम्नायन्ते। अथ च गुणाः[2] श्रूयन्ते—ऋतवो वै प्रयाजाः समानीय होतव्या इति। तथा येषां शाखिनां, कुटरुरसि, इत्यश्मादानमन्त्रो नाऽऽम्नातः तेषामपि हि दृश्यते—कुक्कुटोऽसीत्यश्मानमुपादत्ते, कुटरुरसीति वा[3] इति। तस्मादेकं कर्मेति प्रतीमः ॥३१॥ युक्तिः ॥**

शाखान्तरविहितप्रयाजानुवादेन सह होमं वदन्नन्यशाखाधीतं च 'कुटरुरसि' इति मन्त्रमश्मादाने विदधत्सर्वशाखाप्रत्ययत्वं दर्शयति ॥३१॥

---

१. ब. नाम्नायन्ते ।　　२. ब. गुणः श्रूयते ।　　३. ब. चेति ।

न्या० सु०—शाखान्तरविहिताङ्गानुवादेन तद्धर्मविधानं शाखान्तराधीतस्य च मन्त्रस्य स्वशाखाधीतेन मन्त्रेण सह विकल्पवचनमन्योन्यधर्मसाङ्कर्यं सूचयन्सर्वशाखाप्रत्ययमेकं कर्म द्योतयतीत्येवं सिद्धान्तलिङ्गोक्त्यर्थं सूत्रं व्याचष्टे—**शाखान्तरेति**। सर्वाभिः शाखाभिः प्रत्ययो ज्ञानं यस्येति समासार्थः ॥ ३१ ॥

भा० प्र०—पूर्वपक्षियों के द्वारा प्रदर्शित आपत्तियों का परिहार कर सभी शाखाओं में जो एक कर्म है, उसके साधक = प्रतिपादक लिङ्ग = प्रमाण का प्रदर्शन किया गया है। मैत्रायणी शाखा में समिदादि प्रयाज नहीं कहा गया है। तथापि 'ऋतवो वै प्रयाजाः समानीय होतव्याः" इस वाक्य में शाखान्तर में विहित प्रयाज का अनुवाद कर तद्विषयक गुण का विधान किया गया है। इसी प्रकार शाखाविशेष में 'कुटरुरसि' यह मन्त्र अश्मदान में= प्रस्तर ग्रहण रूप कर्मविशेष में नहीं पढ़ा गया है। तथापि वहाँ कहा गया है "कुक्कुटोऽसीत्यस्मानुपादत्ते कुटरुरीति वा" अर्थात् "कुक्कुटोऽसि" इस मन्त्र में अश्मादान को 'कुटरुरसि' यह मन्त्र भी ग्रहण किया जा सकता है। शाखाभेद में यदि कर्म अभिन्न न होता तो अन्य शाखा में विहित कर्म का अन्य शाखा में पठित मन्त्र इस प्रकार का का उल्लेख सङ्गत नहीं होता। अतः, सभी शाखाओं में एक ही कर्म कहा गया है।

"अपि च" = और भी, "प्रत्ययं" = प्रमाण, "दर्शयति" = दिखाते हैं, सभी शाखाओं में एक ही कर्म है, इसमें श्रुति का प्रमाण प्रदर्शित करते हैं ॥ ३१ ॥

**अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां व्यवतिष्ठेत ॥३२॥**

**शा० भा०—यो ह्यन्यशाखावस्थितान्विधीनुपसंहरति, स स्वशाखाविहितं क्रममुपरुणद्धीति। तेन शाखान्तरेषु कर्मभेद इति ॥३२॥ आ०॥**

त० वा०—प्रतिशाखं वा विधिपृथक्त्वं व्यवतिष्ठेत। तथा सति हि क्रमभेदं न यास्यन्ति स्वशाखाविहिताः क्रियाः। परिमाणं च तद्वति नान्यत्वं प्रतिपत्स्यते ॥३२॥

न्या० सु०—सर्वशाखाङ्गोपसंहारलक्षणसिद्धान्तप्रयोजनाक्षेपार्थमेतत्सूत्रं व्याचष्टे—**प्रतिशाखमिति**। एकैकस्यामिति वीप्सा प्रतिशब्देन सूचिता। ऋतवो वै प्रयाजा इत्यादावपि न शाखान्तरप्रयाजाद्यनुवादः, किं त्वन्यप्रयाजादिविधिरिति सूचनार्थं विधिपृथक्त्वोक्त्या कर्मव्युत्पत्त्या विधेयान्यतोक्ता कालपरिमाणयोरपि क्रमोक्त्योपलक्षणं सूचयन् हेत्वर्थं व्याचष्टे—**तथा सति हीति**। कालोऽप्याशुनिर्माणलक्षणः पूर्वाह्णादिलक्षणश्च न बाधिष्यतइति चशब्देन सूचितम् ॥ ३२ ॥

भा० प्र०—पूर्वपक्षी ने प्रकारान्त से शाखाभेद से कर्मभेद का प्रतिपादन करते हुए कहा है—जिस शाखा में जो कर्म विहित होता है वहाँ उस कर्म के अङ्गकलाप में अनुष्ठान का एक क्रम अर्थात् पौर्वापर्य निर्दिष्ट होता है। किन्तु, शाखान्तर में उस कर्म के अङ्गों के अनुष्ठानक्रम का पार्थक्य दृष्ट होता है। अतः, शाखान्तर में कर्म का अनुष्ठान

करने पर अपनी शाखा में कथित क्रम का बाध होता है। अतएव शाखाभेद में एक ही कर्म का क्रमवैषम्य रहने पर शाखाभेद में कर्म का भी भेद मानना होगा। अन्यथा श्रुतिबोधित क्रम का लङ्घन होता है।

"अपि वा" = पक्ष परिवर्तनसूचक, "क्रमसंयोगात्" = क्रम का अर्थात् अनुष्ठेय कर्म के पारम्पर्य का संयोग = श्रुत्युक्त नियम होने से, "विधिपृथक्त्वम्" = विधि का पृथक्त्व होगा अर्थात् शाखा के भेद में कर्म का भेद होगा, "एकस्यां व्यवतिष्ठेत" = और वह एक शाखा में ही व्यवस्थित = पृथक् भाव में निबद्ध होगा ॥ ३२ ॥

**विरोधिनां त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययः स्यात् ॥३३॥**

**शा० भा०--उच्यते। नैष[1] शाखान्तरविहितानामैककर्म्ये सति विरोधिनां संयोगः। न हि क्रमो वाक्येन विरुध्यते। दुर्बलो हि क्रमः। बलवद्वाक्यम्। वाक्येन च शाखान्तरीयाणामुपसंहारः। तस्मात्सर्वशाखाप्रत्ययम्, सर्वब्राह्मणप्रत्ययं चैकं कर्म चोद्यत इति सिद्धं भवति ॥३३॥ आ० नि०॥**

**इति द्वितीयं शाखान्तराधिकरणम् ॥२॥**

**इति श्रीशाबरस्वामिनः कृतौ धर्ममीमांसाभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः।**

**समाप्तोऽयं द्वितीयोऽध्यायः ॥**

त० वा०—यत्र स्मार्ताः पदार्था न क्रमकालपरिमाणानुरोधेन बाधिताः। तत्र श्रौता बाधिष्यन्त इति कुत एतत्? तेनैव गतत्वादवाच्यमिति चेत्? न। सूत्रकारस्यात्रैव प्रथमाभिधानाद्। तत्र हि कारणाग्रहणमात्रमुपपत्तिरुक्ता। शेषं त्विह सिद्धमसूत्रितमित्यपुनरुक्तत्वम्।

तस्मात्तदेवेति मते न कर्म भिन्नं कथंचित्प्रतिशाखमिष्टम्।
न कारणं सप्तममस्ति चान्यदतो यथोक्तैव तु भेदसिद्धिः ॥३३॥

इति द्वितीयं शाखान्तराधिकरणम् ॥२॥

इति श्रीभट्टकुमारिलविरचिते धर्ममीमांसाभाष्यव्याख्याने तन्त्रवार्तिके द्वितीयाध्यायस्य चतुर्थश्चरणः समाप्तः ॥

समाप्तश्च द्वितीयोऽध्यायः ॥

न्या० सु०—कर्मैक्ये सति सर्वशाखास्थानां विधेयानामङ्गानां विधिशब्दोक्तानां तेनैकेनैव कर्मणा संयोगावगतेर्विरोधिनां क्रम-कालपरिमाणानामसंयोगात्सर्वशाखाविहितानामङ्गा-

---

१. ब. नैषांशाखान्तरगतानां।

नामेककर्माङ्गत्वप्रत्यय इत्येवं सिद्धान्तप्रयोजनसमाधानार्थे सूत्रे विरोधिनामसंयोगादिति हेतुमुपपादयितुमाह—**यत्रेति**। क्रमादीनां पदार्थप्राप्त्युत्तरकालभावित्वात्तदनुरोधवृत्तिता शिष्टाकोपाधिकरणे व्युत्पादितेत्याशयः। शिष्टाकोपाधिकरणेन तर्ह्येतत्पुनरुक्तं स्यादित्याशङ्कते—**एतेनैव चेति**। सूत्रानुक्तत्वात् पौनरुक्त्यं परिहरति—**नेति**।

ननु तेष्वदर्शनाद्विरोधस्येत्येतावता अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्निति सिद्धान्तसूत्रसमाप्तिपक्षे सूत्रोक्तत्वात्पौनरुक्त्यं स्यादित्याशङ्क्याह—**तत्र हीति**। शब्दार्थविरोधात् क्रमादिसंयोगाभावेनेहोक्तेन सिद्धाविरोधाभावस्तत्र सिद्धवद्धेतुत्वेनोक्तो न तूपपादित इत्याशयः। तस्मादित्यधिकरणार्थोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। तदेवैत्यनेनैक चेति सिद्धान्तसूत्रार्थोपसंहारः। न कथं चिदित्यनेन नामादिभेदहेतुनिरासोपसंहारः। न कारणमित्यनेन शाखान्तरभेदकत्वनिरासोपसंहारः। अध्यायार्थमुपसंहरति—**एवमिति**। उक्तेन प्रकारेण शब्दान्तरादिप्रमाणिका हि भेदसिद्धिर्न शाखान्तरप्रमाणिकेत्येवकारार्थः॥ ३३॥

**इति श्रीमत्त्रिकाण्डमीमांसामण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरकृतायां तन्त्रवार्त्तिकटीकायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां द्वितीयस्याध्यायस्य चतुर्थः पादः समाप्तः।**

**द्वितीयोऽध्यायश्च समाप्तः।**

भा० प्र०—पूर्वपक्षी ने जो आपत्ति दी है—वह सङ्गत नहीं है। कारण, क्रम के अनुरोध में पदार्थ का = कर्मादि का अन्यथा नहीं हो सकता है। पूर्वोक्त युक्तिसमूह से यह जब दृढभाव से ही सिद्धान्तित होता है कि शाखा भेद होने पर भी कर्म अभिन्न होगा, क्रम के अनुरोध से उसका भेद नहीं होगा, किन्तु उदितानुदित होम के समान क्रम का ही विकल्प होगा। अतएव सर्वशाखा प्रत्यय एवं सर्व ब्राह्मण प्रत्यय एक ही कर्म विहित होता है।

"विरोधिनाम्"=विरोधी क्रमों का, "तु"=आशङ्का निवारक, "असंयोगात्"=एक अनुष्ठान में कर्म का एकत्व सिद्ध न होने से "ऐककर्म्ये"=सभी शाखास्थ कर्मों का एकत्व सिद्ध होने पर, "विधीनां उत्संयोगात्"=विधियों अर्थात् सभी शाखाओं में पठित अङ्ग विधियों का तत्संयोग अर्थात् कर्म के साथ सम्बन्ध होने से, "सर्वकर्मप्रत्ययः स्यात्"= सभी अङ्गों का एक ही कर्म में समन्वय होगा॥३३॥

यह द्वितीय शाखान्तराधिकरण।

सभी शाखा प्रत्ययैककर्मताधिकरण॥

**यह द्वितीय अध्याय का चतुर्थ पाद है।**

**द्वितीय अध्याय समाप्त हुआ।**

———

## अथ तृतीयाध्याये प्रथमः पादः ॥

### अथ प्रथमं शेषप्रतिज्ञाधिकरणम् ।

**[१] अथाऽतः शेषलक्षणम् ॥ १ ॥ (प्रतिज्ञासूत्रम् ।)**

**शा० भा०—नानाकर्मलक्षणं वृत्तम् । अनन्तरं शेषलक्षणं वर्तयिष्यामः । कः शेष ? केन हेतुना शेषः ? कथं च विनियुज्यत इति ? श्रुत्यादीनि च विनियोगे कारणानीति वक्ष्यते । तेषां च बलवद्‌बलवत्ता । एतत्तात्पर्येणान्यदप्युपोद्‌घातादिना ॥ १ ॥**

**इति प्रथमं शेषप्रतिज्ञाधिकरणम् ॥ १ ॥**

त० वा—द्विलक्षण्याः परं शिष्टं यावत्किंचन लक्षणम् ।
तत्सर्वं वक्तुमारब्धमथातः शेषलक्षणम् ॥

**शेषलक्षणपदार्थनिरूपणम् ।**

तथा च प्रथमसूत्रोपात्तप्रतिज्ञापिण्डव्याख्याप्रदेशप्रदर्शने[१] धर्मप्रमाणस्वरूपविषयलक्षणद्वयार्थं चोदनालक्षणसूत्रेणैकेनैव सूत्रितं वर्णयित्वा, कानि अस्य साधनानि—अङ्गानि । कानि च साधनाभासानि-अनङ्गानीति, फलार्थत्वातदर्थत्वाभ्यां क्व पुरुषः प्रधानं धर्मस्य, क्व वा पुरुषो गुणभूत इत्यादि यावत्किंचन मीमांसितव्यम्, तत्सर्वं शेषलक्षणेनैव व्याख्यातम् । शेषैः । समस्तैरेव लक्षणैरित्यर्थः । इह लक्षणानां बहुत्वेऽपि, यदेकवचनं कृतम्, तल्लक्षणत्वसामान्यसंख्यामात्रविवक्षया ।

यत्तु शेषः परार्थत्वादित्यनन्तरलक्षणम् ।
तदङ्गत्वस्य वाच्यत्वादादौ तन्मात्रगोचरम् ॥

बहुष्वपि हि लक्षणार्थेषु विवक्षितेषु क्रमवशादेकस्तावदङ्गत्वरूपः शेष एतल्लक्षणगोचरः परार्थत्वहेतुकः प्रतिपाद्यते ।

समासश्च द्वेधा विगृह्य द्वयोर्वाक्यार्थयोः प्रदर्शनीयः । शेषं च तल्लक्षणं च । शेषस्य वाऽर्थस्य लक्षणमिति । षष्ठीसमासमात्राश्रयणेन वा यथाव्याख्यायमानार्थम् ।

अङ्गलक्षणमेवेदमिहोक्तं शेषलक्षणम् ।
तद्विशेषप्रपञ्चत्वात्तत्रान्यान्तर्गतिस्थितेः ॥

---

१. क० प्रदर्शनेन ।

सर्वेषां हि लक्षणान्तरार्थानां प्रयोज्याप्रयोज्यप्रयोजकाप्रयोजकषड्विधक्रम-नियमफलवत्कर्मविषयकर्त्रधिकाररूपाणां तावदङ्गात्मकशेषविशेषप्रकारत्वाल्ल-क्षणान्तरगोचराणामपि शेषलक्षणान्तर्गतत्वावधारणस्थितिः। तथा हि—

प्रयोजकाः प्रयोक्तारः शेषाणामेव शेषिणः।
क्रमोऽपि शेष एवैकप्रयोगवचनाश्रयः॥

**क्रमस्यावश्यकता तत्र प्रमाणानि च**

एकफलसाधनानामर्थानां ह्येकफलवदुपकारोपनिबद्धानां वैकप्रयोगवचन चोदितानां यौगपद्यानुष्ठानाशक्तेः सामर्थ्येनाङ्गभूतः क्रम आपद्यमानः श्रुत्यर्थपठन-स्थानमुख्यप्रावृत्तिकक्रमाख्यप्रमाणषट्कवशेन व्यवस्थाप्यते।

अधिकारोऽपि यज्ञेषु कर्तुः शेषस्य चिन्त्यते।
भाव्यानां भावकः कर्ता द्रव्यं को नाम कर्मणाम्॥
तथा चास्य विशेषेण सूत्रबद्धैव शेषता।
पुरुषश्च पुनः शेषः कर्मार्थत्वेन चोदनात्॥

वक्ष्यति हि 'पुरुषश्च कर्मार्थत्वात्' इति जैमिनिः।

**सप्तमादि द्वादशान्तप्रतिपाद्य विषयनिर्देशः।**

तथाऽनाम्नातशेषाणां शेषिणां सप्तमादिभिः।
शेषसद्भाव-तद्रूप-परिमाणादिनिर्णयः॥

तत्र तु—सप्तमेनातिदेशेन शेषाः सन्तीति साधिते।
ततोऽष्टमे नये यस्य यतश्चेति निरूपणा॥
नवमेऽर्थप्रधानत्वात्तदधीनाऽन्यरूपता।
इयत्ता दशमे शेषबाधाभ्युच्चयचिन्तया॥
प्रयोगपरिमाणं च तत्तन्त्रावापलक्षणम्।
एतदेव प्रसङ्गेन परार्थङ्गोपजीवनात्॥
अन्यार्थानुष्ठितैः शेषैरुपकारेऽल्पकल्पना।
प्रसङ्गे तदभावे च स्याद्भूयिष्ठप्रकल्पना॥

**शेषलक्षणशब्दस्य कृत्स्नशास्त्रविषयत्वं प्रतिपाद्य तृतीयाध्याय-प्रतिपाद्यतया द्वितीयव्याख्यानम्।**

अथर्वाऽस्त्विवदमैवैकं तृतीयं शेषलक्षणम्।
तदेव सूचितं वक्तुमथातः शेषलक्षणम्॥

अन्यानि　पृथगारम्भैर्लक्षणानि　करिष्यति ।
इदं　सपरिवाराणां　शेषाणामेव　लक्षणम् ॥

तत्राथशब्द　आनन्तर्य-पूर्वप्रकृतापेक्षा-धिकाराणामेकं　सर्वान्वा　विवक्षित्वा प्रयुज्यते । प्रागुक्तभेदलक्षणानन्तरोक्तत्वात्पूर्वप्रकृतमपेक्ष्य शेषलक्षणमारभ्यते ।

**भेदनिरूपणस्य हेतुत्वोपपादनम् ।**

कुत इति हेत्वपेक्षया[1] अत इति हेतुव्यपदेशः ।

यस्माद्भेदमविज्ञाय न शक्यं शेषलक्षणम् ।
विज्ञातुमत एतस्य तदनन्तरमुच्यते　　॥
भिन्नानां हि पदार्थानां शेषशेषित्वसंभवः ।
एकत्वे नापदिश्येत कः शेषः कस्य शेषिणः ॥
भेदानन्तरवक्तव्यं शेषलक्षणमेव च　　।
प्रयोजकक्रमादीनां शेषत्वाधीनचिन्तनात् ॥

**अध्याययोस्संबन्धवर्णनम् ।**

अयमेव च संबन्धः संमतोऽध्याययोर्द्वयोः　।
अस्मिन् हि सति सूत्रोक्ते नान्यो भाष्यकृतोदितः ॥
पूर्वयोर्नास्ति संबन्धः सूत्रोक्तोऽध्याययोर्द्वयोः ।
प्रथमेऽध्याय इत्यादिभाष्येणातोऽभ्यधायि सः ॥

अर्थद्वारो ह्यध्यायादिसंबन्धो न ग्रन्थस्वरूपाश्रय इति संक्षेपोक्तिपिण्डीकृत-वृत्तवर्तिष्यमाणाध्यायार्थप्रदर्शनपूर्वं[2] भाष्यकारेणैव संबन्धः पूर्वाध्यायोरभिहितः । इह तु सूत्रकारेणैवाथातःशब्दाभ्यामुपनिबद्ध इति, स एव व्याख्यातः, नानाकर्म-लक्षणं वृत्तमिति च ।

प्रधानमात्रमेवोक्तं नोपोद्घातादिविस्तरः ।
नानाकर्मत्वमात्रं हि शेषलक्षणसिद्धिकृत् ॥

**प्रथमाध्यायप्रतिपाद्यो　विषयः ।**

प्रथमाध्यायप्रतिपादितो हि प्रमाणविवेकविध्यर्थवादमन्त्रस्मृतिगुणविधिनाम-धेयवाक्यशेषार्थकृतसंदिग्धविधिनिर्णयप्रविभागः प्रत्येकं भेदादिलक्षणेषु भेदेनोप-योक्ष्यत इति प्रपञ्चेनानुभाषितः ।

---

१. क० हेत्वपेक्षायां ।　　　　२. क० पिण्डीकृत्य ।

## द्वितीयाध्यायार्थवर्णनम् ।

तथा चाभ्यासाधिकरणे स्थितवेदप्रमाणलक्षणबलेनोक्तम् 'अविशेषादनर्थकं हि स्यात्' इति । विधेयान्तररहितश्चानन्यपरो विधिः कर्मस्वरूपमेव विदधत्पूर्वविहितादवश्यमेव कर्मान्तरं करोतीति, विधित्वनिर्णयफलोपजीवनम् ।

तथाऽर्थवादविज्ञानाद्विष्ण्वादिगुणकास्त्रयः ।
यागा न कल्पितास्तेषां विधिशक्तेरसंभवात् ॥

जामित्वाजामित्वोपक्रमोपसंहारमध्यपातिनो हि 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' इत्येवमादयोऽन्तरालसंबन्धविध्येकवाक्यत्वेनार्थवादत्वात्पृथग्विधित्वमलभमाना न देवताविशिष्टकर्मत्रयविधानार्था विज्ञायन्ते ।

मन्त्राणामपि यत्कार्यं विहितार्थप्रकाशनम् ।
तेन गोदानगोयागौ नाभ्यासाद्भेदमागतौ ॥

यच्छब्दामन्त्रणोत्तमपुरुषाद्युपहतविधिशक्तयो हि मन्त्रा धर्मसाधनत्वेनोच्यमाना 'देवांश्च याभिर्यजते ददाति च' इत्येवमादिभिराख्यातपदैः पुनः पुनः श्रुतैरपि न कर्मान्तरं कल्पयन्ति ।

तथा शब्दार्थसंबन्धस्मृतितत्त्वावधारणात् ।
प्रक्षेपाधिकतामात्राद्यागाद्धोमस्य भिन्नता ॥

तथा न भिद्यते कर्म काठकादिसमाख्यया ।
ग्रन्थनामस्मृतेर्लोके निमित्तस्मरणादपि ॥

कृतकं चाभिधानं यदन्यैरादिमदुच्यते ।
निमित्तप्रभवत्वेन सूत्रकारस्य तन्मतम् ॥

कठेन प्रोक्तमित्येवं तेन प्रोक्तमिति स्मृतेः ।
ग्रन्थश्च प्रोच्यते नार्थः स ह्यनुष्ठीयते नरैः ॥

तेनानुष्ठितमित्येवं यदि नाम स्मृतिर्भवेत् ।
कर्म काठकमुच्येत कठेनानुष्ठितं हि यत् ॥

कठेनाध्यापितं प्रोक्तमित्यर्थे तद्धितो यतः ।
स्मर्यते ग्रन्थनामातस्तस्याध्यापनसंभवात् ॥

गुणश्चापूर्वसंयोगे नामधेयं च भेदकम् ।
भेदोपयोगिना[1] तेन गुणनामत्वबोधयोः ॥

१. भेदोपयोगिता ।

प्राजापत्येषु यागानामेकानेकत्वसंशये ।
कृतः प्रकृतिवच्छब्दवाक्यशेषेण निर्णयः ॥
पशुसप्तदशत्वस्य न यागे यत्तया विना ।
सिद्धिरस्तीति चार्थेन सिद्धः संदिग्धनिर्णयः ॥

**कर्मभेदस्यैव शेषत्वनिरूपणे हेतुता ।**

एवमत्र प्रपञ्चेन पूर्वाध्यायार्थवर्णनम् ।
उत्तराध्यायसिद्ध्यर्थमनुक्रान्तमशेषतः ॥
शेषत्वे कर्मभेदात्तु नाधिकार्थोपयोगिता ।
तस्मात्स एव वृत्तोऽत्र संक्षेपेणोपसंहृतः ॥
ग्राह्यं न त्वेतदेकान्तात्संक्षेपोक्तिप्रयोजनम् ।
यतः पूर्ववदेवेह प्रपञ्चोऽप्युपयोक्ष्यते ॥
उपोद्घातोदितेनैव शेषत्वमभिधास्यति ।
भावार्थफलवत्त्वेन कर्मणामपि जैमिनिः ॥
तथा चापूर्वभेदेन कर्मभेदानुसारिणा ।
आज्यौषधादिधर्माणां व्यवस्थां साधयिष्यति ॥

तथा च—

प्रसक्तानुप्रसक्तोक्तमृग्यजुःसामलक्षणम् ।
श्रुतेर्जाताधिकारः स्यादित्यस्मिन्नुपयोक्ष्यते ॥

**राक्षेपविस्मराभ्यां व्याख्यानवर्णनम् ।**

तस्माद्विस्तरसंक्षेपावर्थमार्गावुभावपि ।
व्याख्यायामुपयुज्येते इति कश्चित्क्वचित्कृतः ॥
एवमर्थद्वये तावदथशब्दस्य वर्णितम् ।
संबन्धोऽध्याययोरुक्तो यद्वाऽर्थात्सिद्ध एव सः ॥
ततश्चापुनरुक्तत्वाद्वक्ष्यमाणार्थगोचरा ।
अधिकारार्थता वक्तुमथशब्दस्य शक्यते ॥

**अथ शब्दस्याधिकारार्थनिरूपणम् ।**

प्रथमाध्यायप्रथमसूत्रे हि धर्मज्ञानेच्छाया वक्ष्यमाणव्याख्येयत्वेनानुपन्यासादन्तरानुष्ठेयत्वमात्रमेवोपदेष्टव्यमित्यधिकारार्थत्वं नोक्तम् । यदपि तदुपसर्जनत्वेन धर्मज्ञानमुपात्तम्, तदप्यर्थव्याख्यानकरणात्स्वयमेव शिष्याणां भवतीति, न सूत्रकारभाष्यकारव्याख्यातृवचनोपात्ताधिकारकर्मत्वेनावधारितम् ।

वक्तृवाक्यगतं यत्तु स्यात्किंचिदधिकारभाक् ।
न जिज्ञासापदं तस्य श्रोतुः स्वार्थनिरूपकम् ॥
इह त्वध्यायरूपं वा तदर्थात्मकमेव वा ।
व्याख्यायामधिकर्तुं हि शक्यते शेषलक्षणम् ॥

अतः परं शेषलक्षणमधिकृतम् । तदादरेण श्रोतव्यम् । यतोऽध्यायान्तरावकाशोऽद्यापि नास्तीति । अतः शेषलक्षणमधिकृतं वेदितव्यमिति शक्यं वक्तुम् ।

**अधिकारनिरूपणे क्रमपर्यन्तनिरूपणं हेतुः ।**

शेषस्यैवाधिकारोऽत्र युक्तो नान्यस्य कस्यचित् ।
शेषधीसिद्ध्यपेक्षत्वादन्यलक्षणवाग्धियाम् ॥

सप्तमादिषट्कस्तावदुपदेशपूर्वकातिदेशविषयत्वादुपदेशे विचारार्थप्रथमषट्कसमाप्तिं प्रतीक्षते । तथाऽधिकारोऽपि यथोपदिष्टकर्मानुष्ठानसामर्थ्येन कर्तुरवधार्यत इति क्रमनियमपर्यन्तोपदेशज्ञानोत्तरकालमारप्स्यते । तथा हि ।

भारो यो येन वोढव्यः स प्रागातोलितो यदा ।
तदा कस्तस्य वोढेति शक्यं कर्तृनिरूपणम् ॥
प्रयोजकवशौ चेष्टौ मुख्यप्रावृत्तिकक्रमौ ।
चतुर्थलक्षणादूर्ध्वं क्रमतश्चिन्तयिष्यते ॥
प्रयोजकोऽपि शेषाणां शेष्यन्यस्त्वप्रयोजकः ।
करिष्यते परा तस्मात्तच्चिन्ता शेषलक्षणात् ॥

**शेषनिरूपणञ्च बहुप्रकारमिति वर्णनम् ।**

तेनात्रैवेदमारभ्यमिति सिद्धेऽभिधीयते ।
प्रकारैर्बहुभिश्चेदं कर्तव्यं शेषलक्षणम् ॥
स्वरूप - हेतु - संबन्ध - तत्प्रमाण - बलाबलैः ॥
ननु ज्ञेया यथा शेषाः शेषिणोऽपि तथैव नः ।
नैकस्मिन्नप्यविज्ञाते व्यवहारो हि सिध्यति ॥

उच्यते—

ज्ञातव्या उभये सत्यं सूत्रणीया न तूभये ।
अर्थापत्त्या हि सिध्यन्ति द्वितीया एक लक्षणात् ॥
तत्र सूत्राणि शेषाणां किं कार्याण्युत शेषिणाम् ।
फलप्रयासतुल्यत्वात्प्रसज्येत यथारुचि ॥

प्राधान्याच्छेषिणां साक्षाद्युक्तं वा शेषिलक्षणम् ।
न तु तत्क्रियते तत्र कर्तव्यं हि द्वयं भवेत् ॥
शेषोऽस्यास्तीति मत्वर्थादेवं शेषी निरूप्यते ।
न स शेषमविज्ञाय ज्ञातुं शक्येत केनचित् ॥
तेनोपसर्जनस्यापि शेषस्यैवेह लक्षणम् ।
क्रियते शेषिणस्त्वर्थात्तज्ज्ञानेनैव सेत्स्यति ॥
श्रुत्यादिभिः प्रमाणैश्च शेषत्वस्यैव निर्णयः ।
शेषी तद्विषयत्वेन लक्ष्यते नान्तरीयकः ॥
श्रुत्यादिसमवाये च वक्ष्यते यद्बलाबलम् ।
तच्छेषिण्यविरुद्धत्वाच्छेषगोचरमेव नः ॥

**तृतीयाध्यायप्रतिपाद्य विषयसंक्षेपः ।**

तस्माच्छेषलक्षणमेव समस्ततद्गतप्रकारविशिष्टं वक्तुमिदं प्रतिज्ञातम् । 'अथातः शेषलक्षणम्' इति ।

तत्र **कः शेष** इति—स्वरूपाभिधानप्रतिज्ञा । **केन हेतुनेति**—येनासौ शेष इत्युच्यते । तस्य च कारकहेतोस्तद्धर्मस्यैव लक्षणं वक्ष्यत इति प्रतिज्ञायते । तथा विनियोगप्रकारज्ञानं—क शेषिणि कः शेषः कतमेन प्रमाणेन कतमत्प्रमाणान्तरं बाधित्वा, विना बाधेन वा विनियुज्यते । तथा विनियोजकश्रुत्यादिषट्कस्वरूपज्ञानम्, तेषां बलाबलज्ञानं च । तत्र प्रथमे पादे तावच्छ्रुतिविनियोगः । किञ्चिच्च प्रासङ्गिकम् । द्वितीयपादादौ लिङ्गविनियोगः । तृतीयपादादौ तदेव प्रमाणद्वयमुपन्यस्योपक्रमोपसंहारद्वारेणैकवाक्यत्वेन सिद्धान्तस्थापनाद्विनाऽपि वाक्यग्रहणेन 'प्रायदर्शनात्' इति वाक्यविनियोगमुक्त्वा, प्रकरणक्रमसमाख्याभिर्विनियोगः सूत्रोपनिबद्ध एव वक्ष्यते ।

ततो बलाबलाधिकरणम् । ततः परं च, श्रुतिलिङ्गवाक्यानां प्रकरणेन सह विरोधाविरोधचिन्ता तावद्यावत् 'तुल्यः सर्वेषां पशुविधिः' इति । ततश्चतुर्णां क्रमेण सह पुनः सैव चिन्ता, यावत् 'शास्त्रफलं प्रयोक्तरि' इति । तत उपोद्घातपूर्वकं पञ्चभिः सह समाख्याया विरोधाविरोधविषयविचारेणाध्यायपरिसमाप्तिः । **एतत्तात्पर्येण, अन्यदुपोद्घात**प्रसक्तानुप्रसक्तेरिति वक्ष्यमाणमनुसंकीर्त्यते । प्रदर्शितमुच्यमानं सुखं ग्राहयिष्यते । सर्वं चैतच्छेषलक्षणप्रतिज्ञयैव पिण्डीकृतप्रतिज्ञातमिति, न भेदेन सूत्रितम् ॥ १ ॥

इति प्रथमं शेषप्रतिज्ञाधिकरणम् ॥ १ ॥

तृतीय अध्याय का प्रथम पाद ।

भा० प्र०—भेदलक्षण नाम के पूर्व अध्याय में कर्मभेद विषयक विचार किया गया है। प्रकृत अध्याय में शेषलक्षण का विचार किया जायगा। शेष किसको कहा जाता है ? किस कारण से वह शेष है ? किस प्रकार उसका विनियोग होता है ? उसके विनियोग का क्या-क्या कारण है ? इन्हीं विषयों का इस अध्याय में विचार किया जायगा एवं इसी प्रसङ्ग में अन्य विषयों का भी विचार किया जायगा। कर्म के भेद विषय का विचार निष्पन्न होने पर ही शेषशेषिभाव का विचार सङ्गत होता है, क्योंकि, शेषशेषिभाव कर्मभेद सापेक्ष है। इसलिए भेदलक्षण का विचार कर शेषलक्षण का विचार आरम्भ किया जाता है। शेष का अर्थ अङ्ग होता है एवं शेषी का अर्थ अङ्गी होता है अर्थात् प्रधान।

''अथ'' = भेद के निरूपण के बाद, ''अतः'' = यतः शेषशेषिभाव भेद निरूपण के अधीन होता है, इसलिए, ''शेषलक्षणम्'' = शेष का लक्षण अर्थात् अध्याय का आरम्भ होता है। यह प्रथम शेष प्रतिज्ञाधिकरण है ॥ १ ॥

### अथ द्वितीयं शेषलक्षणाधिकरणम् ।

## [२] शेषः परार्थत्वात् ॥२॥ सि०

**शा० भा०—इह सूत्रे शेषस्य लक्षणम्, येन च हेतुना शेष इत्युच्यते, तदुभयमाख्यायते। यः परस्योपकारे वर्तते, स शेष इत्युच्यते। तद् यथा ये परार्थाः ते वक्तारो भवन्ति शेषभूता वयमिहेति। ननु योऽपि प्रधानभूतः, सोऽपि कदाचित्परार्थे वर्तते, यथोपाध्यायः प्रधानभूतः शिष्याणां विद्याविनयाधाने वर्तते। सत्यं वर्तते। यस्त्वत्यन्तं परार्थः। तं वयं शेष इति ब्रूमः। यथा, गर्भदासः कर्मार्थ एव स्वामिनोऽनड्वांश्च क्रीयते वक्ष्यतीत्येव। ननु गर्भदासस्यापि स्वामी संविधानो गुणभावमायात्[1]। नेति ब्रूमः। आत्मन एवासौ संविदधानो गुणभावं गच्छति। नान्तरीयकत्वादगर्भदासस्योपकरोति, अनडुहो वा। यस्त्वत्यन्तं परार्थस्तं वयं शेष इति ब्रूमः। अथ तत्र किं वृत्तं, यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत इति। तत्रापूर्वार्थता व्यावर्तिता दृष्टप्रयोजनानामाख्यातानाम्। इह तु सर्वेषामेव शेषाणां लक्षणमुच्यते ॥ २ ॥ शेषत्वकारणसहित—शेषलक्षणाधिकरणम् ॥ २ ॥**

### अथ द्वितीयं शेषलक्षणाधिकरणम् ।

**त० वा०**—किं च—शेषलक्षणमात्रोक्तावर्थात्स्याच्छेषिलक्षणम् ।
अतः शेषः परार्थत्वादित्युक्तं शेषलक्षणम् ॥

---

१. ब० गुणभावं यायात् ।

शेषशब्दस्यानेकाधिकाद्यर्थवचनत्वादिहाङ्ग-गुण-धर्मादिपर्यायवाचित्वपरिग्रहार्थं हेतुविशेषाभिधानं परार्थत्वादिति।

**अविनाभूतत्वादिलक्षणानां निराकरणमुखेन पारार्थत्वं लक्षणम्।**

यच्चान्यदविनाभावप्रयोज्यत्वादिकारणम्।
तच्च सर्वं निराकर्तुं परार्थ्यमिह गृह्यते॥

द्वावपि चार्थौ श्रुत्यर्थापत्तिभ्यामुपात्ताविति चोदनालक्षणसूत्र[1]वद्वाक्यभेददोषं परिहृत्य व्याख्येयम्।

तथाहि—

न शेषोऽन्यः परार्थत्वान्न च हेत्वन्तरेण सः।
अन्योन्यनियमेनैवं पक्षहेत्वोः परिग्रहः॥

इह च—

शेषत्वं केचिदिच्छन्ति ह्यविनाभावलक्षणम्।
प्रयोज्यलक्षणं त्वन्ये तदाधिक्येन चापरे॥
अन्ये त्वन्ततया तस्य[2] विध्यन्तत्वपरिग्रहात्।
उपकारेण शेषत्वं बहुभिश्चैव लक्षितम्॥

तद्भावभावित्वेन तावद्यो येन विना न भवति, स तस्य शेषः। तद्यथाऽङ्कुर-स्तोयादिभिर्विना न भवति। घटश्च मृत्पिण्डदण्डचक्रादिभिरिति, तयोस्तानि शेषत्वेन ज्ञायन्ते। तत्रोच्यते।

अयुक्तमेवं शेषत्वमविनाभावलक्षणम्।
व्यभिचारात्तथाहीदमशेषेष्वपि दृश्यते॥
सर्वदा ह्यविनाभूता रूपस्पर्शादयः क्षितौ।
न चैषां तुल्यकल्पत्वाद्भवत्यन्योन्यशेषता॥
स्वामिना च विना दासा न भवन्ति कदाचन।
तथा गृहादयस्तेषां शेषः स्वामी च नेष्यते॥
प्रधानानां प्रधानैश्च विनाभावो न दृश्यते।
तत्र स्याच्छेषशेषित्वं तेषामपि परस्परम्॥
एवमङ्गप्रधानानामङ्गानां च परस्परम्।
प्रसज्येतैव शेषत्वमविनाभावलक्षणम्॥
एतेनाध्ययनाधानकृषिद्रव्यार्जनादिषु।
वाच्यं प्रसङ्गिशेषित्वं तैर्विना क्रत्वसम्भवात्॥

---

1. क० तद्वाक्यभेद।　　2. क० त्वस्य।

तस्मात्सत्यविनाभावे विनाभावेऽपि वा क्वचित् ।
प्रयोज्यो यस्य यस्तस्य स शेष इति निश्चयः ॥

**प्रयोज्यत्वलक्षणस्य दूषणम् ।**

न च स्वामी दासेन रूपस्पर्शादिभिर्वा यथोदाहृतैरन्योन्यं प्रयुज्यते, येनातिप्रसङ्गः स्यात् । न त्वेतदपि शेषत्वलक्षणं घटते । कुतः ?

लक्ष्यलक्षणयोर्दृष्टो व्यभिचारो द्वयोरपि ।
पुरोडाशकपालं हि न च तावत्प्रयुज्यते ॥
सिद्धेस्तुषोपवापेन शेषस्तत्तस्य चेष्यते ।
तथा होमाः प्रयुज्यन्ते भेदनस्कन्दनादिभिः ॥
निमित्तैर्न च तेष्वेषां होमानां शेषता मता ।

**प्रधानविध्यधिकत्वविधानम् ।**

तस्माद्यो विहिते यस्मिन्नधिकोऽन्यो विधीयते ॥
तस्य तं प्रति शेषत्वमतिरेकेण लक्ष्यते ।

सर्वत्रैव फलवत्प्रधानविधेरङ्गविधयोऽङ्गानि प्रधानेभ्योऽतिरिच्यन्त इत्येतदेवातिरेकलक्षणं शेषत्वं युक्तमित्युक्ते ।

अभिधीयते—

व्यभिचार्यतिरेकोऽपि प्रधानेष्वपि दर्शनात् ।
तान्यपि ह्यतिरिच्यन्ते शेषेभ्योऽधिकशेषवत् ॥

**विध्यन्तविहितत्वमिति दूषणम् ।**

अन्ये विध्यादिनिर्दिष्टप्रधानेभ्यः परान्विधीन् ।
दृष्ट्वाऽङ्गान्यध्यवस्यन्ति विध्यन्तत्वपरिग्रहात् ॥
विध्यन्तो वा प्रवर्तेत विकृतौ प्रकृताविव ।
विध्यन्तविहितांस्तत्र शेषान्वक्ष्यति जैमिनिः ॥

तस्माद्विध्यादिविहितप्रधानकथम्भावाकाङ्क्षापूरणसमर्थविध्यन्तविहितत्वलक्षणमेव शेषत्वं सूत्रकाराभिप्रेतमित्युक्ते ।

अभिधीयते—

उपक्रमोपसंहारमध्याम्नातेषु शेषताम् ।
विचित्रामुपलभ्यैतन्नेष्यते शेषलक्षणम् ॥

यदि हि नियोगतो वाक्यप्रकरणान्तेष्वेव व्यवस्थिताः शेषविधयः समाम्नायेरन्, तत एतदव्यभिचाराल्लक्षणमाश्रीयते । न त्वेवमाम्नायन्ते, त्रिष्वप्यादिमध्यावसानेषु समाम्नानात् ।

प्रधानादौ विधीयन्ते ये शाखाच्छेदनादयः।
विध्यादिविहितत्वात्ते नाऽऽप्नुयुर्दर्शशेषताम् ॥
कर्मणा सह चोद्यन्ते ये हविर्देवतादयः।
शेषास्तेऽपि न युज्येरंस्तदन्ताम्नानवर्जनात् ॥

अङ्गविध्युपक्रमेषु तावद्वाक्यप्रकरणेषु तद्गतकिंभावाकाङ्क्षितप्रयोजनकल्पनावेलायां कथम्भावाकाङ्क्षायुक्तप्रधानविधिदर्शनात्तदपेक्षितोपकारविद्ध्यर्थत्वेन तेषामवधार्यमाणानां विध्यादिगतानामपि शेषत्वमस्तीति, न विध्यन्तविधानमेवैकं शेषलक्षणत्वेनावकल्पते।

शेषं तस्यैव तं विद्यादुपकारेण लक्षितम्।
भवत्येवं च होमादेर्भिन्नादि प्रत्यशेषता ॥
न हि भिन्नोपकारार्थः स तद्ध्येवोपकारकम्।
वेदे च नान्यदङ्गत्वकारणं दृश्यते क्वचित् ॥

न ह्यनुपकुर्वत्किंचिदप्यङ्गं कस्यचिद्भवेत्। तस्मादुपपन्नमिदं लक्षणमिति। तथा चोपदिष्टादपि तत्र तत्र प्रदेशे भाष्यकारो वक्ष्यति—'यो यस्योपकरोति स तस्य शेषः। उपकारलक्षणं हि शेषत्वम्' इत्येवमादि।

तादर्थ्यमपि नैवान्यदुपकारात्प्रतीयते।
तेनोपकार एवैको विज्ञेयं शेषलक्षणम् ॥

**उपकारकत्वमिति लक्षणस्य दूषणम्।**

न त्वेतदपि घटते। कुतः।

एवं सति प्रधानानामङ्गानां च परस्परम्।
अङ्गाङ्गानां च सर्वेषां संकीर्येतैव शेषता ॥

यथैव ह्यङ्गानि प्रधानानामुपकुर्वन्ति, तथैवानुष्ठापनेनोपकारप्रतिग्रहणाच्च प्रधानान्यप्यङ्गानामुपकुर्वन्त्येव। कुतः ?

प्रधानैरप्रयुक्तानि कुर्यानाङ्गानि कश्चन।
उपकार्यैर्विना तानि नोपकर्तुं च शक्नुयुः ॥
प्रधानान्यप्यतोऽङ्गानामङ्गानि स्युरनुग्रहात्।
स्यादन्योन्योपकाराच्च तेषामन्योन्यशेषता ॥
नैकेनापि प्रधानेन विनाऽन्यैः साध्यते फलम्।
तेनैतान्युपकुर्वन्ति फलसिद्धौ परस्परम् ॥
तस्मात्परस्पराङ्गत्वमुपकारात्प्रसज्यते।
नायमङ्गकृतादेषामुपकाराद्विलक्षणः ॥

एवमङ्गानामप्यन्योन्यापादनं दर्शयितव्यम्। ततश्चैकप्रधानविकारेष्वेकाङ्ग-गमनेऽपि, समस्तसाङ्गप्रधानगमनादनियमः प्राप्नोति।

तथा द्रव्यार्जनाधानस्वाध्यायाध्ययनादिषु।
सर्वकर्माङ्गताप्राप्तिः कार्यैः सर्वोपकारिषु॥

न हि तदनुग्रहरहितं किञ्चित्सिध्यति। ततश्चार्थिमात्रविषयकामश्रुतिपरि-ग्रहात्। 'वसन्ते ब्राह्मणम्' इत्यादीनां निमित्तार्थत्वाच्छूद्राधिकारादिदोषप्रसङ्गः।

ज्ञातं च लक्षणं सर्वं लक्ष्यं लक्षयितुं क्षमम्।
तत्र दृष्टोपकाराणां तत्कृता शेषता भवेत्॥
अदृष्टार्थे तु संस्कारे पर्यग्निकरणादिके।
प्रयाजादिष्वपूर्वांशैस्तथाऽऽरादपकारिषु॥

अनवगतशेषत्वावस्थेषूपकारादर्शनात्, तदधीनावधारणं शेषत्वं न स्यात्। कल्पित उपकारे भविष्यतीति चेत्? न। प्रागङ्गत्वादुपकारकल्पनाप्रमाणाभावात्। यो हि यस्य फलस्य, फलवतो वा शेषत्वेनावधारितो भवति, स कथं तस्योपक-रिष्यतीत्यपेक्षिते सति दृष्टमुपकारमपश्यद्भिस्तस्माददृष्टः परिकल्प्यते। यावत्तु शेषत्वमेव नावगम्यते, तावत्केन प्रमाणेनादृष्टकल्पना स्यात्। ततश्चेतरेतराश्रयः प्रसज्यते। तथाहि—

उपकारेण शेषत्वं शेषत्वाच्चोपकारिता।
स्वातन्त्र्येण प्रसिद्धं हि न ह्यन्यतरदेतयोः॥

दृष्टार्थानामपि चावहन्त्यादीनां नियमान्न कश्चिदुपकारो दृश्यत इति, न नियोगतोऽङ्गत्वं स्यात्। न च प्रासङ्गिकत्वाच्छास्त्रेणोपकारः प्रतिपाद्यत इति। प्रत्यक्षादिभिरेवोपकारं गृहीत्वा शेषत्वं गम्येत। ततश्च श्रुत्यादिप्रमाणकं शेषलक्षणं नैवानेनाऽऽश्रीयेत। तथा प्रासङ्गिकान्यन्यप्रयोजनान्यङ्गान्यन्यार्थान्यप्यन्यस्यो-पकारीणीति तन्त्रिप्रयोजकवदितरस्यापि शेषत्वं गच्छेयुः। तत्र 'प्रासङ्गिकं च नोत्कर्षेत्' 'प्रासङ्गिके प्रायश्चित्तं न विद्यते' 'न वाऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात्' 'अपि वा शेषभाजां स्यात्' इत्यादिन्यायविरोधः। एवमेतस्मिन्नपि पक्षे सर्वं तन्त्रं विघटते।

### अङ्गत्वलक्षणम्।

तस्मादुच्यते 'शेषः परार्थत्वात्' इति।

उपकारमलब्ध्वैव यो यदर्थोऽवगम्यते।
तादर्थ्यलभ्यशेषत्वः स तस्योपकरिष्यति॥

आह—किं तादर्थ्योपकारयोर्भेदोऽप्यस्ति? बाढमस्ति। कुतः?

अपकुर्वन्नपीष्टो हि तदर्थव्यपदेशभाक्।
उपकुर्वन्नपि त्वन्यस्तदर्थ इति नोच्यते॥

उद्देशमात्रेण तावत्तादर्थ्यप्रसिद्धिः। सा चोपकारापकारयोस्तुल्या। तद्यथा—मशकार्थो धूम इत्यपकारिण्यपि प्रयुज्यते। तथोपकुर्वन्नपि प्रसङ्ग्यप्रयोजकयोर्न तादर्थ्येन व्यपदिश्यते। न हि कश्चिदपि शालिकुल्यास्थमुदकं पिबन्मदर्थमेताः प्रणीता इत्यध्यवस्यति। तस्मादन्यत्तादर्थ्यम्, अन्यश्चोपकार इति विज्ञायते।

नन्वेवं सत्यपकारकोऽपि शेषः प्राप्नोति। लोके तावत्प्राप्नोतु नाम। वेदे पुनरनपेक्षितत्वान्न भविष्यतीति। यो हि तादर्थ्येनावधारितः, स किमुपकरिष्यति, संदिग्धे शेषिभिरपकारो नापेक्षित इति तं परित्यज्यापेक्षासामर्थ्यादुपकारः कल्प्यते।

आकाङ्क्षति प्रधानं हि न यावदुपकारकम्।
तावत्सामीप्ययुक्तोऽपि नाङ्गमित्यवधार्यते॥

न हि प्रयाजादयः सामीप्यमात्रेणैवोपकारनिरपेक्षास्तादर्थ्यं प्रतिपद्यन्ते। तस्मादुपकारपूर्वकमेव तादर्थ्यमिति, स एव शेषत्वकारणं प्राप्नोति। नैष दोषः।

श्रुत्या तावत्तदर्थत्वं क्वचित्पूर्वं प्रतीयते।
अन्यत्राप्युपकारित्वादपेक्षामात्रपूर्वकम्॥

'दशापवित्रेण ग्रहं संमार्ष्टि' 'व्रीहीन्प्रोक्षति' इत्यादिषु तावच्छ्रुत्यैव तादर्थ्येऽभिहितेऽङ्गत्वमवधार्योपकारः कल्प्यते। यत्रापि तु प्रयाजादौ तादर्थ्याभिधानाभावादुपकारपूर्वकत्वं लक्ष्यते, तत्राप्यपेक्षामात्रमेव तस्य, प्रथमं न निष्पत्तिः। न ह्यनवगताङ्गत्वेषु प्रयाजादिषूपकारदर्शनं कल्पनं चास्तीत्युक्तम्। अतो दर्शपूर्णमासयोरुपकारमपेक्षमाणयोः प्रयाजादिषु चोपकार्यमपेक्षमाणेष्वनिष्पन्नावस्थ एवोपकारे प्रकरणात् तादर्थ्यं तावत्प्रतीयते। तदन्यथानुपपत्तिमात्रेणोपकारकल्पना। तेनोपकारापेक्षामात्रमिह तादर्थ्यप्रमाणानुमाने व्याप्रियते। नोपकारादेव शेषत्वं तादर्थ्यं वेत्यनवद्यम्। एवं च सति श्रुत्यादीन्येव तादर्थ्यप्रतिपादनरूपेण शेषस्य विनियोजकानीति तद्विवेकार्थं लक्षणमारब्धव्यम्। सत्यपि चाङ्गप्रधानादीनामुपकारसंकरेऽतादर्थ्यादसंकरस्थितिसिद्धिः। तस्मात्परार्थत्वलक्षणमेव शेषत्वं निर्दोषम्।

**यः परस्योपकारे वर्तत इति**—पारार्थ्यमेवोपकारेण फलेनाभिधीयत इत्यवगन्तव्यम्, न त्वत्रैव लक्षणोक्तिभ्रान्तिः[1] कर्तव्या। तथा च स्फुटीकरोति **ये परार्थास्ते वक्तारो भवन्तीति**। परः पुनरुपकारलक्षणभ्रान्त्या वदति [2]**यथोपाध्यायः शिष्याणामिति। सत्यं वर्तत** इति तादर्थ्योपकारव्यतिकरदर्शनादिहालक्षितं[3] शेषत्वमित्युपेक्ष्यैतदुदाहरणमैकान्तिकपारार्थ्ययुक्तमुदाहरति तद्यथा **गर्भदास** इति। स ह्युत्पत्त्यैव स्वाम्यर्थेन प्रसिद्धः। अनड्वांश्च वहनार्थतया। न तु स्वामी तादर्थ्ये-

---

१. क० लक्षणभ्रान्तिः। २. क० ननूपाध्यायः। ३. क० व्यतिरेक।

नावगम्यत इति विवेकः। परस्तु तत्राप्युपकारकत्वादस्त्येव कश्चित्तादर्थ्यलेश इति प्रत्यवतिष्ठते—**ननु गर्भदासस्यापीति**। सिद्धान्तवादी त्वाह—**आत्मन एवासौ संविदधान** इति। उद्देशेन हि तादर्थ्यं विविच्यते। न च स्वामिनो गर्भदासाद्युद्देशेन तदुपकाराय प्रवृत्तिः। किं तर्हि? स्वार्थसिद्धिप्रयुक्ता, नान्तरीयकतत्संविधानादशेषत्वम्। **यैस्तु द्रव्यं चिकीर्ष्यत इति**—पुनरुक्तशङ्कयोपन्यासः।

ननु च तदध्यायोक्तेनैव लक्षणेन गतार्थत्वान्नात्र वक्तव्यम्। अत आह—तत्राऽपूर्वार्थता व्यावर्तितेति। तत्र केचिदेवं व्याचक्षते। तत्र दृष्टार्थानामवहन्त्यादीनां शेषत्वमुक्तम्। इह तु सर्वेषामेव दृष्टार्थानाम्, अदृष्टार्थानां च द्रव्यविषयाणां, कर्मविषयाणां च शेषाणां लक्षणमुच्यत इति। एवं तु सति एतस्यापुनरुक्तता स्यात्। तत्पुनरेतेन गतार्थमित्यपहृतमेव। तस्मादेवं वर्णयितव्यम्—**अथ तत्र किं वृत्तं यैस्तु द्रव्यं चिकीर्ष्यत इति**।

तदभिधीयते—

हन्त्यादावपि शेषत्वमेतस्मादेव लक्षणात्।
दृष्टार्थत्वादपूर्वं तु ततो नेति पुरोदितम्॥

सर्वविषयव्यापि शेषत्वमिह[1] लभ्यमेव तत्र नीतमपूर्वभेदनिराकरणार्थम्। अथवा पूर्वोक्तं गुणप्रधानभावलक्षणमनपेक्ष्याऽपूर्ववत्संप्रति कारणान्तरनिरासेन परार्थत्वलक्षणे शेषत्वेऽभिहिते 'यैस्तु द्रव्यं चिकीर्ष्यते' इत्यनेनोपकारलक्षणाभ्युपगमाद्विरोधमाशङ्क्य परिहरति। तत्रापूर्वभेदकल्पनानिवृत्त्यर्थमुपकारदर्शनमुक्तम्, न शेषलक्षणत्वेन। अत्र पुनः सर्वशेषाणां पारमार्थिकं लक्षणमेवोच्यत इति भिन्नविषयत्वादविरोध इति॥२॥

( इति द्वितीयं शेषत्वनिर्वचनाधिकरणम्॥२॥ )

भा० प्र०—इस सूत्र में शेष का लक्षण एवं उसके हेतु का निरूपण किया जाता है। उनमें हेतु श्रौत है और लक्षण आर्थिक है। कतिपय आचार्य कहते हैं—लक्षण श्रौत है और हेतु आर्थिक है। जो परार्थ अर्थात् दूसरे के ही प्रधान के प्रयोजन अर्थात् उपकार का निर्वाह करता है—वहीं शेष है—यही शेष का हेतु हैं।

"शेषः" = शेष अर्थात् अङ्ग, "परार्थत्वात्" = यतः परार्थता, प्रधान के प्रयोजन की निर्वाहकता है। परार्थ का नाम शेष है, यतः वह परार्थ है अतः, वह शेष है।

यह द्वितीय शेषत्वनिर्वचनत्वाधिकरण अर्थात् शेषलक्षणाधिकरण है॥ २॥

---

१. क० इहत्यमेव।

अथ तृतीयं बादर्यधिकरणम् ।

## [ ३ ] द्रव्यगुणसंस्कारेषु बादरिः ॥ ३ ॥ पू०

शा० भा०—बादरिराचार्योऽत्र द्रव्यगुणसंस्कारेष्वेव शेषशब्दः इति मेने, न यागफलपुरुषेषु । द्रव्यं क्रियार्थम् । यदि प्रयोजनवती क्रिया, व्यक्तं सा द्रव्येण निर्वर्तयितव्या । तस्या निर्वृद्धिर्द्रव्यादृते न भवतीति, तन्निर्वृत्तये द्रव्यमेषितव्यं भवति । तस्मात्क्रियार्थं द्रव्यम् ।

गुणः शक्नोति विशिष्टं द्रव्यं चोदितं लक्षयितुम् । लक्षितेन च तेन प्रयोजनम्, विशिष्टस्य क्रियासाधनत्वात् । तस्मात्सोऽपि द्रव्यद्वारेण क्रियाया उपकरोतीति क्रियार्थ एव ।

संस्कारो नाम स भवति, यस्मिन्जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य । तेनापि क्रियायां कर्तव्यायां प्रयोजनमिति, सोऽपि परार्थः । तस्माद् गुणसंस्काराः परार्थत्वाच्छेषभूता, न तु यागफलपुरुषाः ।

यागस्तावत्कर्तव्यः पुरुषस्य । न हि तस्मिन्निर्वर्तिते किंचिदपरमस्ति कर्तव्यम् । स हि पुरुषार्थः । यदन्यद् द्रव्यादि, तत् तदर्थम्, तस्य शेषभूतम् । स तु न किंचिदभिनिर्वर्तयितुं क्रियते । फलमपि न तेन क्रियते । तस्मिंस्तु कृते स्वयमेव तद्भवति । तस्मिन्कृते फलमस्य भवतीत्येतावद्गम्यते । नास्ति शब्दो यागेन क्रियते फलमिति । तस्माद्यागो न शेषभूतः कस्यचिदर्थस्य ।

फलमपि न पुरुषं प्रत्युपदिश्यते । यः स्वर्गं कामयते, स यागं कुर्यादित्येतावच्छब्देनोपदिश्यते, नाऽऽत्मनः परस्य वेति । स्वर्गं प्रतीच्छामात्रेण स्वर्गकाम इति भवति । तस्मात्पुरुषं प्रति गुणभावेन न श्रूयते स्वर्गः । तस्मात्सोऽपि न शेषभूतः । न चेत्फलयागौ गुणभावेन चोद्येते, कस्य पुरुषः प्रधानभूतो भवति । प्रत्यक्षश्चास्य द्रव्यत्वात्कर्म प्रति गुणभावः । तस्माद् 'द्रव्यगुणसंस्कारेष्वेव शेषभावं बादरिर्मेने' इति ॥ ३ ॥

अथ तृतीयं बादर्यधिकरणम् ।

त० वा०—इदानीं शेषत्वस्य विषयं कथयति । तत्र बादरिमतेन तावत्त्रय एव शेषाः । द्रव्यं हि 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः' इति स्वभावत एव[1] शेषभूतं, नियमान्निष्प्रयोजनत्वेन केवलं व्यावर्त्यते । गुणोऽप्यरुणादिः क्रियायाः स्वसाधनभूतद्रव्यपरिच्छेदसामर्थ्यादुत्पत्त्यैव शेषः । तथा संस्कारोऽप्यवहन्त्यादिर्यागसाधनपुरोडाशादिनिर्वृत्तये चोदितानां व्रीह्यादीनां स्वरूपेणायोग्यत्वादवहतानां योग्यत्वमापादयन्नुत्पत्त्यैवाङ्गं भवतीति ।

---

१. क० एतत्पदंनास्ति ।

न तु यागादावौत्पत्तिकं शेषत्वं दृश्यते। न च शब्देन चोद्यते। यागस्तावत्सर्वकारकैरनुष्ठीयते। न चान्यत्र व्याप्रियमाणो दृश्यते। फल इति चेत् ? न। चिरनिर्वृत्ते यागे फलोत्पत्तिप्रतीतेः।

ननु च भावार्थाधिकरणे करणत्वं यागस्योक्तम्। सत्यमुक्तम्, न तु साधितम्। स्वर्गकामाधिकरणाधीनसिद्धिना तेन नामपदकरणत्वमात्रनिराकरणात्। अत इदानीमसिद्धावस्थेनैव करणत्वेन व्यवहरति। फलमपि यागं साध्यमानत्वात्प्रधानं, पुरुषं प्रति त्वस्य शेषभावो नैवोपात्तः, काम्यमानत्वेन सुतरां प्रधानत्वात्। पुरुष एव तु कामं द्रव्यत्वाद्यागे गुणत्वेन स्यात्। तस्माद् द्रव्यगुणसंस्कारेष्वेव शेषभाव इति ॥३॥

भा० प्र०—शेष शब्द का प्रयोग निरूपण के लिए आचार्य कोटि का मत प्रदर्शित किया जा रहा है। बादरिनाम के आचार्य के मत में द्रव्य, गुण एवं संस्कार में ही शेष शब्द का प्रयोग होता है। उनके मत में जो दूसरे का उपकारी होता है, उसे ही शेष कहा जाता है। कपाल आदि द्रव्य क्रिया के निष्पादक होने से उसको शेष कहा जाता है। अरुणिमा आदि गुण भी उससे विशिष्ट द्रव्य से क्रिया का उपकार करते हैं, अतः, उसको भी शेष कहा जाता है। अवघात, प्रोक्षण, आदि संस्कार भी द्रव्य का दोष हटाकर एवम् गुणान्तर का आधान कर उसको कर्म के उपयुक्त मानते हैं। अतः, वे भी दूसरे का उपकार करते हैं, अतः शेषपदवाच्य है। किन्तु, कर्म, फल एवम् पुरुष ये किसी के भी उपकारक नहीं हैं, अतः, इनको शेष नहीं कहा जाता है। याग पुरुष का कर्तव्य हैं। उसका निष्पादन करने पर ही होगा। अतः, याग किसी के उपकार में नहीं आता है, अतः, वह शेष नहीं है। इसी प्रकार फल भी पुरुष के लिए उपदिष्ट नहीं होता है, किन्तु जो व्यक्ति स्वर्गफल की कामना करता है—वह याग करता है—यही शास्त्र का वक्तव्य है। इसलिए, फल किसी का भी उपकारक न होने से शेष नहीं है। इसी प्रकार पुरुष भी स्वप्रधान होने से किसी का शेष नहीं है। अतएव द्रव्य, गुण एवम् कर्म ये तीन ही शेष हैं, याग, फल एवम् पुरुष ये शेष नहीं हैं।

"द्रव्यगुणसंस्कारेषु" = द्रव्य, गुण एवं संस्कार में शेष शब्द का प्रयोग होता है, "बादरिः" = बादरि नाम के आचार्य का यह मत है ॥ ३ ॥

## कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥ सि०

**शा० भा०—जैमिनिस्तु खल्वाचार्यः कर्माण्यपि शेषभूतानि मन्यते स्म। न बादरिरिवावधारणामनुमेने। स हि ददर्श, न यागः कर्तव्यतया चोद्यते। फलकामस्य तु तत्साधनोपायत्वेनेति। एवं श्रुतोऽर्थः परिगृहीतो भविष्यति। अर्थवांश्चोपदेशः। एनमेवार्थं षष्ठेऽध्याये सूत्रैरेव साधयिष्यति। इह तु तत्सिद्धे-**

**नैव फलार्थत्वेन शेषभावं यागस्याऽऽपादयति[1] स्म। तस्मादनवधारणा, द्रव्य-गुण-संस्काराः शेषभूताः। यागोऽपि शेषभूतः फलं प्रतीति ॥ ४ ॥**

त० वा०—गतार्थमेतत् ॥४॥

भा० प्र०—अन्य आचार्यों का मत कह कर शेष के सम्बन्ध में जैमिनि स्वमत का प्रदर्शन कर रहे हैं—"कर्माणि अपि"। कर्म शेष पद का वाच्य नहीं है—यह कहना उचित नहीं है। कारण कर्म फल के लिए है, क्योंकि फल की प्राप्ति के लिए ही कर्म किया जाता है, याग आदि कर्मों से फल सिद्ध होता है, अतः, फल कर्म का प्रयोजन होने से कर्म का शेष है। यतः उपकारित्व ही शेषत्व का लक्षण नहीं है, कारण, यह लक्षण अतिव्याप्ति दोष से दुष्ट है। अतः, परार्थत्व ही शेषत्व हैं। कर्म फल का निष्पादन करना है, अतः, परार्थ ही होता है।

"कर्माणि अपि" = कर्म भी, "जैमिनिः" = आचार्य जैमिनि शेष का निरूपण कर रहे हैं, "फलार्थत्वात्" = यतः कर्म भी फल के लिए अर्थात् फल के उपकारी हैं, अतः, वे भी शेष हैं ॥ ४ ॥

## फलं च पुरुषार्थत्वात् ॥ ५ ॥

**शा० भा०—फलमपि पुरुषं प्रत्युपदिश्यते। यः स्वर्गो मे भवेदित्येवं कामयते, तस्य यागः। न यः स्वर्गः, स आत्मानं लभेतेति। कुतः? आत्मनेपद-प्रयोगात्। कर्त्रभिप्राय[2] एतद्ब्रवति। क्रियाफलमनुभवेत्कथं पुरुष इति, यागः प्रयुज्यते। तस्मात्फलं पुरुषार्थं यागाच्छ्रुयते, नाऽऽत्मनिर्वृत्त्यर्थम्। तस्माच्छेष-भूतमिति ॥ ५ ॥**

त० वा०—कामपदोपादानादेव फलस्य पुरुषार्थत्वं गम्यते। न हि कश्चिद् बुद्धिपूर्वकार्येवं कामयते स्वर्ग आत्मानं लभतामिति। किं तर्हि? ममोपभोग्यः स्यादिति। पुनश्चाऽऽत्मनेपदनिर्देशात्कर्तुरेवोपभोग्यो, नान्यस्येति गम्यते। तेनोप-भोक्तारं प्रति फलमपि शेषभूतम् ॥५॥

भा० प्र०—कर्म के समान फल भी शेष है, क्योंकि, उसमें परार्थतारूप शेष लक्षण समन्वित होता है, इसमें पुरुष का फल हो सकता है और उस पुरुष का प्रयोजन फल है। इसलिए, फल पदार्थ होने से भी शेष है। अनुष्ठाता पुरुष फल का भोक्ता होने से फल पुरुष का गुणभूत है। यही विधिविभक्ति के आत्मनेपद से अवगत होता है। इसलिए, याग के द्वारा फल निष्पन्न होने पर भी वह स्वप्रधान नहीं है, अतः, फल शेष नहीं है—यह मत नहीं माना जाता है।

"फलं च" = फल भी शेष, "पुरुषार्थत्वात्" = क्योंकि, वह पुरुषार्थ है ॥ ५ ॥

---

१. ब० यागस्योपपादयति स्म।　　२. ब० कर्त्रभिप्राये क्रियाफले।

**पुरुषश्च कर्मार्थत्वात् ॥ ६ ॥**

**शा० भा०—पुरुषोऽप्यौदुम्बरीसंमानादिषु गुणभूतः श्रूयते। तस्मादवधारणैषा द्रव्यगुणसंस्कारेषु शेषत्वं बादरिर्मेन इति।**

**अथेदानीमत्र भगवान्[1] वृत्तिकारः परिनिश्चिकाय। द्रव्यगुणसंस्कारेष्वेव नियतो यजिं प्रति शेषभावः। आपेक्षिक इतरेषाम्। यागस्य द्रव्यं प्रति प्रधानभावः, फलं प्रति गुणभावः। फलस्य यागं प्रति प्राधान्यं, पुरुषं प्रति गुणता। पुरुषस्य फलं प्रति प्रधानता, औदुम्बरीसंमानादि प्रति गुणत्वम्। तस्मात्संमताऽवधारणा[2]। द्रव्यगुणसंस्कारा यागं प्रति नियोगतो निर्देशा गुणभूता एवेति ॥ ६ ॥ शेषत्वस्य लक्ष्याधिकरणम् ॥ ३ ॥**

त० वा०—पुरुषोऽपि यजेतेत्याख्यातेन गुणभूत आक्षिप्तः। औदुम्बरीसंमानादौ विहित इति शेषः। एवं चतुःसूत्रेणाधिकरणेन समस्तः शेषत्वविषयः प्रतिपादितः।

अत्र चोद्यते। यत्तावद् 'द्रव्यगुणसंस्कारेषु' इत्यत्र न तु यागफलपुरुषेषु शेषत्वमित्यभिधाय, अन्ते पुरुषस्य शेषित्वनिराकरणं तदसंबद्धम्। यत्तु 'प्रत्यक्षश्चास्य द्रव्यत्वात्कर्म प्रति गुणभावः, इति। तदपि व्याहतं, पुनरुक्तं च, पूर्वमेवाभिहितत्वात्। न च यागफलाभ्यां शेषत्वनिराकरणवद्भ्यां सहास्यातुल्यप्रवृत्तित्वादुच्चारणं युक्तम्। तस्मादसदेतत्।

यदप्यधिकरणसमाप्तावुक्तम्—**अथेदानीमत्र भगवान्वृत्तिकारः परिनिश्चिकायेति**। तदपि प्रथममेव द्रव्य-गुण-संस्काराणां निरपेक्षशेषत्वाभिधानात्कर्मफलपुरुषाणां च द्रव्यादीनि प्रति प्राधान्येऽवस्थिते, सूत्रैरेव परस्परापेक्षशेषत्वप्रतिपादनादुक्तार्थमिति मन्दफलं दृश्यते।

तेनैवं परिहर्तव्यम्। अस्याधिकरणस्य व्याख्यानद्वयं कृतम्। तत्र प्रथमं तावत्स्वमतेन 'शेषः परार्थत्वात्' इत्यभिहिते बादरिमतमुपकारलक्षणशेषत्वाभिप्रायेण द्रव्यगुणसंस्कारेष्वेव शेषत्वमित्येवं पूर्वपक्षीकृत्य, जैमिनिमतमेव सिद्धान्तत्वेन वर्णितम्। तथा च पूर्वत्र दृष्टोपकारानुक्रमणमेव भाष्ये दृश्यते। तत्र च पुरुषस्य द्रव्यत्वात्प्रत्यक्षमेव क्रियानिर्वृत्तिहेतुत्वादिष्टमेव, शेषत्वम्, यागफलयोस्तु न किंचित्प्रति प्रत्यक्षं साधनत्वमुपलभ्यत इत्यशेषत्वम्।

यत्तु न यागफलपुरुषेष्विति त्रयाणामपि भाष्ये संकीर्तनं, न तत्प्रकृतशेषपदानुषङ्गादेवं कल्पयितव्यं, न तेषां शेषत्वमिति। किं तर्हि ? यत्सिद्धान्तवादिसंमतं त्रयाणामपि भाष्ये संकीर्तनम्, न तत्प्रकृतशेषपदानुसङ्गादेवं कल्पयितव्यं, न तेषां

---

१. क० शेषान्। २. तस्मात्सम्यगवधारणा।

शेषत्वमिति। किं तर्हि? यत्सिद्धान्तवादिसंमतं तन्न भवतीत्येवं संबन्धः। सर्वत्र हि पूर्वपक्षवादिना सिद्धान्तवादिमतं प्रतिषेद्धव्यं न यत्किंचित्। शेषत्वमेव हि असौ तदभिप्रेतमेवेति प्रतिषेधति, न स्वरूपमात्रेण। सिद्धान्तवादिनश्चैतन्मतं, यदुत यागफलपुरुषाणां द्व्याकारत्वं-किंचिदपेक्ष्य शेषत्वं, किंचिदपेक्ष्य शेषित्वमिति तद् बादरिमतानुसारी भाष्यकारः प्रतिषेधति। न तु यागफलपुरुषेषु सिद्धान्तवादिसंमतं द्व्याकारत्वम्। यागफलयोरेकान्तेनैव शेषित्वात्पुरुषस्य चात्यन्तशेषत्वात्। सर्वथा य एवैक आकारः प्रतिषिद्धस्तेनैव तद् द्व्याकारत्वनिराकरणं शक्यमिति त्रयाणामप्येतावता तुल्यधर्मत्वात्सह निर्देशः 'कर्माण्यपि जैमिनिः' इत्यादिभिरन्तर्णीतद्व्याकारमेव शेषत्वं प्रतिपादितम्, पारार्थ्यलक्षणशेषत्वाङ्गीकरणात्।

नन्वेवं सति पुरुषष्य द्रव्यत्वात्पूर्वपक्षवादिनैवाभ्युपगम्य[1] शेषत्वं, शेषित्वे निराकृते सिद्धान्तवादिना तदेव प्रतिपादनीयमिति न वक्तव्यं 'पुरुषश्च कर्मार्थत्वात्' इति। नैष दोषः। तेन हि यागफलयोरशेषत्वात्तस्य शेषित्वं निराकृतम्। ततश्च यावदेव [2]सूत्रद्वयेन यागफलयोः शेषत्वं प्रतिपादितम्, तावदेव यागोपसर्जनं फलं प्रति प्रधानत्वादुभौ प्रति केवलं शेषित्वमेव प्रसक्तमिति, प्रलीने द्व्याकारत्वे पुनः शेषत्वप्रतिप्रसवार्थमुच्यते 'पुरुषश्च कर्मार्थत्वात्' इति।

अथवा परेणोपकारद्वारेण शेषत्वमभ्युपगतं तदयुक्तं मन्यमानः फलयागयोरिवास्यापि परार्थ्यकृतमेवेति प्रतिपादयिष्यन्नाह—'पुरुषश्च कर्मार्थत्वात्' न तदुपकरित्वादिति।

वृत्तिकारमतेन सूत्रचतुष्टयमन्यथा व्याख्यास्यन्नाह—'अथात्र भगवान्' इति। नैवेदानीं बादरिमतं पूर्वपक्षः। किं तर्हि? 'शेषः परार्थत्वात्' इति सामान्येन लक्षणमुक्त्वा, तस्यैवं विषयप्रदर्शनद्वारेणोत्तरः प्रपञ्चः क्रियते। तत्र पूर्वव्याख्यायां द्रव्यसंस्कारेष्वेव शेषत्वमित्येवमवधारणं पूर्वपक्षे कृतम्। तदानीं तु सिद्धान्तरूपेणैव बादरिमतमप्रतिषेधेनानुमतं कृत्वा लक्षणप्रपञ्चाभ्यां शेषत्वं वर्णयिष्यते। द्रव्यगुणसंस्कारेषु शेषत्वमेवेत्यवधारयति। अतश्च द्रव्यगुणसंस्काराः शेषत्वेन नियताः, शेषित्वं न प्रतिपद्यन्ते। शेषत्वं पुनरनियतत्वाद्यागफलपुरुषेष्वप्यस्त्वेवेति तत्प्रतिपादनार्थान्युत्तरसूत्राण्यवकल्पन्ते। तस्मादापेक्षिकशेषशेषित्वमात्रमेवैभिः सूत्रैः प्रतिपाद्यते। तथा च भाष्ये दर्शितम्। ततश्च द्विप्रकार एष शेषविषयो नैयमिक आपेक्षिकश्चेत्युक्तं भवति।

ननु च द्रव्यगुणसंस्काराणामपि स्वाङ्गानि प्रति प्रधानत्वाद्यागं च प्रति गुणभावादापेक्षिकमेव शेषशेषित्वम्। तथा हि—

---

१. क० अभ्युपगम्यते।    २. क० पूर्वसूत्रद्वयेन।

व्रीह्यादीनां प्रधानत्वमवघातादिषु स्थितम् ।
मुसलादीन्यपेक्ष्यैवमवघातप्रधानता ॥

व्रीह्यादयो ह्यवघातादीन्प्रति प्रधानभूताः पुरोडाशनिर्वृत्तिं प्रति गुणभूताः । तथा गुणः संख्यादिः संख्येयं प्रति परिच्छेदाच्छेषः । येषां तु गुणानां निष्पाद्या सा, तान्प्रति शेषिणी । तथा संस्कारः संमार्गावघातादिरग्निव्रीह्यादेः शेषः, स्वसाधनानामिध्मसंनहनोलूखलमुसलादीनां शेषी । तस्मान्नावधारणं सिध्यतीति ।

तदुच्यते—

द्रव्यादेर्यत्र शेषत्वं तत्र नैवास्ति शेषिता ।
फलयागनराणां तु द्व्याकारत्वं परस्परम् ॥

द्रव्यगुणसंस्कारा हि फलवन्तं यागं प्रति नियोगतः शेषभूताः । सत्यपि स्वाङ्गानि प्रति शेषित्वे, तं प्रति नास्तीत्यभिधीयते । अत एव भाष्यकारोऽपि 'नियोगतो यजिं प्रति शेषभावः' इत्याह । न ब्रवीति नियतः शेषभाव इति । 'आपेक्षिक इतरेषाम्' इत्यत्रापि यजिं प्रतीत्यनुवर्तते । तथा ह्येकैकस्य द्वौ द्वौ प्रति गुणत्वं प्राधान्यं च दृश्यते । यागस्य तावद् द्रव्यात्मकं निर्वर्तकं पुरुषं प्रति प्राधान्यं, फलं प्रति गुणता । यश्च फलं प्रति गुणः, स[1] शक्यते फलस्य स्वामिनं पुरुषमपि प्रति सुतरां गुण इति वक्तुम् । यथा तस्य पुरुषं प्रति प्राधान्यं, तस्य तदुपसर्जनं फलं प्रति सुतरां तदित्यपि शक्यनिरूपणम् ।

एवं फलस्य यागं प्रति प्राधान्यात्तत्साधनं पुरुषमपि प्रति प्राधान्यम्, पुरुषं प्रति गुणत्वात्तदनुष्ठेये यागेऽपि गुणत्वम् ।

तथा पुरुषस्य फलं प्रति प्राधान्यात्तत्साधनं यागमपि प्रति प्रधानत्वम् । यागं च प्रति गुणभावात्तत्साध्ये फलेऽपि गुणत्वम् । न त्वेवं द्रव्यगुणसंस्कारेष्विति विशेषः ।

यत्त्विदं पारम्पर्येणापि शेषत्वं, प्राधान्यं चोक्तम्, इदमर्थलक्षणं वस्तुमात्ररूपेणेत्यवगन्तव्यम् । न व्यवहारार्थम् । मा भूदङ्गत्वांशेन विकृतौ फलपुरुषयोरपि अतिदेशात्सिद्धान्तविरोधः । तस्मादेतावत्प्रकार एव वक्ष्यमाणप्रपञ्चशेषत्वविषयसंक्षेप इति सिद्धम् ॥ ६ ॥

(इति तृतीयं शेषत्वस्य लक्ष्यनिर्देशाधिकरणम् ॥ ३ ॥)

भा० प्र०—स्थल विशेष में पुरुष भी शेष होता है, यही इस सूत्र में कहा गया है। "औदुम्बरी पुरुषसम्मित अर्थात् पुरुष का परिमाणविशिष्ट होगा" इत्यादि स्थल में पुरुष भी गुणभूत होने से वह भी परार्थ है। इस कारण पुरुष भी शेष अर्थात् अङ्ग

---

१. क० स इति ।

होता है । अतः, केवल द्रव्य, गुण एवं संस्कार ही शेष है—यह नहीं है, किन्तु, याग, फल एवं पुरुष भी शेष पद वाच्य है ।

भगवान् भाष्यकार ने इस स्थल में वृत्तिकार भगवान् उपवर्ष के मत उद्धृत कर कहा है कि द्रव्य, गुण एवं संस्कार—ये निरपेक्षशेष अर्थात् ये सदा याग का ही शेष अर्थात् अङ्ग होता है और याग, फल एवम् पुरुष का शेषत्व, वह आपेक्षिक—अर्थात् किसी की तुलना में शेष एवं किसी की तुलना में शेषी = अङ्गी होता है ।

"पुरुषः च" = पुरुष भी शेष, "कर्मार्थत्वात्" = यतः पुरुष भी कर्म के लिए अर्थात् "औदुम्बरीसम्मान" आदि कर्म में गुणभूत होने से श्रुति मध्य में उपदिष्ट होता है ॥ ६ ॥

यह तृतीय शेषत्वलक्ष्य निर्देशाधिकरण है ।

## अथ चतुर्थं तेषामर्थाधिकरणम् ।

## [४] तेषामर्थेन सम्बन्धः ॥ ७ ॥ सि०

**शा० भा०—स्तो दर्शपूर्णमासौ 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । तत्र श्रूयन्ते धर्माः—निर्वपणं, प्रोक्षणमवहननमित्येवमादय औषधधर्माः । तथोत्पवनविलापनग्रहणासादनादय आज्यमर्धाः । तथा शाखाहरणम्, गवां प्रस्थापनम्, गवां प्रस्नावनमित्येवमादयोऽपि सानाय्यस्य । तेषु संदेहः—किं सर्वे औषधे आज्ये सांनाय्ये च कर्तव्याः, उत ये यत्र क्रियमाणा अर्थवन्तस्ते तत्र कर्तव्या इति । ननु संयुक्ता एवैते श्रूयन्ते । यथा 'व्रीहीनवहन्ति, तण्डुलान्पिनष्टि' इति । बाढं संयुक्ताः । अवघातादयस्तु पदार्था विधीयन्ते श्रुत्या । वाक्येनेषां व्रीह्यादिसंयोगः । अतोऽस्ति संशयः । किं तावत्प्राप्तम् ? तेषामर्थेन संबन्धः । अर्थेन—प्रयोजनेन । ये यत्र क्रियमाणाः प्रयोजनवन्तः । ते तत्र कर्तव्याः । प्रथनादय आज्य-सांनाय्ययोरनुपकारका इति, न तत्र करणीयाः । एवमुत्पवनादय औषध-सांनाय्ययोः । शाखाहरणादय आज्यौषधयोः ।**

**ननु श्रूयन्ते सर्वे सर्वत्र । एतदेव न जानीमः श्रूयन्ते, न श्रूयन्त इति । तद्विचारयितव्यम् । यद्यपि श्रूयेरन्, तथाऽप्यनुपकारकत्वान्नैव कर्तव्या भवेयुः ॥ ७ ॥**

**अथ चतुर्थं तेषामर्थाधिकरणम् ।**

त० वा०—उक्तः सहेतुः सविषयश्च शेषः । इदानीं कथ च विनियुज्यन्ते ? इत्ययमंशो विचार्यते । तत्र त्रिष्वधिकरणेषु क्रमेण संस्कार-द्रव्य-गुणानां विनियोगः कथ्यते । तत्रापि किल प्रथमे लिङ्गेन, द्वितीये वाक्येन, तृतीये श्रुत्या विनियोग इति केचित् ।

**तत्र केषाञ्चिन्मतोपन्यासः ।**

तत्त्वाचार्या नेच्छन्ति। यद्यप्यत्र विचित्रप्रमाणव्यापारपरामर्शः तथाऽपि श्रुतिविनियोग एवात्र पादे। लिङ्गादिविनियोगस्तु द्वितीयपादात्प्रभृति भविष्यतीत्युक्तम्[1]। **औषध धर्मा** इत्याद्यप्येतदधिकरणसाध्यमपि[2] सिद्धान्ताभिप्रायेणोक्तम्।

**ननु संयुक्ता एवैत** इति सिद्धान्तवादी श्रुतिबलेन संशयमाक्षिपति। परः पुनः पदान्तरसंबन्धकृतं व्रीह्यादिसंबन्धं शुद्धावघातविधिना बाध्यमानं मन्यमान आह—**अवघातादयस्तु पदार्था विधीयन्ते श्रुत्येति ।**

तच्चैतदयुक्तमिव। कुतः ?

प्रयुज्यते पदं किंचिद्विना न हि पदान्तरात्।
वाक्याधिकरणे चोक्ता श्रुतिबाधप्रतिक्रिया ॥

न हि व्रीह्यादिभिः संबध्यमाना अवघातदयो नावघातादयो[3] भवन्ति। यदि ह्येवं भवेयुः, ततः श्रुतिविरुद्धत्वाद्वाक्यं बाध्येत। अत्र पुनः केवलानामेवावघातादीनामनुष्ठातुमशक्यत्वादवश्यमेव संबन्ध्यन्तरे कार्याः[4]। न हि भवत्पक्षेऽपि अवघातादयः केवलाः क्रियन्ते। तत्र प्रकरणलभ्यद्रव्यमात्रसंबन्धः क्लेशान्तरेण कल्प्येत। अथापि किंचिदध्याहृत्य संबन्धः क्रियते, तथाऽपि क्लेशः। अथाऽऽरादुपकारकत्वेन प्रधानसंबन्ध इष्यते, तत्रापि विप्रकर्षः। अथ तु नैव केनचित्संबध्यते, ततो विध्यानर्थक्यप्रसङ्गः। तस्मादसदेतत्।

तेनैवं व्याख्येयम्—

वाक्यभेदतदेकत्वसंदेहान्नात्र संशयः।
परमावान्तरापूर्वप्रयुक्तत्वकृतो ह्यसौ ॥

नैवात्रायं पूर्वपक्षहेतुरवघातादयः पदार्थाः स्वतन्त्राः श्रुत्या विधीयन्ते वाक्येन व्रीह्यादिभिः संबध्यन्ते। तच्च श्रुत्या बाध्यते। तस्मात्केवलविधानात्किं सर्वार्थाः किं वा दृष्टोपकारसामर्थ्येन यथासंयोगमेव भवन्तीति। किं तर्हि—

विधीयतेऽवघातादि श्रुत्या व्रीह्यादिसंगतः।
व्रीहित्वाद्यर्थता चास्य निष्फलत्वेन नेष्यते ॥

यदि ह्येषां यथाश्रुतव्रीह्याद्यर्थत्वमध्यवसीयते, ततः संयुक्तत्वात्सर्वे सर्वत्र न प्राप्नुयुः। एते पुनर्नवमाद्याधिकरणन्यायेन श्रौतं व्रीहित्वमुल्लङ्घ्यापूर्वसाधनत्वेन संबध्यन्ते। तच्च प्रकरणापेक्षापूर्वसाधनांशलक्षणागम्यत्वाद्वाक्यगम्यमिति मन्यमान आह—**वाक्येनैषां व्रीह्यादिसंबन्धः**, न श्रुत्या। यच्च तदपूर्वसाध-

---

१. क० इत्युक्तं तैः। २. क० इत्याद्येत।
३. क० द्वितीयमवघातादयो। ४ क० संबन्ध्यन्तरेण कार्यं।

नांशलक्षणात्मकं वाक्यम्, तत्प्रकरणाविशेषाद्यथौषधे, तथाऽऽज्यसांनाय्ययोरप्यविशिष्टम् । एवमुत्पवनविलापनशाखाहरणादीनां लक्षणयैवाश्रुतहविरन्तरसंबन्धो दर्शयितव्यः ।

तत्र किमेकं दर्शपूर्णमासापूर्वं धर्माणां प्रयोजकमुतानेकम् । यदाऽप्यनेकम्, तदाऽपि किमपूर्वमात्रम्, उत किंचिदेवेति । यद्येकमपूर्वं सर्वाणि वा, सर्वेषां प्रयोजकानि ततः संकरो धर्माणाम् । अथ त्वनेकमपूर्वं किंचिदेव प्रयोजकम्, ततः प्रत्येकं व्यवस्थेति । तत्र सिद्धान्तेनैव तावदुपक्रमते 'तेषामर्थेन संबन्धः' । यद्यपि तावत्केवलपदवाच्याः श्रूयेरंस्तथाऽपि क्व क्रियेरन्नित्यपेक्षिते यत्र क्रियमाणाः प्रयोजनवन्तो भवन्ति । तत्र कर्तव्याः । न चैते संकीर्यमाणाः सर्वत्र प्रयोजनवन्तो दृश्यन्ते । सत्यपि चापूर्वप्रयुक्तत्वे दृष्टप्रयोजनद्वार एव संबन्धोऽवकल्पते ।

अथवा शास्त्रेणैव यत्र क्रियमाणाः प्रयोजनवन्तो विज्ञायन्ते, यदपूर्वसाधनं व्रीह्यादिशब्दैः स्वाभिधेयजात्येकार्थसमवायि लक्षितम्, तदर्थत्वेनावघातादयो विज्ञायमानाः संबन्धाभावादपूर्वान्तरसाधनेऽलक्षिते न भविष्यन्ति । ननु **श्रूयन्ते सर्वे सर्वत्रेति**—अपूर्वैकत्वात्, भेदे चासति लक्षणानियमापरिज्ञानात्प्रयोजनस्य च विध्युत्तरकाललभ्यत्वान्न तद्दर्शनद्वारेण व्यवस्थेति, मत्वा परिचोदना । **एतदेव न जानीम इति ।** नावश्यमेकमेवापूर्वं प्रयोजकम्, अपूर्वमात्रं वेत्यभिप्रायः । सत्यपि ह्यविशेषश्रवणे 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्यविरुद्धैव व्यवस्था ।

अथवैकापूर्वापूर्वमात्रप्रयुक्तत्वपक्षयोः संकरः । नानापूर्वप्रयुक्तव्रीह्यादिजातिलक्षितसाधनसंबन्धे तु व्यवस्था । न चैतयोरन्यतरस्याऽवधारणम् । अतो न जानीमः सर्वे सर्वत्र श्रूयन्ते नेति ॥ ७ ॥

भा० प्र०—शेष किसको कहते है ? एवम् उसका हेतु क्या है ? इसका निरूपण किया गया है । कहाँ शेष का विनियोग होता है—इसका निरूपण किया जा रहा है । ''दर्शपूर्णमासाभ्यां यजेत्'' इस वाक्य में दर्शपूर्णमास यज्ञ बिहित होता है । उस यज्ञ में धर्म विशेष भी उक्त होता है । जैसे निर्वपन, प्रोक्षण, अवहनन आदि औषध धर्म = औषधिजात द्रव्य का धर्म, उत्पवन, विलापन, ग्रहण, आसादन = स्थापन आदि आज्य का धर्म अर्थात् साम्न्याय्य का = दुग्धरूप हविःविशेष का धर्म है । ये धर्म क्या अविशेष में सभी द्रव्य में ही इच्छा के अनुसार अनुष्ठेय है अथवा ये द्रव्यविशेष में व्यवस्थित है—यही संशय है । इस प्रकार संशय होने पर पूर्वपक्ष को दृढ़ करने के लिए सिद्धान्ती के मत का अनुवादपूर्वक कहा है कि जो धर्म जिस द्रव्य में अनुष्ठित होने पर दृष्ट उपकार होता है—वही उसमें अनुष्ठेय है । अतः, औषधिजात द्रव्य में अवघात आदि ही कर्तव्य है, कारण, तुषविमोचन उसका दृष्ट प्रयोजन है । इस प्रकार विलापन आदि आज्य का धर्म रूप में अनुष्ठेय है । अन्य विषयों को भी इसी प्रकार समझना चाहिए ।

"तेषां" = उसका अर्थात् संस्कारों का, अर्थेन सम्बन्धः" = अर्थ के साथ अर्थात् दृष्ट प्रयोजन के अनुसार सम्बन्ध होता है ॥ ७ ॥

**विहितस्तु सर्वधर्मः स्यात्संयोगतोऽविशेषात् प्रकरणाविशेषाच्च ॥ ८ ॥**

**शा० भा०—उच्यते-योऽर्थात्प्राप्तः स्यात्, स यत्र प्रयोजनम्, तत्रैव क्रियेत । शब्देन तु सर्वेऽमी पदार्था विहिताः । तेन न यत्र केवलं प्रयोजनं प्रत्यक्षं दृश्यते, तत्रैव कर्तव्याः । क्व तर्हि ? यत्र यत्र विहिताः । ते चामी सर्वत्र विहिता गम्यन्ते । कुतः ? संयोगतोऽविशेषात्प्रकरणाविशेषाच्च । सर्वेषां तावदाज्यौषध-सांनाय्यानामपूर्वेण साध्यसाधनसंयोगोऽविशिष्टः । यत्र क्रियमाणा अपूर्वस्य कृता भवन्तीति विज्ञायते । तथा प्रकरणमविशिष्टम् । यस्मिन्विहिताः सर्वेषां विहिता भवन्तीति गम्यते । अतः सर्वे सर्वत्र कर्तव्याः । यत्त्वमी न सर्वत्रोप-कुर्वन्तीति । विधानसामर्थ्यात्सर्वत्रोपकारका इति गम्यते । स चायमदृष्ट उपकारो भविष्यति ॥ ८ ॥ पूर्वपक्षः ॥**

त० वा०—परः स्वाभिप्रायं विवृणोति । फलस्य हि सूक्ष्मसामर्थ्यरूपाव-स्थाङ्कुरस्थानीया पूर्वानुत्पन्नोत्पतेरपूर्वमित्युक्तं प्राक् । तच्च फलैकत्वादेकमेवाध्य-वसीयते । तत्साधनत्वं चाऽऽज्यौषधसांनाय्यानां सर्वेषामविशिष्टम् । अतस्तदुद्देशेन विहितानां सर्वधर्मत्वं विज्ञायते । यद्यपि चाऽऽग्नेयादीनामवान्तरापूर्वाणि प्रात्या-त्मिकानि भवेयुः । तथाऽपि तेषां निष्फलत्वाद्यागादिस्वरूपवदेव प्रयोजकशक्ति-र्नास्तीति, परमापूर्वमेव प्रयोजकमवधार्यते । भिन्नापूर्वप्रयुक्तत्वेऽपि प्रकरणगता-पूर्वसाधनमात्रोद्देशेन विधीयमानानां शेषाणां[1] विशेषेणानुपादानात्, उपादाने च वाक्यभेदप्रसङ्गात्सार्वत्रिकविधानमस्तीति सर्वधर्मत्वे हेतुः । तत्सिद्ध्यर्थं च 'संयोगतोऽविशेषात्प्रकरणाविशेषाच्च' इत्युक्तम् । यदेकस्यापूर्वसाधनत्वं धर्म-संबन्धकारणम्, तदितरत्राप्यविशिष्टम् । यत्तु विशिष्टं व्रीहित्वादि, तल्लक्षणा-मात्रौपयिकत्वादनियामकम् । यदपि कारकत्वं लक्ष्यते, तदपि सर्वेषां प्रदेयत्वाद-विशिष्टम् । तस्मादपूर्वासंबद्धमप्रदेयमप्रकृतापूर्वसाधनं च वर्जयित्वा, सर्वे सर्वत्र कर्तव्याः । यो ह्यर्थात्प्राप्नोतीति—अचोदितः सन्सामर्थ्येन, लौकिकप्रयोजनेन वा यः प्राप्नोति, स तद्वशेन व्यवतिष्ठते ।

अथवा यत्र पूर्वतरप्राप्तप्रयोजनद्वारेण धर्माः प्राप्नुवन्ति, न च धर्मेभ्य एव प्रयोजनकल्पना । यथा विकृतिषु, तत्र यावदर्थत्वं भवेत् । अत्र पुनः प्रकृतावुप-देशेन प्राक्प्रयोजनेभ्यः स्वरूपमात्रेण कल्पयिष्यमाणप्रयोजनाः सन्तो विधीयन्ते ।

१. क० विशेषाणां ।

तेन नैषा वचनव्यक्तिः,, यज्ञ प्रयोजनम्, तत्रैते । किं तर्हि ? यत्रैते तत्र दृष्टमदृष्टं वा प्रयोजनमिति । तस्मात्सर्वधर्माः ॥ ८ ॥

भा० प्र०—पूर्वपक्षी ने कहा है कि—"विहितस्तु सर्वधर्मः स्यात्" अर्थात् अवहनन, उत्पवन आदि कर्म जब शास्त्र विहित है, तब सभी द्रव्यों का ही धर्म होगा अर्थात् सभी द्रव्यों में ही अवहनन, उत्पवन आदि अविशेष अनुष्ठेय है, कारण, "संयोगतः विशेषात्" = दृष्ट प्रयोजन का निर्वाह करने के लिए शास्त्र की विधि नहीं है, किन्तु अपूर्व से फल साधन करने के लिए ही शास्त्र विधि है। व्रीहि आदि औषधि जातद्रव्य एवम् आज्य सन्नाय्य आदि सभी जब परम अपूर्व का साधक है और अवहनन, उत्पवन आदि जब उनके अपूर्व निष्पादन के ही उपयोगी है, तब अवहनन, उत्पवन आदि सभी द्रव्य के ही धर्म रूप में अनुष्ठेय होंगे। ये सभी द्रव्यों के ही धर्म के रूप में अनुष्ठेय हैं—इसमें अन्य कारण यह है कि "प्रकरणाविशेषात्" = एक ही प्रकरण में = दर्श पूर्णमास के प्रकरण में जब ये अवहनन, उत्पवन आदि धर्म अनुष्ठेयरूप में उक्त होते हैं, तब ये अविशेषरूप में उस प्रकरण के सभी द्रव्यों के साथ अन्वित होता है। प्रकरणगत विशेष अर्थात् पार्थक्य रहने से द्रव्य विशेष में धर्म विशेष का नियम अर्थात् व्यवस्था की जाती है, किन्तु ऐसा न होने से ये सभी द्रव्यों के धर्म हैं।

"विहितः" = शास्त्रविहित कर्म, "तु" = प्रत्यवस्थान में, "सर्वधर्म स्यात्" = सभी के धर्म होंगे, "संयोगतः अबिशेषात्" = यतः साध्यसाधन सम्बन्ध सभी में अर्थात् एक रूप रहता है, "प्रकरणाविशेषात् च" = एवम् प्रकरण का भो अविशेष रहता है, अर्थात् विशेष या भेद नहीं है। यह पूर्वपक्ष है ॥ ८ ॥

## अर्थलोपादकर्म स्यात् ॥ ९ ॥

**शा० भा०—नैतत्—सर्वे सर्वत्र करणीया इति। ये यत्र नोपकुर्वन्ति, न ते तत्र क्रियामर्हन्तीत्युक्तमेव। ननु विधानसामर्थ्यात्सर्वे सर्वत्रोपकरिष्यन्ति। नेति ब्रूमः ॥ ९ ॥ सिद्धान्तः ॥**

त० वा०—दृष्टार्थलोपात् शास्त्रगम्यार्थलोपाद्वेति निगदव्याख्यातं भाष्यम् ॥९॥

भा० प्र०—पूर्वपक्षी के मत का प्रतिवाद करते हुए सिद्धान्ती ने कहा है कि "अर्थलोपात् अकर्म स्यात्" = अवहनन, उत्पवन आदि सभी के धर्म नहीं हो सकते हैं, क्योंकि, ऐसा मानने पर अवहनन आदि के दृष्ट फल के लोप की आपत्ति होगी और अदृष्ट के अनुरोध में दृष्ट प्रयोजन का लोप नहीं माना जा सकता है।

"अर्थलोपात्" = अर्थ का अर्थात् दृष्ट प्रयोजन के लोप की आपत्ति होने से "अकर्म स्यात्" = अकर्म होगा अर्थात् अवहनन, उत्पवन आदि सर्वधर्म नहीं होगा ॥ ९ ॥

## फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ १० ॥

**शा० भा०—नास्ति विधानम्, येन सर्वे सर्वत्रोपकुर्वन्ति । न च प्रत्यक्षादिभिरुपकारमवगच्छामः । अर्थापत्तिरपि नियोगतस्तत्रैव[1] भवेत्, यत्रैव शब्देन चोदना भवति, नान्यथा । यदि च प्रथनादीनामाज्यसांनाय्ययोरनुपकुर्वतामपि तत्प्रकरणे समाम्नायोऽनुपपन्नो भवेत्, ततोऽर्थाददृष्ट उपकारः कल्प्येत । ते त्ववश्यं समाम्नानीया औषधार्थम् । फलं हि सह चेष्टयाऽवहननादिकयाऽवगम्यते तुष[2]विमोचनादि । प्रयोजनं च तेन । न तस्मादृते पुरोडाशः सिध्यति । सति चास्मिन्नर्थवान्प्रकरणे समाम्नायः । अर्थवति च तस्मिन्नादृष्टकल्पनायां प्रमाणमस्तीत्यतो न शक्यं कल्पयितुम् । यदि च तत्र तण्डुलादिनिष्पादनं दृष्टं नाभविष्यत्, ततो विप्रयोगे तण्डुलादीनामभावादुपकारस्य, शब्दार्थमात्रं दृष्टोपकारानपेक्षं कर्तव्यमित्याज्यसांनाय्ययोरपि क्रियमाणानामदृष्टमभविष्यत् । तस्मान्न प्रथनादयः सर्वत्र । एवमुत्पवनादयः, शाखाहरणादयश्च । तस्मान्न सर्वे सर्वत्र कर्तव्याः । प्रथनादयो नाऽऽज्यसांनाय्ययोः । औषधे एव ते । उत्पवनादय आज्यस्य, नौषधसांनाय्ययोः । शाखाहरणादयश्च सांनाय्यस्स[3], नाऽऽज्यौषधयोरिति सिद्धम् ॥ १० ॥ युक्तिः ॥ ४ ॥**

**इति चतुर्थं तेषामर्थाधिकरणम् ।**

त० वा०—यदुक्तमदृष्टकल्पनान्नैवेतरत्राप्यर्थलोप इति ।

तत्राभिधीयते—

यद्याहत्य विधीयेरन्नाज्येऽपि प्रथनादयः ।
अदृष्टार्था अगत्या स्युर्दृष्टं वा न भवेद्यदि ॥

आम्नानान्यथानुपपत्त्या ह्यदृष्टं कल्प्यते । तच्चाऽऽम्नानमन्यथैव दृष्टार्थतयोपपन्नमित्यर्थापत्तेरसंभवः । तद्दर्शयति । अवघातादीनामनुष्ठानसहितं फलं व्रीहिषु दृश्यते । अन्यत्र तु चेष्टामात्रम् । न च सफलचेष्टानुष्ठानसंभवे विफलानुष्ठाने विधिः पुरुषं नियोक्तुं शक्नोति । न च तेनानियुज्यमानः फलकल्पनानिमित्तं लभते । तदितरेतराश्रयं भवति । फलाद्विधिर्विधेश्च फलमित्यभ्युपगमात् ।

न ह्यत्रैकमपि स्पष्टं प्रसिद्धं व्रीहिषु द्वयम् ।
अन्योन्यनिरपेक्षं च प्रत्यक्षमुपलभ्यते ॥

---

१. ब. तद्भावेयत्रैव । २. ब. तुषकणविमोचनादि । ३. ब. सांनाय्ये ।

तथोत्पवनादीनामाज्यसांनाय्ययोरिति योजनीयम् । तथा हि—

> योऽर्थः प्रत्यक्षदृष्टोऽपि क्रतुना पुरुषेण वा ।
> नापेक्ष्येतोपकाराय सोऽग्राह्यो न त्वयं तथा ॥

अवघातादिनिर्वर्त्यो हि तुषकणविप्रमोचनादिरर्थः पुरोडाशसिद्धिं प्रति षड्भिरपि व्रीहिपुरोडाशक्रत्वपूर्वाध्वर्युयजमानैरपेक्षितः । न हि तस्मादृते व्रीहिभिर्यष्टुं पुरोडाशो वा निर्वर्तयितुं शक्येतेति । तद्दर्शयति—**प्रयोजनं च तेनेति ।**

> विप्रयोगे तु दृष्टस्य फलस्य तदभावजा ।
> तेषां शब्दार्थमात्रत्वात्स्याददृष्टार्थकल्पना ॥

ततश्चावघात आज्यसांनाय्ययोरपि स्यात् । सति तु दृष्टे काल्पनिकासंभवाद्यथार्थमेव व्यवस्थासिद्धिः । तथा हि—

> क्वचिद् दृष्टनिराकाङ्क्षः क्षीणार्थापत्तिशक्तिकः ।
> नादृष्टार्थोऽपि सोऽन्यत्र शक्यः कल्पयितुं विधिः ॥

अथवा तत एते सर्वत्र विहिता भवेयुः, यदि परमापूर्वप्रयुक्ताः, सर्वापूर्वप्रयुक्ता वा स्युः । तदा चैवं ते भवेयुः । यदि भिन्नानि व्रीह्यादिकर्मापूर्वाणि न स्युः । यदि चैषां प्रयोजकशक्तिर्न स्यात् । तानि तु प्रयोजकशक्तिमन्ति प्रतिकर्म भिन्नानि विद्यन्ते । तत्र भेदस्तावदपूर्वाधिकरणे साधितः ।

यद्यपि चैषा साक्षादफलत्वं, तथाऽपि स्वरूपसिद्ध्यन्यथानुपपत्त्यैव प्रयोजकत्वं भविष्यति । न च निष्फलानि । तन्नाम निष्फलत्वादप्रयोजकं भवति यदत्यन्तनिष्फलम् । तन्निरपेक्षं वा द्रव्ययागादि स्वरूपवल्लब्धात्मकम् । आग्नेयाद्यवान्तरापूर्वाणि तु परमापूर्वसिद्ध्यङ्गत्वात्पारम्पर्येण फलवन्ति । न च धर्मेभ्यः प्राक् सिद्धानि निर्ज्ञातोपायपरिमाणानि वा । तस्मादात्मलाभार्थमेव प्रयुज्यन्ते यच्च येषु धर्मेषु विधीयमानेष्वपूर्वमुपतिष्ठते, तत्तेषां प्रयोजकं भवति, न यावत्किंचित् । व्रीह्यादिशब्दैश्च स्वकर्मसाध्यमेव केवलमपूर्वमुपस्थाप्यते, नान्यत्, असंबन्धात् । ततश्चावघातादयस्तदेवैकमपूर्वं प्राप्यार्थवन्तो जाता न परमापूर्वं, कर्मान्तरापूर्वं वाऽपेक्षन्ते । तद्दर्शयति । यस्मादवहननादिचेष्टया सह श्रुतेषु व्रीह्यादिष्वेव स्वापूर्वसाधनद्वारेण विधेः फलं दृश्यते । तस्मान्नान्यत्र संक्रान्तिः । यदि तु तत्रापूर्वं न स्यात्, ततोऽर्थाददृष्टं कल्प्येत । व्रीह्यादिशब्दैरनुपस्थापितोऽप्युपकारः प्रयोजकः कल्प्येत । अस्ति तु तत् । सत्रमप्येवम् । विप्रयोगे—तण्डुलादिनिष्पाद्यस्यापूर्वस्य प्रयोजनाभावात्सांनाय्या[1]दिसंबन्धोऽपि व्यवहितपरमापूर्वद्वारेण, कर्मान्तरापूर्वद्वारेण वा शब्दार्थः स्यात् । प्रत्यासन्नापूर्वसद्भावे तु न शब्दस्तावन्तं खेदं सहते । तस्मादप्रमाणकः सांनाय्यादिसंबन्धः ।

---

१. क० सांन्नाय्याज्यादि ।

एवं तर्ह्याग्नेयाद्यपूर्वसंबन्धाविशेषात् स्रुगादीनामवघातादयः प्राप्नुवन्ति । नैष दोषः । कारकान्तरत्वेन तेषामलक्षितत्वात् । यथैव हि प्रदेयत्वाविशेषेऽपि सांनाय्यादेरपूर्वान्तरसाधनत्वादप्रतीतिः, एवमेकापूर्वसंबन्धेऽपि व्रीहित्वैकार्थ-समवेतप्रदेयरूपकारकत्वाभावात्स्रुगादीनामग्रहणम् ।

यत्तु तस्मिन्नेवापूर्वे समानकारकत्वेनोपकरिष्यति, तस्य भविष्यन्त्येव धर्माः । यथा यवानाम् । सर्वं चैतन्नवमे विस्तरेण वक्ष्यामः ॥१०॥

( इति चतुर्थं तेषामर्थाधिकरणम् ॥४॥ )

भा० प्र०—अवघात आदि सर्व धर्म मानने पर उनको केवल अदृष्ट का हेतु मानना पड़ेगा । किन्तु, व्रीहि आदि में अवघात आदि करने पर तुषादिविमोचन आदि रूप दृष्ट प्रयोजन सम्पादन कर यागीय अपूर्व का उत्पादक होता है । अतः तुषविमोचन आदि दृष्ट फल अवघात आदि कर्म के साथ दृष्ट होने से केवल अदृष्ट की ही कल्पना करना उचित नहीं है । क्योंकि, अन्य रूप में विधि की उपपत्ति न होने पर ही अदृष्ट की कल्पना की जाती है । किन्तु, नियमापूर्व स्वीकृत करने पर तुषविमोचन आदि दृष्ट फल के साथ जब अदृष्ट फल सम्भव है तो केवल अदृष्ट की कल्पना करना उचित नहीं है । ऐसी स्थिति में अवघातादि सर्व धर्म कहना सङ्गत नहीं है । व्रीहि आदि औषधि द्रव्यों में अवघात होगा आज्य आदि में नहीं होता है, इसी प्रकार उत्पवन आदि आज्य आदि में ही होगा, व्रीहि आदि में नहीं होगा । आज्य आदि साक्षात् सम्बन्ध से फलापूर्व में हेतु नहीं होता है, किन्तु, अवघात से निष्पन्न तण्डुल आदि के द्वारा पुरोडाश होने पर उससे सम्पादित आग्नेय आदि याग से अवान्तर अपूर्व उत्पन्न होता है और उससे अन्त में फलापूर्व उत्पन्न होता है, अतः, फलापूर्व रूप प्रयोजन निर्वाह करने से अवघातादि सर्वधर्म है—यह भी नहीं कहा जा सकता है । क्योंकि, फलापूर्व साक्षात् अवघातादि का प्रयोजक नहीं है अपितु पुरोडाश आदि के द्वारा निष्पाद्य आग्नेयादि याग से जनित अवान्त अपूर्व ही अवघातादि का प्रयोजक होता है । इसलिए, जिस द्रव्य से जिस याग के निष्पन्न होने पर अवान्तर अपूर्व हो सकता है, जिस धर्म से उस द्रव्य का उपकार होता है—वही उसमें अनुष्ठेय होता है । व्रीहि का अवघात न करने पर व्रीहि से उत्पन्न तण्डुल से निष्पन्न पुरोडाश से साध्य याग के द्वारा अपूर्व नहीं होगा । आज्य के उत्पवन, अवेक्षण आदि न करने पर उससे सम्पादित याग के द्वारा अवान्तर अपूर्व न होने से अवघात आदि व्रीहि का ही धर्म है एवम् उत्पवन आदि आज्य आदि का ही धर्म है ।

प्रकरण के द्वारा अवघात आदि सर्व धर्म होगा—यह भी नहीं कहा जा सकता है, क्योंकि, "व्रीहीन् प्रोक्षति" इत्यादि वाक्य में द्वितीया के श्रवण से (श्रुति) प्रोक्षण, आदि व्रीहि एवम् आज्य आदि का ही धर्म है—यह व्यवस्थापित होता है । प्रकरण की अपेक्षा श्रुति बलवान् होती है, अतः, प्रोक्षण, अवेक्षण आदि अदृष्टार्थक सभी धर्म प्रकरणवश

भी जब सर्व धर्म नहीं हो सकते हैं तो दृष्टार्थक अवघात के प्रसङ्ग में तो कहना ही क्या है ?

"फलं तु सह चेष्टया" = किन्तु चेष्टा अर्थात् अवहनन आदि क्रियाओं से = तुष-विमोचनादि फल दृष्ट होता है, "विप्रयोगे" = वितुषीभाव आदि दृष्ट फल न होने से, "अभावात्" = प्रयोजन का अभाव होने से, "शब्दार्थः स्यात्" = आज्यादि में भी अवघात आदि शब्दार्थ अर्थात् अनुष्ठेय होता ॥ १० ॥

यह चतुर्थ तेषामर्थाधिकरण = निर्वपन आदि व्यवस्थितविषयताधिकरण सम्पूर्ण हुआ ।

## [५] द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥११॥ सि०

**शा० भा०—स्तो दर्शपूर्णमासौ । तत्र समामनन्ति । 'स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि (तै० सं० १-६-७) इति । तत्र संदिह्यते—किं यो य इह शक्यत एभिः कर्तुं, तस्मै तस्मै पदार्थायैतानि समाम्नातानि, उत यद्येन संयुक्तम्, तस्मा एवेति ।**

**किं तावत्प्राप्तम् ? यद्येन शक्यमिति । कुतः ? एवं विधयो भविष्यन्ति तथा[1]ऽर्थवन्तः । इतरथा तेऽनुवादा निष्प्रयोजनाः । प्रकरणाविशेषश्च सर्वपदार्थान्प्रति । यज्ञायुधानीति च यज्ञसंयोगोऽविशिष्टः । तस्मात्सर्वं सर्वत्र इत्येवं प्राप्तम् । एवं प्राप्ते ।**

**ब्रूमः—द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत । यो येन पदार्थेन सहोत्पत्तिवाक्येन संयुक्तः, स पदार्थस्तेनैव कर्तव्यः । यथा स्फ्येनोद्धन्ति, इत्युद्धननार्थता स्फ्यस्य वाक्येन । तदुद्धननं न स्फ्यादन्येन कर्तव्यम् । यदा चैवं तदा प्राप्त एव स्फ्यः । तस्यायमनुवादो भवितुमर्हति, 'एतानि वै दश यज्ञायुधानि' इति । एवमेकैकस्यानुवादस्तेन तेन वचनेन प्राप्तस्य । यथा 'कपालेषु श्रपयति, अग्निहोत्रहवण्या हवींषि निर्वपति, शूर्पेण विविनक्ति, कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति, शम्यायाम्, [2]दृषदमुपदधाति, उलूखलमुसलाभ्यामवहन्ति, दृषदुपलाभ्यां पिनष्टि' इति प्रकरणात्सर्वाणि सर्वत्र प्राप्नुयुः । वचनात्तु यथावचनम् । यज्ञायुधशब्दोऽपि सामान्येन प्रयोजनं विदध[3]त्तद्बाध्येतैव । परोक्षं हि सामान्यवचनेन,**

---

१. ब. तथा । २. ब. दृषदुपदधाति ।

३. ब. तद्विदध्यात्, सविशेषेण बाध्येतैव इत्यधिकम् ।

**विशेषविधानं भवति । प्रत्यक्षं तु विशेषवचनेन विशेषविधानम् । तस्माद्यद्येनोत्पत्त्या संयुक्तम्, तत्तत्रैव विनियुज्यत इति सिद्धम् ॥ ११ ॥ स्फ्यादीनां संयोगानुसारेण व्यवस्थितत्वाधिकरणम् ॥ ५ ॥**

त० वा०—अवघातादिवदेव द्रव्याणामपि यथासंयोगं विनियोगे सिद्धे, किमर्थः पुनरारम्भः ? उच्यते । एवं तावत्तत्र दृष्टप्रयोजनवशेन यथासंयोगं विनियोगं पूर्वपक्षवादी मन्यते । स चात्रापि विना दृष्टेन प्रयोजनेन नैवाऽऽश्रयितव्यः । सति हि दृष्टार्थत्वेनान्यत्राप्रसङ्गे, न कश्चिदपि यथासंयोगं व्यवस्थाहेतुरस्ति । यथा च तस्य व्रीह्यादिसंबन्धाद्भिन्नाप्रयुक्तत्वं[1] नैवं वेद्युद्धननादिष्वेकं किंचिदपूर्वं प्रयोजकम् । एक एव च तत्र संयोगः । इह तु द्वौ संयोगौ 'एतानि वै दश यज्ञायुधानि' इत्येकः, 'स्फ्येनोद्धन्ति' इत्येवमादिरपरः । तयोश्चैको विधिः, अपरोऽनुवादः । तद्यदि पूर्वो विधि-, ततः साक्षाद्यागसंबन्धे चतुर्थाधिकरणेन व्यावर्तिते सप्तदशारत्नित्ववदानर्थक्यात्तदङ्गेष्वेवावतरत्यङ्गत्वाविशेषाद्यथासामर्थ्यं सर्वार्थानीति विज्ञायन्ते । ततश्चोद्धननादिसंयोगानामवयुत्यानुवादत्वम् ।

अथ पुनरुद्धननादिसंयुक्ता एव विधयः इतरोऽनुवादः । ततः पूर्वाधिकरणन्यायेनैव यथासंयोगं व्यवस्थेति । किं प्राप्तम् ? अपूर्वभेदसंबन्धाभावाद् दृष्टार्थत्वाविशेषाच्च यथासामर्थ्यं विनियोगः । एवं यज्ञायुधसंयुक्ता विधयो भूत्वाऽर्थवन्तो भविष्यन्ति । बहुवचनं च विधेयार्थशब्दबहुत्वाभिप्रायम् । इतरथा त्वेकवाक्यत्वादेक एव विधिः । तस्माद्यसामर्थ्यं विनियोग इति प्राप्ते ।

अभिधीयते ।

स्फ्यादेरुत्पत्तिसंबन्धः कार्यैरुद्धननादिभिः ।<br>
तत्र यज्ञायुधानीति प्राप्तमेवानुकीर्त्यते ॥

'एतानि वै दश यज्ञायुधानि' इति वैशब्दसंयोगादस्यामृवादसारूप्यम् । न चात्र भावनावचनो विधायकोऽस्ति, यो विनियुञ्जीत, विदध्याद्वेति । बहुतराणि च वाक्यानि त्वत्पक्षेऽनर्थकानि भवेयुः । न ह्येषामनुवादत्वे किंचित्प्रयोजनमस्ति । साक्षाच्चैतानि स्वाभिधानैरुद्धननादिष्वेव विनियुज्यन्ते । परोक्षवृत्त्या यज्ञायुधवाक्ये । यज्ञशब्दस्याङ्गलक्षणार्थत्वात्, आयुधशब्दस्य च युद्धसाधनवचनस्य क्रियान्तरसाधनेष्वौपचारिकत्वात् । न चात्र सप्तदशारत्निन्यायोऽवकल्पते । न ह्यत्र वाजपेयस्येतिवत्संबन्धमात्राभिधायिनी यज्ञशब्दात्परा षष्ठी दृश्यते । सत्यपि चाऽऽनर्थक्यात्तदङ्गावतरणे सामान्यशास्त्राणि विशेषशास्त्रैरुद्धननादिसंयुक्तैरुपसंह्रियमाणानि न कर्मान्तरैः संबध्येरन् । तस्मादुद्धननादिवाक्यप्रापितानां सतां यादृशं वयं यज्ञायुधत्वं पश्यामः, तादृशम् 'एतानि वै दश' इत्यनेनानूद्यते ।

---

१. क० प्रयुक्तत्वे ।

यत्त्वपूर्वभेदः प्रयोजको नास्तीति। तत्र ब्रूमः। कपालादीनां तावदस्त्येव पुरोडाशाद्यपूर्वभेदः। इतरेषामप्युद्धननादिद्वारत्वादन्यत्र तत्कृतोपकाराभावादसंकरः। तद्यथाऽवघातादयः समानापूर्वनिबन्धनेष्वपि स्रुगादिषु कारकान्तरत्वान्न क्रियन्ते। तस्मादेतेषामपि यथासंयोगमेव विनियोग इति सिद्धम्॥ ११॥

(इति पंचमं द्रव्यविषय उद्देश्यतावच्छेदकनिरूपाधिकरणम्॥ ५॥)

भा० प्र०—अवघात, प्रोक्षण आदि को धर्म का साङ्कर्य्य अर्थात् सर्वधर्मता मानने पर परस्पर के धर्म परस्पर में अनुष्ठित होने पर उनके साङ्कर्य की प्राप्ति का निराकरण होने पर भी कर्म के सम्पादन के विषय में स्फ्य, कपाल आदि द्रव्यों के साङ्कर्य का निवारण नहीं हो सकता है, क्योंकि, "स्फ्यश्च कपालानि च" (तै० सं० १।६।७) इत्यादि श्रुति में "एतानि वै दश यज्ञायुधानि" अर्थात् ये दश यज्ञ के आयुध हैं। यह कह कर स्फ्य, कपाल आदि द्रव्यों को साधारण रूप में सभी यज्ञों का आयुध कहा गया है। स्फ्य आदि किसी द्रव्य से किसी कर्म का अनुष्ठान करने पर भी उनका यज्ञायुधत्व अर्थात् यज्ञसाधनत्व समस्त नहीं होता है। 'स्फ्य' तलवार के आकार का काष्ठफलक विशेष हैं। इस प्रकार पूर्वपक्ष होने पर सिद्धान्त रूप में कहा जाता है कि "द्रव्यं च तदर्थम् एवं चोद्यते उत्पत्तिसंयोगात्", उत्पत्तिवाक्य में जिस कर्म के साथ जिस द्रव्य का साध्य साधनता सम्बन्ध द्वितीया, तृतीया आदि विभक्तियों के श्रवण से विज्ञापित होती है, वही द्रव्य उस कर्म का अङ्ग अर्थात् साधन होता है। अतः, "स्फ्येन उद्धन्ति" अर्थात् स्फ्य से वेदि को खोदता है। इस वचन के अनुसार स्फ्य से उद्धनेन, "कपालेन श्रपयति" अर्थात् कपाल से पुरोडाश को पकाता है, श्रपण = पाक करना, "उलूखलमुसलाभ्याम् अवहन्ति" अर्थात् ऊखलमूसल से व्रीहि को कूटता है अर्थात् अवघात करता है। "दृषदुपलाभ्यां पिनष्टि" अर्थात् शिला और लोढी से तण्डुलों को पीसता है। इस निर्देश के मत में 'दृषत्' एवम् उपल से पेषण होगा। अन्य द्रव्य के सम्बन्ध में भी इसी प्रकार का नियम समझना चाहिए। पूर्वपक्षी के मत के अनुसार प्रकरणवश से द्रव्यादि का साङ्कर्य होता है, किन्तु प्रकरण की अपेक्षा श्रुति के बलवान् होने से विशेष वचनों से 'स्फ्य' कपालादि द्रव्य का भी कार्य व्यवस्थित है। यदि कहा जाय कि "स्फ्यश्च कपालानि च" इत्यादि वाक्य की क्या दशा होगी? ऐसी स्थिति में यह कहा जा सकता है कि यह अनुवाद मात्र है। यदि यह कहा जाय कि अनुवाद मानने पर वह व्यर्थ होगा, ऐसी स्थिति में यह कहा जा सकता हैं "यज्ञायुधानि सम्भवन्ति" इस वाक्य में जो "सम्भार" विधान किया गया है अर्थात् यज्ञपात्रों का आसादन विहित होता है, यह उसी में उपयोगी नहीं होगा। इसीलिए "स्फ्यश्च" इत्यादि वाक्य अनुवाद होने पर भी सर्वथा निरर्थक नहीं है।

"द्रव्यं च" = स्फ्य, कपाल आदि द्रव्य भी, "तदर्थम् एव" = उसी कार्य का अङ्ग के रूप में, "चोद्यते" = विहित होता है, "उत्पत्तिसंयोगात्" = उत्पत्तिवाक्य में

अर्थात् कर्म विधायक वाक्य में, संयोग अर्थात् साध्यसाधनादि सम्बन्ध बोधित होने से ॥ ११ ॥

यह पञ्चम द्रव्य विषय में उद्देश्यतावच्छेदकता निरूपणाधिकरण ( संयोगानुसार स्फ्य आदि का व्यवस्थिततत्व अधिकरण समाप्त हुआ । )

## अथ षष्ठमरुणाधिकरणम्

## [६] अर्थैकत्वे द्रव्यगुणयोरेककर्म्यान्नियमः स्यात् ॥१२॥ सि०

शा० भा०—जोतिष्टोमे क्रयं प्रकृत्य श्रूयते, 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति', इति । तत्र संदेहः—किमरुणिमा कृत्स्नप्रकरणे निविशेत, उत क्रय एवैकहायन्यामिति । कथं पुनः, अरुणया क्रीणाति, इत्येवं विस्पष्टे क्रय-संबन्धे गम्यमाने संशय इति ? उच्यते—इह हि गुणमरुणिमानममूर्तं सन्तं क्रियायः करणमिति शब्द उपदिशति, यत्करणाभिधायिन्या तृतीयाविभक्त्या संयुज्य निर्दिशति—अरुणयेति । न चामूर्तोऽर्थः क्रियायाः साधनं भवितुमर्हति । अतोऽसंबन्धं क्रीणातिनाऽरुणगुणस्यावगच्छामः । न चाशङ्क[1]नीयमर्थं प्रमाणभूतः शब्दोऽभिधास्यतीत्येवं प्रकल्पना[2] कदाचिदुपपद्येतापि । केनचित्प्रकारेण संबन्ध इति वचनप्रामाण्य[3]प्रकारान्वेषणे बुद्धिर्भवति । तद्यदि परं विचारयन्तः क्रिया-संबन्धसामर्थ्यमवगमिष्यामः—एकवाक्यतया क्रयएवारुणिमानं निवेशयिष्यामः । अथ त्वप्रमाद्यद्भिरन्विष्यमाणो न कथंचन संबन्ध उपपत्स्यते, ततो वाक्य-भेदमभ्युपगम्य प्रकरणधर्मसामेनमध्यवस्यामः । तस्मादवश्यं विचारणीयमेत-दिति । किं तावत्प्राप्तम् ? कृत्स्ने प्रकरणे निवेशः । कस्मात् ? संयोगतोऽविशे-षात्प्रकरणाविशेषाच्च ।

ननु[4] प्रकरणाद्वाक्यं बलीयो भवतीत्येकवाक्यत्वादरुणिमा क्रयेण संभन्स्यत इति । नैतदेवमवगम्यते । न हि वचनशतेनाप्यनारभ्योऽर्थः शक्यो विधातुम् । यो हि ब्रूयादुदकेन दग्धव्यम्, अग्निना क्लेदयितव्यमिति, किं स वचनप्रयोजन-सामञ्जस्यमश्नुवीत । न चामूर्तोऽर्थः क्रियायाः साधनमुपपद्यते । तस्मादरुणया क्रीणातीतिसंबन्धाभावारेकवाक्यता न भवतीति ।

ननु नैवायं गुणवचनः । किं तर्हि ? द्रव्यवचनः । कुतः ? स्त्रीलिङ्गसम्ब-न्धात् । द्रव्यविशेषा ह्येते स्त्री पुमान् नपुंसकमिति । स्त्रियां यत्प्रातिपदिकं

---

१. ब. अशंकनीयं । २. ब. प्रकल्प्य ।
३. ब. वचनप्रामाण्यात् । ४. ब. ननु च ।

वर्तते तस्मात्स्त्रीप्रत्ययो भवतीति। स्त्रीप्रत्ययं चारुणयेत्युपलभामहे। तस्माद् द्रव्यवचनोऽरुणाशब्द इति। तदेतदपेशलम्। तदेव हि द्रव्यमरुणिम्ना परिच्छिद्यमानमरुणाशब्दाभिधानीयतां लभते। तदेवान्यगुणकं नारुणाशब्दः शक्नोत्यभिवदितुम्। अरुणिमानमेष शब्दो न व्यभिचरति। व्यभिचरति पुनर्द्रव्यम्। अव्यभिचारि च कारणं कारणवतामिष्टम्। अतोऽस्य गुणः स्वार्थ इति गम्यते[1]। तदस्य प्रत्यक्षतो गुणवचनता गम्यते। स्त्रीप्रत्ययदर्शनात्तु नूनमरुणाप्रातिपदिकं द्रव्यवचनमित्यनुमानम्। प्रत्यक्षं चानुमानाद्बलीयः। तस्माद् गुणवचनः। कथं तर्हि स्त्रीप्रत्ययसंबन्धः। भवति हि गुणवचनस्यापि स्त्रीलिङ्गता। यथा करुणा बुद्धिः, एवमरुणेति। गुणवचनश्चेत्क्रीणातिना न संबध्यते। तस्माद्वाक्यभेदं कृत्वा प्रकरणे सर्वस्मिन्नेव संनिवेश इति।

अथ यदि क्रीणातिना न संबध्यते तस्मिन्नेव वाक्य एकहायनीशब्देन संभन्त्स्यते न भविष्यति वाक्यभेद इति तन्न। केवलं हि गुणमरुणाशब्दोऽभिदधाति, न द्रव्यगुणौ। केवलं च द्रव्यमेकहायनीशब्दः, न गुणसहितमिति, तयोः संबन्धस्य वाचिकां षष्ठीमन्तरेण कथं सम्बन्धो गम्यते।

आह। अन्तरेणापि षष्ठीमेकविभक्तिनिर्देशात्सामानाधिकरण्यमवगमिष्यामः। यथा नीलमुत्पलमिति। तदनुपपन्नम्। रूपादरुणाशब्दस्य गुणवचनता, कल्पनीयं त्वेकविभक्तिसंयोगादेकहायनीशब्दसंनिधानाच्च तदेकवाक्यतामभ्युपगम्यैकहायनीशब्दसामानाधिकरण्यम्। न च लिङ्गाद्वाक्यं बलीयः। तस्मादसदेतत्। तत्रोच्यते। यदा केवलगुणवचनतायां शब्दः प्रवर्तमानो न्यायेन संबन्धं लभते, तदाऽनुपदेशकत्वादानर्थक्यं मा भदिति द्रव्यपरतामापद्यते। तस्यामवस्थायामेकविभक्तियुक्तेनैकहायनीशब्देन संनिहितेनैकवाक्यतामापद्यमानः समानाधिकरणो भवति। तथा च कृत्वा नीलमुत्पलमित्युपपद्यते। स चायमरुणशब्दस्तस्यामवस्थायां वर्तते। न ह्यस्य स्वार्थमभिदधत इतो विच्छिन्नस्य प्रकरणेऽप्यर्थवत्ता। कुतः ? येनैव हेतुना क्रीणातिना न संबध्यते, नामूर्तोऽर्थः क्रियायाः साधनं भवति, न च क्रियासाधनैर्द्रव्यैः। न हि केवलगुणवचनः शक्नोति द्रव्यमभिधातुमिति। स एव हेतुः प्रकरणसंबन्धाभावेऽपि। तत्रापि संबध्यमानः क्रियाभिर्वा संबध्येत, तत्साधनैर्वा द्रव्यैः। तच्चोभयमप्यनुपपन्नम्। अतोऽनर्थकत्वपरिजिहीर्षया संनिहितेनैकहायनीशब्देनाऽरुणाशब्दः संबध्यते। नास्ति वाक्यभेदः।

---

१. ब० मन्यते।

नैतदेवम् । न ह्ययमरुणाशब्द एकहायनीविशेषणं भवितुमर्हति । किं कारणम् ? करणविभक्त्या तृतीयया समुच्चरितोऽयम् । तेनैतेन तृतीयाश्रुतिसामर्थ्यात्क्रियाविशेषणेन भवितव्यम् । कारकाणां हि क्रियया संबन्धः, न द्रव्येणेति । स एष श्रुतिसामर्थ्यात्क्रियाविशेषणम्, वाक्यादेकहायनीविशेषणम् । श्रुतिश्च वाक्याद्बलीयसी । तस्मान्नास्यैकहायनीसंबन्ध इति ।

ननु च गुणस्य क्रियासंबन्धाभावादविवक्षिता कारकविभक्तिरिति[1], एकहायनीसंबन्धोऽयमध्यवसितः । एवमपि नोपपद्यते । यदि कारकाभिधानमविवक्षितमिति गुणशब्देनैतेन द्रव्यमभिधातुमिष्यते, तदा प्रातिपदिकार्थस्याव्यतिरेक इति प्रथमा विभक्तिः प्राप्नोति । न हि तृतीयान्तस्तमभिसंबन्धं शक्नोति वक्तुम् । न चान्यथानुपपत्तिरित्यन्योऽस्यानुपपद्यमानोऽर्थः शक्यते कल्पयितुम् । यथाऽग्नौ तिष्ठति माणवक इत्युक्ते ज्वलनेऽनुपपद्यमानो[2] नाश्वे, गवि वा कल्प्यते । अग्निसमीपवचन एवाऽध्यवसीयते । तद्वदिहाप्यप्रथमान्तः शब्दो न कथंचिदप्यव्यतिरिक्तेप्रातिपदिकार्थे भवितुमर्हति । तस्मात्काममनर्थकोऽवगम्यताम्, नास्यैकहायनीयसंबन्धोऽध्यवसातव्यः ।

आह—न ब्रूमो न कारकमरुणाशब्देनाभिधीयत इति, व्यक्तमरुणगुणविशिष्टमेतेन कारकमभिधीयते । कदाचित्तु किंचिद्विधित्सितं भवति, कदाचिदुपसर्जनीभूतोऽर्थो विधित्सितः, प्रधानीभूतोऽनुवादः । तद्यथा दण्डीत्युपसर्जनीभूतदण्डकपुरुषप्रधानकः शब्दोऽवगम्यते । कदाचित्तु निर्ज्ञाते पुरुषे दण्डगुणविधानार्थमुच्चार्यते 'दण्डी प्रैषानन्वाह' इति । यथा[3] लोहितोष्णीषा ऋत्विजः प्रचरन्ति, इति । एवमिहापि यद्युपसर्जनभूतोऽरुणो गुणः, प्रधानभूतम्—कारकम्, तथाऽप्यनूदिते कारकेऽरुणविधानार्थं वचनं युज्यते । तस्मादेकहायनीयसम्बन्ध उपपद्यते नास्ति वाक्यभेद इति ।

नैतत्सारम् । अत्र ह्येकहायनीक्रीणात्योरनवबुद्धं सम्बन्धं [4]बोधयितुमयमेकहायनीशब्द उच्चरितः । स एष कथमिवारुणाशब्देन सम्बध्यते ? तदेतदभिहितमपि पुनः पुनः पर्यनुयुज्यते । कथं पुनरेकहायनीशब्दस्य क्रीणातिनाऽरुणगुणेन च समाने समभिव्याहारे क्रीणातिना संबन्धोऽभ्युपगमनीयः न पुनरारुण्येनेति । शब्दप्रामाण्यात् । भवति हि क्रियासम्बन्धस्य वाचिका विभक्तिरेकहायनीशब्दमनुनिविष्टा, न तु गुणसंबन्धस्य वाचिका । का पुनः क्रियासंबन्धस्य वाचिका ? का वा गुणसंबन्धस्येति ? कारकलक्षणा क्रिया-

१. ब० कारकशक्ति । २. ब० अनुपपद्यमानः शब्दः ।
३. ब० तथा । ४. ब० अवबोधयितुं ।

सम्बन्धे विवक्षिते भवति द्वितीयादिः। अविवक्षिते पुनः कारके सम्बन्धमात्र-विवक्षायां षष्ठी। न चात्र षष्ठीं पश्यामः। पश्यामस्तु खलु तृतीयाम्। अतः क्रीणातिना संबन्धमभ्युपगच्छाम एकहायनीशब्दस्य, नारुणाशब्देनेति। कथं तर्हि भवत्यत्र संबन्धो नीलमुत्पलमिति ? उच्यते।[1] भवति, न तु श्रुतिलक्षणः, किं तु वाक्यलक्षणः। उत्पलशब्दसंनिधाने [2]तदपेक्षोनीलशब्दस्तेनैकवाक्यता-मभ्युपगच्छन्नाजहत्स्वार्थवृत्तिरुत्पलविशेषाभिधानपर[3] उच्चार्यमाणः सम्बन्ध-मभ्युपैति।

नन्विहापि वाक्यलक्षणस्तद्वदेवारुणिम्ना समं संबन्ध एकहायन्या युज्यते। नेति ब्रूमः। श्रुतिर्हि वाक्याद् बलीयसी। श्रुतिश्चास्याः क्रियासम्बन्धमाह, न गुणसम्बन्धम्। यदि पुनः श्रुतिसामर्थ्यात्क्रियासम्बन्धोऽभ्युपगम्येत, एकवाक्य-त्वादपि गुणसम्बन्धः। नैवं शक्यम्। यो ह्यन्येन सह सम्बन्द्धुमुच्चार्यते, न तत्समीपगतोऽप्यन्यस्तेन सह सम्बन्द्धुमर्हति। यथा भार्या राज्ञः, पुरुषो देवदत्त-स्येति भार्याविशेषणार्थमुच्चार्यमाणो राजशब्दो न पुरुषेण[4] सम्बध्यते। तद्व-दिह क्रियाविशेषणार्थमुच्चार्यमाण[5] एकहायनीशब्दो नारुणाशब्देन सम्बन्ध-मर्हति।

आह। सत्यमेवमेतत्[6]। असत्यामाकाङ्क्षायामानन्तर्यमकारणम्। सर्वत्र तु बोधिते पदार्थे वाक्यार्थ उपपद्यते, नान्यथा। सामान्यवृत्ति हि पदम्, विशेषवृत्ति वाक्यम्। सामान्येनाभिप्रवृत्तानां पदार्थानां यद्विशेषेऽवस्थानं स वाक्यार्थः। तदेतदुक्तं तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् १-१-२५ इति। तत्र प्रत्यक्षतः पदार्थोः, वाक्यार्थः पुनरानुमानिकः। तदेतदवगम्यताम्। केवल-स्वार्थवृत्तिपदमनुपदेशकमिति, पदान्तरेण संनिहितेनैकवाक्यत्वमभ्युपैति, नान्यथेति। तदिह यद्यप्येकहायनीशब्दः क्रीणातिना सम्बध्यमानः कृतार्थो न पदान्तरेण सम्बन्धमाकाङ्क्षति। अरुणाशब्दस्तु पदान्तरेण सम्बन्धमलभमानो-ऽनर्थक इत्येकहायनीशब्देनैकवाक्यतामभ्युपैति।

ननूक्तं क्रियासम्बन्धार्थो, नारुणासम्बन्धार्थ इति। आह—अरुणाशब्दस्या-ऽऽनर्थक्यपरिहारायोभयसम्बन्धार्थ इति वदामः। अन्यार्थमपि कृतम्, अन्यार्थ-मपि शक्नोति कर्तुम्। तद्यथा शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं

---

१. न० भवति वाक्यलक्षणः संबन्धो न तु-श्रुतिलक्षणः।

२. ब० तदपेक्षोनीलशब्दः प्रयुज्यमानः।

३. ब० न जहत्स्वार्थवृत्तिः।

४. ब० पुरुषशब्देन।

५. ब० क्रयविशेषणार्थं।

६. ब० सत्यमेतत्।

पीयते, उपस्पृश्यते च। एवमिहापि क्रयसम्बन्धार्थमेकहायनीशब्द उच्चार्यमाणोऽरुणाशब्देन सह संभन्त्स्यते न किंचिद् दुष्यति। तस्मान्न वाक्यभेद इति। नैतदस्ति। यद्यप्ययमरुणाशब्दोऽनर्थको मा भूदित्येकहायन्या संबध्येत, तथाऽपि सर्वस्मिन्प्रकरणे निवेष्टुमर्हति। न चैनं सोमं क्रीणाति इत्येष शब्दः शक्नोति विशेष्टुम्। न ह्ययं विशेषणत्वेनोच्चार्यते, किं तर्हि? अपूर्वोऽयं विधीयते।

नन्वपूर्वोऽपि विधीयमान एकहायनीशब्दवदितरेण संभन्त्स्यते। कथम्? प्रयोजनाय ह्युच्चार्यमाणः शब्दो येनार्थः, तस्मै तावत्प्रयोजनायाऽवकल्प्यते। संनिहितश्च बुद्धौ भवति। तेन बुद्धौ संनिहितेन शक्यते साकाङ्क्षः शब्दः सम्बन्धयितुमिति।

नैतदेवम्। यो ह्यसम्बध्यमानोऽनर्थको भवति, स संबध्यते, नान्यः। कुत एतत्? संबध्यमाने हि सामान्यं विशेषेऽवस्थाप्येत। तत्र वाक्येन श्रुतिः पीडिता स्यात्। न चायमसंबध्यमानः क्रीणातिनाऽनर्थको भवति। प्रकरणगतैरभिसंभन्त्स्यते।

नन्वेतदुक्तं प्रकरणेऽप्यस्य संबन्धोऽनुपपन्न इति। नानुपपन्नः। एकस्मिन्वाक्येऽन्योऽर्थो विधीयमानो नान्येन संबध्यते, वचनव्यक्तिभेदात्। अन्या हि वचनव्यक्तिर्विधीयमानस्य, अन्या गुणेन संबध्यमानस्य अज्ञातवज्ज्ञाप्यते विधीयमानोऽर्थः, ज्ञातवदनूद्यते गुणसंबन्धार्थम्। न च सकृदुच्चार्यमाणो ज्ञातवत्, अज्ञातवच्च भवितुमर्हति। एकहायनीशब्दः[1] क्रये विधीयमानोऽज्ञातवत्स्यात्। अरुणाशब्देन संबध्यमानश्च ज्ञातवत्। वाक्यभेदे पुनर्न दोषो भवति, प्रकरणे तु वाक्यान्तरैः क्रियाद्रव्यान्तराणि च प्राप्तानि। तैरिदं वाक्यान्तरविहितं संबध्यते। [2]तत्रान्यस्मिन्विधीयतेऽन्यस्मिन्वाक्येऽनूद्यत[3] इत्युपपन्नं भवति। तस्मात् संयोगतोऽविशेषात्, प्रकरणाविशेषाच्च सर्वस्मिन् प्रकरणे द्रव्येषु निवेश[4] इति। एवं प्राप्ते।

ब्रूमः—अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादिति। यत्रार्थैकत्वं श्रूयते द्रव्यगुणयोः, तत्र द्रव्यगुणावेकस्मिन्पदार्थे नियम्येयाताम्। कुतः? ऐककर्म्यात्—ऐककार्यत्वात्। एकं हि कार्यं द्रव्यगुणयोः श्रूयते—क्रयसम्बन्धः। कथमेतदवगम्यते? एकवाक्यत्वात्। कथमेकवाक्यत्वम्? अरुणया पिङ्गाक्ष्यैकहायन्या इत्यपर्यवसितोऽर्थः साकाङ्क्षत्वादभिधातृप्रतिपत्त्रोः। सोमं क्रीणाति इति तु पर्यवस्यति। तयोरेवं नैरुत्सुक्यात्।

---

१. ब० तथा एकहायनीशब्दः।
२. ब० अन्यास्मनवाक्य।
३. ब० अन्यस्मिन्ननूद्यते।
४. ब० निविशत इति।

यद्येककार्यता किमिति विकल्पो न भवति (यदभिधीयते नियम्येयाता-मिति)। नैतदेवम्। एकार्थास्तु विकल्पेरन्निति विकल्पधर्माणौ प्राप्नुत इत्य-युक्तोऽयं पर्यनुयोगः। कथम्? पर्यनुयोगो नाम स भवति, यः स्वपक्षं साधयति, विपक्षस्य च प्रतीपमाचरति। न च विकल्पोऽस्मत्पक्षस्य प्रतीपमाचरति। क्रयेणारुणिमसम्बन्ध इत्येष नः पक्षः। न च विकल्पः, नानाकार्यत्वात्।

नन्विदानीमेवोक्तमेकं कार्यमिति। तच्चापि विरुद्धम्। एवं हि पूर्वमभि-हितम्। 'अमूर्तत्वाद् गुणो न क्रियया संबध्यत इति। इदानीं विपरीतमभि-धीयते। उभावपि द्रव्यगुणावेकार्थौ क्रयमभिनिर्वर्तयत इति। उच्यते। नैतद्वि-रुद्धम्। न च विकल्पः। एकं कार्यम्। सामर्थ्यभेदस्तु। साक्षाद्धि द्रव्यं क्रियां प्रत्युपकरोति। गुणस्तु विशिनष्टि साधनम्। यद्येवं न तर्हि गुणः क्रियामभि-निर्वर्तयति साधनस्यासौ विशेषक इति। नैतदेवम्। गुणस्य क्रियामभिनिर्वर्तयत एतदेव सामर्थ्यं यत्साधनं विशिष्यात्। आकाङ्क्षति च क्रिया साधनविशेष-णम्। चिह्नभूतो हि गुणः साधनं लक्षयति। असति चिह्ने न लक्ष्येत कतम-त्साधनं क्रियाया इति। ततः क्रियां नाध्यवस्येम[1] कर्तुमिति भवति क्रियासाधनं गुणः। न चैवं सति विकल्पो भवति। यथाऽधिकरणस्य कर्त्रादीनां च। अधि-करणं हि कर्त्रादीनि धारयति। तान्यधार्यमाणानि न शक्नुवन्ति क्रियामभि-निर्वर्तयितुम्। तथा कर्ता कारणादीनि समाधत्ते। तान्यसमाहितानि न शक्नु-वन्ति स्वं स्वमर्थमभिनिर्वर्तयितुम्[2]। यस्मिंस्तु साधनोपकारे कार्ये, तस्मिन्ने-वोपकारेऽन्यत्साधनं विधीयते, तत्र विकल्पः। यथा ब्रीहिभिर्यजेत, यवैर्यजेत इति। उभयेऽपि तण्डुलनिर्वृत्त्यर्थाः।

एवं तर्हि तदेवेदं संजातम्। भवत्येकहायनीविधानम्, तद्विशेषणं चारुणो गुणः। तत्र स एव दोषो वाक्यभेदः प्रसज्येतेति। न ब्रूमोऽरुणाशब्द एक-हायनीशब्देन सम्बध्यत इति। किं तर्हि, क्रीणातिनैव सम्बध्यते। एवं हि श्रूयतेऽरुणगुणेन क्रयमभिनिर्वर्तयेदिति। यथा च तेन निर्वर्त्यते, तथा यतितव्यं भवति। न चाविशिंषन्साधनं गुणः [3]क्रियामभिनिवर्तयतीत्यर्थात्साधनविशेष[4]-णतां प्रतिपद्यते। यथा स्थाल्यां पचेदिति क्रियासाधनत्वे निर्दिष्टेऽर्थात्संभवने[5] धारणे च स्थालीं व्यापारयति, तद्वदिहापि द्रष्टव्यम्। तस्मान्नास्ति वाक्यभेद-प्रसङ्ग इति।

---

१. ब॰ नैवाध्यवस्यम। २. ब॰ अभिसंपादयितुं।
३. ब॰ क्रियांसाधयति। ४. ब॰ विशेषणत्वं।
५. ब॰ संभरणे।

नन्वेवमपि वाक्यं भिद्येत । कथम् ? प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति । यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति प्रत्येकं भुजिः समाप्यते[1] । यथा च 'यस्य पिता पितामहः सोमं न पिबेदि'ति । एवमिहाप्यरुणया क्रीणाति, एकहायन्या क्रीणातीति । नैतदस्मत्पक्षस्य बाधकम् । एवमपि क्रय एवारुणिमा निवेक्ष्यति । न सर्वस्मिन्प्रकरण इति । सत्यमेष दोषो न भवति । किं त्वनरुणयाऽप्येकहायन्या क्रयः प्राप्नोति, अरुणया चानेकहायन्या ।

तत्र यदुक्तं द्रव्यगुणयोर्नियम इति, सा प्रतिज्ञा हीयते । न तर्हि ब्रूमो वाक्यभेद इति । कथम् ? क्रयस्य हि द्रव्यारुणिमानावुपदिश्येते, न क्रयस्तयोः । न च प्रधानं प्रतिगुणं भिद्यते, प्रतिप्रधानं हि गुणो भिद्यत इति । अस्ति चायं दृष्टान्तसमुदाये वाक्यपरिसमाप्तिरिति । यथा गर्गाः शतं दण्डचन्तामिति । तथा 'अभिषुत्य हुत्वा भक्षयन्ती'ति । तस्मादुभयविशेषणविशिष्टः क्रयो विधीयते । कथं पुनस्तस्मिंश्चेतरस्मिंश्च[2] दृष्टान्ते सति एकान्तेनावधार्यते समुदाय एव वाक्यपरिसमाप्तिर्न[3] प्रत्यवयवमिति ।

अत्र ब्रूमः । इह द्रव्यारुणिमानावुभावपि क्रि[4]यासंबद्धावुपलभ्येते परस्परेणासम्बद्धौ । क्रयोऽपि द्रव्यारुणिमभ्यां विशिष्ट उपलभ्येते नान्यतरेण । तत्र यदि द्रव्यपरम्, अरुणिमपरं च भवति वचनमिदं[5], ततः प्रत्यवयवमसंशयं क्रयसंबन्धः । अथ क्र[6]यविधित्सयाऽभिधीयते ततो यथैवायमेकहायनीविशिष्ट एवमरुणिमविशिष्ट इति नियमत[7] उभयसंबन्धोऽभ्युपगमनीयः । न चात्र द्रव्यारुणिमानावीप्सितौ । ईप्सितस्तु क्रयः । तेन हि ज्योतिष्टोमद्रव्यं सोमः परिप्राप्यते । द्रव्यारुणिमानौ क्रयार्थौ सन्तावीप्सितौ स्याताम्, नान्यथा । तस्मात्क्रयो विधीयते । स च नान्यतरविशिष्टः प्रतीयत इति, समुदाये वाक्यपरिसमाप्तिरिह निश्चीयते । यदा चैवं तदा नैकहायनीं मुक्त्वाऽन्यद् द्रव्यं क्रयसाधनमस्ति । न चारुणादन्यः साधनस्य विशेषको गुण इति नियमः सिद्धो भवति ।

अत्र वदामः । यदि क्रयस्य साधने गुणोऽभिसंबन्धमुपैति, तदा वाक्ये भिन्नेऽपि क्रयसाधनत्वादरुणिमाऽन्यस्मिन् द्रव्ये न निवेक्ष्यते, किमर्थमेकवाक्यता प्रयत्नेन साध्यत इति ? तदेतदभिधीयते । भिन्ने हि वाक्य एकहायनीसाधनकः क्रयोऽवबुद्धो भवति । अरुणासाधनमपि क्रयान्तरम् । न तस्मिन्नेवैकहायनीसाधने [8]येऽरुणिमा[9] विहितो[10] भवति । तत्र यत्क्रयान्तरमरुणगुण-

१. ब० परिसमाप्यते । २. ब० पुनरेतस्मिन् ।
३. ब० रिहन प्रत्येकमिति ब्रूमः । ४. ब० क्रयसंबद्धा ।
५. ब० मिदमिह । ६. ब० विधीयते ।
७. ब० नियोगतः । ८. ब० क्रयेऽरुणता ।
९. ब० विहिता ।

**विशिष्टं तत्रार्थात्प्राप्तमन्यदपि साधनं भवति। तदपि विशिषन्नरुणो गुणस्तेन संबध्येत एकवाक्यत्वे तु तत्परिहृतं भवति। तस्मात्साध्वभिधीयते अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादिति ॥१२॥ इति षष्ठमं आरुणाधिकरणम् ॥६॥**

### अथ षष्ठमरुणाधिकरणम्

त० वा०—अरुणाशब्दो गुणवचनः। पिङ्गाक्ष्येकहायनीशब्दौ द्वावपि सामानाधिकरण्यादेकद्रव्यवचनौ। तत्र गुणे संदेहः—किमेकवाक्यगतेनैव द्रव्येण सह सम्बध्यते, उत प्रकृतेन द्रव्यमात्रेणेति।

### पिङ्गाक्षीत्यादिशब्दानां गुणवाचित्वमिति शङ्का

ननु च पिङ्गाक्ष्येकहायनीशब्दयोरपि गुणवचनत्वान्नैवात्र वाक्ये द्रव्यमस्ति। कथं गुणवचनत्वमिति चेत् ?

### मतुष्प्रत्ययस्य सम्बन्धवाचिकत्वम्

उच्यते—

बहुव्रीहिसमासोऽयं मतुबर्थे विधीयते।
सोऽस्यास्तीति च सम्बन्धे मत्वर्थीयः प्रवर्तते॥

गोमानित्येवमादिषु हि गोषु प्रातिपदिकेनाभिहितासु तद्वत्यर्थे मतुपाऽभिधातव्येऽवश्यं तावत्सम्बन्धः पूर्वतरमभिधातव्यः। कुतः ?

न हि गोभिरसम्बद्धो गोमानित्यभिधीयते।
तस्माद्विशेषणं तत्र सम्बद्धः पूर्वमिष्यते॥

विशेषणं तावत्सर्वत्र पूर्वतरमभिधीयत इति स्थितम्। इह च सम्बन्धो विशेषणमिष्यते, न गोमात्रम्, असंबद्धेषु प्रत्ययानुत्पादात्।[1] यदि गोमात्रं विशेषणं भवेत्, ततस्तासु प्रातिपदिकेनाभिहितासु विशेष्यं प्रत्ययोऽभिदध्यात्। सम्बन्धे पुनर्विशेषणे नियोगतः सोऽभिधातव्यः केनचित्। न चास्य प्रातिपदिकमभिधायकम्। आकृतिमात्राभिधायित्वात्। न च प्रातिपदिकार्थो गमकः। विनाऽपि संबन्धेनोपपद्यमानत्वात्। केवलगोशब्दोच्चारणेऽपि चाप्रतीतेः। गोमत्पदोच्चारणेऽपि प्रत्ययवेलायामेव संबन्धबुद्धिः। अतश्च 'तदागमे हि तद् दृश्यते' इत्यपि प्रत्ययार्थत्वम्। यच्च विशेष्ये वर्तते, तेन तत्प्रत्यासन्नं विशेषणमुपादातव्यम्। न च प्रातिपदिकं विशेष्ये वर्तते, यतस्तद्विशेषणभूतं संबन्धमुपाददीत। प्रत्ययस्तु तत्र वर्तत इत्युपादत्ते। स चेदुपात्तः, तेनैव संबन्धिप्रत्ययसिद्धेरभिधानशक्तिप्रतिबन्धाद्विशेष्यानभिधानम्। न च विशेष्यप्रत्ययात्संबन्धप्रत्ययो भवति।

---

१. क० प्रत्ययानुत्पत्तेः।

प्राक्संबन्धाद्विशेष्यत्वाभावात्सिद्धे च विशेष्यत्वेन संबन्धे न पश्चात्किंचित्प्रयोजनमस्तीत्यप्रतीतिरेवास्य प्राप्नोति । तस्मात्प्रथमतरप्रत्याय्यत्वात्प्रत्ययार्थः सम्बन्धः ।

इतश्च प्रत्ययार्थः सम्बन्धः ।

शब्दवृत्तिनिमित्ते हि भावप्रत्यय इष्यते ।
देवदत्तस्य गोमत्त्वं संबन्धश्च प्रतीयते ॥

यथैव शाबलेयस्य गोत्वं विशेषणम्, यथा च विशेषणभूता जातिर्भावप्रत्ययेन निष्कृष्टाऽभिधीयत इति, गोपदस्य सैव वाच्यत्वेनेष्टा । तथा देवदत्तस्य गोमत्त्वमित्युक्ते गवि प्रतिपत्त्यभावात्संबन्धनिष्कर्षप्रतीतेश्च स एव भावप्रत्ययार्थोऽध्यवसीयते । यश्च भावप्रत्ययार्थः, स प्रातिपदिकस्य विशेष्ये वर्तमानस्य निमित्तम् । यच्च निमित्तं, तद्विशेषणात्वान्मुख्यमभिधेयम् । लाक्षणिकं विशेष्यम् । यदि च मतुपा संबन्धोऽभिहितः, ततः 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह[1] ब्रूत' इति गोमत्प्रातिपदिकादुत्पन्नो भावप्रत्ययः संबन्धमभिधातुमर्हति, नान्यथा । तस्मादपि सम्बन्धोऽर्थः ।

एतेन सर्वे यौगिकाः कृत्तद्धितसमासेषु व्याख्याताः । सर्वत्र हि भावप्रत्ययः संबन्धमभिधत्ते राजपुरुषत्वमौपगवत्वं पाचकत्वमिति । अत एवैते यौगिकाः, यतस्तेन निमित्तेन वर्तन्ते । तस्मान्मत्वर्थविषयत्वाद्बहुव्रीहेरेकहायन्यादिशब्दैः सम्बन्धोऽभिधीयते ।

### बहुव्रीहेस्सम्बन्धवाचित्वोपपादनम्

किं च—

यस्मिन्नन्यपदार्थे च बहुव्रीहिर्विधीयते ।
तत्रापि प्रत्ययार्थत्वात्संबन्धस्य प्रधानता ॥

एकं हायनमस्या इति षष्ठ्यन्तेनाऽन्यपदार्थः प्रदर्श्यते । षष्ठ्यर्थस्य च प्रत्ययार्थत्वादिह प्राधान्यम् । तद्रूपदर्शनार्थमेव[2] सर्वनामप्रयोगः । केवलायाः विभक्तेरप्रयोगात्सर्वनामार्थप्रतीत्यभावाच्च । षष्ठ्याश्च स्वस्वामिसम्बन्धकारणावयवादिसम्बन्धो[3] वाच्य इत्येतत्प्रसिद्धम् । अतोऽपि सम्बन्धाभिधानं बहुव्रीहिणा ।

न चाप्यन्यपदार्थत्वं जातेरध्यवसीयते ।
न हि पिङ्गाक्षिसंबन्धस्तस्या नाप्येकवर्षता ॥

व्यक्तिधर्मा ह्येते पिङ्गे अक्षिणी अस्याः, एकं हायनमस्याः, चित्रागावोऽस्येत्येवमादयः । तासां च व्यक्तीनामनन्तत्वेन संबन्धानुपलब्धेर्व्यभिचाराच्चावाचकः

१. क० सहार्थंब्रूत । २. क० तद्रूपदर्शनार्थमेव । ३. क० स्वस्वामिसम्बन्धसमूह ।

शब्द इत्युक्तम्। न ह्यद्य जातायां पिङ्गाक्ष्यां प्रथमः प्रयोगो भवेत्। अतोऽवश्यं सामान्यं किंचिद्वाच्यमाश्रयितव्यम्। न च तदिह संबन्धादन्यदुपपद्यते।

किं च—

वयोवस्थाऽभिधीयेत यद्यपि त्वेकहायनी।
तथाऽपि गुण एवासौ न द्रव्यमिति गम्यते॥

तस्मान्न द्रव्यशब्दः कश्चिदत्र विद्यत इत्यनुदाहरणत्वम्। न चान्यदुदाहरणं सम्भवति। साक्षाद् द्रव्यवचनशब्दाभावात्। सर्वत्र हि रूढिशब्दानां जातिवचनत्वम्, यौगिकानां च संबन्धाभिधायित्वम्। यस्त्वेकान्तेन द्रव्यवचनः स्यात्, डित्थडवित्थादिशब्दः, न नैव वेदे प्रयुज्यते। तस्माज्जातिगुणयोर्गुणयोरेव वा नियमः स्यादिति सिद्धान्तोक्तावपि योजयितव्यम्।

अथवाऽधिकरणमेव निर्विषयत्वान्नाऽऽरब्धव्यमिति।

उच्यते—

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते।
न हि सम्बन्धवाच्यत्वं सम्भवत्यतिगौरवात्॥

**तन्निरासः**

यद्येकहायन्यादिभिः शब्दैः संबन्धोऽभिधीयेत, ततो नोदाह्रियेरन्। न त्वेतैः संबन्धोऽभिधीयते। कथम्?

**सम्बन्धवाचकत्वे गौरवकथनम्**

अतिगौरवात्। इह हि संबन्धमात्रं वाऽभिधेयं कल्प्यते, तद्विशेषो वा। यदि तावत्संबन्धमात्रं, ततः सर्वयौगिकानामेकविषयोपनिपातात्पर्यायत्वप्रसङ्गः। अथ संबन्धविशेषः। ततस्तस्य स्वतो विशेषाभावादवश्यं संबन्धिकृत एव भेदोऽभ्युपगन्तव्यः। संबन्ध्यपि चानभिधीयमानो न शक्नोत्यभिधीयमानं संबन्धं व्यवच्छेत्तुमित्यवश्यं सोऽप्यभिधातव्यः। न चैकस्मिन्संबन्धिनि संबन्धोऽवस्थितः। न च तन्मात्रेणान्यस्माद्व्यवच्छिन्नः प्रतीयत इति, उभावप्यभिधातव्यौ। तत्र गोमानित्येकः सबन्धी गोशब्देनाभिधीयते। द्वितीयस्य न कश्चिदभिधाता दृश्यते। तेन मतुपा विशिष्टं संबन्धमभिदधता तद्वन्तं सन्तं संबन्धिनमेकमनुक्त्वाऽभिधातुमशक्नुवता नियोगतः सोऽप्यभिधातव्यः। ततश्च तमभिधाय संबन्धाभिधायामतिगौरवं स्यात्।

अपि च।

संबन्धिनैव संबन्धः प्रत्येतुं यदि शक्यते।
पुनस्तस्याभिधाशक्तिं कः श्रुतेः परिकल्पयेत्॥

यदा च पूर्वतराभिहितसंबन्धिप्रतीत्यैव संबन्धोऽप्याक्षिप्तः तदा नैव प्रत्ययेनापि सोऽभिधीयत इति शक्यं वक्तुम्। तस्मादर्थाक्षिप्तेनैव संबन्धेन भवितव्यम्। यत्त्वप्रतीते संबन्धे, विशेष्यं न प्रतीयत इति।

तत्र ब्रूमः—

विशेषणाद्विना नेष्टो विशेष्यप्रत्ययोद्भवः।
विशेषणं च गावोऽत्र न संबन्धः कथंचन॥

देवदत्तो हि गोभिरवाच्छिन्नो विवक्षितः। ताश्च प्रातिपदिकेनोपात्ताः सन्त्येव। यत्तु नासंबद्धाभिरवच्छिद्यत इति। सत्यं नावच्छिद्यते। तेनैव ताभिः संबन्धाक्षेपोऽर्थाल्लभ्यते[1] सर्वथा तावद्गोमच्छब्देन[2] गोविशिष्टोऽयमित्येतदभिहिते, कथमनवस्थितास्ता गावस्तं विशिषन्तीति, तासामेवैष व्यापारः, न शब्दस्य।

तथा हि—

न विशिषन्ति गावोऽर्थं पृथिव्यामनवस्थिताः[3]।
तत्र किं शक्यते वक्तुं पृथिव्यप्यभिधीयते॥

न हि येन विनाऽर्थात्मलाभो नास्ति तत्तदभिधातव्यम्। किं तर्हि? यावता विना विशिष्टबुद्धिर्नोत्पद्यते—गोभिश्चाप्रतीताभिस्तद्वति बुद्धिर्नोत्पद्यते, न संबन्धेनापि।

किं च—

वक्तृव्यापारमात्रं च संबन्धप्रत्यवेक्षणम्।
स हि गोभिरसंबद्धं न गोमन्तं विवक्षति॥

सर्वत्र हि वक्तृक्रमविपर्ययेण श्रोतुः क्रमो भवति। स हि प्रथमं तावत्किंचिद्विशेष्यं विवक्षति, ततस्तस्य केनचिद्विशेषणेन विनाऽभिधातुमशक्तेर्विशेषणविवक्षां करोति, ततः शब्दोच्चारणम्। श्रोता पुनः प्रथमं तावच्छब्दं शृणोति, ततो विशेषणम्, ततो विशेष्यम्, ततस्तदुपपत्त्यर्थानि वस्त्वन्तराणि प्रपद्यते। तेन यद्यपि वक्त्रा पूर्वं संबन्ध आलोचितः तथाऽपि श्रोता पश्चादेवैनं ग्रहीष्यति। न त्वत्र वक्त्राऽप्यसौ पूर्वतरमवधारितः। संबन्धिनोरगृहीतयोर्ग्रहीतुमशक्यत्वात्, अतस्तदीयेनापि क्रमेणोत्तरकालमेव प्रतीयमानः संबन्धो नार्थाक्षिप्तत्वं परित्यजति। वस्तुधर्मश्चैष यदसंबद्धा गावो न विशिषन्ति, स तासां व्यापारो न शब्दस्य। तेन यं यथावस्थितं शक्नुवन्ति विशेष्टुम्, स तथाऽवस्थास्यते। संबन्धश्चासौ विशेष्यत्वं प्रतिपद्यत इति अर्थात्संबध्यते।

---

१. क० संबन्धोऽर्यात्। २. क० तावच्छब्देन। ३. क० अवस्थिताः।

विशेष्यत्वेन संपन्नं तद्विशेषणसंगतम् ।
गोविशिष्टोऽयमित्येवं गोमच्छब्दोऽभिधास्यति ॥

तस्मादप्यनभिधेयः संबन्धः ।

किं च— विभक्तिवाच्यरूपेण संबन्धो नावगम्यते ।
रूपान्तरेण वक्तव्य इति नास्ति च लक्षणम् ॥

षष्ठीसप्तमीभ्यां हि यादृक् संबन्धः स्वप्रधानोऽसत्त्वभूतश्च प्रत्याय्यते, न तादृक् मत्वर्थीयेन । न च 'कृदभिहितो भावो द्रव्यवद्भवतीत्येवमिव रूपान्तरोपादानं केचिदभिदधति । तत्र किमसत्त्वभूतसंबन्धाभिधानमाश्रीयताम्, उत संबन्ध्येवार्थ-लभ्यतद्विशिष्टोऽभिधीयतामिति । तदुच्यते[1]—

प्राक्प्रतीतैकसंबन्धिविशिष्टेऽभिहिते परे ।
संबन्धिन्येव संबन्धः प्रतीत इति नोच्यते ॥

यत्तु सिद्धे विशेष्ये न पश्चात्संबन्धप्रत्ययेन कार्यमिति । सत्यं नास्ति । विनाऽपि तु तेन नान्तरीयकत्वात्प्रतीयत इति किं क्रियताम् ।

यच्च भावप्रत्ययेनाभिधानादस्य मत्वर्थत्वमिति ।

अत्रापि ब्रूमः—

यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः ।
तदा गत्यन्तराभावात्संबन्धो वाच्य आश्रितः ॥

गोमतो भावो गोमत्त्वमिति हि—

यन्निमित्तमपेक्ष्यायं गोमच्छब्दः प्रवर्तते ।
स एव गोमतो भाव उच्यते त्वतलादिभिः ॥

तत्र यास्तावत्प्रातिपदिकार्थे विशेषणं गावः तासां तद्वतः पुरुषादत्यन्त-भेदाद्भावप्रत्ययेनाऽग्रहणम् । समवेतगुणग्राहो हि भावप्रत्ययः । न चाऽन्योऽभि-धीयमानस्तत्र गुणः संभवति, यो निमित्तभावाद्भाव इत्युच्येत । न च पुरुष एव तस्य भाव इत्येवं व्यपदेशभेदं लभते । तेन भावप्रत्ययः 'आनर्थक्यात्तदङ्गेषु' इत्यर्थप्राप्तं संबन्धमवलम्बते । निमित्तत्वमपि च तस्य वस्तुलक्षणमस्तीत्यभिधेय-निमित्तासंभवे तदपि तावद् गृह्यतामित्येवमाश्रीयते । तस्मादकारणमेतद्यौगिकानां संबन्धाभिधानशक्तिकल्पनायाम्[2] ।

---

१. क० तदुच्यताम् । २. क० कल्पनायाः ।

अतश्च दण्डिशब्देन संबन्ध्येवोच्यते यथा ।
तथैव योगिकैः शब्दैः पिङ्गाक्ष्यादिपदैरपि ।
संबन्धस्य च भावत्वं व्याख्येयं तेषु पूर्ववत् ।
बहुव्रीहेरतो द्रव्यमभिधेयं न तद्गुणः ॥

यदप्येकं हायनमस्य इत्यन्यपदार्थे षष्ठ्यर्थप्राधान्यात्संबन्धे बहुव्रीहिरिति ।

तत्राभिधीयते—

अभिधेयो बहुव्रीहेर्यद्यप्यस्येति कथ्यते ।
यथाऽपि प्रथमान्तेन तुल्योऽसौ संप्रतीयते ॥

यदि त्वन्यपदार्थः षष्ठ्यन्त एव संबन्धी स्यात् ततो यथैव राज्ञः पुरुष इत्यत्र षष्ठ्यन्तत्वाद्राजा पुरुषविशेषणं भवति, प्रथमान्तत्वाच्च पुरुषः प्रधानरूपेण समासार्थो भवति । एवमेव चित्रग्वादिशब्दैर्देवदत्तादिविशिष्टा गाव एव प्रतीयेरन्, न चित्रगोविशिष्टो देवदत्तादिः । तस्माच्चित्राणां गवामयमितीदृशेऽर्थे बहुव्रीहिर्वर्तते । यद्यप्यन्यथा विग्रहः तथाऽप्युत्तरकालमीदृगर्थदर्शनादेवमेव विग्रहोऽपि कर्तव्यः । ततश्च संबन्धविशिष्टाभिर्गोभिर्देवदत्तादिर्विशिष्ट इति समासार्थो विज्ञायते ।

तथैव च राज्ञः पुरुष इत्यत्र षष्ठ्यां प्रयुज्यमानायां संबन्धः प्रधानभूतोऽभिधीयते, कृते च समासे निवृत्तायां विभक्तौ पूर्वोत्तरपदयोः प्रत्येकप्रयोगदृष्टार्थापरित्यागात्संबन्धाधिक्यस्य च सामीप्यावगतविशिष्टार्थप्रत्ययादेव सिद्धेर्न संबन्धपरः समासो भवति ।

एवमेव षष्ठ्यप्रयोगादेव बहुव्रीहावपि न संबन्धप्राधान्यम् । तच्च[1] न पूर्वोत्तरपदार्थयोः, नाप्यन्यतरस्येत्यन्यपदार्थभूतद्रव्यप्राधान्याध्यवसानम् । स चान्यपदार्थः संबन्धी योग्यतावशेन जाति-द्रव्य-गुण-क्रियाणामन्यतमः परिगृह्यते ।

तद्यथा—

चित्रव्यक्तिरियं जातिर्द्रव्यं नानागुणं त्विदम् ।
गुणोऽनेकाश्रयः कश्चिदियं त्वेकाश्रया क्रिया ॥

सर्वत्र च योग्यत्वात्समानाधिकरणपदान्तरोपनीतोऽन्यपदार्थविशेषो गम्यते । तदिहैकं हायनमस्या इति जातेरनादित्वान्न विशेषणं सम्भवतीति, व्यक्तिराश्रीयते । ननु व्यक्तीनामानन्त्यव्यभिचाराभ्यामनभिधानमुक्तम् । नैष दोषः ॥

अनन्त्येऽपि हि भावनामेकं कृत्वोपलक्षणम् ।
शब्दः सुकरसंबन्धो न च व्यभिचरिष्यति ॥

---

१. क० नचेति ।

यत्र तावज्जात्यैवान्यपदार्थ उपलक्ष्यते, तत्र तयैवैकया सकृद् गृहीतयोपलक्षिता व्यक्तयो देशादिभिन्ना अप्यभिधास्यन्त इति सुज्ञानः संबन्धः। न च तदुपलक्षिताभ्योऽन्यत्र प्रयोग इत्यव्यभिचारः। यत्र तु व्यक्तिभिरेव व्यक्त्यन्तराणि विशेष्यन्ते, तत्रापि मूलोपलक्षणं जातिरेवाभ्युपगम्यते। सर्वथा दूरमपि विशेषणमालायामनुवर्तमानायां प्रथमोपलक्षणस्याभेदात्संबन्धदर्शनमुपपत्स्यते। सर्वप्रथमसर्वान्त्ययोश्च शब्दार्थत्वम्। आन्तरालिकानां तु लक्षणासिद्धज्ञानत्वादनभिधेयत्वम्। अतश्च पिङ्गत्वाक्षित्वाभ्यां स्वव्यक्तयो गुणावयवात्मिका लक्ष्यन्ते। ताभिरवयवि द्रव्यमुपलक्ष्यते। तच्च समासार्थो भवति।

## अभिधानमिति केषाञ्चिन्मतम्

सः पुनः किमभिधेयः लाक्षणिक इति। प्रधान्येन प्रतीतेः सामानाधिकरण्यात् 'अनेकमन्यपदार्थे' इति च स्मरणाद्देवतातद्धितमत्वर्थीयादिभिरिवाभिधीयत इति केचित्।

## अपरेषां मतम्

अपरे त्वाहुः—युक्तं देवतातद्धितादावनन्यप्रयोजनत्वाच्छब्दाधिक्याच्चान्यपदार्थाभिधानम्[1]। न च तत्र प्रातिपदिकार्थेन सोऽर्थः शक्यो लक्षयितुम्, व्यभिचारात्। केवलाच्च प्रातिपदिकादप्रतीतेः। बहुव्रीहौ तु पूर्वोत्तरयोः पदयोर्विद्यमानस्वार्थत्वादन्यस्य चाभ्यधिकस्य शब्दावयवस्याभावात्पिङ्गत्वाक्षित्वाभ्यामेव च द्रव्यप्रत्ययसिद्धेर्न शक्यमभिधेयत्वं कल्पयितुमिति।

## तन्निरासेन पिंगाक्ष्यादिशब्दानां द्रव्यवाचित्वम्

न त्वेतद्व्यापित्वेन शक्यमाश्रयितुम्। कर्मधारये ह्येतद्व्यापित्वेन स्यात्सर्वथा लक्षणानिमित्तोपपत्तेः। इह तु चित्रगुदित्येवमादिषु चित्रगोशब्दयोरन्यन्तव्यतिरिक्तार्थाभिधायित्वाद्देवदत्तादिशब्दैश्च न श्रुत्या, लक्षणया वा सामानाधिकरण्यमवकल्पते। प्रागपि च देवदत्तादिशब्दादन्यपदार्थप्रतीतेर्न वाक्यार्थत्वकल्पना। न च केवलं समासवेलायां यौ पदार्थाववधारितौ, तौ देवताद्यर्थसंबन्धिनौ, यतो वाक्यार्थो देवदत्तः स्यात्। तस्मादवश्यं प्रतीते, स्मरणोच्चान्यपदार्थोऽस्य वाच्य इत्यभ्युपगन्तव्यम्। एवं च प्राधान्यमविरुद्धं भविष्यति। अतश्चैवमादिषु बहुव्रीहेरन्यपदार्थाभिधानशक्तिर्दृष्टेति यत्राऽपि कथंचिल्लक्षणा संभवति, तत्रापि पूर्वक्लृप्तशक्त्यनपायादभिधेयत्वमेवाध्यवसीयते। तस्मादुपपन्नं पिङ्गाक्ष्यादीनां द्रव्यवचनत्वम्।

---

१. क० शब्दाधिक्यस्य।

यत्त्वेकहायनीति वयोवचन इति। तदनुपपन्नम्। वयसो लक्षणयाऽवगतेः। उक्षादिशब्दानां हि वयोवचनत्वम्। एकहायन्यादिशब्दाः पुनः कालविशेषयुक्तद्रव्यवचनाः सन्तो वयोलक्षयन्तः प्रवर्तन्ते। न ह्येकं हायमानस्या इत्येवं वयो निर्दिश्यते। किं तर्हि ? द्रव्यम्। तस्य ह्येकं हायनं जातस्य, न वयसः। तस्मादुभाभ्यामप्येताभ्यामात्मैकदेशोपात्तगुणविशिष्टद्रव्यप्रत्यायनादुपपन्नोऽयं संशयः—किमरुणिमा कृत्स्नप्रकरणगतक्रयाङ्गद्रव्यशेषत्वेन निविशते, अथवा समानवाक्यस्थाख्यातपदप्रत्यायितक्रय एवैकहायन्यामिति। अत्राप्युद्धननादिवदाक्षेपः। संयुक्तश्रवणादसार्वत्रिकत्वे प्राप्ते, तं परिहरति। एष गुणः क्रयेण, एकहायन्या वा समानवाक्योपादानात्संबध्येत। तत्र तावत्कारकविभक्तिनिर्देशादनाशङ्कनीयतरे सति द्रव्यसंबन्धे, क्रयसंबन्धः श्रुतिबलीयस्त्वाद्भवेत्। न चासावमूर्तत्वान्निष्क्रियस्य गुणस्योपपद्यते। यदि त्वगत्या पुनर्द्रव्ये संबन्ध आश्रीयते, तत्राप्येकहायन्याम् 'ऐकशब्द्ये परार्थवत्' इत्येवं क्रयारुणिमानौ प्रति वैरूप्यं स्यात्। भिन्नविभक्त्यर्थयोगश्चासन्नभ्युपगन्तव्यः। क्रियासम्बन्धस्य कारकविभक्तिसाध्यत्वात्, गुणसम्बन्धस्य च षष्ठ्यधीनत्वात्। अतश्च वाक्यगतेन सम्बन्धिना योग्यत्वाभावादसम्बध्यमानः प्रकरणिना गृहीतः सर्वार्थं स्यादित्याशङ्क्यते। तेन तर्ह्ययमेवार्थो निश्चीयत इति, क्रयसम्बन्धो नाऽऽशङ्कितव्यः। तदर्थमाह—**'न चाशङ्कनीयमर्थं[1] प्रमाणभूत शब्दोऽभिधास्यती'ति**। यदेतत्समानवाक्योपादानम्, करणविभक्तिविर्देशश्चैतेनापि क्रयैकहायनीविशेषणत्वबुद्धिर्दृढा जायते। तेन शब्दप्रामाण्याद्वस्तुविसंवादाच्च किं समञ्जसम्, किमसमञ्जसमिति जायते संदेहः। तत्र प्राथम्याच्छब्दानुरोधेन तावत्क्रियासम्बन्धमुपन्यस्यति, वैदिकशब्दस्यातिभाराभावात्। तत्र विनियोगबलेनास्य वस्तुसामर्थ्यसद्भावान्वेषणे यतिष्यामहे। तद्यदि केनचित्प्रकारेणोपपत्स्यते, ततः क्रय एव निवेशमङ्गीकरिष्यामः। **अथ तु न कथंचनोपपत्स्यते, ततो वाक्यभेदमभ्युपगम्य प्रकरणधर्ममेनमध्यवसास्यामः।** न चात्र वाक्यभेदः प्रत्ययाद्यन्यतमावृत्तिलक्षणः। कस्तर्हि ? विभागरूपः। क्रयवाक्यस्य भेदं विभागलक्षणमभ्युपगम्येत्यर्थः।

यद्वा भिद्यत इत्येवं घञयं कर्मकर्तरि।
अरुणाशब्द एवं च भेदो वाक्यस्य गम्यते॥

पृथग्भवद्वाक्यं भेदयतीति वाक्यभेदः। तादृशं चाभ्युपगम्य प्रकरणधर्माध्यवसानम्। एतदुक्तं भवति 'यावच्छ्रुतिवाक्ये व्याप्रियेते, तावत्प्रकरणधर्मत्वं नास्ति' यदा तु वस्तुविसंवादाद्विहतशक्तिनी ते निर्व्यापारे भविष्यतः, तदा प्रकरणविनियोग इति। किं तावत्प्राप्तमत आह—**विहितस्तु सर्वधर्मः स्यात्संयोगतोऽवि-**

१. ब. शंकनीय।

**शेषात्प्रकरणाविशेषाच्चेति**। श्रुतिवाक्ययोश्च तावदसामर्थ्यनौदासीन्यात्। कथं पुनर्गुणस्याक्रियात्मकस्य सतः प्रकरणेन ग्रहणम्? उच्यते। नैवात्र प्रकरणं ग्राहकत्वेनेष्टम्। कथं तर्हि? अरुणयेत्यत्र पदे या तृतीया, तया करणानि प्रकरणलभ्यज्योतिष्टोमापूर्वसाधनानि सोमप्रभृतीन्यनूद्यारुणप्रातिपदिकार्थो विधीयते।

अतश्च पदमेवैतद्वाक्येनैवं विभज्यते।
या व्यक्तिः करणत्वेन चोदिताऽपूर्वसाधनम्॥
तया तत्साधयेन्नित्यमरुणत्वविशिष्टया।
एवं चेदरुणं कार्यं करणं यद् ग्रहाद्यपि॥

तस्मात्सर्वकरणान्यरुणीकर्तव्यानि।

यत्पुनर्यजमानादि विहितं कारकान्तरम्।
न तस्यायं गुणः शेषः सर्वार्थोऽप्यवधारितः॥

यदुच्यते गुणवचनत्वादरुणाशब्दः क्रीणातिना न संबध्यत इति। तदाक्षिपन्नाह—**ननु नैवायं गुणवचन इति**। रूपरसादिशब्दाः केवलगुणवचनाः। तथा हि। यदा तेषां द्रव्येषु प्रयोगः, तदा न मत्वर्थीयेन विना प्रवर्तन्ते। ये पुनः शुक्लारुणादिशब्दाः ते कदाचिदेव षष्ठ्यन्तद्रव्यपदसंनिधानाद्भावप्रत्ययरहिता गुणेषु वर्तन्ते पटस्य शुक्ल इति। नित्यं गुणोपसर्जनद्रव्यवचनाः। तथा चान्तरेणापि मत्वर्थीयं द्रव्यसामानाधिकरण्यं प्रतिपद्यन्ते। यथा शुक्लः पटः, अरुणो घट इति।

ननु च मतुब्लोपाम्नानादेषामेवं वृत्तिर्भविष्यति। नैतदेवम्।

शब्दानां न हि लोपेन वाच्योऽर्थः प्रतिपाद्यते।
तस्मादुभयसामर्थ्यमेवं तत्रावगम्यते॥

यथैव क्विबन्ताधुनादिषु प्रकृतिप्रत्यययोः प्रत्येकमुभयार्थाभिधानसामर्थ्यं सदेव लोपद्वारेणान्वाख्यायते, तथैवात्र प्रातिपादिकमेव मत्वर्थमप्युपादातुं समर्थमिति, मतुब्लोपाम्नानम्। लक्षणयेति चेत्? न क्विबन्तादिवदेव मुख्यरूपप्रतीतेः। न च लक्षणासु शास्त्रेणान्वाख्यानं क्रियते। रूपादीनामपि च लक्षणोपपत्तेर्मतुपा विना वृत्तिः स्यात्। चन्दनस्य गन्ध इतिवच्चान्तरेण भावप्रत्ययं गोररुण इत्यपि प्रयोगः स्यात्। यथा च गन्धत्वमित्युक्ते चन्दनादिसंबन्धमपास्य तद्विशेषाणां गन्धत्वसंबन्धो भवति। एवमरुणत्वमित्यपि द्रव्यसंबन्धो न स्यात्। रूपादिशब्दवदेव वारुणादेरपि द्रव्यसामानाधिकरण्यं न स्यात्। यो हि मन्यते लक्षणयाऽरुणादिषु सामानाधिकरण्यमिति, तस्य रूपादिष्वपि तथैव स्यादरुणत्वादिषु वा। न हि ते किंचिदप्यधिकं वदन्ति। एतेनारुणत्वादिभ्यो मतुब्लोपप्रसक्तिर्व्याख्याता।

किं च—

लिङ्गसंख्यादिसंबन्धो गुणानां न च विद्यते ।
तद्योगादपि शुक्लादेर्द्रव्यवाचित्वमिष्यते ॥

ननु 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति १.३.९' इत्येवं सेत्स्यति । न । रूपादिशुक्लत्वादिष्वपि प्रसङ्गात् । अपि च । गुणवचन इति न गुणाभिधानमात्रेणोच्यते । किं तर्हि ? गुणमुक्त्वा यो द्रव्ये वर्तते । न ह्यन्यथा वचनशब्दः प्रयुज्यते[1] । वचनमेव स्वरूपं शब्दस्येत्येवं गुणशब्देनैव व्यवहारसिद्धेः । अत एव रूपादीनामग्रहणम् । एतेन मतुब्लोपवाक्यं व्याख्यातम् । तस्माद् द्रव्यवचनोऽरुणाशब्दः, तस्य च कारकत्वाभिधानोपपत्तेरेकवाक्यत्वसिद्धिः । अतो न सर्वधर्मत्वमिति ।

**तदेतदपेशलमिति** । आकृत्यधिकरणोक्तन्यायविसंवादादशोभनमित्यभिप्रायम् । तथा हि—

अन्वयव्यतिरेकाभ्यां ये कदाचिन्न मुञ्चति ।
स एव तस्य वाच्योऽर्थो गुणं चैष न मुञ्चति ॥

एकान्तद्रव्यसंबन्धिनि तावद् गुणे विशेषणत्वात्पूर्वतरमभिहिते तत्संबन्धादेव प्रतीयमानस्य द्रव्यस्य न शक्यं वाच्यत्वं कल्पयितुमित्युक्तम् ।

व्यभिचाराच्च न द्रव्यस्वरूपं वाच्यमिष्यते ।
तद्गुणेऽन्यत्र वृत्तेश्च निवृत्तेश्चागुणात्ततः ॥

ननु गुणान्तरोत्पत्तिकालेऽन्यदेव द्रव्यमिति, न व्यभिचरेत् ।

न तावदयमेकान्तः कार्यद्रव्यान्तरोद्भवः ।
स्थितेऽपि हि भवत्येव द्रव्ये किंचिद् गुणान्तरम् ॥

येषां तावत्कार्यद्रव्याण्येव घटादीनि पच्यन्ते, यथा पैठराणां तन्मतेनाभेद एव । पैलूकानामपि तु परमाणुषु व्यभिचारः यादृशं त्वस्माभिर्द्रव्यमभिहितं तादृशस्य सर्वत्र गुणमात्रमेव भिद्यते, न स्वरूपम् । यानि च घटादीनि द्रव्यान्तरेण गैरिकादिना रक्तानि संयुक्तसमवेतगुणद्वारेणारुणादिशब्दैरभिधीयन्ते, तत्रैकस्यैव द्रव्यस्यानेकनीलपीतादिशब्दविषयत्वापत्तेः स्पष्टं व्यभिचारित्वम् । अतश्चाऽऽकृतिव्यवहाराद् दूरेण स्थूलतरोऽयमित्यपेशलता । मतुब्लोपश्चात्यन्तनिरूढलक्षणावशादन्वाख्यायते ।

यत्तु मुख्यप्रत्ययान्नैवमिति । तत्रोच्यते ।

गौणत्वं यो वदेदत्र स एवमनुयुज्यते ।
संनिकृष्टाभिधेयार्थलक्षणायां न दुष्टता ॥

---

१. क० प्रयुज्येत ।

अग्निर्माणवक इत्यत्राग्निमाणवकयोरत्यन्तभेदात्सादृश्येन शब्दः प्रवर्तमानः प्रत्ययवैलक्षण्यान्नाभिधातेति सर्वेण ज्ञायते। ये तु जातिगुणवचना भूत्वा द्रव्यं प्रत्याययन्ति, येषामभिधेयलक्ष्यमाणवस्तुनोर्विवेकाभावात्प्रतीतावप्यविवेकः स्थित एव। स कथंचिदन्वयव्यतिरेकाभ्यां निपुणैः परीक्षकैरपनीयत इति। लोकस्य तु मुख्यबुद्धिरेव। न च परीक्षकाणामनभिधेयत्वं वदतां लोकविरोधः। प्रतीतमात्रव्यवहारी हि लोकोऽभिधानलक्षणाविवेकमकुर्वन्नुदासीनावस्थः[1] सामान्यविशेषबाधादिसिद्ध्यर्थं परीक्षकैर्विवेकं क्रियमाणं न नानुमन्यते। तस्मादविरोधः।

कथं न रूपादिशब्देष्वपि तल्लक्षणया[2] मतुब्लोपः, कथं वा लक्षणावृत्तिः शास्त्रेणान्वाख्यायत इति।

**लक्षणाया सावान्तरभेदाया निरूपणम्**

अत्राभिधीयते—

निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्।
क्रियन्ते सांप्रतं काश्चित्काश्चिनैव त्वशक्तितः॥

इह केषुचिदर्थेष्वभिधानवदेव लक्षणाशक्तिरप्यानादिकालप्रवृत्तत्वेन निरूढा। यथा शुक्लादिषु। केषुचित्तु क्रियते। यथा रथाङ्गनामा चक्रवाक इति। केषुचित्पुनः कर्तुमपि न शक्यते, यथा शब्द-स्पर्श-रूप-रस-गन्धेषु। कथं पुनरिहाविशिष्टे संबन्धे सति न लक्षणेति? तत्रोत्तरमभिधानवदिति। यथा भवतः समाने गुणशब्दत्वे शुक्लादीनां गुणोपसर्जनद्रव्यवचनत्वम्, न रूपादीनामेवं मम लक्षणेति।

तत्रैतत्स्यात् अभिधानशक्तिः स्वाभाविकी। लक्षणा तु न संबन्धादधिक निमित्तमपेक्षत इति। उच्यते। यदृच्छाशब्दत्व एतदेवं स्यात्। तव तु शुक्लादीनां समवेतगुणद्वारेण द्रव्ये वृत्तिः। तत्त्वविशिष्टं रूपादिष्वपीति द्रव्ये वृत्तिप्रसङ्गः। तत्रावश्यं गुणगतः कश्चित्सामर्थ्यभेदोऽङ्गीकर्तव्यः। येन ते शब्दाः केचिदेव गुणिपरा भवन्ति, अन्ये गुणप्रधानाः। एवं लक्षणायामपि भविष्यति॥

**यथा गुणवाचिनां शब्दानां मध्ये केषाञ्चिदगुणवाचित्वम्, केषाञ्चिद्गुणि पारात्वं तथैव लक्षणायामपि विशेषइत्युपपादनम्।**

तस्माद्यथैव शब्दानां शक्तिभेदोऽभिधां प्रति।
प्रत्येतव्यस्तथाऽर्थानां लक्ष्यार्थान्तरगोचरः॥

सत्यपि च फलानुमेये दृश्यमानार्थप्रत्यायनसामर्थ्ये, सत्यपि चास्माकमप्यदृष्टशक्तिगौरवतुल्यत्वे, अभिधेयमात्रप्रत्ययेन निवृत्तव्यापारे शब्देऽर्थप्रत्यये

---

१. क० औदासीन्यावस्थः। २. क० ते लक्षणया।

चाकृतार्थे सति कल्प्यमानत्वादर्थशक्तिः प्रमाणवती, न शब्दशक्तिः। तेनादृष्ट-कल्पनातुल्यत्वेन पक्षयोस्तुल्यबलत्वम्। अतश्च रूपादीनां लक्षणाशक्त्यभावान्मतुपा विना न द्रव्ये वृत्तिः। तथा च 'रसादिभ्यश्च' इति प्रत्ययान्तरनिवृत्यर्थं मतुम्नियमपुनःश्रुतिरमुमेवार्थं द्योतयति। न च रूपादिप्रत्ययेन न द्रव्यं[1] प्रत्याय्यते, गम्यते हि धूमादिनेवाग्निरविनाभावाद् द्रव्यम्। शब्दस्य त्वतत्परत्वाल्लक्षणानध्यवसानम्। प्रधानत्वाप्रधानत्वप्रतीतिस्तु द्रव्यगुणयोः स्वाभाविकी नित्यं हि रूपादिषु स्वप्राधान्येनाभिधीयमानेषु, द्रव्यं विशेषणत्वेनोच्यते, शुक्लादिषु विशेष्यत्वेन। अतएव चानादिकालप्रसिद्धार्थत्वादस्या लक्षणाया मतुब्लोपाम्नानेनानुगमः। या त्वादिमती नात्यन्तप्रसिद्धा, नासौ शास्त्रेणानुगम्यतेविनाऽपि चानुगमात्संबन्ध्यन्तरवशेन सा कदाचिदुपलभ्यते। तद्यथा मधुरो रसः स्निग्धः शीतो गुरुरिति स्निग्धशीतत्वादीनां गुणान्तरविशेषत्वान्न रसेन संबन्धोऽस्तीति रसलक्षितेन द्रव्येण संबध्यते। तस्माच्छक्तिपर्यनुयोगाभावान्मतुब्लोपभावाभावौ। एतेन भावप्रत्ययसदसद्भावसामानाधिकरण्यवैयधिकरण्यव्यवस्था व्याख्याता। शुक्लत्वादिशब्दाश्च भावप्रत्ययनिष्कृष्टविशेष्यभूतगुणवचनत्वाद्गन्धवदेव नित्यं वैयधिकरण्येन संबध्यन्ते।

एतावांस्तु विशेषोऽत्र यदत्रापि विशेषणम्।
विशेष्य एव शुक्लत्वे शुक्लो द्रव्यविशेषणम्॥
द्रव्योपसर्जनीभूतः स्वाप्रतिपदिके स्थितः।
तादृग्निष्कृष्यते द्रव्यात्पश्चात्तु त्वतलादिभिः॥
तेनैतस्य द्विरूपत्वं गन्धादेरेकरूपता।
तथा च शुक्ल इत्यस्य पुनरन्या द्विरूपता॥
कदाचिद् गुणमेवाऽऽह गुणिनं लक्षयेत्क्वचित्।
षष्ठ्यन्ततद्धितभक्त्यन्तवाच्यद्रव्योपसर्जनः॥
पटस्य शुक्ल इत्यत्र निष्कृष्टो गुण आश्रितः[2]।
पटः शुक्ल इति त्वत्र द्रव्यलीनोऽभिधीयते॥

### अत्र विषये शाब्दिकानां तार्किकाणाञ्च विशेषकथनम्

लिङ्गसंख्यादिसंबन्धः स्वाश्रयद्वारेण पूर्ववदेवोपपत्स्यते। तथा गुणवचनशब्दश्च द्रव्यप्राधान्ये वर्तते वैयाकरणानाम्, गुणमुक्त्वा गुणिनि वर्तमानत्वात्। न हि वैयाकरणानां वैशेषिकवद्गुणाः परिसंख्यायन्ते। किं तर्हि? अङ्गाङ्गिभावापेक्षया गुणगुणिव्यवहारः। शुक्लादिशब्दाश्चोपसर्जनीभूतमर्थं वदन्ति, न रूपादिशब्दा इति लिङ्गसंख्यासंबन्धासंकरः।

---

१. क० तद्द्रव्यं। २. क० आदितः।

भाष्यकारेण त्वेतमेव परिहारं मनसि कृत्वोक्तं, **भवति हि गुणवचनस्यापि स्त्रीलिङ्गता । यथा** करुणाबुद्धिशब्दयोः । गन्धादिशब्दतुल्यावपि चैतौ प्रदर्शनमात्रविशेषादुदाहृतौ । एतदुक्तं भवति । येऽपि तावत्स्वप्रधानगुणवचनाः तेऽपि कथंचिल्लिङ्गसंख्याभ्यां युज्यन्ते, किं पुनर्येषु द्रव्यप्राधान्यम् । एवमनया युक्त्याऽरुणेति गुणवचनः ।

**गुणवचनश्चेत्क्रीणातिना न संबध्यत** इत्युपसंहृते परः पुनराह—**अथ यदि क्रीणातिना न संबध्यते,** तत एकहायन्या संबध्यतामिति । शक्यते हि गुणवचनस्य द्रव्यसंबन्धः कर्तुम् । सिद्धान्तवादी तु श्रुत्या क्रियासंबन्धावगमाद् द्रव्यसंबन्धो वाक्यलक्षणो दुर्बलत्वाद्बाध्यत इत्येतत्प्रतिपादयितुमाह—**तन्न**[1] **। केवलं हि गुणमिति ।** द्विप्रकारो हि नाम शब्दानां संबन्धः—सामानाधिकरण्येन, वैयधिकरण्येन वा । तत्र यदोभाभ्यामुभयार्थोपादानम्, तदा सामानाधिकरण्यं भवति । षष्ठ्यन्तद्रव्यपदोच्चारणे तु वैयधिकरण्येन संबन्धः । तदिह केवलगुणगुणिवचनत्वादरुणैकहायनीशब्दयोः श्रुतिसामानाधिकरण्यं तावन्न विद्यते । नापि षष्ठीश्रुतिरस्ति । तस्मात्तृतीयाश्रुतिबलीयस्त्वान्न द्रव्यगुणयोः संबन्ध इति । बलाबलकृतं संबन्धनिराकरणमवगम्याप्रमाणकृतत्वाभिप्रायेणायं ब्रवीतीति मत्वै**कविभक्तियोगादि**त्याह—**तदनुपपन्न**मिति—बलाबलप्रदर्शनम् । प्रथमं तावत्स्वसामर्थ्येनारुणप्रातिपदिकस्य गुणवचनत्वं गम्यते । पदान्तरसंनिधानाच्च सामानाधिकरण्यमिति बलाबलम् । तत्राऽऽह—

केवलारुणवाचित्वं लिङ्गाद्यद्यपि गम्यते ।
तथाऽप्यगतितो वाक्याल्लक्षणावृत्तिराश्रिता ॥

इदानीं तृतीयाश्रुतिबलीयस्त्वात्क्रियासंबन्धावबोधाद् द्रव्यसंबन्धबाधं दर्शयति । तत्राप्यगत्यैव प्रत्यवस्थानम् ।

**ननु गुणस्य क्रियासंबन्धाभावादिति** । तस्योत्तरं तृतीयानर्थक्यप्रसङ्गादिति । न ह्यगत्याऽनभिधेयोऽर्थः शक्यः प्रत्येतुम् । न चात्र लक्षणयाऽपि सक्तुद्वितीयावत्तृतीयाऽर्थवती कारकसामान्यस्याप्यनिष्टत्वात् । परस्त्वाह लिङ्गसंख्यावदाश्रयद्वारप्राप्तं कारकमनूद्य प्रातिपदिकार्थो विधास्यत इति । अस्ति ह्येतदपि दर्शनं-यद् गुणशब्देभ्यो विनाऽपि कारकत्वेन कारकविशेषणत्वाद् द्वितीयादयो भवन्तीति ।

**नैतत्सारमिति ।** यद्यपि कथंचिदरुणयेत्यस्यैकहायनीसंबन्धयोग्यत्वम्, तथाऽपि क्रियाक्षिप्तायामेकहायन्याम् । 'ऐकशब्द्ये परार्थवत्' इत्येवमुभयसंबन्धाभावे बलीयसा क्रयसंबन्धेन गुणसंबन्धनिराकरणम् । न ह्यत्र क्रियासंबन्धविभक्तिवद्, गुणसंबन्धविभक्तिः षष्ठी दृश्यते । नीलोत्पले तु श्रुतिविरोधाभावाद्वाक्यलक्षणोऽपि

---

१. क० ननु ।

संबन्धोऽवगम्यत इति वैषम्यम्। ये तु सामानाधिकरण्यविकल्पास्तान् 'नियमो वैकार्थ्ये हि' इत्यत्र षष्ठान्त्याधिकरणसूत्रे सर्वानेव वक्ष्यामः सर्वथा लाक्षणिकं सामानाधिकरण्यमिति दुर्बलम्। न च कारकविशेषणत्वाद् गुणानां कारकविभक्तिः। किं तर्हि? कारकत्वादेवेति। एतदपि पश्वेकत्वविवक्षाधिकरणे वक्ष्यते।

**आह। सत्यमेवतेतदिति।** पुनरपि श्रुतिविरोधपरिहारार्थमेव यतते। कथम्?

तन्त्रेणोभयसंबन्धे विरोधित्वं प्रसज्यते।
प्रासङ्गिके त्विहैकस्मिन्नविरोधो भविष्यति।

**सर्वत्र तु बोधिते पदार्थ** इति कोऽयमुपन्यासः।

उच्यते—

सर्वथा बाधिता तावत्पदार्थानां स्वतन्त्रता।
तेनानेकोऽपि संबन्धः कल्प्यमानो न दुष्यति॥

अरुणाशब्दस्तावदवश्यमेव केनचिद् गुणिना संबन्धनीयः। एकहायनीशब्दस्यापि क्रियासंबन्धात्स्वातन्त्र्यमपनीतम्। तत्र पदान्तरसंबन्धेऽपि **सकृत्प्रवृत्तायाः किमवगुण्ठनेति**वचनस्य तावत्येव श्रुतिपीडेति। अतो गुणपदेनापि संबध्यतामिति।

**नैतदस्तीति—**अभ्युपेत्य द्रव्यगुणसंबन्धम्। यागगतद्रव्यसंबन्धनिराकरणात्क्रीणातेर्विध्यनुवादयौगपद्याश्रयणविरोधः[1]। यत्र तु क्रियाविशेषणानि सर्वाणि भवन्ति तत्र विशिष्टविधानादक्लेशो भवति। यत्र तु क्रियाविधीयते, द्रव्यस्य च किंचित्तत्र प्रत्ययावृत्तिलक्षणं वाक्यभेदमभ्युपेत्य नियमाभावो भवतीत्युच्यते। विशेषणं हि प्रसिद्धं भवति। न च विधीयमानावस्थः क्रयः प्रसिद्ध इति प्रकरणगतैकहायनीमात्रसंबन्धप्रसङ्गः। कतमा पुनरन्या ज्योतिष्टोमप्रकरण एकहायनी। सर्वथा तावद्वाक्येन तस्यामपि गुणः प्राप्यते। यदि[2] तु सा न विद्यते किं क्रियतां दक्षिणास्तु[3] वा काचिद्भविष्यति, अनूबन्ध्यायां वा।

अथवोद्दिश्यमानत्वादविवक्षितलिङ्गसंख्यैकहायनमात्रग्रहणात्सवनीयाग्नीषोमीययोरप्येकहायनयोर्ग्रहणादनियमः। सदृशन्यायेषु वोदाहरणान्तरेष्वेव तद्भविष्यति। तद्यथा 'दशमुष्टीर्मिमीते' इत्यत्र सोममानादन्येषामप्यङ्गेष्टिनिर्वापमुष्टीनां दशसंख्यत्वप्रसङ्गः।

परः पुनरेकहायनीवैरूप्याभ्युपगमवादलब्धप्रसरः शङ्कते—**नन्वपूर्वोऽपि विधीयमानो** मनसि विपरिवर्तमानः प्रसङ्गादेव विशेष्यत[4] इति। **नैतदेवमि-**

---

१. क० श्रयणे। २. क० यदातु।
३. क० दक्षिणात, वा। ४. विशेक्ष्यति।

त्युत्तरम्। यावद्यावद्धि पदार्थो विशेष्यते, तावत्तावच्छ्रुतेः स्वरसभङ्गः। **तेन सकृत्प्रवृत्तायाः किमवगुण्ठनेने**त्येवमेकेन केनचिद्विशेषितः परेणापि विशेष्यतामित्यभ्युपगन्तव्यम्। न चाऽऽनर्थक्यम्, प्रकरणेऽर्थवत्त्वात्। तत्राप्येवमेव संबन्ध इति चेत्? न। वाक्यान्तरप्राप्तद्रव्यानुवादेन गुणविधौ वैरूप्यप्रसङ्गाभावात्। भवत्पक्षेऽपि स्वरूपतः सोमं च प्रति क्रये विधीयमाने, द्रव्यं च प्रति विशेषणत्वेनानूद्यमाने वैरूप्यं भवति। एवमेकहायन्यपि क्रयं, गुणं च प्रति वैरूप्यान्नैव संबध्यते। पूर्वं त्वभ्युपेत्यवादमात्रेणाऽङ्गीकृतम्।

तदिदानीं तत्रैव परस्य[1] दुष्टाशा मा भूदिति निराक्रियते। तेनायमेव परमार्थः कारकं विभक्त्याऽनूद्य प्रातिपादिकार्थो विधीयत इति।

परे त्वविवक्षितकारकं गुणमात्रं प्रकरणयुक्तं प्रयोगवचनेनागृहीतम् 'आनर्थक्यात्तदङ्गेषु' इत्येवं द्रव्येष्ववतीर्णं सर्वार्थं मन्यन्ते। तत्तु प्रकरणेनानितिकर्तव्यतात्मकगुणग्रहणाभावादानर्थक्यतदङ्गन्यायस्य च क्रयाङ्गैकहायन्यामुपपन्नतरत्वेन पूर्वपक्षमूलाभावप्रसङ्गादुपेक्षणीयम्। तस्मात्पूर्वेणैव न्यायेन कृत्स्ने प्रकरणे निवेश इति। एवं प्राप्ते।

### सिद्धान्तवर्णनम्

अभिधीयते—

> यत्र द्रव्यगुणैकार्थ्यं श्रवणादेव गम्यते।
> अन्योन्यनियमस्तत्र तयोः स्थाल्यादिवद्भवेत्॥

**अर्थैकत्वेति**—वाक्यविशेषोपलक्षणम्। **ऐककर्म्यादिति**—पुनस्तदेव हेतुत्वेनोपदिष्टम्।

अथवा वाक्यार्थैकत्वे यत्रैकवाक्यता संभवतीत्यर्थः। तत्र सर्वविशेषणविशिष्टैकभावनाविधिः। तादृशीं कृत्वा कृतार्थो भवतीति परिग्रहात्सर्वनियमो भवति। यथा देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्युक्ते सर्वेषामेकपाकविषयत्वम्। एवमिहापि केवलयोस्तावद् द्रव्यगुणयोरनुष्ठानमेव नास्तीति[2], न विधीयते। क्रियान्तरसंबन्धमपि क्रीणातेः परः प्रत्ययो न शक्नोति कर्तुम्। द्रव्यसंबन्धे तु सर्वत्र विधीनामेव शक्त्यभावः। सर्वत्र हि भावनातद्विशेषणार्थातिरिक्तेऽर्थे विधिव्यापारो नास्तीत्युत्तराधिकरणे वक्ष्यामः। तृतीयानिर्देशाच्च द्वयोरप्यरुणैकहायन्योः परस्परमनपेक्ष्य स्वसाध्यक्रियामात्रापेक्षिणोर्वाक्येन तद्विशेषक्रयसंबन्धो विज्ञायते। कुतः?

---

१. क० परस्येष्टाशा। २. क० तावन्नास्तीति।

कारकं ह्युच्यते कुर्वन्नाक्रियां तत्करोति ।
तस्मान्न द्रव्यसंबन्धः कारकस्यास्ति कस्यचित् ॥
निष्पन्नत्वाविशेषाच्च नापेक्षैषां परस्परम् ।
गुणानां च परार्थत्वादसंबन्धः समत्वतः ॥

**द्रव्यगुणयोः परस्परनियमस्योपपादनम्**

न चाप्यन्योन्यसंबन्धे विधिरेषां प्रवर्तते ।
तदधीना वयं चेति क्रियासंबन्धकल्पना ॥
क्रियाऽपि न विना कैश्चित्साध्यते कारकैः क्वचित् ।
भूतभव्यवशत्वेन क्रियाकारकसंगतिः ॥
यथा च द्रव्यमिच्छन्ति साधकत्वेन कर्मणाम् ।
तथा गुणमपीत्येवं नाऽऽरुण्यस्यान्यसंगतिः ॥

यथैव द्रव्येण विना क्रियानुपपत्तेरेकहायनीं क्रयो गृह्णाति—

तथा गुणविशेषेण द्रव्यं यावदलक्षितम् ।
तावत्तेन क्रियासिद्धिर्नास्त्यतोऽपेक्ष्यते गुणः ॥

तस्मात्सोऽपि क्रियाङ्गमिति । तथा च 'द्रव्यगुणसंस्कारेषु' इति गुणग्रहणं कृतम् ।

ननु नान्तरीयकत्वाद् द्रव्यग्रहणे गुणानुष्ठानात्पृथक् प्रयत्नाभावान्न द्रव्यवद् गुणापेक्षा युक्ता ।

तथा हि— न द्रव्यमनुपादाय प्रवृत्तिः कर्मणीष्यते ।
पूर्वं द्रव्ये गृहीते तु तद्गुणोऽप्यनुवर्तते ॥

उच्यते— कर्मण्यपि कृते पूर्वं न द्रव्येण प्रयोजनम् ।
द्रव्याकाङ्क्षाऽथ पूर्वं स्यात् सा गुणेऽपि प्रतीयताम् ॥

यथैव हि त्वयोक्तं द्रव्यग्रहणेनैव गुणोऽपि कश्चिद् गृहीत एवेति, न पृथगुपादानं प्रयोजयति, तथा क्रियोपादानेऽपि यत्किंचिद् द्रव्यमुपात्तमिति नापेक्षितव्यम् । अथ तु प्रागुपादानाद् द्रव्यविशेषापेक्षा भवति, तदितरत्रापि प्राग् द्रव्योपादानाद्भवत्येवापेक्षा किंगुणकं द्रव्यं गृह्णामिति । सर्वथा त्वेतावानत्र विशेषः । प्रज्ञानोत्तरकालमपि क्रियायां द्रव्यं व्यापार्यते । गुणस्तु प्रज्ञानान्न पृथग् द्रव्यव्यतिरेकेण व्याप्रियते । तावतैव चरितार्थत्वात् । न च तथा व्यापृतस्याव्यापृतत्वम्— अनेकप्रकारत्वाद् व्यापाराणाम् । परिच्छेदकाले त्वस्याधिकव्यापारत्वं विविच्यते । तथा हि—

द्रव्येण साधनीयेयमिति ज्ञाता यदा क्रिया।
कीदृशेनेत्यपेक्षाऽस्या गुणेऽप्युत्पद्यते तदा॥

तेनात्र यदि तावद्वेद एव कंचिद्विशेषं दास्यति, ततस्तेनेत्यवधारयिष्यते। यदि तु न दास्यति, ततोऽर्थाक्षिप्त एव यः कश्चित्प्रमाणवान्भविष्यतीत्यवगमे सति विधीयमानस्यारुणादेरङ्गत्वं भवति। सर्वत्र च शब्दादचोदितेऽर्थे 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्येवमज्ञानसंशयव्युदास इष्टः। तदिहारुणत्वेन क्रियां साधयेदिति विस्पष्टे चोदिते, शब्दान्तराणामध्याहारादीनामभावाद्यथा शक्नुयादित्युपबन्धे सति, तत्साधनभूतं द्रव्यं परिच्छिन्दतेत्येतावदवधार्यते। कुतः?

गुणानामेवमात्मत्वं[1] सर्वत्र ह्यवधारितम्।
नान्यथा निष्क्रियत्वाच्च विधेश्चैवमनुग्रहात्॥

क्रयगतस्तावद्विधिस्तृतीयोपनीतं कथंचिदरुणिमानं न मुञ्चति। स च नान्येन प्रकारेण तदङ्गतां भजते। न चैकस्वरूपैव सर्वेषां साधनता। न च स्वसमवायिन्येव केवला चलनात्मिका वा क्रिया सर्वत्रेष्यते। न च प्रधानक्रियायाः सर्वाण्येव साक्षात्साधनानि भवन्ति। अवान्तरव्यापाराधीनत्वात्संबन्धस्य। अरुणादीनां च योग्यत्वाद् द्रव्यपरिच्छेद एव स्वव्यापारो विज्ञायते। तत्रैषकर्तृत्वादितरत्र करणत्वं भविष्यति। तेनारुणपदादेतावदवगतं किंचिद् द्रव्यां परिच्छिन्दताऽरुणगुणेन क्रयः साधयितव्य इति। तथैकहायन्याऽप्यन्यथा साधनत्वासंभवात्केनचिद् गुणेन मे परिच्छेदः कर्तव्य इत्येतावदपेक्ष्यते। तत्र गुणो यत्किंचिद् द्रव्यपरिच्छेद्यमाश्रयत्वेनापेक्षितुमारभते। द्रव्यमपि यं कंचिद् गुणम्। उभयापेक्षालक्षणश्च संबन्धः शीघ्रं निर्वर्त्यते। न च द्रव्यान्तरगुणान्तराणामत्र वाक्ये सापेक्षत्वं प्रतीयते। तेन नष्टाश्वदग्धरथवद्विनाऽपि षष्ठ्याऽनयोरेव संबन्धः।

संनिहितातिक्रमकारणाभावादप्येवमेव विज्ञायते। किं च—

क्रयश्चावगतद्रव्यगुणः प्राधान्यसम्मतः।
अनिच्छन्नश्रुतं कंचिद् गुणं द्रव्ये नियच्छति॥

यन्नाम गुणोऽन्यथानुपपत्तेरश्रुतं द्रव्यमानयति, तत्क्रयः श्रुतैकहायनीद्रव्यकत्वान्न प्रतीच्छति। तथैकहायनीयं गुणमश्रुतमानयति तमपि क्रय एव श्रुतारुणिमगुणत्वान्नेच्छति। यदि ह्यसावनियतद्रव्यगुणः स्यात्, ततो यत्किंचिदप्यानीयमानं सहेत। निरपेक्षद्रव्यगुणविशेषसंबन्धे नैव यथाचोदितः क्रय उभयविशिष्टक्रियेत। अश्रुता च प्रधानस्य सत आवृत्तिरापद्येत। विकल्पे वा पुनर्विशिष्टः विधिर्बाध्येत। प्रधानत्वादेव च गुणद्रव्याभ्यां द्रव्यान्तरगुणान्तराक्षेपं

१. क० गुणानामेतदात्मत्वं।

क्रयणं[1] निरुणद्धि। कांस्यभोजिन्यायेन वाऽमुख्योऽप्यनियमं वारयेत्। किमुत मुख्य एव सन्। न वाऽश्रुतकल्पनया विनाऽनुपपत्तिः। श्रुतयोरेव परस्परसंबन्धेन परिपूर्णत्वात्। एवं च स्ववाक्यगतमपि सामानाधिकरण्यं समर्थितं भविष्यति। न चात्र श्रुतिविरोधः। यथा वक्ष्यति। 'न श्रुतिर्ब्रूते वाक्यार्थो न' इति।

तथा हि—

क्रयापेक्षित एवायं सम्बन्धः क्रियते पुनः।
न चात्रानुगुणा वृत्तिर्दुर्बलाऽपि विरुध्यते॥

क्रय एव हि द्रव्यं गृह्णन्नेवमपेक्षते—को गुण एतत्परिच्छेत्स्यतीति। गुणमपि गृह्णन्नपेक्षते किं द्रव्यमेतस्याऽऽश्रयो भविष्यतीति। तेनैव तयोः क्रयवशेनान्योन्यानुगुण्यं प्रतिपद्यमानयोरपि न परस्पराङ्गाङ्गित्वं भवति। यस्तु मन्यते परिच्छेदकत्वाद् गुणस्य द्रव्याङ्गत्वं प्रतीयत इति, स वक्तव्यो गुणस्यापि क्रयमन्यथा साधयितुमशक्नुवतो द्रव्यमाश्रयत्वं प्रतिपद्यमानमङ्गमिति। तस्मात्क्रयाङ्गभूतयोरेव नान्तरीयकः परस्परोपकारो भवन्नङ्गत्वमापादयतीति द्रष्टव्यम्।

यस्तु प्रकरणे निवेशं मन्यते, तस्य केन गुणो विधीयत इति वक्तव्यम्। क्रयविधिना तावत्सह नैव संबन्ध इष्टः। प्रयोगवचनस्त्वक्रियात्मकं दूरादुपेक्षते। न चारुणपदस्यैवं विधिशक्तिरस्ति। यद्यपि कारकत्वेन द्रव्याणि प्रतीयन्ते, तथाऽपि तत्पदान्यविधायकान्येव। येऽपि तत्संबन्धिक्रियाविषया[2] विधयः। तेऽपि पर्यवसिताः संप्रति प्रतीयमाना अपि न विधातुं समर्थाः। न चैषां द्रव्यविशेषणेषु व्यापारः। तस्मान्न कथंचित्प्रकरणे निविशते। एकार्थास्तु विकल्पेरन्नित्यविशेषप्रतीतेः। अवान्तरव्यापारानेकार्थत्वमगृहीत्वा वदति—**यद्येककार्यता**[3] **किमिति विकल्पो न भवतीति**। सिद्धान्तवादी त्वाह—नैतेनास्मत्प्रतिपक्षः कृत्स्नप्रकरणनिवेशः सिध्यति। क्रयसंबन्धो वा बाध्यते। तस्मात्सिद्धान्तान्तरदूषणत्वान्निग्रहस्थानमिति। **न च विकल्पः, नानाकार्यत्वादिति**—अवान्तरव्यापाराभिप्रायेण।

परस्तु प्रधानकार्यनानात्वमेवोक्तमिति मत्वाऽऽह—**नन्विदानीमेवोक्तमिति। तच्चापि विरुद्धं** यत्पूर्वमुक्तममूर्तत्वान्निष्क्रियो गुण इति। ननु पूर्वपक्षवादिना तदुक्तम्। इदानीं सिद्धान्तवादी न सक्रियत्वं ब्रवीतीति युक्तो विरोधोपन्यासः।

उच्यते—

संदेहः क्रियते सर्वः साधारणपदे स्थितः।
तत्र चामूर्ततोक्तेति सिद्धान्तेऽपि विरुध्यते॥

---

१. क० द्रव्यं। २. क० विधयः। ३. क० यद्येकार्थता।

अथवा पूर्वपक्षवादिना तद्धेतुत्वेनोक्तम्। हेतुश्चोभयसिद्धो भवति। यदि चायमसिद्धो भवेत् ततस्तदानीमेवोद्भाव्येत, यतस्तु नोद्भावितः ततोऽभ्युपगतः। तथा सति चेदानीं सिद्धवदर्थैकत्वाभिधानात्सक्रियत्वमभिदधतो[1] विप्रतिषिद्धमापद्यते। **नैतद्विरुद्धम्। न च विकल्प इति।** शक्तिभेदनिमित्तावान्तरव्यापारान्यत्वात्। तद्दर्शयति—द्रव्यं साक्षात्साधनं, गुणस्तत्परिच्छेदार्थ इति। परस्त्वेतावतैव तदेतरत्तदर्थमितिवद् गुणस्य द्रव्यार्थत्वं मन्यमान आह—**यद्येवं न तर्हि गुणः क्रियामभिनिर्वर्तयतीति। नैतदेवमिति**—द्वारमात्रत्वं तावद् द्रव्यस्य दर्शयति। परिहृते दोषद्वये वस्तुकृतमेकहायनीद्वारत्वमपश्यन्वाक्येनैव द्वारद्वारिसंबन्धकरणाद्वैरूप्यापत्तिं चोदयति—**एवं तर्हीति। ब्रूमोऽरुणाशब्द** इति सामर्थ्यकारितमेकहायनीसंबन्धं दर्शयति।

**नन्वेवमपि वाक्यं भिद्येतेति**—नियमनिराकरणार्थमाह। सत्यपि क्रयसंबन्धे प्रतिकारकं क्रियान्यत्वादर्थभेदनिमित्तो वाक्यभेदोऽस्त्येवेति। तथा च लोकवेदयोर्दृष्टमित्युदाहरणद्वयम्। प्रत्येकं देवदत्तादिषु भोजनं, पितुः पितामहस्य वासोमपत्वं व्रात्यपशोर्निमित्तत्वेनोच्यमानं साहित्याविवक्षया सिद्धम्। तत्र न पिबेदिति संबन्धः पशुयागसंबन्धश्चोभयमप्युदाहरणम्। **नैतदस्मत्पक्षस्य बाधकमिति**—विकल्पपक्षवदेवासंबन्धोपन्यासः।

परः पुनराह—**सत्यमेष न दोष** इति। क्रियाप्राधान्ये तु तद्वशीकृतविशेषणसमुदाये वाक्यपरिसमाप्तिः। गर्गशतदण्डनहोमाभिषवभक्षवदिति परिहारः।

ननु दण्डस्य दण्ड्यसंकारत्वाद्भोजनादिवत्प्रतिगर्गमावृत्तिः प्राप्नोति।

नैष दोषः—

> शारीरो निग्रहो यत्र तत्र प्रत्येकभिन्नता।
> हिरण्यादानदण्डस्तु समुदाये समाप्यते॥
> अपराधे निमित्ते हि शतसंख्याविशेषिता।
> तदनुष्ठात्रपादानां राज्ञां वृत्तिर्विधीयते॥

यथैवाध्वर्य्वादीनां दक्षिणा परिक्रयार्था, कर्मसंयोगात्। एवं [2]राज्ञाप्यर्थदण्डो नैमित्तिकी परिपालनवृत्तिः। तां तां च प्रति तत्र तत्रापराधे निमित्ते शतादीन्युपादीयमानत्वाद्विवक्षितैकसंख्यानि भवन्ति। यश्चासावपराधो गर्गकृतः, स एककर्तृकोऽनेककर्तृको वा राज्ञः शतादानिमित्तं भवति। तत्काले चापराधिनामपादानत्वेनावस्थानात्समस्तगर्गापादानकं राज्ञा शतं ग्रहीतव्यमित्यवगते सति प्रत्येकं ग्रहणे सत्येकेन शतेनापराधनिष्क्रये कृते शेषमश्रुतं ब्रह्मस्वहरणं स्यात्सं-

---

१. क० सिद्धान्तोऽपि। २. क० अयमपि।

क्यान्तरं च वृद्धावापद्येत। तस्मात्समुदाये वाक्यपरिसमाप्तिः। परः पुनर-भिहितेऽपि हेतुविशेषे दृष्टान्तद्वयात्संदेहमुपन्यस्यति। क्रयस्य यागसाधनसोम-प्राप्त्यर्थत्वेन भूतभव्यसमुच्चारणन्यायेन विधायकलाघवेन च प्राधान्याद् द्रव्य-गुणयोश्च पूर्वहेतुविपर्ययेण विपरीतत्वादितर एकवाक्यत्वप्रतिपादनफलं प्राप्नोति।

तत्रापर आह—सर्वथा तावदश्रुतकल्पनाभयाद्भिन्नवाक्यचोदितयोरपि नियमः सिध्यतीति, नार्थ एकवाक्यत्वेनेति। सिद्धान्तवादी वदति। वाक्यभेदे सति उभयविशेषणविशिष्टक्रयप्रतीत्यभावाद्यथाश्रुतप्रत्येकसंबद्धक्रयानुष्ठाने सति गुणे-नापि यत्किंचिद् द्रव्यं गृह्येत, द्रव्येणापि यः कश्चिद् गुणः। न हि तदानीमन्यो-न्यासंनिधेरर्थाक्षेपप्रतिबन्धशक्तिरस्ति। न चैका क्रिया गुणद्रव्यवशीकार-समर्था स्यात्। अरुणगुणक्रयो ह्यनियतद्रव्यकत्वात्किमिति गुणोपस्थापितं यत्किंचिद्, द्रव्यं न गृह्णीयात्। एकहायनीक्रयो वा यं कंचिद् गुणम्। अथापि वाक्यान्तरविशिष्टानि[1] क्रयद्रव्याण्येव गुण आस्कन्दति, तथाऽपि तेषु वासः-प्रभृतिषु दशस्वपि प्राप्नोति। तस्माद्विशिष्टैकक्रयसिद्ध्यर्थं वक्तव्यमेकवाक्यत्वम्। अतश्च नियम इति सिद्धम्॥ १२॥

( इति षष्ठमरुणाधिकरणम्॥ ६॥ )

भा० प्र०—श्रुति में कहा गया है कि "अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति" (तै० सं० ६।१।६) अर्थात् अरुणा पिङ्गाक्षी एकहायनी गाय के द्वारा सोम खरीदे। इस स्थल में अरुणा शब्द गुणवाचक है और पिङ्गाक्षी एवम् एकहायनी ये दो शब्द द्रव्य के वाचक हैं। इस प्रसङ्ग में यह संशय है कि अरुणा यह शब्द क्रय के साथ अन्वित होगा या प्रकरण के अनुसार सभी द्रव्यों के साथ अन्वित होगा ? इस विषय में पूर्वपक्षी का कहना है कि "अरुणया" यह शब्द तृतीयान्त है, अतः, सोमक्रय रूप क्रिया का साधन (करण) है—यह अवगत होता है, किन्तु, गुण क्रिया का साधन नहीं हो सकता है। क्योंकि, मूर्त पदार्थ ही क्रिया का साधन होता है। अतः, वह क्रिया का साधन नहीं है। यदि यह क्रिया का साधन = करण नहीं होता तो अरुणा शब्द के उत्तर साधनता को अवगत कराने वाली तृतीया विभक्ति की विनियोजकता नहीं होगी, ऐसी स्थिति में प्रकरण को ही विनियोजक मानना पड़ेगा। प्रकरण को विनियोजक मानने पर अरुणा गुण गोस्वरूप द्रव्य के समान इस प्रकरण में ग्रह, चमसादि सभी द्रव्यों का आश्रयण करेगा, ऐसी स्थिति में गौ की आरुण्य ही क्रय का साधन होगा ऐसी नहीं है, वरन् ग्रह चमसादि सभी पदार्थ जो ज्योतिष्टोम के साधन हैं, वे सभी द्रव्य अरुण वर्ण के होंगे। इसलिए उक्त श्रुति का "अरुणया" यह अंश को एक पृथक् वाक्य मान कर ग्रहण करना होगा, फलतः प्रकरण के अनुसार से भी द्रव्यों के साथ अन्वित होगा, इसलिए पूर्व के

---

१. क० विशिष्टानि।

दो अधिकरणों के द्रव्यों और संस्कारों की असङ्कीर्णता स्थापित होने पर भी इस स्थल में गुण की व्यवस्था अर्थात् असङ्कीर्णता नहीं हो सकती है, अपितु सामान्य रूप से वह सभी द्रव्यों के साथ सङ्कीर्ण = मिश्रित हो जायगा।

इस प्रकार के पूर्वपक्षी के उत्तर में सिद्धान्ती का कहना है कि "अर्थैकत्वे द्रव्यगुणयोः ऐककर्म्यानियमः स्यात्" यह सत्य है कि गुण अमूर्त है, अतः, साक्षात् सम्बन्ध से क्रिया के साथ उसका अन्वय नहीं हो सकता है, किन्तु, "एकहायनो" और "पिङ्गक्षी" इन दो स्थलों में 'हायन' एवम् "अक्षि' शब्द जिस प्रकार गौ का ही अवच्छेदक अर्थात् विशेषक है, उसी तरह आरुण्य गुण भी गौ का ही अवच्छेदक अर्थात् विशेषक होता है। इस स्थल में गौ द्रव्य सोमक्रयण रूप क्रिया का साधक होता है। अतः, आरुण्य गुण भी द्रव्य के द्वारा क्रिया का साधन होगा। यह मानने पर किसी प्रकार के दोष की आपत्ति नहीं होती है। पूर्वपक्षी का मत मानने पर वाक्यभेद की आपत्ति होती है, क्योंकि, वाक्यभेद के विना एक जगह श्रुत अर्थात् उपदिष्ट गुण अन्यत्र अन्वित नहीं हो सकता है, किन्तु, सिद्धान्त पक्ष में आरुण्य शब्द में अरुणिमा गुण विशिष्ट द्रव्य में लक्षणा मानने का भी प्रसङ्ग नहीं है, वाक्यभेद प्रसङ्ग की तो चर्चा भी व्यर्थ है, कारण, 'अरुणया' इस पद में तृतीया का श्रवण होने से अरुणिमा गुण का ही क्रिया साधनत्व अवगत होता है। गुण द्रव्याश्रित हुए बिना क्रिया का साधन नहीं हो सकता है. अतः, उसकी साधनता = द्रव्यावच्छेदकता अर्थापत्ति प्रमाण से सिद्ध है। इसीलिए द्रव्य के समान आरुण्य गुण भी प्रथमतः साक्षात् सम्बन्ध से क्रिया के साथ अन्वित होता है और बाद में अर्थापत्ति के बल से द्रव्य और गुण का परस्पर अवच्छेदक अवच्छेदकता रूप में अन्वय होता है। इस प्रकार के स्थल में गुण द्रव्य का अवच्छेदक होता है एवं द्रव्य गुण का अवच्छेद्य होता है। इसीलिए संस्कार एवं द्रव्य के समान गुण भी असङ्कीर्ण ही है।

"अर्थैकत्वे" = प्रयोजन की एकता रहने पर अर्थात् एक ही प्रयोजन होने पर, "द्रव्यगुणयोः"='एकहायनी' आदि द्रव्य एवम् 'आरुण्य' आदि द्रव्य एवम् "अरुणा" आदि गुणों का, "ऐककर्म्यात्" = एक ही क्रिया के साथ अन्वय होने से, "नियमः स्यात्" = नियम अर्थात् परिच्छेद्यपरिच्छेदकभाव में व्यवस्था होगी। दोनों का एक ही प्रयोजन होने पर द्रव्य एवं गुण एक ही क्रिया के साथ अन्वित होने से द्रव्य को गुण के द्वारा परिच्छिन्न कर द्रव्य के परिच्छेदक के रूप में गुण क्रिया के साथ अन्वित होगा ॥ १२ ॥

यह छठा अरुणाधिकरण सम्पूर्ण हुआ।

### अथ सप्तमं ग्रहैकत्वाधिकरणम्

## [७] एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥ पू०

**शा० भा०—अस्ति ज्योतिष्टोमः—'य एवं विद्वान्सोमेन यजते' इति। तत्र-श्रूयते 'दशापवित्रेण ग्रहं संमार्ष्टि' इति। तथा अग्निहोत्रे श्रूयते, 'अग्नेस्तृणा-**

न्यपचिनोति' इति । तथा दर्शपूर्णमासयोः श्रूयते, 'पुरोडाशं पर्यग्निकरोति' इति । तत्र संदेहः—किमेकस्य ग्रहस्य, एकस्याग्नेः, एकस्य पुरोडाशस्य च संमार्जनादि कर्तव्यम्, उत सर्वेषां ग्रहाणाम्, सर्वेषामग्नीनाम्, सर्वेषां पुरोडाशानामिति ।

किं प्राप्तम् ? एको ग्रहः, एकोऽग्निः, एकः पुरोडाश इह[1] ग्रहीतव्यः । कुतः ? श्रुतिसंयोगात् । एकत्वश्रुतिसंयुक्ता एते पदार्थाः । एकं हि द्रव्यमेषु श्रूयते । शब्दलक्षणे च हि कर्मणि यच्छब्द आह, तदस्माकं प्रमाणम् ।

यथा 'पशुमालभेत' इत्युक्ते एक एव पशुः पुमांश्चाऽऽलभ्यते । एवमत्राप्येको ग्रहः संमार्जनीयः, एकस्याग्नेस्तृणानि अपचेयानि, एकः पुरोडाशः पर्यग्यिकर्तव्य इति ॥ १३ ॥ पूर्वपक्षः ॥

### अथ सप्तमं ग्रहैकत्वाधिकरणम्

त० वा०—एवं यथासंयोगं शेषविनियोगः स्थितः । इदानीं तद्विशेषचिन्ता-किमेकस्य ग्रहणस्य संमार्गः, उत प्राकरणिकग्रहमात्रस्येति । यथा चैकत्वयुक्तम्, तथा द्वित्वबहुत्वयुक्तमप्युदाहर्तव्यम् । 'यस्य पुरोडाशौ क्षायतः, 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुः[2]', प्रयाजशेषेण हवींष्यभिघारयति इत्यादि । सर्वत्र च किञ्चिदुद्दिश्य क्रिया विधीयते । तत्रोद्दिश्यमानस्य किं संख्या विवक्ष्यते, उत नेति संशयः ।

ननु च वेदवाक्येष्वयुक्तोऽयं विचारः । कुतः ?

**पौरुषेयवाक्येषु विवक्षाविवक्षे वैदिकेषु श्रुताश्रुतयोर्ग्रहणमिति निरूपणम्**

प्रतीतिव्यतिरेकेण विवक्षाऽन्या न विद्यते ।
नित्यत्वाद्वेदवाक्यानां श्रुतोऽतो नाविवक्षितः ॥

यानि पुरुषप्रणीतानि, तानि पुरुषविवक्षाधीनवचनत्वात्संभवत्प्रमादाभिप्रायान्तरप्रमाणान्तरगम्यार्थानि भवन्ति । तत्र प्रतीतोऽप्यर्थो वक्तुरनभिप्रेतत्वादविवक्षां लभेत । सा च द्वेधा विज्ञायते ।

यद्वा[3] वक्तैव कथयत्यन्यपरं ममेदमभिप्रेतम्, प्रमादेन वा । तस्मादेतावन्मात्रमिह न ग्रहीतव्यमिति ।

यद्वा प्रमाणान्तरवशेनान्यथार्थेऽवधारिते वक्त्रनपेक्षाः श्रोतार एवाभिप्रायान्तरं प्रमादं वाऽध्यवस्यन्ति । न तु वेदवाक्येष्वभिप्रायान्तरम्, प्रमादो वा कस्याचिदस्ति । न च वक्ता, योऽन्यथात्वं कथयेत्सर्वपुरुषाणाम्, 'उक्तं तु शब्दपूर्वत्वम्' इति केवलश्रोतृत्वाश्रयणात् । न च प्रमाणान्तरगम्योऽर्थः । यतस्तद्वशेन स्वयमेव

१. ब० एध्वश्रपु । २. क दुष्येयुवाऽऽहरेयुर्वा । ३. क० यदा ।

श्रोतारोऽन्यथात्वं प्रतिपद्येरन्। विवक्षाविवक्षे च वक्तृणां प्रत्ययविशेषाविच्छानिच्छाविशेषौ वा। तेन विवक्षितम्, अविवक्षितमिति द्वयमप्येतद्वक्त्रभावादनुपपन्नम्। अतः श्रुताश्रुतयोरेव केवलयोरत्र ग्रहणाग्रहणे। नातः परं किञ्चित्कारणमस्ति।

पुंवाक्येऽप्यन्यथोक्तत्वं यावन्नान्येन गम्यते।
तावद्यथाश्रुतं मुक्त्वा नान्यथात्वपरिग्रहः॥

**अभिधात्रीविनियोक्त्रीविधात्रीणां भेदप्रतिपादनम्**

उच्यते—प्रतीतिं प्रति नैवात्र विसंवादोऽस्ति कस्यचित्।
प्रतीतेऽपि तु सत्येषा विध्यविध्योर्विचारणा॥

एकत्वं तावदत्रासंशयमुक्तम्। तच्च ग्रहसंबन्धीत्येतदप्यसंदिग्धम्। इह तु सर्वार्थानाम्—

अभिधात्री श्रुतिः काचिद्विनियोक्त्र्यपरा तथा।
विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धनः॥

प्रकृतिप्रत्ययश्रुत्योः स्वस्वार्थाभिधातृत्वम्। पदस्य, कारकविभक्तीनां च विनियोजकत्वम्। लिङ्-लोट्-तव्य-पञ्चमलकाराणां तु विधिसामर्थ्यम्। तत्रानुष्ठानकाले विधिश्रुत्यधीनः पुरुषः। स हि यत्र तया प्रवर्त्यते तत्राभिहिते अनभिहिते वा विनियुक्ते अविनियुक्ते वा तुल्यवत्प्रवर्तते। यत्र तु विधिना न नियुज्यते, तत्राभिहिते, विनियुक्तेऽपि न प्रवर्तते। न ह्यसावनुष्ठानं प्रति तयोरेकयाऽपि प्रेर्यते। इदमिहास्ति, अस्येदमिति [1]चैतन्मात्रपरिच्छेदाद्विषयकर्तव्यताबुद्ध्यनुत्पत्तेः। तेनाभिहितविनियुक्तस्यापि विधिम्, अनुष्ठानं च प्रतीत्य[2] विवक्षाविवक्षे विधित्सिताविधित्सितचिकीर्षिताचिकीर्षितात्मिके[3] भवतः।

नन्विदमपीच्छया विना नैवोपपद्यते। उच्यते। नैवात्र पारमार्थिकीमिच्छां वदामः। किं तर्हि?

परिग्रह-परित्यागाविच्छानिच्छाफले स्थिते।
तल्लक्षणार्थता त्वत्र[4] स्याद्विवक्षाविवक्षयोः॥

यथैव कूलं पिपतिषतीत्येवमादौ पातकालप्रत्यासत्तेरिच्छामुपचर्यैवं व्यपदेशो भवति, तथा पौरुषेयेषु वाक्येषु परिग्रहापरिग्रहौ विवक्षाविवक्षयोः फलत्वेन प्रज्ञाताविति, तावभिप्रेत्यायं विवक्षाविवक्षोपन्यासः। कथं श्रुतस्यापरिग्रहः स्यादिति चेत्? नैष दोषः। विध्यधीनः परिग्रह इति प्रागेवोक्तत्वात्।

---

१. क० एतावन्मात्र।　　२. क० प्रतिं।
३. क० विधित्सिते।　　४. क० त्वर्थात्।

यथैव पौरुषेयेषु पुरुषो हि प्रवर्तकः ।
उक्तेऽप्यर्थे तथैवेह लिङादिर्विधिशक्तितः ॥

पुरुषस्थानीयो हि वेदे विधायकः । पुरुषेच्छास्थानीयं विधित्वम् । अतो यद्विधित्वेन संस्पृष्टम्, तत्कर्तव्यम्, नेतरदित्यवधारणाद्विधिव्यापारसंस्पर्शपरिमाणमन्वेष्टव्यम् । कथं पुनस्तुल्यायां समानवाक्यगतोक्तिप्रतीतौ किञ्चिद्विधिः । संस्पृशति, किञ्चिन्नेति ?

तदुच्यते—

विधानाय प्रवर्तन्ते स्वशक्त्यैव विधायकाः ।
योग्यशब्दोपनीतेऽर्थे सर्वस्मिन्नास्मादिच्छया ॥

यद्यस्मदभिप्रायानुरोधेन, अभिधानविनियोगश्रुतिवशेन वा लिङादयो विदध्युः ततः सर्वं विधीयेत । ते तु स्वशक्तिमनुरुध्यमानाः किञ्चिदेव विदधति, न सर्वम् ।

तथा हि—

विधित्वं श्रौतमार्थं च भावनाकारकाश्रयम् ।
ताभ्यां तु व्यतिरिक्तेऽर्थे नैकमप्येतदिष्यते ॥

श्रुत्या तावत्प्रयोजनभावना[1] विधीयते । तदन्यथानुपपत्तेस्त्वर्थात्कारकान्तराणि । यस्तु श्रुतोऽप्यर्थो भावनाकारकतदाश्रयत्वेन नावधार्यते, तत्रैकमपि विधित्वं नास्तीत्यनुष्ठानं प्रत्यनङ्गत्वम् । तेन संमार्गाद्यनुष्ठाने किं ग्रहैकत्वाद्यपि कर्तव्यम्, उत नेति जायते संदेहः । तत्र यद्येकत्वादि कारकत्वेन भावनाविशेषणम्, ततो विधिसंस्पर्शाद्विवक्षितं भविष्यति । अथ द्रव्यविशेषणम्, ततो न विवक्षितमिति । तदेतदप्रसिद्धालौकिकवेदवाक्यार्थव्याख्यानप्रकारकरणाशक्तेः पौरुषेयवाक्यव्याख्यासादृश्यापादनार्थमन्तर्णीतोपमानगौणवृत्त्याश्रयणेन फलसामान्यदर्शनाद्विधिशक्त्यशक्त्यधीनपरिग्रहापरिग्रहयोरेव विवक्षिताविवक्षितवाचोयुक्त्युच्चारणं मन्दबुद्धिशिष्यप्रतिपादनार्थं ग्रन्थकाराणाम्, व्याख्यातॄणां चान्यत्रापि वेदविषयमेवमेव गमयितव्यम् ।

**पूर्वव्याख्यातॄणामेव विवक्षाविवक्षे अर्वाचीनव्याख्यातृभिर्विवक्षतमविवक्षितमुच्यते इति निरूपणम्**

अथवा—

न्यायेन सम्प्रदायाद्वा ये मीमांसकयाज्ञिकाः ।
वेदं व्याचक्षते तेषामभिप्रायोऽयमुच्यते ॥
शब्दशक्त्यनुसारेण वाक्यार्थं गमयन्ति ते ।
तत्र यः शक्त्युपारूढः स तैर्व्याख्यातुमिष्यते ॥

---

१. क० प्रत्ययन भावना ।

यस्तु शक्त्या परित्यक्तो न व्याचिख्यास्यते स तैः ।
तेन व्याख्यातुमिष्टोऽर्थो यस्तेषां स विवक्षितः ॥
अनिष्टो यस्त्वशक्तित्वादविवक्षित एव सः ।
अतः पूर्तसमावृत्तव्याख्यात्रिष्टं विवक्षितम् ॥
तेनोच्येत तथा तेषां त्वनिष्टं त्वविवक्षितम् ।

तस्माद्व्याख्यातृगतमेव विवक्षिताविवक्षितत्वमुपन्यस्य, विचारकरणाद्वेदेऽप्यविरोधः ।

**अन्तर्यातिब्राह्मणावलम्बनेन समाधानान्तरम्**

ऋग्वेदादिसमूहेषु क्षेत्रज्ञा ये प्रतिष्ठिताः ।
तेषां वाऽयमभिप्रायः स्याद्विवक्षाविवक्षयोः ॥
महाभौतिकदेहस्था यथाऽऽत्मानः सचेतनाः ।
कंचिदर्थं विवक्षन्ति न विवक्षन्ति चापरम् ॥
तेषामन्तर्गताऽपीच्छा तद्वाक्यार्थविचारिभिः ।
ज्ञायते शब्दशक्त्यैव स्फुरन्तीव बहिः स्थिता ॥
देहभेदप्रकाराश्च कर्मशक्तिवशानुगाः ।
प्रकृत्यारम्भवैचित्र्याद् दृश्यन्ते परमात्मनाम् ॥
पार्थिवावयवप्रायाः शेषतोयाद्यनुग्रहात् ।
जरायुजादयो देहा दृष्टा भुवि चतुर्विधाः ॥
भूतान्तरानुबद्धेन तोयेनैव विनिर्मिताः ।
श्रूयन्ते वारुणे लोके देहाः स्वच्छाङ्गलक्षणाः ॥
अन्तरिक्षे च बहवः प्राणिनो वातनिर्मितैः ।
भ्रमन्ति लघुभिः सूक्ष्मैर्देहैर्भूम्याद्यनुग्रहात् ॥
स्वर्लोके तैजसप्राया देहाः शुद्धप्रभान्विताः ।
आप्यायन्ते विकीर्णेन मानवीयेन तेजसा ॥

तथा च नक्षत्रेष्टिवाक्यशेषेऽभिहितं 'ये हि जनाः पुण्यकृतः स्वर्गं लोकं यन्ति, तेषामेतानि ज्योतींषि यन्नक्षत्राणि' इति । तथा च मनुनाऽपि स्वर्गं लोकं गच्छन्नभिहितः, तेजोमूर्तिः पथर्जुनेति ।

**विधिशक्त्या गृहीतं विवक्षितम्, तेन त्यक्तञ्चाविवक्षितमिति वार्त्तिकमतम् ।**

तथा व्योमशरीरोऽपि परमात्मा श्रुतौ श्रुतः ।
इज्यते वारिणा नित्यं यः स्वं ब्रह्मेति चोदितः ॥
रूपस्पर्शादयो येऽपि महाभूतगुणाः स्थिताः ।
प्रत्येकमात्मनां तेऽपि देहाः संभोगहेतवः ॥

शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते ।
तदप्यधिष्ठितं सर्वमेकेन परमात्मना ॥
तथर्ग्वेदादयो देहाः प्रोक्ता येऽपि पृथक्-पृथक् ।
भोग्यत्वेनाऽऽत्मनां तेऽपि चैतन्यानुगताः सदा ॥
तेषां चान्तर्गतेच्छानां वाक्यार्थप्रतिपादने ।
विवक्षा वाऽविवक्षा वा ज्ञायते शब्दशक्तितः ॥
विधिशक्त्या गृहीतं यत्तत्सर्वं हि विवक्षितम् ।
तयैव तु परित्यक्तं व्याख्येयमविवक्षितम् ॥
शब्दब्रह्मात्मनोऽप्येवं सर्ववेदानुसारिणः ।
विवक्षा वाऽविवक्षा वा वक्तव्या विधिशक्तितः ॥
अनादिनिधनेऽप्येवं वेदे वेदार्थगोचरे ।
व्याख्यानं मुख्यवृत्त्याऽपि स्याद्विवक्षाविवक्षयोः ॥
ततश्चैतद् ग्रहैकत्वं किं वेदेन विवक्षितम् ।
किं नेति न्यायमार्गेण विचार्य स्थापयिष्यति ॥

**पूर्वपक्षः**

किं तावत्प्राप्तम् ?

स्यात्कर्मैकत्वयुक्तं यद्विधानं वाऽपि वैदिकम् ।
द्रव्यस्यैकस्य तज्ज्ञेयमनुष्ठेयं च कर्तृभिः ॥

सर्वत्र विधिप्रतिषेधात्मकत्वाद्वेदस्य यावत्किंचिच्छ्रूयते तत्सर्वं तत्संबन्धित्वेन गम्यते । तत्र येन प्रकारेण विधि-प्रतिषेधविषयं भवति, तथा सर्वात्मना योजनीयम् ।

तत्रैकस्तावत्पक्षः । सत्यपि द्रव्यविशेषणत्वे यथैव द्रव्यादिविशिष्टभावनाविधावर्थाद्विशेषणेषु विधिर्भवति, न त्वन्यथा विशिष्टा विहिता स्यादित्येवमेकत्वविशिष्टग्रहविशिष्टसंमार्गविध्यन्यथानुपपत्तेरर्थापत्त्यन्तरेणैकत्वविधानम् । एवं विशेषणमालायामपि सत्यां संयुक्तसंयोगपारम्पर्येण सर्वविधिप्रत्ययः । परस्परसंबन्धिषु गुणेष्वेकस्मिन्विहितेऽन्यो विधीयत इत्युक्तम् ।

अथवा यदि नाम द्रव्यविशेषणं यावद्विधिप्रत्ययो न गच्छेत्, तत एकयैवार्थापत्त्या सर्वं विधातुमिष्यते । ततो यथादशापवित्र-तदेकत्व-ग्रह-संमार्गाणां भावनाविशेषणत्वम्, एवं ग्रहैकत्वस्यापि प्रतिपादनीयम् । ननु चैकपदलक्षणया श्रुत्यैकत्वं ग्रहविशेषणं गम्यमानं न युक्तं वाक्येन भावनाविशेषणमापादयितुम् । नैष दोषः, विरोधाभावात् । ग्रहसंबन्धाविच्छेदेनैव हि भावनासंबन्धोऽवकल्पिष्यते । भिन्नविषयत्वाद्वा विरोधाभावः । यदि ह्युभयत्रापि तादर्थ्यलक्षण एवाऽऽश्रयाश्रयिविशेषणविशेष्यरूपो वा संबन्धः स्यात्, ततः समानविषयत्वं प्रतीयेत । न त्वेव-

मप्यस्ति। ग्रहैकत्वयोराश्रयाश्रयिरूपेण विशेषणविशेष्यभावाद्भावनया च सह शेषशेषित्वाभ्युपगमात्। तेन ग्रहाश्रितेनैकत्वेन संमार्गभावनां कुर्यादित्येवमवगमयिष्यामः। तादर्थ्यसंबन्धे च भावनां प्रति निर्वृत्तेऽरुणैकहायनीन्यायेन पश्चात्तनो विशेषणविशेष्यभावः। सोऽयं पदेन प्रत्याव्यते।

अथवा यदैकत्वं स्वार्थत्वेन ग्रहो नोपजीवितुं समर्थ इत्यवधारितं भवति, तदाऽसौ तद्भावनां वाक्येनापि गच्छन्न निवारयति। यद्वा सुतरां प्रेरयति। भावनार्थं हि सदेतद्विधिना गृह्यमाणं पश्चादपि तावन्नियम्यमानं मां परिच्छेत्स्यति। अन्यथा तु मयाऽगृहीतं विधिनोपेक्षितं तावद्भावनाया न मम स्यात्।

अथवा ग्रहार्थमेवैतदस्तु। तच्च ग्रहार्थत्वं येन प्रकारेणोपपद्यते, स दर्शयितव्यः। तत्र यदि ग्रहः स्वरूपमात्रेण भावनायामनुप्रविशेत्, तत एकत्वं पश्चाद्भविष्यदगृहीतं भावनया भावनागतं न स्यात्। ग्रहस्वरूपस्यैव स्यात्। अतोऽसावेकत्वपुरःसरमेव, तत्समानदेशं वा पृथक्पदोपात्तारुणादिवदेवाऽऽत्मानं प्रतिपद्यते। कुतः ?

विशिष्टो हि विधिः कृत्स्नो नाप्रक्लृप्तविशेषणः।
विशिष्टो विशिनष्टीति तत्पूर्वं प्रविशत्यसौ॥
गृह्णती भावनाऽत्येवमेकसंख्यं ग्रहं श्रुतम्।
न गृह्णाति विशिष्टं तमगृहीतविशेषणम्॥

एवं च सति भावनाप्रविष्टं तद्विनाऽपि संस्पृश्यमानं द्रव्यगुणयोर्नियमे सति ग्रहस्य जातं भवति।

अथवा श्रुतिबलीयस्त्वादस्य द्रव्यसंबन्ध उच्यते. तदेवात्यन्तविपरीतम्। प्रातिपदिकोपात्तं हि द्रव्यं समानपदोपात्तत्वेन प्रत्यासन्नं स्यात्। इह तु समानविभक्त्युपादानादेकत्वं कारकविशेषणं शीघ्रतरं गम्यते। कारकं च विभक्तिप्रतिपादितमाविर्भूतपूर्वापरीभूतभावनैकदेश इत्युक्तम्। प्रत्ययार्थत्वादेतदेव प्रधानम्। सर्वं च संभवत्प्रधानगामि भवति। तेन ग्रहश्चैकत्वं चोभयमपि कारकीभूतं विभक्तिश्रुत्यैव भावनायां प्रक्षिप्यत इति विधीयते। तत्तु विशिष्टविधानात्। वक्ष्यति हि 'शब्दवत्तूपलभ्यते तदागमे हि तद् दृश्यते तस्य ज्ञानं यथाऽन्येषाम्' इति। यथैव दशापवित्रेण श्रुतो नान्येन क्रियते, संमार्गश्च श्रुतो नावघातः क्रियते, ग्रहस्य श्रुतो नाग्रहस्य क्रियते, तथैकस्य श्रुतो नानेकस्य कर्तव्यः। सर्वेषां चैतेषां पूर्वाधिकरणन्यायेन परस्परनियमः। तस्मादुपादीयमानपश्वादिवदेवोद्दिश्यमानस्यापि संख्या विवक्षिता। **पुंपशुश्चेति**। प्रसङ्गादुदाहृतम्। न त्वत्र लिङ्गमपि तुल्यन्यायत्वात्संख्याविचारेण विचारितप्रायमेवेत्युदाह्रियते, मा भूत् 'लिङ्गविशेषनिर्देशात्पुंयुक्तमैतिशायनः' इत्यस्य पुनरुक्तता॥ १३॥

## अथ सप्तमग्रहैकत्वाधिकरणम् ॥ ७ ॥

न्या सु०—संस्कारादित्रयस्यापि यथासंयोगं विनियोगोक्त्या श्रौतविनियोगप्रकार-पर्यवसानचिन्तान्तराणामानर्थक्यमाशङ्क्याह—**एवमिति** । संयुक्ते ग्रहादौ सम्मार्गादेर्विनि-योगे स्थिते स्वविशेषणैकत्वादिविशिष्टे विनियोगः, ग्रहादिमात्रे वेति चिन्तैकवचनादिश्रुति-हेतुकविनियोगविषया कार्येत्यर्थः । संस्कारविषयायाः विशेषचिन्तायाः संस्कार-विनियोगचिन्तानन्तरं कार्यत्वशङ्कानिरासायेदानीमित्युक्तम् । सर्वशेषविनियोग-पर्यवसानात्प्राग्विशेषाऽनवसर इत्याशयः । तुल्यन्यायतयैकत्वग्रहणस्योद्देश्यस्थसंख्यामात्रो-पलक्षणार्थत्वादुदाहरणतेत्याशङ्क्यावगमात्[1] द्वित्वबहुत्वयुक्तमपि वाक्यमुदाहार्यमित्याह—**यथा चेति** । ननु पुरोडाशक्षाण-हविर्नाशयोर्निमित्तत्वेनोद्देश्यत्वान्नोदाहरणतेत्याशङ्क्याह—**सर्वत्र चेति** । प्रयाजशेषप्रतिपत्त्यर्थतायाश्चतुर्थे वक्ष्यमाणत्वात्प्रयाजशेषस्योद्देश्यत्वेन च हविषामनुद्देश्यत्वान्नोदाहरणतेत्याशङ्क्याह—**सर्वत्र चेति** । प्रयाजशेषप्रतिपत्त्यर्थत्वेऽपि द्वितीयावगतहविः संस्कारार्थत्वस्यापि सम्भवतो त्याज्यत्वादेकस्यापि प्रतिपत्त्यर्थकर्मत्वयोः स्विष्टकृद्वदविरोधात्परप्रयुक्तद्रव्यसंस्कार्यत्वादसंस्कार्यत्वेऽपि हविषां चतुर्थे वक्ष्यमाणशेष-धारणात्प्रयोजकत्वाविरोधादुद्देश्यत्वं सम्भवतीत्याशयः । एवं च सत्युद्देश्यसंख्याया विवक्षिताविवक्षितत्वसन्देहान्मूलसंशयो युक्त इत्याह—**तत्रेति** । हेतावितिकरणः ।

वेदे वक्तृभावाद्वचनेच्छानिच्छारूपविवक्षायोगात्प्रमाणभूतवेदप्रतीतस्य च त्यागायोगा-च्चिकीर्षाचिकीर्षारूपविवक्षाविवक्षायोगात्प्रतीत्यप्रतीतिरूपविवक्षाविवक्षाविवक्षाभ्युपगमे तु यस्य कस्य चिदविवक्षायोगाद्धेतुभूतसन्देहमाक्षिपति—**ननु चेति** । प्रश्नपूर्वमाक्षेपाशयं विवृणोति—**कुत इति** । वेदवाक्यविशेषणफलोक्तिपूर्वं श्लोकं व्याचष्टे—**यानीति** । सम्भवति प्रमादोऽभिप्रायान्तरं वा येषु वाक्येषु, तानि सम्भवत्प्रमादाभिप्रायान्तराणि । प्रमाणान्तर-गम्योऽर्थो येषां तानि प्रमाणान्तरगम्यार्थानीति बहुव्रीहिद्वयं कृत्वा सम्भवत्प्रमादाभि-प्रायान्तराणि च प्रमाणान्तरगम्यार्थानि चेति कर्मधारयः । पुरुषाधीनोच्चारणत्वात्पुरुष-धर्मयोः प्रमादाभिप्रायान्तरयोः पौरुषेयेषु च वाक्येषु सम्भवेऽपि प्रमाणान्तरगम्यार्थ-त्वस्य वैदिकेष्वपि सम्भवात्तुल्यतामाशङ्क्य ज्ञातार्थे विवक्षायोगात्पौरुषेयेष्वैकान्तिकं प्रमाणान्तरगम्यार्थत्वं वक्त्रनपेक्षैरपि श्रोतृभिः प्रमादाभिप्रायान्तराध्यवसानसिद्ध्यर्थमुपपाद-यितुं विवक्षोक्तिः । एवं च पुंवाक्येषु श्रुतस्याप्यर्थस्य वक्तृनिच्छारूपासम्भवत्यविवक्षेत्युक्ते विवक्षाकार्येण वाक्येनानुमीयमानाया विवक्षायाः कथमभावावधावरणेत्याशङ्क्य—**सा चेत्युक्तम्** ।

वेदवाक्येष्वाश्रयभूतपुरुषाभावात् सद्भावे तत्प्रमादाभिप्रायान्तरायोगोक्त्यर्थः कस्य चिच्छब्दः । अभिप्रायान्यथात्वस्य तदुपलक्षितस्य च प्रमादस्य सम्भवाभ्युपगमेऽपि कथनाख्य-स्तावद्वेदे ज्ञानप्रकारो वक्त्रभावान्न सम्भवतीत्युक्ते वेदाधिकरणसिद्धान्तसूत्रोक्तभावोपपाद-

१. र्थत्वावगमादिति २ पु० पा० ।

नार्थम्—**सर्वैत्युक्तम्** । वायुक्षेपिष्ठादिवाक्यानामपि स्वरूपार्थस्य प्रमाणान्तरगम्यत्वेऽपि लोके विषं भक्षय न तु पापिगृहे भुङ्क्ष्वेत्यादौ विवक्षानुमापकत्वादर्शनात्तात्पर्यार्थस्य च प्रमाणान्तरागम्यत्वाद्द्वितीयोऽपि ज्ञानप्रकारो न सम्भवतीति—**न चेत्युक्तम्** । न केवलमविवक्षाहेतुभूतप्रमादाभिप्रायान्तरायोगाद्वेदवाक्येषु विवक्षा न युक्ता, किन्तु वचनेच्छानिच्छयोर्विवक्षाविवक्षात्वात् द्वारमित्यादौ संव्रियतामित्यादिपदानुच्चारणात्सम्वरणादिसम्प्रतिपादनेच्छानुमानेऽपि सम्वरणादिप्रतिपादनं विना नैराकाङ्क्षयाभावात्तत्प्रतिपादनाशयरूपां बुद्धिमनुमाय सम्वरणमनेन विवक्षितामिति वचनेच्छाहेतुभूते वचनाशयरूपे प्रत्ययविशेषे विवक्षाशब्दप्रयोगादवचनाशयरूपप्रत्ययविशेषाभावे च मौनिनोऽनिच्छायामप्यविवक्षाशब्दाप्रयोगाद्वचनेच्छानिच्छाहेतुभूतयोः प्रत्यययोर्विवक्षाविवक्षात्वाद्वा स्वरूपेणापि विवक्षाविवक्षयोर्वेदवाक्येषु प्रयोगादपीति विवक्षेत्यनेनोक्तम् । तेनेत्यादिना श्लोकार्थोपसंहारः ।

अचिकीर्षारूपा विवक्षा वेदे संभवत्यपि प्रमाणाभावादयुक्तेत्यर्थान्तरन्यासेन दर्शयितुमाह—**पुम्वाक्येऽपीति** । विधेयाविधेयत्वस्वरूपविवक्षाभ्युपगमेन भाष्योक्तसन्देहहेतुभूतसन्देहं समाधातुमाह—**उच्यतइति** । वचनश्रुत्यैकत्वस्याभिधानात्स्वरूपेण प्रतीतिः, पदश्रुत्या च ग्रहान्वयोक्तेर्ग्रहान्वयित्वरूपेण प्रतीतिरविवादेत्येवं पूर्वार्द्धं व्याचष्टे—**एकत्वं तावदिति** । उत्तरार्द्धं तावद्व्याख्यातुं सम्मार्जनीयस्य ग्रहस्यैकत्वान्वयावगतिमात्रेणैकग्रहसम्मार्गसिद्धेर्विधेयत्वचिन्तानर्थक्यशङ्कानिरासार्थं विनियोगाभिधानश्रुतिविषयभूतस्यापि विधिश्रुतिविषयत्वं विनानुष्ठानायोगं चिकीर्षाचिकीर्षारूपविवक्षाविवक्षासिद्ध्यर्थं वा श्रुतित्रैविध्योक्तिपूर्वं विध्येयत्वं विनानुष्ठानायोगं तावदाह—**इह त्विति** । तृतीयैव श्रुतिरनुष्ठानहेतुः, न पूर्वेत्यर्थः । उदाहरणनिष्ठं श्लोकं व्याचष्टे—**प्रकृतीति** । अभिधातृत्वस्वरूपमात्रबोधोऽभिप्रेतः विध्ययनपेक्षैः श्रुत्यादिभिस्तादर्थ्यबोधाख्यविनियोगासिद्धेरन्वयमात्रबोधोऽत्र विनियोगोऽभिमतः । कारकविभक्तीनां प्रत्ययत्वेन स्वार्थस्वरूपबोद्धृत्वे प्रकृतिसमभिव्याहारात्मकपदत्वरूपेण प्रकृत्यर्थान्वयबोद्धृत्वेऽपि क्रियान्वयबोधाधिक्योक्त्यै पृथगुक्तिः । षष्ठ्या अपि पदान्तरोक्तार्थान्वयबोद्धृत्वोक्त्यर्थश्चकारः । लिङादीनामपि कारकविभक्तिवदभिधातृत्वविनियोक्तृत्वसद्भावेऽपि विधिसामर्थ्याधिक्यमुक्तम् । तत्रेत्यनेन श्लोकतात्पर्योक्तिः ।

विधिनिबन्धनत्वं प्रयोगस्यान्वयव्यतिरेकाभ्यामुपपादयति—**स हीति** । सौर्यादियागे अनभिहितेऽपि सक्तुषु होमसाधनत्वेनाऽविनियुक्तेष्वपि विधिसद्भावे प्रवृत्तेर्विध्यभावे च वायव्यश्लेतालम्भादौ धातुनाभिहिते द्वितीयया च विनियुक्तेऽप्यप्रवृत्तेर्विध्यधीनत्वाद्यवगतिरित्यर्थः । नन्वश्रद्धयापि प्रवृत्त्युपपत्तेः नाप्रवृत्तिमात्रेणाभिधानविनियोगश्रुत्योः प्रेरणाशक्त्यभावोऽवसीयते इत्याशङ्क्याभिधानश्रुत्याऽस्तित्वमात्रपरिच्छेदाद्विनियोगाश्रुत्या चान्वयमात्रपरिच्छेदाएसत्तान्वयविषयकार्यत्वबुद्ध्यनुत्पादकत्वेनानयोः प्रेरणाशक्त्यभावमुपपादयितुमाह—**न हीति** । उत्तरार्द्धव्याख्यानायाऽनुष्ठानस्य विध्यधीनत्वमुपपाद्योत्तरार्द्धं तात्पर्यतो व्याचष्टे—**तेनेति** । विधिं प्रतीत्यविधिं लक्षणीकृत्य विधिलक्षणार्थं वचनमङ्गी-

कृत्य विवक्षाविवक्षे भवत इत्युक्ते सनोऽपि इच्छार्थस्यास्मिन्पक्षे परिग्रहलक्षणार्थत्वापत्तेः। तस्य च श्रुतिवृत्तत्वसिद्धयेऽनुष्ठानं प्रतीत्यानुष्ठानलक्षणार्थं वचनमङ्गीकृत्येत्युक्तम्।

द्वयमपि व्याख्यातुं विधित्सितेत्युक्तं चिकीर्षिताचिकीर्षितत्वयोश्च मूलसन्देहविषयभूतकर्तव्यत्वाकर्तव्यत्वोपलक्षणार्थत्वेनोपायसन्देहहेतुत्वेनोपन्यसनीयत्वाद्भाष्येऽपि चैकत्वाविवक्षायामेकवचनायोगशङ्कायाः शब्दविषयत्वेनानुष्ठातृगता चिकीर्षाविषयत्वेऽनुपपत्ते[1]र्विवक्षाविवक्षाशब्दयोर्विधेयत्वाविधेयत्वोपलक्षणार्थं विधित्सिताविधित्सितार्थत्वावसायात्सनः श्रुतिवृत्तिशक्तिप्रदर्शनमात्रार्थं विवक्षाविवक्षयोश्चिकीर्षिताचिकीर्षितात्मकतोक्ता, न परमार्थिकी। विधित्सिताविधित्सितात्मकमपि विवक्षिताविवक्षितत्वं विधायकस्य शब्दस्याचेतनत्वेनेच्छाभावादयुक्तमित्याशङ्कते—**नन्विति**। [2]एकवचनेनैकत्वोक्तेर्निःशङ्कत्वेनात्र विवक्षाशब्दस्य 'आशङ्कायां सन् वक्तव्य' इति स्मृत्यविषयत्वादौपचारिकत्वेव सनो युक्तेत्याशयः। उपचारेणापि चेच्छाव्यतिरिक्ते सन्प्रयोगोपपत्तौ सूत्रस्मृतेच्छावाचित्वत्यागेनान्यार्थत्वकल्पनायोगाद्वाक्यकृतस्मृत्यनादरेण दृष्टान्तेऽप्यौपचारिकत्वोक्तिः सन्प्रत्ययोपलक्षणार्थ इति परिहरति—**उच्यत इति**। सनश्चेच्छाफलप्रत्यासत्तिलक्षणार्थत्वदर्शनान्नात्यन्तादृष्टोपलक्षणेति दर्शनान्नात्यन्तादृष्टोपलक्षणेति दर्शयन् श्लोकं व्याचष्टे—**तथैवेति**। अनुष्ठानार्थौ परिग्रहपरित्यागशब्दौ मत्वाऽभिधानविनियोगश्रुत्योरविधायकत्वेऽपि विधेयसमर्पकत्वात्तद्विषयताया विधेयत्वावगतेर्विधायकश्रुत्यविषयत्वेऽपि परित्यागो न युक्त इत्याशङ्कते—**कथमिति**। अप्राप्तत्वाद्विधानार्हत्वरूपविधेयत्वावगमेऽपि विधेयत्वाधीनत्वादनुष्ठानस्य विधायकेनाग्रहणेनानुष्ठानं युक्तमिति परिहरति—**नैष इति**। पुम्वाक्यदृष्टान्तेनैतदेवोपपादयति—**यथैवेति**। श्लोकं व्याचष्टे—**पुरुषेति**। इच्छाशब्देनाज्ञादयः पुरुषाशयविशेषा प्रवर्तनासामान्यव्यक्तिभूता विवक्षिताः। विधित्वशब्देन प्रेरणाख्यो लिङ्व्यापारः। शङ्कापरिहारमुपसंहरति—**अत इति**।

विनियोगाभिधानश्रुतिसमर्पितत्वाविशेषेऽपि विधिस्पर्शास्पर्शव्यवस्था न युक्तेत्याशङ्कते—**कथं पुनरिति**। समर्पितत्वाविशेषेऽपि रूपरसयोश्चक्षुर्ग्रहणाग्रहणव्यवस्थावद्विधिग्रहणाग्रहणव्यवस्था युक्तेति परिहरति—**तदिति**। योग्येत्यनेनाध्याहृतापिशब्दकेनाभिधानविनियोगश्रुतिवशत्वे निरस्ते। दृष्टान्तत्वेन श्रोत्राशयवशत्वाभावोक्तिः। व्यतिरेकपूर्वं श्लोकं व्याचष्टे—**यदीति**।

कस्मिन्नर्थे विधायकानां शक्तिरित्यपेक्षायामाह—**तथा हीति**। श्रौत विधित्वं भावनाविषयं कारकविषयं चार्थमित्यर्थः। श्लोकं व्याचष्टे—**श्रुत्या तावदिति**। धात्वर्थस्य कारकत्वेऽपि तदवच्छिन्नाया भावनाया निरूपणाशक्तेर्विध्ययोगात्पदश्रुत्यैव धात्वर्थविध्यवगतेस्तद्व्यतिरिक्तानामेव कारणामार्थविधिविषयत्वसूचनायान्तरोक्तिः कारकत्वेन श्रुतस्य सङ्ख्यादेः साक्षात्कारकत्वायोगेऽपि कारकीभूतद्रव्यद्वारा कारकत्वसम्भवे विधेयत्वानपह्नव-

१. अनुपपत्तेरिति २ पु० ना०। २. धात्वेकवचनेनेति २ पु० पा०।

सूचनायोत्तरार्द्धव्याख्याने तदाश्रयस्त्वोक्तिः विध्यवगतानुष्ठेयत्यानुपपत्त्या सामान्यतः किंचित्समीहितं प्रत्यङ्गत्वेऽवधारिते श्रुत्यादेस्तद्विशेषसमर्पणमात्रे व्यापाराद्विध्यपरिग्रहे श्रुतस्याप्यङ्गत्वं नास्तीति सूचनायानुष्ठानं प्रत्यङ्गत्वं स्यात्, तच्च विध्यभावान्नास्तीत्युक्तम्। एकत्वादेर्विधिपरिग्रहापरिग्रहलक्षणविवक्षिताविवक्षितत्वसन्देहेऽप्येकस्य ग्रहस्यसम्मागादिकार्यम्। सर्वेषां वेति मूलसन्देहस्य सिद्धिः कथमित्याशङ्क्य, विवक्षिताविवक्षितत्वं सन्देहेनैकत्वादेः कार्यत्वाकार्यत्वसन्देहसिद्धिन्दर्शयितुमाह—**तेनेति**। उपक्रमोक्तो विवक्षाविवक्षितत्वसदेहः सम्भवोपपादनसमाप्त्या बुद्धिस्थीकृतस्तच्छब्देन परामृष्टः। हेत्वभावे वेदे सम्भवमात्रेण विवक्षिताविवक्षितत्वसन्देहासिद्धेस्तद्धेतुत्वेनैकत्वादेः सम्मार्गादिभावनाविवक्षिताविवक्षितत्वसन्देहासिद्धेस्तद्धेतुत्वेनैकत्वादेः सम्मार्गादिभावनाविशेषणत्वसदसद्भावसन्देहं दर्शयितुमाह—**तत्रेति**। भावनाद्रव्याङ्गत्वहेतुभूतकारकाकारकत्वसन्देहान्तरसूचनार्थं कारकत्वेनेत्युक्तम्। चिकीर्षितत्वात्मके विवक्षितत्वे विधिस्पर्शस्य हेतुत्वार्था पञ्चमी विधित्सितरूपे विवक्षितत्वे शब्दप्रवृत्तिमात्रे हेतुत्वम्।

ननु विवक्षाविवक्षोक्त्योर्विधिपरिग्रहापरिग्रहलक्षणार्थत्वे कस्मादुद्देश्यसंख्याविधिना गृह्यते न वेत्येव सन्देहो न कृत इत्याशङ्क्याशङ्क्याह—**तदेतदिति**। विधिशक्त्यशक्त्यधीनयोर्विधिपरिग्रहापरिग्रहयोर्यद्विवक्षिताविवक्षितत्वं वाचोयुक्त्युच्चारणं तन्मन्दबुद्धिशिष्यप्रतिपादनफलं पौरुषेयवाक्यव्याख्यासादृश्यापादनार्थमित्युक्ते कस्मात्पुंवाक्यव्याख्यासादृश्यापादनं विना न शिष्यप्रतिपत्तिरित्याङ्क्यालौकिकस्थेनाबुद्धस्य वेदवाक्यार्थस्य विसदृशव्याख्यानप्रकारप्रकरणाशक्तेरित्युक्तम्। कया वृत्त्या परिग्रहापरिग्रहयोर्विवक्षिताविवक्षितवाचोयुक्तिरित्याशङ्क्यान्तर्णीतमुपमानं यस्याङ्गौणवृत्तौ तदाश्रयणेनेत्युक्तम्। कथमुपमानमित्यपेक्षायां परिग्रहापरिग्रहाख्यफलसामान्यदर्शनादित्युक्तम्। न केवलमेतदेव विवक्षिताविवक्षितवाचोयुक्त्युच्चारणं परिग्रहापरिग्रहविषयम्। किं त्वन्यत्रापि तस्मान्नैतत्किंचिदपि कर्तुं विवक्ष्यत इत्यादिभाष्यादौ यद्वेदविषयं विवक्षिताविवक्षितवाचोयुक्त्युच्चारणम्, तदेव मे विसमर्थनीयमिति ग्रन्थेत्यनेनोक्तम्। व्याख्यार्थवच्यङ्गीकारेण वाच्या चिख्यासाव्याचिख्यासे विवक्षाविवक्षोक्तिभ्यामुच्येते इति समाधान्तरमाह—**अथ वेति**।

ननु सम्प्रदायानुसारेण व्याचक्षाणानां याज्ञिकानां न्यायशास्त्रे अभिप्रायाख्येच्छा चिन्ता न युक्तेत्याशङ्क्याह—**शब्देति**। सम्प्रदायस्य पौरुषेयत्वेन मूलप्रमाणापेक्षत्वाद्ग्रहैकत्वादिविवक्षाविषयभूतस्य च प्रमाणान्तरस्यादर्शनादृष्टन्यायमूलत्वसम्भवे चादृष्टमूलान्तरकल्पनायोगान्न्यायमूलत्वावगतेर्न्यायाविरोधेसम्प्रदायाद्वेदार्थावगमेऽपि विरोधे न्यायावगम्यविधिशब्दशक्त्यनुसारेणैव याज्ञिकैरपि व्याख्येयत्वात्तद्व्याचिख्यासा चिन्तयितुं युक्तेत्याशयः। यद्वेच्छाया निरङ्कुशत्वात्तद्वशेन शास्त्रार्थनिर्णयायोगाशङ्कानिरासार्थत्वेनायं श्लोकार्द्धो व्याख्येयः। व्याख्यात्रिच्छायाः साङ्कशत्वमेव विवृणोति—**तत्रेति**। विवक्षाविवक्षोक्त्योर्व्याचिख्याव्याचिख्यासार्थत्वमुपसंहरति—**तेनेति**।

ननु ग्रन्थकारप्रयुक्तयोर्विवक्षाविवक्षाशब्दयोर्व्याख्यात्रिच्छानिच्छानिच्छार्थत्वसम्भवेऽपि व्याख्यातुमुक्तयोरात्माश्रयदोषापत्तेर्व्याख्यात्रिच्छानिच्छार्थत्वं न सम्भवतीत्याशङ्क्याह—**अत इति**। संवत्सरवाचिना समाशब्देन कालोपलक्षणादतः पूर्वव्याख्यातृप्रतियोगित्वेनोपस्थापितादर्वाचीनाद् व्याख्यातुः पूर्वकाले वृत्ता जाता ये व्याख्यातारः तेषामिष्टं यत्तेनार्वाचीनेन व्याख्यात्रविवक्षितमुच्यते। तेषां चानिष्टं यत्तदविवक्षितमुच्यतइत्यर्थः। अतो वेदेऽपि विवक्षिताविवक्षितत्वचिन्ता न विरुद्धेति प्रस्तुतोपयोगमाह—**तस्मादिति**। स्वरूपे अर्थे वेदप्रामाण्यात्सर्वस्य जगतश्चेतनाधिष्ठितत्वाभ्युपगमेन मुख्यवृत्त्यैव विवक्षाविवक्षोक्ती समाधत्ते—**ऋग्वेदादीति**। यो वै वेदेषु तिष्ठन्वेदानन्तरो यमयति यो वेदान्वेत्ति, यं वेदा न विदुः यस्य वेदाः शरीरं एष त आत्मान्तर्याम्यमृत इत्युपनिषत्प्रामाण्यादृग्वेदादिष्वात्मानो ये प्रतिष्ठितास्तेषामिच्छानिच्छाख्यभिप्रायो विवक्षाविवक्षाशब्दवाच्य इत्युक्ते कर्मजन्यफलोपभोगार्थं देहाधिष्ठातृभिजीवैर्नित्यानां वेदानां कर्मानिर्जितत्वेनाधिष्ठानायोगात्परमात्मनश्च देहानधिष्ठातृत्वाद् ऋग्वेदादीनां चेतनेच्छाधीनव्यापारत्वानुपपत्तेः, शब्दशक्त्यालोचनावशेन शब्दव्यापाराच्चेतनेच्छानुमानायोगेन सदसद्भावचिन्तानुपपत्तिमाशङ्क्य परमात्मनः कर्मजन्यफलोपभोगार्थं देहानधिष्ठानेऽपि कार्यकारणप्रतिनियमसिद्ध्यै सर्वस्य जगतश्चेतनाधिष्ठानाकरणात्परमात्मनोऽपि च—

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारतेति।

देहाख्यक्षेत्रे ज्ञातृत्वाख्यक्षेत्रे ज्ञत्वस्मृतीर्वेदेष्वधिष्ठातृत्वोपपत्तिसूचनार्थं क्षेत्रज्ञत्वेऽभिहिते।

'विच्छिन्नयत्नव्यङ्ग्यैश्च नित्यैः सर्वगतैरपि।
व्यतिरिक्तपदारम्भो वर्णैर्नात्रोपपद्यते॥'

इत्यनेन न्यायेन पदावयविवत् ऋग्वेदाद्यवयविनो, वेदावयविनश्चानुपपत्तेरनारब्धावयविकानां चावयवानां देहत्वादर्शनादृग्वेदादीनां देहत्वायोगेन।

'इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते।
एतद्योवेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥'

इति देहाख्यक्षेत्रमधिष्ठाय ज्ञातृत्वलक्षणक्षेत्रज्ञत्वायोगमाशङ्क्योपनिषत्प्रामाण्यादनारब्धावयविकेष्वप्यृग्वेदादिशब्दवाच्येषु मन्त्रब्राह्मणसमूहेषु क्षेत्रज्ञानामधिष्ठातृतोक्ता।

ननु पञ्चधातूत्स्वयम् षष्ठ आदत्ते युगपत्प्रभुरिति।

इत्यादिस्मृत्यालोचनेन महाभूताधिष्ठितस्यैवात्मनो ज्ञानेच्छादिमत्त्वावगमाद्वेदाधिष्ठितानामात्मनां ज्ञानाभावेन तत्पूर्वकविवक्षासम्भवोऽसम्भवेऽपि प्रमाणान्तरगम्यार्थत्वाभावाद्वेदाधिष्ठातृभिरकथितायाः परैर्ज्ञातुमशक्यत्वात्तत्सदसद्भावचिन्ता युक्तेत्याशङ्क्याह—**महाभौतिकेति**। यथा पृथिव्यप्तेजोवाय्वाकाशाख्यमहाभूतारब्धदेहाधिष्ठितानामात्मनां चैतन्याख्यज्ञानवत्त्वात्तत्पूर्विका विवक्षा सम्भवति 'वृषलैर्न प्रवेष्टव्यं गृहेऽस्मिन्नि'त्यादौ वा कथितापि बहुत्वाद्यविवक्षा प्रमाणान्तरगम्येऽपि चार्थे शब्दशक्त्यालोचनयैवान्यैर्ज्ञायते, तथर्ग्वेदादिदेहा-

धिष्ठितानामप्यात्मनां चैतन्याख्यज्ञानवत्त्वात्तत्पूर्विका विवक्षा सम्भवति। शब्दशक्त्यालोचनया चान्यैर्ज्ञातुं शक्यत इति तथर्ग्वेदादयो देहा इति वक्ष्यमाणान्वयेन व्याख्येयम्। अकथितत्वसूचनायान्तर्गतत्वोक्तिः प्रमाणान्तरवशत्वनिरासार्थः शब्दशक्त्यैवेत्येवकारः।

ननु देहानां पार्थिवत्वव्यासेर्ऋग्वेदादीनां व्यापकपार्थिवत्वनिवृत्त्या व्याप्यदेहत्वनिवृत्त्यवगमान्नात्मभिरधिष्ठानं युक्तमित्याशङ्क्याह—**देहेति**। पृथिवीपरमाण्वादीनां देहप्रकृतिभूतानां देहारम्भवैचित्र्याद्देहानां भिन्नाः प्रकारा इत्युक्ते प्रकृत्यारम्भवैचित्र्यनिमित्तापेक्षायामपरमात्मनां जीवानां देहविचित्रकर्मजन्यविचित्रफलोपभोगापादकापूर्वाख्यशक्तिवशानुगा इत्युक्तम्। ततश्च शुद्धायाः पृथिव्याः क्व चिद्देहप्रकृतित्वाभावाद् बाहुल्यस्य च भूतान्तरेष्वपि भावाद्देहत्वस्य पार्थिवत्वेन व्याप्तिरसिद्धेति परिहाराशयः।

वैचित्र्यं विवृणोति—**पार्थिवेति**। स्वेदजाण्डजोद्भिज्जजरादिशब्दोक्तैः संख्यापूरणं तोयबाहुल्योपपादनार्थं स्वेच्छावयवरूपतोक्ता। वायुबाहुल्योपपादनार्थं भ्रमन्तीत्युक्तम्। अग्निदृष्टान्तेन तेजोबाहुल्योपपादनार्थं रात्रौ विक्षिप्तेन सौर्येण तेजसा आप्यायन्तइत्युक्तम्। वाक्यशेषेऽपि—

एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति।
स गच्छति परं स्थानं तेजो मूर्त्तिर्यथार्जुन॥

इति मानवाभिधानेन च तैजसानां देहानां चेतनाधिष्ठिततोपपादिता। नाभिहित इतिपाठे ना पुरुषः।

ननु जीवात्मनां स्वकर्मोपात्तफलोपभोगदेहाधिष्ठातृत्वसम्भवेऽपि वेदाधिष्ठातृत्वेनाभिमतस्य परमात्मनः कर्त्तृभोक्तृत्वाभावाद्देहाधिष्ठातृत्वं न सम्भवति। वेदानां च नित्यत्वेनात्मकर्मानुपात्तत्वान्न तद्देहत्वे सम्भवतीत्याशङ्क्य नित्यानां वेदानां व्योमदृष्टान्तेन परमात्माधिष्ठितत्वमुपपादयितुमाह—तथेति। क्रमार्थस्तथाशब्दो न तु दार्ष्टान्तिकत्वोक्त्यर्थः। परमात्मनो 'अनश्नन्नन्यो अभिचाकशीतीति श्रुतेः। प्रयोजनाभावाद्देहानधिष्ठातृतामाशङ्क्य भोक्तृत्वसिद्ध्यै 'तत्सवितुर्वरेण्यमि'ति सवित्रधिष्ठानतच्छब्दवाच्यब्रह्माख्यपरमात्माभिधायिन्या गायत्र्योत्क्षिप्यमाणेन वारिणेज्यतइत्युक्तम्। 'तद्योऽहं सोऽसौ योऽसौ सोऽहमित्युपनिषच्छ्रुतेः 'सूर्य आत्मा जगतस्त'स्थुषश्चेति मन्त्रवर्णाच्च ब्रह्मणः सवित्रधिष्ठातृत्वावगतिः। कृत्स्नदेहाधिष्ठानस्यापि चात्मनो हृदयाधिष्ठानोपासनवत् कृत्स्नव्योमाधिष्ठानस्यापि व्योमान्तर्गतसवितृमण्डलधिष्ठानोपासनाविरोधः। कस्याः श्रुतेर्व्योमशरीरता श्रुतेत्यपेक्षायां 'खब्रह्मे'ति श्रुत्या व्योमशरीरतयोदितइत्युक्तम्। य आकाशे तिष्ठन्नाकाशमन्तरो यमयतीति य आकाशं वेत्ति, यमाकाशं न वेद यस्याकाशः शरीरमेष त आत्मा सर्वान्तर्यामीअमृत इति श्रुत्यन्तरसूचनार्थश्चकारः। नित्यस्यापि नियमत्वलक्षणभोग्यत्वाद्देहत्वोपपत्तिसूचनार्था नित्योक्तिः।

नन्वेवमपि देहानां भौतिकत्वव्याप्तेर्ऋग्वेदादीनां व्यापकभौतिकत्वनिवृत्त्या देहत्वनिवृत्त्यवगमान्न देहता युक्तेत्याशङ्क्य महाभूत (गुणानामपि यो रूपेषु तिष्ठन्नपाण्यन्तरो यमयतीत्यादिश्रुतिप्रामाण्याद्देहत्वावगतेर्भौतिकत्वेनापि देहत्वस्य व्याप्तिरसिद्धेति सूचयितुमाह—**रूपेति**। देहत्वोपपादनार्थं नियमलक्षणसम्भोगाधिष्ठानता सम्भोगहेतुशब्देनोक्ता। पृथिव्यादिमहाभूतवत्समुदितानामेव रूपादीनां देहत्वशङ्कानिरासार्थं प्रत्येकमित्युक्तम्। शब्दब्रह्मवादस्य च चेतनाचेतनयोर्ब्रह्मशब्दयोस्तादात्म्यानुपपत्तेः। शब्दो ब्रह्माधिष्ठानमित्येवं व्याख्येयत्वाच्छब्दात्मकानामपि वेदानान्देहताम्ब्रह्माख्यस्य च परमात्मनोऽपि देहाधिष्ठातृतां शब्दब्रह्मवादिनामपि मतम्। प्रकृतर्ग्वेदाद्यधिष्ठातृक्षेत्रज्ञसिद्ध्यै सूचयितुमाह—**शब्देति**। यद्वेदाख्यं शाब्दं शब्दब्रह्मेत्युच्यते तत्परमात्मनाधिष्ठितमिति क्रध्याहारेणयोज्यम्।

अनादिनिधनम्ब्रह्म शब्दतत्त्वमिति।

शब्दमात्रस्य ब्रह्मत्वोक्तावपि शास्त्रत्वाख्यैश्वर्ययोगिकूटस्थनित्यब्रह्माधिष्ठानस्य कूटस्थनित्यं शास्त्रं विनानुपपत्तेर्वेदातिरिक्तस्य च शास्त्रस्य कूटस्थनित्यत्वाभावाद्वेदाख्यं शास्त्रमिति विशेषतः परमात्माधिष्ठानमात्रेण तर्हि चेतनाधिष्ठितत्वसिद्धेः, क्षेत्रज्ञाधिष्ठानोक्तिरनर्थिकेत्याशङ्क्य 'द्वा सुवर्णा सयुजा सखायेत्यादिश्रुत्यालोचनया सर्वस्य साधारणचेतनद्वयाधिष्ठानत्वावगतेः' सर्वसाधारणपरमात्माधिष्ठितस्यापि प्रतिबिम्बवत्स्वासाधारणाधिष्ठितत्वोपपत्तिसूचनार्थं सर्वामिकेनेत्युक्तम्। सर्वस्यैकाधिष्ठितत्वे वेदमात्रस्यैकाधिष्ठितत्वोक्तिरयुक्तेत्याशङ्क्य—

'सर्वेषाञ्च स नामानि कर्माणि च पृथक् पृथक्।
वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे॥'

इत्यादिस्मृत्यालोचनया सर्वस्याभिधानाभिधेयजातस्य वेदान्तर्गतत्वाद्वेदात्मकत्वसूचनायेदमित्युक्तम्। रूपादिदृष्टान्तेनाभौतिकानामपि वेदानान्देहत्वसम्भवेऽपि ज्ञानसाधनेन्द्रियाद्यभावात्परमात्मवच्च क्षेत्रज्ञाधिष्ठानेऽपि ज्ञानानुपपत्तेस्तत्पूर्विका विवक्षा न सम्भवतीत्याशङ्कां निरस्यन् दार्ष्टान्तिके ज्ञानपूर्वं विवक्षोपपत्ति—**योजयति**। **तथेति**। यथा माहाभौतिकदेहेष्वत्माधिष्ठानाच्चैतन्याख्यं ज्ञानमस्ति, तथर्ग्वेदादयोऽपि देहत्वेन श्रुत्योक्तत्वाद्देहानाञ्चात्मयोग्यत्वव्याप्तेर्ज्ञानञ्च विना भोगायोगाच्चैतन्याख्यज्ञानान्विता इत्यर्थः। परमात्मन एव वेदान्स्वार्थप्रतिपादने नियन्तुं वेदाख्य—क्षेत्राधिष्ठातृत्वेन क्षेत्रज्ञव्यपदेश्यत्वान्नित्यज्ञानत्वोपपत्तेः। साधनाभावेन ज्ञानाभावाशङ्कानिरासः सदेत्यनेन सूचितः। शब्दब्रह्मैव क्षेत्रज्ञशब्देनोक्तं स्यादित्याशङ्क्य, वेदपुरुष इति यमवोचामयेन वेदान्वेद ऋग्वेदं यजुर्वेदं सामवेदमिति श्रुत्या प्रत्येकमसाधारण्येन ऋग्वेदादीनान्देहत्वोक्तेः सर्ववेदसाधारणत्वाच्छब्दब्रह्मणः प्रतिवेदमसाधारण्येन क्षेत्रज्ञस्य वैलक्षण्यसूचार्थं पृथक् पृथगित्युक्तम्। यथा च भौतिकदेहस्थानात्मनामन्तर्गतापीच्छा शक्त्यालोचनया अन्यैर्ज्ञायते, तथा वेददेहस्थानामपीत्याह—**तेषाञ्चेति**। वेदक्षेत्रज्ञाशयविषयविवक्षाविवक्षोचितपक्षमुपसंहरति—

**विधीति**। शब्दब्रह्मवादाभ्युपगमे तु ब्रह्मणोऽपि सर्ववेदात्मकदेहाधिष्ठातृत्वाद्विवक्षाविवक्षे वक्तुं शक्येते। ते च विधिशक्तितो ज्ञायेते इत्याह शब्देति[1]। एवंशब्देन प्रत्येकम्वेदाधिष्ठातृणां दृष्टान्ततोक्ता—**नन्वनादिति**।

'नन्वनादिनिधनं ब्रह्म शब्दतत्त्वं व्यवस्थितम्।
विवर्त्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥'

इति वदद्भिः शब्दब्रह्मवादिभिः शब्दव्यतिरिक्तार्थनिरासात्तस्मिन्पक्षेऽर्थविवक्षानुपपत्तेस्तद्विषयत्वेन विवक्षोक्तिव्याख्या न युक्तेत्याशङ्क्याह—**अनादीति**। अर्थापह्नवे सर्वप्रमाणविरोधापत्तेरभिधेयवाचिनोऽर्थशब्दात्कृदन्तादुत्पन्नेन भावप्रत्ययेन वाच्यवाचकसंबन्धोक्तिमङ्गीकृत्य वाच्यविषयशक्तियुक्तत्वेन विवृत्यर्थभावेन[2] विवृत्युक्तेर्व्याख्येयत्वसूचनायानादिनिधनत्त्वस्योपलक्षितस्य शब्दब्रह्मणो वेदवेदार्थाधिष्ठानतोक्ता। शब्दब्रह्मपक्षे त्वेवं वेदक्षेत्रज्ञपक्षोक्तप्रकारेण विवक्षाविवक्षाशब्दयोर्व्याच्यमुख्यावृत्यायुक्तेत्यर्थः। उपासनाविधिशेषत्वेनान्तर्यामिब्राह्मणादेः स्वरूपार्थपरत्वाभावात् कार्यकारणप्रतिनियमस्य च शक्तिव्यवस्थयोपपत्तेः सर्वस्य जगतश्चेतनाधिष्ठितत्वे प्रमाणाभावात्परमात्मनस्तु योऽयमशरीरः प्रतिज्ञातेत्यशरीरत्वश्रुतेर्जीवात्मनां च कर्मानपेक्षाणां च देहानधिष्ठातृत्वान्मुख्यवृत्तिव्याख्यानस्याभ्युच्चयमात्रत्वसूचनार्थोऽपिशब्दः। वेदवाक्येषु विवक्षाविवक्षासन्देहस्य चतुर्द्धोपपादितम्। युक्ततत्वमुपसंहृति—**ततश्चेति**। तस्मान्नैतर्तिक चिदपि कर्त्तुर्विवक्ष्यतइत्यादिभाष्यादेव विविधसन्देहावगमसूचनार्थं न विवक्षितमिति स्थापयिष्यतीत्युक्तम्। एकत्वयुक्तं कर्मैकस्य द्रव्यस्यानुष्ठेयं विधानं वैकत्वयुक्तं द्रव्यस्यैकस्य ज्ञेयमित्येवं द्वेधा सूत्रं पूरयन्पूर्वपक्षमाह—**किं तावदिति**। श्रुतिसंयोगं विधिश्रुत्याशयत्वेन व्याख्यातुमाह—**सर्वत्रेति**। नन्वक्रियात्मनः कारकत्वेन विध्यन्वयाभ्युपगमात् संख्यायाश्च कारकीभूतविधेयद्रव्यविशेषणत्वद्वारा कारकत्वस्याभ्युपगमनीयत्वात्। ग्रहादेश्च द्वारभूतस्य द्रव्यस्येहाविधेयत्वेन तद्द्वारा कारकतया संख्यादिविध्ययोगाद्विधिश्रुत्यसंयोग इत्याशङ्क्य श्रुतिसंयोगोपपादितप्रतिज्ञां तावत्करोति—**तत्रेति**। कारकत्त्वेन वा, कारकविशेषणेन वेति सर्वात्मनेत्यस्यार्थः। कारकविशेषणत्वेन तावद्विधेयत्वमुपपादयति—**तत्रैकस्तावदिति**। अनभिमतत्वसूचनायैकशब्दः द्रव्यादित्रिशिष्टक्रियाविध्यन्यथानुपपत्त्या विधेयक्रियाविशेषणभूतद्रव्यादिविधिकल्पनैव संख्याविशिष्टद्रव्यविशिष्टक्रियाविध्यन्यथानुपपत्त्या विशेषणभूतसंख्याविधिकल्पनापि युक्तेत्यर्थः। स्वरूपेण च प्रकृतं कर्माङ्गत्वेन च ग्रहस्य प्राप्तावपि सम्मार्गान्वयित्वेनाप्राप्तत्वाद्विधेयत्वोपपत्तिरित्याशयः। अष्टाकपालादिवाक्ये च क्रियाविशेषणपुरोडाशविशेषणकपालविशेषणभूतस्याष्टत्वादेरपि विधिप्रतीतेर्विशेषणविशेषणस्य सुतरां विध्युपपत्तिरिति सूचयितुमाह—**एवमिति**। अर्थाक्षेपलभ्यत्वाच्चानेकार्थविधिनं गौरवं शब्दस्यापादय-

---

१. अयं पा० २ पु० ना०।
२. विविधवृत्यर्थतया अर्थभावेनेति २ पु० पा०।

तीत्यर्थान्तरन्यासेनाह—**परस्परस्यापीति**। शुद्धस्य द्रव्यस्य विशेषणत्वे द्रव्यविशिष्टक्रिया-विधिना द्रव्यविशेषणानाक्षेपात्संख्यादेश्च क्रियाविशेषणत्वाभावे तद्विशिष्टस्य क्रियाविशेषण-त्वायोगात्कारकविशेषणत्वेन विधेयत्वानुपपत्तेः। कारकत्वेनैव ग्रहैकत्वस्य विधेयत्वमुप-पादयितुमाह—**अथ वेति**। यद्यपि द्रव्यविशेषणपर्यन्तं विधिप्रत्ययो न गच्छेत्ततश्च स्वविशेषणविशिष्टक्रियान्यथानुपपत्तिलक्षणयैवार्थापत्त्या संख्याद्यपि विधातुमिष्यते, तथापि ग्रहैकत्वस्यापि भावनाविशेषणतेत्येवं ग्रहैकत्वविधानं प्रतिपादनीयमित्येवं तथाशब्दार्थः ततः शब्दापिशब्दाध्याहाराद्यभ्युपगमेन योज्यम्।

यद्वा यदीत्यसंदिग्धे सन्दिग्धवचनं नामवचनः कथं चिच्छब्दार्थे गच्छतिनान्वेतव्यः। ततश्चेति चशब्दाध्याहारस्तुल्यः। उद्देश्यविशेषणस्योद्देश्यत्वेन क्रियान्वयाभ्युपगमे प्रत्युद्देश्यं वाक्यसमाप्त्यापत्तेरुद्देश्यद्वयस्यैकक्रियावशीकाराभावेनान्योन्यानियमादुद्देशोपादानयोश्चैक - स्मिन्पदेऽनुपपत्तेरुपादेयत्वेन क्रियान्वयायोगाद् ग्रहैकत्वयोर्विशेषणविशेष्यत्वायोगेनैकपद-लक्षणायाः श्रुतेस्तद्विषयत्वायोगात्तदर्थ्यविषयत्वमापाद्य वाक्यीयक्रियान्वयबोधकत्वं शङ्कते—**ननु चेति**। पदश्रुतेस्तादर्थ्यविषयत्वाभ्युपगमेनैव ग्रहाणां निर्ज्ञातदशसंख्यत्वेन स्वरूपतः संख्यानपेक्षत्वात्संस्कार्यस्वरूपेणैकत्वं प्रत्यङ्गित्वावगतेः संमार्गभावनान्वयित्वात्संकार्यरूपाङ्ग-त्वस्यैकस्य भावनाङ्गत्वविरोधमाह—**नैष इति**। वस्तुस्वभावनिन्बन्धनोद्देश्योपादेयत्वयोः शब्दव्यापाराविषयत्वादेकपदोपात्तयोरव्यवस्थोपपत्तेर्ग्रहमिति द्वितीयोक्तस्यापि चैकत्वस्या-नुपयोगित्वेनासंस्कार्यत्वात्सक्तुवद् गुणत्वप्रतीतेः। साक्षाच्च निष्क्रियत्वेनाश्रयत्वेनाश्रय-द्रव्यापेक्षायामेकपदलक्षणया श्रुतेराश्रयद्रव्यसमपर्कत्वेनाविरोधसम्भवे विरोधापादकग्रहार्थ-ताविषयत्वकल्पनायोगमभिप्रेत्यान्यथाविरोधाभावमाह—**भिन्नेति**।

विरोधे सत्येकत्वस्य क्रियाङ्गत्वं विना विधेयत्वायोगात् श्रुत्युक्तस्य ग्रहाङ्गत्वस्यानु-पपत्तेर्वाक्यीयोऽपि क्रियान्वयो न बाध्यतइति परिहारान्तरमाह—**अथ वेति**। श्रुत्युक्त-विशेषणविशेष्यभावसिद्ध्यै वाऽपेक्ष्यतएव क्रियान्वयः। श्रुत्येति परिहारान्तरमाह—**यद्वेति**।

तादर्थ्यविषयश्रुत्यभ्युपगमे त्वेकत्वस्य क्रियान्वितग्रहान्वयनिमित्तक्रियान्वयपक्षा-त्पूर्वोक्तात्प्रकारान्तरेणैकत्वान्वितस्य ग्रहस्य क्रियान्वयाभ्युपगमे तस्यैकाभिधानश्रुत्यैका-भिधानश्रुत्यैकपदोक्तात् ग्रहात्प्राक् संस्कार्यत्वप्रतीतेः। स्वतन्त्रस्य चैकत्वस्य क्रियायोगा-त्प्रत्युद्देश्यं वाक्यसमाप्त्यनुपपत्तेर्ग्रहस्यैकत्वान्वयपूर्वकः क्रियान्वयः। गुणत्वेन तु क्रिया-भ्युपगमे द्वितीयायाः कारकसामान्यलक्षणार्थत्वोपपत्तेः योग्यत्वाद् गुणप्रधानभावावधारणे सति द्वयोर्विप्रकर्षतुल्यत्वद्योतनार्थं समानदेशोक्त्या लक्षणयैककालतोक्ता। एतदेव प्रश्न-पूर्वमुपपादयति—**कुत इति**। विशिष्टत्वेन श्रुतो योऽर्थो भावनां विशिनष्टयसौ, विशिष्टो भूत्वा पश्चाद्विशिनष्टि न त्वक्लृप्तविशेषणावस्थ इति कृत्वाऽसौ विशेषणपूर्वं भावनां प्रविश-तीत्युक्ते तदुपपादनार्थं भावनाया विधानार्हत्वात्कात्स्न्यसिद्ध्यैव विशेषणापेक्षत्वादविशिष्टेन च विशेषणेऽपि कात्स्न्र्यासिद्धिरिति वक्तुं विध्युक्ता कर्मव्युत्पत्त्या भावनोक्ता।

यौगपद्यपक्षे पूर्वोक्तिः साहित्यलक्षणार्था। भावनापि विशिष्टमेव ग्रहं गृह्णाति न त्वगृहीतविशेषणमित्याह—**गृह्णातीति**। सति त्वेकत्वान्वितस्य ग्रहस्य क्रियान्वये तस्यापि ग्रहवद्विध्यन्वयात्साक्षाच्च क्रियान्वयायोगेनाश्रयद्रव्यापेक्षायां पदश्रुत्यवगतग्रहान्वयित्व-नियमादवघातभावनार्थस्यापि प्रोक्षणस्योलूखलमुसलार्थत्वाद्ग्रहर्थतोपपादिता भवतीति प्रकृतोपयोगमाह—**एवं चेति**। एकभिधानश्रुत्या चैकत्वस्य कारकविशेषणत्वावगतेः कारकत्वस्य क्रियान्वयिरूपत्वेन कारकद्वारा क्रियाविशेषणत्वादेकपदश्रुत्योक्तग्रहविशेषत्वा-त्कारकैकत्वयोः साम्येन मिथोऽन्वयायोगान्नैकत्वस्य कारकविशेषणता युक्तेत्याशङ्क्याह—**प्रत्ययार्थत्वाच्चेति**। 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थ प्राधान्येनेति'-प्रत्ययार्थप्राधान्यस्मृतेः लिङ्गसंख्ययोश्च प्रत्ययार्थप्राधान्यस्मृतेर्लिङ्गसंख्योश्च प्रत्ययार्थ-त्वाविशेषेणैकस्मिन्पदेऽनेकेषां प्राधान्यायोगादेकस्यैकद प्राधान्येऽवगते, कारकत्वेन प्रयोजन-वत्वात्प्राधान्यप्रतीतेर्लिङ्गसंख्यापेक्षया च प्रातिपदिकार्थप्राधान्यस्मृत्युपपत्तेः कारकमेव प्रधानमित्यर्थः। प्रयोजनवत्त्वसमुच्चयार्थश्चकारः।

ननु प्राधान्येऽपि कारकत्वस्याद्रव्यत्वेनैकत्वाख्यगुणाश्रयत्वायोगान्न तद्विशेष्यत्वं सम्भवतीत्याशङ्क्याह—**सर्वं चेति**। कुंकुमस्योष्ट्राश्रितस्यापि राजशेषत्ववत्संख्यादेर्द्रव्या-श्रितस्यापि कारकं प्रत्यङ्गता न विरुद्धेत्याशयः। अतः कारकद्वारैकत्वस्य क्रियान्वयाद्युक्ता विधेयतेत्युक्तमुपसंहरति—**तेनेति**। विशिष्टविधानाच्चावाक्यभेदापत्तेर्युक्तमेकत्वविधान-मित्याह—**तत्त्विति**। पश्वेकत्वविवक्षाधिकरणन्यायेनैव दृढयितुमाह—**वक्ष्यति हीति**। गौरवभयेनैकत्वस्यापि विधेयत्वाभ्युपगमे दशापवित्रादेरविधेयत्वं स्यादित्यर्थान्तरन्यासेनाह—**यथैवेति**। ननूद्देश्यत्वेन ग्रहस्य क्रियया वशीकारायोगात्तत्क्रियाङ्गभूतेनैकत्वेन विशेष्यः नियमः सम्भवतीत्याशङ्क्याह—**सर्वेषां चेति**। एकक्रियाविशेषणत्वस्यान्योन्यनियमहेतु-त्वादुद्देश्यस्यापि वाक्यार्थीभूतक्रियाविशेषणत्वाविरोधान्नियमोपपत्तिरित्याशयः। वाक्य-भेदप्रसङ्गेनोद्देश्यविशेषणविवक्षानुपपत्तिमाशङ्क्य, वस्तुस्वभावकृतस्योद्देश्योपादेयत्वस्य शब्दव्यापाराविषयत्वाद्वाक्यभेदाप्रसक्तिसूचनार्थं यथा पशुमालभेतेति भाष्यस्य दर्शयन्पूर्व-मुपसंहरति—**तस्मादिति**।

ननूपादेयस्थलिङ्गविवक्षादृष्टान्तोक्त्यैकत्वयुक्तवाक्योदाहरणस्योद्देश्याविशेषणमात्रोपल-क्षणार्थत्वप्रतीतेः संख्यामात्रविवक्षोपसंहारो न युक्त इत्याशङ्क्याह—**पुंपशुश्चेति**।

उद्देश्यविशेषणविवक्षायां वाक्याभेदापत्तिलक्षणस्य न्यायस्याविवक्षासाधकस्य तुल्यत्वे-ऽपि यथोभयपदानर्थक्यपरिहारायोभयत्वस्योद्देश्यान्तर्गतत्वेन विवक्षाशङ्काधिक्यान्नेहोदा-हरणत्वम्, तथा स्वर्गकामस्योपादेयत्वशङ्काधिक्यात्संख्याविचारेण लिङ्गविचारपर्यवसाना-नुपपत्तेर्वाक्यभेदापत्तिलक्षणन्यायतुल्यत्वेऽप्यनुदाहरणतेति सूचनार्थः प्रायशब्दः। स्वर्ग-कामपदस्योपादेयकर्तृसंख्यावाच्याख्यातान्तसामानाधिकरण्येनोपादेयार्थत्वशङ्का। तर्ह्यत्रैव स्वर्गकामपदस्य फलसमर्पकत्वात्फलस्य चानुपादेयत्वात्कर्त्तुरेव च फलभागित्वात्सामाना-धिकरण्योपादेयार्थत्वानुपपत्तिरित्येवं कस्मान्न निरस्तेत्याशङ्क्याह—**माभूदिति**। यथाएवं-

धिकरणपौनरुक्त्यभयादुभयत्वस्योद्देश्यान्तर्गत्या शङ्का हविर्द्वयातिगमने च पञ्चशरावेऽधिकार्य्येकहविरार्तिगमनेऽपि चेति (त्रिवेकाय शष्टे निरसिष्यमाणात्र निरस्यते, यथा स्वर्गकामपदस्योपादेयत्वशङ्का पुमानेव ज्योतिष्टोमादावधिकारी सर्वापि वेति[1]) निरसिष्यमाणात्र न निरस्यत इत्यर्थः ॥ १३ ॥

भा० प्र०—ज्योतिष्टोम के प्रकरण में कहा गया है "दशापवित्रेण ग्रहं सम्मार्ष्टि" दशापवित्र अर्थात् वस्त्रखण्ड के द्वारा ग्रह का अर्थात् यज्ञियपात्र विशेष का सम्मार्जन करें। इस प्रसङ्ग में "ग्रहम्" इस पद में जो एकवचन का प्रयोग है वह एकवचन विवक्षित है या अविवक्षित है—यही विचार्य है। यदि एकत्व विवक्षित है, तो प्रकृत में इन्द्रवायव आदि जो दशग्रह हैं, उनमें किसी एक का सम्मार्जन करने से ही कार्य का निर्वाह होगा और यदि एकत्व की विवक्षा नहीं है तो सभी ग्रहों का सम्मार्जन करना होगा। इस प्रसङ्ग में पूर्वपक्षी का कहना है कि "पशुना यजेत" पशु के द्वारा याग करें, इत्यादि स्थलों में जैसे पशु का एकत्व एवं पुंस्त्व विवक्षित है, वैसे ही इस स्थल में "एकत्वयुक्तम्" ग्रह का एकत्व विवक्षित है। क्योंकि, "श्रुतिसंयोगात्" जब धर्माधर्म शब्दमात्र से अवगत होता है तब शब्दात्मक श्रुतिवचन से जो अर्थ लब्ध होता है, उस अर्थ का अन्यथा करना उचित नहीं है, इसलिए "ग्रहम्" इस स्थल में जब स्पष्ट ही एकवचन श्रुत होता है तो "एकस्य" जिस-किसी एक ग्रह का सम्मार्जन करने से ही कार्य हो सकता है।

"एकत्वयुक्तम्" = एकत्वसमभिव्याहृत अर्थात् सम्मार्ग आदि, "एकस्य" = एक का ही होगा, "श्रुतिसंयोगात्" = एकत्ववाचकपद से घटित प्रयोग होने से। यह पूर्वपक्ष है ॥ १३ ॥

**सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥१४॥ सि०**

**शा० भा०—नैतदस्ति—यदुक्तं ग्रहादिष्वेकत्वयुक्तेष्वमी पदार्थाः कर्तव्या इति। सर्वे ग्रहाः संमार्ष्टव्याः, सर्वेभ्योऽग्निभ्यस्तृणान्यपचेयानि, पुरोडाशमात्रं च पर्यग्निकर्तव्यमिति। कुतः? ग्रहजात्या द्रव्यं लक्षयित्वा—संमार्गादि विधीयते अविशिष्टं च लक्षणं सर्वद्रव्येषु। तत्र न गम्यते विशेषः, को ग्रहः संमार्ष्टव्यः, को नेति। सामान्यावगमाद्विशेषानवगमाच्च सर्वप्रत्ययः। तथाऽग्निपुरोडाशानामपि।**

**नन्वेकवचनं श्रूयते, तद्विशेक्ष्यति। नैतदस्ति। एकत्वं हि श्रूयमाणं ग्रहादिष्वेकत्वं ब्रूयात्, न द्वितीयादीन्प्रतिषेधेत्। एकत्वस्यासौ वाचक न द्वितीयादेः प्रतिषेधकः। तेनाप्रतिषिद्धे सामान्यवचने प्राप्तं संमार्जनादि किमिति न क्रियेत।**

---

१. अयं पा० २ पु० ना०।

तत्रैतत्स्यात् । एकवचनमिह श्रूयमाणं प्राप्त एवैकस्मिन्द्रव्ये द्वितीयादिषु च किमन्यत्कुर्यादन्यतः परिसंख्यायाः । न चेदेकवचनं परिसंचक्षीत द्वितीयादीन्, अनर्थकमेव स्यात् । शक्नोति च द्वितीयादीन्निवर्तयितुम् । यथा, 'अश्वाभिधानीमादत्ते' इति गर्दभाभिधानीं परिसंचष्टे । एवमत्रापि द्रष्टव्यमिति । नैतदेवम् । तत्र मन्त्रस्याभिधान्याश्च यः संबन्धः । तदभिधानपरं वचनम्, 'इमामगृभ्णन्नित्यश्वाभिधानीम्' ? इति । नानेन मन्त्रेणाऽऽदत्त इति । लिङ्गेनैवाऽऽदाने प्राप्तत्वान्मन्त्रस्य परिसंख्या युक्ता । इह पुनर्यदेकवचनं द्रव्ये श्रूयते, तच्छ्रूयमाणमप्यविधीयमानत्वेन न निवर्तकं भवितुमर्हति । यथा कश्चिदोदनं निर्दिश्य ब्रूयाद्, य एनं भक्षयेत्कश्चिच्छ्वा मार्जारो वा, स निवारयितव्य इति । तत्र यदि भक्षणं निमित्तत्वेन विधीयते, न श्वमार्जारसंबन्धः । ततः काकोऽप्यागच्छन्निवार्यते । श्रूयमाणेऽपि शुनि मार्जारे वा श्वमार्जारसंबन्धस्य निमित्तत्वेनाविधीयमानत्वात् । एवमिहाप्येकत्वसंबन्धस्याविधीयमानत्वाच्छ्रूयमाणेऽप्येकत्वे ग्रहमात्रं संमृज्येतेति । न चात्र द्रव्यैकत्वसंबन्धविधायकः कश्चिच्छब्दोऽस्ति । ननु संमार्ष्टीति । न ह्येतद्द्रव्यैकत्वसंबन्धस्य विधायकम् । एवं श्रुत्या स्वपदार्थो विहितो भवति । इतरथा वाक्येन परपदार्थो विधीयेत । श्रुत्यसम्भवे च वाक्यं क्रमते, न संभवन्त्यां श्रुतौ । अतोऽविधीयमानं विशेषणत्वेनैकत्वम्, द्वितीयादीन्प्रतिषेद्धुमर्हति । एवं सति न द्वितीयादौ संमार्गादि क्रियमाणमचोदितं भवति, प्रतिषिद्धं वा । यथैव हि तदेकस्य श्रुतमवगम्यते, तथा द्वितीयादेरपि ।

अयं चापरो दोषः । न तदेकत्वं द्रव्यस्य संमार्गादौ विषये नियम्येत । न हि संमार्गादिर्यस्मिन्द्रव्य एकत्वं नियम्येत, तस्य विशेषणत्वेन भवति । विधीयते ह्यत्र सम्मार्गादिः । न प्राप्तो लक्षणत्वेन द्रव्यस्याऽऽम्नायते । न हि यौगपद्येन विधातुं शक्यते, लक्षणत्वेन चोच्चारयितुम् । प्रसिद्धसम्बन्धो हि शक्नोति लक्षयितुम् । न चाविहित एवंजातीयकः शब्दावगम्यः प्रसिद्धसम्बन्धो भवति । विधीयते च सम्मार्गादिः । तस्मान्न विशेषकः । न चेद्विशेषकः, न द्रव्य एकत्वं नियम्यत इति शक्यमाश्रयितुम् ।

अथैकत्वं सम्मार्ग उच्यते । तत्रापि द्वयी गतिः स्यात् । एकत्वं प्रधानम्, सम्मार्गो वा । तच्चोभयमप्यनुपपन्नम् । न तावदेकत्वस्य सम्मार्गः शक्यते कर्तुम् । न च द्रव्ये क्रियमाण एकत्वस्योपकरोति केनचित्प्रकारेण । न चैकत्वस्योपकृतेन[1] किंचित्प्रयोजनमस्ति । न हि तद् गुणभूतं [2]श्रुतम् । अथैकत्वं सम्मार्गं प्रति गुणभूतमिति । तदपि न । कथम् ? अमूर्तत्वात् । न हि तत्सम्मार्गं निष्पादयति । यद्यप्यन्यदमूर्तं क्रियां निष्पादयति साधनं विशिषत् । तथाऽप्येतन्न

---

१. ब० उपकृतेः । २. ब० एतत्पदं नास्ति ।

भवितुमर्हति। न ह्यत्र ग्रहः सम्मार्गार्थः। सम्मार्गोऽत्र ग्रहाय चोद्यते। स हि प्रयोजनवान्। कल्प्यप्रयोजनः सम्मार्गः। यदि ग्रहः सम्मार्गस्योपकुर्यात्तदुपकारेण उपकरोतीति सम्मार्गस्योपकारकमेकत्वं भवेत्। न त्वेतदेवम्। तस्मादेकत्वसम्मार्गयोरसम्बन्धः।

ननु प्रधानभूतमपि ग्रहादि सम्मार्गं निष्पादयत्येव। अतस्तत्साधनम्, तच्च विशिंषत् तदुपकरिष्यति। यथा, इज्यार्थे दधनि पयसि च प्रणीताधर्माः पाक उपकुर्वन्ति। परिधानार्थे च परिधौ यूपधर्मा बन्धने। तस्मादयमसमाधिरिति। अत्रोच्यते। न ब्रूमोऽतदर्थे साधके न शक्नुवन्त्युपकर्तुमिति। किं तर्हि? यदा प्रधानभूतं ग्रहादि लक्षणत्वेनोच्यते, न तदैकत्वस्य ग्रहादिना संबन्धः, न सम्मार्गादिनेति। कथम्? यावदिह लक्षणत्वेन किंचिदुच्यते, संवादस्तत्र भवति। न तु तद्विधीयते विज्ञानाय, किमर्थं तर्ह्युच्चार्यते? अन्यत्तस्य किंचिद्विधायिष्यत इति। तदेतद् ग्रहादि लक्षयित्वा तस्य सम्मार्गादि विधीयते। तद्यद्येकत्वसम्बन्धोऽपरो [1]द्रव्ये सम्मार्गादौ वा[2] विधीयेत द्वयोः सम्बन्धयोर्विधानाद्भिद्येत वाक्यम्।

अथोच्यते। ग्रहादि लक्षयित्वा तस्यैकत्वसम्बन्धो विधीयते, न सम्मार्गादिसम्बन्ध इति। तथा च सम्मार्गादीनामध्ययनं प्रमाद इत्यभ्युपगतं स्यात्। न चैतदेवम्। तस्मादुभाभ्यामेकवचनस्यासम्बन्ध इति। एवमेतदेकत्वं ग्रहस्य न किंचिदुपकारं[3] करोति, न सम्मार्गस्यैवमेव सदनूद्यते। तस्मान्नैतत् किंचिदपि कर्तुं विवक्ष्यत इति, सर्वेषां ग्रहादीनां सम्मार्गादि कर्तव्यमिति। कुतः? संयोगतोऽविशेषात्प्रकरणाविशेषाच्च[4]।

यद्यविवक्षितमेकत्वम्, कथं तर्ह्येकवचनमुच्चार्यते। ननु बहुषु विवक्षितेषु बहुवचनेन भवितव्यम्। उच्यते। न वयमेतद्विचारयाम एकवचनमुच्चारयितव्यं नोच्चारयितव्यमिति। उच्चार्यमाणे सति किं प्रतिपत्तव्यम्। एकस्मिन्नेव सम्मार्गादि, उत सर्वेष्विति। तच्च सर्वेष्विति स्थापितम्। अपि च न विभक्तेर्वचनमेवैकं प्रयोजनम्। किं तर्हि? कारकसम्बन्धोऽपि। अविवक्षित एकत्वे कारकसम्बन्धार्थमस्योच्चारणं भविष्यति। तस्मान्नानर्थकम्।

अपि च—ग्रहः प्रातिपदिकार्थ, एकत्वं विभक्त्यर्थः। किमतो यद्येवम्? एतदतो भवति। प्रातिपदिकार्थगतं हि विभक्तिः स्वमर्थं श्रुत्यैव वदति। अथैवं सति किम्? न सम्मार्गेण सम्भन्त्स्यत इति। तेन हि सम्बध्यमानं वाक्येन सम्बध्येत। न च श्रुत्याऽन्येन सम्बध्यमानं वाक्येनाऽऽच्छिद्याऽन्येन सम्बन्ध-

---

१. क० ग्रहद्रव्ये। २. क० वा० पदार्थे।
३. ब० कंचित्। ४. ब० विशेषाच्च।

**मर्हति । असम्बध्यमानस्त्वेकत्वेन सम्मार्गो यदि नैकत्वविशिष्टः क्रियते । न किंचिद्विपन्नं भवति । न चैकत्वविशिष्टः सम्मार्गादिः । ग्रहादिमात्रस्य च विधीयत इति किमिति, द्वितीयस्य तृतीयस्य च न क्रियेतेति ॥ १४ ॥**

त० वा०—व्यक्तीरुद्दिश्य यत्कर्म स्वजात्याद्युपलक्षिताः ।
विहितं गुणभावेन तत्सर्वार्थं प्रतीयते ॥

इह तावत्, 'तुल्यश्रुतित्वाद्वेतरैः स धर्मन् स्यात्२-१' इत्येवं द्वितीयानिर्देशात् प्रयोजनवत्त्वाच्च ग्रहप्राधान्यम्, सम्मार्गस्य च गुणभावो विज्ञायते । तत्रापि ग्रहत्वस्य सम्मार्गानिर्हत्वाद् व्यक्तयः संस्कार्यत्वेनावतिष्ठन्ते । तासां साक्षात्प्रत्यायनाभावाद् ग्रहत्वं लक्षणत्वेनाऽऽश्रितम् । एष चोदनार्थोऽवगम्यते यद् ग्रहकार्यम्, तत्संमार्गेण सगुणं भवति । तत्र य एव न संमृज्येत, तस्यैव कार्यं विगुणं भवेत् । अतः सर्वे सम्मार्जनीयाः । यदि तु सम्मार्गगुणत्वेन यागाङ्गपशुवद् ग्रहश्चोद्येत, तत एकेनैव सिद्धे कार्ये नापरो गृह्येत । न हि तदानीं ग्रहान्तेरष्वगृह्यमाणेषु कस्यचिद्वैगुण्यं दृश्यते, शास्त्रार्थस्य निर्वृत्तत्वात् । प्राधान्यपक्षे तु प्रतिप्रधानं शास्त्रभेदादेकस्मिन्नप्यसंस्क्रियमाणे तद्गतशास्त्रबाधप्रसङ्गः ।

अथापि शास्त्रतन्त्रत्वात्संमार्गः स्यात्प्रतिग्रहम् ।
तथाऽप्यकरणे तस्य ज्ञानं बाध्येत तद्गतम् ॥
अबाधिते तु विज्ञाने योऽन्यो न क्रियते तथा ।
विहिताकरणात्तत्र प्रत्यवायः प्रसज्यते ॥

तस्माद् ग्रहत्वापूर्वसंयोगाविशेषात्प्रकरणाविशेषाच्च सर्वप्रत्ययः ।

**ननु चैकवचनं श्रूयते** इति—अविवक्षाकारणमपश्यन्नाह । तत्रोत्तरम् ।

श्रुतमात्रस्य सर्वस्य नानुष्ठेयत्वमिष्यते ।
विधानविनियोगौ हि तत्रापेक्ष्यौ श्रुताश्रुतौ ॥
विहितो विनियुक्तश्च गृह्यते ह्यश्रुतोऽपि सन् ।
श्रुतोऽपि तु न गृह्येत योऽर्थस्ताभ्यामुपेक्षितः ॥

तदेकस्मिन्वाक्ये प्रकृतिप्रत्ययपदश्रुतिप्रतिपादितानां बहूनामर्थानां को विधिविनियोगाभ्यां परिगृहीतः, को वा त्यक्त इति चिन्तायाम् ।

वचनव्यक्तिभेदेन सर्वेषामेव दर्शनात् ।
विहितो विनियुक्तश्च कः को नेति विचार्यते ॥
मीमांसका हि वाक्यार्थविचारे प्रस्तुते सति ।
लोकदृष्टीः प्रतिघ्नन्ति वचनव्यक्तिपांशुभिः ॥
वर्तमानसरूपेण लिङर्थस्मृतिसाधुना ।
पञ्चमेन लकारेण किं नामात्र विधीयते ॥

केवला भावना तावन्न कदाचिद्विधीयते ।
अननुष्ठेयरूपत्वाद्विशिष्टा सा विधीयते ॥
सा किं धात्वर्थमात्रेण सम्मार्गेण विशेष्यते ।
लोकप्रसिद्धरूपेण शक्याऽनुष्ठेयतात्मना ॥
ग्रहद्रव्येण किं किंवा तदीयैकत्वसंख्यया ।
दशापवित्रशब्दस्तु सर्वार्थेषु विवक्षितः ॥
तुल्यार्थत्वात्स भेदेन नान्यैः सह विचार्यते ।
ग्रहादीनां च किं चेह नियोगेन निरूपणा ॥

**अष्टपक्ष्या उपन्यासः**

सम्मार्गग्रहयोः किंवा विकल्पोऽथ समुच्चयः ।
सबन्धः समुदायो वा विशिनष्टीह भावनाम् ॥
अथवाऽन्यतरेणैको विशिष्टोऽन्यतरस्तयोः ।
विशिषन्भावनामेव तद्द्वारेण विधीयते ॥
सम्मार्गैकत्वयोरेवमष्टपक्षी विचारणा ।

**पुनर्विशेष्यविशेषणभावेन विकल्पः**

विचार्यैवं पुनः सैव ग्रहत्वैकत्वयोरपि ॥
तथा कृत्वा द्वयोः पूर्वं विशेषणविशेष्यताम् ।
तृतीयेन सहैकेन तादृश्येव विचारणा ॥

**उद्देश्यत्वेन, उपादेयत्वेन च विकल्पः**

तथा ।

किमुपादेयता तेषां स्यादथोद्दिश्यमानता ।
सम्मार्गं प्रति संहत्य प्रत्येकं वा समागमे ॥
तत्र क्रियाप्रधानत्वे साहित्यं द्रव्यसंख्ययोः ।
सकृच्च तादृशीं कृत्वा कृत्स्नां कर्ता कृती भवेत् ॥
ग्रहैकत्वे यदोद्दिश्य सम्मार्ग उपदिश्यते ।
एकैकस्मिन्समाप्येते क्रियावाक्ये तदा तयोः ॥
तत्रापि तु ग्रहस्यैव सम्मार्गः किं विधीयते ।
एकत्वस्यैव किं किंवा विकल्पेन द्वयोरपि ॥
किं समुच्चितयोः किंवा संबन्धसमुदाययोः ।
किं वैकत्वविशिष्टस्य ग्रहस्यैव विधीयते ॥
ग्रहेण वा विशिष्टां किं संख्यां प्रति विधीयते ।
क्रियां वा प्रत्युपादानं किं ग्रहस्यैव गम्यते ॥

एकत्वस्यैव किं किंवा विकल्पेन द्वयोरपि।
किं समुच्चितयोः किं वा संबन्धसमुदाययोः ॥
किमेकत्वविशिष्टस्य ग्रहस्यैव विधीयते।
किं वा ग्रहविशिष्टैकसंख्या सम्मार्गगामिनी ॥

**एवं सन्देहमुपन्य संख्यायाविधेयत्वपक्षोपन्यासदूषणम्**

एवं संदेह एताभिर्वचनव्यक्तिभिः कृते।
उपादेयतया संख्यां विधेयां मन्यते परः ॥
येन येन प्रकारेण संख्योपादीयते ग्रहे।
सम्मार्गे वा विधीयेत स तमापादयिष्यति ॥
यथा वोद्दिश्यमानत्वे विधानं देशकालयोः।
क्रियाद्वारं तथैव स्याद् ग्रहत्वैकत्वयोरपि ॥
यां यां स वचनव्यक्ति विधेये रचयिष्यति।
वाक्यभेदेन तां तां तु सिद्धान्ती दूषयिष्यति ॥
प्राधान्यान्न ग्रहस्तावदुपादेयो भविष्यति।
तद्वशत्वात्तथैकत्वमुपादातुं न शक्यते ॥
ग्रहं चोद्दिश्य सम्मार्गविधानाश्रयणे सति।
तन्मात्रक्षीणशक्तित्वादेकत्वं न विधास्यते ॥
न तावत्तद् ग्रहे शक्यं विधातुमपुनःश्रुतेः।
द्वौ तत्राऽऽवर्तनीयौ हि स्यातां ग्रहविधायकौ ॥
ध्रुवं विधीयमाने हि संबन्धे ग्रहसंख्ययोः।
ग्रहसम्मार्गसम्बन्धादधिकेऽर्थे विधित्सिते ॥
ग्रहोऽप्यावर्तनीयः स्यात्संबन्धद्वयसिद्धये।
विधायकश्च नैकेन विधिना तौ हि सिध्यतः ॥

**सम्बन्धस्य युगपद्विधानं वा क्रमेण वेत्ति विकल्प्यदूषणम्**

विदधद् द्वौ हि सम्बन्धौ युगपद्वा क्रमेण वा।
द्विरनुच्चार्यमाणस्तौ विदध्यात्प्रत्ययः कथम् ॥
संख्यासम्मार्गसम्बन्धौ ग्रहोऽपि प्राप्नुवन्नुभौ।
द्विरनुच्चार्यमाणस्तौ प्राप्नुयान्न सकृच्छ्रुतः ॥
ग्रहे विधाय सम्मार्गं क्षीणमुच्चारणं यदा।
तदैकत्वविधानाय कार्यमुच्चारणान्तरम् ॥
पुनरुच्चार्यमाणश्च समाम्नायाद्बहिः स्थितः।
प्रत्ययः पौरुषेयत्वादप्रमाणं प्रसज्ज्यते ॥
सर्वप्रकारमन्विष्टं वचनव्यक्तिभिः पृथक्।

### ग्रह-सम्मार्ग-भावनाभिरगृहीतत्वात् एकत्वस्याविवक्षेति क्रमशोविस्तरेण निरूपणम्

न शक्यते विधातुं चोदेकत्वं न ग्रहीष्यते ॥
केनचित्तु प्रकारेण विधिरस्य भवेद्यदि ।
ग्रहादिवदनुष्ठाने क एकत्वं परित्यजेत् ॥
तत्र क्रियाप्रधानत्वे तद्विशिष्टविधेर्बलात् ।
विशेषणविधानं स्यादार्थविध्यन्तरोद्भवम् ॥
यदि क्रियाप्रधानत्वं लप्स्यते पूर्वपक्षिणा ।
ततः सर्वविवक्षाऽपि तद्द्वारेणास्य सेत्स्यति ॥
तस्मान्न श्रुतमात्रत्वं विधिग्रहणकारणम् ।
अतः शुक्लादिभिस्तुल्यं नैतदन्यैर्विशेषणैः ॥
द्रव्यस्य क्रिययोर्वैतदेकत्वं स्याद्विशेषणम् ।
येनेदमात्मसात्कुर्युर्ग्रहसम्मार्गभावनाः ॥

तत्र द्रव्यविशेषणं तावन्निराक्रियते । तद्धि स्वरूपप्रक्षेपेण वा भवेत्, अनेकत्वनिराकरणेन वा । तत्र स्वरूपप्रक्षेपविशेषणफलं तावत्सर्वेऽपि संमृज्यमानेषु सम्भवत्येव । कथम् ? यो हि बहून् ग्रहान्संमार्ष्टि, संमार्ष्ट्यसावेकम् । अतश्च ग्रहत्वसम्बन्धेन प्राप्त एकवचनेन चाप्रतिषिद्धः किमिव द्वितीयादेः सम्मार्गो न क्रियेत ।

**तत्रैतत्स्यात्** । प्रातिपदिकादेवैकस्मिन्ननेकस्मिंश्च ग्रहे सम्मार्जनीये प्राप्ते, पुनरेकवचनश्रुतिर्गुणार्थवादत्वेनासम्भवन्ती परिसंख्यार्था भविष्यतीति । नैतदेवम् । कुतः ?

यत्र सामान्यतः प्राप्स्यन्विशेषे श्रूयते पुनः ।
परिसंख्येष्यते तत्र न त्विहैवं पुनःश्रुतिः ॥

### प्राप्ति-परिसंख्ययोः एकस्मिन्वाक्येऽसम्भवप्रतिपादनम्

तच्च नानावाक्यत्वे सत्येव भवति । इह त्वेकेनैव वाक्येन प्राप्तिः, परिसंख्या च क्रियत इत्युक्तम् । तच्चात्यन्तमेवानुपपन्नम् ।

न चैकवाक्यमात्रेण द्वयमेतच्चिकीर्षितम् ।
किं त्वेकेन पदेनापि तच्चाऽऽश्चर्यमतीन्द्रियम् ॥

प्रातिपदिकेन हि सर्वग्रहसम्बन्धः प्राप्यते । प्रत्यैकवचनेन तत्रैव पदे निवर्त्यते, न चैतदुत्प्रेक्षितुमपि शक्यते ।

अन्या हि वचनव्यक्तिर्वाक्ये प्रापकहापके।
यथा तथा पदव्यक्तिभेदोऽप्यत्र प्रसज्ज्यते॥
तत्रैव च क्षणे प्राप्तिस्तत्रैव च निवर्तनम्।
कथमेकपदेनैतद्विरुद्धमभिधीयते ॥

किं च— सामान्यप्रापणाशङ्का वाक्याद्यत्राऽऽनुमानिकात्।
श्रुतात्प्राप्तिर्विशेषे च परिसंख्या तदाश्रया॥
निर्दोषत्वं हि तत्रास्या विधाने सति लभ्यते।
कल्प्यत्वेन हि तस्यैषा[1] क्लृप्तादाश्रीयते फलात्॥

समानवाक्यपदपूर्वभागावस्थितप्रापितदिक्प्रापितसर्वग्रहसम्मार्गज्ञानप्रत्याख्यानेन तदधीनात्मलाभप्रत्ययप्रतिपाद्यायाः परिसंख्यायास्त्रिदोषत्वमपरिहार्यम्।

यत्तु भाष्यकारेण निर्दोषपरिसंख्याविषयं प्रदर्शयतेष्टानिष्टवचनव्यक्तिद्वयं प्रदर्शितम्—**इत्यश्वाभिधानीमिति। नेत्यादत्त इति। मन्त्रस्य रूपादेवाऽऽदाने प्राप्तत्वादिति** च कारणमुक्तम्। तदयुक्तम्। कुतः?

### भाष्यमतस्य निराकरणम्

इत्यादत्त इति ह्यस्मादाख्याताद्विधिसम्भवः।
सम्बन्धेऽश्वाभिधान्यां तु नास्ति कश्चिद्विधायकः॥
आदाने च यथा प्राप्तिरगृभ्णन्निति रूपतः।
तथैवाश्वाभिधान्यां सा तुल्या स्याद्रशनागदात्॥
न वाऽर्थविप्रकर्षोऽस्य रशनां प्रति कश्चन।
संयोगतो विशेषेण युगपत्प्रत्ययाद् द्वयोः॥
सुतरां विधिवाक्ये तु विशेषः श्रुतिवाक्ययोः।
धात्वर्थनामसम्बन्धविवेकेनोपलभ्यते ॥
पदत्रयाद्विना नामसम्बन्धो नावकल्पते।
इत्यादत्त इति त्वेष द्वाभ्यामेव समाप्यते॥
प्रत्ययश्च यथा मन्त्र विधत्ते धातुगोचरे।
स्वपदार्थे[2] श्रुते शीघ्रं न नामार्थे तथा श्रुते॥
मन्त्रोऽपि रशनां शीघ्रं यथा याति स्फुटश्रुताम्।
न तथा ग्रहणं कष्टं छान्दसीयपदोदितम्॥
न चाश्वरशनायां स प्राप्त्यन्तरमपेक्षते।

---

१. क तत्रैषा। २. क० स्वपदस्ये।

विशेषशब्दतुल्यं हि प्रापणं रशनापदात् ॥
अपूर्वसाधनत्वांशलक्षणाऽवश्यमेव हि ।
सर्वत्रैवाऽऽश्रिता श्रुत्या विधिः स्यान्निष्प्रयोजनः ॥
तत्राश्वरशनाशब्दो लक्षणां याति यावता ।
तावता रशनाशब्द इति तुल्यार्थता तयोः ॥

**अत्र विषये वार्तिकमतम्**

तस्मान्नाऽऽदत्त इत्येतद्रूपात्प्राप्तमनूद्यते ।
न वेत्यश्वाभिधानीमित्येतदत्र विधीयते ॥
किं त्वश्वरशनामन्त्रधात्वर्थैर्युगपत्त्रिभिः ।
विशिष्टा भावनैवैका प्रत्ययेन विधीयते ॥
न चाऽऽदानेऽस्ति मन्त्रस्य रूपात्प्राप्तिः कथंचन ।
न हि श्रुत्यनुमानात्प्राक्स्वयं मन्त्रो विधीयते ॥
रूपप्रकरणद्वाराश्रुतिर्यावत्तु कल्प्यते ।
तावत्प्रत्यक्षया श्रुत्यां विधिः शीघ्रं समाप्यते ॥

**अप्राप्तविधिः, फलतः परिसंख्येतिविशेषकथनम्**

अप्राप्तविधिरेवायमतो मन्त्रस्य निश्चितः ।
परिसंख्या फलेनोक्ता न विशेषपुनःश्रुतेः ॥
प्रयोजनं विधेः किं स्यादस्येति तु निरूपणे ।
न गर्दभाभिधानीतः फलमन्यन्निवर्तनात् ॥
न तु वाक्यार्थ एवान्यनिवृत्तिर्भेदपक्षवत् ।
अप्रवृत्त्यैव तत्सिद्धेः प्रवृत्तो हि निवर्त्यते ॥
न च गर्दभबन्धन्यां प्राप्तोऽननुमितश्रुतिः ।
मन्त्रो येन निवर्त्येत वाजिरज्जुपुनःश्रुतेः ॥
शीघ्रश्रुत्या पुरा प्राप्ते पश्चिमा स्यात्पुनःश्रुतिः ।
न गर्दभश्रुतिप्राप्त्या युक्ता त्वश्वपुनःश्रुतिः ॥
अश्वश्रुत्यैव शीघ्रत्वान्मन्त्रे प्राग्विहिते सति ।
निराकाङ्क्षीकृताऽऽम्नाये तथा प्रकरणिन्यपि ॥
लिङ्गप्रकरणद्वारा श्रुतिर्नैवानुमीयते ।
तस्यामप्रापितायां च मन्त्रप्राप्तिर्न गर्दभे ॥
सोऽयमाभाणको लोके यदश्वेन हृतं पुरा ।
तत्पश्चाद्गर्दभः प्राप्तुं केनोपायेन शक्नुयात् ॥
प्रयोजनं तु प्रत्यक्षश्रुतेरालोच्यते यदा ।
भवत्या किं प्रभुत्वेन निरुद्धा लैङ्गिकी श्रुतिः ॥

यदाऽनुमितयाऽप्येष श्रुत्याऽश्वरशनां प्रति ।
प्राप्नुयादेव मन्त्रः किं त्वरया विहितस्त्वया ॥
सत्यं त्वद्विहितस्यास्य श्रुतिर्नास्त्यानुमानिकी ।
तथाऽपि तन्निरोधस्य फलं किमधिकं तव ॥
यद्यश्वरशनाप्राप्ति केवलामानुमानिकी ।
प्रत्यक्षश्रुतिवत्कुर्यात्ततः सा स्यादनर्थिका ॥
लिङ्गानुमितया श्रुत्या प्राप्नुयाद्रशनाद्वये ।
स मा प्रापत्तयेत्येवं प्रत्यक्षां त्वरिता श्रुतिः ॥
केवलाश्वाभिधान्या हि विधिः प्रत्यक्षया यथा ।
न स्यात्तथाऽऽनुमानिक्या श्रुत्येत्याम्नायते ह्यसौ ॥
अतश्चापुनरुक्तत्वात्प्रत्यक्षाऽर्थवती श्रुतिः ।
तस्यां सत्यां निराकाङ्क्षान्मन्त्रान्नान्याऽनुमीयते ॥
यद्यस्य विनियुक्तस्य प्रत्यक्षा स्यात्पुनःश्रुतिः ।
ततश्च परिसंख्यानात्प्रसज्ज्येत त्रिदोषता ॥
यदा तु प्रतिबद्धत्वात्सामान्यविनियोगकृत् ।
नैव चेच्छ्रुतिरस्तीह न प्राप्नोति त्रिदोषता ॥
तदिदं परिसंख्येति सूत्रेऽस्मिन्नुपवर्णितम् ।
निर्दोषत्वं तथैवेह वाच्यं न पुनरन्यथा ॥

ततश्च भाष्यकारेण यदिहोक्तमचिन्तितम् ।
वाक्यभङ्ग्यन्तरं तत्र कर्तव्योऽतीव नाऽऽदरः ॥

न चैकत्वसंबन्धमात्रविधिः शक्यः, संमार्गग्रहसंबन्धमात्रविधानोपक्षीणशक्तित्वाद्विधायकस्य । यथौदनोपघातनिवारणविधिपरे वाक्ये श्रुतानामपि **श्वमार्जारादीनामविधीयमानत्वादविशेषणत्वम्** । कुतः ?

न ह्यन्नभक्षणाद्रक्ष्याः श्वमार्जारादयोऽत्र नः ।
तुल्यान्नाद्योपघातात्तु काकादेरपि वारणा ॥

तथा चाऽऽह—

काकेभ्यो रक्ष्यतामन्नमिति बालोऽपि चोदितः ।
उपघातप्रधानत्वान्न श्वादिभ्यो न रक्षति ॥' इति ।

न त्विदमत्रोदाहरणं घटते । कुतः ?

पदार्थ एव काकादिः सर्वो ह्यत्राविवक्षितः ।
संख्यामात्राविवक्षा तु ग्रहस्येति विलक्षणम् ॥

चमसेष्वपि संमार्गप्रसङ्गो यत्र वक्ष्यते ।
तत्रैवैतदुदाहार्यं स्थालसंमार्जनादिवत् ॥

स्थिरसिद्धान्तोदाहरणमपि पशुप्रकरणे श्रूयते 'यद्यपि चतुरवत्ती यजमानः, पञ्चावत्तैव वपा कार्या' इति । यदवत्तं, तत्पञ्चसंख्यं कार्यमित्येतद्विधिपरे वाक्ये वपाग्रहणमविवक्षितं वाक्यभेदप्रसङ्गादिति दशमे वक्ष्यति ।

**दृष्टाग्रदार्ष्टान्तिकयोर्वैषम्यनिरूपणम्**

तत्र श्वमार्जारादिसंबन्धाविवक्षोदाहरणं घटते । इह तु—

संख्यामात्रविवक्षायां लोके यच्छ्रूयते वचः ।
तदुदाहरणं देयं वृषलस्थबहुत्ववत् ॥
वृषलैर्न प्रवेष्टव्यं गृहेऽस्मिन्निति चोदिते ।
प्रत्येकं संहतानां च प्रवेशः प्रतिषिध्यते ॥

बहुत्वस्याविवक्षितत्वात् ।

**ननु संमार्ष्टीति ।** अयमेव ग्रहैकत्वसंबन्धमपि विधास्यति । न । श्रुतिविप्रतिषेधात् । न ह्येको विधायकः शक्नोति संमार्गभावनां च विधातुम्, ग्रहैकत्वसंबन्धं च । तत्र विरोधे सति संनिकर्षबलीयस्त्वात्, संमार्गभावनाविधान आश्रीयमाणे विध्यन्तरानुपपत्तेरग्रहणमेकत्वस्य ।

यत्तूक्तं विशेषणविशेषणमपि विधीयत इति । तदनुपपन्नम् ।

यदि तावद् ग्रहः संख्यां क्रियायै न प्रयच्छति ।
शुद्धेनैव विशिष्टत्वान्न विशिष्टविशिष्टता ॥

यदा ह्येकत्वविशिष्टमात्मानं ग्रहो भावनायां प्रक्षिपति, तदाऽवश्यं विशेषणं पूर्वतरं प्रक्षेप्तव्यम् । न ह्यन्यथा विशिष्टेन विशेषिता स्यादित्येवं भावनाऽप्येकत्वविशिष्टं ग्रहं गृह्णती नैकत्वमगृहीत्वा तद्विशिष्टं ग्रहं शक्नोति ग्रहीतुम् । तद्यथा शब्दो जात्यादिविशिष्टं द्रव्यमभिदधन्न विशेषणमनभिधाय विशिष्टे वर्तते । तेनावश्यं भावनाविशेषणं तावदेकत्वमित्याश्रयणीयम् । तच्चोपरिष्टान्निराकरिष्यामः । शुद्धद्रव्यविशेषणत्वे तु भावनाऽपि ग्रहमात्रेण संबद्धा, न संख्यया । संख्याऽपि ग्रहमात्रेण संबद्धा, न भावनया । तत्र विशिष्टविधिना भावनाविशेषणमात्राक्षेपपर्यवसायिना नार्थान्तराक्षेपः शक्यः कर्तुम् । न हि भावनां विंशिषतस्तस्य तदेकत्वं विशेषणम् ।

न चैकत्वविशिष्टं तं ग्रहं गृह्णाति भावना ।
स्वरूपान्तरितत्वाद्धि सा संख्यां नैव पश्यति ॥

ननु पशोरप्राप्तत्वेन विधेयत्वात्तद्द्वारा लिङ्गसंख्ययोः क्रियाविशेषणत्वेन विधेयत्वोपपत्तेर्विशिष्टविधानाद्वाक्यभेदः परिहर्त्तुं शक्यः। ग्रहस्य तु प्राप्तत्वेनाविधेयसंख्याद्वारत्वानुपपत्तेः। स्वतन्त्रस्य च गुणस्य निष्क्रियत्वेन क्रियासाधनतया विध्ययोगाद् ग्रहसंख्याभ्यां विशिष्टायाः क्रियाया विध्यनुपपत्तेर्ग्रहोद्देशेन सम्मार्गं विधाय निवृत्तव्यापारस्य विधायकस्यावृत्तिं विना संख्याविधायित्वायोगादपरिहार्यो वाक्यभेद इत्याशङ्क्याह—**अथापीति।** स्वरूपेण होमाङ्गत्वेन च प्राप्तस्य सम्मार्गसंस्कार्यत्वेनाप्राप्तेर्विधेयत्वसम्भवाद्विशिष्टविधानादवाक्यभेदोऽत्रापि तुल्य इत्यर्थः। ग्रहैकत्वस्योद्देश्यविशेषणत्वान्नोपादेयविशेषणपश्वेकत्वतुल्यतेत्याशङ्क्याह—**तदिहेति।**

उद्देश्यस्यापि विधिस्पर्शाद्विशेषणविवक्षा सम्भवतीति। वक्ष्यमाणोऽभिप्रायः। उपहासायाऽन्यथा वेत्युक्तम्। भिन्नप्रसरत्वेनोद्देश्योपादेययोर्युगपदेकक्रियाविशेषणत्वायोगाद्युगपदुभयविशिष्टक्रियाविध्यशक्तेर्वाक्यभेदोऽपरिहार्य इत्याशङ्क्याह—**अपि चेति।** ग्रहोद्देशेनैकत्वविशिष्टक्रियाविधिनैवोभयविशिष्टक्रियाविधिनैवोभयविशिष्टक्रियाविधिसिद्धेर्न वाक्यभेदापत्तिरित्याशयः। अविवक्षापादकोद्देश्यपदोक्तत्वेनाविवक्षितादेकत्वादन्यदान्तरोक्तत्वेन दशापवित्रादेर्विशेषमाशङ्क्याह—**यत्त्विति।** नोद्देश्यपदमविवक्षापादकमिति वक्ष्यमाण एवाशयः। किञ्चिद्वैलक्षण्यमात्रेणातुल्यन्यायत्वाभ्युपगमे तुल्यन्यायविषयत्वाभावान्न क्वचिदनुमानाङ्गं दृष्टान्तः नाप्युपमानव्यवहाराङ्गमुपमा स्यादित्यर्थः। विशेषालोचने चैकपदोक्तत्वाच्छीघ्रम्प्रतीतेर्वरङ्ग्रहैकत्वमेव विवक्षितं स्यादित्याह—**किञ्चेति।** उद्देश्योपादेययोर्विशेषणविवक्षायामविशेषमुपसंहरति—**तस्मादिति।** उद्देश्याविधेयत्वात्तद्विशेषणस्य विधेयत्वायोगमाशङ्क्याह—**अस्ति हीति।** ग्रहान्वयित्वेन सम्मार्गो विधीयमाने स्वरूपेणाविधीयमानोऽपि ग्रहः सम्मार्गान्वयिरूपेण विहितो भवतीत्याशयः। इममेवाशयमाशङ्कापूर्वं विवृणोति—**अथेति।**

ग्रहस्य प्रकृतापूर्वसाधनत्वात्संस्कार्यत्वावगतेर्द्वितीयासंयोगावगतसंस्कारत्वसम्मार्गान्वयप्राप्त्या विध्यनर्हत्वे पशोरपि द्रव्यत्वेन साधनार्हत्वावगतेः साधनापेक्षयागान्वयप्राप्त्या विध्यनर्हत्वोपपत्तिरिति पर्यनुयोगसाम्यमाह—**अथ ज्योतिष्टोमे इति।** पशोः सामान्यतः साधनापेक्षक्रियान्वयप्राप्तावपि यागाख्यक्रियान्वयाप्राप्तेर्विध्यर्हत्वे ग्रहस्यापि सम्मार्गाख्यसंस्कारविशेषान्वयाप्राप्तेर्विध्यर्हत्वोपपत्तिरिति परिहारसाम्यमाह—**अथासाविति।**

सम्मार्गस्य ज्योतिष्टोमान्तर्गतत्वात् ज्योतिष्टोमान्तर्गतसन्निहितग्रहोद्देशेन विध्युपपत्तेर्ग्रहस्य सम्मार्गान्वयप्राप्तिसम्भवाद्विध्यनर्हत्वे यागस्यापि लोकान्तर्गतत्वाल्लोकान्तर्गतत्वापादितसन्निधानपशूद्देशेन विध्युपपत्तेः। पशोरपि यागान्वयप्राप्तिसम्भवाद्विध्यनर्हत्वापत्तिरिति परिहाराशक्तिसाम्यमाह—**अथ सम्मार्गस्येति।** सन्निध्यविशेषः शक्यं हीत्यनेनोक्तः। यः पशुरिति लोकप्राप्तपशुस्वरूपानुवादेऽपि यागानुष्ठानापाद्यत्वलक्षणोपादेयत्वोपपत्तेर्विधेयत्वं युक्तम्, ग्रहस्य तु संस्कार्यत्वेनाऽनुपादेयत्वान्न युक्ता विधेयतेति वैषम्यमाह—**उद्दिश्यमानत्वात्त्विति।** विध्यनुवादशब्दौ कर्मण्युत्पन्नौ। चत्वारोऽपि विध्यादिशब्दा भाव-

प्रत्ययाध्याहारेण व्याख्येयाः । अत्यन्तभेदमेवान्वयव्यतिरेकाभ्यामुपपादयति—**अथाहीति** । देशकालयोरनापाद्यत्वेनोद्देश्यत्वसद्भावेऽप्यप्राप्तत्वेनानुवाद्यत्वाभावात्पश्वालम्भस्य वा चोद्यत्वलक्षणोपादेयत्वसद्भावेऽपि 'शमिता पशुङ्कण्ठे गृह्णाती'ति ग्रहणविधिप्राप्तत्वेन विधेयत्वाभावाद्विधेयानुवाद्यत्वयोरुद्देश्योपादेयत्वयोरपि भेद इत्यर्थः ।

ननु देशकालयोरुद्देश्यत्वेऽपि अङ्गत्वेन क्रियाविशेषणत्वाद्विधेयत्वोपपत्तिर्ग्रहस्य तु प्राधान्याद्विशेषणत्वानुपपत्तेर्विशेषणत्वाभ्युपगमे चैकत्ववद्ग्रहस्याप्यङ्गत्वापत्तेर्न्न युक्ता विधेयतेत्याशङ्क्याह—**तस्मादिति** । प्रधानस्यापि राजवद्विशेषणत्वाविरोधाद् ग्रहस्यापि क्रियाविशेषणत्वेन विधेयत्वोपपत्तेः । तत्परिच्छेदद्वारा क्रियासाधनत्वेनैकत्वविधिसम्भवो दृष्टान्तव्याजेनोक्तः । अविरोधोपपादनायाऽर्थादित्युक्तम् । यदा च ग्रहस्य विधेयतोपपादिता तदा तदेकपदोपादानादप्येकत्वस्याविधेयता न युक्तेत्याह—**किञ्चेति** । कर्मव्युत्पन्नौ विध्यविधिशब्दौ ।

पूर्वार्द्धं व्याचष्टे—**एकस्मिन्नेवेति** । विधानाद्धेतोरनुष्ठानं प्रति विषयत्वेनाश्रीयते इत्यर्थः । उत्तरार्द्धं व्याचष्टे—**न चेति** । स्वातन्त्र्यानियतयौगिकत्वात्प्रकृतिप्रत्यययोः प्रकृत्यर्थ विशिष्टप्रत्ययार्थरूपैकार्थगमकत्वेनैकपद्येऽपि प्रात्यात्मिकार्थभेदात्पदान्तरताप्युपपन्नेत्याशयेनाशङ्कते—**गमकत्वादिति** । अतिप्रसङ्गापत्तेः पदशब्दस्य यौगिकत्वं निरस्यति—**नेति** । वर्णसंघत्वे अपि गमकत्वविशेषणे अतिप्रसङ्गमाह—**एकस्मिन्नपि चेति** । वार्तिकालोचनयापि पदशब्दः प्रकृतिप्रत्ययसङ्घवाच्येवेत्याह—**पदमिति** । पदान्तरत्वाभ्युपगमेऽप्येकप्रयोक्तयोः कर्मत्वैकत्वयोर्विधेयाविधेयत्ववैषम्यं न युक्तमित्याह—**अभ्युपेत्यापि त्विति** ।

उक्ताया अपि संख्याया विध्यनन्वयोदविवक्षा भविष्यतीत्याशङ्क्याह—**अविवक्षायामिति** । एतदेवोपपादयति—**यावदिति** । अन्वयश्च वाक्यार्थ इत्यर्थ इत्याशयः । ततश्चेह ग्रहसंख्याविध्यनन्वये विभक्तेरश्रुतेः समत्वापत्तेः कर्मत्वस्यापि विध्यनन्वयप्रसङ्गाद् ग्रहस्य संस्कार्यतैव न स्यादित्याह—**तदिति** । द्वितीयां विनापि प्रयोजनत्ववात्प्रयाजशेषवत्संकार्यसिद्धि शङ्कते—**प्रयोजनवत्त्वादिति** । सामान्यक्रियान्वयपूर्वकत्वाद् गुणप्रधानत्वरूपविशेषान्वयस्य कारकविभक्त्यभावे सामान्यतोऽन्यतोऽन्वयाभावाद् विशेषान्वयासिद्धिरित्याशयेन निरस्यति—**नेति** । एतदेव विवृणोति—**न हीति** । अतः कर्मत्वस्यात्याज्यत्वात्तदर्थं विभक्त्यादरापत्तेः संख्यात्यानायोगान्न सर्वसम्मार्ग सिद्धिरितिसिद्धान्ताक्षेपमुपसंहरति—**तेनेति** ।

कर्मत्वप्रतीत्यर्थं विभक्त्यादरेऽप्येकत्वं त्यक्ष्यतइत्याशङ्क्य, विभक्त्यर्थैकदेशात्त्याज्यत्वोक्तिः ।

अशक्यत्वमेव श्लोकत्रयेणोपपादयति—**तथा हीति** । एकपदोक्तस्य ग्रहस्यैकप्रत्ययोक्तस्य च कर्मत्वस्याविवक्षयेत्यर्थः । सदसत्त्ववच्छ्रुताश्रुतत्वकल्पनैकस्य विरोधान्न सम्भवतीत्युक्ते श्रुतस्यापि शब्दस्य कश्चिदर्थो विधिनास्याविवक्षयेत्यर्थः । सदसत्त्ववच्छ्रुताश्रुतत्वकल्पनैकस्य

विरोधान्न सम्भवतीत्युक्ते, श्रुतस्यापि शब्दस्य कश्चिदर्थो विधिनो ग्रहीष्यते कश्चिन्नेत्याशङ्क्य श्रुतेत्युक्तम् ।

तथा शब्दातिदिष्टं विरोधं द्रढयितुमर्द्धं कुकुट्याः पच्यताम्, अर्द्धं प्रसवाय धार्यतामिति लोकप्रवादायातं पाशुपतं वाक्यं नैकस्यःवस्तुनोऽर्द्धजरतीयं कथमनेन कुक्कुट्यर्द्धस्य वा पाकः प्रसवायार्द्धधारणमिति वार्त्तिकालोचनया दृष्टान्तितं गम्यते । ङ्यापोः संज्ञाछन्द-सोर्बहुलमिति उत्तरपदसमासे संज्ञायां ङीपो ह्रस्वविकल्पस्मृतेः ह्रस्वत्वाविरोधः ।

सिद्धान्तमाक्षिपन्तावत्समाधातुमाह—**अत्रेति** । प्राधान्येनैकत्वस्य क्रियान्वये ग्रहं सम्माष्टर्येकं सम्माष्टर्ीति प्रत्येकं वाक्यसमाप्तयाऽन्योन्यानपेक्षयोर्ग्रहैकत्वयोः क्रियान्वयोपपत्तेः एकत्वविक्षायामपि सर्वग्रहसम्मार्गप्रसङ्गान्निष्फलाविवक्षा गुणभूतत्वेन त्वेकत्वविवक्षा द्वितीयाविरोधान्न युक्तेत्यर्थः । पूर्वार्द्धं व्याख्यातुमुपक्रमते—**यदा हीति** । विधायकावृत्ति-लक्षणो पर इति तावच्छब्दार्थः । ननूद्देश्ययोरन्योन्यानन्वयाद्वाक्यभेदे सत्युपादेययोरप्य-न्योन्यानन्वयादरुणया क्रीणात्येकहायन्या क्रीणातीति प्रत्येकवाक्यसमाप्तिलक्षणवाक्यभेदा-पत्तिरित्याशङ्क्याह—**उपादेयेति** । उपादेयानां साधकत्वेन क्रियान्वयात्तस्याश्चानेकसाधन-साध्यत्वेनैकैकसाधनान्वयमात्रेणापर्यवसानात्समुदाये वाक्यसमाप्तेर्न्न वाक्यभेद इत्याशयः ।

ननु ग्रहैकत्वयोः साधनत्वेनानन्वयेऽपि वस्तुतः साधनत्वस्यापि सद्भावेन क्रियां प्रति गुणत्वात्तद्वशीकारेणान्योन्यनियमस्तावत्सेत्स्यतीति, समुदाय एव वाक्यसमाप्तेर्न्न वाक्यभेदो अपोत्याशङ्क्याह—**अस्मिन्नेव चेति** । क्रियोद्देशेन विनोपकारित्वे अप्यङ्गत्वायोगान्नोद्देश्य-त्वपक्षे क्रियावशीकारः सम्भवतीत्यन्योन्यानपेक्षयोर्ग्रहैकत्वयोः कर्मत्वरूपकर्त्तव्यत्वावग-मात्प्रत्येकं वाक्यसमाप्तिर्दुःपरिहरेत्याशयः । नन्वेकत्वस्य द्रव्यानपेक्षस्य संकर्त्तुमशक्यत्वान्न तन्मात्रान्वये वाक्यसमाप्तिः सम्भवतीत्याशङ्क्याह—**तदिहेति** । ग्रहस्य निर्ज्ञातदशसंख्यत्वात्, संस्कारान्वयंस्य वाऽपूर्वसाधनत्वप्रयुक्तत्वेन यथाप्राप्तस्यैव संस्कारान्वयावगतेः संख्यान-पेक्षत्वादन्यतराकाङ्क्षामात्रेण चान्योन्यान्वयायोगात्संख्यान्तरावरुद्धस्य चैकत्वान्वयायोगे-नैकत्वाकाङ्क्षयापि ग्रहस्याकाङ्क्षोत्थापनायोगाद् ग्रहानपेक्षस्यैकत्वस्य संस्कार्यत्वोपपत्तिरि-त्याशयः । एवं सति स्वतन्त्रस्यैकत्वस्य संस्कर्त्तुमशक्यत्वात्कस्मिंश्चिदाश्रयभूते द्रव्ये अनुक्तेऽप्यपेक्ष्यमाणे यद्येकपदोक्तत्वाच्छीघ्रं बुद्धिस्थत्वाद् ग्रह एवाश्रयोऽभ्युपगम्येत, ततो द्वयोः संस्कार्ययोस्तन्त्रेण संस्कारे सम्भवत्यावृत्त्ययोगादन्योन्यसापेक्षयोः संस्कारकरणापत्तेर-न्योन्यानपेक्षसंस्कारान्वयेन यत्प्रत्येकं संस्कार्यत्वलक्षणं प्राधान्यं शास्त्रेणावधृतम् । तद् बाध्येतेत्याह—**तत्रेति** । अविहितसम्मार्गद्रव्यान्तराश्रयत्वाभ्युपगमे तु किं तदित्यज्ञानाद-व्यवस्था स्यादित्याह—**अथेति** । अज्ञानमेवोपपादयति—**न हीति** । सर्वस्य स्वरूपेणैकत्वाद-न्यापेक्षया चानेकत्वादन्यानपेक्षत्वेनैकत्वावधारणहेतोश्चैकः पुरुषोऽस्मिन्न गृहइतिवत्कस्य चिदवच्छेदकस्याभावाद्यथा ग्रहत्वोपलक्षितं द्रव्यं निर्द्धारितरूपं प्रकरणे दृश्यते नैवमेकत्वो-पलक्षितमित्यर्थः ।

तत्प्रकरणस्थत्वविशिष्टमेकवचनान्तशब्दचोदितत्वमेकत्वेन संख्येयस्य द्रव्यस्यावच्छेदक भविष्यतीत्याशङ्कते—**नन्विति**। 'चमसाध्वर्यून्वृणीत' इत्याद्युत्पत्तौ बहुवचनान्तशब्दचोदितानां चमसाध्वर्य्वादीनां चमसांश्चमसाध्वर्यवे प्रयच्छति, तान्स वषट्कर्त्रे हरतीत्याद्येकवचनान्तशब्दविनियुक्तानामुत्पत्त्युक्त्या व्यावृत्तिः। 'यूपं छिनत्त्यौदुम्बरी भवति, सदो मिनुयादित्याद्येकवचनान्तशब्देनोत्पत्तौ ज्योतिष्टोमप्रकरणचोदितानामपि बहुत्वात्किमेवं सम्मार्ष्टव्यमिति निर्द्धारणाशक्तेर्नेदमप्यवच्छेदकं सम्भवतीति परिहरति—**नेति**। सर्वेषामेकवचनान्तेन शब्देनोत्पत्तौ ज्योतिष्टोमप्रकरणे विहितानां द्रव्याणां सम्मार्गोऽस्त्वित्याशङ्कते—**अथेति**। परिहरति—**नेति**। विकल्पेन सम्मार्गः, समुच्चयेन वेति विकल्प्य, अद्यकल्पे तावच्चोदितहानिमाह—**तथा हीति**। बहुष्वपि पुरोडाशकपालेषु सत्स्वेकेनैव तुषोपवापेऽपि, यथा न चोदितहानिस्तथेहापीत्याशङ्कयाह—**गुणेति**। द्वितीयकल्पे तु चोदितहानिः, अचोदितकरणं चेत्याह—**यदीति**।

ननु युगपत्सर्वं सम्मार्गे संख्यान्तरोपजनः स्यादिह त्वेकत्वोद्देशेन विधीयमानस्य सम्मार्गस्यैकत्वान्वयित्वेनानुगतेर्यौगपद्ये च तद्रूपानुष्ठानासिद्धेः प्रत्येकं सम्मार्ष्टव्यत्वावगमान्न संख्यान्तरोपजननापत्तिरित्याशङ्कयाह—**वीप्सार्थश्चेति**। अश्रुतवीप्सार्थकल्पनापत्तेर्न प्रत्येकानुष्ठानं विधातुं शक्यमित्याशयः।

नन्वेवं सति ग्रहस्यापि प्रत्येकं सम्मार्गविधिसिद्ध्यै ग्रहं ग्रहमिति वीप्सार्थकल्पनापद्येतेत्याशङ्क्य, प्रत्येकं सम्मार्गस्य विद्धचनपेक्षित्वसूचनार्थं 'सर्वाणि हवींष्यमृशती'त्यादौ हविष्ट्वादिजात्युद्देशेनाभिमर्शनादिसंस्कारविधौ युगपदनेकसंस्कृतावपि न जात्यन्तरापत्तिर्येन प्रत्येकमावृत्त्याऽभिमर्शनादि विधीयते, क्वचिद्वा शुक्लादिगुणान्तरोद्देशेन युगपदनेकत्र सम्भवदनुष्ठानावेक्षणादिसंस्कारविधौ युगपदनेकग्रहसम्मार्गेऽपि जात्यन्तरानापत्तिमुक्तामप्यबुध्यमानं प्रति विशेषनिष्ठत्वयाक्षरत्रयन्यूनपादत्रयेण विवृणोति—**तथा हीति**। यथा युगपदनेकद्रव्यान्तरसम्मार्गे संख्यान्तरोद्भवः। तथा युगपदनेकग्रहसम्मार्गेऽपि ग्रहत्वाज्जात्यन्तरस्योद्भवो नास्तीत्यर्थः। याज्ञिकानां तर्हि प्रतिग्रहं सम्मार्गावृत्तिर्विरुध्येतेत्याह—**इतीति**। 'प्रत्येकं गृह्यमाणानामिति' वार्त्तिकवक्ष्यमाणप्रतिग्रहसम्मार्गावृत्तिहेतुसूचनायेतिकरणः। एवमपि सकृदनेकग्रहसम्मार्गानुष्ठानस्य जात्यन्तरानापादकत्वेन ग्रहसंस्कार्यत्वव्याघातकत्वाभावाद् ग्रहस्य संस्कार्यत्वनिर्द्धारणार्थविधेः प्रतिग्रहं सम्मार्गावृत्तिविधायित्वाभावेऽपीत्यध्याहृतापिशब्दकैवंशब्दार्थः। एतीत्यस्मिन्नर्थे समर्थादिणः क्विबन्तात्सप्तम्याम् इतीति रूपम्। सकृत्सर्वग्रहसम्मार्गस्य जात्यन्तरानापादकत्वाद् ग्रहसंस्कार्यत्वाव्याघातकत्वमात्रपरामर्श्येवंशब्दः। एवं युगपत्सर्वसम्मार्गस्य जात्यन्तरानापादकत्वेन ग्रहार्थत्वाबाधकत्वादावृत्तिमविधायापि इति गच्छतिः पर्यवस्यत्यपि भिन्नकालग्रहणानन्तरकालत्वादल्पपरिमाणदशापवित्रसाधनकत्वाच्च सम्मार्गस्य सकृत्सर्वत्रानुष्ठातुमशक्तेः सामर्थ्यादापन्नावृत्तिर्नैव विरुध्यत इत्यर्थः।

एवं तर्ह्यनेनैव न्यायेन सर्वेष्वप्येकत्वयुक्तेषु द्रव्यान्तरेषु संस्क्रियमाणेष्वावृत्तिसिद्धेरनुष्ठानवेलायामेकैकस्यैव सम्मार्गान्वयदर्शनात्संख्यान्तरोपजननिमित्तचोदितहान्यचोदितकरणापत्तिलक्षणविरोधानापत्तेस्तत्परिहारार्थं प्रत्येकमावृत्त्याऽनुष्ठानविधिसिद्धचै वीप्सार्थकल्पनानापत्तिरित्याशङ्कते—**तत्रेति**। वीप्सार्थकल्पनापत्तिभयात्प्रत्येकानुष्ठानाविधानेऽपि सामर्थ्यात्प्रत्येकानुष्ठानसिद्धचा संख्यान्तरोपजननमित्तश्रुतहान्यश्रुतपरिग्रहापत्तिविरोधपरिहाराभ्युपगमे सति ग्रहैकत्वविवक्षायामपि सर्वग्रहसाद्गुण्यार्थत्वन्यायापन्नसर्वसम्मार्गाविरोधाद्विवक्षोक्तिर्निष्फला स्यादित्याह—**तथा सतीति**। श्लोकं व्याचष्टे—**न हीति**।

सर्वग्रहसम्मार्गेऽपि प्रत्येकमनुष्ठानसिद्धिरेकत्वविवक्षाफलमित्येकदेशी शङ्कते—**नन्विति**। गृह्यमाणानां सोमानामावृत्त्यैवाधोऽवयवपातात्तन्निर्हरणार्थः सम्मार्गस्यावृत्त्या च गृह्यमाणानामावृत्त्यैवाधोऽवयवपातात्तन्निर्हरणार्थः सम्मार्गोऽप्यावृत्त्यैव स्यादित्याशयेन परिहरति—**नैतदिति**। ग्रहणोत्तरकालान्वयिसम्मार्गस्य नैरन्तर्यविवक्षा 'वर्त्तमानसामीप्ये वर्त्तमानवद्वे'ति स्मृतिमालोच्य गृह्यमाणानामित्युक्तम्। अस्माच्च वार्त्तिकाद् ग्रहशब्दस्य ग्रहणसंस्कृतसोमवाचित्वप्रतीतेः 'स एव इन्द्रतुरीयो ग्रहो गृह्यते यदैन्द्रवायव 'इत्यादौ चैन्द्रवायवादिशब्दसामानाधिकरण्यात्पात्रसोमावयवान्वयाभावेनैन्द्रवायवादिशब्दवाच्यत्वायोगात्साक्षाच्च यागसाधनसोमसंस्कारसम्भवे व्यवहितोपयोगेन पात्रस्यासंस्कार्यत्वाद् ग्रहणादिसोमसंस्कारप्रस्तावाच्च सम्मार्गस्य सोमसंस्कारत्वप्रतीतेः पात्रस्य च गृह्यमाणावसिक्तसोमावयवस्य सम्मार्गेऽशुचित्वानापत्तेस्तन्निर्हरणार्थं सम्मार्गानपेक्षत्वात्सोमस्य तु विहितात्प्रदेशाद् बहिर्वृत्तौ वैगुण्यापत्तेः तन्निरासार्थं सम्मार्गापेक्षत्वादपेक्षितविध्येऽपि सोमसंस्कारत्वावगतेराकलशेषु धावतिपवित्रे परिषिच्यते' इत्यादिमन्त्रलिङ्गादप्येवमेवावगतेर्ग्रहादि सोमपात्रम्, यस्मिन्पात्रेऽस्य सोमस्य ग्रहणे क्रियमाणे सोमो व्यवसिच्यते इत्याशङ्कां 'सत्सर्वं सम्मार्ज्जयितव्यमिति चमसाधिकरण्यभाष्यस्य च पात्रश्लिष्टसोमसंस्कारार्थमपि क्रियमाणस्य सम्मार्गस्य नान्तरीयकपात्राश्रितत्वाशयतया व्याख्यातुं शक्यत्वान्न ग्रहपात्रं सम्मार्ष्टव्यमिति भ्रमितव्यम्। नानापात्रेषु गृह्यमाणानां सोमानां युगपत्सम्मार्गप्रसङ्गेऽपि वायव्यैन्द्रवायवयोः सोमयोरेकस्मिन्पात्रे गृह्यमाणयोर्यौगपद्यप्रसक्तौ तन्निरोधो विवक्षाफलं भविष्यतीत्याशङ्क्याह—**अभ्युपेयेति**। स्वतन्त्रस्यैकवाक्यस्याप्रतीतेः स्वतन्त्रं चाग्रहत्वनिरपेक्षमेकत्वं, यस्य द्रव्यान्तरस्य तस्याप्रतीतेर्ग्रहतत्वेनैकत्वविवक्षामभ्युपेत्य नैष्फल्योक्तिः।

वस्तुतस्तु वाक्यभेदापत्तेर्नैकत्वविवक्षा संभवतीत्याशयः। द्रव्यान्तरगतत्वेनैकत्वविवक्षानिरासमुपसंहरति—**अतश्चेति**। सम्मार्गस्यैकत्वांशेन योऽन्वयः तस्य द्रव्यविशेषनिष्ठतयाऽनवधारणेनेत्यर्थः। द्रव्यान्तरस्थत्वेन विवक्षाभ्युगमेऽपि न सिद्धान्तहानिरित्याह—**यद्यपि चेति**। अनेन प्राप्नोति हि प्रधानस्येति पूर्वार्द्धं व्याख्यातम्। प्राधान्यनैकत्वस्य क्रियान्वयपक्षे सर्वग्रहसम्मार्गापत्त्युक्तेः संख्योद्देशेन संस्कारविध्ययोगोक्त्यर्थत्वं दर्शयितुमाह—**तस्मादिति**। 'यूपं छिनत्त्यग्नीनादधीत्, चमसाध्वर्यून् वृणीत इत्या'दावप्राप्तोद्देश्यगताया संख्यायाः विवक्षाभ्युपगमात्तस्याश्च द्वितीयाविरोधापत्तेर्गुणत्वेन क्रियान्वया-

योगाद्यथासंख्योदेशेन छेदनादिसंस्कारो विधीयते, तथाऽत्रापि भविष्यतीत्याशङ्क्य यूपादेरनवगतसंख्यत्वेन परिच्छेदकसंख्यापेक्षत्वाद्विधेयत्वाच्च तत्परिच्छेदकत्वेन संख्याविध्युपपत्तेर्द्वितीयाविरोधात् क्रियान्वयायोगेऽपि संख्याविशिष्टयूपादिविशिष्टपृच्छेदनादिक्रियाविध्यन्यथानुपपत्तिकल्पितेन विधिना क्रियाविशेषणीभूतयूपविशेषणत्वेन संख्याविध्यगमात्संख्याविशिष्टयूपादेरुद्देश्यत्वेऽपि संख्याया नोद्देश्यतेति सूचनार्थं कश्चिदित्युक्ते विधेयत्वे यूपादिसंख्याया द्वितीयया संस्कार्यत्वापत्तेर्देवदत्तविष्णुमित्रा भोज्यन्तमित्यादौ वाऽनेकत्र लोकवेदयोर्दर्शनेन प्रत्येकं वाक्यसमाप्तेरदोषत्वात्कस्माद्यूपं छिनत्तीत्यादौ न संख्योद्देशेन संस्कारो विधीयतइत्याशङ्क्य, संख्यायाः स्वकीयगोचरे वर्गे लक्षणं स्वभाव एवैष इत्युक्तस्वभावोपपादनायोद्दिश्यमानानां पुनरवशीकृतत्वादिवार्त्तिकोक्तोपपत्तिस्तस्माच्छब्देन परामृष्टा। गुणभूतविवक्षा त्वित्युत्तरार्द्धं व्याचष्टे—**अथ त्विति**। वैरूप्याशयत्वेन विरोधोक्तिव्याख्यानायैकत्ववच्चेत्याद्युक्तम्।

प्रयोजनवत्तयैव ग्रहस्य प्राधान्यसिद्धेर्द्वितीयायास्तात्पर्ये नैष्फल्यापत्तेर्ग्रहस्यापि च क्रियान्वयसिद्धयै कारकत्वस्यावश्यप्रतिपाद्यत्वान्निर्विशेषस्य च सामान्यस्यापर्यवसानात्

सर्वे पाकादिसम्बन्धे ह्याकारस्तन्दुलादयः।

इत्यनेन च न्यायेन साधनत्वस्याप्युपपत्तेः साधनस्य चाङ्गत्वप्रसिद्धेरवैरूप्यायाङ्गतैव द्वयोर्द्वितीयार्थ इत्याशङ्कते—**तत्रेति**। ग्रहाङ्गत्वे तात्पर्याभावसूचनार्थस्तावच्छब्दः। साधनत्वेऽपि ग्रहस्य प्रासङ्गिकोपकारित्ववदनङ्गत्वादविद्यमानाङ्गत्वोक्तिः। शाब्दस्य च प्राधान्यस्यार्थता न युक्तेति परिहरति—**तत्रेति**। यदि तु कथंचित्सगुणभावः ततः पश्चादपि स एव विवक्ष्येत, न प्राधान्यमित्यादावित्यनेनोक्तम्। अशाब्दस्य प्राधान्यस्य शब्दक्रियानान्वयात्पश्चादपि शाब्दत्वाभ्युपगमापत्तेर्विप्रकर्षप्रसङ्गाच्छब्दात्सम्भवतः प्राधान्यस्यार्थत्वायोगमुपपादयन् श्लोकं व्याचष्टे—**सर्वैवेति**।

श्रुतिवशाद्यत्प्राधान्यङ्गम्यते, तद्यदि तावद्वास्तवत्वेन गृह्यते, ततः प्रागपि प्राधान्यमेव ग्राह्यम्, न गुणत्वम्। प्राधान्यासम्भवात्तु द्वितीयाश्रुतौ लक्षणाश्रयणे पुरोडाशकपालवत्प्रयोजनवत्त्वेऽपि गुणत्वस्यैव शास्त्रीयत्वात्पश्चादपि गुणभाव एव विवक्षित इत्यर्थः। असम्भवस्य वैरूप्याय काल्पनिकत्वात्सम्भवस्य च वास्तवत्वादविरोधमाशङ्क्याह—**युगपच्चेति**। विरोधपरिहारसम्भवेऽपि सम्भवासम्भवपरिग्रहनिमित्तस्यालोचनविक्षेपनिमित्तस्य च शब्दक्लेशस्यापरिहार्यत्वान्नैवं कल्पना युक्तेत्याशयः।

एतदेव विवृणोति—**प्रथमं हीति**। प्राधान्यस्याशाब्दत्वान्न शब्दक्लेशापत्तिरित्याशङ्क्याह—**पश्चात्तनमपि चेति**। शाब्दस्यार्थस्याशाब्दार्थान्वये प्रामाण्याभावेनान्वयसिद्धयै कल्प्यार्थवाचिशब्दकल्पनाहेतुत्वाच्छब्देनैव प्राधान्यं वाच्यमित्युक्ते, अनुपलब्धिविरोधेनास्मिन्वाक्येऽसावप्युच्चारित इत्येवं कल्पयितुमशक्यत्वात्सत्तामात्रेण च कल्पनस्य व्यवहारानौपयिकत्वेनऽनाशङ्क्यत्वात्केन रूपेण शब्दकल्पनेत्याशङ्क्य कल्प्यार्थवाच्यपि शब्दोऽस्मि-

न्वाक्ये व्याप्रियत इत्येवं कल्पनां सूचयितुं व्यापारशब्दे प्रयोक्तव्ये व्यापारस्यापि शब्दविशेषनिष्ठतया कल्पयितुम् अशक्यत्वात्, कल्प्यार्थाभिधानशक्तशब्दमात्रव्यापारकल्पना शक्तिशब्देन सूचिता। द्वितीयारूपस्य वा प्राधान्यवाचिनः शब्दस्येह श्रुतत्वेन शब्दान्तरकल्पना योगात्तस्यैव प्राधान्येऽपि, व्यापारा शब्दशक्तिशब्देन लक्षितः। एवञ्च गुणप्रधानत्वरूपानेकार्थव्यापारकल्पनानिमित्तो वैरूप्यलक्षणो वाक्यभेदो अपरिहार्य इत्याह—**अतश्चेति**। शब्दव्यापारं विना प्रयोजनवत्तामात्रेण प्राधान्यसिद्धयभ्युपगमेऽपि द्वितीयायास्तावदनुवादित्वेनापि स्वार्थवाचित्वसम्भवान्न गुणत्वलक्षणार्थता युक्तेत्याह—**किञ्चेति**। यथा विधीयमानं स्वार्थं प्राप्य लाक्षणिकार्थत्वेऽपि स्वार्थात्यागादित्यर्थः। श्लोकं व्याचष्टे—**यद्यपीति**। एवं च प्रत्येकत्वस्य गुणतामपि यदि द्वितीया लक्षयेत् ततो परमपि वैरूप्यं स्यादित्याह—**ततश्चेति**। प्राधान्यानानुवादोक्तेरभ्युपेत्य वादमात्रतां द्योतयितुमाह—**श्रुत्या चेति**।

नन्वैकत्वस्य निष्प्रयोजनप्राधान्यायोगात्क्रियान्वयसिद्धयै गुणत्वस्यावश्यलक्षणीयत्वावगतेवैरूप्यपरिहाराय ग्रहप्राधान्यस्यार्थत्वकल्पनोचिता। त्याज्येत्यर्थः। अतो यद्येकत्वस्य विवक्षाभ्युपगन्तव्या, ततः प्राधान्येनैव सा निरस्तेत्याह—**तस्मादिति**। नन्वेवं प्राधान्येन गुणत्वेन चैकत्वस्य क्रियान्वयनिरासात्सिद्धान्ते समाहितेऽपि, भाष्यं कथं समाधेयमित्याशङ्कयाह—**भाष्यमपीति**। क्रियान्वयासम्भवोक्तिभाष्यमेतेषु प्रत्येकवाक्यसमाप्त्यनेकविधवैरूप्यलक्षणेषु मनसिकृतेषु सत्संयोज्यं वाक्यभेदोक्तिभाष्यं चैतेष्वेव वाक्यभेदेषु विषयभूतेषु योज्यमित्यावृत्त्या निमित्तविषययोः सप्तम्यभ्युपगमेन व्याख्येयम्—**तथा हि**। एकत्वस्यापि ग्रहवत्प्राधान्ये प्रत्येकं वाक्यसमाप्तेर्ग्रहनिरपेक्षस्यैकत्वस्य सम्मार्गः स्यात् स चाशक्यः, द्रव्यान्तरे च क्रियमाणः सर्वेषामेकवचनान्तशब्दचोदितानां कार्यः। स च विकल्पेन कस्यचित्क्रियमाणोऽन्यगतस्यैकत्वस्य चोपकरोति। समुच्चितानां तु क्रियमाणः संख्यान्तरोपजननान्न कस्य चिदेकत्वस्योपकरोति। गुणत्वे त्वमूर्त्तत्वेन प्रमाणान्तरतो निष्पादकत्वानवगमाच्छब्देनैव गुणत्वं वाच्यम्। तत्र च द्वितीयाविरोधः, गुणत्वलक्षणार्थत्वे तु द्वितीयायाः प्रयोजनवत्त्वावगतेः प्रधानस्य ग्रहस्यापि गुणत्वापत्तिरित्युभयथापि क्रियान्वयासम्भवभाष्यं योज्यम्।

वाक्यभेदभाष्यं च द्वितीयया प्रधानभूतं ग्रहमुद्दिश्य सम्मार्गो विधीयते यदि, तथाप्येकत्वस्य गुणत्वेनान्वयोऽपरो विधीयते। ततो गुणप्रधानार्थकः स्यादित्याह शङ्कते—**ननु चेति**। षष्ठ्याग्नेस्तृणद्वारापचयान्वयावगतेस्तस्य च विशेषान्तरायोगेनाङ्गाङ्गिलक्षणान्वयविशेषनिष्ठत्वावसाएकोऽङ्गकोऽङ्गीत्यपेक्षायां वाग्नेः प्रयोजनवत्त्वात्प्रधानतेत्याह—**यद्यपि चेति**। यथा 'मध्यात्पूर्वार्द्धाच्चेति' पञ्चम्यविवक्षितापादानरूपगुणार्था हविषश्च कार्यार्थत्वेन प्रयोजनवत्त्वात्तत्प्राधान्यं लक्षयन्ती प्रवर्त्तते, तथेयमप्यविवक्षितगुणार्थाऽग्नेः प्राधान्यं च लक्षयन्ती प्रवर्त्तते इत्यर्थः। अतोऽग्निवाक्येऽपि वैरूप्यलक्षणवाक्यभेदाः शक्या योजयितुमित्याह—**ततश्चेति**। प्रत्येकवाक्यसमाप्तिस्त्वग्न्येकत्वप्राधान्ये त्वनाशङ्कयात्वेनानापत्तेर्न योजिता।

ननु तृणानां द्वितीयायोगेऽप्यपचयं प्रत्यप्रतिपाद्यत्वे प्राधानान्याद्विवक्षितसंख्यत्वेनाप्राधान्याद्विवक्षितसंख्यत्वेन त्रयाणामेवापचयावगतेः शेषतृणानपचयेन तृणसंसर्गादापत्स्यमानस्योल्मुकबहिःपातस्यापरिहार्य्यतयाग्नेस्तृणापचयसंस्कार्यत्वायोगान्न प्राधान्यमित्याशङ्क्याह—**तृणानीति**। विभागरूपत्वेनापचयस्य संयोगपूर्वकतया प्राक्सिद्धसम्बन्धापेक्षत्वादपचेयानान्तृणानां सिद्धत्वेनान्वयादप्राधान्येऽपि देशादिवदुद्देश्यतोपपत्तेरविवक्षितसंख्यत्वात्सर्वतृणापचयादग्निसंस्कारत्वोपपत्तिरित्याशयः। पूर्वोक्तानां वाक्यभेदानामत्रापि योजनीयत्वं व्याख्येयत्वोक्त्योक्तम्। प्राधान्याभावे गुणप्रधानत्ववैरूप्याभावात्कथं पूर्वोक्तवाक्यभेदयोजनेत्याशङ्क्य, गुणप्रधानत्ववैरूप्याभावेऽपि संख्यासंख्येययोर्द्वयोरुद्देश्यत्वेन क्रियान्वये प्रत्येकं वाक्यसमाप्तिलक्षणः, संख्यायास्तूपादेयत्वेनान्वयेऽनुपादेयोपादेयत्ववैरूप्यलक्षणो वाक्यभेदः शक्यो योजयितुमिति परिहारं बहुविषयत्वद्योतनायोदाहरणान्तरनिष्ठतया दर्शयति—**तथेति**।

भेदनस्यैव निमित्ततैकत्वस्यैव चेति नियोगपक्षे भेदनस्य निमित्ततैकत्वस्य वेति विकल्पपक्षे वाक्यभेदाभावादन्योन्यानन्वयमात्रोक्तिः। प्रत्येकोक्तिश्चान्यानपेक्षत्वमात्राशया। समुच्चयस्य त्वन्योन्यानपेक्षत्वेऽप्येकनिमित्तत्वान्वयमात्रेणोपपत्तेर्वाक्यभेदापादकतापि। सम्बन्धादिपक्षेषु प्रत्येकसमाप्तचनापत्तेरादिशब्देनान्योन्यविशिष्टयोर्द्वयोः समुच्चयपक्षः सूचितः। पूर्वशब्देनोपादेयानुपादेयत्ववैरूप्यमुक्तमिति नानारूपत्वोक्त्या व्याख्यातम्। तस्य विरुद्धत्वोक्तिः सकृदुच्चारणावृत्त्या वाक्यभेदापादनार्थेति सूचनायैकवाक्यत्वोक्त्या सकृदुच्चारणोपलक्षणम्। भिन्ने जुहोतीत्यादिषु वचनाविवक्षेत्यन्वयः।

एवमेतदेकत्वं ग्रहस्य न कचिदुपकारं करोति, न सम्मार्गस्येति भाष्यं प्रधानभूतस्यापि ग्रहस्येयत्तावधारणेन, संख्याया ग्रहस्य न कञ्चिदुपकारं करोति न सम्मार्गस्येति भाष्यं प्रधानभूतस्या ग्रहस्येयत्तावधारणेन संख्याया ग्रहोपकारित्वसम्भवादनङ्गस्थितानामपि च प्रणीताधर्माणामुपकारिस्थितत्वमात्रेण क्रियोपकारित्वदर्शनाद् ग्रहस्य च सम्मार्गोपकारित्वसद्भावात्तत्परिच्छेदकत्वेनैकत्वस्य यजमानसंस्काराणां यागोपकारित्ववत्सम्मार्गोपकारिपपत्तेरयुक्तमाशङ्क्य 'दशैतानध्वर्युः प्रातः सने ग्रहान् गृह्णाती'त्यादेः प्रमाणान्तरादेव विज्ञातसंख्यानपेक्षत्वान्नैकत्वस्य ग्रहोपकारित्वम्, तद्द्वारा वा सम्मार्गोपकारित्वं सम्भवतीति भाष्याशयं सूचयितुमाह—**सत्या चेति**।

यद्वोद्देश्यविशेषणस्याविवक्षितत्वेऽष्टवर्षब्राह्मणोपनयनादिविधावुद्देश्यब्राह्मणादिविशेषणमष्टवर्षत्वादिः, अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीत्यत्र चोद्देश्यामावास्याविशेषणमपराह्णः, प्राचीनप्रवणविधौ चोद्देश्यप्रवणविशेषणं प्राचीनत्वं यावज्जीवविशेषणं सामग्र्याद्यपि न विवक्ष्येत, ब्राह्मणसुरापानादिनिषेधे चोपादेयब्राह्मणादिविशेषणं लिङ्गादि विवक्ष्येतेत्याशङ्क्य निरासार्थोऽयं ग्रन्थः। आकाङ्क्षाधीनत्वाद्विशेषणविवक्षाया ब्राह्मणादेश्चोपनयनादावुद्देश्यत्वेऽप्यन्यतोऽगवगतरूपत्वेन विशेषणाकाङ्क्षत्वाद्विशेषणविवक्षा, निषेधे चोपादेयत्वेऽपि ब्राह्मणादेरनुवाद्यत्वेन प्राप्तस्यैव निषेधान्वयाद्विशेषणस्यानाकाङ्क्षितत्वेनाविवक्षायुक्तेत्याशयः।

एवं तर्ह्युद्दिश्यमानस्य किं संख्या विवक्ष्यते, नेति संशयोपन्यासो न युज्येतेत्याशङ्क्याह **सा चेति**। विधेयक्रियानुष्ठानार्थत्वेनापाद्यत्वलक्षणोपादेयत्वाभावेऽपि प्रतीक्ष्यत्वलक्षणोपादेयता ब्राह्मणामावास्यादिषु विवक्षिता। उपनयनपितृयज्ञाद्यनुष्ठानकाले हि ब्राह्मणामावास्यादेर्नियमेन प्राप्तत्वापादकस्य प्रकृतापूर्वसाधनत्वस्याभावात्स्वकालाप्राप्ते च ब्राह्मणादौ तदन्वितोपनयनाद्यनुष्ठानायोगात् ब्राह्मणादिसिद्धवत्कारेणोपनयनादिविधानाद् ब्राह्मणादेस्तत्कालापाद्यत्वायोगेऽपि स्वतः सिद्धस्य प्रतीक्ष्यतावश्याभ्युपगन्तव्या ग्रहादेस्तूपकृतापूर्वसिद्ध्यर्थमुपात्तत्वेन सम्मार्गादिकाले नित्यप्राप्तेर्निषेधस्य च प्राप्तविषयत्वनियमान्निषेधकार्यायाश्च निवृत्तेः प्रवृत्तिपूर्वकत्वनियमात्सुरापानादिनिवृत्तिकाले तत्कारिणो ब्राह्मणादेर्नित्यप्राप्तेरप्रतीक्ष्यत्वादुद्देश्यत्वं विवक्षितम्। कीदृक् ब्राह्मणादिरुपनयनाद्यनुष्ठानार्थं प्रतीक्षितव्ये इत्युपादेयेषु विशेषणाकांक्षोत्पत्तेः उद्श्येषु ग्रहादिष्वनुत्पत्तेरनाकाङ्क्षितत्वेनोद्देश्यविशेषणास्याविवक्षाव्युत्पादनायोद्दिश्यमास्य किं संख्या विवक्ष्यते, न वेति संशयोपन्यासो युक्त इत्याशयः।

उद्देश्येषु विशेषणानाकाङ्क्षामुपपादयति—**उद्दिश्यमानेषु हीति**। प्रमाणान्तरावगतत्वात्संख्यानाकाङ्क्षायां प्रकृतापूर्वसाधनस्य प्रकरणात्संस्कार्यत्वावगतेरुद्देश्यस्वरूपस्यापि प्रमाणान्तरावगतत्वात्तत्समर्पकप्रातिपदिकार्थग्रहत्वान्वयस्यापि नाकाङ्क्षा स्यादित्याशङ्क्य, प्रातिपदिकार्थानन्वये सम्मार्गस्य संस्कारत्वासिद्धेः प्रकृतापूर्वसाधनस्य संस्कार्यत्वावगत्ययोगादुद्देश्यस्वरूपानवगतेरुद्देश्यं च विना निष्फलत्वापत्तेर्विध्ययोगात् तत्समर्पकप्रातिपदिकार्थान्वयाकाङ्क्षोपपादनार्थं प्रातिपदिकार्थेत्युक्तम्। प्रकृतापूर्वसाधनत्वेऽत्रगतसंख्यस्यापि ग्रहादेः सम्मार्गाद्यन्वयेऽनवगतसंख्यत्वात्सख्याकाङ्काक्षा भविष्यतीत्याशङ्क्याह—**अत इति**।

प्रातिपदिकार्थान्वितप्रकृतापूर्वसाधनमात्रस्य सम्मार्याद्यन्वयावगतेर्विशेषणानाकाङ्क्षा अतःशब्देनोक्ता। अनेन चाविशिष्टं हि लक्षणमिति सूत्रावयवव्याख्यानस्य नैतदस्तीत्येवमादिभाष्यकृतस्योपसंहारार्थं तस्मान्नैतदितिभाष्यं व्याख्यातम्।

कुत इति भाष्येण सर्वसंस्कार्यत्वहेतुप्रश्नपूर्वं विहितस्तु सर्वधर्मः स्यादिति सूत्रोक्तहेतुद्वयमनुकृष्टं तल्लक्षणत्वादित्यनेनैव हेतूत्वर्हंनाकाङ्क्षणादयुक्तमाशङ्क्य, लक्षणत्वादित्यनेन ग्रहत्वादेर्विधेयसम्मार्गाद्यन्वयापूर्वसाधनलक्षणत्वेन सम्मार्गान्वयितया विधेयत्वाभागात्तद्विशेषणत्वेन[1] विधिर्भविष्यतीत्याशङ्कायाः संस्कारान्वयितया विध्यनुपपत्तेः, शुद्धविधौ च विशेषणस्याविधेयत्वापत्तेर्न्नापूर्वसाधनविशेषणत्वेनाप्येकत्वादेर्विधिः सम्भवतीत्येवं निरासायैतद्धेतुद्वयानुकर्षणमिति सूचनायाविधेयत्वार्थतया लक्षणेत्वोक्ति व्याख्यातुमाह—**सर्वेति**। विधेयत्वनिवृत्यर्थो मात्रशब्दः। ततश्च तद्विशेषणस्य सुतरामविधेयत्वादनुष्ठानान्वयित्वेना-

---

१. तद्विशेषणस्य सुतरां विधेयत्वं न संभवतीत्युक्ते ग्रहादिस्वरूपविशेषणत्वेनैकत्वादेर्विध्ययोगेऽपि ग्रहत्वादिलक्षितापूर्नसाधनविशेषणत्वे विधिर्भविष्यतीति २ पु० पा०।

नादृत्यतेत्याशयः। लक्षणत्वोक्तेरविधेयार्थत्वप्रकटनायानाऽदृत्यतानङ्गत्वोक्त्या लक्षिता। लक्षणस्यानादृत्यतां लौकिकदृष्टान्तेन द्रढयति—**यथेति**। ग्रहत्वस्यापि तद्वदनादरापत्तेश्च चमसेष्वपि सम्मार्गः प्रसज्येतेत्याशङ्क्याह—**तत्रेति**।

ग्रहादेर्भक्षणत्वेन विना तल्लक्षितेष्वपूर्वसाधनेषु सम्मार्गाद्यनुष्ठानासिद्धेर्लक्षणत्वेन ग्रहाद्याद्रियते। ततश्चानुष्ठानान्वयित्वेनाऽनादरेऽपि चमसेषु सम्मार्गान्वयापूर्वसाधनलक्षण-ग्रहत्वाद्यभावान्न सम्मार्गाद्यनुष्ठानापत्तिरित्याशयः। लक्षणत्वेनैवतर्ह्येकत्वादिविशिष्टमेव ग्रहादि गृह्यतामित्याशङ्कानिरासार्थो मात्रशब्दः। यदीत्यादि भवितव्यमित्यन्ते शङ्काभाष्ये बहुषु विवक्षितेष्वित्येनं बहुत्वस्याप्यविवक्षितत्वादयुक्तमाशङ्क्यैकवचनायोगोक्तिशैषवात् स्वार्थतात्पर्याभावेन व्याख्यातुमाह—**नन्विति**। 'उच्यत इत्यादिपरिहारभाष्यं व्याचष्टे—**तत्रेति**। एकवचनस्य प्रमादपाठापत्तेरेतत्परिहारान्तरार्थम् 'अपि चेति भाष्यं व्याचष्टे—**तेनेति**। कारकसम्बन्धोऽपीत्यपिशब्दसूचितं प्रातिपदिकानुग्रहार्थत्वं व्याख्यातम्। एव-मप्येकवचननियमोऽनर्थक इत्याशङ्क्य बहुत्वविधौ कपिञ्जलाधिकरणवक्ष्यमाणत्रित्वनियम-दृष्टान्तेनार्थवत्तामाह—**प्रथमं वेति**।

पुरोडाशाविति द्विचननियमस्तर्हि किमर्थ इत्याशङ्क्याह—**यस्येति**। पौर्णमास्वा-माग्नेवाग्नीषोमीयरूपस्य सान्नायरहितायाञ्चामावास्यामाग्नेयैन्द्राग्नरूपस्य पुरोडाशद्वय-स्याधिकृतत्वाद्द्विवचनमित्येतद् द्रढयितुम्यस्योभयं हविरार्त्तिमार्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदि'त्यार्त्तिगमनसम्बद्धस्य हविषो निमित्तत्वेनोद्देश्यत्वात्, दृविष्ट्वस्य च प्रकृतापूर्व-साधनलक्षणत्वेन प्रतीतिमात्रौपयिकत्वाद्ग्रहवदविवक्षितविशेषणत्वसिद्धौ अभ्युभयपदानर्थक्या-पत्तेरुभयत्वस्योद्देश्येऽन्तर्गत्यभ्युपगमेन विवक्षां पूर्वपक्षयित्वा, अधिकारिकोभयत्वाभ्युपगमेनो-भयपदानर्थक्यपरिहारः षष्ठाधिकरणे वक्ष्यमाणो तृष्टान्तितः। पुरोडाशद्वयसद्भावाद् द्विव-चनस्य सालम्बनत्वेऽपि नियमः किमर्थः इत्याशङ्क्याह—**अन्यथा हीति**। यथाग्नावैष्णव-मेकादशकपालं निर्वपे'त्सरस्वतीमाज्यस्य यजेतेति यागद्वये विहितेऽमावास्यायामुपांशु-याजपक्षे तद्विकारे सारस्वते वेदानन्तरवेदिककरणपञ्चहोत्राभिमर्शनवृधन्वत्याज्यभागानु-वाक्याप्राप्तेः, अग्नीषोमीयविकारे चाग्नावैष्णवे हविरधिवापनानन्तरवेदिकरणचतुर्होत्राभि-मर्शनवार्त्रघ्न्यानुवाक्याप्राप्तेरग्नीषोमीयविकारे चाग्नावैष्णवे प्रसज्यत[१] इति पूर्वपक्षयित्वा, 'मुख्यं वा पूर्वचोदनाल्लोकवदि'ति द्वादशाधिकरणसूत्रेण मुख्यत्वादाग्नावैष्णवः कल्पः सारस्वते प्रसज्यतइति वक्ष्यते। तथा मुख्यत्वादाग्नेयस्यैव पुरोडाशस्य क्षीणस्य निमित्त-त्वेन ग्रहणमिति भ्रान्तिनिवृत्त्यै नियम इत्याशयः। 'अपि चेत्यादिभाष्यं विधायकाभिधान-श्रुत्यवगतक्रियान्वयविरोधेन पदश्रुत्यवगतद्रव्यान्वयबाधादयुक्तमाशङ्क्य, द्रव्यान्वयाभ्युप-गमेऽपि सिद्धान्ताव्याघातोक्तिमात्राशयत्वेन व्याचष्टे—**अपि चेति**। ग्रहस्याप्यनेकसंख्यत्वा-न्नैकत्वेन विशेषणता युक्तेत्याशङ्क्याह—**जातीति** ॥ १४ ॥

---

१. अनुवाक्याप्राप्तेरनियमेनैकस्य कल्पोऽन्यत्र प्रसज्यत इ० २ पु० पा०।

भा० प्र०—पूर्वपक्षियों का यह कहना कि ग्रहगत एकत्व की विवक्षा होने से एक ही ग्रह का सम्मार्जन होगा, यही कर्तव्य है—यह ठीक नहीं है, कारण, आकृति अधिकरण में कहे गये नियमों के अनुसार यह अवगत है कि ग्रह पद ग्रहत्व जातिका वाचक है, जाति का संस्कार सम्भव नहीं है, अतः, जाति के आश्रय व्यक्ति का ही संस्कार करना होगा। इसलिए, "ग्रहं" यह पद जात्याश्रय व्यक्ति का लक्षण है, इसीलिए सूत्र में कहा गया है "लक्षणत्वात्" सभी ग्रह व्यक्ति एकत्व जाति का आश्रय होने से दशग्रहों में किसी एक ग्रह का सम्मार्जन होगा, अन्य का नहीं कहा जा सकता है। इसलिए सूत्र में कहा गया है "अवशिष्टं हि लक्षणम्" यदि यह कहा जाय कि एकवचन का प्रयोग होने से द्वितीय तृतीय आदि ग्रहों का संस्कार भी कर्तव्य है—यह कैसे अवगत होता है? एकवचन एकत्व का वाचक है, किन्तु, वह द्वितीय आदि का प्रतिषेधक नहीं है। कारण, इस स्थल में ग्रह के उद्देश्य से सम्मार्जन ही विहित होता है, किन्तु सम्मार्जन के साथ एकत्व का सम्बन्ध भी विहित नहीं होता है, अतः, एकत्वविशिष्ट एक ग्रह का सम्मार्जन होने पर प्रत्येक ग्रह का ही सम्मार्जन होगा, कारण, प्रत्येक प्रधान के अनुरोध से गुण की अर्थात् आवृत्ति करने का नियम है, एकत्व की विवक्षा की जाती है तो वाक्यभेद होगा। अतः "सर्वेषां वा" सभी ग्रहों का सम्मार्जन कर्तव्य है।

"सर्वेषां" = सभी का अर्थात् सभी ग्रहों का सम्मार्जन कर्तव्य है, "वा" = पूर्वपक्ष का निरासार्थक है, "लक्षणत्वात्" = क्योंकि, ग्रह आदि पद व्यक्ति का लक्षक है, "अविशिष्टं हि लक्षणम्" = लक्षण इस स्थल में अविशिष्ट अर्थात् विशेष विधि से व्यक्ति-विशेष में व्यवस्थित नहीं है॥ १४॥

## चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ॥ १५ ॥

**शा० भा०—अथ यदुक्तं यथा, पशुमालभेत इत्येक एव पशुः पुंपशुश्चाऽऽलभ्यते, एवमिदमपीति। अस्त्यत्र वैपरीत्यम्। इह ग्रहार्थः संमार्गः। तत्र पुनर्यागार्थः पशुः। किमेवं सति भवति? यो यागार्थं परिच्छिनत्ति, स यागस्योपकरोति। अपरिच्छिन्नेन न शक्यो यागः कर्तुमिति। न तु ग्रहेण केनचिद्विशिष्टेन संमार्गः कर्तव्यो यद्ग्रहं विशिंषत्संमार्गस्योपकुर्यात्। पशोश्चैतदेकत्वं यागं प्रत्युपदिश्यते।**

**ननूक्तं प्रातिपदिकार्थगतं स्वमर्थं विभक्तिः श्रुत्यैवाभिवदतीति। याग एतद्वाक्येन विधास्यति। तत्र[1] वाक्याच्छ्रुतिर्बलीयसीत्युक्तम्। सत्यम्, यत्र श्रौतोऽभिसंबन्धो विवक्ष्यते। अविवक्ष्यमाणे च वाक्यावगतः सन्न[2] पर्युदसितव्यो भवति। तस्मादेकः पुंपशुश्चाऽऽलभ्यत इति। ग्रहैकत्वं न संमार्गस्योपकरोतीति, न ग्रहं**

१. ब० ननु।　　२. ब० संभवन्न।

**शक्नोति विशेष्टुम्। तस्मादविवक्षितमिति ॥ १५ ॥ क० आ० नि० ॥ इति सप्तमं ग्रहैकत्वाधिकरणम् ॥ ७ ॥**

त० वा०—पशौ पुनर्द्रव्यस्य निष्प्रयोजनत्वात्सक्तुवदविवक्षितेप्सितार्थया द्वितीयया कारकसामान्यं लक्षयित्वा तद्विशेषाकाङ्क्षायां सत्यां भूतभव्यसमुच्चारणद्रव्यकर्मसंयोगन्यायेन करणत्वेन गुणभावेऽवगमिते सर्वेषामेव जातिद्रव्यसंख्यालिङ्गानां भावनां यागं च प्रत्युपादीयमानत्वादवैरूप्येण विशिष्टैकभावनाविधानादर्थापत्तिलभ्यविशेषणविध्यन्तराविर्भावाच्चैकवाक्यत्वासिद्धिः ॥१५॥

इति सप्तमं ग्रहैकत्वाधिकरणम् ॥७॥

न्या० सु०—परार्थत्व-व्याख्यार्थस्य यागार्थः पशुरिति भाष्यावयवस्य पशोरपि द्वितीयया प्राधान्यावगमादयुक्तत्वशङ्कां निरस्यन्सूत्रं व्याचष्टे—**पशौ पुनरिति।** भव्यस्य भावकापेक्षणाद्, भूतस्य च भावकत्वोपपत्तेर्भूतस्य भव्यार्थत्वे दृष्टार्थत्वम्, भूतस्य तु भव्यानपेक्षणाद्द्रव्यस्य भूतार्थतायामदृष्टार्थत्येकस्यैव न्यायस्य भूतभव्यसमुच्चारणे भूतम्भव्यायोपदिश्यत इति भाष्यारूढत्वं 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्ध' इति सूत्रारूढत्वश्च द्वयोक्त्या सूचितम् ॥ १५ ॥

इति सप्तमं ग्रहैकत्वाधिकरणम्

**भा० प्र०**—पूर्वपक्षी ने "पशुना यजेत" इस वाक्य से विहित पशु के एकत्व का उदाहरण वह सङ्गत नहीं है, कारण, "चोदिते यथाश्रुति प्रतीयते" विधेय स्थल में लिङ्ग एवं संख्या आदि श्रुत विषय भी विवक्षित है। अतः, इस स्थल में पशु विधेय होने से उसका एकत्व विवक्षित है। कारण, "परार्थत्वात्" = यह परार्था अर्थात् दूसरे के उपकार के लिए है, इस स्थल में पशु से याग का उपकार साधित होने से पशु एक या अनेक वह स्त्री या पुरुष—इसका निर्णय होना आवश्यक है, अन्यथा उसके द्वारा याग का उपकार सम्भव नहीं है। इस स्थल में विशिष्ट विधि होने पर एकत्व और पुंस्त्वरूप विशेषण अर्थापत्ति प्रमाण से विहित होने से वाक्यभेद नहीं होता है। दूसरा पक्ष स्वीकार करने पर "ग्रहं सम्मार्ष्टि" इस स्थल में ग्रह उद्देश्य होने से उससे सम्मार्जन का कोई भी उपकार साधित नहीं हो सकता है, इसलिए, ग्रह एक या अनेक यह न जानने पर भी कोई हानि नहीं है, ग्रह उद्देश्य है विधेय नहीं है, अतः "ग्रहं सम्मार्ष्टि" यह विशिष्ट विधि नहीं है, विशिष्ट विधि न होने से ग्रह का एकत्व वाक्यभेद के विना विहित नहीं हो सकता है, इसलिए, सभी ग्रहों का सम्मार्जन विहित है।

इसी प्रकार अग्निहोत्र प्रकरण का "आग्नेयस्तृणान्यपरिचिनोति" इस विधि में स्थित 'अग्नि का' एवं दर्शपूर्णमास प्रकरण को "पुरोडाशं पर्यग्नि करोति" इस विधि वाक्यस्थ 'पुरोडाश का' एकत्व विवक्षित नहीं है।

"चोदिते" = विहित पशु आदि स्थलों में "तु" = किन्तु, "परार्थत्वात्"=परार्थता होने से अर्थात् यतः विधेय वस्तु परार्थ=दूसरे के लिए है, अतः, "यथाश्रुति"=जैसा श्रुत रहता है अर्थात् श्रुति में जैसा कथित रहता है वैसा ही "प्रतीयते"=प्रतीत होता है ॥१५॥

यह सप्तम ग्रहैकत्वाधिकरण सम्पूर्ण हुआ।

## [८] संस्काराद्वा गुणानामव्यवस्था स्यात् ॥१६॥ पू०

शा० भा०—अस्ति ज्योतिष्टोमः। तत्र श्रूयते 'दशापवित्रेण ग्रहं संमार्ष्टि' इति। तत्रैषोऽर्थोऽधिगतः[1] सर्वे ग्रहाः संमार्जितव्या[2] इति। इदमिदानीं संदिह्यते किं चमसा अपि संमार्ष्टव्या, उत नेति। किं तावत्प्राप्तम्? चमसाद्यपि[3] सर्वं संमार्ज्यमिति[4]। कुतः? संयोगतोऽविशेषात्प्रकरणाविशेषाच्चेति। यथैव हि ग्रहाणामपूर्वसम्बन्ध, एवं चमसानामपि यथैव च ग्रहा अस्मिन्प्रकरणे, एवं चमसा अपि। तस्मात्सर्वत्र संमार्गः।

ननु ग्रहाः श्रूयन्ते? ते चमसानां निवर्तका भविष्यन्ति। उच्यते। प्रदर्शनार्थं ग्रहग्रहणं भविष्यति। ग्रहादि सोमपात्रम्। यस्मिन् गृह्यमाणः सोमो व्यवसिच्येतेत्येवमाशङ्कयते[5], तत्सर्वं संमार्जितव्यम्[6]। यथा भोजनकालो वर्तते, स्थालानि संमृज्यन्तामित्युक्ते, यानि यानि भोजन उपयोगमर्हन्ति, तानि तानि सर्वाणि संमृज्यन्ते। स्थालग्रहणं लक्षणार्थमिति गम्यते। एवमिहापि द्रव्यमिति।

उच्यते। लोकेऽर्थलक्षणः संव्यवहारः। येन येनार्थः संमृष्टेन, उक्तः, अनुक्तो वा, स संमृज्येतैव। इह तु वेदे शब्दलक्षणः। शब्दश्च ग्रहस्य संमार्गमाह। तत्र किमर्थं श्रुतौ संभवन्त्यां ग्रहशब्दो लक्षणया कल्प्यते। उच्यते। संमार्ष्टीति संमार्गं पुरुषप्रयत्नं विधातुमेष शब्दः शक्नोति श्रवणेनैव। ग्रहसंबन्धे तु वाक्येन। श्रुतिश्च वाक्याद्बलीयसी। तस्माल्लक्षणया ग्रहशब्दो वर्ण्यते, न यथाश्रुत इति। तेन यो यः संमार्जनसंस्कारार्हः[7], स स संमार्जितव्यः[8]। न ग्रहेष्वेव व्यवतिष्ठेत, एवंजातीयको गुण इति ॥१६॥ पूर्व० ॥

### अथाष्टमं चमसाधिकरणम्

त० वा०—एकत्ववदेव ग्रहत्वस्यापि प्रदर्शनार्थत्वाच्चमसेष्वपि संमार्ग इत्युपन्यस्य प्रदर्शनार्थत्वे प्रमाणाभावा ावयेन च संबन्धोपादानाद् ग्रहादवच्छिद्य

---

१. ब० तत्रैषोऽर्थः समधिगतः। २. ब० संमार्जयितव्याः।
३. ब० चमसाद्या। ४. ब० संमार्जयितव्यं।
५. ब० आशङ्का। ६. ब० संमार्ज्जयितव्यम्।
७. ब० संस्कारमर्हति। ८. ब० संमार्ज्जयितव्यः।

श्रुत्या केवलसंमार्गविधानात्पूर्वपक्षः परिगृहीतः। इह त्ववघातादिवदेव भङ्गोद्धारौ कर्तव्यौ।

नन्वेवं सति तेनैव गतत्वादधिकरणमेव नाऽऽरब्धव्यम्। सत्यं नाऽऽरभ्येत, यदि ग्रहाधिकरणेनाऽविवक्षाकालुष्यबुद्धिर्न[1] स्यात्। [2]एवं त्वेकत्वविवक्षासंत्रासितः सर्वमेवाऽविवक्षितं मन्यते।

अथवाऽऽग्नेयाद्यपूर्वाणां कर्मभेदाद् भेदे सति युक्ताऽवघातादीनां व्यवस्था। ज्योतिष्टोमकर्मणस्त्वेकत्वादेकापूर्वसाधनयोर्ग्रहचमसयोर्धर्मसंकर इत्यभिप्रायः। संस्काराद्वेति चापूर्वसाधनप्रयुक्तत्वेन प्रतिप्रधानावृत्तिक्रियोपपादनार्थम्॥ १६॥

**अथाष्टमं चमसाधिकरणम्॥ ८॥**

न्या० सु०—यथाश्रुतं तावत्पूर्वपक्षभाष्यं व्याचष्टे—**एकत्ववदेवेति।** ग्रहत्वस्यापीत्यनेन प्रदर्शनार्थमित्यादि द्रष्टव्यमित्यन्तं भाष्यं पराभिमतपूर्वपक्षार्थत्वेन व्याख्याय, प्रदर्शनार्थत्वे इत्यनेनोच्यत इत्यादिकल्प्यत इत्यन्तनिरासार्थत्वेन व्याख्याय, वाक्येन चेत्यनेन स्वाभिमतपूर्वपक्षार्थतयोच्यते सम्मार्ष्टीत्यादिभाष्यशेषो व्याख्यातः। श्रुत्या वाक्यबाधाभ्युपगमे लक्षणया ग्रहशब्दवर्णनोक्तिरयुक्तेत्याशङ्क्य, वाक्येन ग्रहान्वयाभ्युपगमे स्वरूपेणैवान्वयापत्तेस्तद्बाधेन शुद्धसम्मार्गविधिमभ्युपगम्य विच्छिन्नस्य ग्रहशब्दस्य का गतिरित्यपेक्षिते सम्मार्गस्य कैमर्थ्याकाङ्क्षायां सोमग्रहणानन्तरकालत्वेन योग्यतयाऽवसिक्तसोमनिर्हरणार्थत्वावसायात्सोमस्य संस्कार्यत्वेनावगतस्य स्पष्टीकरणायोपलक्षणार्थतया ग्रहशब्दस्य गतिसूचनार्थो वाक्येन वेत्यवयवः। शुद्धसम्मार्गविधानात्पूर्वपक्षपरिग्रहे तेषामर्थाधिकरणोत्तरानारभ्यतोपपादिता। ननु पदस्य केवलाप्रयोगित्वात्पदान्तरान्वये च श्रुतिबाधस्य वाक्याधिकरणे परिहृतत्वाद् ग्रहादाछिद्य केवलसम्मार्गविधिः पूर्वपक्षयितुमशक्य इत्याशङ्क्याह—**इह त्विति।** यथा बाढं युक्ता अवघातादयस्तु पदार्था विधीयन्ते श्रुत्या, वाक्येनैषां व्रीह्यादिसंयोग इति तेषामर्थाधिकरणसन्देहोपपादनभाष्याद्यथाश्रुतप्रतीयमाने शुद्धावघातादिविधौ न त्वेतद्युक्तमिवेत्यादिवार्त्तिकेनाक्षेपं कृत्वा विधीयतेऽवघातादिः श्रुत्या व्रीह्यादिसङ्गत इत्यादिवार्त्तिकेन बाढमवघातादयो व्रीह्यादिसंयुक्ताः श्रुत्या विधीयन्ते, किं त्वपूर्वसाधनांशलक्षणात्केन वाक्येनैषां समीहितापूर्वसाधनभूतेन व्रीह्यादिना योगो, न स्वरूपेणेत्येवं व्याख्यया परिहारः कृतः। तथेह सम्मार्ष्टीतिविधि शब्दोऽनादृत ग्रहत्वग्रहशब्दोपलक्षितापूर्वसाधनमात्रान्विते सम्मार्गे पुरुषेच्छायोनिकं प्रयत्नं विधातुं पुरुषार्थपर्यवसायित्वस्वभावापादकाप्रवृत्तप्रवर्त्तनात्मकविधिश्रवणेनैव शक्नोति आवृतग्रहत्वग्रहशब्दान्वयात्मकेन तु वाक्येन सम्मार्गस्य ग्रहत्वसम्बन्धं विधातुं शक्नुयात्। ततश्चापूर्वसाधनमात्रान्वयेन पर्यवसिता श्रुतिर्वाक्यीयविशेषान्वयं बाधते। तस्मादपूर्वसाधनमात्रलक्षणमात्रग्रहशब्दो वर्णनीयः। तेन चमसेष्वप्यपूर्वसाधनत्वविशेषात्सम्मार्गसिद्धिरित्येवं व्याख्यया

---

१. क० ग्रहादिकरणवत्। २. क० अयं।

कार्य इति परिहारेऽत्यन्तमवघातादि—साम्याभावेऽपि कथं चित्साम्यादवघातवद्भवोक्तिः। भङ्गाख्याक्षेपसाम्यस्य प्रसिद्धत्वादुद्धाराख्यपरिहारसिद्ध्यै दृष्टान्ततयोक्तिः।

एवं तर्ह्यवघातादिन्यायेन सम्मार्गस्यापि परमापूर्वप्रयुक्तत्वायोगेनावान्तरापूर्वप्रयुक्तत्व-सिद्धेर्ग्रहत्वलक्षितस्य चावान्तरापूर्वसाधनत्वस्य चमसेष्वभावाद्व्यवस्थासिद्धेर्नैतदधिकरण-मारभ्यमित्याशङ्कते—**नन्विति**। एकत्ववद् ग्रहत्वैकार्थसमवायित्वस्याप्युद्देश्यापूर्वसाधन-विशेषणस्याविवक्षितत्वशङ्कापत्तेस्तेषामर्थाधिकरणसिद्धान्ताक्षेपेणैतदधिकरणारम्भेण परमतेन तावत्पौनरुक्त्यं परिहरति—**सत्यमिति**।

वाच्यैकार्थसमवायित्वं विनाऽपूर्वसाधनत्वस्य लक्षयितुमशक्यत्वेन, वाच्यैकार्थसमवाय्य-वान्तरापूर्वसाधनत्वस्यैव लक्ष्यत्वात्तस्योद्देश्यत्वेनोद्देश्यविशेषणत्वाभावात्तेषामर्थाधिकरण-सिद्धान्ताक्षेपायोगेनैतत्परिहारापरितोषात्स्वमतेनान्यथापहरति—**अथ वेति**।

ननु तेषामर्थाधिकरणोक्तयथासंयोगव्यवस्थाक्षेपेणात्र पूर्वपक्षे, स्थलसम्मार्जनादिव-त्संयोगानादरसिद्ध्यै संस्कारत्वहेतूक्तिर्युक्ता, तदनाक्षेपे तु किमर्थेत्याशङ्क्याह—**संस्कारा-दिति**। प्रतिप्रधानमावृत्त्या संस्कारानुष्ठानस्यापूर्वसाधनेन प्रयुक्तत्वाच्चमसेषु संस्काराभावे वैगुण्यापत्तेरपूर्वसाधनत्वव्याहतिसूचनार्थं संस्कारत्वोक्तिरित्याशयः। सर्वप्रधानेष्वनुष्ठान-मेवोपपन्नम्। ते नानुष्ठानं चमसेष्वपीत्येतदाख्यानार्थं संस्कारोक्तिरिति सावधारणानुष्ठान-वाचिक्रियाशब्दाभ्युपगमेनोपपन्नत्वाख्यानार्थोपपादनशब्दाभ्युपगमेन च व्याख्येयम् ॥१६॥

भा० प्र०—पूर्व अधिकरण में "ग्रहं सम्मार्ष्टि" इस वाक्य के 'ग्रहं' इस पद के प्रत्यय भाग के एकत्व को लेकर विचार किया गया है। इस स्थल में 'ग्रहं' इस पद के प्रकृति अंश को लेकर विचार किया जा रहा है, अर्थात् ग्रहत्व विवक्षित है या नहीं ? यदि ग्रह के प्रकृति भाग ग्रहत्व की विवक्षा नहीं है तो इस प्रकरण के चमस आदि यज्ञ-पात्रों का भी सम्मार्जन किया जाता है या नहीं ? पूर्वपक्षी का कहना है कि ग्रहगत एकत्व जिस प्रकार विवक्षित नहीं है वैसे ही प्रकृतिभाग अर्थात् ग्रहत्व भी विवक्षित नहीं है। क्योंकि, सम्मार्जन संस्कार विशेष है, उसके फलस्वरूप अपूर्व उत्पन्न होता है, सम्मार्जन से रहित ग्रह से कार्य करने पर भी वह अपूर्व का जनक नहीं होता है। अतः, ग्रह का सम्मार्जन न करने पर वह जैसे अपूर्व का उपयोगी नहीं होता है। चमस आदि का भी यदि सम्मार्जन नहीं किया जाय तो वह भी अपूर्व का उपयोगी नहीं होगा, इसलिए चमस आदि पात्रों के सम्मार्जन के लिए स्वतन्त्र वचन न रहने पर भी उस वचन से ही चमस आदि पात्रों का भी सम्मार्जन कर्तव्य रहता है। ऐसी स्थिति में इस स्थल में ग्रह का प्रकृतिभाग विवक्षित नहीं है। अपितु "ग्रह" यह शब्द लक्षणा के बल से उस प्रकरण के सभी पात्रों का ही बोधक है। अतः, "गुणानाम-व्यवस्था" = सम्मार्जन आदि गुणों की व्यवस्था = व्यवस्थितत्व अर्थात् ग्रहों का ही सम्मार्जन कर्तव्य है, अन्य का नहीं—इस प्रकार का नियम नहीं हो सकता है, कारण, "संस्कारार्थात्" = सम्मार्जन आदि संस्कार है अर्थात् यतः अपूर्वसाधन के हेतु हैं।

"संस्कारात्" = यतः सम्मार्जन आदि संस्कार अर्थात् अपूर्व-साधननिवेशी है, इसलिए, "वा" प्रत्यवस्थान में, "गुणानां" = गुणों का अर्थात् सम्मार्जन आदि की, "अव्यवस्था स्यात्" = अव्यवस्था अर्थात् चमसादि के साथ साधारणता होगी, अर्थात् ग्रह का ही सम्मार्जन कर्तव्य है, किन्तु चमस आदि का सम्मार्ग नहीं करना होगा— ऐसी विधि नहीं हो सकती है ॥ १६ ॥

यह पूर्वपक्ष है।

**व्यवस्था वाऽर्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वात् ॥१७॥ सि०**

**शा० भा०—व्यवतिष्ठेत वा ग्रहेष्वेव संमार्गः, न चमसेष्वपि प्रसज्येतेति। कुतः? अर्थस्य श्रुतिसंयोगात्। श्रूयमाणो हि ग्रहो नोत्स्रष्टव्यः। उत्सृज्यमाने श्रुतिरेव बाध्यते, ग्रहमिति प्रमत्तगीतं तत्रभवतामित्यव गम्यते। न चैतन्न्याय्यम्। तस्माद् ग्रहशब्देन ग्रहं लक्षयित्वा, तस्य संमार्गसंबन्धो विधीयते। न चाविदधत्संमार्गं शक्नोति तत्संबन्धं विधातुम्। अतो विदधात्येवैष शब्दः संमार्गम्। न च श्रुतिर्बाधिष्यते कुतः? संमार्ष्टीति संमृजिगतं पुरुषप्रयत्नं श्रुत्या शक्नोति विधातुम्। न तत्र कश्चिद्विशेषः उत्पाद्यमाने वा संमृजाम्, परेण वा संबध्यमान इति। तेन न ग्रहसंबन्धेऽपि श्रुतिर्बाधिता भवति। अतो ग्रहेष्वेव संमार्गो व्यवस्थातुमर्हतीति।**

**नन्वपूर्वसंयोगाविशेषात्प्रकरणाविशेषाच्च चमसेष्वपि प्रसज्यते, न ग्रहेष्वेवास्य विधानमित्युक्तम्। अत्रोच्यते। प्रकरणवद्भिरेकवाक्यतां कृत्वा शक्नोति तत्र विधातुम्। नाकृत्वैकवाक्यताम्। सा च प्रकरणादनुमीयते। इयं पुनर्ग्रहशब्देन सह प्रत्यक्षा। तस्मान्न प्रकरणे विधानम्। ग्रहैकत्वसंबन्धे पुनरुत्सृज्य स्वार्थं न शक्नोति। विधातुम्। तस्माद्वैषम्यं[1] ग्रहैकत्वविधानेन।**

**यदुक्तम्, यथा स्थालानि [2]संमृज्यन्तामिति लक्षणा, तद्वदिहापीति। परिहृतमेतत्। लोके कर्मार्थलक्षणं शब्दलक्षणं पुनर्वेद इति ॥ १७ ॥ सिद्धान्तः ॥**

**इत्यष्टमं चमसाधिकरणम् ॥ ८ ॥**

त० वा०—यथास्थूलं तावदुत्तरम्। ग्रहासंबन्ध सति संमार्गविधानाभावादवश्यंभावित्वाच्च संबन्ध्यन्तरस्य न केवलसंमार्गविधानम्।

अथवा ग्रहशब्देन यदपूर्वं लक्षितम्, तत्प्रयुक्तत्वाद् व्यवस्था। नन्वपूर्वसंयोगाविशेषादित्येकापूर्वाभिप्रायम्। सत्यपि तु कर्मैकत्वे, तदपूर्वाभेदे च ग्रहचमसाभ्यासानामयुगपत्कालत्वात्स्वरूपसाहित्यमेकस्मिन्कर्मण्यपूर्वे वा न संभवतीत्यवश्यं

---

१. ब. वैषम्यमस्य। २. ब. परिमृज्यंताम्।

प्रत्यभ्यासमवान्तरापूर्वभेदेन भवितव्यम् । विनाऽपि चाभ्यासेन यागस्वरूप-सिद्धेरदृष्टार्थ एवाभ्यासः । ततश्च ग्रहशब्दोपस्थापितप्रत्यासन्नावान्तरापूर्वाति-क्रमकारणाभावाद् व्यवस्थासिद्धिः । अवघातादिवदेव 'फलं तु सह चेष्टया' इत्येषोऽर्थो योजयितव्यः । न चैकत्वविवक्षावदग्रहत्वविवक्षायां वाक्यभेदो भविष्यतीति पूर्वाधिकरणेन भ्रमितव्यम् ॥ १७ ॥

( इति चमसाधिकरणम् ॥ ८ ॥ )

न्या० सु०—यथाश्रुतपूर्वपक्षभाष्यव्याख्याने सिद्धान्तभाष्यमपि यथा श्रुतमेव व्याख्येय-मिति सूचयितुमाह—**यथास्थूलन्तावदिति ।** ग्रहशब्देन ग्रहमुद्दिश्य तत्सम्बन्धित्वेनैव सम्मार्गो विधीयते, न शब्द इत्येवं ग्रहशब्देनेति भाष्यं व्याख्यातुं ग्रहेत्युक्तम् । ग्रहसम्मार्गान्वयस्य विधेयत्वे सम्मार्गस्वरूपविधिबाधप्रसङ्गात्तद्विरोधेन वाक्यीयग्रहसम्मार्गान्वयबाधैवोचितेत्या-शङ्क्य, विशिष्टक्रियास्वरूपविधिकल्प्यत्वाद्विशेषणान्वयविधः, क्रियास्वरूपविधिबाधकत्वा-योगोक्त्यर्थं 'न चेत्यादि न श्रुतिर्बाधिता भवतीत्यन्तं भाष्यं व्याख्यातुं ग्रहाख्यस्य सम्बन्धिनोऽन्यतः प्राप्तत्वेऽपि सम्मार्गाख्यस्य सम्बन्ध्यन्तरस्यान्यतोऽप्राप्तत्वा'त्समे यजेतेत्या'-दिवत्क्रियास्वरूपविध्यनपेक्षान्वयविध्यनुपपत्तेर्ग्रहसम्मार्गसम्बन्धविधौ सम्बन्ध्यतरविधेरवश्य-म्भावित्वादित्युक्तम् । प्रदर्शनार्थत्वपक्षेऽप्यवश्यंभावित्वात्कस्य चित्सम्बन्ध्यन्तरस्येत्येवमिदं व्याख्येयम् । अनेन चार्थस्य विधेयतया प्रयोजनभूतस्य सम्मार्गस्य श्रुत्या ग्रहसंयोगाद्-ग्रहेष्वेव सम्मार्गव्यवस्थेव सूत्राव्याख्या सूचिता । परमार्थतस्त्वर्थस्योद्देश्यस्यापूर्वसाधनस्य श्रुत्युक्तग्रहत्वसंयोगेनैव लक्ष्यत्वात्परमापूर्वस्य चोत्पत्त्यपूर्वमात्रपर्यवसायिग्रहत्वनियमसाध्या-त्वाभावेन ग्रहत्वान्वयाभावाद्ग्रहत्त्वेन लक्षणाशक्तेर्ग्रहत्वैकार्थसमवायिनोऽवान्तरापूर्वसाधन-त्वस्यैव लक्षणायान्यायत्वादित्येवं सौत्रहेतुव्याख्यार्थं ग्रहत्वस्यापूर्वसाधनलक्षकत्वानभ्युपगमे ग्रहश्रुतिबाधापत्तेर्ग्रहत्वस्य लक्षकत्वानभ्युपगमे ग्रहश्रुतिबाधापत्तेर्ग्रहत्वसमवाय्यवान्तरापूर्वसाधनं लक्षयित्वा तस्य सम्मार्गान्वयो विधीयते । न च ग्रहत्वसमवाय्यवान्तरापूर्वसाधनविशेषा-न्वयितया सम्मार्गविधिश्रुतेरपूर्वसाधनमात्रान्वयविषयतामभ्युपगम्य ग्रहपदैकवाक्यतया ग्रहसमवायितया विशेषणात्सङ्कोचलक्षणबाधापत्तिरित्युक्ते, कुत इति प्रश्नपूर्वं यद्यपि पुरुषार्थपर्यवसायिस्वभावविधिश्रुत्या सम्मार्ष्टीतिशब्दोऽपूर्वसाधनान्वितसम्मार्गगतं प्रयत्नं विधातुं शक्नोति । तथापि ग्रहान्वयाभावे सम्मार्गस्यारादुपकारित्वापत्तेरपूर्वसाधनद्रव्या-न्वयावगमेन ग्रहान्वयस्यावश्याभ्युपगमनीयत्वाद्ग्रहसमवाय्यपूर्वसाधनविशेषान्वयस्यैवावगतेः सम्मार्गविधिस्वभावालोचनेनैवाविशेषान्वयावगतौ न कश्चिद्विशेष दति विधिस्वभाववाच्यु-त्पद्यमानशब्दाभ्युपगमेन यथोक्तपस्कारयुक्तं सिद्धान्तभाष्यं व्याख्येयमिति सूचयितुमाह—**अथ वेति ।** नन्वित्याशङ्काभाष्यं प्रत्यभ्यासमपूर्वभेदादयुक्तमाशङ्क्य व्याचष्टे—**नन्विति ।** नानादेवतायुक्तग्रहणसंस्कृतद्रव्यभेदाक्षिप्तानामपि यागाभ्यासानामविधेयत्वाद्विध्येकसमाधि-गम्यत्वाच्चापूर्वस्य प्रत्यभ्यासमपूर्वभेदाभाव'त्पयसा मैत्रावरुणं श्रीणाती'त्यादौ च प्रत्य-भ्यासमपूर्वभेदेन श्रयणव्यवस्थाया नवमे वक्ष्यमाणाया एतदधिकरणाधीनत्वेनेदानीमसिद्धा-

वस्थत्वाद्यागापूर्वस्यैव प्रयोजकत्वावगतेः तस्यैवैकत्वाशयमेतद्भाष्यमित्याशयः । अत्रेत्यादि-प्रत्यक्षेत्यन्तं परिहारभाष्यं शङ्काशयनिरासममर्थत्वेन व्याख्यातुमाह—**सत्यपीति ।** प्रत्यक्षाभ्यासविद्धयभावेऽपि देवतायुक्तद्रव्यभेदान्यथानुपपत्तिकल्प्यविधिविहितत्वेनाभ्यासानां प्रत्यभ्यासमपूर्वभेदोपपत्तिरित्याशयः ।

नन्वभ्यासैर्विना ज्योतिष्टोमरूपासिद्धेर्दृष्टार्थत्वेनाऽभ्यासानामवघातादिवन्नापूर्वार्थता-स्तीत्याशङ्क्याह—**विनाऽपि चेति ।** ज्योतिष्टोमशब्दस्याभ्यस्तरूपयागवाचिताया यागा-भ्यासविधिनिमित्तकत्वेनाभ्यासविध्यभावेऽनभ्यस्तस्यापि यागस्य ज्योतिष्टोमशब्दवाच्य-स्वरूपसिद्धेर्न्न दृष्टार्थत्वमभ्यासस्य सम्भवतीत्याशयः ।

तस्मादित्युपसंहारभाष्यं व्याचष्टे—**ततश्चेति ।** नन्वभ्यासापूर्वाणां प्रत्यासन्नत्वेऽप्य-फलत्वात्प्रयोजकत्वासम्भवोऽतिक्रमकारणमस्तीत्याशङ्क्याह—**अवघातादिवदेवेति ।** फल-न्त्विति सूत्रेऽवघातादेरपूर्वप्रयुक्तत्वसिद्ध्यै । यद्यपि चैषां साक्षादफलत्वम्, तथापि स्वरूप-सिद्धान्यथानुपपत्त्यैव प्रयोजकत्वं भविष्यतीत्यादिवार्त्तिके योऽर्थो वर्णितः, सोऽत्रापि योज्य इत्यर्थः । ग्रहैकत्वसम्बन्धे पुनरिति भाष्यस्य तात्पर्यमाह—**न चेति ।** स्थलसम्मार्ग-वैषम्योक्त्यर्थत्वेन तस्य शब्दप्रमाणत्वादिति सूत्रावयवव्याख्यार्थं यत्त्वित्यादिभाष्यं स्पष्ट-त्वान्न व्याख्यातम् ॥ १७ ॥

इत्यष्टमं चमसाधिकरणम् ॥

भा० प्र०—प्रदर्शित पूर्वपक्ष के समाधान में कहा गया है "व्यवस्था वा" ग्रहों का सम्मार्जन ही कर्तव्य है—इस प्रकार की व्यवस्था या नियम होना चाहिए । अतः, ग्रहों का प्रकृतिभाग अविवक्षित नहीं हो सकता है । क्योंकि, वाक्यभेद दोष के कारण ही उद्देश्यभूत ग्रहादि के एकत्व विवक्षित नहीं हो सकते हैं । किन्तु ग्रहत्व की विवक्षा करने पर किसी भी दोष की प्रसक्ति नहीं है, इसलिए, वह अविवक्षित नहीं हो सकता है । क्योंकि, "अर्थस्य श्रुतिसंयोगात्" ग्रहत्व ही ग्रह शब्द का शक्य अर्थ है और जाति के विना व्यक्ति भी कर्म का उपयोगी नहीं हो सकता है, इसलिए ग्रह एकत्व विवक्षित है । फलतः, चमसादि सम्मार्जन कर्तव्य नहीं है ।

यदि यह कहा जाय कि सम्मार्जनरहित चमसादि अपूर्व के योग्य नहीं है, इस प्रसङ्ग में यह कहना है कि "तस्य शब्दप्रमाणत्वात्" अपूर्व का उपयोगी होना और न होना यह एकमात्र शास्त्र से ज्ञातव्य है, शास्त्र में ही जब ग्रह पद में द्वितीया विभक्ति का प्रयोग कर ग्रह की संस्कार्यता व्यक्त कर दी गई है तो शास्त्र के आधार पर यही निश्चित होता है कि सम्मार्जन न करने पर ग्रह से सम्पादित अपूर्व का उपयोगी नहीं होगा, किन्तु चमसादि के अपूर्व के अयोग्य न होने का प्रसङ्ग ही नहीं होता है । सम्मार्जनसंस्कृत ग्रहादि से ही परमापूर्व उत्पन्न होता है—यह भी नहीं कहा जा सकता है, क्योंकि, वह अवान्तर अपूर्व का ही जनक होता है । अतः, परमापूर्व प्रयुक्त न होने से भी चमसादि में सम्मार्जन नहीं हो सकता है ।

"व्यवस्था" = ग्रहादि की व्यवस्था होगी, अर्थात् ग्रह का ही सम्मार्जन इस प्रकार का नियम होगा, "वा" = पूर्वपक्ष के निरास के लिए है, "अर्थस्य श्रुतिसंयोगात्" = क्योंकि, इस प्रकार श्रुतिसंयोग है, अर्थात् ग्रहत्व शक्यार्थ होने से वही ग्रहणीय है, "तस्य शब्दप्रमाणत्वात्" = यतः वह अर्थात् ग्रह की जो अपूर्व साधनता, वह शब्दप्रमाण अर्थात् एकमात्र शास्त्र से ही अवगत होता है ॥ १७ ॥

यह अष्टम चमसाधिकरण सम्पूर्ण हुआ ।

### अथ नवममानर्थक्यतदङ्गाधिकरणम् ।

## [९] आनर्थक्यात्तदङ्गेषु ॥१८॥

शा० भा०—वाजपेये श्रूयते 'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इति । तत्र संदेहः—किं सप्तदशारत्निता वाजपेयस्योर्ध्वपात्रे निविशते, उत पशोर्यूपे निविशत इति । किं तावत्प्राप्तम् ? ऊर्ध्वपात्र इति । कुतः ? वाजपेयस्य यूपाभावात् । यद्वाजपेयस्यास्ति पात्रं यूपसदृशम्, तत्र भवितुमर्हति । अस्ति च षोडशिपात्रम् । तच्च खादिरत्वादूर्ध्वत्वाच्चयूपसदृशम् । तत्र निवेशे सति वाजपेयशब्द आञ्जस्येन भवति[1] । इतरथा वाजपेयाङ्गपशुयागे लक्षणया वाजपेयशब्दो वृत्त इति गम्यते ।

ननु त्वत्पक्षेऽपि यूपशब्दो लक्षणयोर्ध्वपात्रे । उच्यते । सर्वथा वयं लक्षणाशब्दान्न मुच्यामहे । मत्पक्षे तु वाजपेयप्रकरणमनुगृह्यते । तस्मादूर्ध्वपात्रे निवेश इति । एवं प्राप्ते ।

ब्रूमः—आनर्थक्यात्तदङ्गेषु । वाजपेयशब्दस्तावत्सोमयागविशेषवचनः । तस्य साक्षाद्यूपेन न प्रयोजनम् । अस्ति तु तस्याऽङ्गं पशुयागः । तस्य तु पशुं बध्नुं यूपेन कार्यम् । साक्षाद्वाजपेययूपस्य यदि सप्तदशारत्निता विधीयते, तस्याभावादनर्थकमेव वचनं प्राप्नोति । तदनर्थकं मा भूदिति योऽस्य पशुयागे यूपः तत्र निवेशमर्हति । ऊर्ध्वपात्रे च यूपशब्दो लक्षणया स्यात् ।

नन्वितरस्मिन्नपि पक्षे वाजपेयशब्दो लक्षणयेति । नेति ब्रूमः । वाजपेय एव वाजपेयशब्दो भविष्यति । शक्ष्यति[2] च स पशुयूपं विशेष्टुम् । सोऽस्याङ्गस्योपकारकः । यश्च यस्योपकारिण उपकरोति, भवति स तस्य संबद्धो मुख्येनैव संबन्धेन । चैकान्तरितमिति कृत्वाऽसंबद्धो भवति । यथा देवदत्तस्य नप्तेति पुत्रेण चासावन्तरितः । अथ च देवदत्तेन मुख्येनैव संबन्धेन संबद्धः । तस्मादेष एव पक्ष आश्रयणीयः न ह्येतस्मिन्पक्षे कश्चिदपि लक्षणाशब्दो भवतीति ॥१८॥

इति नवममानर्थक्यतदङ्गाधिकरणम् ॥९॥

---

१. ब. भविष्यति । २. ब. शक्नोति ।

**अथ नवममानर्थक्यतदङ्गाधिकरणम्**

त० वा०—यदि सप्तदशारत्निः वाजपेयस्येति विधीयते, यूपशब्दो यथाकथंचित्तदनुवादः। ततः षोडशिपात्रे निवेशः। अथापि यो वाजपेयस्य संबन्धी, स सप्तदशारत्निरिति विधीयते, तथाऽप्येवम्। अथ यो यूपः, स सप्तदशारत्निरिति वचनव्यक्तिः, वाजपेयशब्दो यथाकथंचिद्विशेषणम्, प्रकरणप्राप्तानुवादो वा। ततस्तदङ्गपशुयूपस्येदं परिमाणमिति। किं प्राप्तम् ?

आनन्तर्यात्प्रधानत्वात्तथा प्रकरणाच्छ्रुतेः।
वाजपेयेन संबन्धः साक्षान्न पशुना सह॥

साक्षात्कर्मणः सप्तदशारत्नित्वं न संभवतीति, तदङ्गद्रव्यं गृह्यते। यत्र यदेव साक्षात्संबन्धि, तदेव ग्रहीतव्यम्। यद्यपि पशुरपि वाजपेयप्रकरणान्तर्गतइति तत्संबन्धेऽपि प्रकरणादनतिरेको भवत्येव, वाजपेयस्य तद्धि भवति, तथाऽप्यङ्गप्रधानानां भिन्नकथंभावयोगित्वाद्वाजपेयकथंभावेनाऽग्रहणात्प्रकरणबाधोऽभिधीयते। वाजपेयस्येति च षष्ठीश्रुत्या संबन्धो भवति। भवतस्तु यूपसामानाधिकरण्याद्वाक्येन स्यात्। न च वाजपेयशब्दवेलायां कश्चिद्विरोधो येन लक्षणाऽऽश्रीयते, 'गुणे त्वन्यायकल्पना' इति। तद्वरं यूपशब्द एव लक्षणा। तस्मादूर्ध्वपात्र एव निवेश इति प्राप्ते।

अभिधीयते—

अगत्या लक्षणावृत्तिः समभिव्याहृतैर्भवेत्[1]।
न चोर्ध्वपात्रसंबन्धी यूपशब्दः प्रतीयते॥

यो हि प्रकरणमव्यवहितसंबन्धं चानुजिघृक्षति, तस्य यूपशब्दोऽनर्थकः स्यात्। ऊर्ध्वपात्रं लक्षयिष्यतीति चेत् ? न। असति सामानाधिकरण्ये, अन्यथा संभवे वा लक्षणाभावात्। अस्मत्पक्षे पुनर्न किंचिल्लक्षणावृत्तम्, षष्ठ्याः संबन्धमात्रवाचित्वेनाऽनङ्गेऽप्युपकारकमात्रापेक्षयोपपन्नत्वात्। न ह्यसावङ्गाङ्गिसंबन्धमेवैकं ब्रवीति। अनङ्गमपि स यूपस्तदङ्गपश्वर्थत्वादुपकारको वाजपेयस्य।

यत्त्वानन्तर्येण षष्ठीश्रुतिर्विनियोजिकेति, तद्यूपशब्देनापि सहाविशिष्टम्। अतश्च सप्तदशारत्निविधिपरेऽनूद्यमानत्वाद्यादृशं वयं वाजपयेस्य यूपं पश्यामः तादृशस्य ग्रहणमिति पशुयूपाश्रयणम्। अस्ति त्वेषाऽपि जिज्ञासा यदि वाजपेयस्य साक्षाद्यूपः स्यादिति। यदा तु स नोपलब्धः तदा पक्षान्तरमवलम्बितम्।

किं च—

वाजपेयेन संबन्धस्त्रेधाऽपि न निरूप्यते।
साक्षात्संबन्धिमात्रेण तद्यूपेनाथवा स्फुटः॥

१. क० समभिव्याहृते।

साक्षात्तावन्न सप्तदशारत्नित्वं युज्यत इत्युक्तम् । संबन्धिमात्रमप्यनिर्दिष्टम्, वाजपेयस्येत्येतावन्मात्रेण न ज्ञायेत । यूपशब्दार्थस्त्वतत्संबन्धित्वाद् दूरभ्रष्टः । तस्माद्यथोक्तमेवास्य विशेषणत्वम् । अधिकारप्रकरणप्राप्तमनुवादिष्यति । वक्ष्यति ह्येतत् 'आरादपीति चेन्न । तद्वाक्ये हि तदर्थत्वात्' इत्यत्र । यथा प्रकरणवशेन तदुपकारिमात्रे धर्मा विधीयन्ते, न साक्षादङ्गेष्वेव केवलेष्विति । तस्मान्न केनचित्प्रमाणेन विरोध इति ॥ १८ ॥

इति नवममानर्थक्यतदङ्गाधिकरणम् ॥ ९ ॥

अथ **नवममानर्थक्यतदङ्गाधिकरणम्** ॥ ९ ॥

न्या० सु०—ग्रहेष्वेव सम्मार्गः, न चमसेष्वित्युक्ते सप्तदशारत्नित्वं षोडशिपात्रे निविशते यूपे वेति चिन्तायाः प्रासङ्गिकत्वेनाऽनन्तरसङ्गतिं चतुर्द्धाकरणाधिकरणस्य चमसाधिकरणसङ्गत्यभिधानेन सूचयिष्यमाणत्वात्स्पष्टत्वेनाऽनभिधाय भाष्योक्तसन्देहं वचनव्यक्तिसन्देहेनोपपादयति—**यदीति** । यूपशब्दानुवादसामर्थ्यात्सप्तदशारत्नित्वस्य यूपसदृशे षोडशिपात्रे निवेशाभ्युपगमेऽनुवादात्षोडशि पात्रप्राप्तिः, तत्प्राप्तेश्चानुवाद इत्यन्योन्याश्रयापत्तिमाशङ्क्य, सप्तदशारत्नित्वस्य वाजपेयङ्गत्वेन विधीयमानस्य साक्षाद्वाजपेयान्वयायोगाद्वाजपेयान्वयियोग्यद्रव्यापेक्षायां यूपस्य वाजपेयानन्वयित्वात्साक्षाद्वाजपेयाङ्गभूतायाश्च सोमलतायाः क्वचिद्भावात्प्रदेय सोमरसाधारत्वद्वारा षोडशिपात्रस्य वाजपेयान्वयात्पात्रान्तरापेक्षया च तस्य सामान्यतो दैर्घ्यप्राप्तेदर्घ्यविशेषात्मकसप्तदशारत्नित्वविध्यौचित्यात्षोडशिपात्रप्राप्तिः यथा कथं चिच्छब्देनोक्ता । सप्तदशारत्निशब्दस्य लोहितोष्णीषन्यायेनाऽप्राप्तविशेषणविध्यर्थत्वेऽप्युपात्तान्यपदार्थबहुव्रीह्यवयवयोगाद्वाजपेयशब्दस्यान्य - पदार्थसमर्पकत्वाभ्युपगमे सम्बन्धिपरत्वोपपत्तेः, कोऽसौ वाजपेयसम्बन्धीत्यपेक्षायामनन्तरोपात्तस्य यूपस्य साक्षाद्वाजपेयासम्बन्धित्वेन नप्तृवद्व्यवधानेऽपि तद्व्यपदेशोपपत्तेः । कथं षोडशिपात्रे निवेश इत्याशङ्क्य, अथापीत्युक्तम् । सम्बन्धिनोनुवाच्यत्वाद्यूपेन विशेषणे वाक्यभेदापत्तिसूचनार्थो यच्छब्दः । यूपस्योद्देश्यत्वे व्यवहितवाजपेयान्वयसम्भवेऽपि विशेषणाविवक्षायां वाक्यभेदापत्तेर्वाजपेयशब्दस्य विशेषणत्वायोगमाशङ्क्य, अगत्या वाजपेयविशिष्टस्य यूपस्योद्देश्यत्वानुद्देश्यान्तर्गत एव वाजपेयो नोद्देश्यविशेषणमिति सूचनार्थो यथा कथंचिच्छब्दः । अविशेषितस्याऽप्युद्देश्यत्वसम्भवे विशेषणस्यानाकाङ्क्षितत्वादुद्देश्यान्तर्गतावप्युभयत्ववद्वाक्यभेदापत्तेर्विशेषणत्वापरितोषाद्वाजपेयप्रकरणाम्नानेन वाजपेयसम्बन्धित्वस्य प्राप्तस्यानुवादपक्षः स्वमतेनोक्तः । बहुव्रीहेर्विशेषणपरत्वसूचनार्था परिमाणोक्तिः । तत्र निवेशे सति वाजपेयशब्द आञ्जस्येन भवति । मत्पक्षे तु वाजपेयप्रकरणमनुगृह्यतइति । भाष्यद्वयोक्तस्य हेतुद्वयस्यापरहेतुद्वयोपलक्षणार्थत्वं दर्शयन्पूर्वपक्षमाह—**किमिति** । सप्तदशारत्निवद्वाजपेयस्येत्यनन्तरान्वयसम्भवे वाजपेयशब्दव्यवहितयूपशब्दान्वयायोगात्प्रधानभूतवाजपेयान्वयसम्भवे वाङ्गभूतपश्वङ्गयूपान्वयायोगात् वाजपेयान्वयाच्च

तत्कथंभावलक्षणप्रकरणाबाधसम्भवे तद्बाधायोगाच्छुतिवृत्तवाजपेयप्रातिपदिकषष्ठीश्रुतिभ्यां च वाजपेयान्वयसम्भवे प्रातिपदिकलक्षणावृत्त्यापादकवाक्यीययूपान्वयायोगाद्वाजपेयाङ्गतैव युक्ता, न पशुयागाङ्गयूपाङ्गतेत्युक्ते, वाजपेयान्वयेऽपि षोडशिपात्राङ्गत्वाभ्युपमेन साक्षाद्वाजपेयाङ्गत्वाभावात्पारम्पर्येण च वाजपेयाङ्गत्वस्य यूपान्वयेऽप्युपपत्तेः। प्रधानत्वादिहेतूनां पक्षद्वयेऽप्यविशेषात्पूर्वपक्षसाधकतामाशङ्क्य यूपाङ्गत्वावेदकवाक्यत्वत्षोडशिपात्राङ्गत्वावेदकप्रमाणाभावेन षोडशिपात्रस्य द्वारमात्रत्वादव्यवधायकत्वसूचार्थः साक्षाच्छब्दः। सप्तदशारत्नित्वस्य साक्षाद्वाजपेयान्वये कथं षोडशिपात्रे निवेश इत्याशङ्क्याह—**साक्षादिति**। एवमपि यूपस्यापि पशुयागद्वारा वाजपेयाङ्गत्वात्कथं षोडशिपात्रे निवेश इत्याशङ्क्याह—**तत्रेति**। वाजपेयाङ्गषोडशिग्रहाख्यसोमरसाधारत्वद्वाराऽपि पात्रस्य वाजपेयान्वये ग्रहैर्जुहोतीत्यातिदेशिकेन वाक्येन प्रक्षेपाधिकयागरूपहोमाङ्गत्वाविरोध इत्याशयः। अनेन चानन्तर्याच्छ्रुतेरित्यानन्तर्यशब्दस्यावृत्त्या साक्षात्ववाचिनः श्रुतिशब्दान्वयमङ्गीकृत्य साक्षात्सम्बन्धिनि षष्ठीश्रुतेर्विनियोक्तृत्वादित्यपि व्याख्या सूचिता।

मत्पक्षे त्विति भाष्यं वाजपेयप्रकरणान्तर्गतपशुयागान्वयद्वारा सप्तदशारत्नित्वस्य वाजपेयान्वयित्वात्सिद्धान्तेऽपि प्रकरणानुग्रहोपपत्तेरयुक्तमाशङ्क्याधिकारलक्षणप्रकरणाबाधेऽपि कथंभावलक्षणप्रकरणबाधाशयत्वेनोपपादयति—**यद्यपीति**। वाजपेयशब्दाङ्गस्योक्त्या द्विविधश्रुत्युक्तावपि प्रातिपदिकश्रुतेरितरथेति भाष्येणैव व्याख्यातत्वात्षष्ठीश्रुति व्याचष्टे—**वाजपेयस्येति**। पक्षद्वयस्याशयमाह—**न चेति**।

अदितिः पाशम्प्रमुमोक्त्वे तम्, अदितिः पाशान्प्रमुमोक्त्वेतानत्येकबहुवचनान्तमन्त्रयोर्दैक्षप्रकरणाम्नातयोर्बहुवचनान्तस्यैकपाशके कर्मण्यसमवेतार्थत्वादुत्कर्षं पूर्वपक्षयित्वा, विप्रतिपत्तौ विकल्पः स्यात्समत्वाद् गुणे त्वन्यायकल्पनैकदेशत्वादि'ति नवमाधिकरणसूत्रेण बहुवचनस्यासमवेतार्थत्वेऽपि तदनुरोधेनानुपसञ्जातविरोधावस्थायां श्रुतस्य प्रातिपदिकस्योत्कर्षायोगात् तस्यैव तु प्रातिपदिकात्परप्रयोज्यत्वस्मृतेः प्रातिपदिकपारतन्त्र्यलक्षणगुणत्वावसायात्प्रातिपदिकानुरोधेन प्रातिपदिकार्थद्रव्यलक्षिततदवयवसंख्यावाचित्वलक्षणान्यायकल्पनाया युक्तत्वात्कर्मबहुत्वरूपानेकबहुवचनार्थसमुदायैकदेशत्वाच्च बहुत्वस्य समवेतकर्मत्वप्रकाशनार्थं प्रयोज्यत्वेनावगतस्य बहुवचनस्यार्थैकदेशबहुत्वानुरोधेनोत्कर्षायोगान्मन्त्रद्वयस्य प्रकरणाम्नानसाम्याद्विकल्प इति सिद्धान्ते वक्ष्यमाणे पश्चाच्छ्रुतत्वेन बहुवचनस्य प्रातिपदिकं प्रति गुणत्वोक्तेर्यूपशब्दे पश्चाच्छ्रुतत्वेन वाजपेयशब्दं प्रति गुणत्वमुपचर्यत इति तत्सूत्रैकदेशोपन्यासः। युपशब्दस्योर्ध्वपात्रे गौणत्वाभ्युपगमाल्लक्षणोक्त्या गौणत्वं विवक्षितम्। तस्मादिति पूर्वपक्षोपसंहारभाष्यं व्याचष्टे—**तस्मादिति**। साक्षाद्वाजपेयसम्बन्धिनि सप्तदशारत्नित्वविधौ साक्षात्सम्बन्धिनोऽपि षोडशिपात्रस्य सामान्यतो दैर्घ्यप्राप्तिमात्रेण विधेयसप्तदशारत्नित्वविषयताया निष्प्रमाणकत्वेनावधारणाशक्तेर्यूपशब्दस्य गौणवृत्त्या षोडशिपात्रसमर्पणार्थं साक्षाद्वाजपेयसम्बन्धिनिर्देशकत्वाभ्युपगमप्रसङ्गात्परपदसामानाधिकरण्याभावेन च गौणवृत्त्ययोगाद्यूपस्यैव साक्षाद्वाजपेयसम्बन्धित्वेन निर्देशापत्तेः, तस्य च साक्षाद्वाजपेयसम्बन्धि-

त्वाभावेन साक्षाद्वाजपेयसम्बन्धिनि सप्तदशारत्नित्वविध्यानर्थक्यप्रसङ्गाद्वाजपेयाङ्गभूतपशुयागसम्बन्धिनि यूपे सप्तदशारत्नित्वविधिरित्येवं सूत्रव्याख्यार्थमेवमित्यादिभाष्यं तात्पर्यतो व्याचष्टे—**इतीति**। न चोद्ध्वंपात्रशब्दसमभिव्याहृतो यूपशब्दः प्रतीयत इत्यर्थः। श्लोकं व्याचष्टे—**योहीति**। अगत्यभावोक्त्यर्थेनाऽस्मत्पक्षे त्वित्यादिना वाजपेय एवेत्यादिभाष्यं व्याख्यातम्। आनन्तर्यादिति पूर्वपक्षहेतोर्द्वेधा व्याख्यासूचनायाऽनन्तर्यषष्ठीश्रुती एकहेलयानुभाषते—**यत्त्विति**। नैरन्तर्यं तावद्वाजपेयशब्दस्य मध्यपाठात्सप्तदशारत्निशब्दवद्यूपशब्देनापि तुल्यमित्यादि व्याख्याशयेनानुभाषणे परिहरति—**तदिति**। साक्षात्सम्बन्धिनि षष्ठीश्रुतेरिति द्वितीयव्याख्याशयेनानन्तर्याच्छ्रुतेरित्यनुभाषणपक्षे वाजपेयान्वयस्यानुवाद्यत्वान्न साक्षात्वादर इति परिहरति—**अतश्चेति**। यूपस्य सप्तदशारत्नित्वविधौ वाजपेयान्वयाननुवादमाशङ्क्यानन्तर्यबलादेव विवक्षितस्याप्यन्वयस्यावगमोऽतश्चेत्यनेनोक्तः।

ननु 'दीक्षाः सोमस्ये'त्यादिवत्प्रकरणप्राप्तस्यापि प्रधानान्वयस्य परिसंख्यार्थत्वेनापि विधिसम्भवेऽनुवादत्वाभ्युपगमो न युक्त इत्याशङ्क्याह—**अस्ति त्विति**। बहुव्रीह्यपेक्षितस्यान्यपदार्थस्य वाजपेयशब्देन समर्पणाशक्तिर्यूपशब्देनैव तत्समर्प्यस्यावगमाद्यूपस्य च वाजपेयान्वयाभावात्सप्तदशारत्नित्वस्य वाजपेयान्वयपक्षत्यागेन यूपान्वयपक्षोऽवलम्बित इत्यर्थः।

सप्तदशारत्नित्वस्य च वाजपेयेन सह साक्षाद्वाऽन्वयः स्यात् सम्बन्धिमात्रद्वारा, यूपद्वारा वा। सर्वथा न सम्भवतीत्याह—**किं चेति**। श्लोकं व्याचष्टे—**साक्षात्तावदिति**। यूपस्य वाजपेयाङ्गत्वाभावे शक्ष्यति च स पशुयूपं विशेष्टुमिति भाष्ये वाजपेयस्य यूपविशेषणोक्तिर्न युज्येतेत्याशङ्क्य पारम्पर्यान्वयाविशेषणत्वं व्याख्येयमित्याह—**तस्मादिति**। स्वरूपे, कार्ये चोपयोगिनोऽङ्गत्वावसायाद्यूपस्य च प्रकृतौ विज्ञातोत्पत्तिप्रकारत्वेन स्वरूपोपयोग्यङ्गानपेक्षणात् कार्यस्यापि पशुनियोजनस्य पशुयागस्य चातिदेशादेवज्ञातोपायपरिमाणत्वेन तदुपयोगिनोऽप्यङ्गस्यानपेक्षणात्सप्तदशारत्नित्वस्य वाजपेयापूर्वापयोगित्वोक्त्यै वाजपेयविशिष्टस्य यूपस्योद्देश्यताऽङ्गीकार्येति भाष्याशयः। विशिष्टानुवाददोषापत्तेर्भाष्योक्तदोषापरितोषात्स्वमतेनाधिकारलक्षणप्रकरणप्राप्तवाजपेयान्वयानुवादमाह—**अधिकारेति**। अनङ्गगतस्यापि च साप्तदश्यस्योपकारिस्थितित्वमात्रेण वाजपेयोपकारित्वोपपत्तेः कथंभावात्मकमपि प्रकरणं न विरुध्यत इत्याह—**वक्ष्यति हीति** ॥१८॥

इति नवममानर्थक्यतदङ्गाधिकरणम् ॥

भा० प्र०—वाजपेय प्रकरण में "सप्तदशारत्निर्वाजपेयस्य यूपो भवति" (श० ब्रा० ३।६।४ २६) "वाजपेय का सतरह अरत्निप्रमाण यूप होगा" ऐसा श्रुतिवाक्य है। यह सतरह अरत्निप्रमाण वाजपेय के ऊर्ध्वपात्र का परिमाण है या वाजपेयाङ्ग जो पशुयाग उसके यूप का परिमाण है—यही संशय है। इस प्रसङ्ग में पूर्वपक्षी का कहना है कि सप्तदशारत्निका वाजपेय का खदिरमय षोडशीपात्र नामक ऊद्ध्वंपात्र का ही परिमाण है, कारण, वाजपेय स्वयं पशुयज्ञ न होने से उसमें यूप नहीं है। यूप न होने से सप्तदश अरत्नि यूप का परिमाण नहीं हो सकता है। इस स्थल में यूप शब्द लक्षणा के बल से

ऊद्ध्र्वपात्र का बोधक है। ऊद्ध्र्वपात्र का गुण होने पर प्रधान कर्म वाजपेय साक्षात् सम्बन्ध से युक्त होता है। अतः, सप्तदशारत्नि शब्दबोधित यह ऊद्ध्र्वपरिमाण वाजपेय का ही अङ्ग है, क्योंकि "सप्तदशारत्नि" एवं वाजपेय इन दो शब्दों का आनन्तर्य श्रुतिवाक्य में परिलक्षित होता है और इस पक्ष में प्रकरण की मर्यादा रक्षित होती है, इसमें "वाजपेयस्य" यहाँ सम्बन्ध में षष्ठी भी उपपन्न होती है।

इसके समाधान में सूत्र के द्वारा कहा गया है कि "सप्तदशारत्निर्यूपः" इस रूप में सामानाधिकरण्य रहने से यूप के साथ ही सप्तदशारत्निता का साक्षात् सम्बन्ध रहता है। यूप पशु का अङ्ग होने से सप्तदशारत्नियूप के द्वारा पशु का अङ्ग होता है। वाजपेय में पशु नहीं है, किन्तु पशुयाग वाजपेय का अङ्ग है। अतः, पशु वाजपेय का अङ्ग होने से यूप पशु के द्वारा प्रधान कर्म का ही अङ्ग होता है। अतः, सप्तदशारत्नि एवं वाजपेय इन दो शब्दों का आनन्तर्य होने से सप्तदशारत्निता वाजपेय का अङ्ग होगा—यह नहीं कहा जा सकता है।

वस्तुतः सप्तदशारत्निता पशु का अङ्ग जो यूप तद्गामी होने पर भी फलतः वह वाजपेय का ही उपकारी होता है। इस पक्ष में प्रकरण का भी कोई विरोध नहीं होता है। "वाजपेयस्य" यहाँ सम्बन्धसामान्य में षष्ठी है, किन्तु इसमें साक्षात् सम्बन्ध ही होगा—ऐसा कोई नियम नहीं है। अतः, परम्परा सम्बन्ध होने पर भी वाजपेय के साथ सम्बन्ध रहता है। शक्यार्थ की अनुपपत्ति न रहने पर लक्ष्यार्थ का ग्रहण नहीं किया जाता है, अतः, इस स्थल में यूप शब्द में लक्षणा करना भी उचित नहीं है। अतएव "आनर्थक्यात् तदङ्गेषु" वाजपेय में यूप न होने से सप्तदशारत्निता वाजपेय का अङ्ग जो पशुयाग उसमें निविष्ट होगा—उस पशुयाग का यूप ही ऊर्ध्व में सप्तदश अरत्नि-प्रमाण होगा।

"आनर्थक्यात्" = सप्तदशारत्नित्व आदि का वाजपेय में आनर्थक्य होने से "तदङ्गेषु" = उसका अर्थात् वाजपेय का अङ्ग होने से, वे ही विनियुक्त होते हैं॥ १८॥

यह नवम आनर्थक्यतदङ्गताधिकरण। अर्थात् सप्तदशारत्निता का पशुधर्मताधिकरण में सम्पन्न हुआ॥

## [१०] कर्तृगुणे कर्मासमवायाद्वाक्यभेदः स्यात्॥१९॥ पू०

**शा० भा०—दर्शपूर्णमासयोः प्रयाजवाक्ये श्रूयते, 'अभिक्रामं जुहोत्यभिजित्यौ' इति। तत्र संदेहः किमभिक्रमणं प्रयाजेष्वेव निविशते, उत कृत्स्ने प्रकरणे इति। किं तावत्प्राप्तम्? कर्तृगुणेऽभिक्रमणे ब्रूमो वाक्यभेदः स्यादिति। कर्मणा कर्मणोऽसमवायात्। अभिक्रमणं कर्मामूर्तम्। न तत्कर्म हवनं साधयितुं शक्नोति। तस्मान्न तेनैकवाक्यतां याति। अतः सर्वस्मिन्प्रकरणे निविशते, संयोगतोऽविशेषात्प्रकरणाविशेषाच्चेति।**

**नन्वनेनैव हेतुनाऽन्यस्मिन्नपि न निवेक्ष्यते। उच्यते। अन्यत्र पुरुषैः संभन्त्स्यते।**

**ननु प्रयाजेष्वपि पुरुषैः संबध्येत। नैतदेवम्। जुहोतीति हवन एष शब्दः पुरुषप्रयत्नं विधातुं[1] शक्नोति, न पुरुषाभिक्रमणसंबन्धम्। नन्वन्यत्रापि पुरुषाभिक्रमणसंबन्धस्याविधानम्। नैष दोषः। अन्यत्र प्रकरणाम्नानादङ्गभावे निज्ञाते प्रयोगवचनोऽस्य कर्तव्यतां वक्ष्यति। तस्मात्सर्वस्मिन्प्रकरणेऽभिक्रमणस्य निवेश इति ॥१९॥ पूर्वपक्षः ॥**

त० वा०—एवं संस्कारद्रव्यगुणा विचारिताः। इदानीं यत्कर्मैव कर्मसंबन्धित्वेन श्रूयमाणमर्थात्संस्कारत्वं प्रतिपत्स्यते, तद्विचार्यते। तत्राभिक्राममिति णमुला वीप्सार्थोपादानादभिक्रम्याभिक्रम्य किमपि करोतीत्यपेक्षिते परश्च जुहोतिः प्रकृतप्रयाजग्राही दृश्यते। तत्किमभिक्रमणं तेनैव संबध्यते, उत प्रकृतमात्रेणेति। संबन्धश्रवणे च सति संशयाक्षेपपरिहारावरुणाधिकरणवद् द्रष्टव्यौ। कर्मणोऽमूर्तत्वाद्वाक्येन च स्वसंबन्धोपादानात्। अनेनैवं विशेषेण पुनरारम्भः।

यत्तत्र समानाधिकरण द्रव्यमुपात्तम्, तद्विषयनियमे च तत्साध्यक्रियासंबन्धस्योपपत्तित्वम्। इह तु तस्यैव साध्यत्वम्। अपेक्षितश्च गुणः परिच्छेदकत्वेन विज्ञातक्रियासंबन्धप्रकारः। न त्वत्राभिक्रिया। नानाभूतानि च तत्र क्रियान्तरद्रव्याणि। अत्र पुनः सर्वकर्मसु स एवाध्वर्युः कर्तेत्यपुनरुक्तता। किं तावत्प्राप्तम्? सर्वार्थमिति। कुतः?

> कर्मणः कर्मसाध्यत्वं नामूर्तत्वात्प्रतीयते।
> तस्माज्जुहोतिसंबन्धं परित्यज्य विधीयते॥

न तावदभिक्रमणेन होमं करोतीति वक्तुं शक्यम्। अतो न प्रयाजैः संबध्यते। ततश्चारुणाधिकरणपूर्वपक्षवद्वाक्यभेदः स्यात्। **नन्वनेनैव हेतुनाऽन्यत्राप्यनभिनिवेश** इत्यरुणाचोद्यमेव।

परिहारश्चाऽऽख्याते कर्तुर्गुणभूतत्वाद्बलाद्धोमसंबन्धापत्तेर्न जुहोतिना गृहीतेन प्रयाजादीनां कर्त्रा संबन्धः। अन्यत्र तु प्रकरणगृहीतस्य प्रधानभूतस्य कर्तुः संबन्धो न विरोत्स्यते॥ १९॥

**अथ दशममभिक्रमणाधिकरणम् ॥ १० ॥**

न्या० सु०—आनर्थक्यापत्त्या श्रुतक्रियान्वयायोगेन तदङ्गावतारे स्थिते, तद्विशेषचिन्तात्वेनोत्तराधिकरणद्वयस्यानन्तरसङ्गतौ स्पष्टायामभिक्रमणोपव्यानयोस्तदङ्गावतारे सति संस्कारत्वापत्तेः, सम्मार्गाख्यसंस्कारचिन्तानन्तरमेव चिन्ता कार्या, न सामदृश्यगुण-

---

१. ब. विदधातुं।

चिन्तानन्तरमित्याशङ्क्याह—**एवमिति**। क्रियायाः साक्षात्क्रियान्वयायोगाद् गुणवत्क्रियासाधनद्रव्यद्वारा क्रियान्वयेनार्थात् द्रव्यसंस्कारत्वावगतेर्गुणचिन्तानन्तरं चिन्ता युक्तेत्याशयः।

ननु धातुसम्बन्धाधिकारणमुल्श्रुतिवशादभिक्रमणस्य क्रियान्तरान्वयावगमेऽप्यारादुपकारित्वेऽप्यन्वयाविरोधात्कथं संस्कारत्वावगतिरित्याशङ्क्याह—**तत्रेति**। आभीक्ष्ण्ये णमुल्चेति स्मृतेर्वीप्सार्थस्यावृत्तिरूपस्याभीक्ष्ण्यस्य णमुलोपादानादारादुपकारित्वे च तन्त्रत्वादावृत्त्यनुपपत्तेः। संस्कारस्य तु कार्ययोग्यताधानार्थत्वात्प्रतिकार्यमावृत्त्युपपत्तेः संस्कारत्वावगतिरित्याशयः। प्रयाजविधायिसमिदादिवाक्येभ्योऽभिक्रमवाक्यस्याऽन्यत्वात्प्रयाजवाक्ये श्रूयत इति। भाष्यमयुक्तमित्याशङ्क्यावान्तरप्रकरणाशयत्वं वाक्योक्तेः सूचयितुमाह—**परश्चेति**। तत्रेति सन्देहभाष्यं व्याचष्टे—**तदिति**। विस्पष्टजुहोतिसम्बन्धश्रुतेः पूर्वपक्षवचनव्यक्त्ययोगात्सन्देहायोगमाशङ्क्याह—**सम्बन्धेति**। यथा 'कथं पुनररुणये'ति भाष्येण विस्पष्टक्रयसम्बन्धावगमेनाऽरुणाधिकरणसन्देहमाक्षिप्येह गुणमरुणिमानमित्यादिभाष्येण शब्दवस्तुविसम्वादात्परिहारोऽभिहितः तथाभिक्रमणस्यापि णमुल्श्रुत्या क्रियान्तरसाधनत्वावगमादमूर्त्तत्वाच्च वस्तुस्वरूपालोचनेनासाधनत्वावगमात्सन्देहाक्षेपस्य परिहारो वाच्य इत्यर्थः। एतदेव विवृणोति—**कर्मण इति**। पौनरुक्त्यात्तर्हि नेदमधिकरणमारभ्यमित्याशङ्क्याह अव्ययकृतो भावे भवन्तीति अव्ययत्वाण्णमुलोऽभावमात्रवाचित्वस्मृतेरेकहायनीवत्समानाधिकरणद्रव्यानुपादानाद् द्रव्यविषयनियमे चोपपत्तिभूतस्य साध्यक्रियासम्बन्धस्य णमुलुक्तसमानकर्तृकपूर्वकालत्वान्यथाऽनुपपत्तिसाध्यत्वेनाऽनुपपत्तिसाध्यत्वेन कर्तृभूतद्रव्यान्वयात्प्रागवगतेर्द्रव्यनियमोपपत्तित्वायोगादपरिच्छेदकत्वेन च क्रियाया गुणवत्क्रियासाधनद्रव्योपादानानौपयिकत्वादध्वर्य्वाख्यस्य च द्रव्यस्येह द्वारत्वेनाभिमतस्यानेकक्रियासाधारण्येनैकहायनीवद्व्यवस्थितक्रियाद्वारत्वायोगाच्चतुर्द्धा वैषम्यमाह—**अनेन चेति**।

कर्मणः कर्मणा सह साध्यसाधनत्वलक्षणान्वयायोगादभिक्रामं जुहोतीति वाक्यस्य विभागरूपो भेदः स्यादित्येवं पूर्वपक्षसूत्रावयवव्याख्यार्थं 'किं तावदिति भाष्यं व्याचष्टे—**किं तावदिति**। कर्मैव विचार्यतइत्युपक्रमात्सर्वामभिक्रमणार्थक्यं कर्मेति प्रतिज्ञायां पूरितायां जुहोत्यन्वयाद्धोममात्रार्थत्वप्रतीतेः कुतः सर्वार्थतेति पृष्टे, कर्मणोऽभिक्रमणस्यामूर्त्तत्वाद्धोमाख्यं कर्मसाधनत्वं न प्रतीयतइति, कर्मसाध्यमस्येति बहुव्रीहिणोक्त्वा जुहोत्यन्वयस्तर्हि कथमित्याशङ्क्य, जुहोतिसम्बन्धं परित्यज्याऽभिक्रमणं विधीयते इत्युक्तम्। श्लोकं व्याचष्टे—**न तावदिति**।

नन्विव्याशङ्काभाष्यं 'येनैव हेतुना क्रीणातिना न सम्बध्यत' इत्यादि नास्ति वाक्यभेद इत्यन्तारुणाधिकरणशङ्काभाष्यवदनर्थक्यपरिजिहीर्षयैकवाक्यतापादनार्थत्वेन व्याचष्टे—**नन्विति**। अन्यत्र क्रियान्वयायोगेऽपि कर्तृत्वेनावगतस्याध्वर्य्वादेः कर्तृत्वशक्तिजननार्थं संस्कारपेक्षायां देशान्तरस्थकार्यप्रत्यासत्तिजननेनाभिक्रमणस्य कर्तृशक्तिजनकतया कर्त्तारं संस्काररूपगुणत्वेनान्वयः सम्भवतीत्येवं परिहारार्थत्वेन कर्तृगुण इति सूत्रावयवव्याख्यार्थमुच्यत इत्यादिभाष्यं व्याचष्टे—**परिहारश्चेति**।

जुहोत्यन्वयित्वेनावक्षिप्तकर्त्रन्वयाविरोधं नन्विति भाष्यावयवेनाशङ्क्य, जुहोतीत्येष समानकर्तृवाचिणमुलुक्तत्वाकर्तृभूतपुरुषान्वयित्वेना'वगतमप्यभिक्रमणप्रयत्नमाख्याते क्रिया-प्राधान्यात्, तदङ्गतयैव विधातुं शक्नोति, न गुणभूतपुरुषाङ्गतयेति परिहारार्थं नैतदिति भाष्यावयवं व्याख्यातुमाख्यातइत्युक्तम् । अन्यतोऽवगतकर्तृत्वस्य पुरुषस्य प्रयोजनत्वा-त्प्राधान्यभाक्तेनाङ्गान्वययोग्यत्वेऽपि विधायकाख्यातत्यागात्तदङ्गतयाऽभिक्रमणस्य विधिर्न्न सम्भवतीति नन्वन्यत्रापीति भाष्यावयवेनाशङ्क्य, प्रकरणावगतदर्शपूर्णमासाङ्गभावस्याऽभि-क्रमणस्य कथं दर्शपूर्णमासयोरुपकर्त्तव्यमित्यपेक्षायां यथा शक्नुयादित्युपबन्धेन प्रत्यासत्त्या-ख्यकर्तृसंस्कारजनकस्य प्रयोगवचनाद्विधिर्भविष्यतीति परिहारार्थं चैष इति भाष्यावयवं व्याख्यातुमन्यत्र त्वित्युक्तम् ॥ १९ ॥

भा० प्र०—दर्शपूर्णमास का प्रयाज नामक अङ्ग याग के समीप में श्रुति में कहा गया है कि "अभिक्रामं जुहोत्यभिजित्यै" (तै० सं० २।६।१) "पुनः पुनः सञ्चरण करता हुआ आहुति दे, सभी ओर से जय के लिए"। होम के समय आहवनीय नामक अग्नि के समीप में सञ्चरण करे—यही इस वाक्य का अर्थ होता है। यह सञ्चरण केवल प्रयाज-कर्ता के साथ सम्बद्ध है या दर्शपूर्णमासकर्ता के साथ सम्बद्ध है अर्थात् दर्शपूर्णमास-यागीय सभी होमकर्ता आदि के साथ सम्बद्ध है—यही संशय होता है। इसमें पूर्वपक्षी कहता है कि "कर्तृगुणे तु वाक्यभेदः स्यात्" = वाक्यभेद होगा, वाक्यभेद कर अभि-क्रमण अर्थात् सञ्चरण को सभी दर्शपूर्णमासकर्ता के साथ सम्बन्ध करना होगा, किन्तु यह केवल प्रयाजहोम के साथ अर्थात् प्रयाजकर्ता के साथ सम्बद्ध नहीं है। कारण, "कर्मा-समवायात्" = होम कर्म है एवम् अभिक्रमण भी कर्म है। कर्म अर्थात् क्रिया के साथ कर्म का अर्थात् क्रिया का अन्वय नहीं हो सकता है, क्योंकि, कारक का ही क्रिया के साथ अन्वय होता है। इसलिये, प्रकरण के अनुसार समग्र दर्शपूर्णमास कर्ता के साथ इसका सम्बन्ध होने से सभी का अभिक्रमणपूर्वक होम करे।

"तु" = पक्षान्तरसूचक है, "कर्मासमवायात्" = अभिक्रमण होमरूप कर्म में समवेत होने के अर्थात् अन्वित होने के योग्य नहीं होने से, "कर्तृगुणे" = अभिक्रमण कर्ता का गुण होने पर "वाक्यभेदः स्यात्" = वाक्यभेद करना होगा अर्थात् "जुहोति" इस पद से विच्छिन्न कर अन्यत्र उसका अन्वय करना होगा ॥ १९ ॥

यह पूर्वपक्ष है ॥

**साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥२०॥ सि०**

**शा० भा०—नैतदस्ति, यदुक्तमभिक्रमणं प्रकरणे निविशत इति। प्रयाजे-ष्वेव भवितुमर्हति। कुतः ? तैः सहास्यैकवाक्यता। यतः सत्काङ्क्षमेतत्पूर्वेण पदेनासमाप्तं वाक्यम् 'अभिक्रामं जुहोति' इत्यत्र पर्यवस्यति। प्रकरणाच्च वाक्यं बलवदिति, प्रयाजेष्वेवाभिक्रमणं निविशते।**

**नन्वभिक्रमणममूर्तत्वाद्धोमनिर्वृत्तावसमर्थमित्युक्तम् । उच्यते । साक्षादसमर्थं संबध्यमानं शक्ष्यति निर्वर्तयितुम् । कथम् ? अभिक्रमणेन समासीदत्याहवनीयं कर्ता । द्वयमभ्युपायभूतं होमस्य दूराद्वाऽभिप्रसार्य हस्तं जुहुयात्, समासीदीदन्वाभिक्रमणेन[1] । तस्मादभिक्रमणमुपकरोति होमस्येत्यवगम्यते । अतः प्रयाजेष्वेव निवेश इति ॥२०॥ सिद्धान्तः ॥**

## अभिक्रमणाऽधिकरणम् ॥१०॥

त० वा०—सर्वथा तावदभिक्राममित्येतत्पदं न क्रियान्तरमन्तरेण निराकाङ्क्षीभवति । न ह्येतद् द्रव्यसंबन्धं कथंचिदपि ब्रवीति । तस्मात्प्रकृतप्रयाजग्राहिणाजुहोतिनैकवाक्यत्वात्तादर्थ्यं विज्ञायते । शक्नोति च कर्तृप्रत्यासत्तिकरणेन तदुपकर्तुम् । अपेक्षिता चाऽऽहवनीयप्रत्यासत्तिरध्वर्योः प्रयाजैः, अरुणत्ववदेव वाऽर्थाद् द्रव्यसंबन्ध इति कर्तुरुपसर्जनत्वेऽपि न कश्चिदोषः । एवं चोपकाररूपेण कर्मापि कर्मसाध्यं भवतीत्येतदपि सिद्धम् ।

यदा त्वतिस्थूलत्वानैवाभिक्राममित्येतत्पदमात्रविच्छेदेन पूर्वपक्षः क्रियते । कथं तर्हि ? यज्जुहोतीति समस्तप्रकरणजुहोत्यनुवादेनाभिक्रमणविधानादवान्तरप्रकरणस्य चाभावान्महाप्रकरणविनियोगाश्रयेण पूर्वपक्षाश्रयणम् । तदा 'कर्तृगुणे तु' अभिक्रमणेऽवान्तरप्रकरणापर्युपस्थापितप्रयाजकर्मासमवायात्, तत् प्रकरणैकवाक्यत्वाभावमात्रमेव वाक्यभेदः स्यादित्युक्त्वा 'साकाङ्क्षं त्विति' अवान्तरप्रकरणमेव प्रयाजचोदनाप्रसृतकथंभावाकाङ्क्षासंबन्धद्वारा तदेकवाक्यत्वेन सिद्धान्तोऽभिधीयते । यदपि 'असमाप्तं हि पूर्वेणेति' तत् न वाक्यासमाप्त्यभिप्रायेण । किं तर्हि ? असमाप्तं ह्यवान्तरप्रकरणं पूर्वेण प्रयाजस्वरूपगुणविधिनेत्यर्थः ।

येनाभिक्रमणादूर्ध्वं प्रयाजानां गुणोऽपरः ।
विधास्यते प्रयाजानां तस्मात्प्रकरणास्तिता ॥ २० ॥

( इति दशममभिक्रमणाधिकरणम् ॥ १० ॥ )

न्या० सु०—सिद्धान्तसूत्रव्याख्यार्थं 'नैतादित्यादि प्रयाजेष्वेवाभिक्रमणं निविशते इत्यन्तं व्याचष्टे—**सर्वथा तावदिति** । पूर्वपक्षहेतोरनुभाषणपूर्वं परिहारार्थं नन्वित्यादिभाष्यं व्याचष्टे—**शक्नोतीति** । आख्याताक्षिप्तस्य कर्त्तुर्गुणभूतत्वात्कथं संस्कारान्वय इत्याशङ्क्याह—**अरुणत्ववदेव चेति** । कर्त्तुः श्रुत्या होमं प्रत्यङ्गत्वे अभिक्रमणं च प्रति प्राधान्ये सति वैरूप्यं स्यात् । यथात्वारुण्यस्य श्रुत्यनुगृहीताद्वाक्यादेकहायन्यन्वयो नैकहायन्या गुणत्वेऽपि वैरूप्यदोषमापादयति, तथाभिक्रमणस्याप्यर्थाल्लिङ्गात्कर्त्रन्वयो होमं प्रति कर्त्तुरुप-

---

१. ब. समासीदन्वाभिक्रमणेन ।

सर्जनत्वेऽपि, न वैरूप्यदोषमापादयतीत्यर्थः। आरुण्यस्यैकहायन्यन्वयो द्वारमात्रत्वाच्छ्रौत-क्रियाङ्गत्वाविरोधी अभिक्रमणस्य तु कर्तृसंस्कारत्वे तदङ्गत्वाभ्युपगमाद्धोमाङ्गत्वं विरुध्येतेत्याशङ्क्य, संस्कारस्य योग्यताधानार्थत्वेन कार्यान्वितमेव संस्कार्यान्वितमेव संस्कार्यं प्रत्यङ्गत्वावसायात्कार्यमपि प्रत्यङ्गतास्त्येवेति परिहारसूचनार्थं तस्मादिति भाष्यं व्याचष्टे—**एवं चेति**।

**भाष्यमतनिराकरणेन वार्तिकमतेनाधिकरणार्थनिरूपणम्**

पूर्वपक्षस्याति तुच्छत्वेन भाष्योक्तविचारापरितोषात्स्वयं जुहोत्येकवाक्यतामभ्युपगस्यै-वेतिकर्त्तव्यताकाङ्क्षालक्षणत्वात्प्रकरणस्याङ्गानां चाकरणत्वेनेतिकर्त्तव्यतानाकाङ्क्षत्वा-त्प्रयाजादीनामवान्तरप्रकरणाऽनुपपत्तेर्महाप्रकरणेनाभिक्रमणाऽनुपपत्तेर्महाप्रकरणेनाभिक्रमण-स्य सर्वार्थत्वं पूर्वपक्षयित्वाङ्गानामपि करणानुग्रहभावनायां करणत्वादितिकर्त्तव्यताकाङ्क्षो-पपत्तेरवान्तरप्रकरणसम्भवात्तस्य च महाप्रकरणाद् बलीयस्ताया बलाबलाधिकरणे वक्ष्य-माणत्वादवान्तरप्रकरणेन प्रयाजमात्रार्थत्वसिद्धान्तोऽस्मिन्नधिकरणे वर्ण्यत इत्याह—**यदा त्विति**। यदैवं पूर्वपक्षकरणम्, तदा कर्तृगुणत्वेनाभिक्रमणे जुहोत्युक्तकर्मान्वयिनि प्रयाज-कर्मणोऽवान्तरप्रकरणाकाङ्क्षं त्विति प्रयाजचोदनातः प्रसूता, या कथंभावाकाङ्क्षा तन्निमित्तो योऽभिक्रमणस्य प्रयाजैः सहाङ्गाङ्गिसम्बन्धः तद्द्वारा यदभिक्रमणवाक्यस्य प्रयाजवाक्यैकवाक्यरूपमवान्तरप्रकरणम्, तदेव सिद्धान्तोऽभिधीयते इत्येवं सूत्रद्वयं व्याख्येयमित्यर्थः।

नन्ववान्तरप्रकरणरूपवाक्यैकवाक्यत्वविवक्षयैकवाक्यत्वोक्तौ स्वार्थसमाप्तस्यैव वाक्यस्य वाक्यान्तरान्वयाभ्युपगमादसमाप्त्युक्तिर्न युज्येतेत्याशङ्क्याह—**यदपीति**। प्रयाजस्वरूप-विधिमात्रेण प्रयाजावान्तरप्रकरणासमाप्तावपि जौहवचतुर्गृहीतादिप्रयाजगुणविधिना समाप्तिर्भविष्यतीत्याशङ्क्य, गुणविधिनेत्युक्तम्। कथं समाप्तिरवसीयत इत्याशङ्क्याह—**येनेति**। यस्मादभिक्रमणदूर्ध्वं प्रयाजशेषाभिघारणाख्यः प्रयाजानां गुणोऽभिधास्यते। तस्मात्प्रयाजानां प्रकरणमद्याप्यवसीयत इत्यर्थः॥२०॥

इति दशममभिक्रमणाधिकरणम्॥

भा० प्र०—पूर्वपक्षी के द्वारा प्रदर्शित मत समीचीन नहीं है, कारण, "अभिक्रामम्" यह पद 'णमुल्' प्रत्ययान्त है अर्थात् अभि + क्रम + णमुल्, णमुल् प्रत्ययान्त होने से असमापिका क्रिया है। समापिका क्रिया के बिना असमापिका क्रिया से आकाङ्क्षा की पूर्ति नहीं होती है। इसलिए असमापिका क्रिया के रहने पर भी एक समापिका क्रिया का अध्याहार करना पड़ेगा। किन्तु, यहाँ "जुहोति" इस समापिका क्रिया के रहने से इसको विच्छिन्न नहीं किया जा सकता है। अतः "साकाङ्क्षं तु एकवाक्यं स्यात्" = 'अभिक्रामम्' यह क्रिया साकाङ्क्ष होने से "जुहोति" इस क्रिया के साथ अन्वित होगा, क्योंकि, "असमाप्तं हि पूर्वेण" पूर्व णमुल् प्रत्ययान्त पद के द्वारा वाक्य पूर्ण नहीं होता

है, क्रिया साक्षात् अन्वय न होने पर भी कर्ता के द्वारा "जुहोति" क्रिया के साथ अन्वय होने में कोई बाधा नहीं है, अतः, कर्ता के द्वारा जुहोति क्रिया के साथ अन्वित होकर निराकाङ्क्ष होने से समग्र दर्शपूर्णमास क्रिया के कर्ता के साथ सम्बन्ध नहीं हो सकता है। क्योंकि, होम करने के दो साधन हैं दूर से हाथ बढ़ाकर या अग्नि के पास जाकर, किन्तु अभिक्रमण के द्वारा अग्नि के निकटस्थ होने से अभिक्रमण क्रिया होम का उपकारक है। इसलिए, कर्ता के द्वारा उसके साथ अन्वित होगा, अतः, अभिक्रमण केवल प्रयाज का ही अङ्ग है।

वार्तिककार ने इस प्रसङ्ग में विभिन्न रूप में ही पूर्वपक्ष एवम् उत्तरपक्ष किया है। पूर्वपक्षी के मत में प्रयाज के समीप में अभिक्रमण पठित होने पर भी वह दर्शपूर्णमास का प्रकरण है। सन्निधि की अपेक्षा प्रकरण प्रबल होता है। इसलिए, महाप्रकरण के अनुसार वह समग्र दर्शपूर्णमास के होमकर्ता के साथ सम्बद्ध है।

सिद्धान्ती का कहना है कि महाप्रकरण की अपेक्षा अवान्तर प्रकरण प्रबल होने से सन्दंशन्याय से अभिक्रमण प्रयाज का ही अङ्ग होगा अर्थात् प्रयाजकर्ता के साथ ही अभिक्रमण सम्बद्ध है। क्योंकि, अभिक्रमणविधि के पूर्व में एवम् बाद में प्रयाजविषय का वाक्य है, अतः, आगे पीछे स्थित प्रयाजविषयक वाक्यसमूह मध्य में रहनेवाले अभिक्रमण को सन्दंश जैसे उभयफलक के मध्य में स्थित वस्तु को ग्रहण करता है, वैसे ही प्रयाज-कर्म का मध्य में ही आकर्षण होगा। वस्तुतः इस स्थल में महाप्रकरण और अवान्तर प्रकरण के मध्य में विरोध ही नहीं है, क्योंकि, अभिक्रमण प्रयाज से दर्शपूर्णमासगामी होता है।

"साकाङ्क्षं" = जो साकाङ्क्ष अर्थात् अन्वय के लिए अन्य क्रियापद के साथ आकाङ्क्षायुक्त रहता है वह "तु" = पूर्वपक्ष का निवर्तक है, "एकवाक्यं स्यात्" = एक वाक्य होगा अर्थात् श्रूयमाण क्रिया के सम्बन्ध का त्याग नहीं करता है, "हि" = क्योंकि, "पूर्णेण असमाप्तम्" पूर्ण के द्वारा वह समाप्त नहीं होता है ॥ २० ॥

यह १०वाँ अभिक्रमणाधिकरण समाप्त हुआ। अभिक्रमणादिका प्रयाजमात्र की अङ्गता अधिकरण ॥

## [११] संदिग्धे तु व्यवायाद्वाक्यभेदः स्यात् ॥२१॥ सि०

**शा० भा०—दर्शपूर्णमासयोः सप्तमाष्टमयोर्ब्राह्मणानुवाकयोः सामिधेन्य उक्ताः। नवमे निविदः। दशमे काम्याः सामिधेनीकल्पा इदं[1]कामस्यैतावती-रनुब्रूयादिदंकामस्यैतावतीरिति। एकादशे च यज्ञोपवीतमाम्नातम्। 'उप-व्ययते देवलक्ष्ममेव तत्कुरुते' इति। तत्र सन्देहः—किं सामिधेनीरेवानुब्रुवाण**

१. ब. इंद्रकामस्य।

उपव्ययेत, उत प्रकरणे सर्वानेव पदार्थाननुतिष्ठता उपव्यातव्यमिति। कुतः संशयः ? उपवीतं सामिधेनीनां प्रकरणे समाम्नातम्। अथ निवृत्ते वा तासां प्रकरण इति न ज्ञायते। ननु दर्शपूर्णमासयोरेव प्रकरणमिदम्। परप्रकरणे सामिधेन्यः श्रूयन्ते। सत्यं परप्रकरणे श्रूयन्ते। तथाऽपि तासामवान्तर-प्रकरणमपरम्[1]। भवति हि 'सामिधेनीरनुब्रूयादि'ति विशेषाकाङ्क्षं वचनम्। येन तत्संनिधावभिधीयमानं तस्येति ज्ञायते।

कथं पुनर्निवृत्तं तासां प्रकरणमित्याशङ्क्यते ? निवित्पदानि तासां प्रकरणं व्यवदधतीति। यद्येवं, कथमनुवर्तते प्रकरणमित्याशङ्का। परस्तान्निविदां सामिधेनीगुणा एव काम्या विधीयमानाः श्रूयन्ते, यदनन्तरं यज्ञोपवीतमाम्नातम्[2], तेनानिवृत्तं सामिधेनीनां प्रकरणमिति भवति मतिः। अतः परप्रकरणे निविदः समुपनिपतिता न व्यवदधति, यथा द्वादशोपसत्ताऽहीनधर्मो ज्योतिष्टोमप्रकरण इति। तेन भवति सन्देहः। अस्मिन्संदेहे किं तावत्प्राप्तम्? सामिधेनी प्रकरणम-निवृत्तम्। तत्रोपवीतं समाम्नातमिति। कुतः ? काम्यानां सामिधेनीकल्पा-नामानन्तर्यवचनात्। हृदयमनुविपरिवर्तमानासु सामिधेनीषु उपवीतमामनन्ति। कर्तुश्च वासोविन्यासमात्रं गुणो भवत्युपवीतं नाम। किं कुर्वता तत्कर्तव्यमिति भवति तत्र पदार्थाकाङ्क्षा। तत्र बुद्धौ संनिहितेनाविप्रकृष्टेन सामिधेनीवाक्ये-नैकवाक्यतामुपगम्य सामिधेनीषूपवीतं उपव्ययत इत्येष शब्दो विदधातीति गम्यते। एवं प्राप्ते।

ब्रूमः—नास्मिन्संदेहे यस्त्वयोक्तः, स निर्णयः। अस्मिन्संदेहे वाक्यभेद इति निर्णय इति। कुतः ? व्यवायात्। इह समाप्तस्य सानुबन्धस्य सामिधेनी-वाक्यस्य, अस्य चोपव्ययत इति वचनस्य निविदां विधायकेन सामिधेनीभिर-सम्बद्धेन ग्रन्थेन व्यवधानं भवति। यस्य च पर्यवासितेऽपि वचने तत्सम्बद्ध-मेवार्थान्तरं प्रक्रमन्ते। न तत्राननुवृत्तं प्रकरणम्। आगच्छति हि तत्सम्बद्धा-भिधाने हृदयम्। यत्र तु पर्यवसिते वचने तदसम्बद्धमेवार्थान्तरं प्रक्रमन्ते, न तत्र बुद्धौ पूर्वः पदार्थः। संनिधीयते। न च बुद्धावसंनिहितेनैकवाक्यता भवति। द्वाभ्यां[3] पदार्थाभ्यां वाक्यार्थः संजन्यते, नान्यतरेण। संनिधौ समाम्ना नस्यै-तदेव प्रयोजनं कथमुभाभ्यां पदार्थाभ्यां विशिष्टां बुद्धिमुत्पादयेयुरिति। अनन्तरावबुद्धेन सह वाक्यार्थः शक्यते कर्तुम्। असंबद्धपदोच्चारणे च नानन्तरावबुद्धो भवति। तस्माद्व्यवहितेन सह नैकवाक्यता भवतीति।

अथान्येन प्रकारेण ध्यानादिना पूर्वपदार्थमवगम्य, वाक्यार्थं संजनयेद-वैदिकः स पुरुषबुद्धिपूर्वको वाक्यार्थो भवेत्। यथाऽन्यस्मादनुवाकादाख्यातपदं

---

१. ब. भवति इत्यधिकम्। २. ब. आमनन्ति।
३. ब. हि बुद्धाभ्यां इत्यधिकम्।

गृहीत्वाऽन्यस्माच्च नामपदं यो वाक्यार्थः संजन्यते तादृशं तद्भवेत्, यत्रान्येन ध्यानादिना पूर्वपदार्थमवगम्य वाक्यार्थं संजनयेत्। तस्मान्नासम्बद्धार्थ[1]व्यवधानैकवाक्यता भवतीति निश्चीयते। तस्मान्न सामिधेनीभिरेकवाक्यतोपवीतस्येति।

ननु सामिधेनीकल्पानामनन्तरबुद्धानां संनिधावुपवीतमाम्नायते। तेन सामिधेनीभिः सम्भन्त्स्यत इति। नेति ब्रूमः। अतिवृत्तमेव हि सामिधेनीनां[2] प्रकरणम्। निवित्पदैर्व्यवधानात्। वाक्येन हि सामिधेनीकल्पाः काम्याः सम्बन्धमुपगच्छन्ति। न प्रकरणमनुवर्तते। न च पुनः कल्पवचनेन सामिधेन्यः प्रकृता भवन्ति। न हि तत्र तासां वचनं कर्तव्या इति। किं तर्हि ? संख्याभिः सम्बन्धयितव्या इति। तदपि वाक्येन, न प्रकरणेन। तत्राप्रकृतासु समिधेनीषु यस्यैकवाक्यता गुणस्य सामिधेनीभिर्नास्ति, न तस्य ताभिः सम्बन्धः। तस्मात्कृत्स्ने प्रकरणे यदनुष्ठेयं, तद्यज्ञोपवीतिनेति सिद्धम्॥ २१॥

इत्येकादशमुपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम्॥ ११॥

त० वा०—सिद्धे कर्मणां कर्मसमवायेऽधुनाऽवान्तरप्रकरणमहाप्रकरणयोः कतरद्विनियोजकमित्युपवीतमुदाहृतम्। तत्र सामिधेन्यनुवाकविभागप्रदर्शनं सामिधेनीप्रकरणसदसद्भावविवेकार्थम्। ननु दर्शपूर्णमासयोरेव प्रकरणमिति—महाप्रकरणग्रस्तत्वान्नैवावान्तरप्रकरणान्याविर्भवन्ति।

अथवाऽग्निसमिन्धनप्रकाशनद्वारेण दृष्टसंस्कारार्थत्वान्न तासां प्रकरणमिति मन्यते। नैतदेवम्।

कथंभावो हि भावानां यावदाख्यातमिष्यते।
न तस्य प्रतिबन्धोऽस्ति महाप्रकरणादिभिः॥
नान्यप्रकरणापत्तिः संस्कारो वा विहन्ति तम्।

यथैवाङ्गवाक्यानि परिपूर्णस्वार्थानि सन्ति दर्शपूर्णमासवाक्येनैकवाक्यतां यान्ति, न चाऽऽत्मरूपं जहति, एवमङ्गभावनाः स्वाङ्गपरिपूर्णाः परमभावनायां संबध्यन्ते। न तदधीनत्वेन तासां स्वधर्मानिवृत्तिः। संस्कारोऽपि चापूर्वार्थत्वात्तत्सिद्ध्युपायमपेक्षमाणः प्रकरणीभवति[3]।

दृष्टार्थेष्वपि नियमादृष्टसिद्ध्यर्थं कथंभावापेक्षोत्पत्तेः प्रकरणसद्भावः।

दृष्टेऽपि च फले नैव साऽपेक्षा न प्रवर्तते।
दृष्टेनैव तु केनापि सोपायेन निवर्त्यते॥

---

१. ब. असम्बद्धार्थान्तर। २. सामिधेनी प्रकरणं।
३. क० इति द्वितीयपक्षपरिहार इत्यधिकः॥

तस्मादेवंविधानामप्यङ्गानामवान्तरप्रकरणेन भवितव्यम्। अतश्च यद्यपि दृष्टार्थाकाङ्क्षा दृष्टेनैव पूर्यते। अग्निसमिन्धनप्रकाशनं भावयेत्केन—सामिधेन्यनुवचनेन, कथं, विवक्षा-प्रयत्नाभिघातादिक्रमोपजनितवर्णग्रहणसामर्थ्यकरणश्रोत्रसंस्कारानुगृहीतेनेति, तथाऽपि नियमादृष्टं कथं सेत्स्यतीत्यनुवर्तत-एवाऽऽकाङ्क्षा। सा च शास्त्रचोदितेनादृष्टार्थेनैवोपायेन पूर्यते। तस्मादस्ति सामिधेन्यनुवचनस्योपवीतादिग्रहणसमर्थमवान्तरप्रकरणम्।

एवं तर्हि तस्य सनिकर्षेण बलीयस्त्वात्तदङ्गत्वेनैव भवितव्यमिति कुतो महाप्रकरणविनियोगाशङ्का ? उच्यते। सत्यमेतदेवं स्यात्। यदि तस्य निवित्पदव्यवधानेन प्रकरणविच्छेदाशङ्का न स्यात्। एवं तर्हि विच्छिन्ने तस्मिञ्जितं महाप्रकरणेनेति। नैतदेवम्[1]।

कुतः। काम्यसामिधेनीकल्पसंकीर्तनेनाविच्छेदसंदेहादविस्पष्टं महाप्रकरणम्। किं तावत्प्राप्तम् ?

अभितः सामिधेनीनां कीर्तनात्प्रक्रिया स्थिता।
परप्रकरणे पाठो निविदामथवाऽङ्गता॥

यथा दर्शपूर्णमासप्रकरणे पूषाद्यनुमन्त्रणान्यसंबद्धान्यपि न पुरस्तात्प्रकरणं विच्छिन्दति, तथा निवित्पदान्यपि न विच्छिन्द्युः प्रकरणम्।

अथवाऽवान्तरप्रकरणेन निविदामपि सामिधेन्यनुवचनाङ्गत्वान्नैवासंबद्धपदव्यवाय इत्युपपन्नमुपवीतमपि तदङ्गमेवेत्येवं प्राप्ते।

ब्रूमः—

विच्छिन्ना सामिधेनीनां निविद्भिः प्रक्रिया यतः।
न हि काम्यैः पुनः कल्पैः संधातुं सा हि शक्यते॥

तावद्धि प्रकरणमनुवर्तते, यावद्विनियोगार्हं पश्यति। असंयुक्तं च प्रकरणेन विनियुज्यते। तदिह निवित्पदानि तावल्लिङ्गेन सामिधेनीभिस्तुल्यान्यग्निसमिन्धने विनियुज्यन्ते 'देवेद्धो मन्विद्ध' इति। तत्र यद्यग्निः सामिधेन्यङ्गे भवेत्, ततस्तद्द्वारेण तान्यप्यङ्गं भवेयुः। अथानङ्गे सत्यप्यङ्गता कल्प्यते, ततः सामिधेनीनामपि निवित्पदाङ्गत्वं कश्चित्कल्पयेत्। तेन निवित्सु तामिधेन्यनुवचनेन गृह्यन्ते।

यदि पुनर्निविदोऽङ्गं भवेयुः ततो गोदोहनन्यायेनाऽऽश्रयग्रहणादपि तावत्काम्येषु प्रकरणानुवृत्तिः स्यात्। अथापि काम्यानामङ्गत्वं भवेत्, तथाऽपि पूषाद्यनुमन्त्र-

---

१. क० नैतदेवमिति।

वत्प्रकरणाबाधं निविदां कथंचिदनुसंधानेनाध्यवस्येम। न त्वन्यतरदस्तीत्य-सत्यवान्तरप्रकरणे महाप्रकरणेन सर्वार्थता।

ननु च यदि विच्छिन्ने प्रकरणे काम्याः कल्पाः श्रूयन्ते, तत एकविंशत्या प्रतिष्ठां भावयेत्किमाश्रितयेति प्रकरणेनाऽऽश्रयेऽनुपनीयमाने साकाङ्क्षत्वादपरि-पूर्णता प्राप्नोति। अथ वाक्येनाऽऽश्रय उपनीयेत, ततः प्राप्ते कर्मणि संबन्धद्वय-करणाद्वाक्यं भिद्येत। तत्र यदि वाक्यभेदोऽभ्युपगम्येत, कथंचिद्वा परिह्रियेत ततो रेवतीवारवन्तीयसौभरादिष्वप्येवमेव वाक्येन प्रकृताश्रयदानात्सिद्धान्तहानिः। अथाऽऽश्रयलाभार्थं कथंचिदनुवर्तेत प्रकरणम्, तत उपवीतमपि तथैव प्राप्नोतीति, सर्वथा संकटमेतत्।

उच्यते—

गुणात्कामो न युक्तोऽत्र विच्छिन्नप्रक्रियाश्रयात्।
अनेकार्थविधिः शक्यो [1]नापूर्वात्कर्मणो विना॥

नैवात्रैकविंशत्यादेर्गुणात्फलम्। किं तर्हि? रेवतीवारवन्तीयादिवाक्यवदे-वानेनापि विशिष्टं कर्म विधीयते। ततश्च भावार्थाधिकरणन्यायेन धात्वर्थात्फलम्। अत एकविंशत्यादिविशिष्टेनानुवचनेन प्रतिष्ठादि साधयेत्। कथमिति—अनु-ब्रूयादिति शब्दसामान्यात्संख्याप्रत्यासत्तेश्च सामिधेन्यनुवचनवदिति गम्यते। ततश्च संख्येयानामृचाम्, अन्येषां च धर्माणां प्राप्तिः। यद्यपि चात्र कर्मान्तरत्वा-कर्मान्तरत्वयोः फलं नास्ति, तथाऽपि वाक्यमेवमवकल्पत इतीत्थं वर्णितम्। न त्वेवं सत्येतान्यनुवचनान्तराणि दर्शपूर्णमासाभ्यामगृहीतत्वात्पृथगेव प्रयोक्तव्यानि। न तावदेतेनास्मत्पक्षो निवर्त्यते। सर्वथोपवीतस्य सर्वार्थत्वसिद्धेः। न च स्वतन्त्रः प्रयोगः स्यात्। कुतः?

पश्चाद्यस्योच्यमानोऽयमनुशब्दः प्रयुज्यते।
न तत [1]क्रतुप्रयुक्तत्वात्स्वातन्त्र्ये सति लभ्यते॥

यो हि निगदः प्राक् सामिधेनीभ्यः प्रयुज्यते, स निवित्पदवदेव न सामि-धेन्यङ्गम्। तदनन्तरत्वेन [2]नोच्यमानास्वनुब्रूयादिति विधिर्न स्वतन्त्राणाम्। तद्यदि पृथक् प्रयोगः स्यात्, ततः सामिधेन्यङ्गमात्रग्रहणादितरेण निगदेन विनाऽनु-वचनत्वं विहन्येत।

किं च—

सामिधेनीत्वमप्यासां न स्यादग्निसमिन्धनात्।
न चाप्रयोगमध्यस्थः शक्यो वह्निः समिन्धितुम्॥

१. ब. तस्यान्यप्रयुक्तत्वात्। २. क० वोच्यमानासु।

एकविंशत्यादिभिस्तावदवश्यं सामिधेन्यः संख्यातव्याः। ताश्चाग्निसमिन्धनं प्रकाशयन्त्यः सामिधेन्य इत्युच्यन्ते। स चाग्निः परप्रयुक्तस्ताभिः प्रकाशयितव्यः। तेन 'अर्थाभिधानकर्म च' इत्यस्य प्रकृतिवदनुप्रवेशात्प्राकृतस्य सामिधेनीकार्यस्याग्निसमिन्धनप्रकाशनस्यैतेनैव प्रसङ्गतः प्राप्तेरर्थात्प्रयोगमध्यपातिसमिन्धनाधीनत्वम्।

नन्वेवमप्येषामेव काम्यानां **कल्पानां** सर्वेषामन्त्यस्य वोपवीतमङ्गं स्यात्। नैतदेवम्। कुतः ?

प्राकृतेन कथंभावे तदीये पूरिते सति।
पश्चात्संनिधिनाऽङ्गं स्यात्स च प्रकरणावरः॥

सर्वास्वेव विकृतिषु यत्प्राकृताङ्गमध्ये न पठितं, तदक्लृप्तोपकारत्वात्प्राकृतैर्निराकाङ्क्षीकृते प्रकरणे पश्चादागच्छत्संनिधिविषयो भवति। स चाविरोधे विनियुङ्क्ते, तु विदेवनादिवत्प्रकरणेन बाध्यते। तस्मात्कृत्स्नदर्शपूर्णमासार्थमुपवीतमिति सिद्धम्॥२१॥

इत्येकादशमुपवीतस्य दर्शपूर्णमासाङ्गताधिकरणम्॥११॥

**अथैकादशमुपवीताधिकरणम्॥ ११॥**

न्या० सु०—नन्वभिक्रमणस्य णमुल्श्रुत्युक्तक्रियान्तराङ्गत्वोपजीवनेन पूर्वोत्तरपक्षविचारात् श्रुतिपादे सङ्गतिर्युक्ता उपव्यानस्य तु वैयग्र्यापादकशीतवारणसामर्थ्यरूपाल्लिङ्गात्कर्तृसंस्कारत्वावगतेः सामान्यसम्बन्धापेक्षायां च प्रकरणात्प्रकृतकर्माङ्गत्वावगतेः क्वचिदंशश्रुतिव्यापाराभावान्न श्रुतिपादे सङ्गतिरित्याशङ्क्य प्रासङ्गिकत्वेन सङ्गतिमाह—**सिद्ध इति।**

कर्मणामपि कर्तृसंस्कारद्वारा कर्मान्वये सिद्धे प्रसङ्गात्किमवान्तरप्रकरणेनोपव्यानस्य सामिधेन्यनुवचनमात्रे विनियोगः महाकरणाद्वा कृत्स्ने दर्शपूर्णमासप्रकरणइति भाष्यमते सङ्गतिः।

वार्त्तिकमते त्ववान्तरप्रकरणात्कर्मणामभिक्रमणादीनामङ्गभूतप्रयाजादिकर्मान्वये किं सामिधेन्यनुवचनावान्तरप्रकरणमुपव्यानेऽनुवर्त्तते, न वेति सङ्गतिरित्यर्थः।

सामिधेन्यादीनामुदाहरणत्वशङ्काभाष्यस्थयज्ञोपवीतशब्दाच्च तस्माद्यज्ञोपवीत्येवाधीयीतयाजयेदिति वै यजेत [1]काठकविहितकर्माङ्गभूतनवसूत्रतन्तुकयज्ञोपवीतशङ्कोपवीतोक्त्या निरस्ता। भाष्ये तु सर्वधर्मत्वशङ्कानिरासाय प्रकृतयज्ञाङ्गत्वोक्त्यर्थो यज्ञशब्दः। अस्मिन्ननुवाकं सामिधेन्यः अस्मिन्निविद इत्यादिविभागोक्तेः प्रयोजनमाह—**तत्रेति**। सामिधेनी-

---

१. तैत्तिरीयकारण्यकद्वितीयप्रपाठकस्वाध्यायब्राह्मणे इति बोध्यम्।

प्रकरणे वर्त्तमानएवोपवीतमाम्नातम्, निवृत्ते वा, तत्प्रकरणे इति न ज्ञायत इत्येवं सौत्रे सन्दिग्धशब्दे व्याख्याते ।

सामिधेनीनामवान्तरप्रकरणस्याभावादनुवृत्त्यनुवृत्तिसन्देहो न युक्त इत्याशङ्कार्थं 'नन्विति'भाष्यं पूर्वाधिकरणे भाष्यकृतावान्तरप्रकरणाव्युत्पादनादेवान्तरप्रकरणभावाशयत्वेन तावद्वयाचष्टे—**नन्विति ।** महाप्रकरणेनाङ्गतया सामिधेन्यादीनां ग्रहणात्करणत्वाभावेनेति कर्त्तव्यताकाङ्क्षालक्षणं प्रकरणं न सम्भवतीत्याशयः ।

स्वमते तु पूर्वाधिकरणएवावान्तरप्रकरणव्युत्पादनात्प्रयाजादिष्वदृष्टार्थेष्वङ्गेष्ववान्तर-प्रकरणसद्भावेऽपि सामिधेनीनां दृष्टार्थत्वेनेतिकर्त्तव्यतानाकाङ्क्षत्वान्नावान्तरप्रकरणमस्ती-त्येवमाशयत्वेन व्याचष्टे—**अथवेति ।** अस्मिन्पक्षे परस्य द्रव्यस्य प्रकृष्टत्वकरणमतिशया-धानम्परप्रकरणशब्देन विवक्षितम् । सत्यमिति परिहारभाष्यं अवान्तरप्रकरणव्युत्पादनाश-यत्वेन तावद्वयाचष्टे—**नैतदिति ।** महाप्रकरणावगतप्रधानभावनाङ्गत्वोपपादकत्वात्प्र-धानानुग्रहकरणस्य न महाप्रकरणावगतेनाङ्गत्वेन कथंभावः प्रतिबध्यत इत्यर्थः ।

नन्वङ्गभावनानामङ्गान्वये प्रधान्यापत्तेः प्रधानभावनान्वयो विरुध्येतेत्याशङ्कयाह—**यथैवेति ।** यथाऽङ्गवाक्यानामवान्तरवाक्यार्थापेक्षया परिपूर्णस्वार्थानामपि महावाक्यार्था-पेक्षया साकाङ्क्षत्वात्प्रधानवाक्यैकवाक्यत्वं, तस्यामपि चावस्थायां स्वार्थे परिपूर्णत्व-मात्मीयरूपं न विरुध्यते तथाऽङ्गभावनानां स्वाङ्गानि प्रति प्राधान्येऽपि प्रधानभावनां प्रत्यङ्गत्वन्तस्यामपि चावस्थायां स्वाङ्गानि प्रति प्राधान्यमविरुद्धमित्याशयः । पूर्वाधिकरण-एवावान्तरप्रकरणव्युत्पादने तु यद्यपि परस्य द्रव्यस्य प्रकृष्टत्वकरणेऽतिशयाधाने सामिधेन्यः श्रूयन्ते । तथापि तासामवान्तरप्रकरणमस्तीत्येवं भाष्यं व्याख्येयमिति सूचयितुमाह—**संस्कारोऽपीति ।**

नन्वदृष्टार्थस्य प्रोक्षणादिसंस्कारस्यावान्तरस्यावान्तरप्रकरणसद्भावेऽपि सामिधेनीनां दृष्टार्थत्वेनेतिकर्त्तव्यतानाकाङ्क्षात्वात्तन्न स्यादित्याशङ्कय, तास्वपि नियमादृष्टांशसिद्धये इतिकर्त्तव्यताकाङ्क्षणादस्त्येवावान्तरप्रकरणमित्याह—**दृष्टार्थेष्वपीति ।** किं च केवल-दृष्टार्थेष्वपि दृष्टार्थेनेतिकर्त्तव्यताकाङ्क्षणात् तदस्त्येवेत्याह—**दृष्टेऽपि चेति ।** अतः संस्कार-रूपाणामप्यङ्गानामवान्तरप्रकरणमस्तीत्युपसंहरति—**तस्मादीति ।**

नन्वेवमपि दृष्टार्थयैवेतिकर्त्तव्यतया सामिधेन्यनुवचनस्य नैराकाङ्क्षयसिद्धेर्वासोविन्यास-विशेषरूपोपव्यानात्मिकायाश्चेतिकर्त्तव्यतायाः शीतवातादिवारणात्मकदृष्टार्थत्वमात्रेणापर्य-वसानाददृष्टार्थत्वावगतेस्तदाकाङ्क्षा न सम्भवतीत्याशङ्कयाह—**अतश्चेति ।** विवक्षादिक्रमेणो-पजनितो यो वर्णग्रहणसामर्थ्यकरणरूपः श्रोत्रसंस्कारः तदनुगृहीतेनेत्यर्थः । तस्माददृष्टार्थोप-व्यानादीतिकर्त्तव्यताकाङ्क्षाप्यस्तीत्युपसंहरति—**तस्मादिति ।** सामिधेनीनामवान्तरप्रकरण-सद्भावे वासोविन्यासरूपस्योपव्यानस्य तदङ्गत्वसम्भवेन प्रकरणविच्छेदकत्वायोगात्प्रकरण-निवृत्तिरूपसिद्धान्तशङ्कानुपपत्त्या सन्देहाक्षेपार्थं कथं पुनरिति भाष्यमवान्तरप्रकरणनिवृत्त्य-

निश्चयेनावान्तरप्रकरणविरोधानिश्चयान्महाप्रकरणेन दर्शपूर्णमासार्थत्वसिद्धान्तसिद्धेरयुक्तमाशङ्क्योपपादयितुमाह—**एवं तर्हीति**। सन्दिग्धेऽपि बलवद्विरोधे दुर्बलस्य विनियोक्तृत्वं न सम्भवतीत्याशयः। सामिधेनीप्रकरणविच्छेदकोक्त्यर्थं निवित्पदानीतिभाष्यं व्याचष्टे—**उच्यते इति**। एवं सत्यावान्तरप्रकरणानुवृत्तिरूपपूर्वपक्षशङ्कानुपपत्तेः सन्देहो न सम्भवतीत्याक्षेपार्थं यदीति भाष्यं व्याचष्टे—**एवं तर्हीति**। निविद्भिर्विच्छिन्नस्यापि सामिधेनीप्रकरणस्य काम्यैः सामिधेनीकल्पैरुज्जीवनसम्भवासम्भवसन्देहादनुवृत्त्यननुवृत्तिसन्देहोपपादनार्थं परस्तादितिभाष्यं व्याचष्टे—**नैतदिति**। किन्तावदित्यादि पूर्वपक्षभाष्यं तात्पर्यतो व्याचष्टे—**किन्तावदिति**। निविद्भ्यः प्राक्पश्चाच्च सामिधेनीनाङ्कीर्त्तनात्काम्यसामिधेनीकल्पपर्यन्तं सामिधेनीप्रकरणानुवृत्तावप्युपव्यानपर्यन्तं कथमनुवृत्त्यवगतिरित्याशङ्क्य तिष्ठन्नन्वाह, अन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्यः अथान्वाहेत्युपव्यानात्पश्चादपि सामिधेनानुवचनाङ्गकीर्त्तनात् 'देवा वै सामिधेनीरनूच्य यज्ञं नान्वपश्यन्निति च स्रौवाघारविध्युपक्रमे सामिधेन्यनुवचनोपसंहारादुपव्यानेऽपि सामिधेनीप्रकरणानुवृत्तिः स्थितोक्त्या सूचिता।

निविदामप्यव्यवधायकत्वार्थं सन्देहसमर्थनोपसंहारभाष्यानुसारात्परप्रकरणे पाठमुक्त्वा, पदोत्तरत्वेनोत्तरसूत्रं व्याख्यातुमथ वेत्युक्तम् सामिधेनीनामग्निविदामपि अग्निसमिन्धनप्रकाशनार्थत्वेऽपि सामिधेनीनामग्निसमिन्धनार्थेध्मकाष्ठप्रक्षेपप्रकाशनार्थत्वान्निविदामिध्मप्रक्षेपफलाग्निसमिन्धननिष्पत्तिप्रकाशनार्थत्वादगन्मस्वः संज्योतिषा भूमेति दर्शपूर्णमासफलनिष्पत्तिप्रकाशनार्थस्य मन्त्रस्य दर्शपूर्णमासाङ्गत्ववत्सामिधेनीप्रकाश्येध्मप्रक्षेपफलनिष्पत्तिप्रकाशनार्थत्वान्निविदां सामिधेन्यङ्गता युक्तेत्याशयः। उत्तरार्द्धं व्यचष्टे—**यथेपि**। पूर्वपक्षमुपसंहरति—**इतीति**।

सिद्धान्तमाह—**इति प्राप्त इति**। सौत्रवाक्यभेदशब्दोक्तेऽवान्तरप्रकरणरूपवाक्यैकवाक्यत्वाभावे ब्रूम इत्यनेनार्थाद्व्याख्याते तदुपपत्तित्वेन व्यावायोक्तिव्याख्यार्थं **विच्छिन्ने**त्युक्त्वा, काम्यैः सामिधेनीकल्पैः सामिधेनीप्रकरणोज्जीवनान्न निविदां विच्छेदकत्वं भवतीत्याशङ्क्य, न हीत्युक्तम् न हीत्येतावतो निषेधार्थत्वाद्धिशब्दद्वयापौनरुक्त्यम् निविदामपि सामधेन्यङ्गत्वात्कथं तत्प्रकरणविच्छेदकतेत्याशङ्क्य, सामिधेनीभिरसम्बद्धे ग्रन्थेनेति भाष्यावयवसूचितं निविदामनङ्गत्वमुपपादयितुमाह—**तावद्धीति**।

नन्विद्ध इति भूतनिष्ठया सामिधेनीप्रकाश्येध्मप्रक्षेपफलाग्निसमिन्धननिष्पत्तिप्रकाशनादगन्मस्वरित्यादीनां दर्शपूर्णमासाङ्गत्ववन्निविदां सामिधेन्यङ्गत्वं भविष्यतीत्याशङ्क्याह—**तत्रेति**। दर्शपूर्णमासादिफलस्यादृष्टद्वारसाध्यत्वेन श्रद्धापेक्षत्वाच्छ्रद्धाजननात्फलनिष्पत्तिप्रकाशनस्याङ्गत्वं युक्तम्। इध्मप्रक्षेपफलस्यात्वग्नेः समिद्धत्वस्य दृष्टद्वारसाध्यत्वेन श्रद्धानपेक्षत्वात्फलनिष्पत्तिप्रकाशनस्याङ्गत्वं न युक्तमित्याशयः। सामिधेनीनामपि निवित्प्रकाश्याग्निसमिन्धनसाधनेध्मप्रक्षेपप्रकाशनार्थत्वान्निविदङ्गता कल्पयितुं शक्येत्याह—**अथेति**। पूर्वार्द्धंव्याख्यामुपसंहरति—**तेनेति**। उत्तरार्द्धं व्याख्यातुमाह—**कम्यास्त्विति**। 'एकविंशति-

मनुब्रूयात्तत्प्रतिष्ठाकामस्ये'त्यादिषष्ठीश्रुत्या काम्यकल्पानां पुरुषार्थत्वावगतेः प्रकरणेनाग्रहणात्तदुज्जीवनं न सम्भवतीत्याशयः ।

नन्वेवं सति काम्यकल्पेनैव प्रकरणविच्छेदसम्भवान्निविद्भिर्विच्छेदोक्तिरनर्थिकेत्याशङ्क्याह—**यदि पुनरिति** । नन्वेनङ्गत्वेऽपि निविदां परप्रकरणपाठसम्भवान्न प्रकरणविच्छेदकतास्तीत्याशङ्क्याह—**अथापीति** । काम्यकल्पानामङ्गत्वाभावेन प्रकरणानुवृत्तिप्रमाणाभावान्न तद्बलेन परप्रकरणपाठकल्पना युक्तेत्याशयः । एवं च निविदामङ्गत्वस्य, परप्रकरणपाठस्य वा कल्पयितुमशक्यत्वादवान्तरप्रकरणविच्छेदकत्वसिद्धेर्महाप्रकरणेनोपवीतस्य कृत्स्नदर्शपूर्णमासार्थता युक्तेति सूत्रार्थमुपसंहरति—**नत्विति** ।

ननु दध्नेन्द्रियकामाधिकरणन्यायेनैकविंशत्यादेर्गुणात्फलावगतेर्निराश्रयस्य च गुणस्य फलान्वयानुपपत्तेः विच्छिन्ने च प्रकरणे तेनापादानाद्वाक्येन त्वाश्रयदाने गुणफलाश्रयाश्रयिसम्बन्धद्वयकरणात् वाक्यभेदापत्तेर्भावनान्तरत्वाद्वा वाक्यभेदपरिहारे रेवतीवारवन्तीयादिष्वपि वाक्येनाश्रयदानाद् गुणफलान्वयोपपत्तेः स्थितसिद्धान्तहानिप्रसङ्गात्प्रकरणेनाश्रयलाभार्थं विच्छिन्नस्याऽपि प्रकरणस्य काम्यकल्पैरुज्जीवनावगतेरुपवीतस्याऽपि सामिधेन्यङ्गत्वप्रसङ्गाद् दुर्घटः सिद्धान्त इत्याशङ्कते—**ननु चेति** ।

प्रकृताश्रयालाभात्कर्मण एवात्र फलं न गुणादिति परिहरति—**उच्यते इति** । श्लोकं व्याचष्टे—**नैवेति** । ननु कर्मान्तरत्वे संख्येयाऽनुपादानात्संख्यामात्रविशिष्टानुवचनविधिरपरिपूर्णः स्यादित्याशङ्क्यातिदेशात्संख्येयसाम्यमाह—**कथमिति** । ननु कर्मान्तरत्वेऽपि काम्येनैव सामिधेन्यनुवचनेन प्रसङ्गात् क्रत्वर्थसामिधेन्यनुवचन-कार्याग्निसमिन्धनप्रकाशनसिद्धेर्गुणकामतुल्याऽनुष्ठानावगमात्कर्मान्तरत्वोक्तिः किमर्थेत्याशङ्क्याह—**यद्यपि चेति** । अनुष्ठानाविशेषेऽपि प्रकृताश्रयालाभाद् गुणफलान्वयाऽनुपपत्तेः कर्मान्तरविधि विना वाक्यानर्थक्यप्रसङ्गात्कर्मान्तरतोक्तेत्याशयः । ननु कर्मान्तरत्वे पृथक्प्रयोगापत्तेस्तेन प्रसङ्गात् क्रत्वर्थसामिधेन्यनुवचनकार्यासम्भवात्कर्मान्तरत्वयोरनुष्ठानविशेषोऽस्त्येवेत्याशङ्कते—**नन्विति** । प्रकृतानुपयोगित्वादेव तावन्नेयं शङ्का युक्तेत्याह—**न तावदिति** । न च कर्मान्तरत्वेऽपि पृथक्प्रयोगापत्तिरित्याह—**न चेति** । एतदेव प्रश्नपूर्वमुपपादयति—**कुत इति** । यस्य नमः प्रवक्त्र'इत्यादि निगदस्य पश्चात्सामिधेनीवचने क्रियमाणे पश्चाद्वचनवाच्येकविंशतिमनुब्रूयादित्ययमनुशब्दः प्रयुज्यते । तस्य निगदरूपस्यान्यप्रयुक्तत्वेन पृथक्प्रयोगे सति सामधेनीभिरलाभादनुवचनत्वविघातापत्तेर्न पृथक्प्रयोगो युक्त इति, भावे शानचमङ्गीकृत्यं व्याख्येयम् । पृथक्प्रयोगेऽपि सामिधेन्यङ्गत्वान्निगदो लप्स्यत इत्याशङ्कां निरस्यन् श्लोकं व्याचष्टे—**योहीति** । जातवेदो रमया पशून्मयीति लिङ्गान्निगदस्याप्यग्निप्रकाशनार्थत्वावगतेर्न सामिधेन्यङ्गतेत्याशयः । 'अग्नये समिध्यमानानुब्रूहो'ति प्रैषपश्चाद्भावनिमित्तोऽनुशब्दो भविष्यतीत्याशङ्क्य, पृथक्प्रयोगे क्रत्वर्थाग्निसमिन्धनप्रैषप्राप्तेरनाशङ्क्यत्वान्निगदानन्तर्यनिमित्ततानुशब्दस्याशङ्क्येत । सा च स्वातन्त्र्ये सति न सम्भवतीति परिहारार्थं

तदनन्तरत्त्वेन चेत्युक्तम्। पृथक्प्रयोगे च सत्येकविंशत्यादिसंख्यापरिच्छेद्यत्वेनातिदेश-प्राप्तानामपि 'प्रवोवाजा अभिद्यव' इत्याद्यानामृचामग्निसमिन्धनाप्रकाशकत्वेन सामिधे-नीत्त्वाभावापत्तेरप्रयोगमध्यस्य चाग्नेर्निष्प्रयोजनत्वेनासमिन्धनीयत्वादृचामग्निसमिन्धन-प्रकाशकत्वानुपपत्तेः समिधेनीनामेकविंशत्यादिसंख्यापरिच्छेद्यताऽतिदेशप्राप्ता विहन्येते-त्याह—**किञ्चेति**। श्लोकं व्याचष्टे—**एकविंशत्यादिभिस्तावदिति**। उत्तरार्द्धव्याख्यार्थं सचेत्युक्तम्। कथं तर्हि कर्मान्तरत्वेऽप्यन्तः क्रतुप्रयोगसिद्धिरित्याशङ्क्याह—**तेनेति**। येन कारणेनाग्निसमिन्धनप्रकाशनत्वं विना सामिधेनीत्वं न सम्भवति क्रतुप्रयुक्तत्वं च विनाग्नेः समिन्धनीयत्वं न सम्भवति तेन कारणेन अर्थाभिधानकर्म च भविष्यता संयोगस्य तन्नि-मित्तत्वात्तदर्थं हि विधीयते (४.१.२६) इति चतुर्थाधिकरणन्यायेनास्याग्निसमिन्धनप्रकाश-नार्थसामिधेनीकर्मस्वरूपस्य प्रकृतिभूतक्रत्वर्थसामिधेन्यनुवचनवत्काम्ये सामिधेन्यनुवचने अनुप्रयोगवशात्प्रयोगमध्यपात्यग्निसमिन्धनाधीनत्वं कर्मान्तरभूतस्यापि काम्यस्य सामि-धेन्यनुवचनस्येत्युक्तं प्रयोगमध्यपात्यग्निसमिन्धनप्रकाशनस्य पञ्चदशसंख्यावच्छिन्नसामि-धन्यनुवचनेन सिद्धिरित्याशङ्क्य, प्राकृतस्य चेत्युक्तम्। उपवीतस्य निविद्व्यवहितक्रत्वर्थ-सामिधेन्यनङ्गत्वेऽपि काम्यसामिधेन्यङ्गत्वं भविष्यतीत्याशङ्कार्थं ननु सामिधेनीकल्पाना-मिति भाष्यं व्याचष्टे—**नन्विति**। निविद्व्यवधानान्निवृत्तस्य क्रत्वर्थसामिधेनीप्रकरणस्य काम्येषु सामिधेनीकल्पेषु प्रकरणेनाश्रयालाभाद्वाक्येनाश्रयान्वयाभ्युपगमापत्तेस्तत्र च वाक्यभेदप्रसङ्गाद् गुणफलान्वयासम्भवनाश्रयापेक्षाभावात्तन्निमित्तोज्जीवनाऽनुपपत्तेः। प्रकरणेनाश्रयालाभेऽपि गुणफलान्वयाभ्युपगमेनाश्रयतया सामिधेनीग्रहणेऽपि तासां संख्यान्वयित्वमात्रेण ग्राह्यतया कर्त्तव्यत्वेनाविधानात्संख्यासामिधेन्यन्वयस्य वाक्येनैवाभ्यु-पगमनीयत्वापत्तेः, गुणफलान्वयेऽपि प्रकरणानपेक्षणात्सामिधेनीनां प्रकृतत्वाभावात्प्रकरणे-नोपवीतग्रहणानुपपत्तेः सामिधेनीवाक्यानन्तर्गतत्वाच्च वाक्येनोपवीतग्रहणस्यानाशङ्क्यत्वान्न काम्यानामपि सामिधेनीनामुपवीतमङ्गमिति परिहारार्थं नेति ब्रूम इत्यादि भाष्यं काम्येषु सामिधेनीकल्पेषु क्रत्वर्थसामिधेनीप्रकरणाननुवृत्तावपि काम्यसामिधेनीप्रकरणेनैवोपवीत-ग्रहणोपपत्तेर्गुणफलान्वयस्य च विच्छिन्नप्रकृताश्रयत्वेनानिष्टत्वादुपेक्ष्य, स्वयङ्काम्यानां सामिधेनीनां प्राकृताङ्गनिराकाङ्क्षत्वेन प्रकरणाभावात्, सद्भावेऽपि 'देवा वै सामिधेनीर-नूच्येत्यस्याघारार्थवादाङ्गत्वेन सामिधेनीप्रकरणाननुवर्त्तकत्वादनुवर्त्तकान्तरस्य चाना-शङ्कनीयत्वात्सन्निधिनोपवीतमङ्गं स्यात्। स च प्रकरणात् दुर्बल इत्येवं परिहारमाह—**नैतदिति**। श्लोकं व्याचष्टे—**सर्वास्वेवेति**। अतिदेशलभ्यानामपि प्राकृतामङ्गानां क्लृप्तोप-कारकत्वेनोपदिष्टेभ्यः प्राग्विकृतिभिर्ग्रहणात्पृषदाज्येनानुयाजान्यजतीत्यादीनां च प्राकृतानां गुणत्वेनोपदिष्टानामपूर्वाणामप्यङ्गानां स्वाङ्गपरिपूर्णप्राकृताङ्गग्राहिण्या विकृतिभावनया-कृताङ्गग्रहणवेलायामेव ग्रहणात्तदङ्गानाञ्चानिवृत्ताकाङ्क्षत्वात्प्रकरणेनैव प्राकृताङ्गगुणभूता-प्राकृताङ्गग्रहणोपपत्तेस्तद्व्यावृत्त्यै यदित्युक्तम्। प्राकृताङ्गग्रहणसमकाललक्षणार्थो मध्य-शब्दः। अभिषेचनीयसन्निधिपठितानां विदेवनादीनां स्थानादभिषेचनीयाङ्गत्वस्य प्रति-

भासमानस्य प्रकरणावगतेन राजसूयाङ्गत्वेन बाधो बलाधिकरणे वक्ष्यमाणः काम्यसामिधेनीसन्निधिनोपवीतस्य काम्यसामिधेन्यङ्गतायाः प्रकरणावगतेन दर्शपूर्णमासाङ्गत्वेन बाधसिद्ध्यै दृष्टान्तितः। तस्मादिति सिद्धान्तोपसंहारभाष्यं व्याचष्टे—**तस्मादिति** ॥ २१ ॥

**॥ इत्येकादशमुपवीताधिकरणम् ॥ ११ ॥**

भा० प्र०—अवान्तर प्रकरण एवं महाप्रकरण के मध्य में किसी विनियोजन का विचार किया जा रहा हैं। दो पदार्थों में परस्पर आकाङ्क्षा का ही नाम प्रकरण है। उनमें फलभावना प्रकरण को महाप्रकरण कहा जाता है, अतिरिक्त अवान्तर प्रकरण है।

दर्शपूर्ण मास प्रकरण में सप्तम एवम् अष्टम अनुवाक में सामधेनी मन्त्र का ब्राह्मण नवम अनुवाद में काम्य सामिधेनी = इस कामना में ये सामधेनो मन्त्र पाठ्य हैं, इस प्रकार कामना निर्देशपूर्वक विशिष्ट संख्या से युक्त सामधेनी पढ़ा जाता है। एकादश अनुवाक में "निवीतं मनुष्याणां प्रचोनावीतं पितॄणाम् उपवीतं देवानाम्" इस श्रुतिवचन में उपवीत विहित होता है। यह उपवीत अवान्तर प्रकरण के अनुसार सामिधेनी का अङ्ग है या महाप्रकरण के अनुसार दर्शपूर्णमास का अङ्ग है—यही संशय है।

भावना का अर्थात् प्रधान विधि का जो प्रकरण, प्रधान कर्म की जो इतिकर्तव्यताकाङ्क्षा, वह महाप्रकरण है। फलभावना के मध्य में अङ्ग भावना का जो प्रकरण अर्थात् अङ्गविधि से प्रतिपाद्य भावना की जो इतिकर्तव्यताकाङ्क्षा—वह अवान्तर प्रकरण है। इसमें पूर्वपक्षी का कहना है सामिधेनी प्रकरण के बाद निवित् नाम के मन्त्र का प्रकरण रहने पर भी उसके बाद पुनः जब काम्य सामिधेनी का प्रकरण रहता है, तब सामिधेनी का प्रकरण निवृत्त नहीं होता है। अतः, प्रथम सामधेनी वाक्य बुद्धिस्थ रहता है और द्वितीय काम्य सामधेनी वाक्य उपवीतविधि के निकटस्थ रहता है अतः, उपवीत सामधेनी का अङ्ग है। इसलिए, "क्या कर्तव्य है इस समय उपवीत कर्तव्य है" इस प्रकार की आकाङ्क्षा को बुद्धिस्थ सामधेनी वाक्य एवं निकटस्थ काम्य सामधेनी वाक्य इन दोनों के द्वारा निवृत्त हो जाता है, अतः, उपवीती होना ही सामधेनो पाठ्य है—इस प्रकार का अर्थ होता है। अतः, इस स्थल में भी पूर्व अधिकरण का सन्दंशन्याय के अनुसार उपवीत सामधेनी का ही अङ्ग है। क्योंकि, उपवीत के पूर्व में और बाद में सामिधेनी विषयक विधि रहती है और सामधेनी का प्रकरण अवान्तर प्रकरण ही रहता है।

इस पूर्वपक्ष के समाधान में सिद्धान्ती का कहना है—"सन्दिग्धे तु वाक्यभेदः स्यात्" किन्तु इस प्रकार के सन्दिग्ध स्थल में वाक्य-भेद कर्तव्य हैं अर्थात् सामिधेनी वाक्य के साथ एकवाक्यता का अभाव होगा अर्थात् सामिधेनी वाक्य के साथ अन्वित नहीं होगा। इसका क्या कारण है ? "व्यवायात्" अर्थात् यह अन्य प्रकरण के द्वारा व्यवहित रहता है। पूर्वपक्षी का यह कथन कि सामिधेनी वाक्य बुद्धिस्थ है, यह सङ्गत

नहीं है। कारण बाद में "निवित्" संज्ञा वाले प्रकरण के रहने से सामिधेनी का प्रकरण विच्छिन्न हो जाता है। जो शेष होकर अन्य विषय से व्यवहित होता है—वह बुद्धिस्थ नहीं हो सकता है। अतः, इस स्थल में सन्दंशन्याय की प्रवृत्ति नहीं होती है, कारण, जिस स्थल में पूर्व में और बाद में वाचनिक गुण नहीं रहता है, वहाँ सन्दंशन्याय प्रवृत्त नहीं होता है और सन्दंशन्याय प्रवृत्त न होने पर प्रकरण विनियोजक नहीं होने के कारण सामिधेनी का अवान्तर प्रकरण उपवीत का विनियोजक न होने से उपवीत सामिधेनी का अङ्ग नहीं होता है, इसलिए दर्शपूर्ण मास का उतना कर्म ही उपवीती अर्थात् बायें कन्धे पर उत्तरीय रखना कर्तव्य होता है।

"सन्दिग्धे" = सन्दिग्ध स्थल में अर्थात् महाप्रकरण एवम् अवान्तर प्रकरण ने मध्य में कौन विनियोजक है इस प्रकार के सन्देह के विषय उपवीत आदि वाक्य में, "तु" = पक्षान्तर का सूचक है, "व्यवायात्" = व्यवधान होने से, "वाक्यभेदः स्यात्" = वाक्य-भेद कर्तव्य होता है, अर्थात् उपवीत सन्निधान से विच्छिन्न होकर महाप्रकरण के अनुसार सभी कर्मों का अङ्ग होता है।

युधिष्ठिर मीमांसक ने इस सूत्र की व्याख्या में विभिन्न आक्षेपों को लिखते हुए इस प्रकरण का व्याख्यान किया है।

**विवरण—हृदयमनुविपरिवर्तमानासु**—हमें यह पाठ अशुद्ध प्रतीत होता है। तन्त्र-वार्तिक और बृहती टीका में इसकी व्याख्या नहीं है। हमने कथञ्चित् उक्त पाठ की व्याख्या कर दी है। हमारे विचार में यहाँ **'हृदयमनु अविपरिवर्तमानासु सामिधेनीषु'** (हृदय में अपरिवर्तित रूप से वर्तमान सामिधेनियों में) पाठ होना चाहिए।

**यज्ञोपवीत (=जनेऊ) का स्वरूप—कर्तुश्च वासोविन्यासमात्रं गुणो भवत्युपवीतं नाम** इससे स्पष्ट होता है कि यज्ञोपवीत=जनेऊ का जो त्रिवृत् तन्तु स्वरूप है, वह अर्वाचीन है। प्राचीन काल में दुपट्टे को धारण करने की ही तीन विधियाँ उपवीत प्राचीनावीत और निवीत कहाती थीं। मानुषकर्म=सभा आदि में उपस्थिति के समय दुपट्टे को गले में डालकर दोनों छोर आगे लटकाये जाते थे। [ऐसी प्रथा अभी भी कहीं-कहीं है]। यज्ञकर्म और पितृकर्म करते समय दुपट्टे के लटकने वाले दोनों छोर कर्म में बाधक न होवे, इसलिये यज्ञकर्म के समय दाहिने कन्धे पर आने वाले छोर को पीछे की ओर दाहिने हाथ के नीचे से निकालकर बाँये कन्धे पर डाला जाता था। यही दुपट्टा धारण का रूप **'उपवीत'** कहलाता था। पितृकर्म में उक्त विधि से उलटा बायें हाथ के नीचे से उस छोर

को निकालकर दाहिने कन्धे पर डाला जाता था। यह स्वरूप प्राचीनावीत था। मानुष कर्म में दुपट्टे के दोनों छोर आगे को लटकाना निवीत कहाता था।

**अन्य प्रमाण**—धर्मशास्त्रों में स्नातक नियमों में उत्तरीय वस्त्र ( = शरीर ढाँकने का वस्त्र चादर) के अभाव में द्वितीय यज्ञोपवीत धारण करने का विधान उपलब्ध होता है। उत्तरीय वस्त्र का प्रयोजन तन्तुरूप यज्ञोपवीत से सिद्ध नहीं हो सकता है। इससे विदित होता है कि पुराकाल में यज्ञोपवीत दुपट्टा जैसा वस्त्रविशेष ही था, जिसे आवश्यकता पड़ने पर उत्तरीय वस्त्र के रूप में धारण किया जा सकता था। महाभारत में युद्धक्षेत्र में भीष्म के वर्णन में लिखा है—**'श्वेतयज्ञोपवीतवान् शुशुभे च पितामहः'**। **उपव्ययते देवलक्ष्ममेव तत् कुरुते** (तै० सं० २।५।११) से भी इसे देवचिह्न कहा है। कादम्बरी में भी महाश्वेता के वर्णन में **यज्ञोपवीतेनालंकृताम्** विशेषण प्रयुक्त हुआ है। वहाँ भी यज्ञोपवीत वस्त्र के ऊपर धारण किया जाता था। दूसरी—वह शोभा का कारण भी बनता था। तन्तुरूप यज्ञोपवीत सूक्ष्म होने से शोभा वा अलंकार का कारण उपपन्न नहीं होता है। इससे स्पष्ट है कि तन्तुरूप यज्ञोपवीत का स्वरूप अर्वाचीन है। उसका वस्त्र के नीचे धारण करना तो सम्भवतः मध्यकाल में हुआ है। इस दृष्टि से जो लोग तन्तुरूप यज्ञोपवीत के विधान के लिए मन्त्रों में प्रयुक्त त्रिवृत् शब्द का आश्रय लेते हैं, और इसके एक-एक तन्तु के प्रयोजन वा महात्म्य के वर्णन में आकाश-पाताल एक कर देते हैं। वह सब यज्ञोपवीत के प्राचीन स्वरूप को यथावत् न जानने से चिन्त्य है। वस्त्ररूप यज्ञोपवीत दैव, पितर वा मानुष कर्म के समय में ही धारण किया जाता था। शयनकाल में वह वस्त्र खूँटी पर टाँग दिया जाता था।

**शौचादि के समय कान पर जनेऊ लपेटने का कारण**—जयपुर के राजगुरु स्व० श्री पं० मधुसूदन जी ओझा ने सन् १९३१ में शतपथ ब्राह्मण पढ़ाते हुए, एक शिष्य द्वारा शौचादि के समय कान पर जनेऊ लपेटने का कारण पूछने पर कहा था—'शौचादि के समय कान की नस से ब्रह्मप्राण बाहर निकलता है, उसे रोकने के लिए कान पर जनेऊ लपेटा जाता है।' यज्ञोपवीत संस्कार से पूर्व वा संन्यास के समय यज्ञोपवीत त्यागने पर भी ब्रह्मप्राण निकलता रहेगा, ऐसा मेरे पूछने पर कहा कि 'उपवीत-संस्कार के समय ही ब्रह्मप्राण उत्पन्न होता है और संन्यास-संस्कार से समाप्त हो जाता है। स्त्री और शुद्रों में ब्रह्मप्राण होता ही नहीं है। ऐसी विना सिर पैर की कल्पना भी सर्वथा हेय है। कान पर जनेऊ लपेटने में सीधा-सादा दृष्ट प्रयोजन है। अशुचि अवस्था में सम्भाषण आदि का धर्मशास्त्रों में निषेध किया है। कान पर जनेऊ लपेटने से यह

विदित हो जाता हैं कि यह व्यक्ति सम्प्रति अशुचि है। अतः इससे सम्भाषण नहीं करना चाहिये।

आचार्य मीमांसक जी ने यज्ञोपवीत के आधुनिक गृहीत स्वरूप की आलोचना करते हुए लिखा है कि तीन सूत का व्यवहृत यज्ञोपवीत स्मृति काल की देन है, किन्तु "नववै-त्रिवृत्" इस श्रुति के अनुसार आज का व्यवहार ही युक्ति-सङ्गत प्रतीत होता है। "दक्षिणं वाहुमुद्धरतेऽवधते हव्य मिति यज्ञोपवीतम्" (तै० आ० २) इस श्रुतिवचन के अनुसार भी इसी की सिद्धि होती है।

इतना सत्य है अमुख्य यज्ञोपवीत वस्त्रात्मक या दर्भात्मक भी होता है, यह मुख्य यज्ञोपवीत की उपलब्धि न होने पर ही व्यवहृत माना गया है। ब्रह्मचारी वेदाध्यायी के लिए "वासः कृष्णा जिमं परम्" इत्यादि वचनों के अनुसार कृष्णाजिन का ही विधान किया गया है।

"नित्यमुत्तरं वासः कार्यम्" इस वचन में उत्तरं वासः यह ऊपर के वस्त्र अर्थ का बोधक है किन्तु इसके बाद में "अपि सूत्रमेवोपवीतार्थे" इस सूत्र का उपवीत के अर्थ में विधान है वस्त्र का नहीं, क्योंकि "अजिनं त्वेवोत्तरं धारयेत" (आ० ध० १-३-१०) सूत्र के अनुसार ब्रह्मचारी के लिए द्वितीय वस्त्र का निषेध होने से ग्रन्थि-युक्त तीन सूत्र का ही नित्य व्यवहार मानना होगा।

आपस्तम्ब की व्याख्या उज्ज्वला में स्पष्ट शब्दों में निर्देश है कि "यज्ञोपवीती द्विवस्त्रः अधोनिवीत स्त्वेकवस्त्रः (आ० ध० १-२-६-१९)। इसकी व्याख्या में उज्ज्वला-कार ने कहा है "यदा द्विवस्त्रस्तदाऽन्यतरेण यज्ञोवीती स्यात् अपि वा सूत्रमेवोपवीतार्थ इत्येषकल्पस्तदा न भवति, यदा त्वेकवस्त्रो भवति तदाऽधोनिवीतस्यात् न तस्य दीर्घ-स्याप्येकदेशेन उत्तरीयं कुर्यात्" इस वचन के अनुसार अजिन द्वितीय वस्त्र के रूप में कहा गया है और नवतन्तु समन्वित त्रिवृत को यज्ञोपवीत माना गया है, वस्त्र का संक्षिप्त रूप आज का यज्ञोपवीत नहीं है।

"यज्ञोपवीतं कृत्वाऽधोनिपपात नमोनमः" इस श्रुति के आधार पर "यज्ञोपवीतं कृत्वाऽधोनिपतेत" इस विधि से यज्ञोपवीत पद अजिनवस्त्र विन्यास विशेषपरक है स्मृत्युक्त ब्रह्मसूत्रपरक नहीं है। "यज्ञोपवीत्यधीन" यहाँ "अजिनंवासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम्" इस वाक्य शेष से उस शब्द की रूढि अर्थ की बोधकता सिद्ध होती है। "त्रिवृद्ध विष्यवमानम्" यहाँ वाक्य शेष से स्तोत्रीय नवक में 'त्रिवृत्' शब्द रूढ होने से "त्रिवृदग्निष्टुवदग्निष्टोमः" इत्यादि में वाक्य शेष रहित में भी स्तोत्रीयानवकपरक ही मानना उचित है लौकिक त्रैगुण्यपरक नहीं है। त्रिवृदधिकरणन्याय प्रकृत में भी समान है, अतः प्रणाम में गौण उपवीत परक वर्णित है।

वस्तुतः यह व्याख्यान उचित नहीं है, क्योंकि, "यज्ञोपवीत्यधीत" इस श्रुति के अनुसार मुख्य यज्ञोपवीत परक ही इसका मानना उचित है।

तन्त्रवार्तिक में "यज्ञोपवीतिना कर्तव्यम्" इसे आक्षिप्त "न न्विह यज्ञोपवीतमुदाहर्तव्यं दर्शपूर्णमासादिषु उपव्ययते देवलक्ष्ममेव तत्कुरुत इति क्रत्वङ्ग प्रत्यक्ष विधानात्" तथा काठ के "चानारभ्यवादविधिना सर्वयज्ञगत यजनयाजनसम्बन्धोऽध्ययनाध्यापनसम्बन्धश्च श्रूयते"। यह प्रत्यक्षश्रुतिवाक्य यज्ञोपवीत का विधायक है, यद्यपि 'अजिनं वासो वा' इस अग्रिम वाक्य की पर्यालोचना से "यज्ञोपवीत्येवाधीयीत" यहाँ पर यज्ञोपवीत शब्द अजिन वस्त्रविन्यास विशेषमात्रपरक प्रतीत होता है। त्रिवृत्सूत्र नवतन्तुक त्रिग्रन्थि युक्त यज्ञोपवीतपरक प्रतीत नहीं होता है तथापि अजिन और वासः का ग्रहण यज्ञोपवीत शब्दार्थ के अन्तर्गत नहीं है। "दक्षिणत उपवीयदक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतम्" एतावन्मात्र ही यज्ञोपवीत संज्ञा करने से तन्मात्र ही शब्दार्थ है। इसीलिए भट्टभास्कर ने कहा है—"अजिनं वासो वेति द्रव्यविधिः" यह कहकर यज्ञोपवीत का लक्षण कहा है, "दक्षिणत उपवीय" इत्यादि कथन से तावन्मात्र ही यज्ञोपवीत का स्वरूप है। इस प्रकार सामान्य रूप से लक्षण कथन की अवतारणा से अजिन और वास के ग्रहण को प्रदर्शन परक मानकर नवतन्तुक साधारण से ही यज्ञोपवीती ही अध्ययन करे "यज्ञोपवीत्येवाधीयीत" इस श्रुति की प्रवृत्ति होती है। इसीलिए भाष्यार्थ संग्रहकार ने कहा है—

"नवतन्तुदक्षिणं कृत्वा सव्यांसे यन्निधीयते।
तत्सूत्राद्युपवीतं स्याद्दैवे कर्मणि तत्स्मृतम्" ॥

अतः, श्रुति आदि के अनुसार नवत्रिवृत्सूत निर्मित ही यज्ञोपवीत को मानना उचित है। मुख्य और अमुख्य के भेद से यज्ञोपवीत का द्वैविध्य होने से मुख्य यज्ञोपवीत का द्वैविध्य होने से मुख्य यज्ञोपवीत व्यवहार गृहीत ही है।

मीमांसक जी को आर्यसमाज के आग्रह में शिष्टाचार व्यवहार परिगृहीत सिद्धान्त का खण्डन करना ही अपना स्थिर सिद्धान्त नहीं रखना चाहिए। शास्त्र की मर्यादा का साम्प्रदायिक आग्रह के आवेश में अन्यथार्थ करना मीमांसा सिद्धान्त का समूल उच्छेद मात्र ही मानना होगा। तर्क की इयना नहीं है ॥२१॥

### अथ द्वादशं वारणादीनां सर्वयज्ञाङ्गताधिकरणम्

**[१२] गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात् ॥२२॥ सि०**

**शा० भा०—अग्न्याधेये वारणवैकङ्कतपात्राण्यहोमार्थानि, होमार्थानि च श्रूयन्ते। तस्माद्वारणो वै यज्ञावचरः स्यात्। न त्वेतेन जुहुयात्। वैकङ्कतो**

यज्ञावचरः स्यात्, जुहुयादेतेन[1] इति। न च वारणवैकङ्कतानां पात्राणाम-ग्न्याधेयेन सम्बन्धः। कुतः? यज्ञावचरवचनात्। यज्ञस्यैतानि[2] पात्राणि वाक्येन प्रकरणं बाधित्वा भवन्ति। तत्रैष सन्देहः—किं पवमानेष्टिषु निविशन्ते, उत दर्शपूर्णमासादिषु सर्वयागेष्विति। किं तावत्प्राप्तम्? पवमानहविःष्विति। कुतः? उक्तमेतत्, प्रधानेऽसंभवन्पदार्थस्तद्गुणे कल्प्यत इति। अग्न्याधेयप्रकरणे च समाम्नानात्पवमानहविषां तद्गुणता। तस्मात्पवमानहविःष्वित्येवं प्राप्तम्। एवं प्राप्ते। ब्रूमः—

गुणानां समत्वात्। पवमानहविषाम्, अग्न्याधेयस्य च न परस्परेण सम्बन्धः। यथाऽऽधानमग्नेर्गुणः संस्कारार्थः, एवं पवमानहवींष्यप्यग्नेरेव गुणभूतानि। कस्तत्र परस्परेण सम्बन्ध इति।

यदुक्तमाधानस्य प्रकरणे समाम्नायन्ते इति। यद्यपि समाम्नायन्ते, तथाऽपि प्रकरणं बाधित्वा वाक्येनाग्नेर्भवन्ति। किमिह वाक्यम्? यदाहवनीये जुह्वति[3], तेन सोऽस्याभीष्टः प्रीतो भवति इति। नन्वाहवनीयोऽत्र यागस्याधिकरणत्वेन गुणभूतः श्रूयते। सत्यम्। अधिकरणमाहवनीयः। तथाऽपि त्वाहवनीयार्थं एव यागः, प्रयोजनवत्त्वादाहवनीयस्य, निष्प्रयोजनत्वात्पवमानहविषाम्। कथमेषां निष्प्रयोजनता? फलाश्रवणात्। कल्प्यं फलमिति चेत्? सत्यं कल्प्यम्। अग्निसंस्कारस्तु तत्फलम्, न स्वर्गः। स्वर्गे कल्प्यमाने द्विरदृष्टं कल्प्यते। होमाच्च स्वर्गो भवति। तस्य चाऽऽहवनीयेनापरोऽदृष्टः संस्कारः इति। तस्मादग्न्यर्थता पवमानहविषाम्। नैषामाधानेन सम्बन्धः। तस्मान्नाऽऽधाने श्रूयमाणं पवमानहविषां भवितुमर्हति। किं तर्हि? सर्वयागेषु दर्शपूर्णमासप्रभृतिष्वाधानस्य प्रधानभूतेषु निवेश इति ॥२२॥ वारणकङ्कतादिपात्राणां कृत्स्नयागगुणताधिकरणम् ॥ १२ ॥

त० वा०—'आनर्थक्यात्तदङ्गेषु' इत्यस्यापवाद आरभ्यते। वारणवैकङ्कतानि होमार्थानि, अहोमार्थानि च पात्राणि यज्ञगामित्वेन विहितान्याधानप्रकरणं बाधित्वा कतमस्य यज्ञस्य भवन्त्विति 'आनर्थक्यात्तदङ्गेषु' इति पवमानहविःषु विज्ञायन्ते। तथा प्राप्ते।

अभिधीयते:—

वाक्येनाऽऽधानतुल्यानि पवमानहवींष्यपि।
तेनासति तदङ्गत्वे सर्वयज्ञार्थतेष्यते ॥

---

१ ब. देवैतेनेति। २. ब. इतःप्राक्—आग्न्याधानस्य यजतिचोदनारहितत्वादयज्ञत्वं—इत्यधिकम्। ३. ब. जुहोति।

प्रकरणगम्यां पवमानहविषामाधानार्थतां बाधित्वा वाक्येनाग्न्यर्थता विज्ञायते 'यदाहवनीये जुह्वति' इति ।

### भाष्यमते आक्षेपः

तत्र चोद्यते । यद्यस्माद्वाक्यादाहवनीयः पवमानहविषां संस्कार्यो भवति, ततः समानवाक्यनिर्देशादग्निहोत्रादीनामपि प्राप्नोति । अथ तेषां फलवत्त्वादाहवनीयोऽङ्गम्, ततः पवमानहविषामप्यङ्गमेव स्यात् । न ह्येकं वाक्यं फलवतां गुणभूतम्, अफलानां च प्रधानभूतमाहवनीयं वक्तुं समर्थम्, विध्यनुवादोद्देश्योपादेयगुणप्रधानानां युगपद्विरोधात् । सप्तमी चैकत्र[1] द्वितीयार्थं लक्षयति । अन्यत्र स्वार्थमेव वदतीति विरोधः । तथा विश्वजिदादीनामश्रुतफलानामङ्गत्वप्रसङ्गः । सर्वं चायुक्तमेतत् । निष्पन्नश्चाऽऽहवनीय उपदिश्यते । [2]फलवत्कर्मानुरोधेन च [3]भाव्याहवनीयसंज्ञा विज्ञायते ।

### समाधानम्

तस्मात्किलैवं वर्णनीयम् । द्वे ह्येते वाक्ये तुल्यरूपे । पवमानहविष्प्रकरणे-एकम्, अपरमनारभ्यवादे । तत्र प्राकरणिकेन निष्पाद्यमानत्वात्संस्कारापेक्षिण आहवनीयस्याफलानां पवमानहविष्प्रभृतीनां संस्कारत्वेन विधानम् । अनारभ्यवादेन तु निष्पन्नस्य सतः सर्वकर्माण्युद्दिश्याधिकरणत्वेन विधानम् । तस्मादविरोध इति ।

### वार्तिकमतम्

वयं तु ब्रूमः । किमनेनाश्रुतवाक्यकल्पनाक्लेशेन । अन्यथाऽप्येतदुपपद्यत एव । भवन्तु नाम पवमानहवींष्याधानाङ्गम्, तथाऽपि न तत्र पात्राणि भवन्ति । वाजपेयस्य यूप इति हि यूपग्रहणाद्व्यवहितसंबन्धेऽपि षष्ठ्युपपत्तेस्तथा कल्पितम् । न त्विहैवं किंचिदस्ति ।

यत्तु यज्ञावचरग्रहणम्, तत् प्रकृतयज्ञाभावादनारभ्यवादरूपेण सर्वत्र विदधाति । तच्चैतत्पूषाद्यनुमन्त्रणन्यायेनैव सेत्स्यतीति नार्थोऽधिकरणेन ।

सूत्रं तु पूर्वस्यैव पदोत्तरत्वेन नेयम् । ननु निविदां सामिधेन्यङ्गत्वान्न व्यवधायकत्वं स्यात् । अत आह—गुणानां च परार्थत्वादिति । तद् व्याख्यातम् । तथा हि ।

वदन्ति सामिधेनीवन्निविदोऽग्निसमिन्धनम् ।
संयुक्तत्वादतस्तासां नाङ्गं प्रकरणेन ताः ॥ २२ ॥

**( इति द्वादशं वारणादीनां सर्वयज्ञाङ्गताधिकरणम् ॥ १२ ॥ )**

---

१. क. चैवात्र । २. क० निष्फलकर्मानुरोधेन । अफलवत्कर्मानूरोधेन ।
३. क. भाविनीयं संज्ञा ।

**अथ द्वादशं वारणाधिकरणम् ॥ १२ ॥**

न्या० सू०—पात्रविचारस्योपवीतविचारासङ्गतिमाशङ्क्य, वाजपेयाङ्गत्वेनावगतस्य सप्तदशारत्नित्वस्य तत्रासम्भवात्तदङ्गपशुयागावतारेऽभिहिते, तेनैव न्यायेनाभिक्रमणोपव्यानयोः कर्माङ्गभूतकर्त्रवतारे सिद्धे किमभिक्रमणस्य कृत्स्नदर्शपूर्णमासाङ्गत्वात्तदङ्गेषु सर्वर्त्विक्ष्ववतारः प्रयोजहोमाङ्गत्वाद्वा तदङ्गभूतेऽध्वर्युमात्रे उपवीतस्य च किं सामिधेन्यनुवचनमात्राङ्गत्वात्तदङ्गभूते होतृमात्रेऽवतारः, कृत्स्नदर्शपूर्णमासाङ्गत्वाद्वा तदङ्गभूतेषु सर्वर्त्विक्ष्विति विचारात्पर्यवसितस्यानर्थक्यतदङ्गावतारन्यायस्य पवमानेष्टीनामाधानाङ्गत्वेऽपि यज्ञत्वाभावान्नाधानप्रकरणपठितानां पात्राणान्तास्ववतार इति प्रतिपादनात्स्वमतेनापवादतया सङ्गतिमाह—**आनर्थक्यादिति**। भाष्यमते तु किं पवमानेष्टीनामाधानाङ्गत्वात्पात्राणां तास्ववतारोऽनङ्गत्वाद्वानवतार इति विचाराध्प्रासङ्गिकी सङ्गतिः। वैकङ्कतेषु न त्वेतेनेति पर्युदासानुषङ्गशङ्कां निरस्यन्नग्न्याधेय इत्युदाहरणभाष्यं व्याचष्टे—**वारणेति**। वारणानि होमव्यतिरिक्तपात्रकार्यार्थानि, वैकङ्कतानि सर्वपात्रकार्यार्थानीत्यर्थः। प्रकरणेनाधानाङ्गत्वावगमात्पवमानेष्टिष्वेव निवेशः, सर्वयागेषु वेति सन्देहायोगमाशङ्क्य यज्ञेऽवचर्यतेऽनुष्ठीयतेऽनेनेति यज्ञावचरशब्देन यागाङ्गत्वाभिधानात्प्रकरणगम्यागरूपाधानाङ्गत्वबाधेन सन्देहोपपादनार्थं न चेत्यादि भाष्यं व्याचष्टे—**यज्ञेति**। किमित्यादिपूर्वपक्षभाष्यं व्याचष्टे—**आनर्थक्यादिति**। एवमित्यादिसिद्धान्तभाष्यं सङ्क्षिप्य व्याचष्टे—**तथेति**। श्लोकं व्याचष्टे—**प्रकरणेति**। केन वाक्येनेत्यपेक्षायां वाक्यमुदाहरति—**किमितीति**। भाष्यस्थस्येतिकरणस्य येन वाक्येनाग्नेर्भवति, तत्किं वाक्यमित्यग्न्यङ्गत्वप्रतिपादकत्वपरामर्शार्थत्वं सूचितम्। पवमानेष्टीनां कैमर्थ्याकाङ्क्षाया'माहवनीये जुह्वती'ति क्लृप्तफलाहवनीयसंयोगे तत्कल्प्यफलानामिष्टीनां तादर्थ्यावसायादगारे गावो वास्यन्तामगारे कुसुमानीत्यादिवच्च प्राधान्येऽपि सप्तम्यविरोधाज्जुहोत्वनुत्पत्तित्वेन चेष्टिनिरोधानपेक्षणाद्विश्वजिद्वत्स्वर्गेऽपि कल्प्यमाने जुहोत्युपलक्षिताद्यागात्स्वर्गो यागस्य चाहवनीयेनापरोऽदृष्टः संस्कारः इत्यदृष्टद्वयकल्पनापत्तेरग्निसंस्कारकल्पनस्यैवोचितत्वात्पवमानेष्टीनामप्याधानवद्वाक्येनाग्न्यङ्गत्वावगतेर्नाधानाङ्गतेत्याशयः।

सिद्धान्तभाष्यं दूषयति—**तत्रेति**। आहवनीयप्रयोजनाभिधायिवाक्यान्तराश्रुतेरनेनैव वाक्येनाग्निहोत्राद्यङ्गतयाऽऽहवनीयस्य प्रयोजनवत्त्वप्रतीतेरभ्युपगमनीयत्वादग्निहोत्रादीनाम्, पवमानेष्टीनां च श्रुताश्रुतफलत्ववैषम्येऽप्येकेन वाक्येनाहवनीयस्य क्वचिद् गुणत्वे क्वचित्प्राधान्येऽभिधीयमाने वैरूप्यापत्तेः सप्तम्याश्च श्रुतिलक्षणावृत्तिविरोधापत्तेः पवमानेष्टिवच्च विश्वजिदादीनामश्रुतफलत्वेनाहवनीयाङ्गत्वापत्तेर्नानेनाग्न्यर्थत्वं पवमानेष्टीनां गम्यत इत्याशयः। पवमानेष्टीनामपि च प्रकरणावगताधानाङ्गत्वेन फलत्वावसायात्फलवदफलत्वविशेषानुपपत्तेस्तद्वशेनैकस्य वाक्यस्य गुणप्रधानभूताहवनीयोक्तिवैरूप्याभ्युपगमः' सप्तम्याश्च श्रुतिलक्षणावैरूप्याभ्युपगमो विश्वजिदादीनां चाहवनीयाङ्गत्वाभ्युपगमो न युक्त इत्याह—**सर्वं चेति**। फलवदग्निहोत्रादिकर्मानुरोधेन च निष्पन्नाहवनीयोपदेशादफलवत्पवमाने-

ष्टयादिकर्मानुरोधेन च भाव्याहवनीयसंज्ञाविधानादाहवनीयशब्दप्रवृत्तावप्यस्मिन्पक्षे वैरूप्यं स्यादित्याह—**निष्पन्नश्चेति**। फलवत्कर्मानुरोधेनेत्थकारसदसद्भावाभ्यामावृत्त्योभयत्र योज्यम्। 'यदाहवनीये जुह्वति यद्गार्हपत्ये हवींषि श्रपयन्ति, यद्दक्षिणाग्नावन्वाहार्यं पचन्तीत्यानारभ्या'धीतेभ्यः कर्माङ्गत्वेनाहवनीयादिविधायिभ्योऽन्येन पवमानेष्टिप्रकरणाधीतेनानारभ्याधीताहवनीयवाक्यसदृशेनाहवनीयाङ्गतया पवमानेष्टिविधिर्भविष्यतीति परमतेन भाष्यं समाधत्ते—**तस्मादिति**।

नन्वश्रुतप्राकरणिकवाक्यकल्पनां विनाप्यनारभ्यवाक्येनाश्रुतहोमासु पवमानेष्टिषु आहवनीयमुपदेष्टुमशक्नुवताऽतिदेशात्प्राप्तेनाऽहवनीयं प्रापयताऽङ्गत्वेनानिष्पन्नाहवनीयप्रापणाशक्तेः साध्यत्वेन प्रापणावगमात्पवमानेष्टीनामग्न्यङ्गत्वसिद्धेरतिदेशप्राप्तवाक्यव्यापारोक्त्यर्थत्वेन वाक्योक्त्युपपत्तेर्नाश्रुतवाक्यकल्पना युक्तेत्याशङ्कानिराससूचनार्थः किलशब्दः। उपकारपृष्ठेनातिदेशप्रवृत्तेः पवमानेष्टिष्वनिष्पन्नत्वेनाधारतया गुणत्वेन प्राप्तचसम्भवे कार्यलोपात्कृष्णलेष्ववघातवदाहवनीयानिष्पत्तावप्याधानजन्यसंस्काररूपेणैकदेशनिष्पन्नत्वादतिदेशाभ्युपगमेऽङ्गत्वस्याप्युपपत्तेः अतिदेशप्राप्तस्य चाहवनीयस्य साध्यत्वाभ्युपगमेऽन्योन्यानपेक्षास्वाधानानपेक्षास्तु चेष्टिष्वतिदेशप्राप्तेः तादृशीनामेवाहवनीयाङ्गत्वापत्तेराधानपवमानेष्टिसमुच्चयाभ्युपगमविरोधप्रसङ्गादतिदेशप्राप्तस्याहवनीयस्य साध्यत्वानुपपत्तेर्नाश्रुतप्राकरणिकवाक्यकल्पनां विनाग्न्यङ्गत्वं पवमानेष्टीनां सेत्स्यतीत्याशयः। अनारभ्यवाक्यसदृशाश्रुतप्राकरणिकवाक्यकल्पनेऽप्याधानाङ्गत्वात्पवमानेष्टीनामाहवनीयोत्पादकत्वाभ्युपगमेऽगारप्रावारादिवदाहवनीयस्यानिष्पन्नत्वेनाधिकरणतया संस्कार्यत्वायोगात्सप्तमीभङ्गापत्तेः सम्मार्गादिवत्पवमानेष्टीनां कर्मविशेषप्रकरणानधीतत्वेन कर्मविशेषयोग्यताधानात्मकसंस्कारार्थत्वायोगात्साधारणयोग्यताधानस्य चाहवनीयस्वरूपोत्पत्तिमात्रात्सिद्धेरुपनयनादिवत्सर्वकर्मसाधारणस्य सर्वयोग्यताधानात्मकसंस्कारार्थत्वायोगादग्न्यङ्गत्वासिद्धेर्नाश्रुतकल्पना युक्तेत्येतत्समाधानं दूषयति—**वयं त्विति**। कथं तर्हि सिद्धान्तसिद्धिरित्याशङ्क्य, पूर्वपक्षयुक्ताधानङ्गत्वाभ्युपगमेनापि पात्राणां पवमानेष्टिष्वनवतरणमुपपद्यत इत्याह—**अन्यथापीति**। अन्यथात्वमेव दर्शयति—**भवन्तु नामेति**। वाक्यगम्ययूपान्वयेन प्रकरणगम्यसाक्षाद्वाजपेयान्वयबाधाद्वाजपेयाङ्गाङ्गयूपद्वारापि च सप्तदशारत्नित्वस्य वाजपेयोपकारणं[1] किञ्चिदस्तीत्यर्थः। यज्ञग्रहणं पवमानेष्टिष्ववतारकारणं[2] भविष्यतीत्याशङ्क्याह—**यत्त्विति**।

एकादशे'ऽग्नियोगः सोमकाले तदर्थत्वात्संस्कृतैः' कर्मणः परेषु स्वाङ्गस्य तस्मात्सर्वापवर्गे विमोकः स्यादि११-१-१७ इति सूत्रेणाग्नेः साङ्गप्रधानार्थत्वेनाग्नियोगस्यापि तद्द्वारा साङ्गप्रधानार्थत्वावसायात्साङ्गप्रधानापवर्गेऽग्निविमोकं पूर्वपक्षयित्वा प्रधानापवर्गे

---

१. कारित्वोपपत्तेः प्रकरणसम्भवेऽत्यन्तबाधायोगाद्रूपेऽवतरणं कल्पितं पात्रवाक्ये तु पवमानेष्टाद्यग्रहणान्न तद्देवावतार इ० २ पु० अधि०।

२. अवतारेण कारणमिति २ पु० पा०।

तदर्थत्वादि११-१-१८इत्यनेन 'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञ इति श्रुते'र्यज्ञशब्दस्य च स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम' इति वाक्यालोचनया प्रधानयागवाचित्वावसायादग्नियोगस्य प्रधानयागमात्रार्थत्वावगतेः प्रधानमात्रापवर्गेऽग्नि-विमोकसिद्धान्तस्य प्रधानार्थो योगः। प्रधानसंयोगेन हि श्रूयते 'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो'यावानेष यज्ञस्तमालभते इति यज्ञप्राप्त्यर्थं युनक्तीति ज्ञायत इति भाष्ये वक्ष्यमाणत्वाद्।

वार्त्तिककृतापि यज्ञसंयोगार्थवादस्य पञ्चभिर्युनक्तीति गुणवाक्यशेषतयाग्निं युनज्मि शवसा घृतेनेति जुहोतीत्युत्पत्तिवाक्यशेषत्वाभावेन सिद्धान्तदूषणाद्यद्यपि यज्ञसंयोगो भवेत्, तथापि यज्ञशब्दो यागमात्रवचनः। यागमात्रवचनश्चेदङ्गयागानपि वदतीति वार्त्तिके च यागमात्रवाचित्वोक्तेश्चेच्छब्देनैवानभिमतत्वसूचनात्वपवमानेष्टीनां प्राधान्याभावेन प्रधानयागवाचियज्ञशब्दवाच्यत्वाभावमभिप्रेत्य प्रकृतयज्ञाभावा'द्दीर्घसोमे सन्तृद्यादि'तिवत्प्र-करणादुत्कर्षेणानारभ्यवादरूपतां प्रतिपाद्य सर्वेषु दर्शपूर्णमासादिषु प्रधानयागत्वाद्यज्ञशब्द-वाच्येषु यज्ञावचरग्रहणं पात्राणि विदधातीत्युक्तम्।

अनेन चाधानगुणभूतानां पवमानेष्टीनाम्परार्थत्वेनागज्ञतयाधानसमत्वाद्यसंयोगेन श्रुतैः पात्रैरसम्बन्धः स्यादित्येवं सूत्रव्याख्या सूचिता। दर्शपूर्णमासादिषु जुह्वादिपात्राणाम्पर्णतादि-विधावप्युलूखलादिपात्रेषु वारणवैकङ्कतत्वविध्यविरोधः। यज्ञशब्दस्य प्रधानयागवाचित्वेन पवमानेष्टीनां यज्ञत्वाभावप्रदर्शनार्थमेतत्सूत्रम्। अन्यथा तु पवमानेष्टीनां यज्ञत्वाभावाद्यज्ञ-संयोगेन श्रुतानां पात्राणाम्बलवत्प्रमाणविरोधेन प्रकरणादुत्कर्षणं पूषाद्यनुमन्त्रणन्यायेनैव सेत्स्यतीत्यधिकरणानर्थक्यं स्यादित्याह—**तच्चेति**। सूत्रस्य तर्हि का गतिरित्याशङ्क्य शङ्कोत्तरत्वेन पूर्वाधिकरणशेषतया सूत्रङ्गमयितव्यमित्याह—**सूत्रन्त्विति**। शेषतयेत्यध्या-हार्यम्। कथमेतच्छङ्कोत्तरतास्य सूत्रस्येत्याशङ्क्याह—**तदिति**। तामेव व्याख्यां स्मार-यति—**तथा हीति**॥ २२॥

इति द्वादशं वारणाधिकरणम्।

भा० प्र०—"आनर्थक्यात् तदङ्गेषु" (३।१।१८) सूत्र में जो कहा गया है, उसी का खण्डन अर्थात् व्यतिक्रम इस सूत्र में कहा गया है। अग्न्याधानप्रकरण में होम के लिए एवं यज्ञ के लिये दारुमयपात्र के विधान के लिये श्रुति में कहा गया है कि "तस्माद् वारणे वै यज्ञावचरः स्यात् न त्वेकेन जुहुयात्" (मै० सं० १।६।७) वैकङ्कतो यज्ञावचरः स्यात्। जुहुयादेतेन (का० श्रौ० सू० १।३।३२) "वारण अर्थात् वरणा=यज्ञभूमिकाकाष्ठ-निर्मितपात्रविशेष एवं वैकङ्कत अर्थात् वैत्रकाष्ठनिर्मित पात्र यज्ञ की प्रतिष्ठा का साधन होने से वारणपात्र में होम न कर वैकङ्कतपात्र में होम करे"। इस स्थल में वारण एवं वैकङ्कतपात्र का विषय कहा गया है, वह क्या पवमान नामक इष्टि में अन्वित होगा या दर्शपूर्णमास आदि सभी यागों के साथ अन्वित होगा—यह संशय है।

इस प्रसंग में पूर्वपक्षी का कहना है कि प्रकरणानुसार आधान में अन्वित होने योग्य है। किन्तु आधान साक्षात् यज्ञ नहीं होने से "आनर्थक्यात्तदङ्गेषु" (३।१।१८) इस नियम के अनुसार सप्तदशारत्निता जैसे वाजपेयाङ्ग पशु का अङ्ग पशु के अङ्ग यूप में अन्वित होता है, वैसे ही यह भी आधान के अङ्ग परमाणेष्टि को यज्ञ मानकर उसी में प्रविष्ट होगा अर्थात् परमाणेष्टि का पात्रादि ही वारण एवं वैकङ्कत होगा।

इसके समाधान में सिद्धान्ती का कहना है कि "गुणानाम् असम्बद्धः" गुणों का परस्पर में अन्वय नहीं हो सकता है अर्थात् गुण परस्पर गुण के साथ अन्वित नहीं होंगे। क्योंकि "समत्वात्" कारण ये सभी समान हैं, इसमें कारण यह है कि "परार्थत्वात्" क्योंकि सभी गुण प्रधान के प्रयोजन का निर्वाह करने के लिये होते हैं उनका अपना कोई प्रयोजन नहीं रहता है। क्योंकि, गुण स्वरूपतः निष्फल है, प्रधान के प्रयोजन का निर्वाह करके ही वे सार्थक या सफल होते हैं।

आशय यह है कि परस्पर में अन्वित होने पर एक प्रधान और दूसरा गुण या अप्रधान होकर ही अन्वय लाभ कर सकते हैं, किन्तु, यदि सभी प्रधान या अप्रधान हो हो जाय तो उनका परस्पर सम्बन्ध नहीं हो सकता है। इस स्थल में आधान जैसे अग्नि के संस्कार का साधन होने से अग्नि का गुण है, परमाणेष्टि भी उसी प्रकार अग्नि का संस्कार सम्पादन करता है, अतः वह भी अग्नि का गुण है। अतः आधान के साथ परमाणेष्टि का कोई भी सम्बन्ध नहीं है। आधान और परमाणेष्टि का परस्पर सम्बन्ध न होने से उनमें गुण और प्रधानभाव न रहने पर वारणादिपात्र परमाण हवि का अङ्ग नहीं है, किन्तु, वह वाक्य से दर्शपूर्णमासादि सभी यज्ञों में ही विनियुक्त होता है, अर्थात् वह दर्शपूर्णमासादि सभी यज्ञ का ही अङ्ग है।

आधान कर्म और पवमानहवियों आहवनीय अग्नि के संस्कार के लिये हैं। उस संस्कृत अग्नि से प्रयोजन है, अतः, वह मुख्य है। फलतः दो गौणभूत आधानों एव पवमानहवियों का एक दूसरे के साथ सम्बन्ध न होने से आधान में श्रुत वारणादि पात्रों का पवमान हवियों के साथ सीधा सम्बन्ध नहीं होता है। आहवनीय की मुख्यता "यदाहवनीये जुहोति" वाक्य से आहवनीय के लिए याग का विधान होना है। अग्नि के संस्कार के लिये होने से पवमान हवियाँ अपने रूप में निष्प्रयोजन हैं। उनका प्रयोजन अग्नि का संस्कार है। पवमान हवियों का स्वतन्त्र फल स्वर्ग मानने पर होम से अदृष्ट स्वर्ग होता है और उस होम से आहवनीय का अदृष्ट संस्कार होता है। इस प्रकार दो अदृष्टों की कल्पना करने पर आधान में श्रूयमाण पात्र आधान के प्रधानभूत अर्थात् जिनके लिये आधान कहा गया है उन सभी दर्शपूर्णमास आदि यागों से सम्बद्ध होंगे। इस प्रकार ये पात्र अवमान हवियों में भी पहुँच जायेंगे, क्योंकि, पवमान हवियाँ दर्श-पूर्णमास की विकृतिस्वरूप है। भट्ट कुमारिल ने पवमानेष्टि को आधान का अङ्ग माना है और भाष्यकार ने इसको अग्नि के संस्कार के लिये माना है।

"गुणानां" = गुणों का वरण, वैकङ्कत आदि गुणों का, "परार्थत्वात्" = परार्थ होने से अर्थात् गुणसमुदाय प्रधान के प्रयोजन-निर्वाहक होने से, "समत्वात्" = उनके परस्पर समान होने से, "असम्बन्धः स्यात्" असम्बन्ध होगा, परस्पर सम्बद्ध होने से, गुण समूह एक ही प्रधान के प्रयोजन निर्वाहक होने पर परस्पर तुल्यस्वरूप होने से परस्पर सम्बद्ध नहीं होंगे अर्थात् परस्पर अन्वित नहीं होंगे ॥२२॥

यह बारहवाँ गुणों का परस्पर असम्बद्धाधिकरण सम्पन्न हुआ ॥

## अथ त्रयोदशं वार्त्रघ्न्यादीनामाज्यभागाभङ्गताधिकरणम्

## [१३] मिथश्चानर्थसम्बन्धात् ॥ २३ ॥ सि०

**शा० भा०—दर्शपूर्णमासयोः श्रूयते 'वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावस्यायाम्' इति। तत्र संदेहः—किमनुवाक्याद्वित्वस्य प्रधाने निवेश, उताऽऽज्यभागयोरिति। किं तावत्प्राप्तम्? प्रधाने इति। कुतः? पौर्णमासी-समभिव्याहारात्, अमावास्यासमभिव्याहाराच्च। प्रधानं पौर्णमासी च, अमावस्या च, नाऽऽज्यभागौ। तस्मात्साक्षाद्वाक्यात्प्रधानस्येति प्राप्तम्।**

**तत्र ब्रूमः—मिथः सह द्वाभ्यामनुवाक्याभ्यां न प्रधानस्य कार्यमस्ति। यत्र तु द्वे अनुवाक्ये, तत्र तयोर्वार्त्रघ्नता, बृधन्वत्ता च विधीयते। प्रधाने चैका-ऽनुवाक्या। तत्र द्वित्वं वार्त्रघ्नता, वृधन्वत्तां च विदधद्वाक्यं भिद्येत। [1]आज्य-भागयोस्तु द्वे प्राप्ते आग्नेयी, सौमी च तत्र वार्त्रघ्नतां वृधन्वत्तां केवलां शक्ष्यति विधातुम्।**

**ननु प्रधानगामित्वेऽपि द्वयोः प्रधानयोर्द्वे अनुवाक्ये आग्नेयस्याग्नीषोमीयस्य चेति। उच्यते। एका वार्त्रघ्न्याग्नेयी, एका सौमी। तथा वृधन्वत्यौ। तत्र याऽऽग्नेयी, सा विधीयमाना सम्बध्येत, न सौमी। अमावास्यायां तावन्ना-स्त्येव सोमः'। पौर्णमास्यामप्यग्नीषोमीय एव क्रियमाणे क्रियेत। तत्राप्येक-देवत्या न शक्नुयाद्देवताद्वित्वे कार्यं कर्तुम्। अथोभे अग्नीषोमीये प्राप्ते इति। नैकस्य यागस्य द्वाभ्यामनुवाक्याभ्यां प्रयोजनम्। उपादेयत्वेन ह्यनुवाक्या चोद्यते। तत्रैकत्वं विवक्षितम्। तेन तत्रापि न द्वे। तस्मादाज्यभागयोर्निवेश इति ॥२३॥ वार्त्रघ्न्याद्यनुवाक्यानामाज्यभागाङ्गताऽधिकरणम् ॥ १३ ॥**

त० वा०—यथासंयोगं निवेशार्थमारम्भः। कुतः सन्देह इति, संयोगस्यैव द्वेधा प्रतिभानात्।

---

१. ब. क० एतत्पदं नास्ति।

साधारण्येन संयोगः सन्दिग्धः कालकर्मभिः ।
विरुद्धः कर्मसंबन्धे न क्रमः कालसंगतौ ॥
तुल्यकक्षौ हि संबन्धौ विरुद्धौ न विलक्षणौ ।
तुल्यत्वं कर्मसंबन्धे वैषम्यं कालसंगतौ ॥
नित्यं तत्रानुवाक्याभिर्यागानामेव संगतिः ।
न कालयोः क्रमस्तस्मात्प्रधानाङ्गतया हतः ॥
गुणानां च परार्थत्वादित्यनेनापि हेतुना ।
संबद्धं नाऽऽज्यभागाभ्यामनुवाक्याचतुष्टयम् ।

तस्मादाज्यभागक्रमं बाधित्वा वाक्येन प्रधानार्थत्वे प्राप्ते ।

अभिधीयतेः—

मिथश्चानर्थसंबन्धादिष्टो नाङ्गाङ्गिसंगमः ।
न चेह्यस्त्यनुवाक्यानां प्रधानैरर्थसंगतिः ॥
द्वे तावन्नानुवाक्ये स्तः कर्मैकत्वे कथंचन ।
द्वयोरपि च नैवैते देवते कर्मणोरिह ॥

अमावास्यायां तावत्सौमी नैव विद्यमानार्था । न ह्यमावास्यायां सोमः प्रधानदेवता । पौर्णमास्यामप्यग्निसहितस्य चोदितत्वात्केवलस्य प्रकाशनं महेन्द्राधिकरणे निराकृतम् । न चाग्नीषोमयोर्द्वयोरपि प्रयोगः 'पुरोनुवाक्यामन्वाह' इत्येककर्मणि विवक्षितैकसंख्यत्वात् ।

अथाप्राप्तमपि द्वित्वं विधीयते, ततो मन्त्रविशेषस्य, द्वित्वस्य च विधानाद् वाक्यं भिद्यते । आज्यभागयोस्तु कालकृतं व्यवस्थामात्रं सुकरमित्युक्तम् ।

तस्मात्कालार्थ एवायं संयोगोऽङ्गाङ्गिकल्पनात् ।
न्याय्यः पूर्वप्रतीतत्वात्कालो हि दुरतिक्रमः ॥ २३ ॥

**( इति त्रयोदशं वार्त्रघ्न्यादीनामाज्यभागाङ्गताधिकरणम् ॥ १३ ॥ )**

**॥ अथ त्रयोदशं वार्तघ्न्याधिकरणम् ॥ १३ ॥**

न्या० सु०—यज्ञावचरवाक्येन पात्राणां प्रकरणादाधानाङ्गत्वबाधेऽभिहिते, अनुवाक्यानामपि क्रमावगताज्यभागाङ्गत्वबाधस्य प्रसक्तस्यापवादायैतदधिकरणमित्यन्तरसङ्गतिमाह—**यथासंयोगमिति** । अनुवाक्यानां क्रमकृतमाज्यभागसंयोगमबाधित्वा निवेशार्थमित्यर्थः । एवं तर्हि वाक्यबलीयस्त्वेन क्रमकृतसंयोगबाधनिश्चयात्सिद्धान्तानुपपत्तेः सन्देहो न युज्येतेत्याशङ्कते—**कुत इति** । वाक्यक्रमकृतयोः संयोगयोः सम्प्रधारणे सन्देहायोगसूचनायेतिकरणः । वाक्यकृतस्य प्रधानसंयोगस्य क्रमविरोध्यविरोधित्वेन द्वेधा प्रतिभानात्सन्देहोपपत्तिरिति सूचयति—**संयोगस्यैवेति** । बाधकत्वाभिमतवाक्यकृतसंयोगसूचनायै-

वकारः । एतदेव विवृणोति—**साधारण्येनेति** । पौर्णमास्यमावास्याशब्दयोः काले कर्मणि च साधारण्यात्कालाभ्यामनुवाक्यानां संयोगः, कर्मभिर्वाग्नेयादिभिरित्येवं वाक्यकृतः संयोगः सन्दिग्ध इत्यर्थः । कस्मिन्पक्षे क्रमवाक्ययोर्विरोधः ? कस्मिन्वा नेत्यपेक्षायामाह—**विरुद्ध इति** । वाक्येनानुवाक्यानामाग्नेयादिकर्मसम्बन्धे सति क्रमो वाक्यविरुद्धः । कालसङ्गतौ न विरुध्यत इत्यर्थः । एतदेवोपपादयति—**तुल्यकक्षौ हीति** । वाक्येनानुवाक्यानामाग्नेयादिकर्मसम्बन्धे क्रमावगम्येनाक्रमावगम्येनाज्यभागसम्बन्धेन सहाङ्गाङ्गित्वरूपतया तुल्यत्वम्, कालसङ्गतो त्वङ्गाङ्गिरूपत्वाभावेनातुल्यतेत्यर्थः ।

पूर्वपक्षमाह—**नित्यमिति** । यस्माद्यागानामेवानुवाक्याभिः सङ्गतिर्युक्ता, न तु कालयोः तस्माद्वाक्यावगतानुवाक्यानां प्रधानाङ्गतयाज्यभागाङ्गत्वबोधकः क्रमो बाधित इत्युक्ते, अनुवाक्याभिः कालयोरङ्गाङ्गित्वरूपसङ्गत्ययोगेऽपि व्यवस्थात्यव्यवस्थापकत्वरूपा सङ्गतिर्भविष्यतीत्याशङ्कानिराससूचनार्थं नित्यमित्युक्तम् । आज्यभागयोः साक्षात्कालान्वयाभावात्पौर्णमास्याङ्काले यावाज्यभागौ, तयोर्वार्त्रघ्नौ, अमावास्याकाले यौ, तयोर्वृधन्वत्याविति व्यवस्थाऽनुपपत्तेः कालकृतायां व्यवस्थायां 'य इष्टयेति वाक्येन दर्शपूर्णमाससोमविकारेषु पौर्णमास्यमावास्याकालविधानात्पौर्णमास्यां दर्शविकारानुष्ठाने वार्त्रघ्नीप्रसक्तेः, अमावास्यायां च पूर्णमासविकारानुष्ठाने वृधन्वतीप्रसक्तेः प्रकृतिवद्भाववैरूप्यप्रसङ्गात्प्रधानं पौर्णमासी चामावास्या च, नाज्यभागाविति पूर्वपक्षभाष्ये चाज्यभागयोः पौर्णमास्यमावास्याशब्दवाच्यत्वनिषेधात्सिद्धान्ते पौर्णमास्यमावास्याशब्दयोः प्रधानवाचिनोः प्रधानकालाज्यभागलक्षणार्थत्वावसायाद्व्यवस्थापक्षेऽपि पौर्णमास्याख्यप्रधानकालीनयोराज्यभागयोवार्त्रघ्न्यौ, अमावास्याख्यप्रधानकालीनयोर्वृधन्वत्याविति प्रधानयागद्वारैव व्यवस्थाया वाच्यत्वात्पक्षद्वयेऽप्यनुवाक्याभिः प्रधानयागानां सङ्गतिरित्याशयः । विस्तरेण चास्माभिस्तन्त्रसारेऽनयोः पौर्णमास्यमावास्याशब्दवत्प्रधानवाचितोपपादिता ।

शक्यते च कालोक्तिः पौर्णमास्यमावास्याशब्दवाच्यप्रधानलक्षितकालविषयतया व्याख्यातुम् । साधारण्येनेति सन्देहोपपादनवार्त्तिकमपि व्यवस्थापक्षेऽप्याज्यभागयोः साक्षात्कालानन्वयेन प्रधानद्वाराज्यभागकालस्य लक्षणीयत्वात्पौर्णमास्यमावास्याशब्दयोः पक्षद्वयेऽपि प्रधानवाचित्वसाधारण्यात्किं कर्मलक्षिताभ्याम् कालाभ्याम् अनुवाक्यानां व्यवस्थाप्यव्यवस्थापकलक्षणः संयोगः । कर्मभिरेव चाङ्गाङ्गिलक्षण इत्येवं सन्दिग्धः संयोग इत्येवं व्याख्येयम् । वारणवैकंकतपात्राणां पूषाद्यनुमन्त्रणन्यायेनैवोत्कर्षसिद्धेः 'गुणानां चे'ति सूत्रस्य प्रधानविषयत्वानभ्युपगमे त्वेतदधिकरणपूर्वपक्षेऽपि योजयितुं शक्यमिति सूचयितुमाह—**गुणानां चेति** ।

पूर्वपक्षोपसंहारपूर्वं सिद्धान्तसूत्रमवतारयति—**तस्मादिति** । सूत्रे साध्यानभिधानात्पूर्वसूत्रस्थासम्बन्धपदानुषङ्गेण साध्याकाङ्क्षां पूरयन्व्याचष्टे—**मिथश्चेति** । 'पुरोऽनुवाक्यामन्वाहे'ति विवक्षितैकसंख्यत्वेनानुवाक्यालक्षणानां मिथो युग्मभूतानां प्रधानैः सह देवताप्रकाशनाख्यकार्यरूपार्थद्वारसम्बन्धाभावादित्येवं हिशब्दार्थचशब्दकेनोत्तरार्द्धेन सूत्रं

व्याख्यातम् । पूर्वसूत्रोक्तसम्बन्धानुकर्षणार्थः सौत्रश्च शब्दः । पूर्वसूत्रेणैतदधिकरणपूर्वपक्षकरणे त्वचोदकाश्च संस्कारा इतिवत्पूर्वपक्षनिवृत्त्यर्थः । वार्त्रघ्नीवृधन्वत्यनुवाक्यालक्षणानां गुणानां प्रधानैः सहार्थद्वारसम्बन्धाभावोपपादनार्थत्वेन मिथःशब्दं व्याख्यातुमाह—**द्वे तावदिति**। पित्र्येष्टिवत्कर्मैक्येऽप्यनुवाक्याद्वयोपपत्तिमाशङ्क्य द्वे द्वे अनुवाक्ये इति वदिह द्वित्वविद्ध्यभावादनेकार्थविधिगौरवापत्तेश्च तेनैव द्वित्वविध्ययोगान्नानुवाक्याद्वयोपपत्तिरिति परिहार-सूचनार्थं कथं च नेत्युक्तम् । कर्मद्वये तर्ह्यनुवाक्याद्वयं भविष्यतीत्याशङ्क्याह—**द्वयोरपि चेति**। एतदेवोपपादयितुमारभते—**अमावास्यायां तावदिति**। पौर्णमास्यामग्नीषोमीये सोमस्यापि देवतात्वात्सौमी विद्यमानार्था भविष्यतीत्याशङ्क्याह—**पौर्णमास्यामपीति**। एवं तर्ह्येकदेवत्ये कर्मण्यनपेक्षितत्वादनुवाक्याद्वित्वविध्ययोगेऽप्यग्नीषोमीयेऽपेक्षितत्वात् द्वित्वाविध्युपपत्तेर्द्वयोर्वार्त्रघ्न्योः समुच्चयेन प्रयोगो भविष्यतीत्याशङ्क्याह—**न चेति**। श्रुतैकसंख्याविरोधान्न सामर्थ्यतोऽनुवाक्याद्वयसमुच्चयः नापि विधितो वाक्यभेदापत्तेरि-त्याशयः ।

नन्वाज्यभागयोरपि मन्त्रविशेषस्य कालस्य च विधानात्तुल्यो वाक्यभेद इत्या-शङ्क्याह—**आज्यभागयोस्त्विति**। लिङ्गक्रमाभ्यामेव मन्त्रविशेषप्राप्तेर्न्यायप्राप्तप्रधान-कालद्वारा व्यवस्थार्थासंयोगे वाक्यभेदापत्तिरित्याशयः । सिद्धान्तमुपसंहरति—**तस्मादिति**। अङ्गाङ्गिकल्पनमपेक्ष्य प्रधानकालद्वारव्यवस्थार्थः संयोगो[1] न्याय इत्युक्ते प्रधानवाचिनोः पौर्णमास्यमावास्याशब्दयोः । काललक्षणार्थत्वापत्तेरन्यायतामाशङ्क्य, कालयोगेनैव प्रधानानां पौर्णमास्यमावास्याशब्दवाच्यत्वात्तस्य च कालस्य साक्षादाज्यभागमन्त्रव्यवस्था-पकत्वायोगात्प्रधानान्वयपूर्वव्यवस्थाभ्युपगमेन प्रधानान्वयिरूपलक्षणापत्तावपि स्वरूपेण वाच्यत्वात्पूर्वप्रतीतेरदोष इति पूर्वेत्यनेनोक्तम् ॥२३॥

इति त्रयोदशं वार्त्रघ्न्यधिकरणम्

भा० प्र०—दर्शपूर्णमास प्रकरण में श्रुतियों में कहा गया है कि "वार्त्रघ्नी पौर्ण-मास्यामनुच्येते वृधन्वती अमावास्याम्" (तै० सं २।५।२) अर्थात् पौर्णमासी में वार्त्रघ्नी नाम की दो ऋचायें पाठ्य हैं और अमावस्या में वृधन्वती नाम की दो ऋचायें पाठनीय है।" वृत्रहनन विषयक "अग्निर्वृत्राणि जङ्घनत्" इत्यादि दो ऋचाएँ वार्त्रघ्नी और (वृध् धातुयुक्त "सोमगीभिष्ट्वा वयं वर्धयामो वचोविदः" (मै० सं० ४।१०।१) इत्यादि दो ऋचाएँ वृधन्वती । यह वार्तघ्नी एवं वृधन्वती नामक दो ऋचाएँ प्रधानयाग दर्श-पूर्णमास का अङ्ग अथवा वह आज्यभागद्वय का = दर्शपूर्णमास याग के अङ्ग दो यागों का अङ्ग है—यह संशय है । इस प्रसङ्ग में पूर्वपक्षी का कहना है कि यह प्रधान याग का ही अङ्ग है, क्योंकि, इस स्थल में "वार्त्रघ्नी पौर्णमास्याम्" एवं "वृधन्वती अमावास्याम्" इस रूप में पौर्णमासी एवम् अमावस्या नामक प्रधान याग के साथ ही पठित होते हैं ।

---

१. व्यवस्थामात्रविधानान्न इ० २ पु० पा० ।

इन चार मन्त्रों का आज्यभाग अङ्ग मानने पर क्रम की विनियोजकता स्वीकार की जाती है। दर्शपूर्णमास के अङ्ग मानने पर वाक्य की विनियोजकता रक्षित होती हैं, किन्तु उनकी अपेक्षा वाक्य के बलवान् होने से वाक्य के द्वारा उसका प्रधानयाग अंग रूप में ही विनियुक्त होते हैं।

सिद्धान्ती का कहना है कि "मिथश्च अनर्थसम्बन्धः"। इस स्थल में "न अर्थ-सम्बन्धः = अनर्थसम्बन्धः", इस प्रकार की व्युत्पत्ति के अनुसार अनर्थसम्बन्ध का अर्थ प्रयोजनाभाव होता है। युगलात्मक दो ऋचाओं को यदि प्रधान का अङ्ग माना जाय तो इसके द्वारा किसी प्रयोजन की सिद्धि न होने से यह निरर्थक हो जायेंगी, क्योंकि, इस स्थल में दो अनुवाक्या रहते हैं। किन्तु; प्रधान याग में एक अनुवाक्या ही विहित है। अतः, इसको प्रधान का अङ्ग मानने पर प्रधान में द्वित्व एवं वार्त्रघ्नत्व और वृत्तधन्वत्व इन दो का विधान करना पड़ेगा, अतः वाक्यभेद होगा। किन्तु, आज्य यागद्वय में दो अनुवाक्या प्राप्त होने से अर्थात् आज्य भाग दो होने पर उसका अनुवाक्या भी दो होगा, ऐसी स्थिति में वार्त्रघ्नता और वृधन्वता का विधान होगा, तथा वाक्यभेद नहीं होगा। दूसरी बात यह है कि इसको प्रधान याग का अङ्ग मानने पर लिङ्ग विरोध होगा, कारण, वार्त्रघ्न दो ऋचायें अग्नि प्रकाशक होने से उसे आग्नेय याग का अङ्ग मानने पर भी वृधन्वती नामक दो ऋचाएँ यहाँ निविष्ट नहीं हो सकती हैं। क्योंकि, ये सोम देवता की प्रकाशक हैं, साथ ही प्रधान याग में 'अग्नीषोम' देवता है, किन्तु अग्नीषोम के मध्य में स्तोम रहने पर भी इस स्थल में अग्नि और सोम मिलित रूप में एक देवता होने से अग्नीषोम एवं सोम एक नहीं हैं। अतः, लिङ्गविरोध होने से ये प्रधानगामी नहीं है, अपितु आज्य भाग के ही अङ्ग हैं। प्रयाज के बाद जैसे आज्य भाग कर्तव्य होने से गठित होते हैं, वैसे ही प्रयाजमन्त्रानुवाक के अनन्तर ये अनुवाकद्वय भी पठित होते हैं, इसलिए, क्रमानुसार ये आज्य भाग के अङ्ग हैं, दर्शपूर्णमास के अङ्ग नहीं हैं।

"मिथः" = परस्पर अर्थात् मन्त्रद्वय का, "च" = और "अनर्थसम्बन्धात्" = अर्थसम्बन्धाभाव अर्थात् प्रयोजन न होने से प्रधान के साथ सम्बद्ध नहीं है॥ २३॥

यह तेरहवाँ वार्त्रघ्नी अधिकरण सम्पन्न हुआ।

## [१४] आनन्तर्यमचोदना ॥२४॥ सि०

**शा० भा०—ज्योतिष्टोमे श्रूयते—मुष्टीकरोति वाचं यच्छति दीक्षितमावेद-यति इति। तथा 'हस्तावववनेनिक्ते, उलपराजिंस्तृणाति ? इति। तत्र सन्देहः—किं मुष्टीकरणं वाग्यमश्चाऽऽवेदनार्थम्, उत कृत्स्नप्रकरणे निवेशः इति। तथा हस्तावनेजनं किमुलपराजि स्तरितुम्, उत प्रकरणे सर्वपदार्थान्कर्तु-मिति। किं तावत्प्राप्तम् ? हस्तावनेजनं हस्तसंस्कारार्थम्, वाग्यमः पुरुषसंस्का-**

**रार्थः आमन्त्रयमाण एकाग्रो भवति, पदार्थाननुतिष्ठति। तेन केषां केषां पदार्थानामिमौ [1]संस्कारावित्याकाङ्क्षाऽस्ति। सत्यामाकाङ्क्षायामानन्तर्येण निराकाङ्क्षीकरणम्। तस्मादानन्तर्यादावेदनार्थो वाग्यमो मुष्टीकरणं च। हस्तावनेजनं चोलपराजि स्तरितुम्। एवं प्राप्ते।**

**ब्रूमः—सर्वैः प्रकरणाधीतैः सम्बन्ध इति। कुतः? वाक्यभेदात्। कथं वाक्यभेदः। अर्थद्वयस्याभिधानात्। न हि दीक्षितमावेदयितुमित्यस्मिन्नर्थे आवेदयतीति। न च स्तरितुमित्यस्मिन्नर्थे स्तृणातीति। स्तरणमपि विधीयते, अवनेजनं च। मुष्टीकरणं, वाग्यमश्च विधीयते, आवेदनं च। न चैषां परस्परेण कश्चित्संबन्धोऽस्ति। न च पदार्थाकाङ्क्षायां सत्यामानन्तर्यमेकवाक्यत्वे कारणं भवति। तस्मात्प्रकरणधर्मा एवंजातीयकाः॥ २४॥ सिद्धान्तः॥**

त० वा०—क्रमविनियोगोऽनन्तरमवस्थितः। इदानीं तदपवादः क्रियते। मुष्ट्योः करणम्, वाग्यमश्च याजमानम्। आवेदनमाध्वर्यवम्। तत्र कथमङ्गाङ्गिभाव आशङ्क्यते? नैष दोषः। आध्वर्यवेष्वपि प्रयोक्तृत्वेन यजमानस्य कर्तृत्वात्।

अथ वा यत्तत्र दीक्षितस्याऽऽवेद्यमानम्, तस्याङ्गत्वेनेतरौ संदिह्येते। कस्मात्पुनस्तुल्य आनन्तर्ये पूर्वस्यैवाङ्गत्वमुच्यते, न परस्य।

### तत्र केषाञ्चिन्मतम्

केचिदाहुः। अनियमप्रदर्शनार्थमेव प्राथम्यात्पूर्वोपादनम्। अथ वा सर्वभावनासु किमित्युपकार्यपेक्षणं प्रथममुत्पद्यते। सर्वापेक्षणेषु च पुरस्तादुच्चरितस्य ग्रन्थानुगुण्यात्पूर्वमालोचनं भवति। तेन मुष्टिकरणवाग्यमाभ्यां किं कर्तव्यमित्यपेक्षिते 'दीक्षितमावेदयति' इत्युपतिष्ठते। न च तदतिक्रमे हेतुरस्ति। शक्यते च तस्यापि परतः प्रयोजनवत्त्वं कल्पयितुम्। अतस्तदर्थत्वमेव युक्तम्। एवं हस्तावनेजनस्योलपराजिस्तरणार्थत्वम्। ऊर्ध्वैस्तृणैर्दीर्घं वेदिमध्ये स्तरणमुलपाजिस्तरणं प्रत्येतव्यम्। सर्वत्र च योग्यत्वमवान्तरप्रकरणमेकवाक्यत्वं च महाप्रकरणाद्बलीयांसि विनियोजकानि। तस्मात्सर्वं पूर्वसमाम्नातमुत्तरसमाम्नातस्याङ्गम्। योग्यत्वाभावात्तु मुष्टीकरणवाग्यमयोः परस्पराङ्गत्व नोपन्यस्तम्। न ह्युभयोः प्रधानार्थयोरन्योन्यापेक्षा। तेनायोग्यमात्रमतिक्रम्य न दूरं गन्तव्यमित्येवं प्राप्ते।

ब्रूमः—

न तावदेकवाक्यत्वं दृश्यते योग्यता समा।
अवान्तरकथंभावस्तदानीं नावगम्यते॥

---

१. ब. क० इमेसंस्कारा इत्याकांक्षा।

न हि द्वयोराख्यातयोः केनचिदुपबन्धेन विनैकवाक्यत्वं संभवति। यत्प्रकरणं बाधेत। योग्यता पुनरनन्तरार्थत्वे च समा।

यद्वा सर्वार्थत्वे युक्ततरा। बहुषु हि पदार्थेष्ववधानमुपयुज्यतेतराम्। एकस्तु यथाकथंचिदपि क्रियते। न चावान्तरप्रकरणमिह विद्यते। यदि तावत्पूर्वस्य कथंभावः। तत उत्तरमेवाङ्गं प्राप्नोति। न चैवं भवितुमर्हति। साध्यांशस्यापरिपूर्णत्वात्। न चोत्तरेणासावक्लृप्तप्रयोजनावस्थेन शक्यः पूरयितुम्। एवं तस्याप्युत्तरेणेति यावत्प्रधानं प्राप्तम्।

यद्येवं ततो योऽन्तराले गुणकामस्तेन सह सर्वमाधस्त्यमङ्गं संबध्येत, नैव प्रधानं यावत्प्राप्नुयात्, अवान्तरकथंभावस्य निष्पन्नत्वादिति। उच्यते—

यदि नामास्य विज्ञातौ स्यातां वाक्यगतौ गुणौ।
अवान्तरकथंभावस्ततस्तावन्तरा भवेत्॥

प्रधानकथंभावस्त्वभितोऽन्यसंबन्धमात्रमुक्त्वा यावदन्तं गच्छतीत्यनुषङ्गाधिकरणे व्याख्यातम्।

नन्वेवं सति सर्वावान्तरप्रकरणोच्छेद एव प्राप्नोति। उच्यते—

परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः।
ज्ञाते पुनश्च तैरेव संदंशेन तदिष्यते॥

सर्वेषां हि प्रयाजादीनामङ्गं किंचिदुक्त्वा, पुनः परामर्शोऽस्तीति तत्पर्यन्तावान्तरप्रकरणकल्पना भवति। अन्यथा ह्यव्यवस्थैव स्यात्सर्वशेषाणां परस्परशेषत्वप्रसङ्गात्। यत्र पुनः संकीर्तनं नास्ति, तत्र सर्वं प्रधानार्थमेवाध्यवसातव्यम्। तस्य तु किं केवलस्य, अथ साङ्गस्येत्यत्र विवेकं 'प्रकरणविशेषादसंयुक्तं प्रधानस्य' इत्यारभ्य वक्ष्यति। तदिह योग्यतया मुष्टीकरणादीनां साङ्गप्रधानार्थत्वं निश्चितम्।

यदि त्वावेदयितुं स्तरितुमिति च श्रूयेत, ततः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्येकवाक्यतया विनियोगो भवेत्। न त्वेवमस्ति। तस्मात्सर्वार्थत्वमिति॥ २४॥

### अथ चतुर्दशहस्तावनेजनाधिकरणम्

न्या० सु०—प्रधानान्वयेऽनुवाक्यानामानर्थक्यापत्तेस्तदङ्गभूतयोराज्यभागयोः क्रमानुसारेणावतारोक्त्या वारणाधिकरणापोदितानर्थक्यतदङ्गावतारोज्जीवने कृते मुष्टिकरणस्याङ्गुलिविसर्जनोत्तरकालप्रधानान्वयायोगाद्वाग्यमस्य च वाग्विसर्गोत्तरप्रधानान्वयायोगाद्धस्तावनेजनस्य च हस्तलेपापादकपिण्डकरणोत्तरकालप्रधानान्वयायोगाद्वाग्यमस्य च वाग्विसर्गोत्तरप्रधानान्वयायोगाद्धस्तावनेजनस्य च हस्तलेपापादकरणस्याङ्गुलिविसर्जन-

प्राग्भाविषु ज्योतिष्टोमाङ्गभूतेषु वाग्यमस्य च वाग्विसर्गप्राग्भाविषु हस्तावनेजनस्य च दर्शपूर्णमासाङ्गभूतेषु पिण्डकरणप्राग्भाविषु पदार्थेष्ववतारप्राप्तावानन्तर्यलक्षणक्रमानुसारान्मुष्टिकरणवाग्यमयोर्दीक्षितावेदनमात्रे, हस्तावनेजनस्य चोलपराजिस्तरणमात्रेऽवतारः। क्रमानादराद्वा सर्वेष्वङ्गुलिविसर्जनप्राग्भाविषु मुष्टिकरणस्य सर्वेषु च वाग्विसर्गप्राग्भाविषु वाग्यमस्य, हस्तावनेजनस्य च सर्वेषु पिण्डकरणप्राग्भाविष्ववतार इति विचारस्यापवादत्वेनानन्तरसङ्गतिमाह—**क्रमेति**। क्रमस्यैककर्तृकपदार्थविषयत्वान्मुष्टिकरणवाग्यमयोर्भिन्नकर्तृकेणावेदनेन क्रमानुपपत्तेः क्रमेणावेदनाङ्गत्वपूर्वपक्षायोगात्सन्देहमाक्षिपति—**मुष्ट्योरिति**। प्रयोक्तृत्वेनावेदनेऽपि यजमानस्य कर्तृत्वादयमदीक्षिष्टेत्यावेदने वा क्रियमाणे यद्दीक्षितोऽस्याहं दीक्षितोऽस्मि। तस्मादवश्यं समापनीयो ज्योतिष्टोमो मयेत्येवमध्यवसानरूपं कर्म तस्य मुष्टिकरणवाग्यमसमानकर्तृत्वोपपत्तेः तदङ्गत्वपूर्वपक्षसम्भवात्सन्देहं समाधत्ते—**नेष इति**।

एवमप्यानन्तर्यलक्षणस्य क्रमस्य विनियोजकत्वे तस्य पूर्वोत्तरयोः पदार्थयोस्तुल्यत्वात्पूर्वस्यैवोत्तराङ्गत्वन्नोत्तरस्य पूर्वाङ्गतेति नियमायोगान्मुष्टिकरणादेः पूर्वमपि कृष्णाजिनाच्छादनादिपदार्थं प्रत्यङ्गत्वोपपत्तेः परमावेदनाद्येव प्रत्यङ्गतेति पूर्वपक्षो न युक्त इत्याशङ्कते—**कस्मात्पुनरिति**। आवेदनोलपराजिस्तरणयोस्तु प्रकरणावगतप्रधानान्वयोपपत्तेस्तदङ्गावताराभावेन प्रकरणविरोधपरिहारायोगान्न क्रमेण पूर्वपदार्थाङ्गत्वं शङ्कितुं शक्यम्। मुष्टिकरणादेः कृष्णाजिनाच्छादनाद्यङ्गतापि पूर्वपक्षिणोऽभिमता। पूर्वस्य पराङ्गत्वोपादानन्त्वनियमप्रदर्शनार्थमेव। हस्तावनेजनस्य तु तन्त्रप्रक्रमभावित्वेन प्राथम्यात्पूर्वेद्युः कृतपदार्थाङ्गत्वानुपपत्तेः पराङ्गत्वोपादानं युक्तमेवेति परिहरति—**अनियमेति**।

यद्वा न केवलं हस्तावनेजनस्य नियमेन पराङ्गत्वम्, किन्तु मुष्टिकरणवाग्यमयोर्लिङ्गेन मनः-समाधानार्थत्वेन, हस्तावनेजनस्य च हस्तशुद्ध्यर्थत्वेन कर्माङ्गत्वावसायात्सर्वासु मुष्टिकरणवाग्यमहस्तावनेजनभावनासु किमित्यंशेन मनःप्रणिधानहस्तशुद्ध्युपकार्योत्तरकालानुष्ठेयपदार्थापेक्षोत्पत्तेः पूर्वानुष्ठितपदार्थानपेक्षणात् मुष्टिकरणवाग्यमाभ्यां किङ्कर्मोपकर्त्तव्यमित्यपेक्षिते दीक्षितावेदनोपकारार्थत्वावसायान्मुष्टिकरणवाग्यमयोरपि नियमेन पराङ्गतेति परिहारान्तरमाह—**अथ वेति**। पूर्वानुष्ठितस्यापि पदार्थस्याश्रद्धाहेतुवैगुण्यपरिहारायाऽविस्मृत्यै मनसः समाधानोपकारार्थत्वेनापेक्षोपपत्तिमाशङ्क्योत्तरकालानुष्ठेयपदार्थापेक्षोपपत्तेः। प्रथमोक्त्या बलीयस्तोक्ता। एवं तर्ह्युत्तरकालानुष्ठेयसर्वपदार्थाङ्गतापद्येतेत्याशङ्क्य सर्वेत्युक्तम्। पुरस्ताच्छब्दस्याग्रवाचित्वादनन्तरं पश्चादुच्चरितस्य ग्रन्थक्रमानुसारेण पूर्वालोचनात्तन्मात्राङ्गतैव युक्तेत्याशयः। प्रकृतोदाहरणानादरेण तु सर्वभावनासु किम्भावापेक्षायाः पूर्वोत्पत्तेः पश्चादुच्चरितस्य वाधस्य उच्चारितात्पूर्वालोचनात्पराङ्गता युक्तेति व्याख्याऽनुयाजादीनामप्यनेन न्यायेन प्राग्भाव्याग्नेयाद्यनङ्गत्वापत्तेरनिष्टापादकत्वादयुक्ता। एवं सत्यपि यद्यावेदनमपि मनःप्रणिधानार्थं स्यात् ततो मनःप्रणिधानार्थमुष्टिकरणसाध्यत्वे

योग्यत्वाभावाद्वाग्यमवदतिक्रम्येत, न त्वेतदस्तीत्याह—**न चेति**। निष्प्रयोजनता ऽतिक्रमहेतुर्भविष्यतीत्याशङ्क्याह—**शक्यते चेति**।

### उक्तपराजिशब्दार्थविवरणम्

सर्वोदाहरणसाधारण्यमस्य प्रकटयितुं हस्तावनेजनेऽप्येतन्न्यायमतिदिशति—**एवमिति**। उलपराजिशब्दं व्याख्यातुमाह—**ऊर्द्ध्वैरिति**। उत्पूर्वस्य, लुनातेः कपन्प्रत्यये धात्वन्तोपसर्गान्तयोर्ल्लोपनिपातनात्ककारनकारयोश्चेत्संज्ञत्वेन लोपादुलपशब्दस्योर्द्ध्वलवनार्हसुगन्ध्यादिकठिनतृणवाचितोर्ध्वशब्देनोक्ता। तृतीययोलपैः कृता राजिरित्यर्थे तृतीयासमासो दर्शितः। रेखापरपर्यायराज्याकारत्ववाचितया राजिशब्दं व्याख्यातुं दीर्घमित्युक्तम्।

ननु पाठसादेश्यलक्षणस्य, अनुष्ठानसादेश्यलक्षणस्य वा क्रमस्य प्रकरणादिकल्पनद्वारा विनियोजकत्वं युक्तम्। आनन्तर्यलक्षणस्य तु क्रमस्य बहुषु पठितव्येष्ववर्ज्जनीयतयोभयाकांक्षादिरूपप्रकरणाद्यभावेऽप्युपपत्तेस्तत्कल्पनायोगान्न विनियोजकता युक्तेत्याशङ्क्य, सन्निधिविशेषाम्नानार्थवत्त्वाय प्रकरणादिकल्पनस्यानन्तर्येऽपि तुल्यत्वाद्विनियोजकत्वं सम्भवतीति सूचयितुमाह—**सर्वत्र चेति**। योग्यत्वं लिङ्गं प्रकरणं वाक्यकल्प्यत्वात्पश्चाद्वाच्यमप्ययोग्यस्यानन्तर्येऽप्यन्वयायोगाद्योग्यतायाः प्राधान्यसूचनार्थमादावुक्तम्। आनन्तर्येणानन्तरभूतयोरेव पदार्थविशेषयोरन्योन्याकांक्षाकल्पनादवान्तरेत्युक्तम्। यथा पाठसादेश्यलक्षणे, अनुष्ठानसादेश्यलक्षणे वा क्रमे लिङ्गादीनि कल्प्यन्ते, तथानन्तर्यलक्षणेऽपीति सर्वत्रेत्यनेनोक्तम्। प्रत्यक्षमहाप्रकरणविरोधेन क्रमस्यावान्तरप्रकरणादिकल्पकत्वायोगमाशङ्क्याङ्गुलिविसर्ज्जनाद्युत्तरकाले प्रधाने[1] महाप्रकरणेन मुष्टिकरणादिविनियोगाशक्तेः, प्रधानप्रकरणस्य च प्रधाने निरपेक्षेऽङ्गविनियोजकत्वायोगात्तद्विरोधाभावेन क्रमस्य प्रकरणादिकल्पनप्रतिबन्धानुपपत्तेः कल्पितस्याऽपि प्रकरणादेः कल्पितश्रुतिवत्प्रामाण्याविशेषसूचनार्थं महाप्रकरणादित्युक्तम्। महाप्रकरणेन क्रमबाधमाशङ्क्य, बलवद्योग्यत्वाद्यनुग्रहेण बाधायोगोक्त्यर्थतया त्वेतद्ग्रन्थव्याख्याक्रमं विनानवगतस्य योग्यत्वादेः क्रमानुग्राहकत्वायोगान्महाप्रकरणस्य चात्र विनियोजकत्वायोगाद् बाधकत्वाऽनुपपत्तेरयुक्ता। तस्मात्प्रामाण्याविशेषसूचनायैव बलीयस्त्वोक्तिः। पूर्वपक्षमुपसंहरति—**तस्मादिति**। मुष्टिकरणस्य तर्ह्यनन्तरवाग्यमाङ्गता कस्मान्न पूर्वपक्षितेत्याशङ्क्याह—**योग्यत्वेति**। पूर्वाङ्गतायाः सर्वभावनासु किमित्युपकारापेक्षणमित्यत्रैव वार्त्तिके निरस्तत्वाद्वाग्यमस्य मुष्टिकरणाङ्गत्ववन्मुष्टिकरणस्य वाग्यमाङ्गताप्यनाशङ्कनीयेति दृष्टान्तदार्ष्टान्तिकभावार्थः—**परस्परशब्दः**। अनन्तरवाग्यमातिक्रमात्तर्ह्यावेदनोत्तरपदार्थाङ्गताऽपि मुष्टिकरणस्य कस्मान्न स्यादित्याशङ्क्याह—**तेनेति**। एकाङ्गावतारमात्रेण प्रकरणाम्नानानर्थक्यपरिहारादेकान्तरितस्याऽपि च द्व्यन्तरिताद्यपेक्षया सन्निधानानपायात्कारणं च विना सन्निहितातिक्रमायोगादित्याशयः।

१. द्यन्तराले प्रधाने इ० २ पु० पा०।

बहुषु पठितेषु कस्यचिदानन्तर्यस्यावर्ज्जनीयत्वादनुष्ठानक्रमार्थत्वेन च तत्सन्निधिविशेषाम्नानार्थवत्त्वोपपत्तेः उभयाकांक्षादिरूपप्रकरणादिकल्पकत्वायोगाच्छ्रुतिवच्च क्रमस्य साक्षाद्विनियोजकत्वाभावादानन्तर्यमङ्गाङ्गिसम्बन्धस्यानाक्षेपकमित्येवं ब्रूम इत्यनेन सूत्रार्थं सूचयन्सिद्धान्तमुपक्रमते—**एवमिति**। सर्वैरिति भाष्येण मुष्टिकरणाङ्गुलिविसर्जनान्तरालवर्त्तिभिः सर्वैर्मुष्टिकरणस्य वाग्यमवाग्विसर्गन्तरालवर्तिभिर्वाग्यमस्य हस्तावनेजनपिण्डकरणान्तरालवर्त्तिभिर्हस्तावनेजनस्यान्वय इति प्रतिज्ञाते वाक्यभेदो हेतुत्वेनोक्तः। स वाक्येन पूर्वपक्षाकरणात् क्रमकल्प्यवाक्यासम्भवार्थत्वे तु वाक्यभेदोक्तेः प्रकरणाद्यसम्भवस्याऽपि वाच्यस्याऽनुक्त्या न्यूनत्वापत्तेरयुक्त इत्याशङ्क्य, क्रमकल्प्यसर्वप्रकरणाद्यसम्भवार्थत्वे तु वाक्यभेदोक्तेः प्रकरणाद्यसम्भवस्याऽपि वाच्यस्याऽनुक्त्या न्यूनत्वाय न तेषां परस्परेण कश्चित्सम्बन्धोऽस्तीति भाष्यैकवाक्यत्वादिक्रमनिरासेन सूचितमिति, अर्थद्वयस्याभिधानादित्यादिभाष्येण क्रमकल्प्यैकवाक्यत्वाद्यसम्भवेऽभिहिते प्रत्यक्षमेवैकवाक्यत्वाद्यनेन निरस्तमित्याशङ्कमानं प्रति च पदार्थाकांक्षायामित्यनेनानन्तर्यमात्रेणाकांक्षारूपप्रकरणकल्पनाशक्तेः प्रकरणकल्पननिरपेक्षेण क्रमेणैकवाक्यत्वादेरसम्भवः स्पष्टीकृत इति सूचनार्थं दृश्यत इत्युक्तम्। एकवाक्यत्वादर्शनमुपपादयति—**न हीति**। बलीयस्त्वसूचितप्रामाण्याविशेषनिरासायैकवाक्यत्वादेः कल्पनासम्भवेनाकल्पितत्वादप्रामाण्यं न कल्प्यत्वमात्रेणेति सूचयितुं यदित्युक्तम्। योग्यता समेत्यकारप्रश्लेषं विना तावद्व्याचष्टे—**योग्यता पुनरिति**।

असमेत्यकारप्रश्लेषेण व्याचष्टे—**यद्वेति**। उत्तरार्द्धं व्याचष्टे—**न चेति**। यदि चात्रावान्तरकथंभावो भवेत्, ततः कर्त्तव्यत्वेनावगतस्येतिकर्त्तव्याताकाङ्क्षात्मककथंभावोत्पत्तेः पूर्वपदार्थभावनांशत्रयालोचनकालेऽनन्तरस्य कर्त्तव्यत्वानवगमात्पूर्वस्यैव कथंभावो भवेत् ततश्चोत्तरमेव पूर्वस्याङ्गं प्राप्नोतीत्यनिष्टापत्तिमाह—**यदीति**। अस्तूत्तरं पूर्वाङ्गं तथाऽपि सिद्धान्तासिद्धे कानिष्टापत्तिरित्याशङ्क्याह—**न चेति**। अनेनेदं साध्यमित्यवगते कथंभावोत्पत्तेः साध्यांशापूरणात्कथंभावोत्पत्त्ययोगान्नोत्तरं पूर्वाङ्गम्भवितुमर्हतीत्याशयः। पूर्वपदार्थभावनांशत्रयालोचनवेलायामुत्तरपदार्थकर्त्तव्यत्वानवगमेऽप्युत्तरपदार्थभावनांशपूरणात्पूर्वस्योत्तराङ्गतैव पूर्वपक्ष्यभिमता सेत्स्यतीत्याशङ्क्याह—**न चोत्तरेणेति**। आवेदनोत्तरेण पदार्थेनावेदनस्य साध्यांशपूरणात् क्लृप्तप्रयोजनत्वेन मुष्टिकरणसाध्यांशपूरकत्वं भविष्यतीत्याशङ्क्याह—**एवमिति**। अतः प्रधानात्प्राचीनेन केनचित्पदार्थेन साध्यांशपूरणाशक्तेः सर्वमङ्गम्प्रधानपर्यन्तं प्राप्तं न त्वन्तराले पर्यवस्यतीत्याह—**इतीति**।

नन्वक्लृप्तप्रयोजनावस्थत्वेनोत्तरस्य पूर्वसाध्यांशपूरणाशक्तौ गोदोहनादेः क्लृप्तप्रयोजनत्वेन साध्यांशपूरणाशक्तत्वात्सर्वेषां पूर्वाङ्गानाङ्गोदोहनाद्यङ्गत्वापत्तेः सर्वाङ्गानां यावत्प्रधानं प्राप्त्युक्तिरयुक्तेत्याशङ्कते—**यदीति**। महाप्रकरणगम्यप्रधानाङ्गत्वस्यावान्तरप्रकरणगम्येन गुणकामाङ्गत्वेन बाधोऽवान्तरेत्यनेनोक्तः सन्देशं विनावान्तरकथम्भावानिष्पत्तेः गुणकामाङ्गत्वानुपपत्तिरिति परिहरति—**उच्यत इति**। श्रुतिलिङ्गेऽपि वाक्योपलक्षिते। गुणकामस्य प्रयोजनवत्त्वात्सन्देशं विनापि प्रधानवत्कथम्भावासिद्धिमाशङ्क्य संस्थाधिकरण-

न्यायेनाश्रयभूतदर्शपूर्णमासादिधर्मैरतिदेशप्राप्तैर्नैराकाङ्क्ष्याद् गुणकामस्याभितो वाक्याद्यवगतगुणसद्भावेऽपि वस्तुतः कथम्भावो नास्त्येवेति प्राकृतेन कथम्भावे तदीये पूरिते सतीति वार्त्तिकेऽभिहितम् अभ्युपेत्यवादमात्रेण तु सन्देशाभिव्यङ्ग्यतोक्तेति सूचनार्थो नामशब्दः । सन्देशान्तरालवर्त्तित्वे कथम्भावस्य मुष्टिकरणादेः श्रुत्याद्यगवतप्रधानगुणसन्देशान्तरालवर्त्तित्वाभावात्प्रधानकथंभावेन ग्रहणं न स्यादित्याशङ्कानिरासायावान्तरविशेषणफलन्दर्शयितुमाह—**प्रधानेति** ।

अनन्तरेण सम्बद्धः स्यात्परस्याप्यनन्तरः ।
ततः पुनः तदारूढः पुनः पश्चात्तदानन्तर्यमश्नुते ॥

इत्यनुषङ्गाधिकरणन्यायेनाङ्गान्तरव्यवधायकत्वाभावात्कथं भावविच्छेदबुद्धिपर्यन्तं सर्वाण्यङ्गानि प्रधानकथम्भावेन सङ्गच्छतीत्युक्ते पाश्चात्याङ्गगमनेऽपि कथम्भावस्य यदिभवेत्पूर्वस्य कथम्भाव इति वार्त्तिकोक्तेन न्यायेनाधस्तनाङ्गागमनान्मुष्टिकरणादेः प्रधानकथम्भावेनाग्रहणं स्यादित्याशङ्क्य, फलवत्सन्निधावफलाम्नानस्य प्रधानकथम्भावग्रहणहेतुरुत्तराङ्गवत्पूर्वाङ्गेष्वविशेषात्प्रधानात्प्राक्पश्चाच्चोभयतः कथम्भावगमनमभितोऽपीत्यनेनोक्तम् । गोदोहनद्वादशोपसत्त्वादीनामपि तर्हि कथंभावेन ग्रहणं स्यादित्याशङ्क्य, अन्येत्युक्तम् । प्रधानकथम्भावस्याभितो गमनेऽङ्गगुणस्य कस्यचिदसम्भवात्सन्देशानुपपत्तेर्न क्वचिदवान्तरप्रकरणं स्यादित्याशङ्कते—**नन्विति** । बलवता प्रमाणेन प्रधानकथम्भावं बाधित्वाऽङ्गगुणत्वावगमे सन्देशसम्भवेन परिहरति—**उच्यत इति** । पुनःशब्दस्य पश्चाद्भावार्थत्वात्, चकारेण च प्राग्भावसूचनाच्छ्रुत्यादिभिः प्राक्पश्चाच्चान्यप्रकरणस्थानामङ्गानामङ्गे ज्ञाते सन्दंशसम्भवादवान्तरप्रकरणमिष्यत इत्यर्थः । सर्वेषाञ्चावान्तरप्रकरणित्वेनाभिमतानां श्रुत्यादिभिः प्राक्तदङ्गमुक्त्वा पश्चादपि तदङ्गपरामर्शसद्भावान्न क्वचित्सन्दंशाभावः शङ्कनीय इत्याह—**सर्वेषां हीति** ।

किमर्थं सन्दंशापेक्षेत्याशङ्क्य, अवान्तरप्रकरणोपक्रमसमाप्तिमर्यादावधारणार्थतामाह—**तत्पर्यन्तेति** । अतः सन्दंशाभावेनावेदनादेः प्रत्यक्षावान्तरप्रकरणाभावादानन्तर्येण चावान्तरप्रकरणायोगान्मुष्टिकरणादेः प्रधानार्थत्वद्वारा तदङ्गाङ्गत्वसिद्धिरिति सूचयितुमाह—**यत्र त्विति** । पुनःशब्देन प्राक्त्वस्याप्युपलक्षणाद्यत्र प्राक्पश्चाच्छ्रुत्यादिभिः तदङ्गकीर्त्तनन्नास्तीत्यर्थः । प्रधानार्थत्वाध्यवसाने सति तदङ्गाङ्गत्वसिद्धिः कथमित्याशङ्क्य, तत्सूचनार्थमाह—**तस्य त्विति** ।

अङ्गाङ्गस्य प्रधानानुपकारित्वे प्रधानार्थत्वावेदकस्य प्रकरणस्यात्यन्तबाधापत्तेः प्रकृतापूर्वसाधनत्वलक्षणाहेत्वभावात्स्वरूपार्थत्वे नैष्फल्यापत्तेर्बलीयसापि वाक्यादिनाऽङ्गाङ्गत्वस्यावगन्तुमशक्यत्वाद्वेद्यादिकेवलस्य, प्रधानस्य, अङ्गसाङ्गस्य वेति चिन्तानुपपत्तिप्रसङ्गेनाङ्गाङ्गस्यापि प्रधानोपकारित्वावसायात्प्रकरणावगतसाक्षात्प्रधानार्थत्वासम्भवे

अङ्गाङ्गत्वेनापि प्रकरणानुग्रहसिद्ध्यै प्रधानार्थत्वे सत्यङ्गावतारन्यायादङ्गाङ्गत्वं सेत्स्यतीत्याशयः।

ननु प्रकरणावगतप्रधानार्थत्वस्य मुष्टिकरणादेरङ्गावतारन्यायादङ्गाङ्गत्वे सत्येकाङ्गावतारमात्रेण प्रकरणाम्नानानर्थक्यपरिहारादनेकेष्वङ्गेष्ववतारकल्पनानुपपत्तेरेकस्मिन्नेवाङ्गेऽवतारस्योचितत्वादानन्तर्यविशेषाच्च विशेषावधारणोपपत्तेरावेदनादिमात्रेऽवतारावसायान्न सिद्धान्तसिद्धिः स्यादित्यशङ्क्य, मुष्टिकरणादेर्लिङ्गेन प्रयोगाङ्गभूतकर्तृसंस्कारार्थत्वावसायात् प्रयोगस्य च साङ्गप्रधानविषयत्वात्सौमिकवेदिवत्साङ्गप्रधानार्थत्वस्यैवावगतेर्वस्तुतो न प्रधानार्थस्याङ्गेऽवतारः प्रयोगस्य तु साक्षादङ्गविषयत्वाभावेन न प्रधानद्वाराङ्गविषयत्वात्प्रयोगद्वाराङ्गप्रधानार्थत्वस्याङ्गस्य प्रधाननैरपेक्ष्यणाङ्गान्वयायोगमभिप्रेत्य प्रकरणविरोधे क्रमेण पूर्वपक्षायोगात्प्रकरणस्य स्वरसभङ्गार्थश्चिन्ताया आनर्थक्यतदङ्गावतारप्रकरणसङ्गतिसिद्ध्यर्थमौपचारिक्यवतारोक्तिरित्यविरोध इति सूचयितुमाह—**तदिहेति**। साङ्गोक्त्याऽङ्गानां प्रधानविशेषणत्वेन साक्षान्मुष्टिकरणाद्यन्वयाभावसूचनान्मुष्टिकरणादेः प्रधानद्वाराऽङ्गान्वयः सूचितः। योग्यतोक्त्या प्रयोगाङ्गभूतकर्तृद्वारत्वलक्षणोपपत्तिवन्मुष्टिकरणस्याङ्गुलिविसर्गोत्तरभाविषु वाग्यमनस्य च वाग्विसर्गोत्तरभाविषु, हस्तावनेजनस्य च हस्तलेपापातकपिण्डकरणोत्तरपदार्थेष्वयोग्यत्वात्कृष्णविषाणग्रहण-चात्वालप्रासनान्तरालवर्त्तिषु पदार्थेषु कृष्णविषाणकण्डूयनवन्मुष्टिकरणाङ्गुलिविसर्गाद्यन्तरालवर्त्तिनामेवाङ्गानां मुष्टिकरणाद्यङ्गमित्यपि सूचितम्। तुमुन्प्रत्ययाभावेनैकवाक्यत्वनिरासार्थं नहीत्यादिभाष्यं व्याख्यातुमाह—**यदि त्विति**। तस्मादित्युपसंहारभाष्यं व्याचष्टे—**तस्मादिति**॥२४॥

भा० प्र०—ज्योतिष्टोम प्रकरण में श्रुति में कहा गया है कि "मुष्टीकरोति" हाथ को मुट्ठी बाँधे, "वाचं यच्छति" वाणी को संयत करे, "दीक्षितमावेदयति" दीक्षित अर्थात् अध्वर्यु को आवेदन करे, इसी प्रकार और भी कहा गया है कि, "हस्ताववनेनिक्ते" दोनों हाथों का अवनेजन करे (धोये), 'उलपराजिं स्तृणाति', उलप = सूखे दर्भ का तिनका या उशीर = खस का तिनका आपस्तम्ब श्रौतसूत्र के १।१५।४ में रुद्रदत्त ने सूखा दर्भ उशीर=खस का तिनका धूर्त स्वामी ने एवं महादेव ने सूखादर्भ अर्थ किया है।

इस स्थल में यह संशय होता है कि प्रथम कथित मुष्टीकरण, एवं वाणी का संयम अर्थात् वाग्बन्ध ये आवेदन के अङ्ग हैं अथवा उस प्रकरण के सभी कर्मों के अङ्ग हैं ? इसी प्रकार हस्तावनेजन = हस्तधावन उलपराजि के आस्तरण का अङ्ग है या उस प्रकरण के सभी कर्मों के अङ्ग हैं ? इसमें पूर्वपक्षी का कहना है कि पूर्व अधिकरण में जिस प्रकार क्रमानुसार वार्त्रघ्नी एवं वृधन्वती आज्य भाग का अंग होता है, इस स्थल में भी उसी प्रकार आनन्तर्य के अनुसार वाग्यम एवं मुष्टीकरण के अनन्तर है। आवेदन कर्तव्य होने से उपदिष्ट होता है एवं हस्तावनेजन के अनन्तर ही उपलराजिस्तरण विहित होता है, अतएव सन्निधि के अनुसार वाग्यम एवं मुट्ठी बाँधना वाग्यम एवं मुट्ठी बाँधना आवेदन का अंग है एवं हस्तावनेजन उपलराजिस्तरण का अंग है।

